प्रियम्वदा।
पाणिनि कन्या-महाविद्यालय
वाराणसी

येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः। अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते। अर्थात् ध्वनिः शब्दः
ध्रुवं कूटस्थम् अविचालि अनपायि अनुपजनि अविकारि अनुत्पत्त्यवृद्ध्यव्यययोगि यत्तन्नित्यम्। तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते








## श्रीगणेशाय नमः ।

# अथ पातञ्जलमहाभाष्यप्रारम्भः ॥

अथ शब्दाऽनुशासनम् ॥ अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते । शब्दा-

---

श्रीपतञ्जलये नमः ॥

सर्वाकारं निराकारं विश्वाध्यक्षमतीन्द्रियम् ॥
सदसद्रूपतातीतमदृश्यं माययाऽऽवृतैः ॥ १ ॥
ज्ञानलोचनसंलक्ष्यन्नारायणमजं विभुम् ॥
प्रणम्य परमात्मानं सर्वविद्याविधायिनम् ॥ २ ॥
पुरुषाः प्रतिपद्यन्ते देवत्वं यदनुग्रहात् ॥
सरस्वतीं च तां नत्वा सर्वविद्याधिदेवताम् ॥ ३ ॥
पदवाक्यप्रमाणानां पारं यातस्य धीमतः ॥
गुरोर्महेश्वरस्यापि कृत्वा चरणवन्दनम् ॥ ४ ॥
महाभाष्यार्णवावारपारीणं विवृतिप्लवम् ॥
यथागमं विधास्येऽहं कैयटो जैयटात्मजः ॥ ५ ॥

---

श्रीगणेशाय नमः ॥

नत्वा साम्बशिवं देवीं वागधिष्ठानिकां गुरून् ॥
पाणिन्यादिमुनीन् वन्द्यान् पितरौ च सतीशिवौ ॥ १ ॥
नागेशभट्टो नागेशभाषितार्थविचक्षणः ॥
हरिदीक्षितपादाब्जसेवनावाप्तसम्मतिः ॥ २ ॥
याचकानां कल्पतरोररिकक्षहुताशनात् ॥
शृङ्गवेरपुराधीशाद्रामतो लब्धजीविकः ॥ ३ ॥
नाविस्तीर्णं न विस्तीर्णं मध्यानामपि बोधकृत् ॥
भाष्यप्रदीपव्याख्यानं कुर्वेऽहं तु यथामति ॥ ४ ॥

भाष्यं व्याचिकीर्षुः शिष्टाचारप्राप्तं मङ्गलं शिष्यशिक्षायै निबध्नाति । सर्वेति । क्त्वान्तानां पञ्चमश्लोकोत्तरार्द्धेनान्वयः । सर्वाकारत्वं सर्वोपादानकारणत्वान्मृदादिवत् । कार्यातिरिक्तदृश्यस्वरूपाभावाद् निराकारत्वम् । कर्तृत्वाद् विश्वाध्यक्षत्वम् । स ऐक्षतेति श्रुतेः । अतीन्द्रियत्वं विगतेन्द्रियत्वेन । पश्यत्यचक्षुरित्यादिश्रुतेः । सर्वप्रत्यक्षीकरणन्तु स्वरूपचैतन्येनैव । इन्द्रियाविषयत्वेन वाऽतीन्द्रियत्वम् । सदसद्रूपता प्रपञ्चधर्मः । एतच्च स्त्रियामिति सूत्रे वक्ष्यते । तामतीतं तद्रहितमित्यर्थः । एवञ्च सदेशेति भावः । नन्वीदृशमस्माभिः कुतो न गृह्यत इत्यत आह । अदृश्यमित्यादि ॥ १ ॥ माययाऽऽवृतैरित्यस्य कृत्यमाह । ज्ञानेति । तत्त्वमस्यादिमहावाक्यजनिताखण्डाऽद्वितीयसच्चिदानन्दब्रह्माकारा वृत्तिर्ज्ञानं, तदेव लोचनन्तेन सम्प्रेक्ष्यमित्यर्थः । नारायणमित्यादि । सर्वनरसमूहान्तर्यामिणमित्यर्थः । सर्वविद्याः । वेदरूपाः । तद्विधायिनम् ॥ २ ॥ वचनसन्दर्भविशेषरूपे ग्रन्थे समुचितत्वाद्वागधिदेवतां नमति । पुरुषा इति । देवत्वम् । पाण्डित्यम् ॥ ३ ॥ संप्रदायशुद्धिं द्योतयन् गुरुं नमति । पदेति । व्याकरणतर्कमीमांसानामित्यर्थः धीमतः । ऊहापोहकुशलस्य ॥ ४ ॥ अवारपारयोर्महाभाष्येति । व्याख्यातृत्वेऽप्यस्येष्ट्यादिकथनेनान्वाख्यातृत्वादितरभाष्यवैलक्षण्येन महत्त्वम् ॥ अवारपारयो-

भाष्याब्धिः क्वातिगम्भीरः क्वाऽहं मन्दमतिस्ततः।
छात्राणामुपहास्यत्वं यास्यामि पिशुनात्मनाम् ॥ ६ ॥
तथापि हरिबद्धेन सारेण ग्रन्थसेतुना।
क्रममाणः शनैः पारं तस्य प्राप्तास्मि पङ्गुवत् ॥ ७ ॥

महाभाष्यकारो विवरणकारत्वाद्व्याकरणस्य साक्षात्प्रयोजनमाह ॥

अथ शब्दाऽनुशासनमिति ॥ प्रयोजनप्रयोजनानि तु रक्षोहादीनि पश्चाद् वक्ष्यन्ते ॥ स्ववाक्यं व्याख्यातुं तदवयवमथशब्दं तविद्याचष्टे। अथेत्ययमिति। इतिशब्दोऽथशब्दस्य स्वरूपेऽवस्थापनाय प्रयुक्तः। एवं हि पदान्तरैः सामानाधिकरण्येन संबन्धे सत्यऽथशब्दो व्याख्यातुं शक्यते। स्वरूपेऽवस्थितश्च सर्वनाम्ना परामृश्यते। अयमिति। शब्द इति स्वरूपकथनं विस्पष्टप्रतिपत्त्यर्थम्। अधिकारार्थ इति। अधिकारः प्रस्तावो द्योत्यत्वेनास्य प्रयोजनमित्यर्थः। निपातानां च द्योतकत्वं वाक्यपदीये निर्णीतम्। अथशब्दस्याधिकारार्थत्वे यो वाक्यार्थः संपद्यते तं दर्शयति। शब्दानुशासनमिति। अनेकक्रियाविषयस्यापि शब्दानुशासनस्य प्रारभ्य-

---

भवम्। प्लूयतेऽनेनेति प्लवं सेतुम्। यथागमम्। सम्प्रदायमनतिलङ्घ्येत्यर्थः ॥ ५ ॥ औद्धत्यं परिहरति। भाष्येति। मयूरव्यंसकादिसमासो रूपकञ्चेति बोद्धव्यम्। पिशुनत्वम् दुष्टत्वम् ॥ ६ ॥ नन्वेवं कथं प्रवृत्तिरत आह। तथापीति। तत्रत्यसारांश एवात्र निबद्ध इति भावः। शनैरित्यनेनात्यन्तग्रन्थासङ्कोचः। पङ्गुवदित्यनेन व्याख्येयांशापरित्यागो व्याख्यानस्याविस्तृतत्वञ्च बोध्यते ॥ ७ ॥ यद्यपि पाणिनिना, ब्राह्मणेन निष्कारण इत्यादिश्रुतेः सन्ध्योपासनादाविव प्रत्यवायपरिहारार्थितयैवोत्तमाधिकारिप्रवृत्तिसम्भवात् प्रयोजनं नोक्तम्। वार्त्तिककृतापि, शास्त्रपूर्वके प्रयोगे धर्म इत्यनेन मध्यमाधिकारिणः परमप्रयोजनं दर्शितम्। भगवांस्तु विवरणकारत्वाद् मन्दाधिकारिणां प्रवृत्तेः प्ररोचकप्रयोजनप्रतिपत्तिप्रवणत्वाद् व्यवहितेषु स्वर्गापूर्वादिष्वनाश्वासात्साक्षात्प्रयोजनं शब्दव्युत्पत्तिलक्षणं वदतीत्याह। भाष्यकार इति। तत्र शब्दज्ञानरूपे प्रयोजने उक्ते विषयोऽप्युक्त एव। शास्त्रजन्यज्ञानविषयस्यैव शास्त्रविषयत्वादिति बोद्धव्यम्। तज्जिज्ञासुरधिकारी, प्रतिपाद्यप्रतिपादकभावः सम्बन्ध इति अर्थादेव लब्धम्। ननु, कानि पुनरित्यादिना प्रयोजनानि वक्ष्यति, तेन पौनरुक्त्यमत आह। साक्षादिति। तदेवाह। प्रयोजनप्रयोजनानीति। व्याख्यातुमित्यस्य शब्दानुशासनमित्यादिनेति शेषः। तावत् प्रथमम्। व्याचष्टे इति। पदार्थज्ञानायाऽऽनन्तर्याद्यर्थकत्वनिरासाय चेति शेषः। भाष्यत्वादेव च स्ववाक्यव्याख्यानमिति भावः। नन्विति विनाप्यथशब्दोऽधिकारार्थ इत्येवोच्यतामत आह। एवं हीति। पदान्तरैः। शब्दपरमधिकारार्थपरं प्रयुज्यत इति पदैः। व्याख्यातुमिति। अधिकारार्थत्वेनेति शेषः। अथेति शब्दोऽधिकारार्थ इत्युक्ते आनन्तर्याद्यर्थकत्वमप्रमाणमिति भाष्येदतो--( ऽयमिति ) भाष्ये। योऽयमस्मिन् वाक्ये स इत्यर्थः।
विस्पष्टेति। न वेतीत्यादावर्थपरताया दर्शनेन तथा भ्रमं निवर्तयितुमित्यर्थः। ननु निपातानां द्योतकत्वादभिधेयवाच्यर्थशब्दोऽनुपपन्नोऽत आह। अधिकार इति। प्रस्ताव इति। प्रारम्भ इत्यर्थः। स चार्थाद् व्याख्यायमानस्य। अर्थशब्दः प्रयोजनवाचीति भावः। निपातानाञ्च द्योतकत्वमिति। निपातानां द्योतकत्वञ्चेत्यर्थः। उपसर्गातिरिक्तनिपातानां द्योतकत्ववाचकत्वोभयस्वीकारस्याव्ययं विभक्तीतिसूत्रे भाष्ये स्पष्टत्वात्। उपसर्गाणान्तु द्योतकत्वमेवेति स्पष्टं गतिर्गताविति सूत्रे भाष्ये इति तत्रैव निरूपयिष्यामः। अत एव साक्षात् क्रियते गुरुरित्यादि सङ्गच्छते। प्रारम्भक्रियाविषयत्वद्योतकस्यापि अथशब्दस्यान्यार्थं नीयमानदध्यादिवन्मङ्गलत्वमपीत्युभयार्थमथशब्दः प्रयुज्यत इति फलितम्। परे स्वत्र वाचकत्वमेवेच्छन्ति। अधिकृतमिति च तदर्थं वदन्ति। भाष्ये प्रयुज्यत इत्यनेन वर्त्तमाननिर्देशेन सर्वलोकसिद्धमस्याधिकारार्थत्वं, न तु वृद्ध्यादिवत्पारिभाषिकमिति ध्वनितम्। ननु विवरणेऽधिकृतमित्यधिकं वाचकपदाभावाद्, द्योतकताऽनुपप-






ऽनुशासनं नाम शास्त्रमधिकृतं वेदितव्यम् । केषां शब्दानाम् । लौकिकानां वैदिकानां च । तत्र लौकिकास्तावत् । गौरश्वः पुरुषो हस्ती शकुनिर्मृगो

---

माणता अथशब्दसन्निधाने प्रतीयते । व्याकरणस्य चेदमन्वर्थं नाम–शब्दानुशासनमिति । अत्र चाऽऽचार्यस्य कर्तुः प्रयोजनाभावादनुपादानादुभयप्राप्त्यभावान्नोभयप्राप्तौ कर्मणीत्यनेन षष्ठी, अपि तु, कर्तृकर्मणोः कृतीत्यनेनेति, कर्मणि चेति समासप्रतिषेधाऽप्रसङ्गादिध्मप्रव्रश्चनादिवत् समासः । शब्दशब्दस्य सामान्यशब्दत्वाद्भिन्नप्रकरणादिना विशेषेऽवस्थानाभावात्तन्त्रीशब्दकाकवाशितादीनामप्यनुशासनप्रसङ्ग इति मत्वा पृच्छति । केषामिति । उत्तरपदार्थान्तर्गतस्यापि पूर्वपदार्थस्य बुद्ध्या प्रविभागात् किमा प्रत्यवमर्शः । यथा, राजपुरुष इत्युक्ते, कस्य राज्ञ इति । सिद्धान्तवादी तु व्याकरणस्य वेदाङ्गत्वात् सामर्थ्याद्विशेषावगतिरिति मत्वाह । लौकिकानामिति । लोके विदिता इति, लोकसर्वलोकाट्ठञिति ठञ् । अथवा भवार्थेऽध्यात्मादित्वाट्ठञ् । एवं वेदे भवा वैदिकाः । वैदिकानामपि लौकिकत्वेऽपि प्राधान्यख्यापनाय पृथगुपादानम् । यथा, ब्राह्मणा आयाता वसिष्ठोऽप्यायात इति वसिष्ठस्य । तेषां तु प्राधान्यं यत्नेनापभ्रंशपरिहारात् । अथवा भाषाशब्दानामेव लौकिकत्वमिति भेदेन

---

त्तिश्चेत्यत आह । अनेनेति । उच्यते श्रूयते क्रियते इति । प्रतीयत इति । एतावतैव द्योतकत्वमिति भावः । ननु भावसाधनस्यानुशासनपदस्य शास्त्रपदेन सामानाधिकरण्यमनुपपन्नमत आह । व्याकरणस्य चेति । अन्वर्थत्वात्प्रयोजनाभिधानोपपत्तिः । अनुशिष्यन्ते असाधुशब्देभ्यो विविच्य ज्ञाप्यन्तेऽनेनेति करणल्युडन्ततया शास्त्रपदेन सामानाधिकरण्यमिति भावः । इदमेव ध्वनयितुं भाष्ये नामपदोपादानम् । नामनामिनोरभेदान्नाम शास्त्रमिति सामानाधिकरण्यम् । अनेनैवापभ्रंशानामविषयत्वं सूचितं ध्वनीनाञ्च । केषामिति प्रश्नस्तु किं लौकिकमात्रविषयं शाकटायनादिशास्त्रमधिकृतमुत वैदिकमात्रविषयं प्रातिशाख्यमितीति परे । ननु कर्मणि चेति निषेधात् कथं कर्मषष्ठ्यन्तेन समासोऽत आह । अत्र चाचार्यस्येति । उभयोपादान एवोभयप्राप्तिरित्यास्मं माने इति सूत्रे भाष्ये स्पष्टम् । कर्तृकर्मणोरिति षष्ठ्यामपि समासनिषेधः कुतो नेत्यत आह । इध्मेति । चस्येत्यर्थकतया कर्मणीत्युच्चार्य विहितषष्ठ्यैव समासनिषेध इति भावः । भाष्ये, शास्त्रमित्यस्य कर्तव्यत्वेनेति शेषः । विवरणकारस्त्वाद व्याख्यातव्यत्वेनेति शेष उचित इत्यन्ये । शास्त्रत्वञ्चास्य साधुत्वरूपैकप्रयोजनसंबद्धत्वाद्बोध्यम् । सामान्यशब्दत्वादिति । लोकव्यवहारे ध्वनावपभ्रंशे च शब्दशब्दप्रयोगादिति भावः । एतेन ध्वनिव्यङ्ग्य एव तपरसूत्रादौ शब्दप्रयोगादिदं चिन्त्यमित्यपास्तम् । ननु, व्रीहीन् प्रोक्षतीत्यादौ सामान्यशब्दस्याप्यपूर्वीयेषु विशेषेषु प्रवृत्तिवद्वाचके साधौ तद्विशेषे प्रवृत्तिर्भविष्यतीत्यत आह । भिन्नेति । व्रीहिशब्दस्य तु प्रकरणाद्विशेषे प्रवृत्तिरिति भावः । वाशितादीनामित्यादिनाऽपभ्रंशसङ्ग्रहः । उत्तरपदार्थसंसृष्टपूर्वपदार्थस्य कथं सर्वनाम्ना परामर्शोऽत आह । उत्तरपदार्थान्तर्गतस्येति । ततः पृथगुपस्थित्यविषयस्येत्यर्थः । बुद्ध्या मानस्या । यद्वा वाक्यजन्यबुद्ध्या । वेदाङ्गत्वादिति । तत्त्वञ्चागमसिद्धम् । अनेन तन्त्रीशब्दादीनामविषयता सूचिता । न च वेदाङ्गत्वाद्वैदिका एव विषयाः स्युः । तत्र तत्र भाषायां छन्दसीत्याद्युक्त्योभयोरपि विषयत्वात् । ननु चिदानन्दस्वरूपब्रह्मातिरिक्तस्य सर्वस्य लोकपदार्थत्वाद्वेदस्यापि लोकान्तर्गतत्वाद् भेदेनाभिधानं न युज्यत इत्यत आह । वैदिकानामिति । वैदिकानां लौकिकत्वेऽपीति पाठः । तेषान्त्विति । लौकिकानां याज्ञे कर्मण्येव तत्परिहारस्तेषान्तु सर्वत्रेति भावः । भाषाशब्दानामिति । भाषा प्रयोज्यप्रयोजकवृद्धव्यवहारस्तत्र प्रयुज्यमानानामित्यर्थः । एवञ्च वेदमात्रान्तर्गतकर्णेभिर्देवासो गृभ्णामीत्याद्यतिरिक्तपरता लौकिकशब्दस्य तैस्तद्व्यवहारादर्शनात् । अत एव, गौरश्व इत्यादीनां लौकिकोदाहरणत्वसङ्गतिः । लोके स्वरानादरोद्वेदे तदादराच्च स्वरविशिष्टानां वेदमात्रविषयतामभिप्रेत्य, शन्न इत्यादीनां वैदिकोदाहरणत्वसङ्ग-

ब्राह्मण इति । वैदिकाः खल्वपि । शन्नो देवीरभिष्टये । इषेत्वोर्जेत्वा । अग्निमीले पुरोहितम् । अग्न आयाहि वीतय इति । अथ गौरित्यत्र कः शब्दः । किं यत्तत्सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपं स शब्दः । नेत्याह । द्रव्यं नाम तत् । यत्तर्हि तदिङ्गितं चेष्टितं निमिषितमिति स शब्दः । नेत्याह ।

---

निर्देशः । तत्र लोके पदानुपूर्वीनियमाभावात् पदान्येव दर्शयति । गौरश्व इति । वेदे त्वानुपूर्वीनियमाद्वाक्यान्युदाहरति । शन्न इति । अयं गौरयं शुक्ल इति शब्दार्थयोरभेदेन लोके व्यवहारदर्शनाच्छब्दस्वरूपनिर्धारणाय पृच्छति । अथेति । गौरिति विज्ञाने प्रतिभासमानेषु वस्तुषु कः शब्द इत्यर्थः । तान्येव वस्तूनि क्रमेण दर्शयति । किं यत्तदिति । उद्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददते इति कामचारतः स शब्द इति पुँल्लिङ्गेन निर्देशः । नेत्याहेति । भिन्नेन्द्रियग्राह्यत्वान्न द्रव्यं शब्द इति प्रतीतमपि तु द्रव्यमिति । यदि हि द्रव्यानु-

---

तिरिति भावः । लोके पदानामुदाहरणत्वोक्तौ, वेदे वाक्यानामेव तत्त्वोक्तावाशयमाह । तत्रेति । पदान्तरसमभिव्याहारेण स्वरविशेषाच्च वेदे वाक्यानामुदाहरणत्वोक्तिरित्यपि बोध्यम् । लोकवेदसाधारणतया पाणिनीयशब्दानुशासनस्यैवात्राधिकृतत्वं, न तु शाकटायनादिव्याकरणस्येत्युत्तराशयं परे । भाष्ये-(लौकिकास्तावदिति) । तावच्छब्दोऽनुक्रमे । पूर्वं लौकिका उदाह्रियन्ते पश्चाद्वैदिका इत्यर्थः । वैदिकानां प्रधानत्वेऽपि लौकिकानां पूर्वनिर्देशस्तद्बुदादरसूचनार्थः । अभेदेन लोके इति । अभेदेनैवेत्यर्थः । शब्दपरत्वाभिप्रायेणास्य गौरिति प्रयोगाभावादिति भावः । पुरोवर्त्तिव्यक्तिं पश्यतो वाचकजिज्ञासया कोऽयमिति प्रश्ने, अयं गौरयं वर्णः शुक्ल इत्युत्तरस्थले संनिहितमुद्दिश्य तादात्म्येन शब्दविधेयताप्रतीतेरिति तात्पर्यम् । शब्दार्थयोस्तादात्म्यमेव शक्तिः । स्पष्टञ्चेदं पातञ्जलभाष्ये इति मञ्जूषायामस्माभिर्हर्यादिसंमततया व्युत्पादितम् । अत एव जात्यादिव्यक्त्योरिव, रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिन इत्यादौ शब्दार्थयोरपि अभेदेन व्यवहारः । (अथ गौरिति) भाष्ये । अथेत्यस्य पृच्छ्यत इति शेषः । किं पृच्छ्यते तदाह (गौरित्यत्रेत्यादि) (कः शब्द इति) । कः शब्दशब्दाभिधेय इति प्रश्नः । प्रतिभासमानेषु शब्दजातिव्यक्त्यादिषु । नन्वेवं गुणक्रिययोः शब्दत्वाशङ्कानुपपन्ना । नहि ते अपि, गौरितिशब्दजन्यबोधे भासेते इतिचेन्न । गुणगुणिनोः क्रियाक्रियावतोश्चाभेदात् । शब्दार्थयोश्च तत्त्वात् । तदभिन्नाभिन्नस्येति न्यायेन तच्छङ्कोपपत्तेः । यथा परमकारणाभिन्नकार्यकारणकस्य परमकारणेनाप्यभेदः । यद्वा गुणसमूहो द्रव्यमिति पक्षे, तस्य भाव इति सूत्रस्थभाष्यसंमते समूहस्य गोशब्दवाच्यत्वे अवयवभूतगुणादीनामपि तद्वाच्यत्वमितिशङ्का बोध्या । अत्र गौरिति विज्ञाने इति सामान्योक्त्या तदाकारप्रत्यक्षादिज्ञानेऽपि गुणादीनां सामान्यरूपेण भानम् । अत एव प्रत्यक्षदृष्टेऽपि आम्रफलादौ रसविशेषादिजिज्ञासा । विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वादित्यन्ये । निरूपितं चैतन्मञ्जूषायाम् । यत्तदिति-समुदायो यद्वृत्तार्थे वर्त्तते । तस्यैव पुनस्तद्वृत्तेन, स-इत्यनेन परामर्शः । यद्वा प्रसिद्धौ । ननु यदित्यस्य नपुंसकत्वेन तच्छब्देऽपि नपुंसकलिङ्गमेवोचितमत आह । उद्दिश्यमानेति । सिद्धवत्कीर्त्तनमुद्देशः । प्रतिपाद्यतया विधेयतया वा कीर्त्तनं प्रतिनिर्देशः । यथा "शैत्यं हि यत् सा प्रकृतिर्जलस्य" इत्यादौ स्त्रीलिङ्गनिर्देशः । तल्लिङ्गमिति । तयोर्लिङ्गमित्यर्थः । भाष्योक्तहेतुमुपपादयति । भिन्नेन्द्रियेति । सामान्यव्यक्त्यतिरिक्तत्वे सति श्रोत्रेन्द्रियग्राह्यत्वं हि शब्दलक्षणमिति भावः । यदि च द्रव्येति । यदि द्रव्यं शब्दशब्दाभिधेयं स्यादित्यर्थः । तथा हि सति द्रव्यादीनान्तन्त्रान्तरे निरूपितत्वात्तस्य वैयर्थ्यापत्तिरित्यपि बोध्यम् । तत्र द्रव्यस्य क्रियाद्याश्रयत्वात्पूर्वमुक्तिः । क्रियागुणौ च जात्याश्रयाविति तयोस्ततः पूर्वमुक्तिः । वैशेषिकसिद्धगुणानामपि संख्यासंयोगविभागादीनां क्रियात्वं ध्वनयितुं गुणात्प्राक् क्रियोक्तिरिति ध्येयम् । यत्तर्हि शुक्ल इत्यादि । गुणस्य शब्दत्वशङ्कापरं वाक्ये इतिशब्देन प्रकारार्थेन द्रव्यादिभेदाभिन्नं गन्धादिलिङ्गसङ्ख्यादिरूपगुणसङ्ग्रह इति न न्यूनता ।

क्रिया नाम सा। यत्तर्हि तत्, शुक्लो नीलः कपिलः कपोत इति स शब्दः। नेत्याह। गुणो नाम सः। यत्तर्हि तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्दः। नेत्याह। आकृतिर्नाम सा। कस्तर्हि शब्दः। येनोच्चारितेन

---

शासनं विवक्षितमभविष्यद्, अथ द्रव्यानुशासनमित्येवावक्ष्यत्। अनेनैव न्यायेन गुणक्रियासामान्यानां निराकृतेऽपि शब्दत्वे प्रपञ्चार्थं तच्चोद्यपूर्वकं निराकरोति। यत्तर्हीति। गोशब्दार्थे चैषां संभवाच्छब्दत्वमाशङ्कते। परिहारस्तु पूर्ववत्। तत्रेङ्गितमभिप्रायस्य सूचकः शारीरव्यापारः। चेष्टितं कायपरिस्पन्दः। निमिषितमक्षिव्यापारः। शुक्लो नील इति। द्रव्यस्य प्रागुपन्यासाद् गुणमात्राभिधायिनोऽत्र शुक्लादयो द्रष्टव्याः। भिन्नेष्वभिन्नमिति। अनेन सामान्यस्यैकत्वं कथ्यते। छिन्नेष्वच्छिन्नमिति। अनेन तु नित्यत्वम्। सामान्यभूतमिति। सत्ताख्यं महासामान्यं गोत्वादेः सामान्यस्योपमानं निर्दिष्टम्। सामान्यमिव सामान्यभूतम्। भूतशब्द उपमार्थे। यथा पितृभूत इति। द्रव्यादिषु निरस्तेषु पृच्छति। कस्तर्हीति। उत्तरमाह। येनोच्चारितेनेति। वैयाकरणा वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्ति। वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गात्। आनर्थक्ये तु प्रत्येकमुत्पत्तिपक्षे

---

ननु शब्दस्यापि गुणत्वाद् गुणो नाम स इत्युत्तरमसङ्गतम्। तस्य द्रव्यत्वे द्रव्यं नाम तदित्युत्तरासङ्गतिरिति चेन्न। उक्तद्रव्याश्रितो गुणो नाम स इत्यर्थात्। श्रोत्राग्राह्यत्वादेव क्रियादीनां शब्दत्वे निरस्ते किमुत्तरग्रन्थेनेत्यत आह। अनेनैवेति। गोशब्दार्थे चैषां सम्भवादिति। अभेदसम्भवात् तेन तदभिन्नाऽभिन्नस्य तदभिन्नत्वमिति न्यायेन शब्दत्वाशङ्का तेषामिति भावः। यद्वा गोशब्दार्थे गुणसमूहे समूहितया एषां सम्भवादित्यर्थः। शारीरव्यापारो रोमाञ्चादिः। एकत्वमिति। अनेकसमवेतत्वस्याप्युपलक्षणम्। नित्यत्वेन संयोगनिरासः। एकत्वेन प्रत्यभिज्ञाप्रत्यक्षरूपं प्रमाणं दर्शितम्। भूतशब्दप्रयोगानुपपत्तिं परिहरति। सत्ताख्यमिति। एवं हि वृक्षवदाम्रा इत्याद्यापत्तेः। सामान्यश्रुतेः सर्वसामान्यविषयत्वेन प्रवृत्तायाः सङ्कोचे कारणाभावाच्च। उपमाकथनस्य प्रकृतेऽनुपयोगाच्च अध्याहारे गौरवाच्च नेदं युक्तम्। किन्तु स्वरूपवाची सः। वृद्धिसंज्ञासूत्रस्थभाष्यप्रयोगस्य प्रमाणभूत इत्यस्य स्वयं करिष्यमाणव्याख्यानरीत्यास्यापि व्याख्यानसम्भवात्। पितृभूत इत्यत्राप्यन्यत्रान्यशब्दप्रयोगः सादृश्यपर इति सादृश्यप्रतीतिर्न स्वस्य सादृश्यवाचकत्वे मानमस्तीति दिक्। भाष्ये—(आकृतिः) जातिराक्रियते व्यवच्छिद्यते स्वाश्रयोऽनयेति व्युत्पत्तेरिति भावः। शङ्कापरभाष्ये सामान्यभूतमित्यस्य तद्व्यञ्जकं चेत्यप्यर्थो बोध्यः। जातिमात्रपरत्वे जात्याकृतिव्यक्तयः पदार्थ इति गौतमसूत्रेण तस्यापि पदार्थत्वबोधनात्। प्रत्यक्षादौ तद्भानाच्च तस्य शब्दत्वाशङ्कातत्समाधानाभावेन न्यूनता स्यात्। सिद्धे शब्दार्थेति वार्त्तिकव्याख्यान भाष्ये तस्या अपि पदार्थत्वं कैयटो वक्ष्यति। तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायस्तु यत्र स्वाभिन्नद्वारकः स्वस्वरूपानुगमस्तद्विषयः। यथा परमकारणकार्योपादानके परमकारणाभेदः। अत एव सुखदुःखयोर्नैक्यं, नापि कुण्डलकटकयोस्तत्। कुण्डलारम्भकस्वर्णावयवानुगमस्य कटकेऽभावात्। एवं गुणसमूहस्यानुद्भूतावयवभेदस्य वाच्यत्वेपि समूहिनां तत्तद्रूपेणावाच्यत्वान्न तेषां शब्दत्वाशङ्केति भावः। पृच्छतीति। प्रश्नविषयविशेषान्तराभावात् सामान्यरूपेण पृच्छतीत्यर्थः। भाष्ये (उच्चारितेनेति)। शारीरमारुताभिहतकण्ठादिस्थानैरवयवद्वाराभिव्यक्तेन येनेत्यर्थः। अत्र विशेषणान्तैरवयवैर्गुणादयोऽप्युपलक्ष्यन्ते। संप्रत्ययो ज्ञानम्। ननु प्रत्यायकशब्दस्य वर्णसमूहरूपतया येनेत्येकवचनमयुक्तम्। न च वनमितिवत् समूहाभिप्रायं तत्। समूहस्यास्थिरस्य निरूपयितुमशक्यत्वादत आह। वैयाकरणा इति। वर्णव्यतिरिक्तपदानभ्युपगमे एकैकस्य वर्णस्य वाचकत्वं? समूहस्य? वा। नाद्य इत्याह। वर्णानां प्रत्येकमिति। द्वितीयमनूद्य दूषयति। आनर्थक्ये तु प्रत्येकमिति। प्रत्येकमानर्थक्ये तु समुदायस्य वाचकत्वमुपेयं तच्च

सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः । अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते । तद्यथा । शब्दं कुरु मा शब्दं कार्षीः शब्दकार्ययं माणवक इति । ध्वनिं कुर्वन्नेवमुच्यते । तस्माद् ध्वनिः शब्दः । कानि पुनः शब्दानुशासनस्य प्रयोजनानि । रक्षोहागमलघ्वसन्देहाः प्रयोजनम् । रक्षार्थं वेदानामध्येयं व्याकरणम् । लोपागमवर्णविकारज्ञो हि

---

यौगपद्येनोत्पत्त्यभावात् । अभिव्यक्तिपक्षे तु क्रमेणैवाभिव्यक्त्या समुदायाभावादेक-स्मृत्युपारूढानां वाचकत्वे, सरो रस इत्यादावर्थप्रतिपत्त्यविशेषप्रसङ्गात्तद्व्यतिरिक्त-स्फोटो नादाभिव्यङ्ग्यो वाचको विस्तरेण वाक्यपदीये व्यवस्थापितः । उच्चारितेन । प्रकाशितेनेत्यर्थः । अथवेति । अन्यत्र ध्वनिस्फोटयोर्भेदस्य व्यवस्थापितत्वादिह न व्यवहारेऽपि न दोषः । द्रव्यादयो न शब्दशब्दवाच्या इत्यत्र तात्पर्यात् । ध्वनिं कुर्वन्निति । विधिनिषेधयोरप्रवृत्तविषयत्वात्कथमस्य त्रिभिः सम्बन्धः । उच्यते । शब्दं कुर्वन्नपि,शब्दं कुर्वित्युच्यते विरामाशङ्कायां तन्निवृत्तये । तथानभिमतशब्दश्रवणोद्वेजितेनोच्यते, मा शब्दं कार्षीरिति । कानि पुनरिति । किं संध्योपासनादिवद्व्याकरणाध्ययनं नित्यं कर्माथ काम्य-

---

प्रयुक्तमिति शेषः । यतस्तत्र नयद्वयम्—उत्पद्यमानसमुदायस्याभिव्यज्यमानसमुदायस्य वा वाचकत्वमिति तत्राद्यं दूषयति । उत्पत्तिपक्षे इति । उत्पत्त्यभावादित्यस्य समुदायाभावादित्यनेनान्वयः । द्वितीयं दूषयति । अभिव्यक्तीति । उत्पन्नाभिव्यक्तेर्ध्वस्तत्वादित्यर्थः । ननु पक्षद्वयेऽपि पूर्वपूर्ववर्णानुभवजसंस्कारसहकृतान्त्यवर्णानुभवहेतुकैकस्मृत्युपारूढानां वाचकत्वमस्त्वत आह । एकस्मृतीति । ननु तस्य नित्यत्वे सर्वदार्थप्रतीतिप्रसङ्गोऽत आह । नादेति । नादो वर्णः । ननु येन क्रमेणानुभूता वर्णास्तेनैव क्रमेणैकस्मृत्युपारूढानां वाचकत्वेन नार्थप्रतीत्यविशेषप्रसङ्गोऽन्यथा त्वयापि वर्णानां स्फोटव्यञ्जकत्वाभ्युपगमात् कथं पूर्वोक्तदोषान्निस्तारस्तवापीत्यत आह । विस्तरेणेति । इदमेकं पदमेकं वाक्यमिति प्रत्ययः स्फोटसत्त्वे तदैक्ये च प्रमाणम् । अनुभवक्रमेणैव स्मरणमित्यर्थे दृढप्रमाणाभावाच्च । क्रमेणानुभूतानां व्युत्क्रमेणापि स्मरणदर्शनात् । मम तु यथा पटे नानारञ्जकद्रव्याहितनानावर्णोपरागः क्रमेण तथा एकस्मिन्नेव तस्मिन्नुच्चारणक्रमेण क्रमवानेव तत्तद्वर्णस्वरूपानुरागः । स च स्थिरस्तस्य च मनसा ग्रहणमिति न दोषः । तत्र येनेत्येकवचनेन विषाणिनामिति बहुवचनेन चानेकोच्चारणविषयगौरित्यस्यैकत्वं सूचितम् । एवञ्च तेनैव दृष्टान्तेन घटपटादिबोधकसाधारण्येन वाचकस्यैकत्वं सूचितम् । भेदप्रत्ययस्त्वौपाधिक इत्याद्यस्मत्कृतमञ्जूषायां शक्तिवादे द्रष्टव्यम् ।

नन्वेवन्तस्य ताल्वोष्ठपुटव्यापारविषयत्वाभावादुच्चारितेनेत्ययुक्तमत आह । प्रकाशितेनेति । अभिव्यञ्जकैरिति शेषः । भाष्ये ( अथ वा प्रतीतपदार्थक इति ) । लोके व्यवहर्तृषु पदार्थबोधकत्वेन प्रसिद्धः श्रोत्रेन्द्रियग्राह्यत्वाद्वर्णरूपध्वनिसमूह एव शब्द इत्यर्थः । तस्यार्थबोधकताप्यविचारितरमणीयस्यैव लोके सिद्धा, तादृशस्यैव शास्त्रेणान्वाख्यानमिति तात्पर्यम् । तदाह । अन्यत्रेति । संग्रहादौ तपरसूत्रादौ भाष्ये चेत्यर्थः । ध्वनिपदेनात्र वैखरी, स्फोटपदेनाभिव्यक्तकत्वादिको मध्यमावस्थ आन्तरः शब्द उच्यते । कथमस्येति । कुर्वन्नित्यस्य, वर्तमानार्थत्वादित्यर्थः ॥ भाष्ये ( कानि पुनः शब्दानुशासनस्येति ) । शब्दज्ञानफलकव्याकरणाध्ययनस्येत्यर्थः । तदाह । किं सन्ध्येति । शब्दज्ञानद्वारा अध्ययनस्य तदज्ञानप्राप्तप्रत्यवायपरिहारः फलम्, उत तदतिरिक्तमपि किंचिदिति प्रश्नाशय इत्यर्थः । प्रयोजनशब्दः करणव्युत्पत्त्या प्रयोजकपरोऽपि । तेन व्याकरणाध्ययनस्य प्रयोजकं किंचिदस्ति? नवेत्यपि प्रश्नाशयो बोध्यः । अत एवोत्तरे आगमपदोपादानं, नपुंसकमनपुंसकेनेत्येकशेषः । तत्रैकवद्भावस्य वैकल्पिकत्वात्प्रश्ने बहुवचनमुत्तरे एकवचनं बोध्यम् । पुरुषार्थौ, धर्मो मोक्षश्च । ननु शिष्याचार्य-



सम्यग्वेदान् परिपालयिष्यतीति । ऊहः खल्वपि । न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदितास्ते चावश्यं पुरुषेण यज्ञगतेन यथायथं विपरिणमयितव्याः । तान्नाऽवैयाकरणः शक्नोति यथायथं विपरिणमयितुम् । तस्माद्ध्येयं व्याकरणम् । आगमः खल्वपि । ब्राह्मणेन निष्कारणो

---

मिति प्रश्नः। पारंपर्येण पुरुषार्थसाधनतामाह। रक्षेति। लोके लोपाद्यदृष्टं वेदे दृष्ट्वा भ्राम्येदवैयाकरणः। वैयाकरणस्तु न भ्रमति वेदार्थं चाध्यवस्यति। तत्र लोपागमयोरुदाहरणम्। देवा अदुह्रेति। दुहेर्लङो झस्यादादेशे कृते, लोपस्त आत्मनेपदेष्विति तलोपः। बहुलं छन्दसीति रुटि सति रूपमेतत्। वर्णविकारो यथा। उदग्राभं च निग्राभं चेति। हृग्रहोर्भश्छन्दसि हस्येति वक्तव्यमिति हस्य भकारः। उदि ग्रह इत्यत्र, उदग्राभनिग्राभौ च च्छन्दसि, स्रुगुद्यमननिपातनयोरिति वचनादुन्निपूर्वाद् ग्रहेर्घञ्। ऊहः खल्वपीति। इह यस्मिन् यागे इतिकर्त्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा प्रकृतिः। येनोपजीव्यते सा विकृतिः। प्रकृतिवद्विकृतिः कर्त्तव्येति मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणाः सम्यग्विजानाति। तत्राऽग्नेर्मन्त्रोऽस्ति, अग्नये त्वा जुष्टं निर्वपामीति। तत्र, सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इति सौर्ये चरौ मन्त्र ऊह्यते—सूर्याय त्वा जुष्टं निर्वपामीति। विस्तरेण तु भर्तृहरिणा प्रदर्शित ऊहः। आगम इति। आगमः प्रयोजकः प्रवर्तको नित्यकर्मतां व्याकरणाध्ययनस्य दर्शयति। प्रयोजनशब्देन च फलं

---

संबन्ध एव महान् वेदरक्षाहेतुः. किं व्याकरणेनेत्यत आह। लोके इति। भ्राम्येदिति। भ्रमेण पाठान्तरं कल्पयेदित्यर्थः। न चाऽऽचार्यवचनाद् भ्रमनिवृत्तिः, । भ्रमशङ्कया तेष्वविश्वासाद्। वेदार्थाऽवगमाह्वा। एवमपि व्याकरणं पुरुषार्थसाधनमित्याह। वेदार्थञ्चेति। एवञ्च वेदार्थज्ञानपूर्वकं शुद्धतत्तन्मन्त्रैस्तद्विहितकर्मानुष्ठानेन स्वर्गसुखमुपनिषदर्थज्ञानेन वक्ष्यमाणरीत्या वा मोक्षश्च पुरुषार्थो व्याकरणाध्ययनस्य फलमिति भावः। विकार इति। लोपस्तु न विकार इति पृथग्गणितः। भावरूप एव चादेशोऽत्र विकारः। हृग्रहोर्भ इति। इदञ्च गृभ्णामीत्याद्यर्थमावश्यकम्। एतेन, उदग्राभनिग्राभौ चेत्यनेनैव भस्यापि सिद्धत्वादेतदुपन्यासश्चिन्त्य इति परास्तम्। अन्यार्थमावश्यकेन तेनैव भस्य सिद्धौ तदंशे निपातनवैयर्थ्यात्। निपूर्वाद् ग्रहेर्घञ्विधायकाभावादाह। उदग्राभनिग्राभौ चेति। भाष्ये (खल्वपीति) निपातसमुदायो निश्चयार्थः। ऊहः खल्वपीत्यस्य प्रयोजनमिति शेषः। ननु यत्र प्रकरणे ये मन्त्राः पठितास्तत्र तेषां तथैव प्रयोग इष्ट इति नोहेन प्रयोजनमित्याशङ्क्य प्रकृतावूहाभावेऽपि विकृतावूह इति दर्शयितुं प्रकृतिशब्दार्थमाह। इहेति। यस्मिन् = आग्नेयादौ। यागान्तरेण = सौर्यादिना। प्रकृतिविकृत्यवगमश्च द्विदेवत्यस्यैकदेवत्यत्वादिसाम्येन बोध्यः। अन्यत्र पठितमन्त्राणां कथमन्यत्र गमनमत आह। प्रकृतिवदिति। यथा सोपकारा प्रकृतिरनुष्ठीयते तथा विकृतिरपीति तदर्थः। तदनेनोपकारातिदेशे तत्पृष्ठभावेन पदार्था अप्यतिदिश्यन्ते। इतिकर्त्तव्यतया भावनायाः साकाङ्क्षत्वादेतन्मूलकमेव, प्रकृतिवदितीति मीमांसकसरणिः। पदार्थान्तर्गताश्च मन्त्राः। तत्र अग्निसंबन्धिनिर्वापप्रकाशकमन्त्रस्याग्निपदस्य सूर्यसंबन्धिनिर्वापप्रकाशनासमर्थत्वात्तदपहाय तत्स्थाने सूर्यायेत्यूह्यमित्याह। तत्राग्नेरिति। मन्त्र ऊह्यत इति। यद्यप्यूहे न मन्त्रत्वं तथाप्येकदेशस्योहेऽपि अनेकपदसमुदाये मन्त्रत्वप्रत्यभिज्ञानात्तद्घटिते समुदाये मन्त्रत्वव्यवहारः कर्मणः साङ्गत्वं चेति बोध्यम्। सोऽयं प्रकृत्यूहः। अन्येऽप्यूह्याः। ऊहज्ञस्य हि आर्त्विज्यलाभेन द्रव्यप्राप्तिद्वारा ऐहिकसुखसिद्धिः फलमिति बोध्यम्। भाष्ये लिङ्गपदञ्च प्रकृत्यादेरुपलक्षणम्।

यथायथमिति। अर्थप्रकाशनसामर्थ्यानतिलङ्घनेनेत्यर्थः। ननु वक्ष्यमाणागमस्य न व्याकरणफलत्वमत आह प्रवर्त्तक इति। नित्यकर्मतामिति। एतेन नित्यकाम्यता व्याकरणाध्ययनस्येत्युक्तम्। नित्यत्वञ्चाध्येयज्ञेयपदार्थविशेषणीभूताध्ययनज्ञानयोर्बोद्धव्यम्। अत्र, ब्राह्मणेनेत्युक्तेरन्यस्यैवमध्ययनं काम्यमेवेति सूचयतीति

धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति । प्रधानं च षडङ्गेषु व्याकरणम् । प्रधाने च कृतो यत्नः फलवान् भवति । लघ्वर्थं चाध्येयं व्याकरणम् । ब्राह्मणेनावश्यं शब्दा ज्ञेया इति । न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या विज्ञातुम् । असन्देहार्थं चाऽध्यध्येयं व्याकरणम् । याज्ञिकाः पठन्ति । स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति । तस्यां सन्देहः । स्थूला चाऽसौ पृषती च स्थूलपृषती ?। स्थूलानि वा पृषन्ति यस्याः सेयं स्थूलपृषतीति ?। तां नावैयाकरणः स्वरतोऽध्यवस्यति । यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः । अथ

---

प्रयोजकश्चोच्यते । निष्कारण इति । दृष्टं कारणमनपेक्ष्येत्यर्थः । प्रधानं चेति । पदपदार्थावगमस्य व्याकरणनिमित्तत्वात्तन्मूलत्वाद्वाक्यवाक्यार्थावसायस्येति भावः । लघ्वर्थमिति । लाघवेन शब्दज्ञानमस्य प्रयोजनम् । ब्राह्मणेनेति । अध्यापनं ब्राह्मणस्य वृत्तिः । न चाशब्दज्ञमुपाश्लिष्यन्ति शिष्या इति । असन्देहार्थमिति । सन्देहस्य प्रागभावोऽत्र वेदितव्यो, न तु प्रध्वंसाभावः । नहि वैयाकरणस्य संशय उत्पद्य विनश्यति । इतरस्यैव तदुत्पादात् । स्वरत इति । पूर्वपदप्रकृतिस्वराद् बहुव्रीह्यर्थो-

---

क्षिप्त् । निष्कारण इति । कारणशब्दः फलपरः । ननु नित्यत्वेऽपि प्रत्यवायपरिहाररूपं फलमस्त्येवेत्यत आह दृष्टमिति । अध्ययनादिनिष्ठं कारणानपेक्षत्वं विषये आरोप्य, निष्कारणो वेद इति प्रयोगः । आगमपदेन। श्रुतिः । श्रुतावपि जनमेजयाद्युपाख्यानवत्पौरुषेयव्याकरणस्यापि नित्यताबोधनमुपपद्यते । यद्वा, तेन प्रोक्तमितिसूत्रभाष्यरीत्या वेदार्थवद् व्याकरणार्थोऽपि अनादिस्वरूपनित्यतावानिति श्रुत्या तस्य नित्यत्वबोधनमिति बोध्यम् । धर्मत्वञ्च वेदस्य पुरुषयत्नसाध्यतया धर्मत्वेनाभिमताध्ययनज्ञानकर्मत्वेनौपचारिकमित्याहुः । षडङ्गः । शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतिषाङ्गसहितो वेदः स्वशाखारूपोऽध्येय इत्यतः प्रेरणाविषयाध्ययनकर्मेति बोधः । यद्यपि, तेन प्रोक्तमितिसूत्रे भाष्ये वक्ष्यमाणया रीत्या वेदत्वं शब्दतदर्थोभयवृत्ति, तथापि ज्ञेय इत्यस्य सम्यगर्थबोधपर्यवसाय्यध्ययनं कार्यमित्यर्थे तात्पर्यमत एव समानमीहमानानामधीयानानाञ्च केचिदर्थैर्युज्यन्ते, केचिन्नेति वक्ष्यति भाष्यकृत् । अध्ययनतथाज्ञानयोश्च समुच्चयः । अनेनातादृशस्याधर्मं सूचयति । श्रुत्या मिलितस्यैव धर्मत्वबोधनात् । तथा च व्यासः । "वेदार्थज्ञो जपं जप्त्वा तथैवाध्ययनं द्विजः । कुर्वन् स्वर्गमवाप्नोति नरकं तु विपर्यये" इति । जपपदं मन्त्रसाध्यकर्ममात्रोपलक्षणम् । ज्ञाधातोश्च ज्ञानानुकूलो मनःप्रणिधानविषयेन्द्रियसंयोगसम्पादनादिरूपो व्यापारोऽर्थस्तस्यैवात्र विधेयत्वम् । एतेन ज्ञानस्याविधेयत्वादिदं चिन्त्यमित्यपास्तम् । ननु गुणानां परस्परसंबन्धाभावात्, षडङ्गेषु प्रधानमित्यनुपपन्नमत आह । पदेति । एवञ्च वेदार्थज्ञाने व्याकरणं प्रधानं कारणमिति भावः । भाष्ये (प्रधाने कृतो यत्न इति) । प्रधानविषये निर्वृत्त इत्यर्थः । अन्यथा यत्नविषयकृतेरसंभवादसङ्गतिः स्पष्टैव । फलवानित्यत्र फलपदेन वाक्यार्थावगमो विवक्षितः । एतच्छब्दञ्च पदपदार्थावगमद्वारा वाक्यार्थोपयोगीति बोध्यम् । एवञ्च व्याकरणानध्ययनप्रयुक्तस्य वेदार्थाज्ञानप्रयुक्तस्य च प्रत्यवायस्य परिहारकतयाऽस्य नित्यत्वमिति बोद्धव्यम् । अवश्यमित्यनेन विवाचितं दर्शयति । अध्यापनमिति । लाघवं च प्रतिपदपाठापेक्षया प्रकृत्यादिविभागेनान्वाख्यानस्य विवक्षितम् । नन्वसन्देहः सन्देहाभावः, स च नात्यन्ताभावस्तस्य नित्यत्वात् । न च ध्वंसः । तत्तद्विषयकव्याकरणज्ञानवतः सन्देहस्यैवाभावेन तदसम्भवात् । यस्य त्वधीतव्याकरणस्यापि क्वचित्सन्देहः स तद्विषयकवैयाकरणत्वाभाववानेव, वेदनार्थे हि तत्र प्रत्ययोऽत आह । प्रागभाव इति । तत्परिपालनञ्च शास्त्राध्ययनफलम् । न तु स्वरूपं तस्याजन्यत्वात् । तत्पालनञ्च प्रतियोगिजनककारणविध्वंसनम् । प्रागभावस्य प्रतियोगिजन्यनाश्यत्वादिति बोध्यम् । भाष्ये ( याज्ञिकाः पठन्तीति ) । यज्ञकाण्डभवा वैदिकाः शब्दा याज्ञिकास्ते पठन्तीत्यर्थः । ऋषिः पठति, शृणोत ग्रावाण इतिवत् प्रयोगः । तत्र ऋषिर्वेदः । सन्सूत्रे भाष्ये एष प्रयोगः (ताव)

समासान्तोदात्तत्वं ततस्तत्पुरुषः । इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि । तेऽसुराः । दुष्टः शब्दः । यदधीतम् । यस्तु प्रयुङ्क्ते । अविद्वांसः । विभक्तिं कुर्वन्ति । यो वा इमाम् । चत्वारि । उत त्वः । सक्तुमिव । सारस्वतीम् । दशम्यां पुत्रस्य । सुदेवो असि वरुण इति । तेऽसुराः । तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुस्तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः । म्लेच्छा मा भूमेत्यध्येयं व्याकरणम् । तेऽसुराः । दुष्टः शब्दः । दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधादिति ।

———

ऽवसाय इत्यर्थः । मुख्यानि प्रयोजनानि प्रदर्श्य आनुषङ्गिकाणि प्रदर्शयति । इमानि चेति । भूय इति । पुनरित्यर्थः । आनुषङ्गिकत्वाच्चैषां वर्गद्वयोपादानम् । तेऽसुरा इति । निन्दार्थवादेन, न म्लेच्छितवा इति म्लेच्छनं निषिध्यते । तत्र केचिदाहुः—हैहेप्रयोगे हैहयोरिति प्लुते प्रकृतिभावे च कर्तव्ये तदकरणं म्लेच्छनमिति । पदद्विर्वचने कार्ये वाक्यद्विर्वचनं लत्वं च म्लेच्छनमित्यपरे । न म्लेच्छितवा इत्यस्य पर्यायो नापभाषितवा इति । कृत्यार्थे इति तवैप्रत्ययः । म्लेच्छ इति कर्मणि घञ् । दुष्टः शब्द इति । स्वरेण स्वरतः । आद्यादित्वात्तसिः । मिथ्या प्रयुक्त इति । यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात् प्रतिपादयन्नभिमतमर्थं नाहेत्यर्थः । वागेव वज्रो हिंसकत्वात् । यथेन्द्रशत्रुशब्दः स्वरदोषाद्यजमानं हिंसितवानित्यर्थः । इन्द्रस्याभिचारो वृत्रेणारब्धः ।

———

अनड्वाहीम् । कस्तर्हि निश्चयस्तत्राह । पूर्वपदेति । ननु अम्लेच्छत्वादीनां बहुत्वाद् बहूनामनुग्रहो न्याय्य इति प्रथमतोऽभिधानं युक्तमत आह । मुख्यानीति । प्रधानत्वादेव तेषां प्रथमतोऽभिधानमिति भावः । तेषां प्रधानत्वञ्च पदपदार्थज्ञानाधीनत्वेनान्तरङ्गत्वाद् वक्ष्यमाणानां च बहिरङ्गशब्दापशब्दप्रयोगविधिनिषेधविषयत्वादानुषङ्गिकत्वं बोध्यम् । ननु भूय इत्येकवचनमनुपपन्नं प्रयोजनानीत्यनेन सामानाधिकरण्यादत आह । पुनरिति । इमानि चेति । चः समुच्चये । भाष्ये ( प्रयोजनानीति ) । प्रवर्त्तकानि फलानि चेत्यर्थः । तत्र वक्ष्यमाणवाक्यानि प्रवर्त्तकानि, तद्बोध्यानि फलानीति विवेकः । ननु रक्षादिभिः सहैवैतानि कुतो न पठितानीत्यत आह । आनुषङ्गिकत्वादिति । एषामानुषङ्गिकत्वन्तेषां प्रधानत्वं बोधयितुं तथोक्तिरिति भावः । ननु पराबभूवुस्तस्माद् ब्राह्मणेनेति श्रुतौ पराभवस्यापशब्दभाषणफलत्वावगतेः पराभूता मा भूमेत्यध्येयमिति वक्तुमुचितमत आह । निन्दार्थवादेनेति । द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादिति न्यायेन, यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीत्यादावपापश्लोकश्रवणप्राशस्त्यमात्रपरत्ववदस्य निन्दामात्रपरत्वादिति भावः । प्रकरणाच्च क्रत्वङ्गोऽयं निषेधः । केचिदाहुरिति । अत्राप्यचित्रबीजन्तु सर्वः प्लुतः साहसमनिच्छता विभाषा कर्त्तव्य इति । पदेति । सर्वस्य द्वे इत्यत्र पदग्रहणस्य वार्त्तिककृतोक्तत्वादिति भावः ननु नेदं द्वित्वं किं स्वैच्छिकः पुनः प्रयोगोऽत आह । लत्वं चेति । न म्लेच्छितवै इत्येतन्म्लेच्छभाषाविषयमिति भ्रमनिवृत्त्यर्थं तद्विवरणं नापभाषितवै इति । ह वै इति प्रसिद्धौ । अपशब्दत्वं व्याकरणाननुगतशब्दस्येषद्भ्रंशत एव प्रसिद्धमिति भावः । ननु म्लेच्छो नाम पुरुषविशेषो देशविशेषो वा, स कथमपशब्दोऽत आह । घञिति । निन्दावचनान्म्लेच्छेतरिति भावः । निन्दा च शास्त्रबाधितविपरीतोच्चारणेन पापसाधनत्वात् । एवं च म्लेच्छा इत्यस्य निन्द्या इत्यर्थ इति दिक् । असर्वनामत्वात्तसोऽप्राप्तेराह । स्वरेणेति । आद्यादित्वादिति च । तमित्यस्य यच्छब्दापेक्षित्वादाह । यदर्थेति । मिथ्याप्रयुक्त इत्यस्य विवरणं ततोऽर्थान्तरमिति । न केवलं तदर्थं नाहेत्येतावत् किन्तु प्रत्यवायोत्पादनद्वारा हिंसकोऽपीत्याह । वाग्वेति । यथाध्वर्युकृताद्धोमाद्यजमाने धर्मोत्पत्तिरेवन्तत्कृताऽपशब्दप्रयोगात्तस्मिन् प्रत्यवाय इत्याशयः । तत्र दृष्टान्तमाह । यथेति । वृत्रेणेति हेतौ तृतीया । फलमपीह हेतुः ।

दुष्टाञ्छब्दान् मा प्रयुक्ष्महीत्यध्येयं व्याकरणम् । दुष्टः शब्दः । यदधीतम् । यदधीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हि चित् । तस्मादनर्थकं माधिगीष्महीत्यध्येयं व्याकरणम् । यदधीतम् । यस्तु प्रयुङ्क्ते । यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले । सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चाऽपशब्दैः । कः । वाग्यो-

---

तत्रेन्द्रशत्रुर्वर्धस्वेति मन्त्र ऊहितः । तत्रेन्द्रस्य शमयिता शातयिता भवेति क्रियाश-ब्दोऽत्र शत्रुशब्द आश्रितो, न तु रूढिशब्दः । तदाश्रयणे बहुव्रीहितत्पुरुषयोरर्थाभेदः । तत्रेन्द्रामित्रत्वे सिद्धे सति इन्द्रस्य शत्रुर्भवेत्यत्रार्थे प्रतिपाद्येऽन्तोदात्ते प्रयोक्तव्ये आद्युदात्त ऋत्विजा प्रयुक्त इत्यर्थान्तराभिधानादिन्द्र एव वृत्रस्य शातयिता सम्पन्नः । इन्द्रशत्रुत्वस्य च विधेयत्वात् सम्बोधनविभक्तेरनुवाद्यविषयत्वादिहा-ऽभावः । यथा राजा भव युद्धस्वेति । ऊह्यमानस्य चामन्त्रत्वाद्यज्ञकर्मणीति जपादि-पर्युदासेन मन्त्राणामेकश्रुतिर्विधीयमानेह न भवति । अविज्ञातमिति । अविदितस्वरा-दिसंस्कारत्वादर्थापरिज्ञानाद्वा । निगदेनेति । पाठमात्रेण । न तज्ज्वलतीति निष्फलं भवति । अनर्थकम् । निष्प्रयोजनम् । यस्तु प्रयुङ्क्ते इति । अनेनाभ्युदयहेतुत्वं व्याकरणाध्ययनस्य दर्शयति । विशेष इति । स एव शब्दः क्व चिदर्थे केनचि-न्निमित्तेन प्रयुक्तः साधुः । अन्यथा त्वसाधुः । यथाऽश्वेऽस्वशब्दो धनाभावनिमित्तकः साधुः । जातिनिमित्तकोऽसाधुः । गवि च गोणीशब्दः साधर्म्यात् प्रयुक्तः साधुः । जातिप्रयुक्तस्त्वसाधुः । क इति । वाग्योगविदः श्रुतत्वाद्दोषदर्शनाच्च प्रश्नः ।

---

मन्त्र इति । न चोहितस्य कथं मन्त्रत्वमिति वाच्यम् । मन्त्रशब्दस्य बोधकपरत्वात् । अत एव मन्त्रो हीनः स्वरत इति प्रसिद्धमपि शिक्षापाठं विहाय भाष्ये दुष्टः शब्द इति पठितम् । तत्रत्यमन्त्रशब्दस्य शब्दमात्रपर-तेतिं सूचयितुम् । शत्रुशब्दस्यामित्रपर्यायत्वे बहुव्रीहितत्पुरुषयोरविशेषोऽत आह । तत्रेन्द्रस्येति । शदेर्ण्यन्ता-दौणादिकः क्रुन् । प्रज्ञादिगणे निपातनाद् ह्रस्वत्वम् । शमेस्तु तृच्त्वम् । सम्बोधनविभक्त्यभावमाह । इन्द्रशत्रु-त्वस्येति । नन्वत्र यज्ञकर्मणीत्येकश्रुतौ प्राप्तायां पूर्वपदप्रकृतिस्वरकरणं स्वरापराध इति वक्तुं युक्तम् । न च तथैवास्तु । शतपथब्राह्मणतद्भाष्यविरोधात् । तत्र हि आद्युदात्तत्वकरणमेव स्वरापराध उक्त इत्यादिस्पष्टमस्प-ष्टैकश्रुत्यनुवादेऽत आह । ऊह्यमानस्य चेति । तदुक्तमनाम्नातेष्वमन्त्रत्वमिति । न चास्यामन्त्रत्वे लौकिक-शब्देन क्रियमाणस्य कर्मणः कथं फलजनकत्वमिति वाच्यम । सूर्याय त्वेत्यादौ लौकिकघटितस्य ऊहविधायक-शास्त्रबलेन फलजनकत्ववदुपपत्तेरित्याहुः ॥ नन्वधीतमविज्ञातमिति विरुद्धमत आह । अविदितेति ।

शुष्कैध इति । सान्तक्लीबैधःशब्देनादन्तपुल्लिङ्गेन वा निर्वाह्यम । निरुक्ते तु यद्गृहीतमविज्ञातमिति पठ्यते तत्र गृहीतं शब्दतः । अविज्ञातमर्थत इति बोध्यम् । भाष्ये (तस्मादनर्थकमिति) । अनेन निन्दार्थवादेन निष्प्र-योजनाध्ययनानौचित्येन निष्प्रयोजनं नाध्येयमिति निषेधकल्पनाद्विति भावः । अतो निषिद्धम् अध्ययनं मा भूदिति व्याकरणमध्येयमिति तात्पर्यम् । एकः पूर्वपरयोरित्यत्र भाष्यपठितैकः शब्द इत्यादिश्रुतिमूल-कमाह । भाष्ये ( यस्त्विति ) अभ्युदये हेतुत्वम् अदृष्टद्वारा पुरुषार्थसाधनत्वम् । कुशलोऽधीतव्याकरणः । लक्षणस्मरणपूर्वकं यः प्रयुङ्क्त इति फलति । विशेष इति । अर्थ विशेष इत्यर्थः । तदाह । स एवेति । साधर्म्यात्, साधर्म्यमूलकादभेदारोपात् । भाष्ये ( यथावत् ) । आम्वृक्तादिदोषरहितम । वाचो योगः प्रकृतिप्रत्ययविभागेनार्थविशेषपरत्वं तद्वेत्तीति वाग्योगवित् । श्रुतत्वादिति । एकत्र जयाभिशेषयोश्चका-रेण समुच्चयप्रतिपादनाद्वेत्यपि बोध्यम् । दोषदर्शनादिति । शास्त्रस्याधर्महेतुत्वं दोष इत्यर्थः । वादि-

गविदेव । कुत एतत् । यो हि शब्दान् जानाति अपशब्दानप्यसौ जानाति यथैव हि शब्दज्ञाने धर्मः । एवमपशब्दज्ञानेऽप्यधर्मः । अथ वा भूयानधर्मः प्राप्नोति । भूयांसोऽपशब्दाः । अल्पीयांसः शब्दाः । एकैकस्य शब्दस्य बहवोऽपभ्रंशाः । तद्यथा । गौरित्यस्य गावी गोणी गोता गोपोतलिकेत्येवमादयोऽपभ्रंशाः । अथ योऽवाग्योगवित् । अज्ञानं तस्य शरणम् । विषम उपन्यासः । नात्यन्तायाऽज्ञानंशरणं भवितुमर्हति । यो ह्यजानन् वै ब्राह्मणं हन्यात् सुरां वा पिबेत् सोऽपि मन्ये पतितः स्यात् । एवं तर्हि सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चाऽपशब्दैः । कः । अवाग्योगविदेव । अथ यो वाग्योगविद् । विज्ञानं तस्य शरणम् । क्व पुनरिदं पठितम् । भ्राजा नाम श्लोकाः । किं च भोः श्लोका अपि प्रमाणम् । किं चाऽतः ? ।

प्रष्टैव परमतमाशङ्कयाह । वाग्योगविदेवेति । एवमपशब्दज्ञानेऽपीति । यथा श्लैष्मिकद्रव्यसेवया श्लैष्मिको व्याधिर्भवति तद्विपरीतसेवया त्वारोग्यं, तथात्रापि यथोक्तं न्याय्यमिति भावः । भूयांसोऽल्पीयांस इति परमतापेक्षया प्रकर्षे प्रत्ययः । यदि मन्यसे बहवः शब्दा अल्पेऽपशब्दा अङ्गभूयस्त्वाच्च फलभूयस्त्वमिति । तन्न । यस्माद् भूयांसोऽपशब्दा अल्पीयांसः शब्दाः । अज्ञानमिति । यथा च तिरश्चां ब्रह्महत्यादिफलाभावः । नात्यन्तायेति पुरुषाणां विधिनिषेधयोरधिकारात्तत्परिज्ञाने प्रयत्नस्य न्याय्यत्वात् प्रकरणात् सामर्थ्यं बलीय इत्याह । अवाग्योगविदिति । वाग्योगवित्तूभयज्ञोऽपि शब्दान् प्रयुङ्क्ते, नापशब्दानिति ज्ञानपूर्वकप्रयोगादभ्युदयभाग् भवति । श्लोकस्याप्रसिद्धत्वात् पृच्छति । क्व पुनरिति । प्रातिपदिकार्थप्रश्न एवात्र तात्पर्यं, किं तदस्ति । यत्रेदं पठितमित्यर्थः । अत एव श्लोका इति प्रथमान्तेनोत्तरम् । अन्यथा श्लोके-

---

प्रतिवादिपूर्वपक्षोत्तरपक्षतया व्याख्यानेऽसामञ्जस्यं मत्वाह । प्रष्टैवेति । भाष्ये ( कुत एतदिति ) । वाग्योगविदो दोषः कुत इत्यर्थः । ननु साधुज्ञानस्य यथा धर्मजनकता शास्त्रोक्ता, न तथाऽसाधुज्ञानस्याधर्मजनकता शास्त्रोक्तेत्यत आह । यथेति । एवञ्चापशब्दज्ञानमधर्मसाधनं. धर्महेतुशब्दज्ञानविरोधित्वात् । यद्यद्विरोधि तत्तद्विरोधिफलकं यथा श्लैष्मिकद्रव्यसेवेत्यनुमानं प्रमाणमिति भावः । एवञ्च शास्त्रस्याधर्महेतुतया तत्र प्रवृत्तिर्न स्यादिति नेदं वचो व्याकरणाध्ययनानुष्ठापकं स्यादिति तात्पर्यम् । नन्वस्त्वधर्मोऽपि तथापि धर्माधिक्यायाध्येयं व्याकरणमत आह । भाष्ये ( अथवेति ) । अङ्गभूयस्त्वादिति । अङ्गानां धर्मजनकानां भूयस्त्वादित्यर्थः । एवञ्च यज्ञादेः पापजनकत्वेऽप्याधिकधर्मजनकत्वाद्यथा तत्र प्रवृत्तिस्तथा प्रकृतेऽपीति भावः । अल्पीयांसः शब्दा इति । एवञ्च अवहतिप्रक्षिप्तक्षीरवदनुपादेयं तद्विज्ञानमिति भावः । नन्वेवं सामर्थ्यादवाग्योगविदेव दुष्यतीत्यत्र कर्त्ताऽस्त्वत आह । भाष्ये ( अथ योऽवाग्योगविदिति ) अत्यन्तमित्यर्थेऽत्यन्तायेति अव्ययम् । पुरुषाणामिति । मनुष्याणामित्यर्थः । तिरश्चामत्यन्तायोग्यत्वादस्त्वज्ञानं शरणं, मनुष्याणान्तु योग्यत्वात्तैर्निषिद्धानुष्ठानवर्जनार्थमवश्यं शास्त्रं विज्ञेयम् । अतोऽवाग्योगविदो महाननर्थ इति भावः । तत्र, नात्यन्तायेत्यनेन शास्त्राज्ञानं नैव शरणं, दोषद्वयप्रसङ्गात् । किन्तु वध्यादेर्ब्राह्मणत्वाद्यज्ञानमेव पापाल्पत्वे प्रयोजकमिति ध्वनितम् । भाष्ये ( यो ह्यजानन्निति ) । निषेधशास्त्रमजानन् ब्राह्मणत्वादिज्ञानपूर्वकं तद्वधादि कुर्यात् सोऽपि पतित एवेत्यर्थः । प्रकरणादिति । संनिधेरित्यर्थः । नन्वेवं वाग्योगविदोऽपशब्दज्ञानादधर्मः स्यादत आह । वाग्योगेति । एवञ्चाऽपशब्दप्रयोग एवाऽधर्महेतुर्न ज्ञानमात्रमिति न दोष इति भावः । भ्राजा नाम कात्यायनप्रणीताः श्लोका इत्याहुः । भाष्ये ( किञ्चात इति ) । अतः

यदि श्लोका अपि प्रमाणम् । अयमपि प्रमाणं भवितुमर्हति । यदुदुम्बर-वर्णानां घटीनां मण्डलं महत् । पीतं न गमयेत् स्वर्गं किं तत् क्रतुगतं नयेदिति । प्रमत्तगीत एषः । तत्र भवतो यस्त्वप्रमत्तगीतस्तत् प्रमाणम् । यस्तु प्रयुङ्क्ते । अविद्वांसः । अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः । कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् । अभिवादे स्त्रीवन्मा भूमेत्यध्येयं व्याकरणम् । अविद्वांसः । विभक्तिं कुर्वन्ति । याज्ञिकाः पठन्ति । प्रयाजाः सविभक्तिकाः कार्या इति । न चान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम् । विभक्तिं कुर्वन्ति । यो वा इमाम् । यो वा इमां पदशः स्वरशोऽक्षरशो वाचं विदधाति स आर्त्विजीनो भवति । आर्त्विजीनाः

———

ष्विति वक्तव्यं स्यात् । आप्तोक्तत्वापरिज्ञानादाह । किं च भो इति । यदुदुम्बरेति । अयं श्लोकः सौत्रामणियागे सुरापानस्य दुष्टत्वमुद्भावयति । प्रमत्तगीत इति । प्रमादेन विप्रतिपन्नत्वेन गीत इत्यर्थः । कात्यायनोपनिबद्धभ्राजाख्यश्लोकमध्यपठितस्य स्वस्य श्रुतिरनुग्राहिकाऽस्ति । एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग् भवतीति । स्त्रीष्विवेति । प्रत्यभिवादे हि गुरुणा प्लुतः कार्यः । यस्तु प्लुतं कर्तुं न जानाति स स्त्रीवद्वक्तव्योऽयमहमिति, न त्वभिवादये देवदत्तोऽहमसीत्यादिना संस्कृतवाक्येनेत्यर्थः । प्रयाजा इति । प्रयाजादिमन्त्रा ऊह्यमाना अग्निशब्दप्रकृतिक-विभक्तियुक्ता इत्यर्थः । यथा समिधोऽग्न आज्यस्य व्यन्तु अग्नेऽग्न इति । पदश इति । पदं पदमिति संख्यैकवचनाच्च वीप्सायामिति शस् । स्वरश इति । स्वर उदात्तादिः । अक्षरश इति । अक्षरं व्यञ्जनसहितोऽच् । आर्त्विजीन इति । ऋत्विजमर्हत्यार्त्विजीनो

———

प्रश्नात् किं विवक्षितमित्यर्थः । उदुम्बरं, ताम्रम् । दुष्टत्वमिति । इदमुपलक्षणम् । अन्यत्राप्यदुष्टत्वस्य । ननु कर्तरि क्तान्तप्रमत्तशब्दस्य गीतशब्देन समासोऽनुपपन्नः । तत्र भवत इत्यनेन साकाङ्क्षत्वादत आह । प्रमादेनेति । भावे क्तान्त इति भावः । विप्रतिपन्नत्वेन । वेदविषयविप्रतिपत्त्याश्रयत्वेन । तत्त्वं स्वस्मिन्नारोप्य दैत्यनाशाय पूज्यस्यापि भगवत ईश्वरस्य तथोक्तिरिति स न प्रमाणमिति भावः ।

भाष्ये, यस्त्वप्रमादेन गीतो यस्य कस्यापि तत्प्रमाणमिति प्रतिनिर्देशाल्लिङ्गम् । ननु कथं ज्ञातमयमप्रमत्तगीत इत्यत आह । श्रुतिरनुग्राहिकेति । भाष्ये (अविद्वांस इति) । अत्र योग्यत्वाद् व्याकरणं कर्म बोध्यम् । प्रत्यभिवादे अभिवादानन्तरप्रयोज्ये वचने, नाम्नोऽभिवादकनाम्नष्टेः प्लुतं कर्तुं ये न जानन्ति तेषु कामं निःशङ्कं विप्रोष्य प्रवासादेत्य । यद्वा । कामं विध्यनुसारमन्तरैवेत्यर्थः । अयमहमित्यनुकरणस्यानितिपरत्वेऽपि कृद्योगाभावाद् गतित्वाभावेन वदेरित्यस्य तिङन्तत्वेन च समासाभाव इत्याहुः । अत्र क्वचिदयमहमिति वदेत् । अनुकरणं चानितिपरमिति गतित्वात् समास इति पाठो दृश्यते, सोऽपपाठः । भाष्ये (स्त्रीवदिति) । तदनुकरणेन शास्त्राज्ञानित्वकृतापमानप्रयुक्तदुःखभाजो मा भूमेति भावः । ननु प्रकृतौ प्रयाजमन्त्राः सविभक्तिका एव पठ्यन्ते तत्किमनेन वचनेनेत्यत आह । प्रयाजेति । ऊह्यमाना याऽग्निशब्दप्रकृतिकविभक्तिस्तद्युक्ता इत्यर्थः । मन्वग्निशब्दप्रकृतिकेत्यसङ्गतम् । अपूर्वविभक्तिमात्रविधाने. न केवलः प्रत्यय इति निषेधाद् यत्किञ्चित्प्रातिपदिकप्रकृतिकाः सर्वा विभक्तयः प्रयोक्तव्या इति प्राप्नोतीति चेन्न । त्वमग्ने प्रयाजानुयाजानां पुरस्ताच्च पश्चादिति मन्त्रवर्णेनाग्निशब्दप्रकृतिका एव ता इत्याशयात् । तत्राग्नेर्देवताया एकत्वादेकवचनमेव । विभक्तयश्च प्रथमाद्वितीयातृतीयाषष्ठीसप्तम्य एवेति श्रौतसंप्रदायः । व्यञ्जनसहित इति । यथा "ये यजामहे"

स्यामेत्यध्येयं व्याकरणम् । यो वा इमाम् । चत्वारि । चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेशेति ॥ चत्वारि शृङ्गाणि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च । त्रयो अस्य पादाः । त्रयः कालाः भूतभविष्यद्वर्तमानाः । द्वे शीर्षे । द्वौ शब्दात्मानौ । नित्यः कार्यश्च । सप्त हस्तासो अस्य । सप्त विभक्तयः । त्रिधा बद्धः । त्रिषु स्थानेषु बद्धः । उरसि कण्ठे शिरसीति । वृषभो वर्षणात् । रोरवीति शब्दं करोति । कुत एतत् । रौतिः शब्दकर्मा । महो देवो मर्त्याँ आविवेशेति । महान् देवः शब्दो मर्त्या मरणधर्माणो मनुष्याः, तानाविवेश । महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम् । अपर आह । चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥ चत्वारि वाक्परि-

---

यजमानः । ऋत्विक्कर्मार्हतीति याजको ऽप्यार्त्विजीनः । यज्ञर्त्विग्भ्यां घखञाविति सूत्रेण यज्ञर्त्विग्भ्यां तत्कर्मार्हतीति चोपसङ्ख्यानमिति वार्त्तिकेन च खञ् । विद्वान् यजेत विद्वान् याजयेदिति द्वयोरपि विदुषोरधिकारात् । चत्वारीति । शब्दस्य वृषत्वेन निरूपणम् । त्रयः काला इति । लङादिविषयाः । नित्यः कार्यश्चेति । व्यङ्ग्यव्यञ्जकभेदेन । सप्त विभक्तय इति । सुप इत्यर्थः । के चित्तु तिङामपरिग्रहप्रसङ्गात्सह शेषेण सप्त कारकाणि विभक्तिशब्दाभिधेयानीति व्याचक्षते । वर्षणादिति । कामानां ज्ञानपूर्वकानुष्ठानफलत्वात् । महतेति । परेण ब्रह्मणेत्यर्थः । चत्वारीत्यनेनैकदेशेन वाक्यान्तरमपि सूच्यते इत्याह । अपर आहेति । परिमितानीति प्राप्ते शेश्छन्दसि बहुलमिति शेर्लोपे परिमितेति भवति । परिमितानि परिच्छिन्नान्येतावन्त्येवेत्यर्थः । मनीषिशब्दः

---

इति पञ्चाक्षरमिति । वर्णञ्चाहुः पूर्वसूत्र इति भाष्याद् वर्णमात्रमित्यन्ये । सकृत्प्रयुक्तार्त्विजीनशब्दस्योभयपरत्वे युक्तिमाह । विद्वानिति । वेदार्थज्ञ इत्यर्थः । चत्वारीति । ऋङ्मन्त्रः । शब्दस्येति । शब्दशास्त्रप्रतिपाद्यस्येत्यर्थः । वृषभाकारः शब्दशास्त्रप्रतिपाद्यः शब्दो रोरवीति महान् देवोऽन्तर्यामिरूपः शब्दो मर्त्यानाविवेश स्वाभेदमाविष्कृतवानिति मन्त्रतात्पर्यम् । महतो देवस्य शब्दब्रह्मणो व्याकरणज्ञाप्यतया व्याकरणज्ञस्तत्राविष्ट इव भवतीति यावत् । भाष्ये (पदजातानि) । परापश्यन्तीमध्यमावैखरीरूपाणि । अत एवाग्रे निपाताश्चेति चकारः सङ्गच्छते । नामाख्यातेति । नामशब्देन सुबन्तं, नमत्याख्यातार्थं प्रति विशेषणीभवतीति व्युत्पत्तेः । आख्यातं तिङन्तम् । उपसर्गनिपातयोः पृथगुपादानं गोबलीवर्दन्यायेन व्यङ्ग्य आन्तरो व्यञ्जको वैखरीरूपः । तिङ्विभक्तीनां षट्त्वादाह सुप इति । सह शेषेणेति । शेषः षष्ठ्यर्थः । तत्सहितकारकाभिधायकत्वेन सुप्तिङोरुभयोरपि संग्रह इति भावः ।

भाष्ये (उरसीत्यादि) । हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् । उरस्यन्तं विजानीयात् । स्युर्मूर्द्धन्या ऋटुरषा इत्युक्तेर्मूर्द्धैव शिरः कण्ठ इत्यनेन मुखान्तर्गतकण्ठादिस्थानमुपलक्ष्यते । ननु वर्षति मूत्रेण भूमिं सिञ्चतीति वृषभ इत्युच्यते तत्कथं शब्द एवमित्यत आह । कामानामिति । मेघसुवक्तमिवोक्तचतुःशृङ्गत्वादिगुणवैशिष्ट्येन ज्ञानपूर्वकं प्रयोगेण कामानां दानादित्यर्थः । द्विशृङ्गद्विपादद्विकरकण्ठमात्रबद्धलौकिकवृषभादस्य व्यतिरेकः । किं रोरवीति तत्राह । भाष्ये (महान् देव) इत्यादि । महान् परब्रह्मस्वरूपो देवोऽन्तर्यामिरूपः शब्दो मर्त्येष्वाविष्ट इत्यर्थः । तदावेशफलमाह । (महता देवेनेति (साम्यं) सायुज्यम् । तदुक्तं हरिणा । अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् । प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते । आह च । चत्वारि शृङ्गा त्रयो-

मिता पदानि । चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च । तानि विदुर्ब्राह्मणा ये मनीषिणः । मनस ईषिणो मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति । गुहायां त्रीणि निहितानि नेङ्गयन्ति न चेष्टन्ते न निमिषन्तीत्यर्थः । तुरीयं वाचो मनुष्या वदन्ति । तुरीयं वा एतद्वाचो यन्मनुष्येषु वर्तते चतुर्थमित्यर्थः । चत्वारि । उत त्वः । उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् । उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः । अपि खल्वेकः पश्यन्नपि न पश्यति । अपि खल्वेकः शृण्वन्नपि न शृणोति । एनामिति । अविद्वांसमाहार्द्धम् । उतो त्वस्मै तन्वं विसस्रे। तनुं विवृणुते। जायेव पत्य उशती सुवासाः। तद्यथा। जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते । एवं वाग् वाग्विदे स्वात्मानं

---

पृषोदरादित्वीत् साधुः। कथं मनीषिण एव विन्दन्तीत्याह। गुहेति। अज्ञानमेव गुहा। तस्यामित्यर्थः। सुपां सुलुगिति सप्तम्या लुक्। व्याकरणप्रदीपेन तु तानि प्रकाशन्ते। तत्र चतुर्णां पदजातानामेकैकस्य चतुर्थभागं मनुष्या अवैयाकरणा वदन्ति । नेङ्गयन्तीत्यस्यैव व्याख्यानं- न चेष्टन्ते, न निमिषन्तीति। उत त्व इति। त्वशब्दोऽन्यवाची। उतशब्दोऽपिशब्दस्यार्थे, स च भिन्नक्रमः। प्रत्यक्षेण शब्दस्वरूपमुपलभमानोऽप्यर्थाऽपरिज्ञानान्न पश्यतीत्यर्थः। उतो इति। उत उ इति निपातसमाहारः। अविद्वांसमाहा-

---

र्द्धस्य पादा इत्यादि ऋङ्मन्त्रः। इह द्वौ शब्दात्मानौ कार्यो नित्यश्च। तत्रान्त्यः सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभस्तस्मिन् खलु वाग्योगवित् शास्त्रजशब्दज्ञानपूर्वकं प्रयोगेण क्षीणपापः पुरुषो ...छेद्याहंकारग्रन्थीन् अत्यन्तं संसृज्यते इति तदर्थं तद्व्याख्यातारः। एतावन्त्येवेति। (वाक्परिमितानीति) षष्ठीतत्पुरुषः। पदजातानि। परापश्यन्तीमध्यमावैखर्यः। नामादीनि च। नामादिमध्ये च। एकैकं चतुष्पात्कम्। भाष्ये (मनस ईषिणः)। चित्तशुद्धिक्रमेण वशीकर्त्तारो विषयान्तरेभ्यो व्यावृत्त्या हिंसका वा। ते च वैयाकरणाः। अन्येषां तदविज्ञाने हेतुमाह। गुहेति। एकैकस्य नामादिरूपस्य। चतुर्थं भागम्। एकैकस्य चतुरंशत्वात् परादीनां वा त्रयोंशा मुख्यमांता; गुहा अज्ञानं हृदयादिरूपा च। वैयाकरणस्तु शास्त्रबलेन तद्बललब्धयोगेन च गुहान्धकारं विदार्य सर्वं जानातीति भावः। न निमिषन्तीति। ज्ञानसामान्यविषयत्वाभाव उच्यते। भाष्ये (यन्मनुष्येषु वर्त्तत इति)। ज्ञानविषयतया तद्वाचश्चतुर्थमित्यन्वयः। तस्मात् सकलपदज्ञानाय मनीषित्वाय वाऽध्येयं व्याकरणमिति शेषः। हरिरप्याह । वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम । अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्। तत्र श्रोत्रविषया वैखरी। मध्यमा हृदयदेशस्था पदप्रत्यक्षानुपपत्त्या व्यवहारकारणम्। पश्यन्ती तु लोकव्यवहारातीता। योगिनान्तु तत्रापि प्रकृतिप्रत्ययविभागावगतिरस्ति। परायान्तु नेति त्वध्या इत्युक्तम्। स्वरूपज्योतिरेवान्तः परा वागनपायिनी। तस्यां दृष्टस्वरूपायामधिकारो निवर्तते इत्युक्तेः। अनेकतीर्थभेदायाः, नामाख्यातादिवीणावेणुमृदङ्गशब्दादिरूपानेकभेदायाः। आह खल्वपि, चत्वारि वाक्परिमितानीति ऋङ्मन्त्र इति तद्व्याख्यातारः। उत त्व इति। उत शब्दोऽप्यर्थे। बहूनामपि समानपृष्ठोदरपाणिपादानामध्ययनमधीयानानामेकः कश्चित्पश्यन्नपि स्वभ्यस्ताध्ययनोऽपि तीक्ष्णबुद्धिरपि सन्न पश्यति अर्थानभिज्ञत्वात्। अर्थपरिज्ञानफला हि वागित्यभिप्रायः। एवमेकः शृण्वन्नपि न शृणोत्येनां वाचं य एव ह्यर्थं सम्यगवबुध्यते तेनैव सा सम्यक् श्रुता भवति। एवमर्द्धेनाविद्वांसं निन्दित्वाऽर्द्धान्तरेण विद्वांसं स्तौति। (उतो त्वस्मै)। अन्यकस्मै कस्मै चिद्वैयाकरणाय तन्वं शरीरं विवृणोति प्रकाशयति सम्यक् ज्ञानं हि प्रकाशनमर्थस्य। अर्थो हि वाचः शरीरम्। अर्थोपमायुक्त्या उ..मया वाचान्त्यपादेन अर्थज्ञं प्रशंसति, यथा जाया विभूतसर्वाङ्गावयवा भूत्वोशती कामयमाना भर्त्रे प्रेम्णा दर्शयत्यात्मानं कस्मिन् काले यदा सुवासा निर्णिक्तवासा नीरजस्का ऋतुकालेषु तदा ह्यतितमां स्त्री पुरुषं प्रार्थयते। यथा तत्पुरुषस्तां यथावत् पश्यति शृणोति च तद्वचनार्थं, नान्यदा घनपद्मा-

विवृणुते । वाङ् नो विवृणुयादात्मानमित्यध्येयं व्याकरणम् । उत त्वः सक्तुमिव । सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत । अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताऽधिवाचि । सक्तुः सचतेर्दुर्धावो भवति कसतेर्वा विपरीताद्विकसितो भवति । तितउ परिपवनं भवति । ततवद्वा तुन्नवद्वा । धीरा ध्यानवन्तो मनसा प्रज्ञानेन वाचमक्रत अकृषत । अत्रा सखायः सख्यानि जानते । अत्र सखायः सन्तः सख्यानि जानते । क्व । एष दुर्गो मार्गः । एकगम्यो वाग्विषयः । के पुनस्ते । वैयाकरणाः । कुत एतत् । भद्रैषां लक्ष्मीर्निहिताधिवाचि । एषां वाचि भद्रा लक्ष्मीर्निहिता भवति । लक्ष्मीर्लक्षणाद्भासनात् परिवृढा भवति । सक्तुमिव । सारस्वतीम् । याज्ञिकाः पठन्ति । आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्व-

---

र्वेदिति । अविद्धल्लक्षणमर्थमर्धर्चं आहेत्यर्थः । सचतेरिति । षच सेचन इत्यस्य । दुर्धाव इति । दुःशोधः । यथा तितउना सक्तोस्तुषाद्यपनीयते तथा व्याकरणेन वाचोऽपशब्दा इत्यर्थः । कसतेरिति । पृषोदरादित्वाद्वर्णव्यत्ययः । ततवदिति । विस्तारयुक्तमित्यर्थः । तुन्नवदिति । बहुच्छिद्रम् । धीरा इति । वैयाकरणाः । वाचमक्रतेति । अपशब्देभ्यो विविक्तां कृतवन्तः । मन्त्रे घसेति लेर्लुकि सत्यऽक्रतेति रूपम् । अत्रा सखाय इति । ऋचि तुनुघेति दीर्घः । सखायः समानख्यातयो भेदग्रहस्य निवृत्तत्वात् सर्वमेकमिति मन्यन्ते । सख्यानीति । सायुज्यानीत्यर्थः । एकगम्य इति । ज्ञानेनैव प्राप्यः । वाचीति । वेदाख्ये ब्रह्मणि या लक्ष्मीर्वेदान्तेषु परमार्थसंविल्लक्षणोक्ता सैषां निहितेत्यर्थः । प्राय-

---

वृतशरीराम् । एवं स एनां वाचं पदशः प्रकृतिप्रत्ययविभागेन विगृह्यार्थमस्याः पश्यति शृणोति चेत्यर्थः । अयमर्थो निरुक्ततद्भाष्ययोः स्पष्टः । (वाग्विदे) वैयाकरणाय । भाष्ये (सक्तुमिवेति) । यत्र व्याकरणे धीरा ध्यानवन्तः सन्तस्तितउना सक्तुमिव ध्यानयुक्तमनसा तत्करणकज्ञानेन वाचमक्रत अकृषत असाधुभ्यो विविक्तां कृतवन्तस्ते तत्करणेन शुद्धचित्ताः । अत्र ब्रह्मप्रतिपादकशब्दे शब्दार्थयोरभेदबुद्ध्या । सखायः समानख्यातयः समानज्ञानाः । तच्छब्दे ब्रह्मैकत्वज्ञानवन्तस्तेनैव दृष्टान्तेन सर्वपदार्थेषु ब्रह्मनिरूपिताभेदज्ञानवन्तः सख्यानि सायुज्यानि जानते प्राप्नुवन्तीत्यर्थः । यत एतेषां वाचि भद्रा लक्ष्मीः स्वप्रकाशब्रह्मरूपा अधि अधिकं निहिता स्थिता भवतीति ऋगर्थः । सचतेर्दुर्धाव इति । यतः सचतेरतो दुःशोध्यार्थप्रतिपादको भवतीत्यर्थः । तितउशब्द इत एव भाष्यान्नपुंसकः । चालनी तितउः पुमानिति कोशात् पुंलिङ्गोऽपि । विस्तारेति । तनोतेर्डउः सन्वच्चेति व्युत्पत्तेरिति भावः । तुन्नेति । तुदधातोः कर्मणि डउः सन्वच्चेति भावः । ध्यानं ज्ञातार्थभावनं मनसेति व्यापारपरं तदाह । प्रज्ञानेनेति । भाष्ये (क्वेति) । किं तद्यत्र सायुज्यानि प्राप्नुवन्ति इति प्रश्नः । उत्तरयति । य एष इति । दुर्गमार्गप्राप्यत्वाद्दुर्गमार्गत्वोपचारः । दुर्गत्वमेवाह । एकेति । ज्ञानेनैवेति । निर्विकल्पकज्ञानेनैवेत्यर्थः । अत एव दुर्गत्वं, नान्यः पन्था इति श्रुतेरिति भावः । भाष्ये वाग्विषय इति च्छेदः । अत एव श्रवणोपपत्तिः । वाग् वेदरूपाऽत्र । वेदान्तेष्विति । सत्यं ज्ञानमित्यादिषु । परमार्थसंविल्लक्षणा । परमार्थब्रह्ममात्रविषयज्ञानाविषयाऽखण्डार्थरूपा सैषां वाचि निहितेत्यर्थः । सर्वोऽपि वेदस्तेषां ब्रह्मपरो, वेदैश्च सर्वैरहमेव वेद्य इत्युक्तेरिति भावः । अयं भावः । ये शास्त्रतः प्रकृतिप्रत्ययविभागेन साधून् ज्ञात्वा शास्त्रार्थध्यानवन्तो मानसज्ञानेन वाचमसाधुभ्यः पृथक् कृतवन्तस्ते तज्ज्ञानपूर्वकसाधुशब्दप्रयोगैर्लब्धान्तःकरणशुद्धयोऽत्र एष दुर्गो मार्गो ब्रह्मरूपस्तत्रात्मना सह समानख्यातयस्त्यक्तभेदभावनाः सख्यानि सायुज्यानि प्राप्नुवते यत एतेषां वाचि वेदाख्ये ब्रह्मणि भद्रा लक्ष्मीः सर्वभासकब्रह्मरूपा अधि अधिकं निहिता भवति । एतच्छास्त्रसाध्यप्रयोगव्यङ्ग्यस्य ध्वनिरूप-

पेदिति । प्रायश्चित्तीया मा भूमेत्यध्येयं व्याकरणम् । सारस्वतीम् । दशम्यां पुत्रस्य । याज्ञिकाः पठन्ति । दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्यात् । घोषवदाद्यन्तरन्तःस्थमवृद्धं त्रिपुरुषानूकमनरि प्रतिष्ठितं तद्धि प्रतिष्ठिततमं भवति द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितमिति । नचान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम् । दशम्यां पुत्रस्य । सुदेवो असि । सुदेवो असि वरुण यस्य ते सप्तसिन्धवः । अनु क्षरन्ति काकुदं सूर्म्यं सुषिरामिव । सुदेवो असि वरुण सत्यदेवोऽसि यस्य ते सप्तसिन्धवः सप्त विभक्तयः । अनुक्षरन्ति काकुदं तालु । काकुर्जिह्वा साऽस्मिन्नुद्यते इति काकुदम् । सूर्म्यं सुषिरामिव । तद्यथा । शोभनामूर्मिं सुषिरामग्निरन्तः प्रविश्य दहति । एवं ते सप्तसिन्धवः सप्तविभक्तयस्ताल्वनुक्षरन्ति तेनाऽसि सत्यदेवः ।

---

श्चित्तीयामिति । भवार्थे वृद्धाच्छः । प्रायश्चित्तीया इति । प्रायश्चित्ताय पापशोधनाय श्रुतिस्मृतिविहिताय कर्मणे हितास्तन्निमित्तोत्पादना मा भूमेत्यर्थः । दशम्युत्तरकालमिति । दशम्या उत्तर इति, पञ्चमीति योगविभागात् समासः । ततः कालशब्देन बहुव्रीहिः । क्रियाविशेषणं चैतत् । दशदिनान्याशौचं भवतीति दशम्युत्तरकालमित्युक्तम् । यदपि गृह्यकाराः पठन्ति-दशम्यां पुत्रस्येति । तदपि दशम्यामिति सामीपिकमधिकरणं व्याख्येयम् । घोषवदादीति । घोषवन्तो ये वर्णाः शिक्षायां प्रदर्शितास्तदादि । अन्तरन्तःस्थमिति । मध्ये यरलवा यस्य तदित्यर्थः । त्रिपुरुषानूकमिति । नामकरणे योऽधिकारी पिता तस्य ये त्रयः पुरुषास्ताननुकायत्यभिधत्त इति त्रिपुरुषानूकम् । अन्येषामपि दृश्यते इति दीर्घः । सुदेवो असीति । वरुणस्येयं स्तुतिः । यतो हेतोर्व्याकरणज्ञानाद् वरुण सत्यदेवोऽसि ततो हेतोरन्येऽपि सत्यदेवा भवन्तीत्यर्थः । सिन्धव इति । नद्य इव विभक्तय इत्यर्थः । अनुक्षरन्तीति । ताल्वनुप्राप्यप्र-

---

वैखरीरूपरूषितस्यैव तैर्वाचकत्वस्वीकारेण तस्य चात्यन्तविचारे ब्रह्मातिरेके मानानुपलम्भेन तत्तदुपाधिभिन्नचित एव बोधकतया तैर्महादेवं सर्वबोधकेषु ब्रह्मबुद्धौ जातायां तेनैव दृष्टान्तेन सर्वपदार्थेषु ब्रह्मबुद्धिर्वैयाकरणानामिति । यत्तु पदपदार्थवाक्यार्थमर्यादया सत्यमित्यादितस्तेषां तद्बोधास्ता तेषां वाचि निहितेति । तत्र यतो वाचो निवर्तन्ते ह्यप्राप्य मनसा सहेति श्रुत्या ब्रह्मणस्तन्मर्यादया शब्दावोध्यत्वोक्तेः । तत्र ह्यप्राप्येत्यस्य सम्बन्धज्ञानेऽविषयीभूय सम्बध्य चेत्यर्थः १ आद्यं शब्दे, अन्त्यं मनसि । शुद्धचित्तस्य तूभयमपि बोधकमखण्डविषयस्य । दृश्यते त्वग्र्यया बुद्ध्येति श्रुत्यन्तरात् । न तु पदपदार्थमर्यादयेति बोध्यम् । लक्षणादित्यस्य व्याख्या, भासनादिति । परिवृढा अज्ञाननिवर्तने प्रभ्वी । एते च मन्त्राः सर्वानुक्रमेऽन्यत्र विनियुक्ता अपि भाष्यप्रामाण्यादेतत्तात्पर्यका अपीति बोध्यम् । चत्वारीत्यादि ऋक्चतुष्टयं व्याकरणस्य मोक्षजनकत्वं प्रतिपादयति । भवार्थे इति प्रायश्चित्तसाधनत्वेन तद्भवत्वम् । पञ्चमीतियोगविभागादिति । सुप्सुपेति तु युक्तम् । ननु दशम्यां पुत्रस्येति प्रयोजनस्वरूपगणने भाष्ये उक्तम् । गृह्येऽपि तथैव पठ्यतेऽतो दशम्युत्तरकालमित्ययुक्तमत आह । तदपीति । शिक्षायामिति । ते च हशः । अन्तरन्तःस्था यस्येत्यर्थः। त्रिपुरुषानूकम् त्रिपुरुषशब्देन द्विगुः, मूलविभुजादित्वात्कः । भाष्ये ( अनरीति ) । अमनुष्येऽरिभिन्ने इति वार्थः । सत्यदेवा इति । वरुणे यथा सत्येन दीव्यति द्योतत इति यौगिकोऽयं शब्दस्तथान्येष्वपीत्यर्थः । यस्येति पञ्चमीस्थाने षष्ठी । यस्मात्ते काकुदन्तालु प्राप्य सिन्धवः सप्तसमुद्ररूपाः सप्तविभक्तयोऽनुक्षरन्ति प्रकाशन्ते इत्यर्थः ।

ससदेवः स्यामित्यध्येयं व्याकरणम् । सुदेवो असि किं पुनरिदं व्याकरणमेवाऽधिजिगांसमानेभ्यः प्रयोजनमन्वाख्यायते, न पुनरन्यदपि किंचित् । ओम् इत्युक्त्वा वृत्तान्तशः शमित्येवमादीन् शब्दान् पठन्ति । पुरा कल्प एतदासीत् । संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माऽधीयते । तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानज्ञेभ्यो वैदिकाः शब्दा उपदिश्यन्ते । तदद्यत्वे न तथा । वेदमधीत्य त्वरिता वक्तारो भवन्ति । वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः । अनर्थकं व्याकरणमिति । तेभ्य एवं विप्रतिपन्नबुद्धिभ्योऽध्येतृभ्यः सुहृद्भूत्वा आचार्य इदं शास्त्रमन्वाचष्टे । इमानि प्रयोजनान्यध्येयं व्याकरणमिति । उक्तः शब्दः । स्वरूपमप्युक्तम् । प्रयोजनान्यप्युक्तानि । शब्दानुशासनमिदानीं कर्त्तव्यम् । तत्कथं कर्तव्यम् । किं शब्दोपदेशः कर्तव्य आहोस्विदपशब्दोपदेश आहोस्विदुभयोपदेश इति ।

---

काशन्ते इत्यर्थः । लाऽस्मिन्नुद्यत इति । अनेकार्थत्वाद्धातूनामुत्क्षिप्यत इत्यर्थः । सूर्म्यमिति । सूर्मीमितिप्राप्ते, अमि पूर्व इत्यत्र, वा छन्दसीत्यनुवृत्त्या यणादेशः । किं पुनरिति । ननु कानि पुनरस्येति येन पृष्टं स एव कथं पृच्छति किं पुनरिति । एवं तर्हि भाष्यकारः प्रयोजनान्वाख्यानस्य विषयविभागं दर्शयति । पुरा वेदाध्ययनात्पूर्वं व्याकरणमधीयते ते बाल्यात् प्रष्टुमसमर्था इति, न प्रयोजनमन्वाख्येयम् । अद्यत्वे तु स्वल्पायुष्ट्वात् पूर्वं वेदं प्रधानमधीयते ततः प्रष्टुं समर्थत्वाद् व्याकरणाध्ययनस्य प्रयोजनं पृच्छन्तीत्यवश्यान्वाख्येयं प्रयोजनम् । न पुनरन्यदिति । वेदमप्यधिजिगांसमानेभ्य इत्यर्थः । ओम् इत्युक्त्वेति । अभ्युपगम्येत्यर्थः । वृत्तान्तश इति । वृत्तान्तः प्रपाठक उच्यते । वृत्तान्तं वृत्तान्तं पठन्तीत्यर्थः । अद्यत्व इति । अद्यत्वेशब्दो निपातोऽस्मिन् काल इत्यत्रार्थे वर्तते । त्वरिता इति । विवाहादौ । उभयोपदेश इति । हेयोपादेयोपदेशे

---

अनेकार्थत्वादिति । वेदैरधिकरणे, घञर्थे इति कः । शकन्ध्वादित्वात् पररूपं पृषोदरादित्वाद्वकारस्योकारस्य लोपः । सुदेवोऽधिकरणं कः । पृषोदरादित्वान्नुलोपः । सूर्मीं शोभनामयःप्रतिमां सुषिराम, ऊषसुषीति रप्रत्ययेन सच्छिद्रां प्रविश्याग्निर्यथा तत्रत्यं मलं भस्मीकृत्य प्रतिमां शुद्धां करोति, एवं तालुदेशे प्रकाशं प्राप्य विभक्त्यो विभक्त्यन्ताः शब्दाः शारीरं पापमपाकुर्वन्तीत्यर्थः । अनेन स्वर्गप्राप्तिः फलमित्युक्तम् । एवन्तर्हीति । वेदातिरिक्तविषय एव प्रयोजनान्वाख्यानं, न तु वेदविषये इत्येवं रूपं विषयविभागं तृतीयस्य प्रश्न इत्यन्ये । किंचित्पदार्थमाह । वेदमपीति । शेषपूरणमन्यत् । किं तत्किंचिदित्याकाङ्क्षायां भाष्ये । ( ओमित्युक्त्वेति ) पठतीत्यस्यानन्तरमेतेभ्योऽपीति शेषः । एवञ्च वेदमधिजिगांसमानेभ्यो वेदाध्ययनप्रयोजनं किमिति नान्वाख्यायत इति प्रश्नः । वेदाध्ययनवद् व्याकरणाध्ययनमपि प्रयोजनमन्तरेण करिष्यन्तीति प्रयोजनविचारो व्यर्थ इति तात्पर्यम् । ननु ओमित्यधिकमत आह । अभ्युपगम्येति । विनैव प्रयोजनज्ञानमिति शेषः । भाष्ये उत्तरमाह । ( पुराकल्प इति ) । युगान्तरे इत्यर्थः । संस्कार उपनयनम् । करणमाभ्यन्तरप्रयत्नः । अनुप्रदानं नादादिबाह्यप्रयत्नः । तेनाधीतव्याकरणाशिक्षेभ्य इत्यर्थः । ते तदानीमपि कर्मानुष्ठानफलकत्वं वेदस्य जानन्तो नित्यत्वं वा तदध्ययनस्य जानन्तो न तदध्ययनप्रयोजनं पृच्छन्तीति न कदाचिदपि वेदाध्ययनप्रयोजनोपदेश इति तात्पर्यम् । न तथेति । किन्तु विपरीतमित्यर्थः । भाष्ये ( आचार्यपदेन ) शास्त्राध्यापकाः भाष्यकृदेव विवक्षितः । इदं शास्त्रमिति । प्रयोजनान्वाख्यानमित्यर्थः । भाष्ये ( उक्तः शब्द इति ) । किं लौकिकानाञ्चेत्यनेन विषयभूतः शब्द उक्त इत्यर्थः । स्वरूपमपीति । अथ गौरित्यादिना । अयमुपसंहारो मन्यस्य

अन्यतरोपदेशेन कृतं स्यात् । तद्यथा । भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते । पञ्च पञ्चनखा भक्ष्या इत्युक्ते गम्यते एतदतोऽन्येऽभक्ष्या इति । अभक्ष्यप्रतिषेधेन वा भक्ष्यनियमः । तद्यथा । अभक्ष्यो ग्राम्यकुक्कुटः । अभक्ष्यो ग्राम्यसूकर इत्युक्ते गम्यत एतदारण्यो भक्ष्य इति । एवमिहापि । यदि तावत् शब्दोपदेशः क्रियते गौरित्येतस्मिन्नुपदिष्टे गम्यत एतद् गाव्यादयोऽपशब्दा इति । अथाप्यपशब्दोपदेशः क्रियते गाव्यादिषूपदिष्टेषु गम्यत एतद् गौरित्येष शब्द इति । किं पुनरत्र ज्यायः । लघुत्वाच्छब्दोपदेशः । लधीयाञ्छब्दोपदेशः । गरीयानपशब्दोपदेशः । एकैकस्य शब्दस्य बहवोऽपभ्रंशाः । तद्यथा । गौरित्यस्य गावी गोणी गोता गोपोतलिकेत्येवमादयोऽपभ्रंशाः । इष्टान्वाख्यानं खल्वपि भवति । अथैतस्मिन् शब्दोपदेशे सति किं शब्दानां प्रतिपत्तौ प्रतिपदपाठः कर्तव्यः । गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इत्येवमादयः शब्दाः पठितव्याः । नेत्याह । अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः । एवं हि श्रूयते । बृहस्पतिरिन्द्राय

---

स्पष्टा प्रतिपत्तिर्भवतीत्युभयोपदेश उद्भावितः । यद्यपि प्रतिपत्तिः स्पष्टा, गौरवं तु भवतीत्याह । अन्यतरेति । शब्दापशब्दयोरित्यर्थः । अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्धारणे वर्तेते । पञ्चेति । अर्थित्वाद्भक्षणं प्राप्तं पञ्चसु पञ्चनखेषु नियम्यमानं सामर्थ्यादन्येभ्यो निवर्तते । न त्वयं विधिः । अप्राप्तेरभावात् । किं पुनरिति । उभयोपदेशाद् गुरोर्द्वावपि प्रशस्तौ तयोः को ज्यायानित्यर्थः । इष्टेति । साधुशब्दप्रयोगाद्धर्मावाप्तिरित्यर्थः । अथवा उपादेयोपदेशात्साक्षात्प्रतिपत्तिर्भवतीति भावः बृहस्पतिरिन्द्रायेति । प्रतिपदपाठ-

---

विषयप्रयोजननिरूपणमेतावता कृतमिति बोधयितुम् । तेनैव संबन्धाधिकारिणावुक्ताविति तौ पृथङ्नोक्तौ । कियत्तद्भ्योऽन्यत्र डतराभावादाह । अन्यतरान्येति । तत्र सुशब्दोपदेशः प्रयोगविध्यर्थोऽनुवादः । अपशब्दोपदेशस्तु प्रयोगप्रतिषेधार्थः । पञ्च पञ्चनखा इत्यस्य नियमत्वं दर्शयति । अर्थित्वादिति । नियम्यमानं पुनः शब्देन बोध्यमानमित्यर्थः । ननु अस्य परिसङ्ख्यात्वात् कथं नियमत्वेन व्यवहारः । अस्ति च नियमपरिसङ्ख्ययोर्भेदः पाक्षिकाप्राप्तिकाप्राप्तांशपरिपूरणफलो नियमः । अन्यानिवृत्तिफला च परिसङ्ख्येति चेन्न । नियमेऽप्यप्राप्तांशपरिपूरणरूपफलबोधनद्वारार्थादन्यनिवृत्तेः सत्त्वेन अभेदमाश्रित्योक्तेः । विधिरिति । अपूर्वविधिरित्यर्थः । ये तु पञ्चपदस्य तदतिरिक्ते लक्षणा भक्ष्यपदस्य चाभक्ष्ये सेति वदन्ति । तेषां पदद्वये लक्षणागौरवम् । अस्यैव नियमत्वेन भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यत इति भाष्यविरोधश्च । नियमपदस्य तद्बोधके लक्षणायां सैव दोषः । अक्षरास्वारस्यं च । नियम्यमानं भक्षणं सामर्थ्यादन्येभ्यो निवर्त्तत इति कैयटासङ्गतिश्च । दृष्टान्तदार्ष्टान्तिकयोरत्यन्तवैषम्यापत्तिश्च । अन्यनिवृत्तिफला परिसङ्ख्येति अभियुक्तोक्तिविरोधश्च । सिद्धस्य पुनर्विधानात्प्रापकप्रमाणस्यतदितराविषयत्वरूपसङ्कोचकल्पनम् । तेनान्येषां भक्षणाभावस्तद्भक्षणे प्रायश्चित्तं च सिध्यति । एवसमभिव्याहारे सोऽपि स्फुटमस्यार्थस्यैव द्योतकोऽन्ययोगव्यवच्छेद एवकारार्थ इति तु सामान्यप्रमाणसङ्कोचफलितमर्थमादाय नेयम् । ( भक्ष्यनियम इति ) भक्ष्यानुमतिरूप उपदेशो इत्यर्थः । भाष्ये ( प्रतिपत्ताविति ) त्यस्योपायभूत इति शेषः । अनभ्युपायत्वञ्चाशक्यत्वेन कृत्स्नाभिमतानभ्युपायत्वात् । तत्रार्थवादमाह । ( बृहस्पतिरिति ) । ननु शब्दानामिति पुनरुक्तमत आह ।

दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम। बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालः न चान्तं जगाम। किं पुनरद्यत्वे यः सर्वथा चिरं जीवति स वर्षशतं जीवति। चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति। आगमकालेन स्वाध्यायकालेन प्रवचनकालेन व्यवहारकालेनेति। तत्र चास्यागमकालेनैवायुः कृत्स्नं पर्युपयुक्तं स्यात्। तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठः। कथं तर्हीमे शब्दाः प्रतिपत्तव्याः। किञ्चित्सामान्यविशेषवल्लक्षणं प्रवर्त्यं येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन्। किं पुनस्तत्। उत्सर्गापवादौ। कश्चिदुत्सर्गः कर्त्तव्यः कश्चिदपवादः। कथंजातीकः पुनरुत्सर्गः कर्तव्यः। कथंजातीयकोऽपवादः। सामान्येनोत्सर्गः कर्तव्यः। तद्यथा। कर्मण्यण्। तस्य विशेषेणापवादः। तद्यथा। आतोऽनुपसर्गे कः॥ किं पुनराकृतिः पदार्थ आहोस्विद् द्रव्यम्। उभयमित्याह। कथं ज्ञायते। उभयथा ह्याचार्येण सूत्राणि पठितानि। आकृतिं पदार्थं मत्वा

---

स्याशक्यत्वं प्रतिपादयितुमयमर्थवादः। शब्दानामिति। शब्दपारायणशब्दो योगरूढः शास्त्रविशेषस्य। तत्र प्रतिपदोक्तानामिति विशेषणाभिधानाय गम्यमानार्थस्यापि शब्दानामित्यस्य प्रयोगः। एकदेशोपयोगादपि लोके उपयुक्तमित्युच्यते। यथौषधसंस्कृतघृतमात्रैकदेशोपयोगे उपयुक्तं घृतमिति व्यवहारः। तथेह नेति प्रतिपादयति। चतुर्भिरिति। आगमकालो ग्रहणकालः। स्वाध्यायकालोऽभ्यासकालः। प्रवचनकालोऽध्यापनकालः। व्यवहारो यज्ञकर्मादि। किं चिदिति। सामान्यविशेषौ यस्मिंस्तत्सामान्यविशेषवत्। कर्मण्यण् आतोनुपसर्गे क इत्यादि। सकलशास्त्रव्यवस्थैकतरपक्षाश्रयणे न सिद्ध्यतीति पक्षद्वयाश्रयणं प्रश्नपूर्वकं करोति। किं पुनरिति। आकृतिपक्षे केवले आश्रीयमाणे सकृद्गतौ विप्रतिषेध इत्यादि नोपपद्यते। केवलेऽपि व्यक्तिपक्षे पुनःप्रसङ्गविज्ञानादिति न घटते। तस्माल्लक्ष्यसिद्धये क्वचित्प्रदेशे कश्चित्पक्षः परिगृह्यते। अत्र जातिवादिन आहुः। जातिरेव शब्देन

---

योगरूढ इति। अर्थपौनरुक्त्यमाशङ्क्य निराकरोति। तत्रेति। ननु यावदेवाध्येष्यते तावदेवाभ्युपयुक्तं स्याद् अत आह। भाष्य [ चतुर्भिरिति ] उक्तमेव तदाशयमाह। एकदेशेत्यादि। विद्योपयोगाधारभूतानां कालानां विद्यां प्रत्यप्याधारत्वात्। तस्य च करणत्वविवक्षा बोध्या। चतुर्षु कालेषु विद्योपयुज्यत इति फलितोऽर्थः। तत्राद्ययोर्विद्यार्थ्ययं बुद्धिमानित्यादरपूर्वकमन्नवस्त्रादिलाभ उपयोगस्तृतीयप्रतिष्ठा सच्छिष्यलाभद्वारार्थप्राप्तिः सत्कारविशेषश्च। चतुर्थे यज्ञाद्यनुष्ठानकाले ऽपशब्दप्रयोगप्रयुक्तप्रायश्चित्ताभावः कर्मसाङ्गता दक्षिणालाभः प्रतिष्ठा वेत्युपयोगः। तादृशश्चोपयोगः सर्वाध्ययन एव। भाष्ये [पर्युपयुक्तमिति] समाप्तमित्यर्थः। पर्यवसन्नमिति:पाठान्तरम्। न चेष्टापत्तिः। विद्योच्छेदापत्तेः। कर्मसु प्रायश्चित्तविधिवैयर्थ्यापत्तेश्च। ननु तदात्मकत्वाल्लक्षणस्य मतोरनुपपत्तिरत आह। सामान्यविशेषाविति। लक्षणं शास्त्रमित्यर्थः। भाष्ये ( कथं जातीयक इति )। केन प्रकारेणेत्यर्थः। एतेनैवंजातीयकेन शास्त्रेण सुशब्दोपदेशप्रवृत्तिः पाणिनेरुचितेति सूचितम्। आकृतिपक्षे इति। तत्र उद्देश्यतावच्छेदकजात्याक्रान्ते क्वचिच्चरितार्थयोर्द्वयोः तदप्रतिपक्षन्यायेन विरोधस्थले उभयोरप्यप्राप्तौ विप्रतिषेधे परमिति विध्यर्थं, न तु नियमार्थमिति, सकृद्गता-

जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामित्युच्यते। द्रव्यं पदार्थं मत्वा सरूपाणामित्येकशेष आरभ्यते। किं पुनर्नित्यः शब्द आहोस्वित्कार्यः। संग्रहे एतत्प्राधान्येन परीक्षितं नित्यो वा स्यात् कार्यो वेति। तत्रोक्ता दोषाः प्रयोजनान्यप्युक्तानि। तत्र त्वेष निर्णयः। यद्येवं नित्यः। अथापि कार्यः। उभयथापि लक्षणं प्रवर्त्यमिति। कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तम्॥ ∴सिद्धे शब्दार्थसम्बन्धे॥ सिद्धे शब्दे अर्थे सम्बन्धे चेति। अथ सिद्धशब्दस्य कः

---

प्रतिपाद्यते। व्यक्तीनामानन्त्यात्सम्बन्धग्रहणासम्भवात्। सा च जातिः सर्वव्यक्तिष्वेकाकारप्रत्ययदर्शनादस्तीत्यवसीयते। तत्र गवादयः शब्दा भिन्नद्रव्यसमवेतां जातिमभिदधति। तस्यां प्रतीतायां तदावेशात्तदवच्छिन्नं द्रव्यं प्रतीयते। शुक्लादयः शब्दा गुणसमवेतां जातिमाचक्षते। गुणे तु तत्सम्बन्धात्प्रत्ययः। द्रव्ये सम्बन्धिसम्बन्धात् संज्ञाशब्दानामप्युत्पत्तिप्रभृत्या विनाशात् पिण्डस्य कौमारयौवनाद्यवस्थाभेदेऽपि स एवायमित्यभिन्नप्रत्ययनिमित्ता डित्थत्वादिका जातिर्वाच्या। क्रियास्वपि जातिर्विद्यते सैव धातुवाच्या। पठति पठतः पठन्तीत्यादेरभिन्नस्य प्रत्ययस्य सद्भावात्तन्निमित्तजात्यभ्युपगमः। व्यक्तिवादिनस्त्वाहुः। शब्दस्य व्यक्तिरेव वाच्या। जातेस्तूपलक्षणभावेनाश्रयणादानन्त्यादिदोषानवकाशः। किं पुनरिति। विप्रतिपत्त्या संशयः। केचित् ध्वनिव्यङ्ग्यं वर्णात्मकं नित्यं शब्दमाहुः। अन्ये वर्णव्यतिरिक्तं पदस्फोटमिच्छन्ति। वाक्यस्फोटमपरे सङ्गिरन्ते। अन्ये तु ध्वनिरेव शब्दः स च कार्यस्तद्व्यतिरेकेणान्यस्यानुपलम्भादित्याचक्षते। संग्रह इति। ग्रन्थविशेषे। कथं पुनरिति। किमाचार्य एव स्रष्टा शब्दार्थसम्बन्धानामथ स्मर्तेति प्रश्नः। सिद्ध इति। तत्र नित्यः शब्दो जातिस्फोटलक्षणो व्यक्तिस्फोटलक्षणो वा। कार्यश-

---

विति न सिद्ध्यतीत्यर्थः। इदञ्च विप्रतिषेधसूत्रे दूषयिष्यते। तस्यां प्रतीतायामिति। शब्दशक्यत्वेन गृहीतायामित्यर्थः। एवमभिदधतीत्यस्याभिधाविषयत्वेन गृह्णन्तीत्यर्थः। तदावेशात्। तत्समवायात् प्रतीयत इति। अविनाभावाच्छब्दजन्यबोधविषयो भवतीत्यर्थः। प्रत्ययो ज्ञानम्। उपलक्षणभावेनेति। शक्यतावच्छेदकेनेत्यर्थः। तच्च तु न शक्तिरिति मञ्जूषायां प्रतिपादितम्। भाष्ये। ( जात्याख्यायामिति )। व्यक्तौ पदार्थे सम्पन्ना व्रीहय इति व्यक्तिबहुत्वाद्बहुवचनं सिद्धमेवेति व्यर्थं तत्स्यादिति भावः। सरूपाणामिति। आकृतेरेकत्वादेवैकशब्दप्रयोगोपपत्तौ तदुक्तिसंभवो व्यक्तिपक्ष एवेति भावः। न चाकृतिपक्षेऽपि अक्षाः पादा इत्याद्यर्थं स आवश्यक इति वाच्यम्। तावतीषु काञ्चिदेकां जातिं स्वीकृत्य तस्या एव शब्दवाच्यत्वं परम्परयाच व्यक्तिप्रत्यय इति सरूपसूत्रे कैयटेनैव वक्ष्यमाणत्वात्। जातौ न जातिरिति परेषां दर्शनं नास्माकमिति च तत्रोक्तम्। विप्रतिपत्त्येति। शब्दानां नित्यत्वे व्यर्थं व्याकरणशास्त्रमिति प्रश्नाशयः। केचिद् मीमांसका वर्णात्मकमिति। पदवाक्ये च वर्णसमूहरूपे एवेति तदाशयः। अत्र मते एकं पदमित्याद्यनुपपत्तेराह। अन्ये वैयाकरणाः। अपरे त एव मुख्याः। पदे वर्णानामिव वाक्ये पदानां कल्पितत्वात्। तेषामर्थवत्त्वमपि काल्पनिकमिति वाक्यस्यैव शब्दत्वमिति तद्भावः। अन्ये त्विति। वैशेषिकादयः। ध्वनिरिति। स च वर्णावर्णात्मकत्वेन द्विविधः। एवञ्च कण्ठाद्यभिघातस्तमपि तस्य कारणमित्याशयः। संग्रहो व्याडिकृतो लक्षश्लोकसंख्यको ग्रन्थ इति प्रसिद्धिः। भाष्ये ( उभयथापीति ) एवञ्च निष्फलोऽयं विचार इति भावः। साधुत्वज्ञानाय उभयथापि शास्त्रमावश्यकमिति तात्पर्यम्। अथ पाणिनिसूत्रव्याख्यानभूतं वार्त्तिकमवतारयति। ( कथं पुनरिति )। अत एवात्रैव पाणिनिनामग्रहणम्। इतः पूर्वन्तु सवार्त्तिकशास्त्रव्याख्यानप्रयोजनविषयप्रदर्शनपरो भाष्यकारस्यैव ग्रन्थ इति बोध्यम्। शब्दार्थसंबन्धानामिति। शब्दश्चार्थश्च संबन्धश्चेति

पदार्थः। नित्यपर्यायवाची सिद्धशब्दः। कथं ज्ञायते। यत्कूटस्थेष्वविचालिषु भावेषु वर्तते। तद्यथा। सिद्धा द्यौः सिद्धा पृथिवी सिद्धमाकाशमिति। ननु च भोः कार्येष्वपि वर्तते। तद्यथा। सिद्ध ओदनः सिद्धः सूपः सिद्धा यवागूरिति। यावता कार्येष्वपि वर्तते। तत्र कुत एतन्नित्यपर्यायवाचिनो ग्रहणम्। न पुनः कार्ये यः सिद्धशब्द इति। संग्रहे तावत्कार्यप्रतिद्वन्द्विभावान्मन्यामहे नित्यपर्यायवाचिनां ग्रहणमिति। इहापि तदेव। अथवा सन्त्येकपदान्यप्यवधारणानि। तद्यथा। अब्भक्षो वायुभक्ष इति। अप एव भक्षयति वायुमेव भक्षयतीति गम्यते। एवमिहापि सिद्ध एव न साध्य इति। अथवा पूर्वपदलोपोऽत्र

---

व्दिकानामपि मते प्रवाहनित्यतया अर्थस्यापि जातिलक्षणस्य नित्यत्वम्। द्रव्यपक्षेऽपि सर्वशब्दानामसत्योपाध्यवच्छिन्नं ब्रह्म वाच्यमिति नित्यता। प्रवाहनित्यतया वा सम्बन्धस्यापि व्यहारपरम्परया अनादित्वान्नित्यता। सिद्धशब्दस्य नित्याऽनित्ययोर्दर्शनात् पृच्छति। अर्थेति। नित्येति। नित्यलक्षणस्यार्थस्य पर्यायेण वाचकस्तमेवार्थं कदाचिन्नित्यशब्द आह कदाचित् सिद्धशब्द इत्यर्थः। कूटस्थेष्विति। अविनाशिषु। अविचालिष्विति। देशान्तरप्राप्तिरहितेषु। ननु चेति। सिद्धशब्दात्क्रियानिष्पन्नोऽप्यर्थोऽवगम्यत इत्यर्थः। संग्रहे तावदिति। तत्र हि किं कार्यः शब्दोऽथ सिद्ध इति पक्षद्वयविचारः कृतः। तत्र कार्यप्रतिपक्षार्थाभिधायी सामर्थ्यात्सिद्धशब्द इति स्थितम्। तत्समानतन्त्रत्वादिहापि तथैव युक्तमित्यर्थः। अथवेति। एवशब्दप्रयोगे द्विपदमवधारणम्। द्योतकत्वेन एवशब्दस्यापेक्षणात्। यदा तु द्योतकमन्तरेण सामर्थ्यात् अवधारणं गम्यते तदा तदेकपदमित्युच्यते। तत्र सर्वे एवापो भक्षयन्तीत्यब्भक्षश्रुतिः सामर्थ्यान्नियममवगमयत्यप एव भक्षयतीति। इहापि नित्यानित्यव्यतिरेकेण राश्यन्तराभावात् सिद्धशब्दोपादानान्नियमोऽवगम्यते। सिद्ध एवेति। कार्याणां तु पदा-

---

र्थत्वः। एवञ्च किमपूर्वशब्दनिष्पादनद्वारार्थविशेषसंबन्धनिष्पादकत्वं शास्त्रस्य, किं वा सिद्धशब्दार्थसंबन्धबोधकत्वमिति प्रश्नार्थ इति तात्पर्यम्। सिद्धे शब्दार्थसंबन्धे इति वार्त्तिके समाहारद्वन्द्वात्सप्तमी। संबन्धस्य प्रत्यासत्त्या शब्दार्थयोरेव, त्रयाणामात्यन्तिकाविश्लेषप्रदर्शनाय समाहारनिर्देश इति बोध्यम्। व्यक्तिस्फोटेति। सा पदवाक्यरूपा नित्यैवेति तद्भावः। एतच्चोपपादितं प्राक्। कार्यशाब्दिकानामिति। कार्यशाब्दिकानामिति स्वपपाठः। उत्तरपदवृद्धेर्दुर्लभत्वात्। असत्योपाधीति। जातिरूपेत्यर्थः। जातिर्हि तन्मते आविद्यको धर्मविशेषः। यद्वा सर्वेषां धर्माणां ब्रह्मण्यध्यस्तत्वेन शुक्तिरजतादिज्ञाने शुक्त्यादीनां विशेष्यत्ववत् सर्वत्राधिष्ठानभूतं ब्रह्मैव विशेष्यं, विशेष्यमेव च द्रव्यमिति भावः। शब्दार्थयोर्नित्यत्वपक्षे तत्संबन्धस्य नित्यत्वेऽप्यनित्यत्वपक्षे कथं संबन्धस्य नित्यत्वमत आह। संबन्धस्येति। प्रवाहनित्यतया तयोरिव तस्यापि नित्यत्वमिति भावः। शब्दार्थयोः संबन्धश्च शक्तिरूपस्तादात्म्यमेवेत्यन्यत्र प्रपञ्चितम्। भाष्ये (सिद्धशब्दस्य कः पदार्थ) इति। अत्र पदार्थशब्दो रूढः। सिद्धशब्दसंबन्धी कः पदार्थ इत्यर्थः। (कूटस्थेष्विति) कूटमयोघनस्तद्वत्तिष्ठन्ति ये तेषु संसर्गिनाशेऽपि स्वयमनष्टेष्वित्यर्थः। नन्वयोघनस्यापि तर्हि नित्यत्वं स्यादत आह। (अविचालिष्विति)। भाष्ये द्यावापृथिव्यादावपि व्यावहारिकनित्यत्वाभिप्रायेण दृष्टान्तितम्। आकाशस्यापि व्यावहारिकनित्यत्वमेवाचार्याभिमतम्। एवञ्च तत्र रूढत्वान्नित्यवाचकस्यैव ग्रहणमिति भाव। ग्रन्थान्तरानालोचनेऽपि नियामकमाह। भाष्ये (अथवेति) एतेन तत्समानतन्त्रत्वाद् व्यक्तिपदार्थवादेऽपि तत्र स्यादित्यपास्तम्। ननु एकपदानीत्युक्त्वा, अब्भक्ष इत्यस्य पदद्वयात्मकस्योदाहरणत्वमसङ्गतमत आह। एवशब्देति। नियमप्रत्यायकसामर्थ्यं दर्शयति। इहापीति। कार्यवाचिन एव ग्रहणाभावे मूलमाह।

द्रष्टव्यः । असन्तसिद्धः सिद्ध इति । तद्यथा । देवदत्तो दत्तः सत्यभामा भामेति । अथवा व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति नित्यपर्यायवाचिनो ग्रहणमिति व्याख्यास्यामः । किं पुनरनेन वर्ण्येन, किं न महता कण्ठेन नित्यशब्द एवोपात्तः । यस्मिन्नुपादीयमानेऽसन्देहः स्यात् । मङ्गलार्थम् । माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते । मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति आयुष्मत्पुरुषाणि च अध्येतारश्च सिद्धार्था यथा स्युरिति । अयं खलु नित्यशब्दो नावश्यं कूटस्थेष्वविचालिषु भावेषु वर्तते । किं तर्ह्याभीक्ष्ण्येऽपि वर्तते ।

---

र्थानां प्रागभावप्रध्वंसाभावयोरपि सत्त्वात्सिद्धता नास्तीति न तेऽपि सिद्धा एव । अथवेति । कथं पुनर्देवदत्तशब्दे संज्ञात्वेन विनियुक्ते एकदेशः प्रयुज्यते । न ह्यसौ संज्ञात्वेन विनियुक्तः । न चैकदेशात्स्मर्यमाणस्य समुदायस्य वाचकत्वमुपपद्यते । प्रतीयमानस्य प्रत्यायकत्वासम्भवादुच्चार्यमाणस्यैव वाचकत्वात् । एवं तर्ह्यनुनिष्पादिन्योऽवयवसरूपाः संज्ञा विनियोगकाले विनियुक्ता एव । लोपस्तु वर्णानां साधुत्वं माभूदित्यन्वाख्यायते । इहापि नित्यानित्ययोर्निष्पन्नत्वाविशेषात्सिद्धश्रुतिरुपात्ता प्रकर्षं गमयति । अत्यन्तसिद्ध इति । न्यायाद्वा नित्यत्वं शब्दादीनां स्थितमित्याह । अथवेति । नहि सन्देहमात्रादलक्षणता भवति पुनः प्रमाणान्तरेण निश्चयोत्पादात् । वर्ण्येनेति । प्रयत्नव्याख्यातव्येनेत्यर्थः । माङ्गलिक इति । अगर्हिताभीष्टार्थसिद्धिर्मङ्गलं तत्प्रयोजन आचार्यो माङ्गलिकः । प्रथन्त इति । अध्ययनस्याऽविच्छेदात् । वीरपुरुषाणीति । श्रोतॄणां परैरपराजयात् । आयुष्मत्पुरुषाणीति । शास्त्रानुष्ठाने धर्मोपचयादायुर्वर्द्धनात् । सिद्धार्था इति । अध्ययननिष्पत्तिरेव तेषां सिद्धिः । नावश्यमिति । ततश्चाभीक्ष्ण्येन ये शब्दाः प्रयुज्यन्ते आगोपालाऽङ्गनं तेषामेवान्वाख्यानं स्याद्, न विरलप्रयोगाणाम् । विनापि च क्रियापदप्र-

---

कार्याणामिति । प्राक्प्रध्वंसावस्थयोरिति पाठः । भाष्ये (अप एवेति गम्यते इति) वाक्ये इव समासेऽपि सामर्थ्यात् तदतिरिक्तभक्षणाभावो गम्यत इत्यर्थः । अथवेति । मनुष्यवृक्षाद्यपेक्षयाऽऽकाशादीनामप्यत्यन्तसिद्धत्वमिति भावः । प्रतीयमानस्येति । एतदृगुदित्सूत्रे उपपादयिष्यते । एवन्तर्हीति । एवमेव घटपदं कलशपर्याय इत्यादिप्रयोगाः । अन्यथा पर्यायवाचीति प्रयोज्यं स्यात् । विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोप इति लोपविधायकं तर्हि किमर्थमत आह। लोपस्त्विति । वर्णानाम्। दे इत्यादीनाम् । तत्राऽपि क्व चित्पूर्वपदस्यैव क्वचिदुत्तरपदस्यैव क्वचिदुभयोरितिलोकव्यवहारेण निर्णेयम् । एवं वर्णानां शक्त्यभावोऽपि तत एव निर्णेय इति तत्त्वम् । निष्पन्नत्वेति । विद्यमानकालसंबन्धो निष्पन्नत्वम् । ननु निर्युक्तिकं; व्याख्यानमयुक्तम् । विपरीतस्यापि संभवादत आह । न्यायाद्वेति । वृद्धव्यवहारादेव पदार्थसंबन्धानां नित्यत्वं सङ्ग्रहादौ स्थितमिति व्याख्यानतः सिद्धशब्देन तदेवोपात्तमित्यर्थः । सिद्धिर्मङ्गलमिति । तस्या मङ्गलत्वञ्च कार्ये कारणरूपोपचारादिति बोध्यम् । तत्प्रयोजनमस्येति प्राग्वतीयष्ठञ् । तत्र मङ्गलानुष्ठानप्रयोजनान्याह । भाष्ये ( मङ्गलादीनीत्यादिना ) । अन्ये तन्निबन्धनस्य फलमाह । अध्येतारश्चेत्यादिना । आनुषङ्गिकमङ्गलसंपत्त्येत्यर्थः । अध्ययननिर्वृत्तिः । तत्समाप्तिः । सिद्धिः । सिद्धिविषयोऽर्थः । मङ्गलार्थमित्यनेनेत एव वार्त्तिकप्रवृत्तिः सूचिता । असन्दिग्धो नित्यशब्दः किं न प्रयुक्त इत्युक्तम् । तत्रापि सन्देहमाह । भाष्ये ( अयं खल्विति ) । आभीक्ष्ण्येन = बाहुल्येन । अभीक्ष्णमिति पाठेऽव्ययमेवाऽर्थः । प्रयुज्यत इति । साक्षाच्छब्दे आभीक्ष्ण्यासम्भवा-

तद्यथा । नित्यप्रहसितो नित्यप्रज्वलित इति । यावता आभीक्ष्ण्येऽपि वर्तते तत्राऽप्यनेनैवार्थः स्यात् । व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति । पश्यति त्वाचार्यो मङ्गलार्थश्चैव सिद्धशब्द आदितः प्रयुक्तो भविष्यति । शक्ष्यामि चैनं नित्यपर्यायं वर्णयितुमिति । अतः सिद्धशब्द एवोपात्तो न नित्यशब्दः । अथ कं पुनः पदार्थं मत्वा एष विग्रहः क्रियते सिद्धे शब्दे अर्थे सम्बन्धे चेति । आकृतिमित्याह । कुत एतत् । आकृतिर्हि नित्या । द्रव्यमनित्यम् । अथ द्रव्ये पदार्थे कथं विग्रहः कर्तव्यः । सिद्धे शब्दे अर्थसम्बन्धे चेति । नित्यो ह्यर्थवतामर्थैरभिसम्बन्धः । अथवा द्रव्ये एव पदार्थे एष विग्रहो न्याय्यः । सिद्धे शब्दे अर्थे सम्बन्धे चेति । द्रव्यं हि नित्यमाकृतिरनित्या । कथं ज्ञायते । एवं हि दृश्यते लोके । मृत् कयाचिद् आकृत्या युक्ता पिण्डो भवति । पिण्डाकृतिमुपमृद्य घटिकाः क्रियन्ते । घटिकाकृतिमुपमृद्य कुण्डिकाः क्रियन्ते । तथा सुवर्णं कयाचिद् आकृत्या युक्तं पिण्डो भवति । पिण्डाकृतिमुपमृद्य रुचकाः क्रियन्ते । रुचकाकृतिमुपमृद्य कटकाः क्रियन्ते । कटकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते । पुनरावृत्तः सुवर्णपिण्डः पुनरपरया आकृत्या युक्तः खदिराङ्गारसदृशे कुण्डले भवतः । आकृतिरन्या चान्या च भवति, द्रव्यं पुनस्तदेव । आकृत्युपमर्देन द्रव्यमेवावशिष्यते ।

---

योगेनाभीक्ष्ण्यवृत्तिर्नित्यशब्दः प्रयुज्यते । यथा, आश्चर्यमनित्ये, नित्यवीप्सयोरिति । अर्थसम्बन्धे चेति । द्रव्यपक्षे द्रव्यस्यानित्यत्वादर्थग्रहणं सम्बन्धविशेषणार्थमुपात्तम् । अनित्येऽर्थे कथं सम्बन्धस्य नित्यतेति चेत् । योग्यतालक्षणत्वात्सम्बन्धस्य । तस्याश्च शब्दाश्रयत्वाच्छब्दस्य च नित्यत्वाददोषः । द्रव्यं हि नित्यमिति । असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यमित्यर्थः । आकृतिरिति । संस्थानम् । ब्रह्मदर्शने च गोत्वादिजातेरप्यसत्त्वादनित्यत्वम् । आत्मैवेदं सर्वमिति वचनात् ।

---

स्प्रयोगद्वारा तद् ग्राह्यम् । एवञ्च नित्यशब्दोपादानेऽपि सप्रयोजनकोटयन्तरसंभवेन तत्रापि सन्देह एवेति भावः । नित्ये शब्दार्थसम्बन्धे इत्यस्य शब्दार्थसम्बन्धे ज्ञाते सति नित्ये नित्यप्रयोगविषये शब्दे शास्त्रं प्रवृत्तमित्यर्थः स्यादिति तात्पर्यम् । नन्वाभीक्ष्ण्यवाचिनो नित्यं क्रियापदमाकाङ्क्षतया कथं केवलस्य प्रयोगोऽत आह । विनापि चेति । नन्वेवमर्थग्रहणं व्यर्थमत आह । द्रव्यपक्षे इति । योग्यता बोधजनकत्वयोग्यता तादात्म्यम् । तदुक्तं भाष्ये ( नित्यो ह्यर्थवतामिति ) शब्दानामित्यर्थः । ननु तादात्म्यस्य सम्बन्धत्वे कथं तस्य नित्यत्वमिति चेन्न । नष्टभाविवस्तुनोऽपि शब्देन बोधाद् बौद्धार्थेन तस्य तादात्म्यं नित्यमित्याशयात् । शब्दवृत्तिधर्मस्यैवार्थवृत्तिधर्माभेदमापन्नस्य तादात्म्यत्वेनादोषाच्च । शब्दस्य च नित्यत्वादिति । आकाशवत् तन्निष्ठः शब्दोऽपि नित्यः । व्यञ्जकाभावात्तु न सर्वदोपलम्भ इति भावः । ननु घटादिद्रव्यस्य कथं नित्यत्वमत आह । असत्येति । स च कम्बुग्रीवादिमदाकारादिरूपस्तद्व्यङ्ग्यजातिरूपो वा । भाष्ये यद्याकृतिशब्देन तद्व्यङ्ग्यमुच्यते तर्हि तदप्याविद्यकत्वेन व्यञ्जकाऽनित्यत्वेन चानित्यमित्याह । जातेरपीति । अनेनैतत्प्रकरणस्थाकृतिपदस्य व्यङ्ग्यव्यञ्जकोभयपरतां सूचयति । गौतमेनाप्युक्तं "जात्याकृतिव्यक्तयः पदार्थः" इति । भाष्ये खदिराङ्गारसवर्णे कुण्डले भवत इति प्रयोगादच्यन्ते विकृतेः कर्तृत्वं बोध्यम् । भा-

आकृतावपि पदार्थे एष विग्रहो न्याय्यः। सिद्धे शब्देऽर्थे सम्बन्धे चेति। ननु चोक्तमाकृतिरनित्येति। नैतदस्ति। नित्याऽऽकृतिः। कथम्। न क्व चिदुपरतेति कृत्वा सर्वत्रोपरता भवति द्रव्यान्तरस्था तूपलभ्यते। अथवा नेदमेव नित्यलक्षणम्। ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्यययोगि यत्तन्नित्यमिति। तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते। किं पुनस्तत्त्वम्। तद्भावस्तत्त्वम्। आकृतावपि तत्त्वं न विहन्यते। अथवा किं न एतेन, इदं नित्यमिदमनित्यमिति। यन्नित्यं तं पदार्थं मत्वैष विग्रहः क्रियते सिद्धे शब्देऽर्थे सम्बन्धे चेति कथं पुनर्ज्ञायते सिद्धः शब्दोऽर्थः सम्बन्धश्चेति। लोकतः। यल्लोकेऽर्थमर्थमुपादाय शब्दान्प्रयुञ्जते। नैषां निर्वृत्तौ यत्नं कुर्वन्ति। ये पुनः कार्या भावा निर्वृत्तौ तावत्तेषां यत्नः क्रियते। तद्यथा। घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाऽऽह कुरु घटं कार्यमनेन करिष्यामीति। न तद्वच्छब्दान् प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाऽऽह कुरु शब्दान् प्रयोक्ष्य इति। तावत्येवार्थमुपादाय शब्दान् प्रयुञ्जते। यदि तर्हि लोक एषु शब्देषु प्रमाणं किं शास्त्रेण क्रियते। लोकतोऽर्थप्र-

---

न क चिदुपरतेति। अनभिव्यक्तेत्यर्थः। अद्वैतेन लोकव्यवहाराभावाद् व्यवहारे चाकृतेरेकाकारपरामर्शहेतुत्वान्नित्यत्वम्। अथवेति। असत्यत्वेऽपि तत्त्वतो लोकव्यवहाराश्रयणेन जातेर्नित्यत्वं साध्यते। त्रिविधा चानित्यता। संसर्गानित्यता यथा स्फटिकस्य लाक्षाद्युपधाने स्वरूपतिरोधानेन पररूपभासः। उपधानापगमे स्वरूपप्रतिभासात्परिणामाभावः। परिणामानित्यता यथा बदरीफलस्य श्यामतातिरोभावे लौहित्यस्याविर्भावः। प्रध्वंसानित्यता सर्वात्मना विनाशः। एतत्त्रिविधानित्यताप्रतिक्षेपेण नित्यतां प्रतिपादयितुमुक्तं—ध्रुवमित्यादि। तत्र ध्रुवं कूटस्थमिति संसर्गानित्यता परिहृता। अविचालीति परिणामानित्यता। अनपायेत्यादिना प्रध्वंसानित्यता। यन्नित्यमिति। बुद्धिप्रतिभासः शब्दार्थौ यदा यदा शब्द उच्चारितस्तदा

---

कृतिपदेन जातिरित्यभिप्रायेण भाष्ये ( आकृतावपि पदार्थ इति ) न क्वचिदुपरतेति कृत्वा सर्वत्रोपरतेत्यन्वयः। ननूपरमो नाशश्चेत्तत्काले एवान्यत्र सत्त्वं विरुद्धमत आह। अनभीति।

नतु परमार्थदृष्ट्या सर्वमनित्यमत आह। अद्वैतेनेति। नित्यत्वमिति। सर्वदा एकाकारपरामर्शदर्शनेन यावद्व्यवहारकालं तस्या अपि ध्रुवादित्वेन नित्यत्वमिति भावः। अथावयवसंस्थानरूपाया जातिव्यञ्जिकाया आकृतेर्यावद्व्यवहारकालं मध्ये मध्ये उत्पत्तौ नाशेऽपि प्रकारान्तरेण नित्यत्वमाह। भाष्ये [ अथवेति ]। नित्यत्वलक्षणे ध्रुवपदस्यैव व्याख्यानं कूटस्थमिति। रूपान्तरापत्तिर्विचालः। यथा पयसो दध्यादिरूपता। अनेन परिणामानित्यता परास्ता। उत्पत्तेः सत्तापर्यन्तत्वादनुत्पत्तीत्यनेन जन्मसत्तारूपौ भावविकारौ निरस्तौ। अवृद्धीत्यनेन तृतीयो वृद्धिलक्षणः। अनुपजनेति चतुर्थः परिणामः। अनपायेति। पञ्चमोपचयः। एतद्रूपविकाररहितमिति तदर्थः। अव्ययेति षष्ठो विनाशः। इदञ्च ब्रह्मविषयं नित्यत्वं यावद्व्यवहारमेकरूपस्थितपदार्थविषयञ्च। अयमेव न नित्यशब्दार्थः। प्रवाहाविच्छेदेऽतादृश्यपि नित्यत्वव्यवहारादित्याह भाष्ये ( तदपीति )। यस्मिंस्तत्त्वमिति। प्रवाहनित्यता चानेनोक्ता। तन्नाशेऽपि तद्धर्मो न नश्यति। आश्रयप्रवाहाविच्छेदादिति भावः। यन्नित्यमिति। व्यक्तिजात्याकृतीनां मध्ये यन्नित्यमित्यर्थः। ननु घटशृङ्गादिपदार्थानां कथं नित्यत्वं तेषां स्वरूपस्यैवाभावादत आह। बुद्धिप्रतिभास इति। बाह्यः

युक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते । किमिदं धर्मनियम इति । धर्माय नियमो धर्मनियमः । धर्मार्थो वा नियमो धर्मनियमः । धर्मप्रयोजनो वा नियमो धर्मनियमः । यथा लौकिकवैदिकेषु । प्रियतद्धिता दाक्षिणात्याः । यथा लोके वेदे चेति प्रयोक्तव्ये यथा लौकिकवैदिकेष्विति प्रयुञ्जते । अथवा युक्त एवात्र तद्धितार्थः । यथा लौकिकेषु वैदिकेषु च कृतान्तेषु ।

---

तदा तदर्थाकारा बुद्धिरुपजायत इति प्रवाहनित्यत्वादर्थस्य नित्यत्वमित्यर्थः । लोकत इति । अन्यथा कार्येषु वस्तुषु लोकव्यवहारोऽन्यथा नित्येषु । शाब्दश्च व्यवहारोऽनादिवृद्धपरंपराव्युत्पत्तिपूर्वक इति शब्दादीनां नित्यत्वम् । घटादयस्त्वर्थक्रियार्थिभिरन्यत आनीयन्ते, उत्पादविनाशयुक्ताश्चोपलभ्यन्ते, नैवं शब्दादयः । तावत्येवार्थमिति । बुद्ध्या वस्तु निरूप्येत्यर्थः । अत्र भाष्यकारेण संभवन्तीमप्येकवाक्यतामनाश्रित्य वाक्यत्रयं व्यवस्थापितम् । सिद्धे शब्दार्थसंबन्धे प्रवृत्तमित्येकं वाक्यम् । कथ ज्ञायत इति प्रश्ने लोकतो ज्ञायत इति द्वितीयम् । लोकत इत्यस्यावृत्त्या लोकतोऽर्थप्रयुक्त इत्यादि तृतीयम् । शब्दप्रयोग इति । प्रयोगग्रहणेन प्रयोगाद्धर्मो; न तु ज्ञानमात्रादित्युक्तं भवति । अर्थेन आत्मप्रत्यायनाय प्रयुक्तोऽर्थप्रयुक्तः । धर्माय नियम इति । चतुर्थ्या तादर्थ्यं प्रतिपाद्यते । सम्बन्धसामान्ये तु षष्ठीं विधाय समासः कर्तव्यः । चतुर्थीसमासस्य प्रकृतिविकारभाव एव विधानात् । धर्मार्थ इति । धर्मार्थत्वान्नियम एव धर्मशब्देनाभिधीयते इति कर्मधारयः समासः । धर्मप्रयोजन इति । लिङादिविषयेण नियोगाख्येन धर्मेण प्रयुक्त इत्यर्थः । प्रियतद्धिता इति । नायमपशब्दः, किन्तु ये लोकवेदयोर्भवा अवयवास्ते लोकवेदशब्दाभ्यामभिधातुं शक्यन्ते । आधाराधेयभावकल्पनया तु तद्धितप्रयोगः प्रियतद्धितत्वनिमित्तः । यथा कश्चिद् वनस्पतय इति

---

पदार्थो न शाब्दबोधे विषयः, किन्तु बौद्धः स च प्रवाहनित्य इति भावः । एतच्च मञ्जूषायां विस्तरेण निरूपितम् । शब्दादीनां नित्यत्वमिति । व्याकरणानिष्पाद्यत्वमित्यर्थः । तावत्येवेति । वैयाकरणकुलमर्यादैवेत्यर्थः । ननु सकृदन्वितस्य लोकत इत्यस्य पुनरर्थप्रयुक्ते इत्यनेनान्वयः कथम् । वार्तिके चैकवाक्यतयैवान्वयः प्रतीयतेऽत आह अत्रेति । अनाश्रित्येति । न्यूनतापरिहारायेत्यर्थः । लोकत इत्यस्य च लोकव्यवहारत इत्यर्थः । भाष्ये ( अर्थप्रयुक्ते इति ) अर्थं ज्ञानप्रयोजनेन कृत इत्यर्थः । परस्य विशिष्टार्थबोधो भवत्विति शब्दः प्रयुज्यते । प्रयोगेणाविर्भूतशब्दज्ञानेनार्थज्ञानादिति भावः । एवं प्राप्ते शब्दप्रयोगे शास्त्रेणास्येयं प्रकृतिरयं प्रत्यय इत्यादिप्रकृत्यादिविभागज्ञानद्वारा गवादय एव प्रयुक्ता धर्मजनका न गाव्यादय इति नियमः क्रियत इति तात्पर्यम् । विधानादिति । तादर्थ्यस्य षष्ठ्यर्थत्वबोधनाय स्वेवं प्रयोग इति भावः । चतुर्थीति योगविभागो न भाष्यारूढः । सुप्सुपेति समास इत्यप्यगतिकगतिरित्येवं व्याख्यातम् । द्वितीयपक्षात् तृतीये विशेषं दर्शयति । लिङादीति । प्रभाकराङ्गीकृतमतेनेदम् । तन्मते हि लिङादीनामपूर्वरूपं कार्यं वाच्यम् । तदेव च स्वस्मिन् पुरुषं प्रयुञ्जानं नियोग इत्युच्यते । स एव धर्मस्तेन प्रयुज्यते आक्षिप्यते इति कर्मल्युडन्तः प्रयोजनशब्दः । स चासाधुनिवृत्तिरूपो नियमः । धर्मप्रयोजन इति षष्ठीसमासः । एवञ्च द्वितीये धर्मफलको नियम इत्यर्थः । तृतीये धर्मप्रयोज्य इत्यर्थ इति भेदः । केचित्तु धर्माय नियम इत्यनेन प्रत्यवायपरिहाररूपधर्मायायं नियमः । असाधुप्रयोगेऽधर्मोत्पत्तेः । धर्मार्थो नियम इत्यनेन धर्मस्य यज्ञादेरङ्गभूत इत्यर्थः । नानृतं वदेदिति क्रत्वङ्गवाक्येन क्रतुवैगुण्यस्य बोधनात् । धर्मप्रयोजनो नियम इत्यनेनैकः शब्द इति श्रुतेर्नियमादृष्टं पुरुषार्थकरं सूचितमित्याहुः । नन्वीदृशो धर्मनियमः क्व दृष्टोऽत आह । भाष्ये (यथेति) ननु लोकवेदयोरित्येव सिद्धे तद्धितनिर्देशोऽयुक्तोऽत आह । प्रियतद्धिता इति । नन्वन्यार्थेऽन्यशब्दप्रयोगेऽपशब्दत्वं स्यादत आह । नायमिति । ते वेदलोकेति । अपयैव समुदायशब्दप्रयोगदर्शनादितिभावः ।

लोके तावदभक्ष्यो ग्राम्यकुक्कुटः, अभक्ष्यो ग्राम्यसूकर इत्युच्यते । भक्ष्यं च नाम क्षुत्प्रतिघातार्थमुपादीयते । शक्यं चानेन श्वमांसादिभिरपि क्षुत् प्रतिहन्तुम् । तत्र नियमः क्रियते । इदं भक्ष्यमिदमभक्ष्यमिति । तथा खेदात् स्त्रीषु प्रवृत्तिर्भवति । समानश्च खेदविगमो गम्यायां चागम्यायां च । तत्र नियमः क्रियते । इयं गम्या इयमगम्येति । वेदे खल्वपि । पयोव्रतो ब्राह्मणो यवागूव्रतो राजन्य आमिक्षाव्रतो वैश्य इत्युच्यते । व्रतं च नामाभ्यवहारार्थमुपादीयते । शक्यं चानेन शालिमांसादीन्यपि व्रतयितुम् । तत्र नियमः क्रियते ।। तथा बैल्वः खादिरो वा यूपः स्यादित्युच्यते । यूपश्च नाम पश्वनुबन्धार्थमुपादीयते । शक्यं चानेन यत् किं चिदेव काष्ठमुच्छ्रित्यानुच्छ्रित्य वा पशुरनुबन्धुम् । तत्र नियमः क्रियते । तथाऽग्नौ कपालान्यधिश्रित्याभिमन्त्रयते । "भृगूणामङ्गिरसां घर्मस्य तपसा तप्यध्वमिति"। अन्तरेणापि मन्त्रमग्निर्दहनकर्मा कपालानि सन्तापयति । तत्र च नियमः क्रियते । एवं क्रियमाणमभ्युदयकारि भवतीति । एवमिहापि समानाया-

---

प्रयुङ्क्ते । कश्चिद्वानरूपत्यमिति समूहप्रत्ययान्तम् । अथ वेति । नात्रावयवावयविविभागः, किं तर्हि लोकवेदव्यतिरिक्तसिद्धान्तशब्दार्थौ भवरूप इत्यर्थः । लौकिकः स्मृत्युपनिबद्धः । वैदिकः श्रुत्युपनिबद्धः । शक्यं चानेनेति । शकेः कर्मसामान्ये लिङ्गसर्वनामनपुंसकयुक्ते कृत्यप्रत्ययः । ततः पदान्तरसंबन्धादुपजायमानमपि स्त्रीत्व बहिरङ्गत्वादन्तरङ्गसंस्कारं न बाधते इति शक्यं क्षुदित्युक्तम् । यदा तु पूर्वमेव विशेषविवक्षा तदा शक्या क्षुदिति भवत्येव । यदा तु प्रतिघातस्यैव क्षुत् कर्म, शकेस्तु प्रतिघातस्तदा क्षुध प्रतिहन्तुं शक्यमिति भवति । खेदादिति । खेदयतीति खेदो रागः । इन्द्रियनियमासामर्थ्यं वा खेदः । पयोव्रत इति । सत्यामर्थितायां पय एव व्रतयतीति नियमोऽयं, न तु विधिः । अर्थित्वाभावे कारणाभावात् । समानायामिति । यद्यपि साक्षादपभ्रंशा न वाचकास्तथापि स्मर्यमाणसाधुशब्दव्यवधानेनार्थ

---

माधराधेयकल्पनया स्थितिं । लोकरूपसमुदायतदवयवयोरित्यादिः । नात्रावयवावयविविभाग इति । तत्र भव इत्यादिव्यवहारप्रयोजको विभागारोपोऽवयवावयविनोर्नेत्यर्थः । कृतान्तेषु । कृतान्तः सिद्धान्तस्तत्प्रतिपादकवाक्येष्वित्यर्थः । भक्ष्यञ्च नामेत्यस्य तद् भवति यदिति शेषः । शक्यं क्षुदिति सामानाधिकरण्यं कथंभिन्नलिङ्गत्वादत आह । शकेरिति । तदा क्षुधमिति । ननु प्रधानक्रियानिरूपितशक्तेराभिधाने गुणक्रियानिरूपितशक्तेरनभिहिताया अभिहितवत्प्रकाशस्य, स्वादुमि णमुलित्यत्र वक्ष्यमाणत्वेन कथमेतदिति चेन्न । प्रधानतिङन्तार्थक्रियानिरूपितशक्तेरेवायं स्वभावो यत्स्वसमानाधिकरणगुणशक्तेरभिहितवत्प्रकाश इत्यभिमानात् । वस्तुत इदमयुक्तमेवेति स्वादुमीत्यत्र निरूपयिष्यामः । खेद इति । एवञ्च ग्राम्यकुक्कुटपरदारादौ विशेषनिषेधस्येतराभ्यनुज्ञाफलकतया आरण्यकतद्भक्षणस्वदारगमनयोर्यथा दोषाभावो, यथा च ग्राम्यकुक्कुटभक्षणपरदारगमनयोरधर्मस्तथा शास्त्रजनितज्ञानपूर्वके गवादिप्रयोगे अपूर्वोत्पत्तिरूपं फलं शास्त्रेण बोध्यते । तेषां साधुत्वबोधनादर्थादपशब्दानामधर्मजनकत्वं बोध्यते । एकविधस्तदितरनिषेधफलकत्वात् । यथैकानिषेधस्यापराभ्यनुज्ञाफलकत्वमिति भावः । दृष्टान्तता त्वंशेन, वक्ष्यमाणवैदिकानां तु सर्वांशेनेति बो-

मर्थावगतौ शब्देन चापशब्देन च तत्र धर्मनियमः क्रियते। शब्देनैवार्थोऽभिधेयो नापशब्देनेति। एवं क्रियमाणमभ्युदयकारि भवतीति। अस्त्यप्रयुक्तः। सन्ति वै शब्दा अप्रयुक्ताः। तद्यथा। ऊष तेर चक्र पेचेति। किमतो यत्सन्त्यप्रयुक्ताः। प्रयोगाद्धि भवाञ्छब्दानां साधुत्वमध्यवस्यति। य इदानीमप्रयुक्ता नामी साधवः स्युः। इदं तावद्विप्रतिषिद्धम्। यदुच्यते सन्ति वै शब्दा अप्रयुक्ता इति। यदि सन्ति, नाप्रयुक्ताः। अथाप्रयुक्ता, न सन्ति। सन्ति चाप्रयुक्ताश्चेति विप्रतिषिद्धम्। प्रयुञ्जान एव खलु भवानाह सन्ति शब्दा अप्रयुक्ता इति। कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधुः स्यात्। नैतद्विप्रतिषिद्धम्। सन्तीति तावद् ब्रूमः। यदेतान् शास्त्रविदः शास्त्रेणानुविदधते। अप्रयुक्ता इति ब्रूमः। यल्लोके अप्रयुक्ता इति। यदप्युच्यते। कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधुः स्यादिति। न ब्रूमोऽस्माभिरप्रयुक्ता इति। किं तर्हि लोकेऽप्रयुक्ता इति। ननु च भवानप्यभ्यन्तरो लोके।

---

प्रत्याययन्ति। केचिच्चापभ्रंशाः परंपरया निरूढिमागताः साधुशब्दानस्मारयन्त एव अर्थं प्रत्याययन्ति। अन्ये तु मन्यन्ते साधुशब्दवदपभ्रंशा अपि साक्षादर्थस्य वाचका इति। अस्त्यप्रयुक्त इति। प्रयोगमूलत्वादस्याः स्मृतेरप्रयुक्तानामन्वाख्यानस्याप्रामाण्यमाशङ्कते, यथा घटादीनां विनाऽप्यर्थक्रियया सत्त्वं गम्यते। नैवं शब्दानां, ये हि सर्वदा व्यवहाराय प्रयुज्यमानाः सन्तः सत्त्वेनावसीयन्ते इत्याह। इदमिति। कश्चेदानीमिति, उपहासपरम्। उत्तरन्तु शास्त्रदृष्ट्या प्रकृतिप्रत्ययादिसंभवादनु-

---

ध्वम्। व्रतयतीति। अभ्यवहार्यत्वेनोपादत्ते इत्यर्थः। भाष्ये [ उच्छिद्य त्यानुच्छिद्य वेति ] सन्तक्ष्यासन्तक्ष्य वेत्यर्थः। निखन्यानिखन्य वेत्यर्थ इत्यन्ये। ननु अपभ्रंशा न वाचकाः, वाच्यप्रतीत्यन्यथानुपपत्त्या कल्प्यमानशक्तेः शिष्टप्रयुक्तसंस्कृतेष्वेव कल्पनात्। तदनुसारेणैव चापभ्रंशानां साधुस्मरणेन बोधकत्वोपपत्तेः समानायामित्यनुपपन्नमिति शङ्कते। यद्यपीति। तथापीति।

एवञ्च वाचकत्वाभावेऽप्यर्थप्रत्यायकत्वाविशेषेण समानायामित्युक्तम्। निरूढिमागता इति। ते च शक्तिभ्रमेण बोधका इति भावः। शक्तिभ्रमश्चेत्थं, केनचिद् गावीति प्रयुक्ते गौरिति साधुस्मरणात् प्रयोज्यस्य बोधेऽपि तटस्थस्य गावीशब्दादेवास्य गोबोध इति भ्रमस्तन्मूलको ऽन्येषामपि भ्रम इति। वस्तुतो 'विनिगमनाविरहाद् भाषाशब्देष्वपि शक्तिरेवेत्याह। अन्ये त्विति। साधुत्वं चैतन्मते शब्दगतधर्मसाधनतावच्छेदकं जात्यमेव। यद्यपि साधूनेव भाषेतेति न श्रूयते तथापि फलनिर्देशवाक्ये तन्निर्देशादेवेदृशविधिः कल्प्यते। तत्र के साधव इत्याकाङ्क्षायामेत एव साधव इति व्याकरणेन निष्पादनात्तद्द्वारा शास्त्रेण धर्मनियमो विधीयत इति बोध्यम्। भाष्ये ( शब्देनैवेति )। साधुनेत्यर्थः। एवं क्रियमाणामिति। शास्त्रज्ञानपूर्वकमुच्चार्यमाणमित्यर्थः। अस्त्यप्रयुक्त इत्यादेः प्रकृतोपयोगमाह। प्रयोगमूलत्वादिति। लोकतोऽर्थेऽप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियम इत्यनेन प्रयुक्तेषु साध्वसाधुषु प्रयुक्तसाध्वन्वाख्यानेन तेषु धर्मो युक्तोऽसाधुष्वधर्म इत्यर्थकेनेदं सूचितम्। एवञ्चाप्रयुक्तानामप्रयोगेणैवासाधुत्वानुमानादसाधूनामप्यनेनान्वाख्यानादप्रामाण्यमिति भावः। वार्त्तिकोक्तानियमानुपपत्तिश्चेत्यपि बोध्यम्। भाष्ये ( किमत ) इति। अप्रयुक्तसत्त्वं नास्माकमनिष्टं साधुमात्रार्थत्वाद्व्याकरणस्येत्यर्थः। उत्तरम्। प्रयोगादिति। तथा चाप्रयोगादसाधुत्वानुमानमिति भावः। विप्रतिषिद्धत्वमुपपादयति। एवञ्च सत्त्वे प्रयोग आवश्यक एव अप्रयोगे च सत्त्वमेव न स्यादिति भावः। ननु लक्षणवशेन सत्त्वं, केनाप्यप्रयोगाच्चाप्रयुक्तत्वमिति न विरोधोऽतो भाष्ये ( प्रयुञ्जान एवेति )। ननु मया प्रयुक्तश्चेत्किं तत्र, सोपहासमाह॥ ( कश्चेदानीमिति ) ॥ स्वयमेव प्रयोगं कृत्वा सन्ति चाप्रयुक्ता इत्यमीषां शब्दानां प्रयो

अभ्यन्तरो ऽहं लोके न त्वहं लोकः। अस्त्यप्रयुक्त इति चेन्नार्थे शब्दप्रयोगात्। अस्त्यप्रयुक्त इति चेत्। तन्न। किं कारणम्। अर्थे शब्दप्रयोगात्। अर्थे शब्दाः प्रयुज्यन्ते। सन्ति चैषां शब्दानामर्थाः येष्वर्थेषु प्रयुज्यन्ते। अप्रयोगः प्रयोगान्यत्वात्। अप्रयोगः खल्वप्येषां शब्दानां न्याय्यः। कुतः। प्रयोगान्यत्वात्। यदेतेषां शब्दानामर्थेऽन्याञ्छब्दान् प्रयुञ्जते। तद्यथा। ऊषेत्यस्य शब्दस्यार्थे क्व यूयमुषिताः। तेरेत्यस्यार्थे क्व यूयं तीर्णाः। चक्रेत्यस्यार्थे क्व यूयं कृतवन्तः। पेचेत्यस्यार्थे क्व यूयं पक्ववन्त इति। अप्रयुक्ते दीर्घसत्त्रवत्। यद्यप्यप्रयुक्ता अवश्यं दीर्घसत्त्रवल्लक्षणेनानुविधेयाः। तद्यथा दीर्घसत्त्राणि वार्षशतिकानि वार्षसहस्रकाणि च, न चाद्यत्वे कश्चिदपि व्यवहरति केवलमृषिसम्प्रदायो धर्म इति कृत्वा याज्ञिकाः शास्त्रेणानुविदधते। सर्वे देशान्तरे। सर्वे खल्वप्येते शब्दा देशान्तरेषु प्रयुज्यन्ते। न चैवोपलभ्यन्ते। उपलब्धौ यत्नः क्रियताम्। महान् शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्याः बहुधा भिन्नाः एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदः एकविंशतिधा बाह्वृच्यं नवधाथर्वणो

---

मितिसत्त्वात्। व्यवहारे तु न दृश्यन्त इत्युक्तम्। न त्वहं लोक इति। यथा लोकोऽर्थावगमाय शब्दान् प्रयुङ्क्ते नैवं मयैतेऽर्थे प्रयुक्ता अपि तु स्वरूपपदार्थका इत्यर्थः। अर्थे शब्दप्रयोगादिति। अर्थसद्भावः शब्दप्रयोगे लिङ्गं, न हि विना शब्देनार्थप्रत्यायनमुपपद्यते। इतरोऽन्यथासिद्धतामाह। अप्रयोग इति। यतोऽन्ये तेषामर्थानां सन्ति वाचकास्ततो नैषामनुमानमुपपद्यते। यद्यप्यूषेत्यस्य उषिता इति समानार्थो न भवति परोक्षतादेर्विशेषस्यानवगमात् तथापि तत्प्रत्यायनाय पदान्तरसहितः प्रयुज्यते। संप्रत्यप्रयुज्यमानानामपि पूर्वं प्रयुक्तत्वादनुशासनं कर्त्तव्यमित्याह। अप्रयुक्ते इति। ऋषिसंप्रदाय इति वेदाध्ययनमित्यर्थः। सर्वे इति। इदमत्र तात्पर्यं

---

गे साधुर्योग्यः स्यादित्यर्थः। स्वतृप्रयोगेणैव प्रयुक्तत्वावगमे ऽप्रयुक्तत्वोक्तिर्विरुद्धेति भावः। ननु लोकान्तर्भूतस्य, न त्वहं लोक इति वचो विरुद्धमत आह। यथेति। अर्थबोधाय शब्दान्प्रयुञ्जानो हि मम लोकत्वेन अभिमत इत्यर्थः। भाष्ये (ऽर्थे शब्दप्रयोगादिति) अर्थविषयकज्ञानाय शब्दप्रयोगादित्यर्थः। तदाशयमाह। अर्थसद्भावइति। भाष्ये [ प्रयोगान्यत्वादिति ] प्रयुज्यत इति प्रयोगः शब्दः सोऽन्यो यस्यार्थस्यास्ति तत्त्वादित्यर्थः। सर्वनाम्नः परनिपातः पूर्वनिपातप्रकरणानित्यत्वात्। पदान्तरसहित इति। पदान्तरं क्व यूयमिति। तत्र क्वेत्यनेन साधनपारोक्ष्यं निष्ठया भूतत्वं कर्तृत्वञ्च यूयमित्यनेन मध्यमपुरुषबोध्यमाभिमुख्यं चेतनत्वं च साक्षाद्। गत्यर्थाकर्मकेत्यत्र निर्देशात् तरतेर्गत्यर्थत्वात्कर्तरि क्तः। नन्वाख्याते क्रियाविशेष्यको बोधोऽत्र च कर्तृविशेष्यक इति कथं लिडन्तसमानार्थत्वमिति चेन्न। विषयताविशेषानादरेण तथोक्तेः। न चाख्याते क्रियाविशेष्यकबोधे पक्ष्यति भवति अपाक्षीद्भवतीति भूवादिसूत्रस्थभाष्यप्रयोगविरोधः। अतीतानागतपाककर्तृकसत्ताया वर्त्तमानत्वासङ्गतेरिति वाच्यम्। वर्त्तमानसामान्ये तत्र लटः सत्त्वात्। तरति ब्रह्महत्यां योऽश्वमेधेन यजते इत्यादौ यत्कर्तृक तरणमिति बोधः। अत एव ह्रस्वो नपुंसके इति सूत्रे रमते ब्राह्मणकुलमिति क्रियाप्रधानमिति भाष्ये उक्तम्। नन्वप्रयुक्तानुशासने निर्मूलत्वाच्छास्त्रस्य अप्रामाण्यं स्यादत आह। संप्रतीति। पाणिनेर्व्याकरणप्रणयनकाले इत्यर्थः। पूर्वप्रयोगसत्ता च व्याकरणप्रणयनादेवानुमीयत इति भावः। इदमपि यत्र भाष्यवार्त्तिककाराभ्यामप्रयुक्तत्वं नोक्तं तदभिप्रायकमनुमानं बोध्यम्। वार्षशतिकानीति। वर्षशब्दो दिवसपरः। यथाश्रुत एव वा। आहरति।

वेदः । वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः । एतावन्तं शब्दस्य प्रयोगविषयमननुनिशम्य सन्त्यप्रयुक्ता इति वचनं केवलं साहसमात्रमेव । एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते । तद्यथा । शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति। विकार एनमार्या भाषन्ते शव इति । हम्मतिः सुराष्ट्रेषु, दान्तमुदीच्येषु, रंहतिः प्राच्यमध्येषु, गमिमेव त्वार्याः प्रयुञ्जते । दातिर्लवनार्थे प्राच्येषु । दात्रमुदीच्येषु । ये चाऽप्येते भवतोऽप्रयुक्ता अभिमताः शब्दा एतेषामपि प्रयोगो दृश्यते । क्व । वेदे । तद्यथा । सप्तास्ये रेवती रेव दूष, यद्वा रेवती रेवत्यां तमूष, यन्मे नरः श्रुत्यं ब्रह्म चक्र, यत्रा नश्चक्रा जरसं तनूनामिति । किं पुनः शब्दज्ञाने धर्म आहोस्वित् प्रयोगे कश्चात्र विशेषः । ज्ञाने धर्म इति चेत्तथाऽधर्मः । ज्ञाने धर्म इति चेत्तथा अधर्मः प्राप्नोति । यो हि शब्दाञ्जानात्यपशब्दानप्यसौ जानाति । यथैव शब्दज्ञाने धर्मः । एवमपशब्दज्ञानेऽप्यधर्मः प्राप्नोति । अथवा भूयानधर्मः प्राप्नोति । भूयांसो ह्यपशब्दाः अल्पीयांसः शब्दाः । एकैकस्य शब्दस्य बहवोऽपभ्रंशाः तद्यथा । गौरित्यस्य गावी गोणी गोता गोपोतलिकेत्येवमादयोऽपभ्रंशाः ।

---

यस्य कस्य चिद्वचनात्प्रयोगाप्रयोगौ न व्यवतिष्ठेते अपि तु शिष्टानामेव वचनात् । वाकोवाक्यमिति । वाकोवाक्यशब्देनोक्तिप्रत्युक्तिरूपो ग्रन्थ उच्यते । यथा किं स्विदावपनं महद् भूमिरावपनं महदिति । पूर्वचरितसंकीर्तनमितिहासः । वंशाद्यनुकीर्तनं पुराणम् । विकार इति । जीवतो मृतावस्था विकारस्तत्रेत्यर्थः । किं पुनरिति । एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवतीति श्रुतिः । तत्र किं सम्यग्ज्ञातः कामधुग् भवति सुप्रयोगात्तु सम्यग्ज्ञातत्वानुमानमित्यर्थः । आहोस्वित्सुप्रयुक्तः कामधुग् भवति सुप्रयुक्तत्वं तु सम्यग् ज्ञानादित्यर्थ इति प्रश्नः । ज्ञाने धर्म इति चेदिति । यथा श्लेष्मणः प्रकोपनं स्नेह-

---

सामग्र्यभावादिति भावः । ननु सूत्राणां बहुयजमानकानामृषिभिर्वसिष्ठादिभिः संप्रदीयमानत्वाभावादृषिसंप्रदाय इत्ययुक्तमत आह । वेदेति । भाष्ये (कृत्स्ने) त्यनन्तरमधीयत इति शेषः । याज्ञिकाश्च कल्पसूत्रेणान्वाचक्षत इत्यर्थः । तत्र सूत्राणां कर्मस्वम्, अनुपलब्ध्या अप्रयुक्तत्वं शङ्कते । भाष्ये ( न चैवेति ) इतरलोकापेक्षया बहुमत्यां शब्दबाहुल्यात्तस्या पृथग् ग्रहणम । अनेनान्त्यपातालपर्यन्तसङ्ग्रहः । ( त्रयो लोकाः ) स्वस्स्वेनोपरितनसकलसङ्ग्रहः । ( रहस्यम् ) उपनिषत् । मन्त्रादिस्मृतयो वा । वेदनिगूढार्थप्रकाशकत्वात् । एवञ्च देशान्तरशब्दः शास्त्रान्तरवेदान्तरोपलक्षक इति बोध्यम् । भाष्ये हम्मतिरित्यत्र रंहतिरित्यत्र च गतिकर्मेत्यनुकर्षः । दातिर्लवनार्थ इति । क्तिन्नन्तं क्तिजन्तं वा । लवनेऽर्थे दातिशब्दं प्राच्याः प्रयुञ्जते तत्रार्थे दात्रशब्दमुदीच्या इत्यर्थः । वार्त्तिकोक्तो धर्मनियमः श्रुतिसिद्धस्तस्यानुभयोः श्रवणात्प्रश्न इत्याह । एकः शब्द इति । तत्र यदेकस्मात्पूर्वन्तदितरत्तदर्थमिति न्यायाद् द्वयोः साम्येन फलसंबन्धाभावाद्विकल्पायोगनैकस्य प्राधान्यमपरस्याङ्गत्वं तत्र प्रथमं वा नियम्यतेति न्यायाश्रयेणाह । तत्र किमिति । सर्वत्रैव हि विज्ञानं संस्कारित्वेन गण्यते । पराङ्गं चास्माविज्ञानादन्यत्रेत्यवधार्यतामिति न्यायेन ज्ञानस्य क्रतुशेषतया धर्मतुल्यत्वाभावात् । प्रयोगाङ्गतयाऽदृष्टार्थत्वाच्च प्रयोगस्य फलं प्रति संनिहितत्वाच्चाह । आहोस्विदिति । यथा श्लेष्मण इति । तथा धर्मजनकज्ञानविपरीतत्वात् तद्विपरीतजनकत्वं नापशब्दज्ञानादधर्मप्राप्तिरित्यर्थः । प्रयोगे इति । एवञ्च प्रयोगादेवाधर्मवद-

आचारे नियमः। आचारे। पुनर्ऋषिर्नियमं वेदयते। ते ऽसुरा हेऽलयो हेऽलय इति कुर्वन्तः पराबभूवुरिति। अस्तु तर्हि प्रयोगे। प्रयोगे सर्वलोकस्य। यदि प्रयोगे धर्मः सर्वो लोको ऽभ्युदयेन युज्येत। कश्चेदानीं भवतो मत्सरः, यदि सर्वो लोको ऽभ्युदयेन युज्येत। न खलु कश्चिन्मत्सरः। प्रयत्नानर्थक्यं तु भवति। फलवता च नाम प्रयत्नेन भवितव्यम्। न च प्रयत्नः फलाद् व्यतिरेच्यः। ननु च ये कृतप्रयत्नास्ते साधीयःशब्दान् प्रयोक्ष्यन्ते। त एव साधीयोभ्युदयेन योक्ष्यन्ते। व्यतिरेको ऽपि वै लक्ष्यते। दृश्यन्ते हि कृतप्रयत्नाश्चाप्रवीणा अकृतप्रयत्नाश्च प्रवीणाः। तत्र फलव्यतिरेकोऽपि स्यात्। एवं तर्हि नाऽपि ज्ञान एव धर्मो नाऽपि प्रयोगे एव। किं तर्हि? शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन ※। शास्त्रपूर्वकं यः शब्दान् प्रयुङ्क्ते सोऽभ्युदयेन युज्यते, तत्तुल्यं वेदशब्देन। वेदशब्दा अप्येवमभिवदन्ति। योऽग्निष्टोमेन यजते। य उ चैनमेवं वेद। योऽग्निं नाचिकेतं चिनुते य उ चैनमेवं वेद। अपर आह। तत्तुल्यं वेदशब्देनेति। यथा वेदशब्दा नियमपूर्वमधीताः फलवन्तो भवन्ति। एवं यः शास्त्रपूर्वकं शब्दान् प्रयुङ्क्ते सोऽभ्युदयेन युज्यते इति। अथ वा पुनरस्तु ज्ञान एव धर्म इति। ननु चोक्तं ज्ञाने धर्म इति चेत्तथा ऽधर्म इति। नैष दोषः। शब्दप्रमाणका वयम्। यच्छब्द आह तदस्माकं प्रमाणम्। शब्दश्च शब्दज्ञाने धर्ममाह, नापशब्दज्ञाने ऽधर्ममाह। यच्च पुनरशिष्टाप्रतिषिद्धं नैव तद्दोषाय भवति नाभ्युदयाय। तद्यथा। हिक्कितहसितकण्डूयितानि नैव तद्दोषाय भवन्ति नाभ्युदयाय। अथ वाभ्युपाय एवापशब्दज्ञानं शब्दज्ञाने।

---

द्रव्यं, रूढं तु वायोस्तथेहापि प्राप्तमिति भावः। आचारे। प्रयोगे। ऋषिर्वेदः। न च प्रयत्न इति। यदि प्रयत्नेन विना फलं स्यात्प्रयत्नवैयर्थ्यमापद्येतेत्यर्थः। व्यतिरेक इति। परिहासः। तत्तुल्यमिति। वेदः शब्दो यस्यार्थस्य स वेदशब्दः तस्य यथा ज्ञात्वाऽनुष्ठानं तथा शब्दानामपि प्रकृत्यादिविभागज्ञानपूर्वकः प्रयोग इत्यर्थः। अपर आहेति। वेदश्चासौ शब्दश्च वेदशब्द इति कर्मधारयः। अथवेति। अपशब्दज्ञाननान्तरीयकत्वाच्छ-

---

ऽधर्मोऽपीति ज्ञानाद्धर्म इति वेदविरुद्धमिति भावः। भाष्ये [ फलाद्व्यतिरेच्य इति ] फलवद्वृत्त्यभावप्रतियोगी न कार्य इत्यर्थः। प्रयत्नवैयर्थ्यमिति। व्याकरणाध्ययनविषयकप्रयत्नवैयर्थ्यमित्यर्थः। साधीय इति। क्रियाविशेषणम्। शास्त्रसंस्कारवतां प्रभूतशब्दप्रयोगजन्यबह्वपूर्वद्वारा बहुतराभ्युदययुक्तत्वमित्यर्थः। भाष्ये [ तत्र फलव्यतिरेक इति ] कौशलव्यतिरेकवत् फलव्यतिरेकोऽपि स्यादिति तस्य व्याकरणाध्ययनं व्यर्थमेव स्यादिति भावः। शास्त्रपूर्वके इति। व्याकरणाध्ययनपूर्वके इत्यर्थः। तत्र वेदाङ्गत्वादेतद्व्याकरणाध्ययनपूर्वकप्रयोगे एव धर्म इति प्रामाणिकाः। वेद इति। बोधक इत्यर्थः॥ प्रमाणमित्यर्थो वा। तस्य यथेति। तस्य यथा; य उ चैनमेवं वेदेति ग्रन्थेन वेदतो ज्ञात्वानुष्ठानं फलायोक्तम्॥ तथास्यापि शास्त्रज्ञानपूर्वकप्रयोगः फलायेत्येकः शब्द इत्यादिनोक्तमित्यर्थः॥

भाष्ये [ प्रमाणमिति ]॥ प्रामाणिकमित्यर्थः॥ शब्दश्च शब्दज्ञाने इति। एकः शब्दः सम्यग् ज्ञात इत्यादिः। हेलयो हेलय इत्यादि तु अपशब्द प्रयोगे ऽधर्ममाह न तु ज्ञाने इति भावः।

यद्यपि तत्र प्रयुक्त इत्यप्युक्तं तथाप्यवैयाकरणस्य सम्यक् प्रयोगादपि धर्माभावेन ज्ञानमेव तद्धेतुः। प्रयोगस्तु तस्य द्वारमिति भावः॥ भाष्ये [ अभ्युपाय एवेति ] अपशब्दज्ञाननान्तरीयकं शब्दज्ञानमिति। शब्दज्ञा-

यो ह्यपशब्दान् जानाति। शब्दानप्यसौ जानाति। तदेवं ज्ञाने धर्म इति ब्रुवतोऽर्थादापन्नं भवति अपशब्दज्ञानपूर्वके शब्दज्ञाने धर्म इति। अथ वा कूपखानकवदेतद्भविष्यति। तद्यथा। कूपखानकः कूपं खनन् यद्यपि तदीयमृदा पांसुभिश्चावकीर्णो भवति। सोऽप्सु सञ्जातासु तत एव तं गुणमासादयति येन स च दोषो निर्हण्यते भूयसा चाभ्युदयेन योगो भवति। एवमिहापि। यद्यप्यपशब्दज्ञानेऽधर्मः, तथापि यस्त्वसौ शब्दज्ञाने धर्मस्तेन स च दोषो निर्घानिष्यते भूयसा चाभ्युदयेन योगो भविष्यति। यदप्युच्यते आचारे नियम इति। याज्ञे कर्मणि स नियमः। अन्यत्रानियमः। एवं हि श्रूयते। यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः प्रत्यक्षधर्माणः परावरज्ञाः विदितवेदितव्या अधिगतयाथातथ्याः। ते तत्र भवन्तो यद्वानस्तद्वान इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते। याज्ञे कर्मणि पुनर्नापभाषन्ते। तैः पुनरसुरैर्याज्ञे कर्मण्यपभाषितं ततस्ते पराभूताः। अथ व्याकरणमित्यस्य शब्दस्य कः पदार्थः। सूत्रम्। सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः *। सूत्रे व्याकरणे षष्ठ्यर्थो नोपपद्यते व्याकरणस्य सूत्रमिति। किं तर्हि तदन्यत्सूत्राद्

---

ब्दज्ञानस्य पृथक् फलमपशब्दज्ञानस्य नास्तीत्यर्थः। दोष इति। उत्कृष्टधर्मफलावाप्तौ स्वल्पमधर्मफलमुत्पन्नमप्यनुत्पन्नकल्पं भवतीत्यर्थः। प्रत्यक्षधर्माण इति। योगिप्रत्यक्षेण सर्वं विदितवन्तः। परावरज्ञा इति। विद्याविद्याप्रविभागज्ञाः। अथेति। उक्तमिदं न चान्तरेण व्याकरणमित्यादि। तत्र पक्षद्वयेऽपि दोषदर्शनात्प्रश्नः। षष्ठ्यर्थ इति। द्वाभ्यामपि शब्दाभ्यामष्टाध्याय्याः प्रतिपादनाद् व्यतिरेका-

---

नेन फले जननीये सहकारितैवापशब्दज्ञानस्य, न पृथक् फलतेतिभावः। अपशब्दज्ञानम्। अपशब्दत्वेन तज्ज्ञानम्। एवं शब्दज्ञाने इत्यपि। अपशब्दत्वेन तज्ज्ञाने हि तद्भिन्नत्वेन शब्दज्ञानं भवति। यो हीति भाष्यस्य य एव अपशब्दाञ्जानाति। असावेव शब्दाञ्जानाति तज्ज्ञानसमानाधिकरणशब्दज्ञानादेव धर्म इति न ततो विपरीतफलकल्पना युक्तेति भावः। तदाह। अपशब्दज्ञाननान्तरीयकत्वादिति। बहुव्रीहिः। नहि वह्न्यानयननान्तरीयकं पात्रानयनं ततः पृथक्फलं भवति। तुष्यतु दुर्जन इतिन्यायेनापशब्दज्ञानस्य विपरीतत्वमात्रेणाधर्मसाधनत्वमभ्युपगम्यापि भाष्ये समाधयन्तरमाह। [ अथ वा कूपेति ] मृद् आर्द्रा। पांसुः शुष्का। यत्कर्मनान्तरीयककर्मजन्यो यो विपरीतत्वमात्रेण कल्प्यो वैधो यो दोषः स तत्कर्मजन्यफलनाश्यो यथा कूपखनननान्तरीयकशरीरव्यापारजन्योमृल्लेपस्तत्फलजलनाश्य इति सामान्यतो दृष्टानुमानात्तन्नाशानुमानमिति बोध्यम्। उत्कृष्टधर्मेति। धर्मस्य विधिबोध्यत्वादुत्कृष्टत्वम्। अधर्मस्य तु वचनाबोध्यत्वेन विपरीतत्वमात्रेण कल्प्यस्याल्पत्वेन तत्फलधर्मनाश्यत्वम्। यागीयहिंसाया, न हिंस्यादितिवचनेन दुष्टताबोधनाद् दुष्टत्वमेवेत्यन्यत्र विस्तरः। भाष्ये [ऽन्यत्रानियम इति] यज्ञे सुशब्दप्रयोगाद्धर्मोऽपशब्दप्रयोगादधर्म इति तत्रैव तयोः प्रयोगनियमः। तदतिरिक्तस्थले तु सुशब्दापशब्दयोःप्रयोगेऽनियमः। योऽपि यज्ञे दोषः सोऽपि तदङ्गभूतसंकल्पोहादिविषये एव। श्रुतौ, हेलयोहेलयो नश्यध्वमित्यूह एव। [ विदितवेदितव्या ] इत्यनेन श्रवणमननिदिध्यासनसंपदुक्ता [ अधिगतयाथातथ्या ] इत्यनेन साक्षात्कार उक्तः। याथातथ्ये स्वार्थे ष्यञ्। वेदितव्यस्य यद्यथास्वरूपं सत्यं स्वरूपं शुद्धचिदानन्दरूपं तदधिगतं प्रत्यक्षेण प्राप्तं यैरित्यर्थः। यज्ञे पुनरिति। अनेन तत्त्वज्ञानामपि कर्माधिकारं सूचयति। प्रयुञ्जत इति वर्त्तमानसमीपे भूते लट्? एवं नापभाषन्त इत्यपि। अत एव तन्नामानो बभूवुरित्यर्थः। व्याकरणपदार्थविचारस्य सङ्गतिं दर्शयितुमाह। उक्तमिदमिति। आदिना तस्मादध्येयं व्याकरणम् इत्यादिपुनःपुनरु-

व्याकरणं यस्यादः सूत्रं स्यात् । शब्दाप्रतिपत्तिः * । शब्दानां चाऽप्रतिपत्तिः प्राप्नोति । व्याकरणाच्छब्दान्प्रतिपद्यामहइति । नहि सूत्रत एव शब्दान्प्रतिपद्यन्ते । किं तर्हि व्याख्यानतश्च । ननु च तदेव सूत्रं विगृहीतं व्याख्यानं भवति न केवलानि चर्चापदानि व्याख्यानम् । वृद्धिः आत् ऐजिति । किं तर्हि उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवति । एवं तर्हि शब्दः । शब्दे ल्युडर्थः * । यदि शब्दो व्याकरणं ल्युडर्थो नोपपद्यते । व्याक्रियन्ते शब्दा अनेनेति व्याकरणं, नहि शब्देन किं चिद् व्याक्रियते । केन तर्हि । सूत्रेण । भवे * । भवे च तद्धितो नोपपद्यते । व्याकरणे भवो योगो वैयाकरण इति । नहि शब्दे भवो योगः । क्व तर्हि, सूत्रे । प्रोक्तादयश्च तद्धिताः * । प्रोक्तादयश्चतद्धिता नोपपद्यन्ते । पाणिनिना प्रोक्तं पाणिनीयम् आपिशलङ्काशकृत्स्नमिति । नहि पाणिनिना शब्दाः प्रोक्ताः । किं तर्हि । सूत्रम् । किमर्थमिदमुभयमुच्यते भवे प्रोक्तादयश्च तद्धिता इति । न प्रोक्तादयश्च तद्धिता इत्येव भवेऽपि तद्धितश्चोदितः स्यात् । पुरस्तादिदमाचार्येण दृष्टं भवे च तद्धित इति तत्पठितम् । तत उत्तरकालमिदं दृष्टं प्रोक्तादयश्च तद्धिता इति । तदपि पठितम् । न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति । अयं तावददोषः । यदुच्यते

---

ऽभावः । सामान्यविशेषशब्दतया तु द्वयोः सहप्रयोगो न विरुध्यते । यदा त्वष्टाध्याय्येकदेशः सूत्रशब्देनोच्यते तदा षष्ठ्यर्थोऽप्युपपद्यते । शब्दाप्रतिपत्तिरिति । नहि व्याख्यानरहितसूत्रमात्रश्रवणाच्छब्दाः प्रतीयन्ते । समुदितमिति । समुदायादेवार्थावसायोत्पादादित्यर्थः । शब्द इति । करणे ल्युड् विधीयते । शब्दश्च व्याक्रियमाणत्वात्कर्म न तु करणमिति भावः । भवे चेति । शब्देऽप्यन्वाख्यायमानत्वेन भवो योग इति चेन्मीमांसादियोगस्यापि शब्दं प्रति विचारकत्वाद्वैयाकरणत्वप्रसङ्गः । नचेदानीमिति । लक्षणप्रपञ्चाभ्यां मूलसूत्रवद्वार्तिकानामुपपत्त्या दोषाभावः ।

---

क्तिर्गृह्यते । ननु सूत्रसमुदायस्य व्याकरणत्वेऽपि सूत्रमित्युपपद्यतेऽत आह । द्वाभ्यामिति । सूत्रपदेनाप्यष्टाध्याय्येव यदोच्यते तदापीष्यते ऽयं प्रयोगः स न सिध्येदित्यर्थः । ननु किमुच्यते षष्ठ्यर्थोऽनुपपन्नइति पर्यायतया सहप्रयोगोऽपि न स्यादत आह । सामान्यविशेषेति । सूत्रं सामान्यं व्याकरणं विशेषः । सूत्रशब्देनाष्टाध्याय्येव तदेकदेशे तु योगव्यवहार एव योगे योगे उपतिष्ठतइत्यादौ । यदा त्विति । सूत्राणि चाप्यधीयान इति भाष्ये वक्ष्यमाणत्वादिति भावः । वस्तुत एकदेशस्याऽसूत्रत्वेऽपि तस्यापि साक्षात्परंपरया वा व्याकरणत्वात् षष्ठ्यर्थानुपपत्तिरेवेति तत्त्वम् । समुदायस्यातिरिक्तत्वेऽपि दोषमाह भाष्ये [ शब्दाप्रतिपत्तिरिति ] व्याकरणाच्छब्दान्प्रतिपद्यामहइति शब्दविषयव्यवहारासिद्धिः प्राप्नोतीत्यर्थः । यतः केवलसूत्रेभ्यः शब्दप्रतिपत्तिर्न दृश्यते व्याकरणस्य शब्दप्रतिपत्तिहेतुत्वं च लोकसिद्धम् । व्याकरणाच्छब्दान्प्रतिपद्यामहइति व्यवहारात् । सेयं प्रतिपत्तिसाधनता सूत्राद्व्यावर्त्तमाना तद्व्याप्यां व्याकरणशब्दवाच्यतां व्यावर्त्तयतीति भावस्तदाह । नहीति । भाष्ये [ चर्चापदानि ) चर्च्यमानानि विभज्यमानानीत्यर्थः । शब्द इति । लक्ष्यमित्यर्थः । अत्र पक्षे षष्ठ्यर्थ उपपद्यते । शब्दप्रतिपत्तिहेतुता तु तदवस्था । वाक्याध्याहार इति । वाक्यघटकपदानां सूत्रान्तरे श्रुतानां स्वरितप्रतिज्ञयाध्याहारः कल्पनमित्यर्थः । यद्वा वाक्याध्याहार इत्यनेन वार्त्तिककृद्वाक्यानां सूत्रतात्पर्यविषयता वाक्यैकदेशन्यायेन सूचिता । ननु राजभोजना इतिवत्कर्मणि ल्युटि न दोषोऽत आह । करण इति कर्मणि स तु क्वाचित्क इति भावः । लक्षणप्रपञ्चाभ्यामिति । यथा कर्मधारयप्रकरणे अलुक्प्रकरणे च । विजिगीषुकथायां हि अभिहिताभिधानमशक्तिसूचक-

शब्दे ल्युडर्थ इति । नावश्यं करणाधिकरणयोरेव ल्युड् विधीयते । किं तर्हि । अन्येष्वपि कारकेषु । कृत्यल्युटो बहुलमिति । तद्यथा । प्रस्कन्दनम्प्रपतनमिति । अथ वा शब्दैरपि शब्दा व्याक्रियन्ते । तद्यथा । गौरित्युक्ते सर्वे सन्देहा निवर्तन्ते नाश्वो न गर्दभ इति । अयं तर्हि दोषः । भवे प्रोक्तादयश्च तद्धिताः इति । एवं तर्हि । लक्ष्यलक्षणे व्याकरणम् * । लक्ष्यं च लक्षणं चैतत्समुदितं व्याकरणं भवति । किं पुनर्लक्ष्यं लक्षणं च । शब्दो लक्ष्यः सूत्रं लक्षणम् । एवमप्ययं दोषः । समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवे नोपपद्यते । सूत्राणि चाऽप्यधीयान इष्यते वैयाकरण इति । नैष दोषः । समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते । तद्यथा । पूर्वे पञ्चालाः उत्तरे पञ्चालाः । तैलं भुक्तम् । घृतं भुक्तम् । शुक्लो नीलः कृष्ण इति । एवमयं समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवेऽपि प्रवर्तते । अथवा पुनरस्तु सूत्रम् । ननु चोक्तं सूत्रे व्याकरणे षष्ठ्यर्थो ऽनुपपन्न इति । नैष दोषः । व्यपदेशिवद्भावेन भविष्यति । यदप्युच्यते शब्दाप्रतिपत्तिरिति । न हि सूत्रत एव शब्दान् प्रतिपद्यन्ते किं तर्हि व्याख्यानतश्चेति । परिहृतमेतत् । तदेव सूत्रं विगृहीतं व्याख्यानं भवतीति । ननु चोक्तं न केवलानि चर्चापदानि व्याख्यानं वृद्धिः आत् ऐजिति । किं तर्हि उदाहरणं प्रत्युदाहरणं वाक्याध्याहारश्चेत्येतत्समुदितं व्याख्यानं भवतीति । अविजानत एतदेवं भवति । सूत्रत एव हि शब्दान् प्रतिपद्यन्ते । आतश्च सूत्रत एव । यो ह्युत्सूत्रं कथयेन्नादो

---

मिति । यद्यप्ययं भीमादिस्तथापि कृत्यल्युटो बहुलमित्यस्यैव भीमादयोपादानङ्त्ययं प्रपञ्च इति भावः । गौरित्युक्तेइति । सास्नादिमति यदा कञ्चित्प्रत्ययं गौरित्युच्यते तदा तत्र वाचकान्तराणां निवृत्तिः कृता भवति । एवमेकस्मिन्नुदाहरणे उपन्यस्ते सर्वाणि तत्सदृशानि शब्दान्तराणि प्रतीयन्ते । पूर्वे पञ्चाला इति । जनपदान्तरनिवृत्तिविवक्षायामेकदेशेऽपि समुदायरूपारोपात्प्रयोगः । तैलमिति । यदौषधसंस्कृता घृततैलमात्रा भवति तदेदमुदाहरणम् । आकृतिवाचित्वे तु घृततैलशब्दयोः संस्थानप्रमाणनिरपेक्षा सर्वत्र मुख्या वृत्तिः । शुक्ल इति । अशुक्लेप्यवयवे ऽवयवान्तरस्य शौक्ल्यात्समुदायस्य शुक्लत्वे सत्यारोपात्प्रयोगः । व्यपदेशिवद्भावेनेति । यथा राहोः शिर इत्येकस्मिन्नपि वस्तुनि शब्दार्थभेदाद्भेदव्यवहारः एवमिहापि व्याकरणशब्देन शास्त्रस्य व्याकृतिक्रियायां करणरूपत्वमुच्यते । सूत्रशब्देन

---

त्वाददोषाय । इह तु व्युत्पादनार्थत्वान्न दोषक्वारीति भावः । पूर्वं सामान्ये उक्ते पश्चाद्विशेषकथनमत्र प्रपञ्चार्थमिति । युज्येत अत्र तु विपरीतमिति न तत्साम्यमित्यन्ये । प्रतीयन्तइति । एवञ्च विपरीतव्यावृत्तिः सदृशसंग्रहश्च व्याकृतिरिति भावः । एतेन शब्दाप्रतिपत्तिरप्यत्र पक्षे उद्धृता । व्यावर्त्यव्यावर्त्तकरूपलक्षणास्यातिप्रसक्तत्वात् पृच्छति । भाष्ये [ किं पुनरिति ] जनपदान्तरेति । भावप्रधानो निर्देशः । यदेति । मात्रा । परिच्छिन्नोंशः । औषधसंस्कृते तत्र समुदाय घृतादिशब्दस्य रूढिरिति भावः । अशुक्लेऽप्यवयवे इति । प्रयोग इत्यनेनान्वेति । आरोपादिति । समुदायस्य शुक्लत्वे अशुक्लावयवे प्रयोगे च हेतुरवयवान्तरस्य शौक्ल्यादिति । वनैकदेशे पुष्पितं वनमितिवदेकदेशेऽपि शुक्ले शुक्लः पट इति व्यवहार इति बोध्यम् । शब्दार्थभेदादिति । अनेकावस्थायुक्तशिरो राहुशब्दार्थः । यत्किंचिदेकावस्थायुक्तं तच्छिरःशब्दार्थः । तादृशं-

गृह्येत । अथ किमर्थो वर्णानामुपदेशः । वृत्तिसमवायार्थ उपदेशः * । वृत्तिसमवायार्थो वर्णानामुपदेशः कर्तव्यः । किमिदं वृत्तिसमवायार्थ इति । वृत्तये समवायो वृत्तिसमवायः । वृत्त्यर्थो वा समवायो वृत्तिसमवायः । वृत्तिप्रयोजनो वा समवायो वृत्तिसमवायः । का पुनर्वृत्तिः । शास्त्रप्रवृत्तिः । अथ कः समवायः । वर्णानामानुपूर्व्येण संनिवेशः । अथ क उपदेशः । उच्चारणम् । कुत एतत् । दिशिरुच्चारणक्रियः । उच्चार्य हि वर्णानाह । उपदिष्टा इमे वर्णा इति । अनुबन्धकरणार्थश्च * । अनुबन्धकरणार्थश्च वर्णानामुपदेशः कर्त्तव्यः । अनुबन्धानासंक्ष्यामीति । न ह्यनुपादिश्य वर्णाननुबन्धाः शक्या आसङ्क्तुम् । स एष वर्णानामुपदेशो वृत्तिसमवायार्थश्चानुबन्धकरणार्थश्च, वृतिसमवायश्चानुबन्धकरणं च प्रत्याहारार्थं, प्रत्याहारो वृत्त्यर्थः । इष्टबुद्ध्यर्थश्च * इष्टबुद्ध्यर्थश्च वर्णानामुपदेशः । इष्टान् वर्णान् भोत्स्यामह इति । न ह्यनुपदिश्य वर्णानिष्टा वर्णाः शक्या विज्ञातुम् । इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः * । इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः कर्तव्यः । एवंगुणा अपि हि वर्णा इष्यन्ते । आकृत्युपदेशात्सि-

---

तु समुदायरूपतेति भेदव्यवहार उपपद्यते । सूत्रत एवेति । पदच्छेदादिभिः सूत्रार्थस्यैवाभिव्यञ्जनात् । अात इति निपातः । अतश्च हेतोरित्यर्थः । नाद इति । नैतदित्यर्थः । अथ वा नादोऽर्थरहितत्वादघोषमात्रमेवेत्यर्थः । किमर्थ इति । न हि वर्णोपदेशेन कस्य चित्साधुशब्दस्यानुशासनमिति भावः । वृत्तिसमवायार्थ इति लाघवेन शास्त्रप्रवृत्त्यर्थ इत्यर्थः । धर्मनियमवत्समासः । वृत्त्यर्थ इति । शास्त्रप्रवृत्तिप्रत्यासन्नत्वं समवायस्य दर्शयति ॥ इग्यण इत्यादौ हि यथासंख्यशास्त्रं वर्णसन्निवेशमात्रादेवावतिष्ठते । वृत्तिप्रयोजन इति । पारम्पर्येण शास्त्रप्रवृत्तावस्याङ्ग

---

राहुशब्दार्थस्य तादृशशिरः पदार्थोऽन्यत्र इति षष्ठ्यर्थोपपत्तिरिति भावः । सूत्रशब्देन तु समुदायरूपतेति । अनेकावस्थायुक्तस्य तस्य व्याकृतिक्रियाकरणावस्थाविशिष्टमवयव इति तद्रूपावयवस्याय समुदाय इत्यर्थः । ईदृशस्थले विकल्पात्मकं ज्ञानं वस्तुशून्यमेव । व्यपदेशिवद्भावाविषयेप्येवमेव "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इति योगसूत्रे पतञ्जल्युक्तेरित्यन्ये । भाष्ये [ अविजानत इति ]। मन्दबुद्धेरित्यर्थः । सूत्रत एवेति । एतन्मूलकमेव पठ्यते "सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्त्तिके" इति । ननु लोकप्रसिद्धमातृकापाठेनैव वर्णज्ञानसंभवाद्माहेश्वरो वर्णसमाम्नायः किमर्थ इति पृच्छति । भाष्ये [ किमर्थ इति ] । पाणिनये महादेवकृत इत्यर्थः । ननु साधुत्वान्वाख्यानं फलमत आह । नहीति । उत्तरम् । [ वृत्तिसमवायार्थ इति ]। शास्त्रप्रवृत्तिस्तदुपयोगिसमवायो वर्णगतः क्रमविशेषः स बोध्यत्वेनार्थः प्रयोजनं यस्य स तथोक्तः । सति ह्यक्षरसमाम्नायेऽजादिसंज्ञाभिर्लाघवेन शास्त्रप्रवृत्तिरिग्यणइत्यादौ यथासङ्ख्यप्रवृत्तिश्चेति भावः । अनेनास्य शास्त्रबहिर्भूतत्वं सूचितम् । अत एव मङ्गलार्थं महतः शब्दौघस्यादितो वृद्धिशब्दं पठतीति वक्ष्यति । अन्यकर्तृकत्वञ्च सूचितम् । पाणिनिशास्त्रप्रवृत्त्यर्थउपदेश इत्युक्ते उपदेशे गुरुकर्तृकतायाः स्वरसतः प्रतीतेः सिद्धोच्चारणेऽपि मन्त्रोपदेशे इत्यादावुपदेशव्यवहारात् । अनुबन्धकरणार्थइत्यत्र करणपदेनेतरस्य सिद्धत्वसूचनात् । तत्करणं चोपदेशकर्तृकर्तृकमेव प्रत्यासत्तेरित्याहुः । भाष्ये [ किमिदमिति ] । कोऽयं समास इति प्रश्नः । धर्मनियमवदिति । षष्ठीसमासः । पक्षत्रयभेदमुपपादयति । शास्त्रेति । आद्यतात्पर्यं तूक्तं लाघवेन शास्त्रप्रवृत्त्यर्थ इति । ननु नेदमाद्योच्चारणमस्यानादित्वात् तत्कथमुपदेशत्वव्यवहारोऽत आह । भाष्ये

द्धम् * । अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति । तथेवर्णाकृतिस्तथोवर्णाकृतिः । आकृत्युपदेशात्सिद्धमिति चेत् संवृतादीनां प्रतिषेधः * । आकृत्युपदेशात्सिद्धमिति चेत् संवृतादीनां प्रतिषेधो वक्तव्यः । के पुनः संवृतादयः संवृतः, कलो, ध्मात, एणीकृतो, ऽम्बूकृतो, ऽर्द्धको, ग्रस्तो, निरस्तः, प्रगीत, उपगीतः, क्ष्विण्णो, रोमश, इति । अपर आह । ग्रस्तं निरस्तमविलम्बितं निर्हतमम्बूकृतं ध्मातमथो विकम्पितम् । संदष्टमेणीकृतमर्धकं द्रुतं विकीर्णमेताः स्वरदोषभावना इति । अतोन्ये व्यञ्जनदोषाः । गर्गादिबिदादिपाठात्संवृतादीनां निवृत्तिर्भविष्यति । अस्त्यन्यद् गर्गादिबिदादिपाठे प्रयो-

---

त्वम् । सति हि समावाये इत्संज्ञा तत आदिरन्त्येनेति ततो वृद्धेपदृत्यादिशास्त्रप्रवृत्तिः । प्रत्याहारार्थमिति । प्रत्याहारशब्देनाणादिकाः संज्ञा उच्यन्ते । इष्टबुद्ध्यर्थश्चेति । सति ह्युपदेशे कालादिदोषरहिता ये वर्णा निर्दिष्टास्तथैव प्रयोक्तव्या इत्युक्तं भवति । एकश्रुत्या हि सूत्राणां पाठात्सर्वेषामुदात्तादीनामुपदेशः कर्त्तव्य इत्याह इष्टबुद्ध्यर्थश्चेति चेदिति । आकृत्युपदेशादिति । उपात्तोपि विशेषो नान्तरीयकत्वाज्जातिप्राधान्यविवक्षायामविवक्षित इत्यर्थः । संवृतादीनामिति । एकारादीनां संवृतत्वं दोषो न त्वकारस्य तस्य संवृतगुणत्वात् । तत्र सन्ध्यक्षरेषु विवृततमेषूच्चार्येषु संवृतत्वं दोषः । कलः स्थानान्तरनिष्पन्नः काकलीत्वेन प्रसिद्धः । ध्मातः श्वासभूयिष्ठतया ह्रस्वोपि दीर्घ इव लक्ष्यते । एणीकृतोऽविशिष्टः किमयमोकार अथौकार इति यत्र सन्देहः । अम्बूकृतो यो व्यक्तोऽप्यन्तर्मुख इव श्रूयते । अर्द्धको दीर्घोपि ह्रस्व इव । ग्रस्तो जिह्वामूले निगृहीतः । अव्यक्तइत्यपरे । निरस्तो निष्ठुरः । प्रगीतः सामवदुच्चारितः । उपगीतः समीपवर्णान्तरगीत्यनुरक्तः । क्ष्विण्णः कम्पमान इव । रोमशो गम्भीरः । अविलम्बिते वर्णान्तरासम्भिन्नः । निर्हतो रूक्षः । सन्दष्टो वर्द्धितइव । विकीर्णो वर्णान्तरे प्रसृतः । एकोप्यनेकनिर्भासीत्यपरे । स्वरदोषभावना इति । स्वरदोषगोत्राणि अनन्ता हि दोषा अशक्तिप्रमादकृताः । अस्त्यन्यदिति । गर्ग इत्यादिनैव सन्निवेशेन गर्गादीनां सा-

---

( उच्चारणमिति ) ढक्कानिनादेनाभिव्यक्तिरित्यर्थः । फलान्तरमाह अनुबन्धकरणार्थश्चेति । अनुबन्धबोधनार्थ इत्यर्थः । चेनाकारस्य विवृतगुणत्वसङ्ग्रहः । उपलक्षणत्वेन वा । अनुबन्धत्वञ्च समुदायान्त्यत्वे सति नान्यथेति तात्पर्यम् । ननु प्रत्याहारशब्देन सूत्रं चेत् तादर्थ्यमनुबन्धानामनुपपन्नमत आह । प्रत्याहारशब्देनेति । अधिकरणव्युत्पत्त्या अर्शआद्यचा वेति भावः । भाष्ये ( वृत्त्यर्थ इति ) लाघवेन शास्त्रप्रवृत्त्यर्थइत्यर्थः । एतेन प्रत्याहारद्वारा समवायस्य वृत्त्यर्थता दर्शिता । भोत्स्यामहे इति । अन्तर्भावितण्यर्थः । बोधयिष्यामह इत्यर्थः । एवं विज्ञातुमित्यस्य विज्ञापयितुमित्यर्थः । सति ह्युपदेशे इति । एवं च व्याकरणाध्येतॄणामक्षरसमाम्नायेनैवावश्यकेनेष्टवर्णज्ञाने सिद्धे न तदर्थं मातृका पठनीयेति भावः । एकश्रुत्येति । त्रैस्वर्येण पाठे तु द्वयोरेव कर्त्तव्यतां वदेदित्यर्थः । तेषां लोकतः सिद्धौ तु दोषरहितानामपि तत एव सिद्धेरुपदेशवैयर्थ्यापत्तिरिति भावः । त्रैस्वर्येण पाठेपि अन्यतमपाठे ऽन्यस्य कर्त्तव्यत्वाभिप्रायेण सर्वेषां ग्रहणमित्यन्ये । आकृत्युपदेशे किमिति । अकारादिह्रस्वव्यक्तिविशेषोपादाने तदुपादाने व्यक्त्यन्तरग्रहणानापत्तिश्चेत्यत आह उपात्तमिति । नान्तरीयकत्वं च तं विना जातेरुच्चारयितुमशक्यत्वात् । संवृतादीनामिति । भाष्ये तादृशदोषसहितानामाकृतिग्रहणात्प्राप्तस्य ग्रहणस्य प्रतिषेधो वक्तव्य इत्यर्थः । तदाह । एकारादीनां संवृतत्वमिति । अविश्लिष्ट इति । संश्लिष्टः संदिग्ध इति यावत् । ह्रस्व इवेति । तद्व्स्कालसङ्कोचेनोच्चारित इत्यर्थः । निष्ठुर इति । स्वरित इत्यन्ये । गोत्राणीति स्वरदोषजातय इत्यर्थः । भाष्ये ( गर्गादिबिदादिपाठादिति ) संवृतादिदोषरहितानामेव तत्र पाठादिति भावः । साधुत्वमिति । निवृत्तकलादिदोषवत्त्वमित्यर्थः । गार्ग्य इत्यादीनामिति ।

जनम् । किं, समुदायानां साधुत्वं यथा स्यादिति । एवं तर्ह्यष्टादशधाभिन्नां निवृत्तकलादिकामवर्णस्य प्रत्यापत्तिं वक्ष्यामि । सा तर्हि वक्तव्या । लिङ्गार्था तु प्रत्यापत्तिः । लिङ्गार्था सा तर्हि भवति । तत्तर्हि वक्तव्यम् । यद्यप्येतदुच्यते । अथ वैतर्हि अनेकमनुबन्धशतं नोच्चार्यमित्संज्ञा च न वक्तव्या लोपश्च न वक्तव्यः । यदनुबन्धैः क्रियते तत्कलादिभिः करिष्यते । सिध्यत्येवम् । अपाणिनीयं तु भवति । यथान्यासमेवास्तु । ननु चोक्तमाकृत्युपदेशात्सिद्धमिति चेत्संवृतादीनां प्रतिषेध इति । परिहृतमेतत् । गर्गादिबिदादिपाठात् संवृतादीनां निवृत्तिर्भविष्यति । ननु चान्यद् गर्गादिबिदादिपाठे प्रयोजनमुक्तं, किं समुदायानां साधुत्वं यथा स्यादिति । एवं तर्ह्युभयमनेन क्रियते । पाठश्चैव विशेष्यते कलादयश्च निवर्त्यन्ते । कथं पुनरेकेन यत्नेनोभयं लभ्यम् । लभ्यमित्याह । द्विगता अपि हेतवो भवन्ति । तद्यथा । आम्राश्च सिक्ताः पित-

---

धुत्वं यथा स्यात् । गार्ग्य इत्यादीनां मा भूत् ततश्च गर्गादिस्थानामेवाकारादीनां दोषनिवृत्तिः कृता स्यात् । न तु समुदायान्तरस्थानाम् । यद्यपि प्रत्ययविध्यर्थो गर्गादीनां पाठस्तथापि प्रसङ्गात्समुदायसाधुत्वायापि भवति । निवृत्तकलादिकामिति । अकारस्य संवृतत्वान्निवृत्तसंवृतत्वादिकामिति नोक्तम् । अकारस्य निदर्शनार्थत्वात्सर्ववर्णानां शास्त्रान्ते प्रत्यापत्तिरित्यर्थः । यदनुबन्धैरिति । यथ स्वरितत्वमधिकारार्थमेवमात्मनेपदाद्यर्थं कलादिकं प्रतिज्ञाय कलादात्मनेपदमित्यादि करिष्यते न त्वनुदात्तङित इत्यादि । ननु चानुबन्धाभावे कथमणादिकाः संज्ञा उपपद्यन्ते । आदिरन्त्येनेत्यत्रादिः कलैः सहेत्युक्त्वा अ इ उ इत्यादिकाः संज्ञाः करिष्यन्ते । स्वरसन्धिश्चासन्देहाय न करिष्यते इत्यदोषः । उभयमिति । यथाभूता गर्गादिस्था अकारादयस्तथाभूता एव सर्वत्र प्रयोक्तव्या इति प्रतिपाद्यते इत्यर्थः । द्विगता इति । द्वावर्थौ गताः प्र-

---

तत्रत्यानां कलादिदोषनिवृत्तिर्न स्यादित्यर्थः । तदाह । ततश्चेति । परे तु समुदायानामेतत्प्रकृतिकप्रत्ययान्तसमुदायानां साधुत्वं यथा स्यादित्यर्थं पाठश्चरितार्थो न कलादिदोषं निवर्त्तयेदित्येव भाष्यार्थः । पाठश्चैव विशेष्यत इत्यग्रिमभाष्यस्वरसादित्याहुः । निदर्शनार्थत्वादिति । तत्रावर्णस्य अ अ इति कृतव तद्वत्तदन्तरमन्येषामपि करिष्यामीति भावः । एतेनावर्णप्रतिपत्तेः कृतत्वाद्वक्ष्यामीत्यनुपपन्नमिति परास्तम् । भाष्ये ( सा तर्हि वक्तव्येति ) । तथा च प्रत्यापत्त्यर्थैत्यर्थः । नाकृतिनिर्देशप्रयुक्तदोषपरिहारमात्रप्रयोजना प्रत्यापत्तिः किं तु सर्वानुबन्धेत्संज्ञाशास्त्राद्यकरणफलिकापीति न गौरवमिति भावः । तदेव विवृणोति तत्तर्हीत्यादिना । धात्वादिगतकलादिलिङ्गमित्यर्थः । अथ वैतर्हीत्यस्य तथापीत्यर्थः । अनेकमनुबन्धशतमिति । एकैकस्यानुबन्धस्य शतश उच्चारणं तादृशाश्चानेक उच्चारणीया इत्यर्थः । यथेति । एधत्यादयोऽनुदात्तङितः कलदोषयुक्ताः पाठ्याः । स्वरितञितश्च ध्माताः । तत्र कलादात्मनेपदं, ध्मातात्कर्तृगामिनि क्रियाफले इति सूत्रे कार्ये एवं टकितौ कलध्मातौ पठित्वाद्यन्तौ कलध्मातावीति पाठ्यमेवं ड्वितोऽर्द्धकदोषयुक्तान्पठित्वा अर्द्धकात् क्त्रिरिति ट्वितश्च ग्रस्तान् पठित्वा ग्रस्तादथुजित्यादि बोध्यम् ॥ एते कलादयः प्रक्रियादशायामेव । प्रयोगे तु शुद्धा एव शास्त्रान्ते प्रत्यापत्तिकरणात् । आदिः कलैः सहेति पाठः ॥ भाष्ये [ अपाणिनीयमिति ] वर्णसमाम्नायसमर्थनाय प्रवृत्तस्य एकदोषपरिहाराय सकलशास्त्रस्य व्याख्यानसापेक्षगुरुप्रकारेणान्यथाकरणे वृश्चिकभियेत्यादिन्याय आपततीति भावः ॥ नन्वपठितेषु दोषनिवृत्तिर्न कृता स्यादत आह । यथा भूता इति । गर्गाद्यकारादिषु एकरूपेण पठितेषु तज्जातीया एव ते सर्वत्र साधव इत्यनुज्ञातुं शक्यत इति भावः । भाष्ये [ पाठश्चैवेति ] विशेष्यते तत्तत्प्रत्ययवैशिष्ट्येन बोध्यते इत्यर्थः । ( द्विष्ठानीत्यस्य ) द्वयोरर्थयोस्तिष्ठ-

प्रत्याहाराधिकरणम्

रश्च प्रीणिता इति। तथा वाक्यानि द्विष्ठानि भवन्ति। श्वेतो धावति अलम्बुसानां यातेति। अथ वा इदं तावदयं प्रष्टव्यः। क्वेमे संवृतादयः श्रूयेरन्निति। आगमेषु। आगमाः शुद्धाः पठ्यन्ते। विकारेषु तर्हि विकाराः शुद्धाः पठ्यन्ते। प्रत्ययेषु तर्हि। प्रत्ययाः शुद्धाः पठ्यन्ते। धातुषु तर्हि। धातवोऽपि शुद्धाः पठ्यन्ते। प्रातिपदिकेषु तर्हि। प्रातिपदिकान्यपि शुद्धानि पठ्यन्ते। यानि तर्हि ग्रहणानि प्रातिपदिकानि। एतेषामपि स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः कर्त्तव्यः शशः षष इति मा भूत् पलाशः पलाष इति मा भूत् मञ्चको मञ्जक इति मा भूत्। आगमाश्च विकाराश्च प्रत्ययाः सह धातुभिः। उच्चार्यन्ते ततस्तेषु नेमे प्राप्ताः कलादयः॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
प्रथमस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम्।

अइउण्॥ १॥ अकारस्य विवृतोपदेश आकारग्रहणार्थः *। अकारस्य विवृतोपदेशः कर्तव्यः। किं प्रयोजनम्। आकारग्रहणार्थः। अकारः सवर्णग्रहणेन आकारमपि यथा गृण्हीयात्। किं च कारणं न गृण्हीयात्। विवारभेदात्।

---

योजनद्वयसम्पादका इत्यर्थः। तथा वाक्यान्यपीति। शब्दस्याऽप्यर्थवद् द्विगतत्वमित्यर्थः। अथ वेति। केवलानां वर्णानां लोके प्रयोगाभावाद्धात्वादीनां च शुद्धानां पाठात् तत्स्थत्वाच्च वर्णानां न कश्चिद्दोषः। यानि तर्हीति। डित्थादीनाम्। एतेषामपीति। शिष्टप्रयुक्तत्वेनोणादीनां पृषोदरादीनां च साधुत्वाभ्यनुज्ञानात्सर्वेषामत्र सङ्ग्रहः सिद्धः इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे प्रथममाह्निकम्॥ १॥

अइउण्॥ सर्ववर्णानविशेषेण विचार्य विशेषेणात्र विचारः क्रियते। अकारस्येति। अत्राकारादीनां स्वरूपेणानुकार्येण वा सतोऽप्यर्थवत्त्वस्याविवक्षितत्वाद्विभक्त्यनुत्पत्तिः। स्वरसन्धिस्तु न प्रवर्तते। वर्णोपदेशकाले ऽजादिसंज्ञानामनिष्पादादत्राकारस्य संवृ-

---

त्तीत्यर्थ इत्याह। शब्दस्यापीति। तत्र कः कीदृशो धावतीति प्रश्ने श्वेत इति उत्तरं श्वा इत इति च्छेदेन क इत्यस्योत्तरं, श्वेत इति च्छेदेन कीदृश इत्यस्योत्तरमिदम्। एवं केषां जनपदानां गन्ता को वा समर्थ इति प्रश्ने उत्तरम्। अलमित्यादि। अलंबुसा देशविशेषाः। बुसानां पलालवर्णानां याता प्रापिमान् अलं समर्थ इति चार्थः। यातेति क्वचित्पाठः। या रक्षणे इत्यस्य रूपम्। केवलानामिति। एवञ्च कलादिदोषाणां न कुत्रापि प्रसक्तिरिति भावः। भाष्ये [यानि तर्ह्यग्रहणानीति]। कार्यविधायकतानुवादानीत्यर्थः। उपदेश इति। ङ्याप्प्रातिपदिकादित्यादावनुवादरूपेण ग्रहणमित्यर्थः। एतेनादेशश्च प्रातिपदिकानां नोपदेश इत्यादेरेव इति सूत्रस्य भाष्यविरोध इत्यपास्तम्। नन्वेवमतिप्रसङ्गः स्यादत आह। शिष्टेति। एवं संवृतादीनां प्रतिषेध इत्यस्मिन् प्रत्याख्याते इष्टबुद्ध्यर्थ इत्यपि प्रत्याख्यातप्रायमेवेत्यलम्॥ इति शिवभट्टसुतसतीगर्भसम्भवनागोजीभट्टेन कृते भाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमं आद्यमाह्निकम्॥

ननु चतुर्दशसूत्र्याः प्रयोजनमुक्तमेव तत्किं पुनरत्र यद्ग्रहणेनेत्याशङ्क्याह। सर्वेति। विशेषेण तत्तद्रूपेण। प्रत्येकं वर्णेभ्यो विभक्तिमाशङ्क्याह स्वरूपेणेति। शब्दजन्यज्ञानविषयो हि शब्दस्यार्थः। एवञ्च स्वरूपमपि स्वजन्यबोधविषयत्वेनार्थः। अनुकार्यमर्थ इति तु स्पष्टमेव। एवं विद्यमानस्याप्यर्थवत्त्वस्याविवक्षितत्वादर्थवत्सूत्रे ऽग्रहणादित्यर्थः। स्वरूपस्य श्रोत्रगृहीतस्यैव शाब्दे भानोपपत्तौ न तत्र शक्तिः कल्प्या। अनुकार्यञ्च सादृश्येनोपस्थापयतीति न तत्रापि वृत्तिः वृत्त्यार्थबोधकत्वञ्चार्थवत्त्वमर्थवत्सूत्रे निविष्टमिति भावः।

किमुच्यते विवारभेदादिति न पुनः कालभेदादपि, यथैव ह्ययं विवारभिन्न एवं कालभिन्नोपि । सत्यमेवमेतत् । वक्ष्यति तुल्यास्यप्रयत्नं सवर्णमित्यत्रास्यग्रहणस्य प्रयोजनम् । आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्तीति । बाह्यश्च पुनरास्यात्कालः । तेन स्यादेव कालभिन्नस्य ग्रहणं न पुनर्विवार-

---

तत्वाद्दीर्घप्लुतयोर्विवृतत्वात्प्रयत्नभेदात्सवर्णसंज्ञाया अप्रसङ्गात्प्रदेशेष्वकारेण दीर्घप्लुतयोर्ग्रहणं न प्राप्नोति विवृतत्वमस्योपदिश्यते । विवृतस्य गुणस्योपदेशो विवृतोपदेशः । तत्र गुणस्य नित्यसापेक्षत्वादकारापेक्षत्वेपि समासः । यथा देवदत्तस्य गुरुकुलमिति । आकारग्रहणार्थ इति । विवृतोपदेशे आकारग्रहणार्थ इति सामानाधिकरण्येन निर्देशादाकारग्रहणं विवृतोपदेशस्य प्रयोजनमिति सामर्थ्यादवगमाच्चोद्यानुरूपमुत्तरं न भवतीति न चोदनीयम् । सवर्णग्रहणेनेति । येन शास्त्रेणाणुदित्सवर्णस्येत्यनेन सवर्णा गृह्यन्ते तेन करणेनेत्यर्थः । किं च कारणमिति । आकृतिपक्षाश्रयेण ग्रहणकशास्त्रस्य प्रत्याख्यानादाकारस्याप्यत्वजातिसद्भावात् सिद्धं ग्रहणमिति भावः । अत्र च निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति प्रथमा कृता तेन कस्मात्कारणादित्यर्थं सम्पद्यते । विवारभेदादित्यत्र तु कारणशब्दप्रयोगाभावात्प्रायग्रहणादसर्वनाम्नो वा प्रथमाद्वितीययोरभावाद् विभाषा गुणे स्त्रियामिति पञ्चमी विहिता । विवारयति विकासयति आस्यमिति विवारः प्रयत्नः । व्यक्तिपक्षे ग्रहणकशास्त्रारम्भाद्दोषापत्तिः । व्यक्तिपक्षे भेदान्तरसद्भावादाह किमुच्यत इति । बाह्यश्चेति । प्रयत्नाभिनिर्वृत्तत्वात्कालस्य प्रयत्नत्वमभ्युपगम्य बाह्यत्वेन परिहारः । प्रसिद्धपरिमाणत्वकवन्तरगतपरिच्छेदकक्रियान्तरापेक्षणात्कालव्यवहारस्य बाह्यत्वं कालस्य, यथा व्रीहेः प्रस्थादिव्यवहारः

---

अनुकरणत्वभङ्गान्न विभक्तिरिति तत्त्वम् । सौत्रत्वाद्वा । कारप्रत्ययोपि बाहुलकान्न । स्वरसन्धिस्त्विति । सौत्रत्वात्संहिताया अविवक्षणाद्वेति भावः । अजादिसंज्ञानामनिष्पादादिति तु चिन्त्यं वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्त्तमानानां यणादीनां सुध्युपास्य इत्यादौ तटस्थ इवोद्देश्यतावच्छेदकाक्रान्ते वर्णोपदेशादावपि प्रवृत्तेर्दुर्वारत्वात् । अन्यथा तुल्यास्यप्रयत्नमित्यादौ सवर्णदीर्घादि न स्यात् । अत्र । तत्रेति पाठेप्ययमेवार्थः । वाक्यापरिसमाप्तिन्यायेनेह ग्रहणकशास्त्रप्रवृत्तेः सावर्ण्येऽपि नात्र तद्ग्रहणमिति व्यर्थो विवृतोपदेशोत आह । प्रदेशेष्विति । अकः सवर्णइत्यादौ । तत्राप्यकारः संवृत एवेति भावः । ननु विवृतपदस्य गुणिपरत्वे सविशेषणत्वात्समासो न स्यादत आह । विवृतस्य गुणस्येति । भाष्ये [कर्त्तव्य इति] अस्य प्रतिज्ञेय इत्यर्थः । एतेन तस्योच्चारयितुमशक्यत्वमित्यपास्तम् । भाष्ये [ किं प्रयोजनम् ] इत्यत्र उद्दिश्यतेत्यध्याहारः कर्त्तव्य इत्यनुषङ्गः ॥ नन्वाकारग्रहणं सवर्णग्रहणमेवेति भेदाभावात्कथन्तस्य करणत्वमत आह येन शास्त्रेणेति ॥ नन्वाकृतिभेदात् कथं तत्पक्षेप्यकारेणाकारग्रहणमत आह आकारस्यापीति । केवलकण्ठ्यत्वे सति स्वरत्वमत्वजातिव्यञ्जकमिति दीर्घप्लुतयोरपि सेति भावः । प्रातिपदिकार्थमात्रे प्रथमायां यथाश्रुतेन्वयो न जायतेऽत आह अत्र चेति । उत्तरेपि तर्हि प्रथमा कुतो नेत्यत आह प्रयोगाभावादिति । निमित्तादिशब्दप्रयोगाभावेपि तदर्थे गम्यमाने स्यादेव विभक्तिरत आह प्रायग्रहणादिति । विभाषा गुण इति । निमित्तेत्यादिवार्त्तिके सर्वासामित्येतन्न पञ्चमीतृतीयाविधायकं किन्तु हेताविति विभाषागुणेति सिद्धयोस्तयोरन्याभिरबाधायानुवादकमेवेति भावः । विवारयतीति । स चाभ्यन्तरप्रयत्नः । दोषापत्तिरिति । दण्डाढकमित्यादौ दीर्घानापत्तिर्दोष इत्यर्थः । ननु प्रयत्नभेदेपि जातिसद्भावात्स्यादेव ग्रहणमत उक्तं व्यक्तिपक्ष इति । ननु कालस्य व्यापकत्वाद् बाह्यत्वेन समाधानमयुक्तम् । किं च कालो न प्रयत्न इति तद्भेदे कथं सवर्णत्वाप्राप्तिरत आह । प्रयत्नानीति । बाह्यत्वं व्युत्पादयति प्रसिद्धेति । प्रसिद्धपरिमाणं यद्वस्त्वन्त-

भिन्नस्य । किं पुनरिदं विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते । अहोस्विद् संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्यते । विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते । कथं ज्ञायते । यदयं अ अ इत्यकारस्य विवृतस्य संवृतताप्रत्यापत्तिं शास्ति । नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनं, किम् ? अतिखट्वः । अतिमाल इत्यत्रान्तर्यतो विवृतस्य विवृतः प्राप्नोति संवृतः स्यादित्येवमर्था प्रत्यापत्तिः । नैतदस्ति । नैव लोके न च वेदे अकारो विवृतोऽस्ति । कस्तर्हि संवृतः, योऽस्ति स भविष्यति । तदेतत्प्रत्यापत्तिवचनं ज्ञापकमेव भविष्यति विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायत इति । कः पुनरत्र विशेषः । विवृत-

---

परिमाणद्रव्यकृत एवमत्रापि मात्रादिव्यपदेशो निमेषादिक्रियाभेदकृतः । अथ वा नाभिप्रदेशएव विशिष्टप्रयत्नारम्भाद्दीर्घादिनिष्पत्त्या नाभेश्चास्याद्बाह्यत्वात्कालस्य बाह्यत्वम् । विवृतत्वादीनां चास्यवर्तिप्रयत्ननिष्पाद्यत्वादाभ्यन्तरत्वम् । द्रुतादिवृत्तयस्तु यथा न भेदिकास्तथा तपरसूत्रे वक्ष्यते । किं पुनरिति । किं सूत्रकारेणैव विवृतोपदेशः कृतो वार्तिककारेण तु तस्य प्रयोजनमुक्तम् । अथाकृत एव विवृतोपदेशो वार्तिककृता चोद्यत्वेनोपन्यस्त इति प्रश्नः । दुरवधारत्वादुपदिष्टोऽपि विवृतो व्याख्यानेन विना न शक्यते ज्ञातुमिति प्रत्यक्षेऽप्यकारे प्रश्नोऽयं नासमञ्जसः । तत्र प्रत्यापत्त्या पूर्वः पक्ष आश्रितः । अन्यथा शास्त्रान्ते प्रत्यापत्तिवचनमनर्थकं स्यात् । स्वरूपप्रत्ययाभावात् । अस्ति ह्यन्यदिति । प्रयोगएव प्राप्ते विवृतत्वे संवृतत्वप्रत्यापत्तिः स्यादित्यज्ञापकमेतादित्यर्थः । नन्विहासति विवृतोपदेशे सावर्ण्याभावादकारेणाकारस्याग्रहणादच्त्वाभावात्कथमतिखट्व इति ह्रस्वः । नैष दोषः । उदीचामातः स्थाने इति ज्ञापकाद्भवत्याकारस्य ह्रस्वः । नैव लोक इति । प्रयुक्तानामनुशासनात् प्रयोगे च विवृतस्याकारस्यासंभवात्संवृत एव भविष्यतीति प्रत्यापत्तिर्ज्ञापिकैव । कः पुनरिति । विवृतोपदेशे इत्यत्र कृत इति वा कर्त-

---

र्गतं परिच्छेदकक्रियान्तरं परिच्छेद्यक्रियापेक्षयान्यत्तदपेक्षणादित्यर्थः । एवञ्च बाह्यापरिच्छेदकापेक्षया क्रिया बाह्यत्वोक्तिरिति भावः । क्रियैव कालो नातिरिक्त इति मते इदम् । अतिरिक्तः क्षणसमूहः काल इति मते परिहरति अथ वेति । अयं भावः । नाभिप्रदेशावच्छिन्नयत्नेन प्रेरितो वायुस्तत्तत्स्थानाभिघातोत्तरं वर्णाभिव्यञ्जक इति शिक्षादौ स्पष्टम् । वायोरल्पत्वाधिक्यानि च ह्रस्वत्वदीर्घत्वादिरूपकालव्यञ्जकानीति । ननु ह्रस्वदीर्घयोः कालभेदादतोऽभिस इत्यादौ दीर्घग्रहणाधनविलम्बितवृत्त्योच्चारितस्य ह्रस्वाकारस्यापि द्रुतमध्यापेक्षया कालाधिक्याद्भिस्भावविधायकं ग्रहणानापत्तिरत आह द्रुतादीति । उपदिश्यमानस्येत्यत्र वार्त्तिककृतः कर्तृत्वे पक्षयोर्भेदो न स्यादत आह किं सूत्रकारेणेति । सूत्रकारो महेश्वरो वेदपुरुषो वा "येनाक्षरसमाम्नायमि"त्याद्यैतिह्यादित्याहुः । ननु प्रत्यक्षतोऽकारे श्रुते तद्गतगुणस्यापि ज्ञातत्वात्प्रश्नो ऽयमसङ्गतोऽत आह दुरवधारत्वादिति । विवृतत्वादीनां श्रोत्रेन्द्रियग्राह्यत्वाभावादिति भावः । अन्यथा संवृतत्वे । स्वरूपप्रत्यये हि पुनः संवृतविधानं युक्तं स्यादिति भावः । प्रयोगे एवेति । अतिखट्व इत्यादिप्रयोगे ह्रस्वेनानन्तरतम्याद्विवृतोऽकारः प्राप्तः संवृत एव भवत्वित्ययं प्रत्यापत्तिवचनमिति भावः । नन्विति । अचश्चेत्युक्तेरच एव ह्रस्वत्वेन भाव्यमिति भावः । गोस्त्रियोरित्यत्रैतद्वारणार्थमेवोपस्थितिः स्यादिति तात्पर्यम् । उदीचामात इति । न चापोऽन्यतरस्यामिति ह्रस्वे चरितार्थमिदम् । न चात्राच् परिभाषोपतिष्ठते । फलाभावादिति वाच्यम् । शास्त्रस्याल्पविषयतापत्तेर्गोशब्दसाहचर्येण स्त्र्यंशेऽप्यचश्चेत्यस्याप्रवृत्तेश्च । तदंशे हि फलाभावान्न प्रवर्त्तते इति दिक् । नन्वाद्यपक्षे प्रयोजनान्वाख्यानमात्रपरत्वं द्वितीये विवृतोपदेशपरत्वमपीति विशेषस्य स्पष्टत्वादत आह विवृतोपदेशइत्यत्रेति । अहोपुरु-

स्योपदिश्यमानस्य प्रयोजनमन्वाख्यायेत । संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्येतेति । न खलु कश्चिद्विशेषः । आहोपुरुषिकामात्रं तु भवानाह संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्यतइति । वयं तु ब्रूमो विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायतइति । तस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थः ॥ । तस्यैतस्याक्षरसमाम्नायिकस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः कर्तव्यः । क्वान्यत्र । धातुप्रातिपदिकप्रत्ययनिपातस्थस्य । किं प्रयोजनं, सवर्णग्रहणार्थः । आक्षरसमाम्नायिकेनास्य ग्रहणं यथा स्यात् । किञ्च कारणं न स्यात् । विवारभेदादेव । आचार्यप्रवृत्तिर्ज्ञापयति भवत्याक्षरसमाम्नायिकेन धात्वादिस्थस्य ग्रहणमिति । यदयमकः सवर्णे दीर्घ इति प्रत्याहारे अको ग्रहणं करोति । कथं कृत्वा ज्ञापकम् । न हि द्वयोराक्षरसमाम्नायिकयोर्युगपत्समवस्थानमस्ति । नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनं, किं, यस्याक्षरसमाम्नायिकेन ग्रहणमस्ति तदर्थमेतत्स्यात् । खट्वाढकं मालाढकमिति । सति प्रयोजने न ज्ञापकं भवति । तस्माद्विवृतोपदेशः कर्तव्यः । क एष यत्नश्चोद्यते विवृतोपदेशो नाम । विवृतो

---

व्य इति वाक्यशेषाध्याहारे न कश्चिद्विशेष इत्यर्थः । आहोपुरुषिकेति । अहो अहं पुरुष इत्यहङ्कारवानहोपुरुषस्तस्य भाव इति मनोज्ञादित्वाद्वुञ् । अहंकारवत्त्वमित्यर्थः । तस्येति । यदा प्रत्याहारे विवृतो ऽकार उपदिष्टस्तदा प्रयत्नभेदात्तेन संवृतस्याकारस्य ग्रहणाभावादच्कार्यं न स्यादिति तत्सिद्धये सर्वसर्वस्याकारस्य विवृतत्वं कर्तव्यमित्यर्थः । तेन शाम्यतीत्यादौ दीर्घादि सिध्यति । ननु च सर्वेषामकाराणां यत्सामान्यं तदनुकरणमत्राकार । तस्य च विवृतत्वे प्रतिज्ञायमाने सर्वेषां तत्प्रतिज्ञातं भवतीति किमुच्यते तस्य विवृतोपदेशादिति । एवं तर्हि यदा कस्यचिदेवाकारस्येदमनुकरणं स्वरूपपदार्थको वाकारस्तदेदमुच्यते इत्यदोषः । यदयमिति । अत्र हि ककारेण चिह्नेन प्रत्याहारस्थो विवृतो निर्दिष्टः । तेन च संवृतस्याग्रहणे इकः सवर्णइति वक्तव्यम् । नहि द्वयोरिति । यद्यप्येकोपि विवृतो नास्ति तथापि द्व्यधिष्ठानत्वादेकादेशस्य द्वयोरित्युक्तम् । नैतदिति । अक इत्यकारेण विवृतेन दीर्घस्य विवृतस्य ग्रहणादज्ञापकमेतदित्यर्थः । क एष

---

षिकेत्यत्र वुञः प्राग् मयूरव्यंसकादित्वात्समासः । अहो इति । अहमित्यर्थे । तत्र प्रयोजनान्वाख्यानमित्येव न्यायः । प्रत्यापत्तेः । अकर्तृके आज्ञापालनाभावाच्चेत्याहुः । प्रत्यापत्त्या अइउणित्यत्रैव प्रक्रियादशायां सर्वत्राकारो विवृतः प्रतिज्ञात इत्यजानन् शङ्कते । भाष्ये ( तस्य विवृतोपदेशादिति ) । तस्येत्यस्य वर्णसमाम्नायस्थस्येत्यर्थः । संवृतस्येति । धात्वादिस्थस्येत्यर्थः । ननु अइउणित्यादौ कस्यानुकरणमित्यत्र विनिगमकाभावादाह स्वरूपपरेति । स्वरूपपदार्थकत्वं यथा तथोक्तम् । भाष्ये ( विवारभेदादिति ) प्रयत्नभेदादित्यर्थः । ग्राहकस्य विवृतत्वाद् ग्राह्यस्य संवृतत्वादिति भावः । प्रत्याहारेइति । संग्राहके शास्त्र इत्यर्थः । वक्तव्यमिति । एवञ्च प्रयत्नभेदेनासवर्णस्यापि भत्वजात्याक्रान्तस्य विवृतेनाकारेण ग्रहणं ज्ञाप्यत इत्यर्थः । यद्यप्येकोपीति । प्रत्युच्चारणं वर्णान्यत्वादाक्षरसमाम्नायिकस्य प्रयोगे ऽभावादिति भावः । आदिरन्त्येनेत्यस्य चान्त्यसदृशेन सहोच्चार्यमाण आदिसदृश इत्याद्यर्थः । तत्र ककारादिचिन्हेनागादिशब्दस्थस्तत्सदृशत्वाद्विवृत एव । सादृश्यञ्च व्यक्तिभेदे सति सर्वधर्मसाम्यप्रयुक्तं ग्राह्यन्तस्य च प्रयोगस्थले ऽभावेप्यनेन तद्ग्रहणं ज्ञाप्यतइति तात्पर्यम् । केचित्तु देवदत्त अजस्तीत्यादौ प्रत्याहारलिङ्गेनैकआक्षरसमाम्नायिकोस्ति तदर्थं भाष्ये द्वयोरित्युक्तमित्याहुः । भाष्ये ( युगपत्समवस्थानमिति ) । अस्य" प्रयोगेइत्यादिः ।

वोपदिश्येत संवृतो वा को न्वत्र विशेषः। स एष सर्व एवमर्थो यत्नः क्रियते। यान्येतानि प्रातिपदिकान्यग्रहणानि तेषामेतेनाभ्युपायेनोपदेशश्चोद्यते तद् गुरु भवति। तस्माद्वक्तव्यं धात्वादिस्थश्च विवृत इति। दीर्घप्लुतवचने च संवृतनिवृत्त्यर्थः * दीर्घप्लुतवचने च संवृतनिवृत्त्यर्थो विवृतोपदेशः कर्त्तव्यः। दीर्घप्लुतौ संवृतौ मा भूतामिति। वृक्षाभ्यां देवदत्ता ३ इति। नैव लोके न च वेदे दीर्घप्लुतौ संवृतौ स्तः। कौ तर्हि। विवृतौ। यौ स्तस्तौ भविष्यतः। स्थानी प्रकल्पयेदेतावनुस्वारो यथा यणम् *। संवृतः स्थानी संवृतौ दीर्घप्लुतौ प्रकल्पयेत्। अनुस्वारो यथा यणम्। तद्यथा। सय्यँन्ता सव्वँत्सरः यल्लँोकं तल्लँोकमिति। अनुस्वारस्थानी यणमनुनासिकं प्रकल्पयति। विषम उपन्यासः। युक्तं यत्सतस्तत्र प्रक्लृप्तिर्भवति। सन्ति हि यणः सानुनासिका निरनुनासिकाश्च। दीर्घप्लुतौ पुनर्नैव लोके न च वेदे संवृतौ स्तः। कौ तर्हि विवृतौ यौ स्तस्तौ भविष्यतः। एवमपि कुत एतत्तुल्यस्थानौ प्रयत्नभिन्नौ भविष्यतः। न पुनस्तुल्यप्रयत्नौ स्थानभिन्नौ स्यातामीकार ऊकारो वेति। वक्ष्यति स्थानेन्तरतम इत्यत्र स्थानइत्यनुवर्त्तमाने पुनः स्थानेग्रहणस्य प्रयोजनं यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयो भवतीति। तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमणत्वात् *। तत्रानुवृत्तिनिर्देशे सवर्णानां ग्रहणं

---

यत्न इति। धात्वादयः पठितास्तत्राकारो विवृतः पठ्यतां न हि किंचिद् गौरवं भवति तत्किमुच्यते ऽन्यत्रापि विवृतोपदेशः कर्तव्य इति प्रश्नः। यानीति। प्रतिपदपाठस्याशक्यत्वात्तस्य विवृतोपदेशादित्यनेन सर्वस्याकारस्य विवृतोपदेशः कार्यतया चोद्यतइत्यर्थः। धात्वादिस्थ इति। अग्रहणप्रातिपादिकार्थे विवृतत्वेऽवश्यचोदनीये धात्वादिस्थस्यापि संवृतस्यैव पठितस्य कार्यार्थं विवृतत्वं प्रतिज्ञेयम्। अन्यथा दोषरूपाविवृतोच्चारणप्रयत्नस्य गौरवं स्यात्। विवृतत्वप्रतिज्ञाने प्रयोजनान्तरमाह दीर्घेति। असति विवृतत्वप्रतिज्ञाने संवृतस्याकारस्य स्थाने सावर्ण्यात्संवृतयोरेव दीर्घप्लुतयोः प्रसङ्ग इत्यर्थः। नैव लोकइति। असत्यपि सावर्ण्येऽर्थे लिङ्गादकारस्य संवृतस्य विवृतौ दीर्घप्लुतौ भविष्यतः। यदयमतो दीर्घो यञि, अतोरोरप्लुतादप्लुतइत्याहेति भावः। सतस्तत्रेति। अशक्यत्वाद्दीर्घप्लुतयोः संवृतयोरुच्चारणस्येत्यर्थः। एवमपीति। असति विवृतत्वप्रतिज्ञाने संवृतस्याकारस्य संवृतावेव इकारोकारौ प्राप्नुतः। प्रवृतः संवृता अन्यत्राभवसाम्न इति

एवमर्थ इति। वृत्तावेवंशब्दः प्रकारवति वर्त्तते इति बहुव्रीहिः। प्रातिपदिकानीति। धातुप्रत्यययोरप्युपलक्षणं बोध्यम्। सर्वाण्यग्रहणानि प्रातिपदिकादीनि विवृताकारयुक्तानि पठनीयानीत्यर्थः। तद्गुरु भवति तस्मादिति। यतः सर्वोच्चारणं गुरु अतो धात्वादिस्थ इति वाच्यमित्यर्थः। ननु धातूनां बहुधा पाठाद् धात्वादीति अयुक्तमत आह अग्रहणेति। प्रातिपदिकेत्युपलक्षणम्। धात्वादिस्थस्यापीति। पठितधात्वादिस्थस्यापीत्यर्थः। एतेनाग्रहणधात्वादीत्येव वक्तुमुचितमित्यपास्तम्। संवृतस्यैवेति। एवञ्च धात्वादिस्थश्च विवृतवत् कार्यं लभत इत्यतिदेशार्थमिति भावः। अन्यथेति। गुणोच्चारणाद्दोषोच्चारणे यत्नाधिक्यमिति भावः। ननु संवृतयोरनयोरभावेऽपि संवृतस्य निवृत्तौ न स्यातामेव। आन्तरतम्याभावात्। न चेको यणिव एच इगिवानन्तरतमावपि भविष्यतः। सामर्थ्येन तत्र तथाङ्गीकारेऽपि खट्वाढकमित्यादौ चरितार्थस्याकः सवर्ण इत्यादेर्विषये तथा कल्पने मानाभावादत आह असत्यपीति। सावर्ण्ये इति। आन्तरतम्ये इत्यर्थः। एवञ्चातो दीर्घ

न प्राप्नोति। अस्य च्वौ, यस्येति च। किं कारणम्। अनणुत्वात्। न ह्येते ऽणः येनुवृत्तौ। किं तर्हि। ये ऽक्षरसमाम्नाये उपदिश्यन्ते। एकत्वादकारस्य सिद्धम् *। एकोयमकारो यश्चाक्षरसमाम्नाये यश्चानुवृत्तौ यश्च धात्वादिस्थः। अनुबन्धसंकरस्तु *। अनुबन्धसङ्करस्तु प्राप्नोति कर्मण्यण्, आतोनुपसर्गे क इति। केपि णित्कृतं प्राप्नोति। एकाजनेकाज्ग्रहणेषु चानुपपत्तिः *। एकाजनेकाज्ग्रहणेषु चानुपपत्तिर्भवति। तत्र को दोषः। किरिणा गिरिणेत्येकाज्लक्षणमन्तोदात्तत्वं प्राप्नोति। इह च घटेन तरति घटिक इति द्व्यज्लक्षणः ष्ठन् न प्राप्नोति। द्रव्यवच्चोपचराः *। द्रव्यवच्चोपचाराः प्राप्नुवन्ति। तद्यथा। द्रव्येषु नैकेन घटेनानेको युगपत्कार्यं करोति। एवमिममकारं नानेको युगपदुच्चारयेत्। विषयेण तु नानालिङ्गकरणात्सिद्धम् *। यदयं विषये विषये नानालिङ्गमकारं करोति। कर्मण्यण्, आतोनुपसर्गे क इति। तेन ज्ञायते नानुबन्धसङ्करोस्तीति। यदि हि स्यात्, नानालिङ्गकरणमनर्थकं स्यात्। एकमेवायं सर्वगुणमुच्चा-

---

कैश्चिदीकारोकारयोः संवृतत्वस्याभ्युपगमात्। तत्रानुवृत्तिनिर्देशइति अकः सवर्णे दीर्घ इत्यादावयमेवाकारोनुकृत इति ककारादिना चिन्हेन ज्ञायते ततश्चाणुत्वात्तस्य ग्राहकत्वमस्तु। अस्य च्वावित्यादौ त्वकारस्यानणुत्वादू ग्राहकत्वं न प्राप्नोतीत्यर्थः। वृत्तिः शास्त्रस्य लक्ष्ये प्रवृत्तिः। तदनुगतो निर्देशोनुवृत्तिनिर्देशः। एकत्वाकारस्येति। एकैवाकारव्यक्तिः। उदात्तादिभेदप्रतिभासस्तु व्यञ्जकध्वनिकृत। खड्गतैलादर्शादिभेदे प्रतिबिम्बप्रतिभासभेदवत्। अकारस्य निदर्शनार्थत्वादिकारादीनामप्यैक्यं बोद्धव्यम्। अनुबन्धसङ्कर इति। एकत्वे कण्टगादीनां भेदाभावादू गोदादौ ङीबादिः प्राप्नोति। किरिणेति। नगोश्वनूंस्सावर्णेति। प्रतिषेधादकारो नोदाहृतः। घटेनेति। एक एवाकारो द्विरुच्चार्यतइति द्व्यच्त्वाभावः। ठंस्तु बाह्वादिषु कृतार्थः। द्रव्यवदिति। उपचारो व्यवहारः यथैकेन घटेनोदकाहरणादिक्रियां युगपदनेको न करोति तथैवैकमकारं युगपदनेको नोच्चारयेदित्यर्थः। विषयेणेति। वार्त्तिकका-

---

इति। अतो रोरिथत्राप्लुतादित्यतो विशेषणञ्च सामान्यापेक्षं ज्ञापकमिति भावः। संवृतदीर्घादिवदनुनासिकयवलानामपि वेदलोकयोरसत्त्वं मन्यमान आह। भाष्ये (स्थानी प्रकल्पयादित्यादि)। तद्वद् निवृतौ दीर्घप्लुतावपि कुतो न सन्तावित्यत आह आशक्यत्वादिति। केचित्तु शिष्टसंमतत्वात्त सन्तः। इमौ तु न तथेति भाव इत्याहुः। सन्ति हि यण इति। भाष्ये यण इति बाहुल्याभिप्रायेण रेफस्यानुनासिकत्वाभावादिति बोध्यम्। नन्वीकारोकारयोः कथं संवृतत्वमत आह। यवृतः। संवृताइति ईऊऋत इत्यर्थः। क्वचित्तु एवत इति पाठः। इकारोकारा इत्यर्थः। एवञ्चाद्यप्रयोजनार्थमेव सर्वत्राकारस्य विवृतत्वं प्रतिज्ञेयमिति स्थित शङ्कते। भाष्ये (तत्रानुवृत्तीति)। एतद्विशेषणोपादानस्य फलमाह अकः सवर्ण इति। अनणुत्वादिति। अक्षरसमाम्नाये ऽपठितत्वादाकारस्यैवानणुत्वमित्यर्थः। प्रत्युच्चारणं वर्णभेदेपि अक इत्यादौ ककारेण चिह्नेनैतदनुकरणत्वानुमानमिति भावः। तदनुगत इति। साक्षाल्लक्ष्यसंस्कारकबोधजनक इत्यर्थः। नन्वात्ताविविरुद्धधर्माध्यासाद्भेदः स्यादत आह उदात्तादीति। प्रतिबिम्बप्रतिभासभेदवदिति। भिन्नभिन्नाकारप्रतिबिम्बप्रतिभासवदित्यर्थः। इकारादीनपीति। सर्वध्वनिभिरेकस्य स्फोटस्यैव तत्तद्रूपेणाभिव्यञ्जनात्। तत्तद्रूपाभिव्यक्तिकृतश्च परस्परभेदव्यवहारोपीति भावः। भाष्ये (अनुबन्धसंकर इति)। अस्यानुबन्धकार्यसंकर इत्यर्थः। ङीबादीति। टिड्ढेत्यादिना। आदिना णित्वप्रयुक्तयुक्पर्यायेण कित्वाणित्वप्रयुक्तकार्ययोरप्यवि

रयेव । नैतदस्ति ज्ञापकम् । इत्संज्ञाप्रक्लृप्त्यर्थमेतत्स्यात् । न ह्ययमनुबन्धैः शल्यकवच्छक्य उपचेतुम् । इत्संज्ञायां हि दोषः स्यात् । आयस्य हि द्वयोरित्संज्ञा स्यात् । कयोः । आद्यन्तयोः । एवं तर्हि—विषयेण तु पुनर्लिङ्गकरणात्सिद्धम् ॥ । यदयं विषये विषये पुनर्लिङ्गमकारं करोति प्राग्दीव्यतोऽण्, शिवादिभ्योऽणिति । तेन ज्ञायते नानुबन्धसङ्करोऽस्तीति । यदि हि स्यात्पुनर्लिङ्गकरणमनर्थकं स्यात् । अथवा पुनरस्तु विषयेण तु नानालिङ्गकरणात्सिद्धमित्येव । ननु चोक्तमित्संज्ञाप्रक्लृप्त्यर्थमेतत् स्यादिति । नैष दोषः । लोकत एतत्सिद्धम् । तद्यथा । लोके कश्चिदेवं देवदत्तमाह इह मुण्डो भव, इह जटिलो भव, इह शिखी भवेति, यल्लिङ्गो यत्रोच्यते तल्लिङ्गस्तत्रोपतिष्ठते । एवमयमकारो यल्लिङ्गो यत्रोच्यते तल्लिङ्गस्तत्रोपस्थास्यते । यदप्युच्यते एकाजनेकाज्ग्रहणेषु चानुपपत्तिरिति । एकाजनेकाज्ग्रहणेष्वावृत्तिसंख्यानात् ॥ । एकाजनेकाज्ग्रहणेषु चावृत्तेः संख्यानादने

---

रेण करणत्वेन सामान्यरूपतया चाभेदेन विषयो निर्दिष्टः । भाष्यकारस्त्वधिकरणत्वं व्यक्तिभेदाद्वीप्सां च प्रतिपादयति विषये विषयइति । सर्वगुणमिति । गुणा अनुबन्धाः कार्याश्रितत्वादुपकारकत्वाच्च कर्मणि कणितिब्रूयादित्यर्थः । शल्यकवदिति । शल्यकः प्राणिविशेषः । स यथा कण्टकतुल्यैः पत्त्रैर्व्याप्यते नैवं सर्वानुबन्धयुक्तोऽकारः शक्यो निर्देष्टुम् । आद्यन्तयोरेवेत्संज्ञाविधानान्मध्यपातिनां श्रवणप्रसंगादित्संज्ञैवायच्छते व्याप्रियतइत्येककर्तृकत्वादायस्येत्युक्तम् । एवं तर्हीति । विषयेणेत्येतदन्यथा व्याचष्टे । नानाशब्दमपनीय पुनःशब्दं पठित्वा । यद्यनुबन्धसंकरः स्यात् अकारमेव शिवादिभ्यो विदध्यात् । अथोच्येत णित्कृतमेव यथा स्यात् ञित्कृतं मा भूदिति नियमार्थमेतत्स्यात्, तन्न । नियमाद्विधेर्बलीयस्त्वात् । अथवेति । न ब्रूमः सर्वगुणमुच्चारयेदिति, किं तु यथा लोके इह मुण्डो भव इह नग्नो भवेति यद्गुणको यत्रोच्यते तद्गुणक एव तत्र भवति एवमिहापि याभ्यः प्रकृतिभ्यो यदनुबन्धविशिष्टो विधीयते तासु तदनुबन्धनिमित्तमेव कार्यं सम्पादयति । आवृत्तिसंख्यानादिति । यथा विकृतियागे त्रयोदश सामिधेन्यः प्रथमोत्तमयोस्त्रिरावृत्त्या सप्तदश सम्पद्यन्ते । तथा घटेन तरतीति ह्यज्लक्षणः ष्ठन् भवति । ननु मुख्ये विषये कृतार्थत्वाद्वचनस्य गौणं ह्यच्

---

रोध इति भावः । भाष्ये [ अनुपपत्तिरिति ] । इष्टव्यवस्थाया इति भावः । अव्याप्त्यतिव्याप्त्योः प्रसङ्गादिति तात्पर्यम् । प्रतिषेधादिति । सावकाश इति प्राप्तस्येत्यर्थः । ठंस्त्विति । नौद्व्यचष्ठन्निति विहितः । करणत्वेनेति । अधिकरणस्य करणत्वविवक्षयेत्यर्थः । सामान्यरूपतयेति विषयस्वरूपेणेत्यर्थः । भाष्यकारास्त्विति । एकविषये नानालिङ्गकरणादर्शनाद्विषयभेदेन तदित्यत्र तात्पर्यम् । गुणा उदात्तादय इति भ्रमं व्यावर्त्तयति गुणा अनुबन्धा इति । तेषां गुणत्वमुपपादयति कार्येति । व्याप्रियते । विषयत्वेन गृह्णातीत्यर्थः । एककर्तृकत्वादिति । स्यादित्यनेनेत्संज्ञारूपैककर्तृकत्वादित्यर्थः । नानेति स्थिते कथमन्यथा व्याख्यानमत आह नानाशब्दमिति । नियमार्थमिति । ज्ञापकत्वे हि विध्यर्थत्वमिति भावः । अत्र वाक्यत्रयेऽपि तुशब्दः पूर्वपक्षव्यावृत्त्यौ । यथा लोकेइति । प्रभ्वाज्ञया गूढचारादिरिति शेषः । एवञ्च लोकव्यवहारदृष्टान्तेनैवासंकरः सिद्ध इत्यर्थः । यत्र । देशे काले वा । तद्गुणएवेति । भाष्येऽपि तल्लिङ्गस्तत्रेति सावधारणं व्याख्येयमिति भावः । यथा विकृतियागेइति । तत्र हि प्राप्तसामिधेन्यनुवादेन सप्तदशत्वं विहितं तत्र त्रिः प्रथमामित्यादिवाक्यबोधितया प्रथमोत्तमयोस्त्रिरावृत्त्यैवेति भावः । त्रिरावृत्त्येति । आवृत्तिः पुनरुच्चारणम् । तज्ज-

काच्त्वं भविष्यति। तद्यथा। सप्तदश सामिधेन्यो भवन्तीति, त्रिःप्रथमामन्वाह त्रिरुत्तमामित्यावृत्तितः सप्तदशत्वं भवति, एवमिहाप्यावृत्तितोऽनेकाच्त्वं भविष्यति। भवेदावृत्तितः कार्यं परिहृतम्। इह तु खलु किरिणौ गिरिणौत्येकाज्लक्षणमन्तोदात्तत्वं प्राप्नोत्येव। एतदपि सिद्धं, कथं, लोकतः। तद्यथा। ऋषिसहस्रमेकां कपिलामेकैकशः सहस्रकृत्वो दत्वा तया सर्वे ते सहस्रदक्षिणाः संपन्ना, एवमिहाप्यनेकाच्त्वं भविष्यति। यदप्युच्यते। द्रव्यवच्चोपचाराः प्राप्नुवन्तीति। भवेद्यदसंभवि कार्यं तन्नानेको युगपत्कुर्यात्। यत्तु खलु संभवि कार्यमनेकोपि तद्युगपत्करोति। तद्यथा। घटस्य दर्शनं स्पर्शनं वा, संभवि चेदं कार्यमकारस्योच्चारणं नामानेकोपि तद्युगपत्करिष्यति। आन्यभाव्यं तु कालशब्दव्यवायात् *। आन्यभाव्यं त्वकारस्य। कुतः। कालशब्दव्यवायात्। कालव्यवायाच्छब्दव्यवायाच्च।

---

त्वं कथं कार्यस्य निमित्तम्। उच्यते। गोश्च इत्यत्राश्वशब्दप्रतिषेधाल्लिङ्गादावृत्तिभेदेनापि भेदाश्रयकार्यप्रवृत्तिः। भवेदिति। गिरिणैत्यावावृत्तिभेदेपि मुख्यमेकाच्त्वं न निवर्त्तत इति भावः। एतदपीति। लोके पूर्वा संख्या संख्यान्तरेण मुख्येन गौणेन च बाध्यत इत्यर्थः। ऋषिसहस्रमिति। वित्तेन क्रीत्वा प्रत्येकन्दत्वा सहस्रदक्षिणा ऋषयः संपन्ना इत्यर्थः। ऋषयः सहस्रमृषिसहस्रमिति कर्मधारये संपन्ना इत्यस्य साक्षादृषिभिः संबन्धः षष्ठीसमासे तु सामर्थ्यलक्षणः संबन्धो यथा ब्राह्मणशतं भोज्यतामिति भुजेर्ब्राह्मणैः सह। संभवि चेति। एकस्यैवाकारस्य युगपत् स्थानकरणनिष्पन्नध्वनिव्यङ्ग्यत्वात्सर्वैरुच्चारणं शक्यमित्यर्थः। एवं परिहृतेष्वपि दोषेषु तत्र न्यायेनाकारस्य भेदं साधयति आन्यभाव्यमिति। अन्यस्य भावोन्यभावः ततो ब्राह्मणादिषु स्वार्थे विधानार्थात्पाठात् स्वार्थे ष्यञ्। अथवा अन्यो भावोन्यद्वस्तु तस्य

---

न्यसङ्ख्यया सप्तदशत्ववदत्रानेकाच्त्वमिति भावः। भाष्ये [आवृत्तेः सङ्ख्यानात्]। गणनादित्यर्थः। भवेदावृत्तितः कार्यं परिहृतमिति]। आवृत्त्या कार्यं सिद्धमिति कृत्वा दूषणं परिहृतं भवेदित्यन्वयः। लिङ्गादिति। अनेन लिङ्गेन श्रुतिस्मृतिसिद्धत्वादस्य व्यवहारस्य गौणत्वमेव नेति ज्ञाप्यत इति भावः। मुख्यमिति। आवृत्तिकृतद्व्यच्त्वेन स्वगतैकाच्त्वस्य बाधायोग इति भावः। ननु स्वस्य प्रतिग्रहीतृत्वासंभवादेकन्यूनता. न च पुनर्दानं दत्तस्यान्यस्वत्वाक्रान्ततया पुनर्दानसंभवादत आह वित्तेनेति। ननु षष्ठीसमासे सहस्रसंख्याया विशेष्यत्वात्कथं दानेन सम्बन्धः। कथं वा सपन्ना इति बहुवचनान्तेन सामानाधिकरण्यमत आह ऋषयः सहस्रमिति। अत एव सर्वे ते इत्यनेन सामानाधिकरण्यं परनिपातो भाष्यप्रामाण्यात्। एकैकश इत्यत्र उभयोरपि द्योतकत्वेन द्योतकसमुच्चयस्य च बहुशो दृष्टत्वेन द्विर्वचनशसोर्यौगपद्यम्। यथा यथाजातीको गार्ग्यायणीत्यादौ। तत्र च यथा ष्फसत्त्वे समुच्चित्य द्योतकता तदभावे गार्गीति ङीपैव तथा प्रकृतेपि शसो वैकल्पिकत्वात्पक्षे एकैकमित्यपि। द्व्यादिशब्दविषये तु न समुच्चित्य द्योतकता अनभिधानात्। एकशब्दे तु समुच्चित्य प्रत्येकं च द्योतकता अभिधानस्वभावात्। यत्र तद्धितेनानुक्ता वीप्सा तत्र द्विर्वचनं भवत्येव यथैकैकशो देहीति। भाष्यस्याप्ययमाशयः। यत्र तद्धितमात्रेण लोके वीप्सानभिधानं तत्र द्विर्वचनमपि। यत्र माषश इत्यादौ तावतैव वीप्साभिधानं तत्र न कदापि तयोः समुच्चय इति दिक्। सामर्थ्यलक्षण इति। सामर्थ्यकृतो गुणभूतैर्ऋषिभिः संबन्ध इत्यर्थः। सर्वे ते इत्यत्र तच्छब्देन गुणभूतस्यापि परामर्शोऽत्र पक्षे बोध्यः। अत एव दत्वेति समानकर्तृकोक्ति रक्ता। सहस्रदाक्षिणा इति। सहस्रं दक्षिणा गोरूपा येषां दातृणामिति इत्यर्थः। तेन गोसहस्रदानफला एव ते, न त्वेकगोदानमात्रफला इति व्यवहारो यथा स्मृतौ, तथा प्रकृतेपीति भावः। भुजेर्ब्राह्मणैरिति। सङ्ख्यायां भोक्तृत्वानुपपत्तेर्गुणभूतब्राह्मणैरेव भुजेः सम्बन्ध इति भावः। भाष्ये

कालव्यवायात् । दण्ड अग्रम् । शब्दव्यवायात् । दण्डः । न चैकस्यात्मनो व्यवायेन भवितव्यम् । भवति चेद्भवत्यान्यभाव्यमकारस्य । युगपच्च देशपृथक्त्वदर्शनात् * । युगपच्च देशपृथक्त्वदर्शनान्मन्यामहे आन्यभाव्यमकारस्येति । यदयं युगपद्देशपृथक्त्वेषूपलभ्यते, अश्वः अर्कः अर्थ इति । न ह्येको देवदत्तो युगपत्स्रुघ्ने च भवति मथुरायां च । यदि पुनरिमे वर्णाः शकुनिवत्स्युः । तद्यथा । शकुनय आशुगामित्वात्पुरस्तादुत्पतिताः पश्चाद् दृश्यन्ते । एवमयमकारो द इत्यत्र दृष्टो ऽण्ड इत्यत्र दृश्यते । नैवं शक्यम् । अनित्यत्वमेवं स्यात् । नित्याश्च शब्दाः नित्येषु च शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः यदि चायं

---

भाव इति भावे घञ् । इह कालशब्दाभ्यां व्यवधानं भिन्नानां दृष्टं यथा असंहितायां अ इ उ इत्यादीनां कालव्यवायः । कृतिरित्यादौ शब्दव्यवायः । तत्र तकारेण ऋकारेकारयोर्व्यवधानात् । एकत्वे तु व्यवधानं न दृष्टम् । यथा अ इति केवलाकार उच्चार्यते तस्मादुदात्तादिगुणभेदात्कालशब्दव्यवायाच्च नानात्वमकारस्य, प्रत्यभिज्ञानं चात्वादिसामान्यनिबन्धनम् । यद्यपि शब्दव्यवायेऽपि कालव्यवायोऽस्ति तथापि कालव्यवाय एव द्विधा दर्शितः शब्दशून्यः शब्दवांश्च । यदि पुनरिति । कालशब्दाभ्यां व्यञ्जकानामेव ध्वनीनां व्यवायो न व्यङ्ग्यस्येति व्यक्तिस्फोटवादिनो भावः । यथा शकुनिः पङ्क्त्यादौ स्थित आशुसंचारात्तदन्ते भवति एवं व्यञ्जकध्वनिसंनिधानासंनिधानाभ्यामकारस्योपलम्भानुपलम्भावित्यर्थः । जातिस्फोटवादी व्यक्तिस्फोटवादिनं पर्यनुयुङ्क्ते अनित्यत्वमिति । भवता जातिस्तावन्नाभ्युपगम्यते व्यक्तेरेवैकत्वनित्यत्वप्रतिज्ञानात्तस्यैकत्वं नित्यत्वं च नोपपद्यते । दण्ड इत्युदात्तानुदात्तस्वरादिभेदेन भिन्नत्वान्न ह्येकस्यैवोदात्तत्वपरित्यागेनानुदात्तत्वं युक्तं रूपान्तरपरिग्रहाद-

---

[अनेकाच्त्वमिति] । तन्मात्रमित्यर्थः । एकस्यैवेति । व्यापकस्येत्यपि बोध्यम् । अकारस्येत्यप्युपलक्षणमित्युक्तम् । भाष्ये [ उच्चारणंनाम ] स्युत्तरमत इति शेषः । आन्यभाव्यमित्यस्यान्यत्वमित्यर्थो नेत्याह । अन्यस्येति । अथ वेति । भावशब्दः कर्तृसाधन इति भावः । एवञ्च प्रतिप्रयोगमकारस्यान्यत्वमित्यर्थः । यथेति । एवञ्चाग्रे इत्याद्यकारो दण्डेत्यकाराद्भिन्नः । दण्ड अग्रमित्यादौ कालव्यवधानात् । दण्ड इहेति प्रयोगे इकारवत् तथा दण्ड इत्यत्राद्याकारोऽन्त्याकाराद्भिन्नः शब्दव्यवायात् । कृतिरित्यादौ तकारव्यवहितकारवदित्यनुमानैर्भेदे सिद्धे उदात्तादिविरुद्धधर्मप्रत्ययोऽपि पारमार्थिक एवेत्याशयेन तद्भेदादपि भेदसिद्धिरित्यभिप्रेत्याह उदात्तादीति । नानात्वमकारस्येति । युक्तमिति शेषः । ननु य एवोदात्तोऽकारः स एव देवदत्तेनानुदात्तः कृत इति प्रत्यभिज्ञाविरोधोत आह प्रत्यभिज्ञानं चेति । विभुत्वं निराचष्टे । भाष्ये [ युगपच्च देशेति ] । अर्कादिशब्दा एवं देशपदेनोच्यन्ते । देशपृथक्त्वेष्विति । देशानां पृथक्त्वेषु भेदेषु सत्स्वित्यर्थः । एवं वर्णानामनेकत्वे परेण साधिते वर्णैकत्ववादी एकत्वं स्थापयितुं तद्दूषणोद्धारमाह । भाष्ये ( यदि पुनरिति ) तत्र शकुनिवादिति दृष्टान्तस्य तद्वत्परिच्छिन्नत्वे न तात्पर्यं, तन्मते तस्य विभुत्वादिति ध्वनयन्नाह कालशब्दाभ्यामिति । व्यक्तिस्फोटवादिन इति । व्यक्तेर्नित्यत्वैकत्ववादिन एकैव शब्दव्यक्तिरिति वादिन इत्यर्थः । अनेनाद्यं दूषणं परिहृतम् । द्वितीयं परिहरति यथेति । एवमिति । अस्यानेकदेशेषु युगपदुपलम्भो व्यञ्जकवशादिति शेषः । पूर्वदृष्टस्य पश्चाद्दर्शनेऽपि अव्यवहितस्य व्यवधानेऽपि न भेद इत्येतन्मात्रेण दृष्टान्त इति भावः । नन्वेवं विभुत्वे नित्यत्वे च सर्वत्र देशे सर्वदोपलम्भापत्तिरत आह । व्यञ्जकेत्यादि । जातिस्फोटेति । जातिरेव एका शब्दव्यक्तयस्त्वनन्ता इति वादीत्यर्थः । भाष्ये (अनित्यत्वमेवं स्यादिति) व्यक्तेरेकत्ववादी तस्या नित्यत्वं मन्यते इति भावः । ननु विभोरेकस्यापि व्यञ्जकवशादनेकत्रोपलब्धौ कथमनित्यतेत्यत आह भवतेति । भाष्येऽपि ( नित्याश्च शब्दा ) इत्यस्य तेनस्यादिः । भाष्योक्तकूटस्थत्वाभावह-

द इत्यत्र दृष्टो ण्ड इत्यत्र दृश्येत नायं कूटस्थः स्यात्। यदि पुनरिमे वर्णा आदित्यवत्स्युः। तद्यथा। एक आदित्यो ऽनेकाधिकरणस्थो युगपद्देशपृथक्त्वेषूपलभ्यते। विषम उपन्यासः। नैको द्रष्टा आदित्यमनेकाधिकरणस्थं युगपद्देशपृथक्त्वेषूपलभते अकारं पुनरुपलभते। अकारमपि नोपलभते, किं कारणम्। श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः। एकं च पुनरा-

---

नित्यत्वप्रसङ्गात्तस्माद्भिन्ना एवानित्या एवाकाराः। प्रत्यभिज्ञा त्वाकृतिनिबन्धनेति जातिस्फोटपक्षो ऽत्र व्यवस्थितः। व्यक्तिस्फोटवाद्याह अकारमपीति। श्रोत्रोपलब्धिरिति। श्रोत्रोपलब्ध्या आकाशदेशत्वं शब्दस्य प्रतिपादयति। आकाशप्रदेशविशेषस्य श्रोत्रत्वादिन्द्रियाणामसंबद्धविषयाग्रहणाच्छ्रोत्रस्य निष्क्रियत्वाद् गमनाभावादाकाशदेशत्वं शब्दस्यावश्यमभ्युपेयम्। बुद्धिनिर्ग्राह्य इति। पूर्वपूर्वध्वन्युत्पादिताभिव्यक्तिजनितसंस्कारपरम्पराप्राप्तपरिपाकान्त्यबुद्धिनिर्ग्राह्य इत्यर्थः। प्रयोगेणेति। प्रयुज्यत इति प्रयोगो ध्वनिः तेनाभिव्यक्तः देशभेदेन तु प्रतिभासो भिन्नदेशावस्थितपुरुषोदीरिता-

---

पपादयति रूपान्तरेति। तस्माद् भिन्ना एवानित्या एवाकारा इति पाठः। नित्या एवेति पाठस्त्वयुक्तः। अनन्तवर्णवादे तदनित्यत्वस्यैवेष्टत्वादिति बोध्यम्। यद्यप्युदात्तत्वादीनां ध्वनिनिष्ठत्वाङ्गीकारान्न दोषस्तथापि स्फटिकस्येवास्यापि इतरसंनिधानेन तद्रूपपरिग्रहे संसर्गाऽनित्यताविरोधिकूटस्थत्वाभाव इति भावः। पुनरप्येकत्वनित्यत्वे साधयति। भाष्ये [यदि पुनरित्यादिना]। एकस्यैवाकारस्यानेकदेशेषूपलब्धिरादित्यस्येव संभवतीति न तावद्व्यक्तिभेदः सिध्यति। अन्यथा अनित्यस्याप्यनेकत्वापत्तिरनित्यत्वापत्तिश्च। तत्तद्देशसंसर्गेणाल्पप्रकाशत्वाधिकप्रकाशत्वादिगुणसंसर्गाश्रीति भावः। विषम इति। आदित्यदृष्टान्तेनानेकदेशोपलभ्यमानाकारादिपक्षैक्यसाधकः प्रत्यभिज्ञायमानत्वंहेतुरनेकद्रष्टृकाले एकदेशोपलब्धिविषयत्वरूपोपाधियुक्त इति न तेन भेदसाधकशब्दव्यवायहेतोः सत्प्रतिपक्षता युक्तेति भावः। अकारः पुनरुपलभत इत्यस्यैको द्रष्टानेकाधिकरणस्थमिति शेषः। शब्दस्याकाशरूपैकाधिकरणत्वेनानेकाधिकरणत्वे युक्तमित्याशयेनाह। भाष्ये [अकारमपि नोपलभते इति]। अकारमप्यनेकाधिकरणस्थं नोपलभत इत्यर्थः। श्रोत्रोपलब्धिरिति। श्रोत्र एव उपलब्धिर्यस्येत्यर्थः। करणक्तिन्नन्तेन समानाधिकरणबहुव्रीहिर्वा। एतद्विशेषेण फलं दर्शयति श्रोत्रेति। ननु दिश एव श्रोत्रत्वात् कथं तत्रोपलब्ध्याकाशदेशत्वसिद्धिरत आह आकाशेति। कर्णशष्कुल्यवच्छिन्नं नभ एव श्रोत्रम्। चक्षुरादिवच्छ्रोत्रस्यापि भूतत्वमावश्यकमिति भावः। दिशोनतिरिक्तमेव चाकाशमिति तत्त्वम्। ननु तथाप्यतेजोंशगतघटादिरूपस्य तैजसचक्षुर्ग्राह्यत्ववदनाकाशदेशगतस्यापि शब्दस्याकाशात्मकश्रोत्रग्राह्यत्वं किं न स्यादित्याशङ्क्य किमसंबद्धं तद् ग्राहकं संबद्धं वा, नाद्य इत्याह। असंबद्धेति। अन्यथा रामेश्वरादिप्रदेशावच्छिन्नशब्दस्यापि श्रवणप्रसंगः। द्वितीये ऽपि किं श्रोत्रस्य विषयदेशागमनात्संबन्ध उत शब्दस्य श्रोत्रदेशागमनाद्, नोभयमपीत्याह गमनाभावादिति। श्रोत्रस्य चेति। चेन शब्दपरिग्रहः। उभयोरपि गमनाभावे हेतुर्निष्क्रियत्वं दूरदेशस्य शब्दाग्रहणन्तु दूरत्वादिदोषस्य प्रतिबन्धकत्वाच्छ्रोत्रदेशेऽनभिव्यक्तेः आकाशदेशत्वे च तद्वदेव तस्यापि व्यापकत्वेन श्रोत्रदेशाभिव्यक्तस्य तेन ग्रह इति भावः। आहङ्कारिकाणीन्द्रियाणीति साङ्ख्यमतेपि इन्द्रियाणां स्वाधिष्ठानभूतवृत्तिगुणग्राहकत्वनियमादाकाशदेशत्वं श्रोत्रोपलब्ध्या शब्दस्य सिध्यतीति बोध्यम्। श्रोत्रोपलब्धिरित्येव बुद्धिनिर्ग्राह्यत्वस्योक्तत्वात्पौनरुक्त्यमाशङ्क्याह, पूर्वपूर्वेति। एवञ्चाशुतिरोधीयमानानेकवर्णवद् घटकलशादिशब्दग्रहणासंभवदर्शनाय तदुक्तमिति न पौनरुक्त्यम्। प्राप्तपरिपाकेति। तत्सहकृतेत्यर्थः। अन्त्यबुद्धिरन्त्यवर्णबुद्धिः। एवञ्च तादृशसंस्कारविशिष्टान्तःकरणसंयुक्तेन सादृश्यसंस्कारविशिष्टेन श्रोत्रेणान्त्यवर्णसंबद्धेन वर्णसमुदायप्रतिबिम्बवदखण्डस्फोटरूपपदादिप्रत्यक्षमिति भावः। नन्वेवं सर्वदा शब्दोपलम्भः स्यादतो भाष्ये (प्रयोगेणाभिज्वलित इति)। तद्व्याचष्टे प्रयुज्यत इति। ध्वनिरिति। वर्ण इत्यर्थः। भाष्ये (एकञ्च पुनराकाशमिति)। एवञ्चैकस्मिन्नाम्रफले एक एव यथा रूपरसगन्धादिस्तथा तदाश्रयस्यैकत्वात्तद्गतशब्दोऽप्येक एव तत्रैव च तस्योपलम्भ इति भिन्नदेशो

काशम्। आकाशदेशा अपि बहवः। यावता बहवः। तस्मादान्यभाव्यमकारस्य। आकृतिग्रहणात्सिद्धम् *। अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति तथेवर्णाकृतिस्तथोवर्णाकृतिः। तद्वच्च तपरकरणम् *। एवं च कृत्वा तपराः क्रियन्ते आकृतिग्रहणेनातिप्रसक्तमिति। ननु च सवर्णग्रहणेनातिप्रसक्तमिति कृत्वा तपराः क्रियेरन्। प्रत्याख्यायते तत्सवर्णग्रहणमपरिभाष्यमाकृतिग्रहणादनन्यत्वाच्चेति। हल्ग्रहणेषु च *। किम्। आकृतिग्रहणात्सिद्धमित्येव। झलो

भिव्यञ्जकध्वनिकृतः। भेदवाद्याह आकाशदेशा इति। यथा पृथिव्या एकत्वेपि स्रुघ्नमथुरादिदेशव्यवहार एवमाकाशस्यापि संयोगिघटादिपदार्थावच्छेदेन भेदव्यवहार इत्यर्थः। एवं व्यक्तिस्फोटपक्षे निराकृते जातिस्फोटपक्ष एवाश्रीयते आकृतिग्रहणादिति। अकारजातिः सर्वप्रदेशेषु निर्दिश्यते। नान्तरीयकस्तु व्यक्तिनिर्देश। तत्र प्रत्याहारे ऽकारजातेर्निर्देशात्तस्याश्च विवृतत्वप्रतिज्ञानाच्छास्त्रान्ते तस्याएव प्रत्यापत्तिविधानम्। तदेवं जातिनिर्देशादनुवृत्तिनिर्देशस्थेनाकारेण ग्रहणमाकारस्य सिद्धम्। अष्टन आविभक्तावित्यत्र सत्यपि जातिनिर्देशे दीर्घोच्चारणसामर्थ्याद् ह्रस्वस्य ग्रहणं न भवति' अन्यथा ह्रस्वमेवोच्चारयेत्। प्लुतश्च विषये स्मृत इति न्यायात् प्लुतस्याग्रहणम्। तद्वच्चेति। स आकृतिपक्षो यत्रास्ति तत्तद्वत्। अथवा वत्यन्तमेतत्तद्वत्। तत्र न्यायेनाकृतिपक्षस्य स्थापितत्वात्तपरेष्वपि स एव पक्षः स्थित इत्यर्थः। हल्ग्रहणेषु चे-

---

पलम्भ एवासिद्ध इति भावः। नन्वेकत्वे ऽयं पूर्वो ऽयं परो ऽयं देवगृहे ऽयं राजगृह इति भेदप्रतिभासः कथमत आह देशभेदेन स्विति। औपाधिको भेदस्तु आकाशस्येव न शब्दस्याप्येकत्वे बाधकः। एवं संसर्गानित्यतापि तस्येव नास्यापि बाधिका नस्यापि नोलं नभ इत्यादि संसर्गानित्यताप्रतीतेरित्याशयः। अत्र शब्द इत्येकवचनेन स्फोटस्यैकत्वमखण्डत्वञ्च ध्वनितम्। ननु निरवयस्य कथं प्रदेशबाहुल्यमत आह यथेति। एवञ्चौपाधिकभेदेन भेदो दुर्वारः। सर्वत्र भेद औपाधिक एव स एव च व्यवहारोपयोगीत्याशयः। श्रोत्रसम्बन्धस्तु प्रदेशान्तरोत्पन्नशब्दस्यापि वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा तन्त्रान्तरे व्युत्पादित एव। तत्रापि पक्षे ऽस्यच्व्यावित्यादौ दोषो नेत्याह, भाष्ये (आकृतिग्रहणादिति)। तदाह अकारजातिरिति। सर्वप्रदेशेष्विति। प्रत्याहारे ऽस्य च्वावित्यादौ च अकारव्यक्तीनामानन्त्यमाश्रित्य वार्त्तिककृता वर्णसमाम्नायस्थस्य विवृतत्वेपि धात्वादिस्थस्यापि विवृतोपदेशो नोदितः। भाष्यकृता तु प्रयोगस्थानां प्रत्याहारस्थैर्ग्रहणाय तत्र जातिनिर्देश आवश्यके जातेर्विवृतत्वप्रतिज्ञानेनैव सर्वसिद्धे स दोषो वारितः। अस्य च्वावित्यादौ तु सत्यपि विवृतत्वे ऽनण्त्वात्सवर्णग्रहणं न स्यादित्यपि जातिनिर्देशेनैव परिहृतम्। एवं चाणुदित्सूत्रे ऽण्ग्रहणं न कार्यमित्याशयः। तस्याश्चेति। स्वाश्रयव्यक्तेरित्यर्थः। तत्र। प्रत्यापत्तिवाक्ये तपरनिर्देशात् षण्णामेकशेषनिर्देशाद्वा ह्रस्वस्यैव संवृतत्वं बोध्यम्। ननु जातिनिर्देशे ऽतिप्रसङ्ग इत्याह अष्टन इति। अन्यथा ह्रस्वमेवेति। न च तान्निर्देशेऽन्तरतमपरिभाषया दीर्घो न स्यादिति दीर्घविधानं, दीर्घनिर्देशे तत्सामर्थ्यात्तस्यापि विधानं जातिग्रहणादन्यस्यापीति वाच्यम्। दीर्घनिर्देशसामर्थ्येनान्तरतमपरिभाषाबाधकल्पनापेक्षया ह्रस्वानुपस्थितेरेव कल्पने लाघवमित्याशयात्। ननु दीर्घोच्चारणसामर्थ्यान्मा भूद्ध्रस्वः प्लुतस्तु स्यादत आह प्लुतश्चेति। विषये दूराद्धूतादौ। अनेनापि प्लुतविधानेंशे ऽनुवाददोषः स्यादिति भावः। सर्वत्राकृतिनिर्दिष्टेस्यत्र ज्ञापकमाह भाष्ये (तद्वच्चेति) सादृश्ये वतिभ्रमं व्यावर्त्तयन् स इति। अथवा वत्यन्तमेतदिति। तदा तद्विद्यस्यास्य च्वावित्यादिवदित्यर्थः। तदाह तत्र न्यायेनेति। तत्रास्य च्वावित्यादौ। आकृतिग्रहणप्रयुक्तातिप्रसङ्गनिवारणार्थमेव हि तत्र तत्र तपरकरणम्। जातिपक्षेपि विवृतत्वप्रतिज्ञाकः सवर्ण इत्यादिर्दण्डानातिरित्यादौ दीर्घार्थमावश्यिकैव। एवं प्रत्यापत्तिवचोप्यावश्यकमेव तुल्यन्यायाज्जातिग्रहणप्रयुक्तातिप्रसङ्गनिवारणाय तपरत्ववद्विधये त्यदादीनाम इत्यादौ तद्वारणायाप्रत्यय इत्येतादिति बोधितम्। अत्र पक्षेऽण्ग्रहणप्रत्या-

झलि अवात्ताम् अवात्तम् अवात्त । यत्रैतन्नास्ति अण् सवर्णान् गृह्णातीति । रूपसामान्याद्वा * । रूपसामान्याद्वा सिद्धमेतत् । तद्यथा । तानेव शाटकानाच्छादयामः ये मथुरायां, तानेव शालीन् भुञ्जमहे ये मगधेषु । तदेवेदं भवतः कार्षापणं यन्मथुरायां गृहीतम् । अन्यस्मिंश्चान्यस्मिन् रूपसामान्यात्तदेवेदमिति भवति । एवमिहापि रूपसामान्यात्सिद्धम् ।

ऋलृक् ॥२॥ अथ लृकारोपदेशः किमर्थः । किं विशेषेण लृकारोपदेशश्चोद्यते न पुनरन्येषामपि वर्णानामुपदेशश्चोद्यते । यदि किंचिदन्येषामपि वर्णानामुपदेशे प्रयोजनमस्ति लृकारोपदेशस्यापि तद् भवितुमर्हति । को वा विशेषः । अयमस्ति विशेषः । अस्य हि लृकारस्याल्पीयांश्चैव प्रयोगविषयः । यश्चापि प्रयोगविषयः सोपि क्लृपिस्थस्यैव । कृपेश्च लत्वमसिद्धं तस्यासिद्धत्वादृकारस्यैवाच्कार्याणि भविष्यन्ति नार्थ लृकारोपदेशेन । अत उत्तरं पठति । लृकारोपदेशो यदृच्छाशक्तिजानुकरणप्लुताद्य-ति । अवश्याश्रयणाय नामाकृतिपक्षस्य दर्शयति । व्यक्तिपक्षे ह्येकस्यैव तकारस्यानुकरणं खफछठेत्यत्र त इति द्वयोस्तकारयोर्झल्त्वं न स्यात् अपि त्वेकस्यैवेत्यवात्तामित्यत्र सिज्लोपो न स्यादभित्था इत्यादावेव स्यात् । रूपसामान्यादिति । व्यक्तिनिर्देशेपि भेदापरामर्शेन लोकवदभेदव्यवहारोस्तीति सिद्धमिष्टम् । व्यक्तिव्यतिरिक्तं सामान्यं भवतु वा मा भूत्सर्वथा लोकइव शास्त्रे व्यवहार इत्यर्थः ॥१॥

ऋलृक् ॥ अल्पीयानिति । ऋकारापेक्षः प्रकर्षः । ऋकारस्याल्पः प्रयोगस्ततोप्यस्याल्पतर इत्यर्थः । अल्पप्रयोगस्यापि कार्यार्थं उपदेशः कर्त्तव्य इत्याशङ्क्याह यश्चापीति । तत्र ऋकारावस्थायामेवोदात्तादिषु कृतेषु स्थानेन्तरतम इति स्थानिसदृश लृकारो भविष्यति । यदृच्छेति । अर्थगतं प्रवृत्तिनिमित्तमनपेक्ष्य यः शब्दः प्रयोक्त्रभिप्रायेणैव प्रवर्त्तते

---

ख्यानेपि ऋलृवर्णयोः सावर्ण्येन समानजातित्वातिदेशान्न दोष इति भावः । अवात्तामिति । वसेर्लुङ् तस्ताम् । सिच् । सः सीति तत्वम् । वदव्रजेति वृद्धिः । झलोझलीति सलोपः । ननु वचनसामर्थ्याज्झल्स्त्वेपि भविष्यतीत्यत आह अभित्था इति । भिदेर्लुङि सिचि रूपम् । आकृत्यनाश्रयणेत्याह । भाष्ये (रूपसामान्यादिति ) । तद्यथाचष्टे । व्यक्तीति । अभेदव्यवहार इति । रूपसादृश्यनिबन्धनप्रत्यभिज्ञाकृताभेदव्यवहार इत्यर्थः । अल्पमहत्स्थूलकृशह्रस्वदीर्घगोघटादिषु गौर्घट इत्यादिव्यवहारवदिति भावः । एवञ्च व्यक्तिव्यतिरिक्तजातिस्वीकारोपि व्यर्थ एवेत्याशयेनाह व्यक्तिव्यतिरिक्तमिति । भवेति । अनुगतप्रतीतिव्यवहारयोः सादृश्येनैवोपपत्तेरिति भावः । सादृश्यञ्चात्र समानध्वनिकृतम् ॥१॥

ऋलृक् ॥ २ ॥ भाष्ये ( अथलृकारेति ) । यद्यप्येतच्चतुर्दशसूत्रविवृतौ नन्दीश्वरकृतकाशिकायामनेकेषामृषीणां नानाभिधार्थजिज्ञासायां शिवेन सर्वजिज्ञासानिवृत्तये एषा ढक्कानिनादेन प्रकाशितेत्युक्तमितीदमनुपपन्नं तथापि पाणिन्युद्देश्यकं फलमस्ति नवेति एतत्तात्पर्यम् । अन्यवर्णचतुर्दशान्तु पाणिन्युद्देशेनैवोपदिष्टमित्यपि तत्रैव स्पष्टम् । प्रयोगविषय इति कर्मधारयः । प्रयोगादन्यत्रानभिव्यज्यमानतया प्रयोगाविषय इत्युक्तेः । अल्पेति । यथा मुद्गादर्णिस्थादिः । ननु ऋकारे कार्यप्रवृत्तावपि लृकारे कथं तत्कार्योदात्तत्वादीनां दर्शनमत आह तत्रेति । स्थानेन्तरतमइतीति । यद्यपि कृपोरोल इत्यत्र रेफलकारयोः स्थान्यादेशभावस्तथापि तद्द्वारा ऋकारलृकारयोरपि स इति भावः । अर्थगतमिति । शब्दातिरिक्तमर्थरूपमित्यर्थः । यद्वा व्यक्तेरेव वाच्यता तस्याञ्च प्रकारताविशेष्यताख्यविषयताद्वयाङ्गीकाराच्छक्तिग्रहोपपत्तिः सविकल्पकोपपत्तिश्च तत इति भावः । प्रयोक्त्राभिप्रायेणेति । प्रयोक्त्रधीनमिति भावः । अन्यथा शब्दार्थसंबन्धस्य नित्यतापत्तिः । एवञ्च स्वेच्छयैकस्यां व्यक्तौ संकेत्यमानः शब्दो यदृच्छाशब्द इति बोध्यम् ।

प्लुतः - ऌप्राप्थरः अति गुरोरनृतः इति प्लुतकोत्र्य ऌकारस्य सिद्धत्वात् तस्य चानच अचा निर्धीयमानः प्लुतः न स्यात् । स्नाति : ऌप्रः गतिरनन्तरः उदात्तादनु



ऌप्रनात् अत् ... अनाचि च इति अचोत्र्य अरस्य यदि दीर्घम् न स्यात् ।

र्थः * ऌकारोपदेशः क्रियते यदृच्छाशब्दार्थोऽशक्तिजानुकरणार्थः प्लुत्याद्यर्थश्च । यदृच्छाशब्दार्थस्तावत् । यदृच्छया कश्चिद् ऌतको नाम तस्मिन्नच्कार्याणि यथा स्युः । दध्य्ऌतकाय देहि मध्व्ऌतकाय देहि उदङ्ङ्ऌतकोऽगमत् । प्रत्यङ्ङ्ऌतको ऽगमत् । चतुष्टयी शब्दानां प्रवृत्तिः जातिशब्दा गुणशब्दाः क्रियाशब्दाः यदृच्छाशब्दाश्चतुर्थाः । अशक्तिजानुकरणार्थः । अशक्तया कया चिद् ब्राह्मण्या ऋतक इति प्रयोक्तव्ये ऌतक इति प्रयुक्तं तस्यानुकरणं ब्राह्मण्यॢतक इत्याह कुमार्य्ऌतक इत्याहेति । प्लुत्याद्यर्थश्च ऌकारोपदेशः कर्तव्यः । के पुनः प्लुत्यादयः प्लुतिद्विर्वचनस्वरिताः क्लृ३प्तशिखः । क्ॣप्तः । प्रक्ॣप्तः । प्लुत्यादिषु कार्येषु कृपेर्लत्वं सिद्धं तस्य सिद्धत्वादच्कार्याणि न सिध्यन्ति । तस्माद् ऌकारो-

स यदृच्छाशब्दो डित्थादि । ऋकारऌकारयोः सवर्णविधिरित्यस्य वार्त्तिककारवाक्यत्वात्सूत्रकारेणानाश्रितत्वादत्र ऌकारोपदेशः कृतः । अर्थवत्सूत्रारम्भाच्चाव्युत्पन्ना यदृच्छाशब्दाः सन्तीत्यवगम्यते । गाव्यादीनां तु गवादिनिर्वर्तितत्वादसाधुत्वम् । ऋतकशब्दस्त्वर्थाश्रयेणैव विनियुक्त इति ऌतकशब्दस्यानिवर्तकः । अशक्तिजेति । अशक्तिजानुकरणस्य जातिशब्दत्वमिच्छन्ति । यस्मादनुक्रियमाणशब्दे या जातिः समवेता तत्संबद्धमनुकार्यमनुकरणं प्रत्याययति । न्याय्यभावादिति । ऋतकशब्दो न्याय्यः कृदन्तं नाम कुर्यादिति स्मृतावुक्तत्वात् । ऋतिः सौत्रो धातुः तत औणादिकः

नन्वृकारस्याच्त्वे ऋऌवर्णयोः सावर्ण्याद् ऋकारेण ऌकारस्यापि ग्रहणादच्कार्यसिद्धौ किम्लकारोपदेशे-नेत्यत आह ऋकारेति । उपदेशः कृत इति । पाणिनेये शिवेनेति शेषः । वस्तुतोऽत्र तस्यानुपदेशे ऽप्रामाणिकत्वशङ्कया सवर्णविधिरपि तयोर्वक्तुमशक्य इति तदुपदेशः । सवर्णविधिद्वारकं फलमपि स्थलत्रय एवेति तत्रैव प्रयोजनोपन्यास इति बोध्यम् । ननु सन्तमसन्तं वा क्रियायोगमर्थगतमङ्गीकृत्य डित्थादीनामपि व्युत्पत्तेरर्थगतार्थरूपप्रवृत्तिनिमित्तानपेक्षशब्दसत्त्वे किं मानमत आह अर्थवदिति । चिन्त्यमिदम् । बहुच्पूर्वे तस्य चारितार्थ्यात् । एतदर्थं तद्धितपदं तद्विशिष्टपरमप्रत्यय इत्युक्तेश्च पचतकीत्यादौ न दोषः । प्रत्ययश्च तद्धितभिन्न एव बहुपटवस्तिष्ठन्तीत्यादौ यं समुदायमिति न्यायेन न दोष इति कैयटाशयमन्ये । ननु ऌतकस्यासाधुत्वात्कथं शास्त्रविषयतेत्यत आह गाव्यादीनामिति । ऋतकेन ऌतकानिवृत्तौ हेतुरर्थाश्रयेणेति । स्वगताक्रियारूपार्थाश्रयेणेत्यर्थः । अर्थतः सजातीयस्यैव निवृत्तिरेकप्रवृत्तिनिमित्तकत्वे सति अन्वाख्यातस्य निवर्तकमिति भावः । तद् ध्वनयन्नाह । भाष्ये । ( चतुष्टयीति ) । शब्दानामर्थे या प्रवृत्तिः सा प्रवृत्तिनिमित्तभेदात्प्रकारचतुष्टयवतीत्यर्थः । तत्र यदृच्छाशब्दो नाम वक्त्रा स्वेच्छया संनिवेशितः स चानेकविधः । एकव्यक्तिसंनिवेशितो डित्थादिरेकस्तत्र न किञ्चिदतिरिक्तं प्रवृत्तिनिमित्तमानन्त्यव्यभिचारयो-रभावात् । किं तु शक्यस्यैवार्थस्य विषयताद्वयेन भानन्तत्तदुत्तरत्वादेः प्रकारस्यावच्छिन्नः स एवार्थः । यद्वा शब्दपराद्वाच्यार्थे एव त्वादिः । एवं काशिपदानां कादीनामेकत्वमते तेषु शक्तिः । ततो डित्थपदादिव शक्यार्थे एव त्वादिः । कुत्वमिति । कुरिति च पर्यायौ । अनेकत्वमते तत्तज्जात्युपलक्षिते सा । टिघुभादीनान्तु तच्छक्यानामानन्त्यात्तत्पदमेव प्रवृत्तिनिमित्तं तदेव च तदुत्तरत्वार्थः । भत्वादिपदैर्भादिसंज्ञैवोच्यते । अत एव वृद्धिसूत्रे वक्ष्यति "कुत्वं कस्मान्न भवति चोः कुः पदस्येति भत्वात् । कथं भसञ्ज्ञे"ति । अनेन च भाष्येण कुकुत्वपदयोः भत्वभसंज्ञापदयोः पर्यायत्वं स्पष्टमेवोक्तम् । सञ्ज्ञा चपदमेव । ननु चतुर्विधेष्वनुकरणशब्दः क्वान्तर्भवतीत्यत आह अशक्तिजेति । यस्मादिति । अनुक्रियमाणशब्दव्यक्तयो बहवः, प्रत्यभिज्ञा तु जातिनिबन्धना रूपसादृश्यनिबन्धना वेति भावः । एतेऽपि यदृच्छाशब्दाः स्वच्छयैव वक्त्रा शब्दपरतया प्रयोगादित्यन्ये । प्लुत्यादिकं च गुरोरनृत इति प्लुतः अनचि चेति द्वित्वम् । प्रपूर्वात्कृपेरन्तर्भावितण्यर्थात्कर्मणि क्तेगतिरनन्तर इति पूर्वपदप्रकृतिस्वरे वर्ज्यमानस्वरेण शिष्टस्यानुदात्तत्वे उदात्तादनुदात्तस्येति स्वरितत्वम् ।

पदेशः क्रियते। नैतानि सन्ति प्रयोजनानि। न्याय्यभावात्कल्पनं संज्ञादिषु। न्याय्यस्य ऋतकशब्दस्य तावत् कल्पनं संज्ञादिषु साधु मन्यन्त ऋतक एवासौ न ऌतक इति। अपर आह। न्याय्य ऋतकशब्दः शास्त्रान्वितो ऽस्ति स कल्पयितव्यः साधु संज्ञादिषु ऋतक एवासौ न ऌतकः। अयं तर्हि यदृच्छाशब्दो ऽपरिहार्यः। ऌफिडः ऌफिड्डश्चेति। एषोपि ऋफिडः ऋफिड्डश्च। कथम् अर्त्तिप्रवृत्तिश्चैवं हि लोके लक्ष्यते। फिडीफड्डावौणादिकौ प्रत्ययौ। त्रयी च शब्दानां प्रवृत्तिः जातिशब्दाः गुणशब्दाः क्रियाशब्दा इति। न सन्ति यदृच्छाशब्दाः। अन्यथा कृत्वा प्रयोजनमुक्तमन्यथा कृत्वा

क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापीति क्वुन्प्रत्ययः। संज्ञादिष्विति। आदिशब्देनैतद्दर्शयति जातिगुणक्रियानिमित्ता अपि शास्त्रान्विता प्रयोक्तव्या इति। सर्वशब्दव्युत्पत्तिपक्षे किमर्थवत्सूत्रेणेति चेत् शिष्टप्रयुक्तानामेवाव्युत्पत्तिपक्षोऽस्तीति ज्ञापनायार्थवत्सूत्रोपादानम्। अनुकरणशब्दानामव्युत्पन्नत्वात्तदर्थं च। अपर आहेति। पूर्वमुक्तम्। ऋतक एव न्याय्यत्वात्प्रयोक्तव्यः न तु ऌतकशब्द इति। इदानीं तु ऋतकशब्दस्यैवायमपभ्रंशोऽशक्तिजत्वात् ऌतक इत्युच्यते। अयं तर्हीति। ऋतकशब्दो ऽन्वाख्यातत्वाद्भवतु वा ऌतकशब्दस्य निवर्तकः। ऋफिड ऋफिड्ड इत्येतौ त्वनन्वाख्याताविति कथं ऌफिडऌफिड्ड इत्येतयोर्निवर्तकौ स्यातामिति भावः। एषोपीति। उणादयो बहुलमित्येवान्वाख्याताविति भावः। अर्तिप्रवृत्तिरिति। अर्तेः प्रकृतित्वेन प्रवृत्तिरित्यर्थः। न सन्तीति। अद्यत्वेपि यदा नाम क्रियते तदा प्रशस्यरूपा क्रिया गुणो वाध्यारोप्यइति भावः। अन्यथा

भनृत इति निषेधस्तु न ऋदिदऌदिदिति पृथगनुबन्धकरणेन क्वचित्परस्पराग्रहणज्ञापनात्। न्याय्यइति। सञ्ज्ञात्वेन कल्पयितुमिति शेषः। तत्र हेतुमाह कृदन्तमिति। प्रकृतिप्रत्ययादिविभागेनान्वाख्यातत्वमेव न्याय्यत्वमित्याशयेन शङ्कते सर्वशब्देति। शिष्टप्रयुक्तत्वमपि न्याय्यत्वमिति परिहारः। न च तस्यैव प्रयोगे ऌतकशब्दो बोधकोपि न स्यादिति वाच्यम् बोधकत्वे ऽप्यसाधुत्वान्न शास्त्रीयकार्यनिमित्तत्वमित्याशयात्। तद् ध्वनितं भाष्ये"साधु मन्यन्त" इति ग्रन्थेन। ऋतक एवासाविति। ऋतकशब्दप्रतिपाद्य एवासौ न ऌतकशब्दप्रतिपाद्य इत्यर्थः। इदानीं त्विति। भाष्ये ( कल्पयितव्य ) इत्यस्य विनियुक्तत्वेन ज्ञेय इत्यर्थः। साधु ऋतक एव नामत्वेन कृतो न ऌतकः। अशक्त्या तु तथोच्चारणमित्यपभ्रंशत्वान्न शास्त्रविषय इति भावः। अशक्तिजत्वादिति। जिह्वापाटवजत्वादित्यर्थः। एवञ्चासाधुरेवेति भावः। ऌतकाद् ऌफिडवैषम्यं दर्शयति ऋतकशब्दइति। ऌतकशब्दस्येति। अनन्वाख्यातस्येत्यादिः। फिडफिड्डयोरुणादिष्वदर्शनादाह उणादयइति। बाहुलकसिद्धावेताविव्यर्थः। अर्त्तिप्रवृत्तिश्चैवेति। तथा च फिडफिड्डयोः स एव प्रकृतिर्न तु ऌ इति धात्वन्तरं कल्प्यम्। संज्ञासु धातुरूपाणीति तु अनादिशिष्टप्रयोगसाधने उपायमात्रं न त्वाधुनिकक्रियमाणसञ्ज्ञानुग्राहकमिति भावः। एवञ्च देशभाषानुसारेण क्रियमाणं कूची मञ्चीत्याद्यसाधु शास्त्राविषयश्चेत्युक्तम्। अर्त्तेरिति। यतस्तस्य लोके प्रवृत्तिर्लक्ष्यतेऽतः फिडादिप्रकृतित्वेनापि तस्यैव प्रवृत्तिरित्यर्थः। एवं यदृच्छाशब्दानङ्गीकृत्य शास्त्रान्वितानां क्वचिच्छिष्टप्रयुक्तानामेव यत्र कुत्र चित्सञ्ज्ञात्वेन विनियोगो नान्येषामित्येवं ऌतकऌफिडादीनां शास्त्रविषयत्वाभावान्न तदर्थं ऌकारोपदेश इत्युक्तम्। इदानीं न सन्त्येव यदृच्छाशब्दा इति पक्षावष्टम्भेन तदर्थत्वं प्रत्याचष्टे। भाष्ये ( त्रयी चेति ) चेनेदं ध्वनितम्। नन्वेवं डित्थादीनां क्वान्तर्भावोत आह अद्यत्वेपीति। एवञ्च सर्वेपि व्युत्पन्नाः क्रियादिशब्दा एवेति भावः। प्रशस्यरूपेति। अत्यन्तप्रशंसायोग्येत्यर्थः। एवञ्च येषां क्रियागुणादिप्रवृत्तिनिमित्तकत्वन्तेषां क्रियाद्यारोपेणार्थबोधकत्वमिति तात्पर्यम्। यद्वा पूर्वपूर्वडित्थादिगतप्रशस्तगुणक्रियारोपेण तत्प्रवृत्तिनिमित्तक एव डित्थादिभ्यो बोधः। आद्ये डित्थे तु तद्व्यक्तेरेव विषयताद्वयेन भानमिति सैव प्रवृत्तिनिमित्तमपीति तस्य भाव इति सूत्रे·

परिहारः। सन्ति यदृच्छाशब्दा इति कृत्वा प्रयोजनमुक्तं न सन्तीति परिहारः। समाने चार्थशास्त्रान्वितोऽशास्त्रान्वितस्य निवर्तको भवति तद्यथा। देवदत्तशब्दो देवदिण्णशब्दं निवर्तयति। न गाव्यादीन्। नैष दोषः। पक्षान्तरैरपि परिहारा भवन्ति। अनुकरणं शिष्टाशिष्टाप्रतिषिद्धेषु यथा लौकिकवैदिकेषु। अनुकरणं हि शिष्टस्य साधु भवति। अशिष्टाप्रतिषिद्धस्य वा नैव तद्दोषाय भवति नाभ्युदयाय। यथा लौकिकवैदिकेषु। यथा लौकिकेषु वैदिकेषु च कृतान्तेषु। लोके तावद्। य एवमसौ ददाति य एवमसौ यजते य एवमसावधीतइति तस्यानुकुर्वन् दद्याच्च यजेत चाधीयीत च सोप्यभ्युदयेन युज्यते। वेदेपि य एवं विश्वसृजः सत्राण्यध्यासतइति तेषामनुकुर्वन् तद्वत्सत्राण्यध्यासीत सोप्यभ्युदयेन युज्यते। अशिष्टाप्रतिषिद्धं यथा। य एवमसौ हिक्कति य एवमसौ हसति य एवमसौ कण्डूयतीति तस्यानुकुर्वन् हिक्केच्च हसेच्च कण्डूयेच्च नैव तद्दोषाय स्यान्नाभ्युदयाय। यस्तु खल्वेवमसौ ब्राह्मणं हन्ति एवमसौ सुरां पिबतीति तस्यानुकुर्वन् ब्राह्मणं हन्यात्सुरां वा पिबेत्सोपि मन्ये पतितः स्यात्। विषम उपन्यासः। यश्चैवं हन्ति यश्चानुहन्ति उभौ

---

कृत्वेति। अव्युत्पत्तिपक्षाश्रयेणाचार्योपदिष्टलृकारः। वार्तिककारस्तु व्युत्पत्तिपक्षाश्रयणेन प्रत्याचष्टे समाने चेति। इह च भिन्नार्थत्वं, लृतकशब्दो हि यदा संज्ञात्वेन विनियुज्यते क्व चित् पिण्डे तदा तच्छब्दरूपाध्यासः ऋतके तु विपर्ययः भिन्नस्वरूपौ चेतौ शब्दौ इति भावः। पक्षान्तरैरपीति। यथा द्रव्यपक्षे सरूपाणामित्यस्यारम्भः जातिपक्षे तु प्रत्याख्यानं एवमस्यापीत्यर्थः। अव्युत्पन्नसंज्ञाशब्दपक्षेपि पारम्पर्यागताः शिष्टप्रयुक्ता एव संज्ञाः कर्तव्याः। प्रयोजनान्तरमपि वार्तिककारः प्रत्याचष्टे अनुकरणमिति। अनुकार्यस्य दुष्टत्वात् अनुकरणस्यापि दुष्टत्वं मन्यते सुरापानानुकरणवत्। विषम इति। न ह्यनुकार्यस्य दोषेणानुकरणस्य दुष्टत्वमिति दर्शयति। यश्चेति। विहितक-

---

भाष्ये उपपादयिष्यते। अव्युत्पत्तीति। सञ्ज्ञाशब्दा अव्युत्पन्ना इति पक्षाश्रयणेनेत्यर्थः। आचार्येणेति। शिवो वेदपुरुषो वात्राचार्यः। एवञ्च यदृच्छाशब्दसद्भावाश्रयेण प्रयोजनं उक्तं तदनाश्रयणेन तत्प्रयोजननिराकरणमयुक्तमिति भावः। ऋतकशब्द लृतकशब्दस्य साधुत्वाभावकल्पक इत्याद्यं दूषणमप्ययुक्तमित्याह। भाष्ये [ समाने चेति ] तत्रार्थशब्दः प्रवृत्तिनिमित्ताभिप्राय इत्याह इह चेति। तच्छब्दस्वरूपस्य व्यक्तिस्वरूपस्य वार्थे प्रवृत्तिनिमित्तत्वेनाध्यास इत्यर्थः। विपर्ययइति। क्रियाप्रवृत्तिनिमित्तमित्यर्थः। भिन्नस्वरूपौ। भिन्नप्रवृत्तिनिमित्तौ। यदि तु ऋतकोपि शब्दप्रवृत्तिनिमित्तविपर्ययः। व्यक्तेरेव प्रवृत्तिनिमित्तत्वमिति पक्षे ऋतकसङ्केतविषयव्यक्तेर्लृतकसङ्केतविषयव्यक्तिर्भिन्नैवेति तद्विपर्ययोस्त्येवेति बोध्यम्। भाष्ये समाधत्ते। [ पक्षान्तरैरपीति ]। जातिपक्षे त्विति। यत्तु अक्षादीनानार्थानामेकशेषाय तत्पक्षेप्यावश्यकमिति तत्तु जातिगतजातिस्वीकारेण परिहृतम्। पक्षन्तैरापि परिहारा भवन्तीति वार्त्तिककृतैवमुक्तम्। वस्तुतश्चतुष्टयीपक्षेपि दोषपरिहारः सुकरः। यदुक्तम्। ऋतको न लृतकनिवर्त्तक इति मा भूत्तस्य निवर्त्तकत्वं, शिष्टप्रयोगाभावात्तु तन्निवृत्तिः। न्याय्यत्वमपि वार्त्तिके शिष्टप्रयुक्तत्वमेवेत्यभिसन्धाय भगवतानुक्तमपि स्वयं मन्दबुध्यनुग्रहाय स्फुटमाह अव्युत्पन्नेति। पारम्पर्यायाताः। अनादयः। एवञ्च शिष्टाप्रयुक्तयदृच्छाशब्दा असाधुत्वेन शास्त्राविषया इति भाष्यतात्पर्यम्। यत्तु चतुष्टयीति पक्षे लृतकादीनां डित्थादिवच्छास्त्रविषय-

इति यदृच्छाशब्दनिराकरणम् ॥

तौ हतः । यश्चापि पिबति यश्चानुपिबति उभौ तौ पिबतः । यस्तु खल्वेवमसौ ब्राह्मणं हन्ति एवमसौ सुरां वा पिबतीति तस्यानुकुर्वन् स्नातानुलिप्तो माल्यगुणकण्ठः कदलीस्तम्भं छिन्द्यात्पयो वा पिबेत् न स मन्ये पतितः स्यात् । एवमिहापि य एवमसावपशब्दं प्रयुङ्क्ते इति तस्यानुकुर्वन्नपशब्दं प्रयुञ्जीत सोऽप्यपशब्दभाक् स्यात् । अयं त्वन्योपशब्दपदार्थकः शब्दो यदर्थ उपदेशः कर्तव्यः । न चापशब्दपदार्थकः शब्दोपशब्दो भवति । अवश्यं चैतदेवं विज्ञेयम् । यो हि मन्यतेऽपशब्दपदार्थकः शब्दोपशब्दो भवतीति । अपशब्द इत्येव तस्यापशब्दः स्यात् । न चैषोपशब्दः । अयं खल्वपि भूयोनुकरणशब्दोऽपरिहार्यः यदर्थ उपदेशः कर्तव्यः । साध्वॢकारमधीते मध्वॢकारमधीतइति । कस्थस्य पुनरेतदनुकरणम् । क्ᳵपिस्थस्य । यदि क्ᳵपिस्थस्य । क्लृपेश्च लत्वमासिद्धं तस्यासिद्धत्वादृकारएवा-

---

रणाद्धर्मोत्पत्तिः प्रतिषिद्धाचरणाच्चाधर्मोत्पत्तिः । न त्वनुमानेन धर्माधर्मयोर्व्यवस्थितिं मन्यते । सुरापानादौ तु तस्या एव क्रियाया अनुष्ठानात्सादृश्याभावान्नास्त्यनुकरणत्वम् । दानादीनां स्मार्तत्वाल्लौकिकत्वमुच्यते । स्नातानुलिप्त इति । स्वस्थचित्तत्वं दर्शयति । अस्वस्थेन हि चित्तेन अकार्यं क्रियते । माल्यगुणकण्ठ इति । लोकमध्ये प्रकाशते इत्यर्थः । अकार्यं ह्यप्रकाशं क्रियते । तत्र लृतकशब्दोपि यदा ऋतकार्थे प्रयुज्यते तदापशब्दः । यदा त्वनुकार्यं प्रत्याययति यदा साधुरेव । अर्थभेदात् । अस्वगोण्यादिवत् । अपशब्द इत्येवेति । अस्य हि गाव्यादयोऽपभ्रंशा वाच्याः । अयमिति । असाधोरनुकरणमित्येतदप्यत्र नास्तीति भावः । भवेदिति । प्रयोगस्थस्यदेमनु-

---

त्वमेवेत्यस्माद्भाष्याल्लभ्यत इति, तन्न पक्षभेदेनैकस्य शास्त्राविषयत्वतदविषयत्वाङ्गीकारे नवेति सूत्रस्य भाष्यविरोधात् । टिघुभादीनां पाणिन्यादिशिष्टप्रयुक्तत्वेन साधुत्वाच्छास्त्रविषयत्वेपि अन्येषान्तद्विषयत्वे मानाभावाच्च । किं च साध्वसाधुबहिर्भूतानामपि शास्त्रविषयत्वे साध्वनुशासनेऽस्मिन् शास्त्रे इति तत्र तत्र भाष्योक्त्यसङ्गतिः । किं च शास्त्रविषयत्वमथ तदुच्यङ्गसाधुत्वाभाव इत्यशक्यमिति दिक् । अनुकरणं शिष्टस्य वा अशिष्टाप्रतिषिद्धस्य वा भवति तत्राद्यं साधु अन्त्ये न दोषाय नाप्यभ्युदयायेति भाष्येऽन्वयः । अर्थात्प्रतिषिद्धानुकरणस्य दुष्टत्वं बोध्यम् । ननु शिष्टानुकरणं नासाधु अशिष्टाप्रतिषिद्धस्य वा नासाधु । आद्यस्याभ्युदयजनकत्वाद् अन्त्यस्याभ्युदयाजनकत्वेपि दोषाजनकत्वात् । एवञ्च प्रकृते किमायातमत आह अनुकार्यस्य दुष्टत्वादिति । अर्थलब्धं तदादाय प्रकृतोपयोग इत्यर्थः । अत एव भाष्ये तद्दृष्टान्तेनोपपादयिष्यति । [ यस्तु खल्विति ] । एवञ्चासाध्वनुकरणस्यासाधुत्वाच्छास्त्राविषयत्वात्तदर्थता लृकारोपदेशस्य न युज्यत इति भावः । भाष्ये [ यजेत वेति ] । यागोऽत्र स्मार्तो ग्राह्यः । सादृश्याभावादिति । न चैकजातीयेष्वपि व्यक्तिभेदेन सादृश्यसम्भवः । सुरापानत्वादेरेव तादृशस्थले सादृश्येन तदतिरिक्तसादृश्याभावादित्याशयात्तदाह नास्त्येवेति । दानादीनां कथं लौकिकत्वेनोपन्यासोऽतआह । स्मार्तत्वादिति । अस्वस्थेनेति । आस्तिकत्वे सत्यपीति भावः । माल्यगुणकण्ठ इति । मालायां साधूनि माल्यानि पुष्पाणि तैर्युक्तो गुणः सूत्रं कण्ठे यस्येत्यर्थः । गड्वादित्वात्परनिपातः । अकार्यं हीति । इह लोके भीरुरित्यर्थः । भाष्ये प्रयोजनप्रत्याख्यानवादी शङ्कते । [ एवमिहापीति ] । प्रयोजनवादी समाधत्ते । [ अयन्त्वन्यइति ] अर्थभेदेन साधुत्वे दृष्टान्तमाह अस्येति । अस्य हीति । एवञ्च तत्तदर्थे व्याकरणाननुगतत्वमपशब्दत्वमिति भावः । भाष्ये तुल्यतुर्जनन्यायेन साध्वनुकरणार्थत्वमॢकारोपदेशस्याह । [ अयं खल्वपीति ] । यद्यप्यर्थशून्यवर्णानां न साधुत्वं तथापि वर्णसंस्कारविधानेन तेषां साधुत्वमिति भावः । भवेत्तदर्थेनेति । तदर्थेन क्लृपिस्थलृकारार्थेन लृकार-

च्कार्याणि भविष्यन्ति । भवेत्तदर्थेन नार्थः स्यात् । अयं त्वन्यः क्लृपिस्थपदार्थकः शब्दः यदर्थ उपदेशः कर्तव्यः । न कर्तव्यः । इदमवश्यं कर्तव्यम् । प्रकृतिवदनुकरणं भवतीति । किं प्रयोजनम् । द्विः पचन्त्वित्याह । तिङ्ङतिङ इति निघातो यथा स्यात् । अग्नी इत्याह । ईदूदेद् द्विवचनं प्रगृह्यसंज्ञा भवतीति प्रगृह्यसंज्ञा यथा स्यात् । यदि प्रकृतिवदनुकरणं भवतीत्युच्यते । अपशब्द एवासौ भवति कुमार्य् लृतक इत्याह ब्राह्मणय्लृतक इत्याह । अपशब्दो ह्यस्य प्रकृतिः । न चापशब्दः प्रकृतिः । न ह्यपशब्दा उपदिश्यन्ते । न चानुपदिष्टा प्रकृतिरस्ति ॥ एकदेशविकृतस्यानन्यत्वात्प्लुत्यादयः ॥ एकदेशविकृतमनन्यवद् भवतीति प्लुत्यादयोऽपि भविष्यन्ति । यद्येकदेशविकृतमनन्यवद् भवतीत्युच्यते । राज्ञः क च । राजकीयम् । अल्लोपोन इति लोपः प्राप्नोति । एकदेशविकृतमनन्यवत् षष्ठीनिर्दिष्टस्य । यदि षष्ठीनिर्दिष्टस्येत्युच्यते,

---

करणम् । प्रयोगे च नास्ति पूर्वत्रासिद्धमिति भावः । प्रकृतिवदिति । तत्र यथा लृक्पेर्लत्वस्यासिद्धत्वादृकारद्वारेण लृकारस्याच्कार्यं तथानुकरणस्यापीत्यर्थः । द्विरिति । पचन्तु पचन्त्विति केन चिदुक्ते द्विःपचन्त्वित्यनुकरणम् । एतच्च क्रियासाधनाद्यनभिधानात्तिङन्तं न भवति । एवमग्नी इत्यनुकरणं द्व्यर्थानभिधानान्न द्विवचनान्तम् । ननु गम्लृ सृप्लृ इत्यादिस्थस्य यदानुकरणं तदा कथं प्रकृतिवद्भावः । द्युताद्य्लृदित इति लृकारे परतो यणादेशकरणादित्संज्ञानुवादाच्च धात्वनुबन्धस्य लृकारस्याच्कार्याण्यनुमीयन्ते । ततस्तदनुकरणस्य सिद्धः प्रकृतिवद्भावः न चापशब्द इति । सिद्धान्तवादी प्रकरणाद्धि शास्त्रीयप्रकृतिराश्रीयते । शास्त्रनिबन्धनं च कार्यमतिदिश्यते । अपशब्दश्च न शास्त्रीया प्रकृतिरनुपदिष्टत्वात् । न चापशब्दत्वं शास्त्रीयं कार्यं नापि तदतिदेष्टुं शक्यम् । न हि साधोरसाधुत्वातिदेशो युक्तिमान् । एवं भाष्यकारेणाशक्तिजानुकरणार्थत्वम्लृकारोपदेशस्य स्थापितम् एकदेशविकृतस्येति । ऋकाररेफभागस्य ले कृते स एव ऋकार इति प्रत्यभिज्ञानादिति भावः । षष्ठीनिर्दिष्टस्येति । राज्ञः क चेत्यत्र राजन्शब्दः षष्ठीनिर्दिष्टः न त्वन् इति लोपा-

---

स्योपदेशाभावे प्रयोजनं न भवति । एवं यद्यपि भवेत्तथापि तदनुकरणार्थेनार्थ इत्यर्थः । ननु क्लृपिस्थस्यासिद्धत्वात्कथं तदनुकरणमत आह प्रयोगस्थस्येति । प्रयोगे अनुकरणप्रयोगे शास्त्रे तदीयकार्ये वा ऽसिद्धत्वं पौर्वापर्यस्य तत्रैव संभवान्न चैवं प्रकृत इति भावः । ऋकारद्वारेणेति । ऋकारबुद्ध्येत्यर्थः । भाष्ये ( द्विः पचन्त्विति ) पचन्त्विति द्विराहेत्यन्वयः । असत्यतिदेशे तिङन्तत्वाभावे हेतुमाह एतच्चेति । द्व्यर्थेति । एतदर्थमेव द्विवचनमित्यन्वर्थसञ्ज्ञाकरणम् । नन्विति । एवञ्च पाठाभावे मूलस्यैवाच्त्वाभावात्कथं तदनुकरणेऽच्कार्यमिति तदर्थउपदेश आवश्यक इति भावः । अनुमीयन्त इति । इदं चिन्त्यम् । आनुमानिकवचनेन कृतस्य वर्णस्य प्रत्याख्यानायोगात् । तस्माद्गम्ल इत्यादिस्थल्कारो धर्माजनकत्वान्न साधुरिति वक्तुं युक्तम् । एवञ्चाशक्तिजानुकारणेति वार्त्तिके ऽशक्तिजपदं व्यर्थमिति कैयटतात्पर्यम् । एवं साध्वनुकरणार्थत्वे लृकारोपदेशस्य प्रकृतिवदित्याश्रयणेन खण्डिते तेनैवाशक्तिजानुकरणार्थत्वमपि खण्डयति पूर्वपक्षी । भाष्ये ( यदि प्रकृतिवदिति ) । ननु मा भूदपशब्दोपदेशः प्रकृतित्वन्तु कथं नेत्यत आह प्रकरणादिति । अतिदेशस्य शास्त्रीयत्वमनेन दर्श्यते । तत्र च प्रत्यासत्त्या शास्त्रीयप्रकृत्यादेरेव ग्रहणमुचितमिति भावः । उपलक्षणं भाष्यमित्याह शास्त्रनिबन्धनं चेति । नापि तदतिदेष्टुमित्यादि चिन्त्यम् । अब्राह्मणे । ब्राह्मणस्याप्यतिदेशवत्त्वं भवादिति काश्चित् । तदेवमिति । अशक्तिजस्य शास्त्रीयप्रकृतित्वाभावान्न तदनुकरणे ऽतिदेशप्रवृत्तिरित्यपशब्दस्याभावाच्कार्यासिध्यर्थम् लृकारोपदेश इत्यर्थः । इदानीं प्लुत्याद्यर्थत्वं तस्य परिहरति । भाष्ये [ एकदेशेति ] । रेफ-

क्लृ३ प्तशिख इति प्लुतो न प्राप्नोति, न ह्यत्र ऋकारः षष्ठीनिर्दिष्टः । कस्तर्हि ? रेफः । ऋकारोप्यत्र षष्ठीनिर्दिष्टः । कथम् । अविभक्तिको निर्देशः । कृप उः रः लः कृपो रो ल इति । अथ वा पुनरस्तु अविशेषेण । ननु चोक्तं राज्ञः क च राजकीयम् । अल्लोपोन इति प्राप्नोतीति । नैष दोषः । वक्ष्यत्येतत् श्वादीनां संप्रसारणे नकारान्तस्य ग्रहणमनकारान्तप्रतिषेधार्थमिति । तत्प्रकृतमुत्तरत्रानुवर्तिष्यते । अल्लोपोनः नकारान्तस्येति । इह तर्हि क्लृ ३ प्तशिखः । अनृत इति प्रतिषेधः प्राप्नोति । रवत्प्रतिषेधाच्च । रवत्प्रतिषेधाच्चैतत्सिध्यति । गुरोररवत इति वक्ष्यामि । यद्यरवत इत्युच्यते । होतृ ऋकारः होतृ ३ कारः । अत्र न प्राप्नोति । गुरोररवतः ह्रस्वस्येति वक्ष्यामि । स एष सूत्रभेदेन लृकारोपदेशः प्लुत्याद्यर्थः सन् प्रत्याख्यायते सैषा महतो वंशस्तम्बाल्लट्वानुकृष्यते ॥

---

भावः । यद्येवं कृपो रो ल इत्यत्रापि ऋकारः षष्ठ्या न निर्दिष्ट इत्यनन्यत्वं न प्राप्नोतीत्याह यदीति । अथ वेति । षष्ठीनिर्दिष्टस्येति नापेक्ष्यते । नकारान्तस्येति । न च राजन्शब्दः कादेशे कृते नकारान्तो भवति श्वेव पुच्छे छिन्ने न पुच्छवानिति भावः । अरवत इति । रोस्यास्ति नित्यमिति नित्ययोगे मतुप् । तेन ऋकार एव रवान् न तु वर्तक इत्यादावकारः । न रवान् अरवानिति समासः । नित्ययोगप्रतिपादनाय बहुव्रीहिर्न कृतो गुरोररस्येति । ह्रस्वस्येति । तेन ह्रस्वस्यैव रवतः प्लुतनिषेधो न दीर्घस्य । वार्तिककारस्य लृकारप्रत्याख्यानं निष्प्रयोजनमित्याह सैषेतिः ॥२॥

---

भागस्येति । वर्णैकदेशा वर्णग्रहणेन गृह्यन्त इति पक्षे इत्यर्थः । प्रत्यभिज्ञानादिति । एवञ्च छिन्नपुच्छश्वदृष्टान्तेन लोकन्यायसिद्धमस्य ऋत्वमित्यर्थः । व्याख्यानभाष्ये [अनन्यवद्] इत्यस्यान्यवन्नेत्यर्थः । अन्यसादृश्यस्यापि निषेधे तत्त्वं दृढीकृतम् । सिद्धान्त्येकदेशी वर्तिं दृष्ट्वा स्थानिवत्सूत्रमनेनोपन्यस्तमित्याशयेनाह षष्ठीनिर्दिष्टस्येति । तत्संबन्ध्येकदेशविकृतमादेशरूपमित्यर्थः । नन्वल्लोपो न इत्यत्रानापि षष्ठीनिर्दिष्ट एवेत्यत आह राज्ञइति । येन विकारेण यस्य विकृतस्य स्वरूपमेकदेशविकृतन्यायेन प्राप्यते तद्रूपावच्छिन्नस्य तेन रूपेण तद्विकारविधौ षष्ठीनिर्दिष्टस्येति तदर्थ इति भावः । भाष्ये [ प्लुतो न प्राप्नोतीति ] । द्विर्वचनादेरप्युलक्षणम् । कस्तर्हि रेफ इति स्ववयवषष्ठीति भावः । कृपेरेफस्य लस्तदवयवऋकारस्य च लृकारघटित आदेश इत्यर्थः । स्थानिनिर्देश एव तादृशादेशकल्पक इति भावः । एतेन तस्यावयवषष्ठ्यन्तत्वेन स्थानषष्ठीनिर्दिष्टत्वाभावादिदं चिन्त्यमित्यपास्तम् । ननु स्थानिवत्सूत्रे हि तथा, प्रकृते च न तेनातिदेश उच्यते । किं तु छिन्नपुच्छश्वदृष्टान्तेन प्रत्यभिज्ञया ऽनन्यत्वमुच्यते तत्र षष्ठीनिर्दिष्टस्येति वक्तुमेवाशक्यमित्याशयेनाह । भाष्ये (अथवेति) ननु आदेशनूत्वमेवकदेशविकृतन्यायेन नकारान्तत्वमपि कुतो नेत्यत आह न च राजानिति । एकदेशपदेन ससंबन्धिकतयोपस्थितावयविधर्म एव विकारविशिष्टे आरोप्यते न स्ववयव एव लोकव्यवहारादिति भावः । भाष्ये (इह तर्हीति) । एकदेशविकृतन्यायेन ऋत्वादिति भावः । रोस्यास्तीति । इदं चिन्त्यम् । तदवयवाद्यवेव मत्वर्थो नानन्तराशविति वर्तक इत्यादौ रवत्वस्योपपादयितुमशक्यत्वान्नित्ययोगपर्यन्तधावनफलमिति । भाष्ये (सएष इति) । प्लुत्याद्यर्थं विद्यमानलृकारोपदेशो ऽरवतो ह्रस्वस्येति गुरुन्यासरूपसूत्रभेदेन प्रत्याख्यायत इति यत्तदयुक्तमित्यर्थः । कुत इत्यत आह । सैषेति । यतः सैषा प्रत्याख्यानात्मिका उक्तिर्महतो वंशस्तम्बाल्लट्वानुकर्षाभिन्नेत्युक्ते यथा महतो वंशस्तम्बाल्लट्वानुकर्षणमयुक्तमेवम् लृकारप्रत्याख्यानमिति गम्यते । तदाह । निष्प्रयोजनमिति । सूत्रभेदपरिकल्पनं विना क्लृप्तशिखे प्लुतसाधनस्याशक्यत्वान्निष्प्रयोजनमित्यर्थः । वंशस्तम्बादिति । ल्यब्लोपे पञ्चमी । तमपलभ्येत्यर्थः । लट्वा पक्षिविशेषः फलविशेषो वा । तथ्यर्थं बह्वायाससाध्यमल्पफलं न युक्तं तथा लृकारोपदेशप्रत्याख्यानमपीत्यर्थः ॥२॥

एओङ्॥३॥ ऐऔच्॥४॥ इदं विचार्यते। इमानि सन्ध्यक्षराणि तपराणि वोपदिश्येरन्। एत् ओतङ्। ऐत् औत् च् इति। अतपराणि वा यथान्यासमिति। कश्चात्र विशेषः। सन्ध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणम् *सन्ध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणं कर्तव्यम्। प्लुत्यादिष्वज्विधिः *। प्लुत्यादिष्वजाश्रयो विधिर्न सिध्यति। गो३ त्रात नौ३ त्रात इत्यत्रानचि च अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं न प्राप्नोति। इह प्रत्यङ्ङै३ तिकायन उदङ्ङौ३ पगव इति अचीति ङमुडागमो न प्राप्नोति। प्लुतसंज्ञा च *। प्लुतसंज्ञा च न सिध्यति। ऐ ३ तिकायन। औ ३ पगव। ऊकालोज् ह्रस्वदीर्घप्लुतसंज्ञा भवतीति प्लुतसंज्ञा न प्राप्नोति। सन्तु तर्ह्यतपराणि। अतपरएच इग्घ्रस्वादेशे *। यद्यतपराणि एच इग्घ्रस्वादेशइति वक्तव्यम्। किं प्रयोजनम्। एचो ह्रस्वादेशशासनेष्वर्द्ध एकारोऽर्द्ध ओकारो वा मा भूदिति। ननु च यस्यापि तपराणि तेनाप्येतद्वक्तव्यम्। इमावैचौ समाहारवर्णौ मात्रावर्णस्य मात्रेवर्णोवर्णयोः तयोर्ह्रस्वादेशशासनेषु कदा चिदवर्णः स्यात् कदाचिदिवर्णोवर्णौ, मा

---

एओङ्॥ ऐऔच्॥ इदं विचार्यते इति। तपरातपरसन्ध्यक्षरोपदेशो विचार्यते इत्यर्थः। तत्रोपदिश्येरन्नित्यत्रासत्त्वभूता यद्यपि क्रियाभिधीयते तथापि बुद्ध्या परामृष्टा सत्त्वरूपतामापादिता विचारक्रियायां कर्मभावमनुभवति। यथा पश्य मृगो धावतीति सरणं दर्शने। कश्चात्रेति। कार्ये को विशेष इति प्रश्नः। तपरोपदेशश्चेदिति। यद्यप्युपदेश उच्चारणं तथापि तपरोपदेशफलं चेदस्ति ततस्तपरोच्चारणं कर्तव्यमित्यर्थः। सन्ध्यक्षराणीत्यन्वर्था पूर्वाचार्यसंज्ञा सन्धीयमानावयवत्वात्। प्लुत्यादिष्विति। प्लुतमभ्युपगम्याच्कार्याणि न सिध्यन्तीत्युच्यते। प्लुत एव न प्राप्नोतीति दर्शयितुमाह प्लुतसंज्ञा चेति। त्रिमात्रस्याचः प्लुतसंज्ञा विधीयते तपरत्वे च त्रिमात्रस्याग्रहणादच्त्वाभावः तत्रैचां प्लुतो विधीयमान इकारोकाराभ्यां गृहीत ईकार ऊकारश्च स्यात्। अतपर इति। असतर्हि तपरत्वे एकारौकाराभ्यां मात्रिकयोरर्द्धैकाराद्धौकारयोर्ग्रहणादच्त्वाद्ध्रस्वत्वाद्विधानं स्यादिति सूत्रं कर्तव्यम्। तपरत्वे तु तयोरग्रहणात्प्राप्त्यभावः। ननु चेति। सूत्रारम्भं प्रति न कश्चिद्विशेष इत्यर्थः। अतपरत्वे एच इति वक्तव्यं तपरत्वे त्वैच इति। ऐचोर्विश्लिष्टावर्णत्वात्संश्लिष्टावर्णावर्द्ध एकारोऽर्द्ध

---

ऐओङ्॥३॥ ऐऔच्॥४॥ विचार्यत इति। कृत्स्नाचिन्तान्यायेनायं विचार इति बोध्यम्। इदंपदार्थमाह। तपरेति। असत्त्वभूतेति। एवञ्चेदमा परामर्शोऽनुपपन्न इति भावः। बुद्ध्या परामृष्टेति। उपदेशपदार्थभूतेत्यर्थः। कर्मभावमिति। इदंपदवाच्यत्वेनेति भावः। यथेति। इदं चिन्त्यम्। सकर्तृकर्मेतरकारकाभाववत्त्वस्यैवासत्त्वपदार्थत्वात्। पक्षद्वये स्वरूपवैलक्षण्यस्यानुभवसिद्धत्वेन तद्विषयः प्रश्नो ऽनुचितो ऽतआह कार्ये इति। भेदाभावादुद्देश्यविधेयभावोऽनुपपन्न इत्याशङ्क्य परिहरति यद्यपीत्यादि। फलञ्चेदिति। संप्रदाने घञिति भावः। फलस्यैव करणत्वविवक्षया करणे घञित्यन्ये। सन्धीयमानावयवत्वादिति। अइउणिति शिष्यमाणवर्णसदृशावयवसन्धानेनास्य निष्पन्नत्वादित्यर्थः। भाष्ये प्लुतिग्रहणं त्रिमात्रपरम्। आदिना चतुर्मात्रग्रहणम्। नन्वीमभ्यादाने इत्यादिनान्तरतमपरिभाषासंस्कृतेनैज्रूपप्लुतविधानादनच्त्वेपि तेषां प्लुतसंज्ञा भविष्यतीत्यत आह तत्रैचामिति। ताभ्यामपि तेषां यथाकथंचिदान्तरतम्यसत्त्वादिति भावः। भाष्ये (अर्धएकार इति) मात्रिकत्वेनार्धत्वम्। समांशवाचिनोपि पुंस्त्वमेतद्भाष्यप्रामाण्यात्। भाष्ये [तेनाप्येतद्वक्तव्यम्] इत्यत्र एतच्छब्देन नियामकं सूत्रं परामृश्यते सूत्रन्यायभेदेपि गुरुलाघवतो विशेषो नास्तीत्याह सूत्रारम्भं

कदा चिदवर्णो भूदिति । प्रत्याख्यायते एतत् । ऐचोश्चोत्तरभूयस्त्वादिति । यदि प्रत्याख्यानपक्षः इदमपि प्रत्याख्यायते सिद्धमेङः सस्थानत्वादिति । ननु चैङः सस्थानतरावर्द्ध एकारो ऽर्द्ध ओकारः । न तौ स्तः । यदि हि तौ स्यातां तावेवाय-मुपदिशेत् । ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्द्धमेकारमर्द्धमोकारं चाधीयते । सुजाते ए अश्व सूनृते । अध्वर्यो ओ अद्रिभिः सुतम् । शुक्रं ते ए अ-न्यद्यजतं ते ए अन्यदिति । पारिषदकृतिरेषा तत्रभवतां नैव हि लोके नान्यस्मिन् वेदे ऽर्द्ध एकारोऽर्द्ध ओकारो वास्ति । एकादेशे दीर्घग्रहणम् * । एकादेशे दीर्घग्र-हणं कर्तव्यम् । आद्गुणो दीर्घो वृद्धिरेचि दीर्घ इति । किं प्रयोजनम् । आन्तर्य-तस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति । खट्वा इन्द्रः खट्वेन्द्रः, खट्वा उदकं खट्वोदकं, खट्वा ईषा खट्वेषा, खट्वा ऊढा खट्वोढा, खट्वा एलका खट्वैलका, खट्वा ओदनः खट्वौदनः खट्वा ऐतिकायनः खट्वैतिकायनः, खट्वा औपगवः खट्वौपगव इति । तत्तर्हि दीर्घग्रहणं कर्तव्यम् । न कर्तव्यम् । उपरिष्टाद्योगविभागः करिष्यते । अकः सवर्णे, एको भवति । ततो

---

ओकारो न भवतः । ऐचोश्चेति । अर्द्धमात्रावर्णस्याध्यर्द्धमात्रेवर्णोवर्णयोः । भूयसा च व्यपदेशो मल्लग्रामादिवदितीकारोकारावेव भविष्यतः । सिद्धमेङ इति । अर्द्धैकारार्द्धौ-कारौ न स्तः । तत्र तालव्य एकार ओष्ठ्य ओकार इति तयोः स्थाने इकारोकारावेव भवि-ष्यतः । तावेवेति । ताभ्यामुपदिष्टाभ्यां दीर्घप्लुतयोरपि ग्रहणं सिध्यतीति भावः । गुण-संज्ञायां तु दीर्घावेकारौकारौ निर्देश्यौ । सुजाते इति । अन्तःपानस्थस्याव्यपरस्याकारस्या-र्द्धमेकारमोकारं च विदधति । पारिषदकृतिरिति । गीतिवशात्तथोच्चारणमित्यर्थः । आ-न्तर्यत इति । अन्यस्यासम्भवादिदमत्र नास्ति प्लुतश्च विषये स्मृत इत्यर्थः । अस्येक इति । प्रथमयोरिति सिद्धे एतदपि किमर्थमुच्यते इति चेद् वा छन्दसीत्यत्रानुवृत्त्यर्थम् । तस्मात्

---

प्रतीति । विश्लिष्टानि । उपलभ्यमानत्यर्थः । संश्लिष्टाति । स्पष्टमनुपलभ्यमानत्यर्थः । एवं चेङ्विषये नावर्ण प्राप्तिः अर्धैङोस्तु तपरनिर्देशेऽनच्त्वाद् ह्रस्वत्वमेव नेति भावः । एङोः शुद्धतालव्यत्वमेवेति न तयोः स्थाने ऽवर्णप्राप्तिरिति तत्त्वम् । संश्लिष्टावर्णाविति । कैयटस्याप्यत्रैव तात्पर्यम् । भाष्ये ( प्रत्याख्यायत एतदिति ) । एतत् । एङ्विषयमेच इगिति सूत्रम् । वर्त्तमानसामीप्ये लट् । भूयसा चेति । तद्द्वारकभूयःस्थानसाम्यादित्यर्थः । भाष्ये ( इदमपीति ) । एङ्विषयमपीत्यर्थः । स्थानत्वादिति । इकारोकाराभ्यां समान-स्थानत्वादित्यर्थः । तदाह । तालव्य इति । तालव्य एवेत्यर्थः । इदञ्च मतमष्टमेपि भाष्ये स्पष्टम् । शब्दपरवि-प्रतिषेधेनोत्तरभागसदृश इति विवरणोक्तं तु चिन्त्यम् । अन्तरङ्गत्वेन पूर्वसदृशस्यैवापत्तेः । स्पष्टञ्चेदं नित्यः परयणादेश इत्यादिना ऽचः परस्मिन्नित्यत्र भाष्ये । भाष्ये ( नावेवेति ) । लाघवादिति भावः । ग्रहणमिति । प्रदेशेष्विति शेषः । नन्वेवं मात्रिकयोरेव गुणसंज्ञा स्यादत आह गुणेति । एवमपि अत्र ह्रस्वपाठे ऽर्धमात्रा लाघवं भवति । अकारस्यार्धमिति । सुजाते ए अश्वेति अकारलेखस्तु प्रामादिकः । शास्त्रविशेषाध्यायिनां समवायः परिषत् पर्षद्वा तत्र भवाकृतिरित्यर्थः । तदेवमतपरतपरत्वादिमतसाधारण्येनैच इगितिसूत्रस्य कर्त्तव्यताकर्त्तव्यते उपपाद्यातपरत्वादिमते ऽसाधारणदूषणमाह । भाष्ये ( एकादेशे इति ) एकः पूर्वपरयोर्दीर्घ इतिसूत्रं कार्यमित्यर्थः । संभवादिति । अयं भावः । यथा स्याद्वेरित्यचातपरत्वे स्याद्वोर्दीर्घस्य स्थाने प्रमाद्येत्यत्र दीर्घकारे सिद्धे पुनर्वचनमदीर्घार्थमित्यविशेषाद् ह्रस्वप्लुतयोः प्रसङ्गे तदुक्तं प्लुतश्च विषये इति । एवञ्च दूराद्धूतादिविषये ऽप्यनेनैव प्लुते पक्षेनुवादादोषस्तत्र इह तु प्लुते एव प्राप्नोतीति खट्वा इन्द्र इ-

दीर्घः। दीर्घश्च स भवति यः स एकः पूर्वपरयोरित्येवं निर्दिष्ट इति। इहापि तर्हि प्राप्नोति। पशुं विद्धं पचन्तीति। नैष दोषः। इह तावत्पशुमिति अम्येक इतीयता सिद्धं सोयमेवं सिद्धे सति यत्पूर्वग्रहणं करोति तस्यैतत्प्रयोजनं यथाजातीयकः पूर्वस्तथाजातीयक उभयोर्यथा स्यादिति। विद्धमिति। पूर्वइत्येवानुवर्तते। अथ वा आचार्यप्रवृत्तिर्ज्ञापयति नानेन संप्रसारणस्य दीर्घो भवतीति। यदयं हल उत्तरस्य संप्रसारणस्य दीर्घत्वं शास्ति। पचन्तीत्यतो गुणे पर इतीयता सिद्धं सोयमेवं सिद्धे सति यद्रूपग्रहणं करोति तस्यैतत्प्रयोजनं यथाजातीयकं परस्य रूपं तथाजातीयकमुभयोर्यथा स्यादिति। इह तर्हि खट्वर्श्यो मालर्श्य इति दीर्घवचनादकारो न। अनान्तर्यादैकारौकारौ न। तत्र को दोषः। विगृहीतस्य श्रवणं प्रसज्येत। न ब्रूमो वयं यत्र क्रियमाणे दोषः तत्र कर्तव्यमिति। किं तर्हि। यत्र क्रियमाणे न दोषः तत्र कर्तव्यमिति। क्व च क्रियमाणे न दोषः। संज्ञाविधौ। वृद्धिरादैच् दीर्घः, अदेङ् गुणो दीर्घ इति। तर्त्हि दीर्घग्रहणं कर्तव्यम्। न कर्तव्यम्। कस्मादेवान्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति। तपरे गुणवृद्धी। ननु च तः परो यस्मात्सोयं तपरः। नेत्याह। तादपि परस्तपर इति। यदि तादपि परस्तपरः। ऋदोरवितीहैव स्यात्। यवः स्तवः, लवः पव

---

पूर्वश्रुतिः पूर्वरूपार्थो सैवोत्तरत्रानुवर्त्ततइति सिद्धमिति पूर्वरूपं भविष्यति। अथ वेति। विधिनियमसंभवे विधिरेव बलीयानिति विधेर्बलीयस्त्वान्नियमो न भवति हल एव दीर्घत्वं यथा स्यादु उत इत्यादौ मा भूदिति। तपरे इति। तपरसंज्ञिसहचरिते गुणवृद्धिसंज्ञे इत्यर्थः। तादपीति। तन्त्रन्यायाश्रयणादेकस्यैव द्विशक्तित्वादेकशेषाश्रयणाद्वाऽनेकार्थाभिधानमिति भावः। बहुव्रीहिवादी चोदयति किं दकारइति। समासद्वयवादी तं प्रत्याह अथ किं तकारे इति। तव केवलबहुव्रीहिवादिनो निष्प्रयोजनं तपरत्वम्। ऋकारस्यानणत्वाद्भिन्नकालानां ग्रहणाप्रसङ्गाद् गुणानां चाभेदकत्वात्तत्पर्याप्त्यर्थत्वाभावात्। अथ तवाऽसन्देहार्थो मुखसुखार्थो वा तकार एवं मम दकार इत्यर्थः। तित्स्वरितमित्यत्रत्य भाष्येणास्य विरोधः। तत्र हि तिति प्रत्ययग्रहणं चोदितम्। इह मा भूत् दिव उत् द्युभ्यामिति।

---

स्यादिविषयकशास्त्रेवैयर्थ्यमेवेत्यनुवादोषः सोढव्य एवेति वैषम्यामिति। भाष्ये यः स इति प्रसिद्धपर्यंकम्। वा छन्दसीत्यत्रेति। वा छन्दसीत्यस्यात्रानुवृत्त्यर्थमित्यर्थः। पूर्वरूपार्थेति। पूर्वव्यक्तघात्मकपूर्वरूपार्थेत्यर्थः। भाष्ये [ पर इतीयतेति ] ह्रस्वत्वाविरूपमिति भावः। सिद्धान्ते तु रूपग्रहणं स्पष्टार्थमेव अस्य भाष्यस्य पूर्वपक्षयुक्तित्वात्। अकारो नेति। रपरत्वेपि द्विमात्रस्वरूपदीर्घत्वासंभव एव। विगृहीतस्येति। दीर्घश्रुतिपरिभाषयोर्विरोधेन जातिपक्षे व्यक्तिपक्षे वा तद्विषयकलक्षणानुपप्लवादिति भावः। ननु गुणवृद्धिसंज्ञयो स्तपरत्वाभावात्पूर्वोक्तदोषापरिहृतेश्च भाष्यमयुक्तमित्याशङ्क्याह तपरसञ्ज्ञीति। तपरशब्दानिर्दिष्टसञ्ज्ञिनि गुणवृद्धिसञ्ज्ञे प्रवर्त्तेते इत्यर्थः। एवञ्च त्रिमात्रादीनां तत्र सञ्ज्ञितया ऽनिर्देशान्नोक्तदोष इति भावः। भाष्ये ( ननु नेति। ) एवञ्चैङैचौ न तपराविति भावः। नेत्याहेति। स एव तपर इति नेत्याहेत्यर्थः।

इत्यत्र न स्यात्। नैष तकारः। कस्तर्हि दकारः। किं दकारे प्रयोजनम्। अथ किं तकारे। यद्यसन्देहार्थस्तकारः दकारोपि। अथ मुखसुखार्थस्तकारः दकारोपीति इदं विचार्यते। य एतेषु वर्णेषु वर्णैकदेशा वर्णान्तरसमानाकृतय एतेषामवयवग्रहणेन ग्रहणं स्याद्वा न वेति। कुतः पुनरियं विचारणा। इह हि समुदाया

---

ततो दित्वाश्रयणेन प्रत्याख्यातम्। तपरसूत्रे दकारश्चर्त्वभूतो निर्दिश्यते तेन तत्कालस्य ग्राहको दकार इत्युक्तम्। इह च दकाराभ्युपगमेन लवादिषु दोषः परिहृतः। अत्राहुः। थकारस्थानिको धकारस्थानिको वा दकारोत्र विवक्षितः। कस्तर्हि दकार इति। वर्णान्तरसमानाकृतय इति। आकारादिष्वकारादिसदृशावयवा ऋकारलृकारयोरेफलकारसदृशावयवौ। संध्यक्षरेष्वकारेकारोकारसदृशाः। तत्र केवलवर्णकार्यमवयवेषु भवति न वेति विचारः। इह हि समुदाया अपीति। ऋलृपऐओऐऔ इति। अवयवा अपीति। अइउण्रदूलृणिति। तत्र समुदायपरे निर्देशे सन्निहिता अप्यवयवा नान्तरीयकत्वादेजादिसंज्ञा न लभन्ते। अवयवपरे च निर्देशे समुदायो न संज्ञाभाक्। यथा ह्रयवेत्यादावनच्कस्य हलो दुःखेनोच्चार्यत्वान्निर्दिष्टोप्यकारोन्यत्र प्राधान्येन निर्देशाद्धलादिसंज्ञा न प्रतिपद्यते इति दध्यत्रेत्यादावनच्क एव यणादेशः प्रवर्तते। तत्रासत्यामप्येजादिसंज्ञायामयादयः समुदायादेशा अपि नान्तरीयकत्वादवयवान्निवर्तयन्ति। एवं स्थिते अग्नइन्द्र इत्यादौ यत्रावयवकार्यं प्राप्नोति समुदायकार्यं च तत्रान्तरङ्गत्वात्तत्र च साक्षाच्चोदितत्वात्प्रत्यक्षत्वात्परत्वाच्चावयवकार्यप्रसङ्गः। अवयवावगतिपूर्वकत्वाद्धि समुदायावगमस्य समुदायकार्यं बहिरङ्गम्। अयादीनां चावकाशः। अग्न आयाहीति। नन्वत्र यणादेशो ऽवयवस्य प्राप्नोति। येन नाप्राप्ते इति वा मध्येपवादा इति वा यण एवायादयो बाधकाः स्युः। तत्र यथा दधीन्द्र इत्यत्र दधिशब्दस्थ इकारः सवर्णदीर्घत्वं प्रतिपद्यते एवमेकारस्थोपि प्रतिपद्येत। प्रत्याहारे एओङ् ऐऔजित्यत्रावयवानां प्राधान्येनानिर्देशादित्येवं गृहणपक्षाशङ्काबीजमु-

---

अर्थभेदेन शब्दभेदे तन्त्रन्यायेति। तद्भेदेपि शब्दैक्यपक्षे आह एकस्यैव द्विशक्तित्वादिति। एकशेषेति। समाहारद्वन्द्वविषये एकशेषाभावेनैकवचनानुपपत्त्येदं चिन्त्यम्। मुखसुखार्थ इति पाठे मयूरव्यंसकादित्वात्समासः। ननु एङैजिति सञ्ज्ञायास्तात्परत्वेपि सञ्ज्ञिनामेकारादीनां किमागतमिति चेन्न। तपरशब्दबोध्योपि वर्णस्तत्कालस्यैव सञ्ज्ञेत्यर्थान्न दोषः। गुणानाञ्चेति। अणुत्सु गुणानान्तरत्वाभावेपि अनण्त्वादेव दीर्घादिविषये तत्त्वमिति भावः। ननु दित्वे दिव उदित्यत्र तत्कालग्रहणं न स्यादत आह तपरसूत्रे चेति। इहेति। तपरसूत्रे दकारानाश्रयणेन चेत्यपि बोध्यम्। थकारस्थानिक इति। तस्य चैतद्दृष्ट्या ऽसिद्धत्वान्न तत्र तपरसूत्रप्रवृत्तिरिति भावः। अवयवग्रहणेनावयवसदृशवर्णग्रहणेन ग्रहणं स्यान्न वेति भाष्याशयः। तत्फलितमाह तत्र केवलेति। नन्वकारेण एङवयवग्रहणसन्देहवद् अकारादीनामेङादिसञ्ज्ञा प्राप्नोतीति विचारो ऽपि कुतो नेत्यत आह तत्र समुदायेति। अत एव प्राद्दतीत्यादौ न पररूपम्। तत्र दृष्टान्तमाह अवयवपरे चेति। यथावयवपरे निर्देशे समुदायो न सञ्ज्ञाभाग् एवं समुदायपरे निर्देशे ऽवयवा तद्भाज इत्यर्थः। तदुपपादयति यथेति। अन्यत्रेति। सर्वस्यावयवस्यान्यत्र पृथङ्निर्देशे समुदायनिर्देशः स्वपर एव सर्वस्यावयवस्यान्यत्रानिर्देशे तु समुदायनिर्देशो निर्दिष्टावयवपर इति विवेकः। नन्वेजादिसञ्ज्ञानामवयवावृत्तित्वे कथमेचो निवर्त्तकेनायादिना तदवयवस्य निवृत्तिरत आह तत्रासत्यामपीति। तान्निवृत्तं विना समुदायनिवृत्तेः कर्त्तुमशक्यत्वादिति भावः। अवयवकार्यं दीर्घः समुदायकार्यम् तत्रच साक्षादिति। दीर्घे आयादिकार्ये हि समुदायव्यवधानेनावयवो नोदितो न साक्षादिति भावः। साक्षाच्चोदितत्वं प्रत्यक्षत्वं हेतुः। नन्वयादिरनवकाशो ऽत आह अयादीनामिति। नन्विति। ततश्च विध्यन्तरपूर्वको ऽयादिः सर्वस्य बाधकः

अप्युदिश्यन्ते अवयवा अपि । अभ्यन्तरश्च समुदाये ऽवयवः । तद्यथा । वृत्तः प्रचलन् सहावयवैः प्रचलति । तत्र समुदायस्थस्यावयवस्यावयवग्रहणेन ग्रहणं स्याद्वा न वेति जायते विचारणा । कश्चात्र विशेषः । वर्णैकदेशा वर्णग्रहणेन चेत्सन्ध्यच्चरे समानाच्चरविधिप्रतिषेधः * । वर्णैकदेशा वर्णग्रहणेन चेत्सन्ध्यच्चरे समानाच्चराश्रयो विधिः प्राप्नोति स प्रतिषेध्यः । अग्ने इन्द्र । वायो उदकम् । "अकः सवर्णे दीर्घ" इति दीर्घत्वं प्राप्नोति । दीर्घे ह्रस्वविधिप्रतिषेधः * । दीर्घे ह्रस्वाश्रयो विधिः प्राप्नोति स प्रतिषेध्यः । आलूय । प्रलूय । ह्रस्वस्य पिति कृति तुग्भवतीति तुक् प्राप्नोति । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति न दीर्घे ह्रस्वाश्रयो विधिर्भवतीति । यदयं दीर्घाच्छे तुकं शास्ति । नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् । पदान्ताद्वेति विभाषां वक्ष्यामीति । यत्तर्हि योगविभागं करोति इतरथा हि दीर्घात्पदान्ताद्वेत्येव ब्रूयात् । इह तर्हि खट्वाभिः मालाभिः । अतो भिस ऐसित्यैस्भावः प्राप्नोति । तपरकरणसामर्थ्यान्न भविष्यति । तर्हि याता वाता अतो लोप आर्द्धधातुके इत्यकारलोपः प्राप्नोति । ननु चात्रापि तपरकरणसामर्थ्यादेव न भविष्यति । अस्ति ह्यन्यत्तपरकरणे प्रयोजनम् । किम् । सर्वस्य लोपो मा भूदिति । अथ क्रियमाणे ऽपि तपरे परस्य लोपे कृते पूर्वस्य कस्मान्न भवति । परलोपस्य स्थानिवद्भावादसिद्धत्वाच्च । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति न आकारस्थस्याकारस्य लोपो भवतीति । यदयमातोऽनुपसर्गे क इति ककारमनुबन्धं

---

पन्यस्तम् । इदानीमग्रहणप्रद्धाशङ्कावीजमुपन्यस्यते अभ्यन्तरश्चेति । तिरोहितत्वादवयवानां समुदायकार्ये पारतन्त्र्यात् स्वकार्यस्याप्रयोजकत्वान्नरसिंहवज्जात्यन्तरयोगाद्वर्णान्तरसारूप्यमात्रेण तत्कार्याप्रवर्त्तनादित्यर्थः । समानाक्षरेति । समानशब्देन पूर्वाचार्यनिर्देशादकोऽभिधीयन्ते । दश समाना इति वचनात् । तेन सवर्णकार्यं प्राप्नोतीत्यर्थः । असिद्धत्वाच्चेति । असिद्धवदत्राभादित्यनेन । एतत्प्रयोजनं कितीत्याकारलोपे यथा स्या-

---

स्यादिति भावः । परिहरति येनेति । प्राधान्येनानिर्देशादिति । अस्यैजादिसञ्ज्ञाभावेपि स्वतन्त्राकारेण ग्रहणं स्यादिति शेषः । भाष्ये ( अभ्यन्तरश्चेति ) । तदुच्चारणं विना समुदायोच्चारणस्याशक्यत्वादित्यर्थः । तदाह । तद्यथा वृत्त इति । तदुपपादयति तिरोहितत्वादित्यादिना । समुदायकार्ये पारतन्त्र्यादिति । समुदायसंपादनरूपे कार्ये पारतन्त्र्यादित्यर्थः । स्वकार्यस्याप्रयोजकत्वादिति । स्वकार्यनिरूपितप्रयोजकत्वाभावादित्यर्थः । तत्प्रयोजकत्वाभावे हेतुः । नरसिंहवदिति । तदवयवे नरत्वाद्यभाववदेतदवयवेऽप्यत्वाद्यभाव इति भावः । वचनादिति । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ दश समाना इति पूर्वव्याकरणवचनादित्यर्थः । समानकार्यम् । अग्रूपसमानाच्चरकार्यमित्यर्थः । सवर्णकार्यमिति पाठे सवर्णदीर्घरूपकार्यमित्यर्थः । भाष्ये ( दीर्घाच्छेइति ) : दीर्घस्य च्छे तुगिति हि तदर्थः । ननु ह्रस्वस्येत्यत्राच्च इत्येव सिद्धे ह्रस्वग्रहणसामर्थ्यादेव तुग्नेति चेन्न । पदलाघवाभावादित्याशयात् । अस्ति हीति । तत्र दीर्घादित्यस्याभावे कुडङ्गच्छायेत्यादावपि विकल्पः स्यादिति भावः । असिद्धवदिति । चिणोलुङ्न्यायेनेति भावः । भाष्ये ( उत्तरार्थमेतादिति ) इह किंचिन्नपो इतीति न्यायस्तु नाश्रितः । अत्र केवलाकारोच्चारणे उभयत्र

करोति । कथं कृत्वा ज्ञापकम्। कित्करणे एतत्प्रयोजनं कितीत्याकारलोपो यथा स्यादिति । यद्याकारस्थस्याकारस्य लोपः स्यात् कित्करणमनर्थकं स्यात् । परस्य अकारस्य लोपे कृते द्वयोरकारयोः पररूपे हि सिद्धं रूपं स्याद् गोदः कम्बलद इति । पश्यति त्वाचार्यो नाकारस्थस्याकारस्य लोपः स्यादिति '। अतः ककार-मनुबन्धं करोति । नैतदस्ति ज्ञापकम् । उत्तरार्थमेतत्स्यात् तुन्दशोकयोः परिमृजा-पनुदोरिति । यत्तर्हि गापोष्टगित्यनन्यार्थककारमनुबन्धं करोति । एकवर्णवच्च*। एकवर्णवच्च दीर्घो भवतीति वक्तव्यम्। किं प्रयोजनम् ।वाचा तरतीति द्व्यज्लक्षणः ष्ठन्मा भूदिति । इह च वाचो निमित्तं तस्य निमत्तं संयोगोत्पाताविस्यनुवर्तमाने गो द्व्यच इति द्व्यज्लक्षणो यन्मा भूदिति । अत्रापि गोनौग्रहणं ज्ञापकं दीर्घाद् द्व्यज्लक्षणो विधिर्न भवतीति । अयं तु सर्वेषामेव परिहारः । नाव्यपवृक्त-स्यावयवस्य तद्विधिर्यथा द्रव्येषु * ।नाव्यपवृक्तस्यावयवस्यावयवाश्रयो विधिर्भवति

---

दिति । यद्याकारस्थस्याकारस्य लोपः स्यात्कित्करणमनर्थकं स्यात् । यत्तर्हीति । नन्व-सति कित्त्वे आकारस्थस्याकारस्य लोपे कृते द्वयोरकारयोः पररूपस्य धातुं प्रत्यन्त-वद्भावाच्छन्दोगायेत्यत्रातो धातोरित्याकारलोपप्रसङ्गः । नैष दोषः । सन्निपातपरिभाषया लोपो न भविष्यति । अकारं ह्याश्रित्य यशब्दः कृतो लोपस्यानिमित्तम् । दीर्घत्वं तु कष्टा-येति निपातनाद्भवति । एकवर्णवदिति । अवयवसंख्याश्रयेण वाक्शब्दस्य द्व्यच्त्वा-त्तन्निमित्तं कार्यं प्राप्नोतीत्येकवर्णवदित्यतिदेशः क्रियते । गोनोग्रहणं ज्ञापकमिति । सामान्येन ज्ञापकं वर्णावयवाश्रयकार्याभावस्य । अग्नएहीत्यादावेङः पदान्तादतीत्या-द्यपि न भवति । नाव्यपवृक्तस्येति । व्यपवर्गो व्यपवृक्तं भेदः । तेनाव्यपवृक्तस्याभिन्नबु-द्धिविषयस्यैकत्वालम्बनज्ञानग्राह्यस्य समुदायस्य यो ऽवयवस्तस्मिंस्तद्विधिः पृथग्भूतव-र्णविधिर्न भवतीत्यर्थः । अव्यपवृक्तस्य अवयवस्येति । व्यधिकरणे षष्ठ्यौ अव्यपवृक्तस्य

---

ककाराकारयोरुच्चारणे गौरवादिति भावः । सन्निपातेति । न च दीर्घेणैव स निवर्त्तितो, दीर्घे-प्यत्वजातिसंबन्धसत्त्वेन न तथा सन्निपातक्षतिः लोपे तु तस्यापि निवृत्तेस्तद्विरोधस्य स्पष्टत्वादिति भावः । परे तु जातिपक्षे तपरसूत्रं व्याप्यजातिनिर्देशस्यैव बोधकमिति । यावन्निमित्तसन्निपातस्य दीर्घेण निवृत्तिर्जातैव न कस्याप्यनुवृत्तिस्तस्माद्व्याप्यत्वजातियजादिसंनिपातनिमित्तो दीर्घो न स्वसांनिपातवि-घातकलोपनिमित्तं संनिपातपरिभाषायाश्च स्वप्रवृत्तेः प्राङ् निमित्तभूतो यादृशः संनिपातः स्वातिरिक्तस्त-द्विघातकस्य स्वयमनिमित्तमित्यर्थः । मात्राकालिकत्वसमानाधिकरणव्यापकजातीनिर्देशपक्षेऽव्यङ्गसंज्ञा तर्ह्य-निमित्तं स्यादिति । क्त्मेमजन्तसूत्रवक्ष्यमाणभाष्यरीत्या यादृशनिमित्तसंनिपातस्य न लेशतोपि सत्तेति वद-न्ति । प्रातर्ऋतं तद् लृकार इत्यादौ रोरि तोर्लीति तु नापादितं तस्याभितोऽभागसत्वेन तेन व्यवधानात्त-दप्राप्तेः । अग्ने इन्द्रेत्यादौ सर्णदीर्घव्यावृत्तये आह । सामान्येनेति । गोद्व्यचो संख्येति गोग्रहणं नौद्व्य-चष्ठन्निति नौग्रहणम् । वर्णावयवाश्रयकार्याभावस्येति । वर्णावयवेषु भेदेनाप्रतिभासमानेषु वर्णाश्रयकार्याभा-वस्येत्यर्थः । तेन मातॄणामित्यादौ णत्वादिसिद्धिः । भेदेन प्रतिभासात् । सामान्यापेक्षज्ञापकं विनापि न्यायेन निर्वाहमाह । भाष्ये ( अयन्त्विति ) । अभिन्नबुद्धिविषयस्येत्यस्य व्याख्या एकत्वालम्बनज्ञानग्राह्यस्येति । समुदायस्य योऽवयव इति । वर्णसमुदायस्येत्यर्थः । व्यधिकरणेइति । सामानाधिकरण्येनान्वये ऽव्यपवृक्तस्येति व्यर्थं सर्वस्याप्यवयवस्यावयविनाव्यपवृक्तत्वादिति भावः । भाष्ये (अवयवाश्रयः) । अवयवसदृशस्वतन्त्रवर्णा-

यथा द्रव्येषु । तद्यथा । द्रव्येषु सप्तदश सामिधेन्यो भवन्तीति न शप्तदशारत्निमात्रं काष्ठमग्नावभ्याधीयते । विषम उपन्यासः । प्रत्यृचं चैव हि तत्कर्म चोद्यते । असंभवश्चाग्नौ वेद्यां च । यथा तर्हि सप्तदश प्रादेशमात्रीराश्वत्थीः समिधोऽभ्यादधीतेति न सप्तदशप्रादेशमात्रं काष्ठमग्नावभ्याधीयते । अत्रापि प्रतिप्रणवं चैतत्कर्म चोद्यते । तुल्यश्चासंभवोऽग्नौ वेद्यां च । यथा तर्हि तैलं न विक्रेतव्यं मांसं न विक्रेतव्यमिति व्यपवृक्तं च न विक्रीयते । अव्यपवृक्तं गावः सर्षपाश्च विक्रीयन्ते । तथा लोम नखं स्पृष्ट्वा शौचं कर्तव्यमिति व्यपवृक्तं स्पृष्ट्वा नियोगतः कर्तव्यम् । अव्यपवृक्ते कामचारः । यत्र तर्हि व्यपवर्गोऽस्ति । क्व च व्यपवर्गोऽस्ति । सन्ध्यक्षरेषु । सन्ध्यक्षरेषु विवृततरत्वात् * । यदत्रावर्णं विवृततरं तदन्यस्मादवर्णाद्येपीवर्णोवर्णे विवृततरे त अन्याभ्यामिवर्णोवर्णाभ्याम् । अथ वा पुनर्न गृह्यन्ते । अग्रहणं चेन्नुड्वि-

---

समुदायस्य योऽवयवस्तस्येत्यर्थः । न हि सम्भवमात्रेण कार्याणि क्रियन्तेऽपि तु यत्र तद्बुद्धिरस्ति तत्रैवेत्यर्थः । माषा न भोक्तव्या इति निषेधस्तु मिश्रेष्वपि प्रवर्तते तत्र तद्बुद्धिस्तद्रसास्वादनसम्भवात् । सप्तदशेति । सामिधेनीशब्द ऋचां वाचक उपचारात्काष्ठेषु वर्तते तत्र सप्तदशहस्ते काष्ठे सप्तदशकाष्ठानीति बुद्धेरभावान्न तस्याभिधानम् । असम्भव इति । अर्द्धचतुर्हस्ता हि वेदिः । यथा तर्हीति । अल्पप्रमाणत्वात्स्यात्सम्भव इति भावः । अव्यपवृक्तमिति । व्यपवर्गस्याभावेनेत्यर्थः । यत्र तर्हीति । ऐ औ इत्यत्र हि स्फुटोऽकारप्रतिभासोऽस्ति विवृतत्वादिति । अकारस्य विवृतोपदेशादत्र प्रकर्षो विवक्षितस्तदाह विवृततरमिति । तत्र प्रयत्नभेदादसावर्ण्यादकारेण संध्यक्षरावयवस्य ग्रहणं नास्तीत्यर्थः । तदेवमाकारादिस्थस्यावयवस्य भेदेनाग्रहणादग्रहणं संध्यक्षरस्थस्य त्वसावर्ण्यात् । ऋकारस्थस्तु रेफो भेदेन प्रतिभासाद् गृह्यते इति नुडादिसिद्धिः । अथ वेति । नरसिंहवद्वर्णान्तरत्वात्सादृश्याच्च प्रत्यभिज्ञानात्तत्त्वासिद्ध्या पृथगुपलब्धानां वर्णानां समु-

---

श्रयः । उक्तर्थे युक्तिमाह नहीति । ननु सामिधेनीशब्दस्य ऋक्षु शक्तत्वेन काष्ठमग्नावाधीयत इति भाष्यमयुक्तमत आह । साहचर्यादिति । तदाधेयत्वेनेति भावः । तत्र सप्तदशेति । यद्यपि एकैका समिदरत्निमात्रमिति मिलितानां सप्तदशानां समिधां सप्तदशारत्निमात्रत्वं भवति एकस्यापि तावत्त्वमस्ति तथाप्यव्यपवृक्तसमुदायावयवत्वान्न व्यपवृक्ताश्रयकार्यप्रसङ्ग इति भावः । न ह्यव्यपवृक्तत्वमात्रनिबन्धनं तदनभ्याधानं किं तु असंभवनिबन्धनमित्याह । भाष्ये (विषमइति) आहितपुनर्ग्रहणस्य निषिद्धत्वादेकस्य काष्ठस्य प्रत्यृचमाधानं न संभवतीति भावः । युक्त्यन्तरमाह असंभवश्चेति । तमुपपादयति । अर्धचतुर्हस्तेति । अर्धेन चतुर्हस्तेति तृतीयातत्पुरुषः । समिधोऽग्निवेदिबहिर्भावानिषेधाच्चासंभव इति भावः । अव्यपवृक्तमिति । अर्थाभावेऽव्ययीभावः । तदाह व्यपवर्गस्येति । वस्तुतस्तत्पुरुष एवायं व्यपवृक्ताभिन्नतैलमांसरूपा गावः सर्षपाश्चेत्यर्थः । नञाव्ययीभावस्याभावादित्यग्रे वक्ष्यते । भाष्ये ( कामचारइति ) । स्पर्शे कामचारस्तेन शौचाभाव इत्यर्थः । एङोः संश्लिष्टावर्णत्वेन व्यपवर्गस्यास्पृष्टत्वात्सन्ध्यक्षरग्रहणमैजभिप्रायमित्याह ऐ औ इति । अकारस्येति । यद्यप्यैचो विवृततमास्तथापि विवृततरत्वमस्त्येवेति भावः । प्रयत्नभेदादेव एङैचोः परस्परं सावर्ण्याभावः । एङो विवृततरत्वादैचां विवृततमत्वादिति बोध्यम् । नुडादीति । आनृजे इत्यत्र नुट् । आदिना चल्कृपे इत्यत्र लत्वं मातॄणामित्यादौ णत्वं च्चेति बोध्यम् । सादृश्याच्चेति । चस्त्वर्थे । समुदाये सन्ध्यक्षरादौ, सत्यपि गोसादृश्ये गवये गोत्वस्येव सन्ध्यक्षरावयवेषु अत्वादिजातेरभावादकारादिग्रहणेन ग्रहणं नेति भावः । ऐकारादीनामेकेच्छाप्रयत्नज-

धिलादेशविनामेषु ऋकारग्रहणम् * । अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणं कर्तव्यम् । तस्मान्नुड् द्विहलः । ऋकारे चेति वक्तव्यम् । इहापि यथा स्यात् आनृधतुः, आनृधुरिति । यस्य पुनर्गृह्यन्ते द्विहल इत्येव तस्य सिद्धम् । यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । द्विहल्ग्रहणं न करिष्यते । तस्मान्नुड् भवतीत्येव । यदि न क्रियते । आटतुः, आटुरित्यत्रापि प्राप्नोति । अश्नोतिग्रहणं नियमार्थं भविष्यति । अश्नोतेरेवावर्णोपधस्य नान्यस्यावर्णोपधस्येति । लादेशे च ऋकारग्रहणं कर्त्तव्यम् । कृपो रो लः, ऋकारस्य चेति वक्तव्यम् । इहापि यथा स्यात् क्लृप्तः क्लृप्तवानिति । यस्य पुनर्गृह्यन्ते र इत्येव तस्य सिद्धम् । यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । ऋकारोप्यत्र निर्दिश्यते । कथम् । अविभक्तिको निर्देशः । कृप उः रः लः कृपो रो ल इति । अथवा उभयतः स्फोटमात्रं निर्दिश्यते । रश्रुतेर्लश्रुतिर्भवतीति । विनामे ऋकारग्रहणं कर्त्तव्यम् । रषाभ्यां नो णः समानपदे ऋकाराच्चेति वक्तव्यम् । इहापि यथा स्यात् । मातॄणां पितॄणामिति । यस्य पुनर्गृह्यन्ते । रषाभ्यामित्येव तस्य सिद्धम् । न सिध्यति । यत्तद्रेफात्परं भक्तेः तेन व्यवहितत्वान्न प्राप्नोति । मा भूदेवम् । अड्व्यवायइत्येव सिद्धम् । न सिध्यति । वर्णैकदेशाः के वर्णग्रहणेन गृह्यन्ते ये व्यपवृक्ता अपि वर्णा भवन्ति । यच्चापि रेफात्परं भक्तेः न तत् क्वचिदपि व्यपवृक्तं दृश्यते । एवं तर्हि योगविभागः करिष्यते रषाभ्यां नो णः समानपदे । ततो व्यवाये । व्यवाये च रषाभ्यां नो णो भवतीति । ततोऽट्कुप्वाङ्नुम्भिरिति । इदमिदानीं किमर्थम् । नियमार्थम् । एतैरेवा-

---

दाये नास्ति सत्त्वम् । समुदायवाचो युक्तिरपि तत्र वर्णान्तरे न तात्त्विकी भ्रान्तिवशात्त्ववयवसद्भावाश्रयेण प्रवृत्ता । अश्नोतेरेवेति । सामान्येनावर्णोपधो निवर्त्यते न त्वश्नोतिरेव सामान्यापेक्षत्वान्नियमज्ञापकस्य । अविभक्तिक इति । तत्र ऋकारनिर्देशसामर्थ्याद्विभागं प्रकल्प्यादेशो विधीयते । स्फोटमात्रमिति । जातिस्फोट इत्यर्थः । ततश्चान्तर्भूतानन्तर्भूतरेफलकारव्यङ्ग्यं सामान्यं स्थान्यादेशभावेनाश्रीयते । यत्तदिति । रेफाद्भक्तेरिति समानाधिकरणे पञ्चम्यौ । अड्व्यवाये इति ऋकारेण यथा दीर्घो गृह्यते एवमृकारभागोपीत्यर्थः । न सिद्ध्यतीति । तस्य भागस्य स्फुटप्रतिभासाविषयत्वाज्जात्यभिव्यक्तिहेतुत्वाभावाच्चेति भावः । एतैरेवेति । आकारादयोऽप्यकारादिभिः प्रत्यायितत्वादाद्यरस-

---

न्यस्त्वेनैकत्वमेव अकारादिवत् । अत एवैषां पदवन्न वर्णसमूहत्वेन प्रतिभास इति, तदेवाह समुदायवाचइति । भ्रान्तिवशादिति । भ्रान्तिगृहीतावयवसद्भावाश्रयेणेत्यर्थः । एवञ्च भ्रान्तिरेव ग्रहणपक्षे बीजमिति भावः । अत एव गोनीग्रहणञ्चरितार्थम् । विनामो णत्वम् । ननु विकरणविशेषनिर्देशेन अविकरणनिवृत्त्यर्थं सूत्रं स्यादत आह न त्वश्नोतिरेवेति । तथा हि सति नाश्नइत्येव वदेदिति भावः । नियमज्ञापकस्य । नियमबोधकस्य । नन्वखण्डवर्णपक्षे ऋकारप्रश्लेषेपि कथं सिध्यतीत्यत आह । तत्र ऋकारेति । एवञ्च रेफपदेन तत्सदृश आरोपितरेफत्ववानपि गृह्यत इति फलितम् । मात्रशब्दः सामान्याभिप्राय इत्याह जातीति । जातिश्चावयवानवयवसाधारणीत्याशयेनाह ततश्चेति । एवंविधा च रत्वलत्वजातिरेवेत्यातिप्रसङ्गो न, यथा

त्तरसमाम्नायिकैर्व्यवाये नान्यैरिति । यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति । भवत्यृकारान्नो णत्वमिति । यदयं क्षुभ्नादिषु नृनमनशब्दं पठति । नैतदस्ति ज्ञापकम् । वृद्ध्यर्थमेतत्स्यात् नार्नमनिः । यत्तर्हि तृप्नोतिशब्दं पठति यच्चापि नृनमनशब्दं पठति । ननु चोक्तं वृद्ध्यर्थमेतत्स्यात् । बहिरङ्गा वृद्धिरन्तरङ्गं णत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे । अथवा उपरिष्टाद्योगविभागः करिष्यते । ऋतः नो णो भवति । ततश्छन्दस्यवग्रहात् । ऋत इत्येव । प्लुताश्चैच इदुतौ एतच्च वक्तव्यम् यस्य पुनर्गृह्यन्ते, गुरोष्टेरित्येव प्लुता तस्य सिद्धम् । यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । क्रियते न्यास एव तुल्यरूपे संयोगे द्विव्यञ्जनविधिः * । तुल्यरूपे संयोगे द्विव्यञ्जनाश्रयो विधिर्न सिध्यति । कुक्कुटः ।

---

माम्नायिकाः । भक्तिस्तु न प्रत्यायिकेति नियमेन न निवर्त्यते । गुरोष्टेरिति । एकारो गुरुस्तस्य टेरिति सिद्धम् । तन्त्रन्यायाश्रयणाच्च गुरोरपि स्थाने प्लुतो भवति देवद ३ त्तेति । क्रियते न्यास एवेति । अवश्यकर्तव्यतां दर्शयति । व्यपवृक्तेपि भागयोर्विवृततरत्वात् । प्रयत्नभेदादिकारोकाराभ्यामग्रहणादच्त्वाभावात् । तुल्यरूपेति । तुल्य-

---

न्यादेशभावश्च जातेर्व्यक्तिद्वारको बोध्यः । वस्तुतः स्फोटएव श्रोत्रग्राह्यो वायुनिष्ठस्त्वादिना च तस्याभिव्यक्तिः । एवञ्च साक्षाद्रत्ववत्तोभावेन कल्पन इत्यत्राप्यप्रवृत्तावस्य वैयर्थ्यापत्तिः । एवञ्च रेफावभासिनः स्फोटस्य प्रसङ्गे लकारावभासः स्फोट इत्यर्थः । एवञ्च कॢपावपि तत्प्रवृत्तिः संभवत्येव । तत्रापि रेफावभाससत्वात् । । अकारादौ तु नैव ह्रस्वाद्यवभास इति न तत्राकारावभासप्रयुक्तकार्यापत्तिः । तदुक्तं, रश्रुतेरित्यादि । यत्तु स्वतन्त्रास्वतन्त्रसाधारणजातिपरतयैतद्भाष्यव्याख्यानं तन्न । तादृशजातौ मानाभावात् । नरसिंहदृष्टान्तानुपपत्तेश्च । सादृश्यात्तु प्रत्यभिज्ञेत्यादिस्वोक्तिविरोधापत्तेश्च । किं चैवं सति रजातेरित्येव भगवान् वदेत् । किं च तादृशजातिसत्वे वर्णैकदेशानामपि तज्जातिमत्त्वेन वर्णग्रहणेन ग्रहणपक्षस्यैव सिद्धया ग्रहणप्रयुक्तस्याथ वा न गृह्यन्त इति पक्षे तत्समाधानपरभाष्यसङ्गतेः । अत एवाष्टमे रषाभ्यामिति सूत्रे यथा नरसिंहावयवानां नरत्वसिंहत्वजातियोगाभावात्पुरुषमृगराजाभ्यामेकाकृतियोगाभावः।एवं वर्णवर्णैकदेशयोरपीति कैयट आहेति वदन्ति । ऋकारेणेति । ऋकारावयवस्य रेफस्येव तदज्भागस्यापि केन चिदकारादिना ग्रहणादत्वमिति मन्यते । जात्यभिव्यक्तीति । अत्वादिजातीत्यर्थः । एवञ्च न केनाप्यचा तद्ग्रहणमिति भावः । अत्र जात्यभिव्यक्तिहेतुत्वाभावे स्फुटप्रतिभासाविषयत्वं हेतुः । चो हेतौ । अतो न सिद्ध्यतीत्यर्थः । नन्वाकारादिभिर्व्यवायेपि न स्यादाक्षरसमाम्नायिकत्वाभावादत आह । आकारादयोपीति । भक्तिस्त्विति । असवर्णत्वादनुपदेशाच्चेति भावः । भाष्ये [ नृनमनशब्दमिति ] । सञ्ज्ञाभूतमित्यभिप्रायः । गन्धर्वगानमित्यादौ सुबुत्पत्तेः पूर्वं समासेपि णत्ववारणायाखण्डपदे इत्यर्थकसमानपदे इत्यत्र पदस्यार्थबोधकस्यैव ग्रहणेन सखण्डत्वे ऽसञ्ज्ञायां णत्वप्राप्त्यभावादिति बोध्यम् । छन्दस्यृदित्यस्य तु नात्र प्राप्तिः । ईदृशे विषये ऽत्रमहाभाष्वादस्याहुः । बहिरङ्गा वृद्धिरिति । त्रिपाद्यामपि बहिरङ्गपरिभाषा प्रवर्त्तते इति वार्त्तिकमतेनैतत् । भाष्यमते तु तृप्नोतिशब्दपाठस्यैव ज्ञापकता बोध्या । ऋतोनोणइति । मातॄणामित्यादौ दीर्घस्य बहिरङ्गासिद्धत्वाण्णत्वम् । यद्वा प्रशास्तॄणामिति निर्देशाण् णत्वम् । अत्र तपरत्वं मुखसुखार्थमेव । उत्तरत्रा ऽप्येवमेव फलाभावात् । ध्वनितञ्चेदं वृत्तौ । ननु गुर्ववयवटेरित्यर्थाङ्गीकारे गुरुरूपटेः प्लुतो न स्यादत आह । तन्त्रेति । स्थानषष्ठ्यन्तावयवषष्ठ्यन्तयोर्गुरुशब्दयोरित्यर्थः । गुर्ववयवटिश्चैच एव संभवति नान्यस्य आकारादेस्तदवयवस्य व्यपवृक्तत्वाभावादिति भावः । अच्त्वाभावादिति । तन्मूलादित्वाभावाच्चेत्यपि बोध्यम् । संयोगइति । संयोगसञ्ज्ञार्हे इत्यर्थः । तस्यैकवर्णत्वमिति । एवञ्च संयोगसञ्ज्ञा न स्यादिति भावः । [ संयोगे इति ] भाष्यन्तु संयोगार्हे इत्यर्थपरमिति तात्पर्यम् । शिष्टसमाचारः । शिष्टव्यवहारः । भाष्ये [ माषाकालो चेति ] बहुव्रीहिः सं-

पिप्पली। पित्तमिति। यस्य पुनर्गृह्यन्ते तस्य द्वौ ककारौ द्वौ पकारौ द्वौ तकारौ। यस्यापि न गृह्यन्ते तस्यापि द्वौ ककारौ द्वौ पकारौ द्वौ तकारौ। कथम्। मात्राकालो ऽत्र गम्यते। न च मात्रिकं व्यञ्जनमस्ति। अनुपदिष्टं सत्कथं शक्यं विज्ञातुम्। असच्च कथं शक्यं प्रतिपत्तुम्। यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्रैतन्नास्त्यण् सवर्णान् गृह्णातीति। इह तु कथम् सय्ँ यन्ता। सव्ँ वत्सरः। यल्ँ लोकम्। तल्ँ लोकमिति। यत्रैतदस्त्यण् सवर्णान् गृह्णातीति अत्रापि मात्राकालो गृह्यते। न च मात्रिकं व्यञ्जनमस्ति अनुपदिष्टं सत्कथं शक्यं विज्ञातुमसच्च कथं शक्यं प्रतिपत्तुम्।

हयवरट् ॥ ५ ॥ सर्वे वर्णाः सकृदुपदिष्टा अयं हकारो द्विरुपदिश्यते पूर्वश्चैव परश्चैव परश्च। यदि पुनः पूर्व एवोपदिश्यते पर एव वा। कश्चात्र विशेषः। हकारस्य परोपदेशे ऽड्ग्रहणेषु हग्रहणम्*। हकारस्य परोपदेशे ऽड्ग्रहणेषु हग्रहणं कर्तव्यम्। आतोऽटि नित्यम् शश्छोऽटि दीर्घादटि समानपादे। हकारे चेति वक्तव्यम्। इहापि यथा स्यात्। महाँ हि सः। उत्त्वे च *। उत्त्वे च हकारग्रहणं कर्त्तव्यम्। अतो रोरप्लुतादप्लुते। हशि च हकारे चेति

---

रूपावयवत्वात्संयोगस्तुल्यरूपः। तस्यैकवर्णत्वं पूर्वपक्षे। सिद्धान्ते तु वर्णद्वयरूपता। आशूच्चारणात्तु भ्रान्तमेकत्वज्ञानमिति शिष्टसमाचारः। अत्रापीति। सानुनासिकनिरनुनासिकौ द्वावत्र वर्णावित्यर्थः॥ ३ ॥ ४ ॥

हयवरट् ॥ ५ ॥ पूर्वश्चेति ॥ पूर्वपरोच्चारणक्रियाभेदादेकस्यैव हकारस्य पूर्वपरव्यपदेशः। शश्छोटीति। हकारपरशकारस्यासम्भवात्। प्रसङ्गोच्चारितमेतत्। उत्त्वे चेति। अश्त्वर्थमपि वक्तव्यं भो हसतीति रोर्यत्वार्थम्।

---

~~प्रश्मे~~ऽन्यपदार्थः। मात्रिकव्यञ्जनाभावे ऽनुपदिष्टत्वं हेतुः कुक्कुट इत्याद्युच्चारणं तु न उपदेशः। अनुपदिष्टत्वं नाम अक्षरसमाम्नाये ऽपठितत्वं ग्राहकशास्त्रेणागृहीतत्वञ्च। [ अनुपदिष्टं सत् ] सत्त्वेन कथं शक्यं विज्ञातुमित्यर्थः। एवञ्चानुपदिष्टस्यासत्त्वात् तत्प्रतिपत्तिरशक्येत्याह असच्चेति। क्वचित्तु असच्चेत्यादिग्रन्थो न दृश्यते अनेन ऌकारापाठे तस्यासत्त्वशङ्कया तयोः सावर्ण्यविधिरप्यशक्य इति सूचितम्। यत्रैतदस्तीति। भाष्ये हलोऽनन्तरा इत्यत्र यकारादिभिरस्य ग्रहणे हल्द्वयाभाव इति भावः। सानुनासिकेति। अणुदित्शास्त्रं हि विद्यमानस्य लोकसिद्धस्य सवर्णस्य ग्राहकमेवं न त्वप्रसिद्धसवर्णकल्पकमिति भावः॥ ३॥४॥

हयवरट्॥नन्वयं हकार इत्यनेनैकत्वं हकारस्य सूचितमिति कथं तद्विरुद्धं पूर्वश्चेत्यादिना भेदाश्रयणमत आह। पूर्वपरेति। एतद्भाष्यादेकत्वं वर्णानामित्येव पक्षो भगवतः संमत इति ज्ञायते। भाष्य [यदि पुनरिति]। न चैवं परहकाराभावे लकारस्याप्यभावेन तन्त्राद्याश्रयणेन हलन्त्यामित्यत्रान्योन्याश्रयपरिहारो वक्ष्यमाणो विरुध्येतेति वाच्यम्। रन्त्यं हारिति न्यासेन लन्त्यं हलिति न्यासेन वा तत्परिहाराद् लाघवाभावेपि एवं कर्त्तुं शक्यं न वेत्येवं विचारतात्पर्यात्। यद्वा हरन्त्यामित्यस्यैवावृत्त्याह। बोधकसूत्रसमुदायान्त्यामिदित्यर्थः। परं तु परहकाराभावेपि लु इत्येव सूत्रं कार्यं प्रातिशाख्यादिप्रसिद्धहलादिप्रत्याहारासिद्ध्यर्थं तदर्थं रान्तस्यापि शक्तिकल्पने गौरवाद् हलन्त्यमित्यास्यावृत्त्या हल्प्रत्याहारबोधकसूत्रसमुदायान्त्यमिदित्यप्यर्थदोष इत्याहुः। अड्ग्रहणेष्विति। अड् गृह्यते येषु सूत्रेष्वित्यर्थः। शश्छोटीत्यस्योदाहरणादाने बीजमाह हकारपरस्येति। न च तच्छ् घ् हिस्याहित्युदाहरणसम्भवः। शास्त्रबोधित सौत्रञ्च। विहाय हलामुच्चारणार्थाचं विनोच्चारणस्यासाधुत्वेन तादृशोदाहरणाभाव इत्याशयात्! अत्र च भाष्ये एतदुदाहरणादानमेव मानम्। आतो ऽटि दीर्घ-

वक्तव्यम्। इहापि यथा स्यात्। पुरुषो हसति ब्राह्मणो हसतीति। अस्तु तर्हि पूर्वोपदेशः। पूर्वोपदेशे कित्त्वक्सेड्विधयो झल्ग्रहणानि च *। यदि पूर्वोपदेशः कित्त्वं विधेयम्। स्निहित्वा स्नेहित्वा। सिस्निहिषति। सिस्नेहिषति। रलो व्युपधाद्धलादेरिति कित्त्वं न प्राप्नोति। क्सविधिः क्सश्च विधेयः। अधुक्षत्। अलिक्षत्। शल इगुपधादनिटः क्स इति क्सो न प्राप्नोति। इड्विधिः। इट् च विधेयः। रुदिहि। स्वपिहि। वलादिलक्षण इण् न प्राप्नोति। झल्ग्रहणानि च किम्। अहकाराणि स्युः। तत्र को दोषः। झलो झलीतीह न स्यात्। अदाग्धाम्। तस्मात्पूर्वश्चैवोपदेष्टव्यः परश्च। यदि च किं चिदन्यत्राप्युपदेशे प्रयोजनमस्ति तत्राप्युपदेशः कर्त्तव्यः। इदं विचार्यते अयं रेफो यकारवकाराभ्यां पूर्व एवोपदिश्येत हरयवडिति। पर एव वा यथान्यासमिति। कश्चात्र विशेषः। रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः *। रेफस्य परोपदेशे अनुनासिकद्विर्वचनपरसवर्णानां प्रतिषेधो वक्तव्यः। अनुनासिकस्य। स्वर्नयति। प्रातर्नयति। यरो ऽनुनासिके ऽनुनासिको वेत्यनुनासिकः प्राप्नोति। द्विर्वचनस्य। मद्रह्रदः भद्रह्रदः। यर इति द्विर्वचनं प्राप्नोति। परसवर्णस्य। कुर्ण्डं रथेन। वर्न्नं रथेन। अनुस्वारस्य ययीति परसवर्णः प्राप्नोति। अस्तु तर्हि पूर्वोपदेशः पूर्वोपदेशे। कित्त्वप्रतिषेधो व्यलोपवचनं च *। यदि पूर्वोपदेशः, कित्त्वं प्रतिषेध्यम्। दिवित्वा दिदेविषति। रलो व्युपधादिति कित्त्वं प्राप्नोति। नैष दोषः। नैवं विज्ञायते रलो व्युपधादिति। किं तर्हि, रलः अव्व्युपधादिति। किमिदमव्व्युप-

यदि च किं चिदिति। प्रयोजनार्थोऽपि वर्णानामुपदेशो न स्वरूपप्रतिपत्त्यर्थः। इदमिति। उभयत्रापि दोषप्रयोजनसद्भावात्प्रश्नः। स्वर्नयतीति। णकारो ऽत्र प्राप्नोति। न ह्यत्र सवर्णग्रहणमस्ति। मद्रह्रद इति। द्विर्वचने कृते तस्यासिद्धत्वाद्रोरीति रेफलोपो नास्ति। हलो यमामिति लोपस्तु पाक्षिक इति पक्षे रेफद्वयश्रवणप्रसङ्गः। कुण्डं रथेनेति। अनुनासिकेनैव परसवर्णेन भाव्यमिति नियमाभावाद्रेफः प्राप्नोति तस्य

हदीत्युभयोरुदाहरणं महां हिं स इति। अट्कुप्वाति सूत्रेऽपि ग्रहणफलमहैणेति बोध्यम्। अहस्वमपीति। इरमिण्त्वस्याप्युपलक्षणान्तेन लिलिहिढ्वे इत्यादौ विभाषेट इति ढत्वविकल्पसिद्धिरिति केचित्। भाष्ये [हयवि-चेति]। सिद्धान्तरीत्या निर्देशः। इदानीन्तु यथि चेति सूत्रम्। अहकाराणि स्युरिति। अतस्तत्र हकारग्रहणं कर्त्तव्यमिति भावः। अदाग्धामिति। धत्वस्यासिद्धत्वादिति भावः। स्वरूपप्रतिपत्त्यर्थ एवायमक्षरसमाम्नाय इति भ्रमं वारयति। भाष्ये [यदि किंचिदिति]। तद्व्याचष्टे। प्रयोजनार्थइति। शास्त्रीयप्रयोजनार्थ इत्यर्थः। एवञ्चाद्यहकारस्याशिणोरपि प्रयोजनं सूचितम्। अतएव मञ्चा हसन्तीति प्रयोगादिति सूत्रे भाष्यप्रयोगः सङ्गच्छते। एतेन पूर्वहकारोपदेशप्रयोजनवार्त्तिके न्यूनता परिहृता। कर्त्तव्य इत्यस्य स्यादिति शेषः। उपदेशोऽत्रोच्चारणमात्रम्। अन्यत्रापि। प्रत्याहारान्तरे। सर्वथा हकारस्य द्वेधोपदेशः कर्त्तव्य इत्यत्रास्य तात्पर्यम्। दोषप्रयोजनेति। अन्यतरपक्षेऽपिदोष एवान्यतरपक्षे प्रयोजनमिति बोध्यम्। णकारोऽत्रेति। स्थाने ऽन्तरतमत्वादिति भावः। ननु रेफस्य सवर्णाभावात्कथमत्रानुनासिको ऽत आह न ह्यत्रेति। ननु द्वित्वेऽपि रोरीति हलोयमामिति वा लोपान्न दोषो ऽत आह द्विर्वचनइति। भाष्ये [अव्व्युपधादिति]। अव् इति लुप्तपञ्चमीकम्। ननु पूर्वोपदेशे इग्यण इत्यादौ यथासंख्यनिर्वाहः कथमिति चेन्न। सञ्ज्ञाविधानसामर्थ्येन तत्र तदावृत्तिप-

थादिति । अवकारान्ताद् व्युपधाद्व्युपधाचिति । व्वलोपवचनं च । व्योश्च लोपो वक्तव्यः । गौधेरः पचेरन् । यजेरन् । जीवेरदानुक् । जीरदानुः । वलीति लोपो न प्राप्नोति । नैष दोषः । रेफोऽप्यत्र निर्दिश्यते । लोपो व्योर्वलीति रेफे च वलि चेति । अथ वा पुनरस्तु परोपदेशः । ननु चोक्तं रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेध इति । अनुनासिकपरसवर्णयोस्तावत्प्रतिषेधो न वक्तव्यः । रेफोष्मणां सवर्णा न सन्ति । द्विर्वचनेऽपि । नेमौ रहौ कार्यिणौ द्विर्वचनस्य । किं तर्हि । निमित्तमिमौ रहौ द्विर्वचनस्य । तद्यथा । ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषातामिति । नेदानीं तौ भुञ्जाते । इदं विचार्यते । इमे

चासिद्धत्वाद्रोरीति लोपो नास्ति । रेफोष्मणामिति । अनुनासिकपरसवर्णविधाने हि स्थानेऽन्तरतमपरिभाषोपस्थानाद्दोषाभावः । न हि रेफस्य णकारोऽन्तरतमः नाप्यनुस्वारस्य रेफ । नेमौ रहाविति । हकारवद्रेफोऽपि न कार्यीत्यर्थः । तत्रैकवाक्यतायां सामान्यविशेषविध्योर्लोकव्यवहारादेव शब्दार्थसंबन्धपरिज्ञानात्सामान्यविधेर्विशेषविधिर्बाधकः । प्रत्यक्षश्च विशेषविधिः सामान्यविधिस्त्वनुमेय इति रेफस्य कार्यित्वं निमित्तत्वेन बाध्यते । दध्युदकादौ तु स्थानित्वेन निमित्तत्वमिकस्तस्मादित्युत्तरस्येत्यादेर्ज्ञापकान्न बाध्यते । लक्ष्यस्थित्यपेक्षत्वाद्वा बाध्यबाधकभावेन क्वचिदपेक्षा नास्ति । यथा चिचीषतीति दीर्घत्वद्विर्वचनयोः । इदमिति विधानादेषां साधुत्वं स्यात् प्रत्याहारप्रतिबद्धं तु

त्वत्यष्मणान्न दोषः । भाष्ये ( रेफोष्मणामिति ) विजातीया इति शेषः । तेन सजातीयेषु सत्स्वपि न दोषः । ननु मा भूद्रेफस्य विजातीयः सवर्णस्तथाप्यनुनासिकविधौ सवर्णग्रहणाभावादनुनासिकः स्यादेवेत्यत आह अनुनासिकपरेति । न हि रेफस्येति । न च रेफस्य णकारः स्थानेनान्तरमो भवत्येवेति वाच्यम् । स्थानेऽन्तरतमे इति सप्तम्यन्तपाठस्य स्थानप्रयत्नोभयान्तरतमस्पर्शे चिन्माधमित्यादौ चरितार्थोऽनुनासिकविधिः प्रयत्नासदृशे रेफे न प्रवर्त्तते इति भावात् । नापीति । यद्यप्यन्तरसमानन्तरतमयोः प्राप्तावन्तरतम एवेति स्थानेऽन्तरतम इत्यनेन नियमः कुण्डं रथेनेत्यादौ चानन्तरतमस्यैव प्राप्तिरितीदमयुक्तम् । तथापि संभवदनुस्वारान्तरतमके ऽङ्कित इत्यादौ चरितार्थः परसवर्णविधौ रेफे न प्रवर्त्तते इति भावः । इदं जातिपक्षे इति केचित् । वस्तुतो व्यक्तिपक्षेऽपि तादृशव्यक्तौ चरितार्थोऽन्यां व्यक्तौ न प्रवर्त्तते इति वक्तुं शक्यन्तद्वक्ष्यतीकोयणचीत्यत्र कैयटः 'एकस्यापि पदार्थे उत्सर्गापवादभावः संदिग्धत्वाश्रयोऽस्त्येवेति" । केचित्तु स्थानेऽन्तरतम इति सप्तम्यन्तपाठप्रत्याख्यानपरभाष्यविरोधेनास्या युक्तेरसंभवद्युक्तिकत्वम् । किं चैवं सति ऊष्मग्रहणं भाष्ये व्यर्थं स्यात् । तस्मादनुनासिकविधौ सवर्णपदापकर्षपरं भाष्यं रेफोष्मणामित्यस्य चानुनासिको ऽनुस्वारान्तरतमश्च सवर्णो नास्तीत्यर्थः । अत एव महिम्मानित्यादौ सूत्रीत्या स्थानप्रयत्नोभयान्तरतमऋकारसम्भवेऽपि नानुनासिकः । नाज्झलाविति निषेधेन सवर्णस्याभावादिति भाष्याशय इत्यहुः । नन्वयत्वादिप्रसक्तार्द्धत्वस्य हस्य ग्रहणमुक्तमत आह हकारवदिति । ननु एककर्तृकयोर्भोजनपरिवेषणयोर्युगपदसम्भवादस्तु तत्र बाधः प्रकृते तु लक्ष्यभेदेन भिन्नवाक्यावगतनिमित्तकार्यिभावः किं न स्यात् । यथा ऽवगतकार्यित्वस्यापि इको निमित्तत्वं दध्युदकादावत आह । तत्रेति । लक्ष्यभेदेन कार्यित्वनिमित्तत्वसंभवे ऽपीत्यर्थः । सामान्यविशेषविध्योरेकवाक्यतायामित्यन्वयः । शब्दो वाक्यात्मा । अर्थस्तदर्थः । संबन्धः प्रतिपाद्यप्रतिपादकभावः । तेषां परिज्ञानं यथा लोकव्यवहारादेव तथा तयोर्बाध्यबाधकभावः । संभवेऽपि भवतीत्येतदपि लोकव्यवहारादेव ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यादिरूपादवगतमित्यर्थः । विशेषसंनिधाने सामान्यशब्दस्य तद्व्यतिरिक्तपरत्वकथ तद्वीजं परिज्ञानवदिति पाठः । एवञ्चाचो रहाभ्यामित्यत्र सामान्यविशेषविधित्वाभावेऽपि तत्र बाधे बीजं तत्प्रकृतेऽप्यस्त्येवेत्याह । प्रत्यक्षश्चेति । अविलम्बितप्रतीतिकत्वं प्रत्यक्षत्वम् । विलम्बिततत्कत्वं चानुमेयत्वम् । लक्ष्येति । ज्ञापकाल्लक्ष्यानुरोधाद्वा सत्यपि सामान्यविशेषभावे क्वचिद्बाधकत्वं विशेषविधेर्नास्तीत्येतज्जातिव्यक्तिपक्षयोरुभयोरपीति भावः । क्वचिदपेक्षा नास्तीति । बाध्यबाधकभावस्येति शेषः । यथेति ।

अयोगवाहा न क्व चिदुपदिश्यन्ते श्रूयन्ते च । तेषां कार्यार्थ उपदेशः कर्त्तव्यः । के पुनरयोगवाहाः विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारयमाः । कथं पुनरयोगवाहाः । यदयुक्ता वहन्ति । अनुपदिष्टाश्च श्रूयन्ते । क्व पुनरेषामुपदेशः कर्त्तव्यः । अयोगवाहानामट्सु णत्वम् * । अयोगवाहानामट्सूपदेशः कर्त्तव्यः । किं प्रयोजनम् । णत्वम् । उरःकेण उरᳲकेण । उरःपेण । उरᳲपेण अड्व्यवाये इति णत्वं सिद्धं भवति । शर्षु जश्भावषत्वे * । शर्षूपदेशः कर्त्तव्यः । किं प्रयोजनम् । जश्भावषत्वे । अयमुब्जिरुपध्मानीयोपधः पठ्यते । तस्य जश्त्वे कृते उब्जिता उब्जितुमित्येतद् रूपं यथा स्यात् । यद्युब्जिरुपध्मानीयोपधः पठ्यते उब्जिजिषतीत्युपध्मानीयादेरेव द्विर्वचनं प्राप्नोति । दकारोपधे पुनर्नन्द्राः संयोगादय इति प्रतिषेधः सिद्धो भवति । यदि दकारोपधः पठ्यते का रूपसिद्धिः । उब्जिता उब्जितुमिति । उब्जिजिषति असिद्धे भ उब्जेः । इदमस्ति स्तोश्चुना श्चुरिति, ततो वक्ष्यामि । भ उब्जेः ।

---

कार्यं न प्राप्नोति । के पुनरिति । तत्स्वरूपप्रश्नः । कथमिति । प्रवृत्तिनिमित्तप्रश्नः । अयुक्ता इत्यस्यैव हेतुकथनमनुपदिष्टाश्चेति । अयुक्ताः प्रत्याहारलक्षणेन । पाठाभावादसंबद्धा इत्यर्थः । उपदेशो द्विविधः । पाठो ग्रहणकशास्त्रेण प्रत्यायनं च । स द्विविधोऽप्येषां नास्तीत्यर्थः । चशब्दो हेतौ । यतोऽनुपदिष्टास्ततोऽयुक्ता इत्यर्थः । क्व चित्तु चशब्दो न पठ्यते । शर्ष्विति । शर्षु पाठे झल्त्वमिति झलां जश् झशीति जश्त्वं सिध्यति । उपध्मानीयादेरिति । यदि द्विर्वचने पूर्वत्र कर्त्तव्ये जश्त्वमसिद्धमथापि पूर्वत्रासिद्धीयमद्वि-

---

बाध्यबाधकभावाभावे दृष्टान्तोयम् । न तु कार्यित्वनिमित्तत्वयोः समावेशे इति बोध्यम् । के चित्तु तक्रकौण्डिन्यन्यायोऽपि सामान्यविषयाक्रान्तविषयाभावरूपानवकाशत्वमूलक एव अस्ति च प्रकृते तत् न हेत-द्वोध्यनिमित्तत्वं सामान्यशास्त्रप्रवृत्तकार्यित्वानाक्रान्ते क्व चिदप्यस्ति सर्वबाधः परत्वादनचीत्यस्य प्राप्तेरतोऽयुक्तो लक्ष्यानुरोधात्सामान्येन कार्यित्वबाधः । न चैवमिको यणचीत्यादौ, मध्वत्र इत्यादौ सामान्यप्राप्तनिमित्तत्वाभावेन कार्यित्वस्य चारितार्थ्यादिति भाष्याभिप्रायमाहुः । ननु कार्यार्थ इत्यत्र कार्यं साधुत्वं चेत् स्वरस्थानयोरित्यादिना सिद्धमत आह विधानादिति । उपदिश्यन्त इति पाठे भाष्ये वर्तमानसामीप्ये लट् । उपदिष्ट इत्यर्थः । प्रवृत्तिनिमित्तेति । प्रकृते भासमानवैशिष्ट्यप्रतियोगिरूपः प्रकारस्य धर्म इति भावः । केन प्रवृत्तिनिमित्तेनायोगवाहशब्दवाच्यत्वं तेषामित्यत्र तात्पर्यम् । नन्वनुपदिष्टाश्चेति चकारश्रवणादनुच्चारितत्वमयोगवाहशब्दस्य प्रवृत्तिनिमित्तान्तरमित्याभाति तदयुक्तम् । अनुपदेशे पदार्थस्यानुच्चारणस्य तत्राभावात् । प्रयोगेषूच्चारितत्वात् । न च प्रत्याहारसूत्रानुच्चारितत्वं तथा, तदयुक्ता इत्यनेनैव तदर्थलाभेन पौनरुक्त्यापत्तेरत आह युक्ता इत्यस्यैवहेतुकथनमिति । प्रत्याहारबोधकलक्षणेनायुक्ता इत्यन्वयः । तद् व्याचष्टे पाठाभावादिति । ग्रहणकशास्त्रेण प्रदेशे प्रवर्त्तमानेन योवर्णस्तेषां ग्रहणकस्तस्य पाठाभावादित्यप्यर्थः । एषां नास्तीति । अतोऽयुक्ता इत्यर्थः । एवञ्चाक्षरसमाम्नायेऽयुक्ताः सन्तो वहन्ति प्रयोगं निर्वाहयन्तीत्ययोगवाहपदव्युत्पत्तिर्दर्शिता । न पठ्यतइति । तत्र यत इत्यध्याहार्यमिति भावः । भाष्ये [उरः केणेति] उरः कायतीति सुबुत्पत्ते: पूर्वं समासेऽपि सोपदादाविति न सत्वम् । पाशकल्पककाम्येष्वेव तत्प्रवृत्तेः । ननु शराम् जशो भवन्तीति जशत्वाभावाच्च शर्षु पाठस्य न जश्भावः प्रयोजनमत आह शर्षु पाठेइति । यदीति । पूर्वत्र द्विर्वचने इत्यन्वयः । ननु पूर्वं द्वित्वे जश्त्वात्पूर्वमेव हलादिः शेषे कथमुपध्मानीयस्याभ्यासे जश्त्वं झश्परत्वाभावात् । अभ्यासे चर्चेत्यनेन स्थानान्तरतम्यात्प्रकृतिचारश्चर एवेति उपध्मानीयएव स्यादिति चेच्चिन्त्यमेवैतत् । उपध्मानीयश्रवणापत्तेनापि भाष्यप्रामाण्यात् अन्त्यं तु द्वित्वे कृतेऽपि द्वित्वाश्रये कार्ये कर्त्तव्येऽसत्त्वं असिद्धत्वं नेत्यपि

उब्जेरशुना सन्निपाते भो भवतीति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। निपातनादेव सिद्धम्। किंनिपातनम्। भुजन्युब्जौ पाण्युपतापयोरिति। इहापि तर्हि प्राप्नोति अभ्युद्गः समुद्ग इति। अकुत्वविषये निपातनम्। अथवा नैतदुब्जे रूपं गमेरेतद् ड्युपसर्गाड्डो विधीयते। अभ्युद्गतो ऽभ्युद्गः। समुद्गतः समुद्ग इति। षत्वं च प्रयोजनम्। सर्पिःषु धनुःषु। शर्व्यवायइति षत्वं सिद्धं भवति नुम्विसर्जनीयशर्व्यवायेपीति विसर्जनीयग्रहणं न कर्त्तव्यं भवति नुमश्चापि तर्हि ग्रहणं शक्यमकर्त्तुम्। कथं सर्पींषि धनूंषि। अनुस्वारे कृते शर्व्यवायइत्येव सिद्धम्। अवश्यं नुमो ग्रहणं कर्त्तव्यम्। अनुस्वारविशेषणं नुम्ग्रहणं नुमो यो ऽनुस्वारस्तत्र यथा स्यादिह मा भूत् पुंस्विति। अथवा अविशेषेणोपदेशः कर्त्तव्यः। किं प्रयोजनम्। अविशेषेण संयोगोपधासंज्ञाऽलोन्त्यद्विर्वचनस्थानिवद्भावप्रतिषेधाः*। अविशेषेण संयोगसंज्ञा प्रयोजनम्। उब्जक। हलो ऽनन्तराः संयोग इति संयोगसंज्ञा संयोगे गुर्विति गुरुसंज्ञा गुरोरिति प्लुतो भवति। उपधासंज्ञा च प्रयोजनम्। दुष्कृतम्।

र्वचनइति सिद्धं सर्वथोब्जिज्जिषतीति प्राप्नोति। निपातनादिति। द्विर्वचनं कथम्। निपातनाद्वाक्यशेषो ऽनुमीयते। असिद्धप्रकरणे स्तोश्चुरित्यत्रोब्जेर्भ इति। तत्र नन्द्रा इति दकारस्य द्विर्वचननिषेधः कर्तव्यो न तु द्विर्वचनमिति पूर्वत्रासिद्धीयमद्विर्वचनइत्यस्याप्रवृत्त्या भत्वस्यासिद्धत्वादिष्टद्विर्वचनसिद्धिः। अथापि न वाक्यशेषानुमानं निपातनमेव प्रतिपादकं तथापि दकारोपदेशसामर्थ्याद् द्विर्वचने कृते दकारस्य बत्वं प्रवर्तते। अकुत्वविषयइति। विशिष्टविषयमनुमानमित्यर्थः। अवश्यमिति। अनुस्वारस्य शत्वात्तद्व्यवाये षत्वे सिद्धे नुम्ग्रहणं नियमार्थं नुमो योनुस्वारस्तत्रैव यथा स्यादन्यत्र मा भूत् पुंस्विति। अविशेषेणेति। प्रयोजनविशेषमनपेक्ष्य सकलप्रयोजनोद्देशेन यत्र यत्र प्रदेशे प्रयोजनसिद्धिस्तत्र तत्रोपदेशः कार्य इत्यर्थः। उब्जक इति। उपध्मानीयस्य जश्त्वे संयोगसंज्ञायां तस्यासिद्धत्वात्संयोगसंज्ञाभावाद् गुरुत्वाभावात् प्लुतो न स्यात्।

पूर्वत्रासिद्धीयमित्यस्यार्थ इति परत्वाज्जश्त्वे कृत एव हलादिः शेष इत्याशयान्न दोषः। द्विर्वचनं कथमिति। बकाररहितस्येति शेषः। ननु निपातनाल्लक्षणमात्रं स्यान्न तु प्रदेशविशेषावच्छिन्नमत आह अथापीति। न चाभ्युद्ग इत्यादौ दकारोच्चारणं सार्थकं नैतदुब्जे रूपमिति भाष्योक्त्या दोषाभावात्। उपतापातिरिक्तविषयेऽस्माद् घञ् नानभिधानादिति तदाशयः। अकुत्वविषये निपातनमिति पक्षान्तरे त्वाद्यमेव समाधानम्। अनुस्वारस्य शत्वादिति। यद्यपि इण्कवर्गाभ्यामुत्तरो नुमा व्यवहितः सकारः सुहिन्सु इत्यादौ सम्भवति तथापि तदनभिधानमिति भावः। पुंस्वित्यत्र संपुङ्कानामित्येतत्प्रवृत्तिपराविवरणग्रन्थस्तु चिन्त्य एव। तस्य समः सुटि, पुमः खय्यमपरे, कानाम्रेडिते इति सूत्रत्रयमात्रविषयत्वात्। ननु सूत्राविशेषानाश्रयणे तत्प्रत्याहारसंनिवेशात्कथं तन्निबन्धनकार्यप्रवृत्तिरत आह प्रयोजनविशेषमिति। [ अविशेषेणेति ] भाष्यस्य प्रयोजनविशेषनिर्देश विनेत्यर्थ इति भावः। यत्र यत्रेत्यादि। यद्यत्प्रयोजनसिद्धिरुद्देश्या तत्तद्विषयसकलप्रयोजनोद्देशेनेत्यर्थः। जश्त्वे कृते संयोगसञ्ज्ञायामिति। कार्यकालपक्षे इदम्। भाष्ये [इदुदुपधस्येति]। विसर्गस्यादत्वे ह्युपधात्वमिति भावः। इदुदुपधस्य सकारस्येति विसर्गस्थान्युपलक्षणमेतत्। अत एव निरोपि निष्कृतमिति सिध्यति। अत एव वक्ष्यमाणपक्षान्तरेणाविरोधः। निष्कृतमित्यादौ सुबुत्पत्तेः पूर्वं समासेपि इणः षइति न। पाशकल्पककाम्येष्वेव तत्प्रवृत्तेः। द्विर्वचनं प्रयोजनमिति। विसर्गजिह्वामूलीयादेर्द्वित्वोच्चारणे विशेषस्याभावात्। उच्चारणस्य कर्त्तुमशक्यत्वाच्च। शास्त्रप्राप्तिमात्रेणैतत्प्रयोजनकथनमिति सन्तोष्टव्यम्। ननु सो॰

निष्कृतम्। दुष्पीतम्। निष्पीतम्। इदुदुपधस्य चाप्रत्ययस्येति षत्वं सिद्धं भवति। नैतदस्ति प्रयोजनम्। न इदुदुपधग्रहणेन विसर्ज्जनीयो विशेष्यते। किं तर्हि। सकारो विशेष्यते। इदुदुपधस्य सकारस्य यो विसर्जनीय इति। अथ वोपधाग्रहणं न करिष्यते। इदुद्भ्यां तु परं विसर्ज्जनीयं विशेषयिष्यामः। इदुद्भ्यामुत्तरस्य विसर्ज्जनीयस्येति अलोन्त्यविधिश्च प्रयोजनम्। वृत्तस्तरति प्लत्तस्तरति अलोन्त्यस्य विधयो भवन्तीत्यलोन्त्यस्य सत्वं सिद्धं भवति। एतदपि नास्ति प्रयोजनम्। निर्दिश्यमानस्यादेशा भवन्तीति विसर्जनीयस्यैव भविष्यति। द्विर्वचनं प्रयोजनम्। उरःकः। उरःपः। अनचि च। अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं सिद्धं भवति। स्थानिवद्भावप्रतिषेधश्च प्रयोजनम्। यथेह भवति उरःकेण उरःपेणेत्यड्व्यवायइति णत्वम्। एवमिहापि स्थानिवद्भावात्प्राप्नोति। व्यूढोरस्केन महोरस्केनेति। तत्रानल्विधाविति प्रतिषेधः सिद्धो भवति। किं पुनरिमे वर्णा अर्थवन्त आहोस्विदनर्थकाः। अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् *। अर्थवन्तो वर्णाः। कुतः। धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात्। धातव एकवर्णा अर्थवन्तो दृश्यन्ते। एति अध्येति। अधीतइति। प्रातिपदिकान्येकवर्णान्यर्थवन्ति। आभ्याम्। एभिः। एषु। प्रत्यया एकवर्णा अर्थवन्तः। औपगवः। कापटवः। निपाता एकवर्णा अर्थवन्तः। अ अपेहि। इ इन्द्रं पश्य। उ उत्तिष्ठ। अ अपक्राम। धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनान्मन्यामहे अर्थवन्तो वर्णा इति। वर्णव्यत्यये चार्थान्तरगमनात् * ॥ वर्णव्यत्यये चार्थान्तरगमनान्मन्यामहे अर्थवन्तो वर्णा इति। कूपः सूपो यूप इति। कूप इति सककारेण कश्चिदर्थो गम्यते। सूप इति ककारापाये सकारोपजने चार्थान्तरं गम्यते। यूप इति ककारसकारापाये यकारोपजने ऽर्थान्तरं गम्यते। तेन मन्यामहे यः कूपे कूपार्थः स ककारस्य यः सूपे सूपार्थः स

---

महोरस्केनेति। पूर्वत्रासिद्धे न स्थानिवदिति निषेध.। अचः परस्मिन् पूर्वविधावित्यस्य न तु स्थानिवदादेश इत्यस्य। इदानीमन्यदपि वर्णे गतं वस्तु विचार्यते। किं पुनरिति। पक्षद्वयेपि प्रतिवर्णं विभक्त्यनुत्पत्तिज्ञानं विचारस्य प्रयोजनम्। वर्णव्यत्ययइति। एकवर्णस्याभ्युपगमे ऽन्यापगमो व्यत्ययः। सककारस्येति। तस्यैवान्वयव्यतिरेकावनुविधानादिति ...

---

पदादाविति सत्वस्य स्थानिवत्त्वं पूर्वत्रासिद्धीये इति निषेधान्नेत्यत आह पूर्वत्रेति। इमे इत्यनेन न ह्यवरट्सूत्रस्था एवं गृह्यन्ते। किं तु वर्णमात्रमित्याह इदानीमिति। अर्थवन्त इति साध्यम्। वर्णा इति पक्षः। पक्षतावच्छेदकमेव हेतुः। धातुप्रातिपदिकेत्यादिस्तु दृष्टान्तः। अनुत्पत्तिज्ञानम्। अनुत्पत्त्युपायज्ञानम्। भाष्ये [धातव इत्यादि ]। प्रक्रियाश्रयप्रकृतिप्रत्ययानां वाचकत्वमित्येवरूपं वर्णस्फोटाश्रयेण। अयञ्च शास्त्रव्यवहारमात्रोपयोगी। एतद्वासनावशादेवं लोकव्यवहारेपि शास्त्रज्ञास्तथा व्यवहरन्ति धर्मे चैवंविधज्ञानस्योपयोग इति बोध्यम्। हेत्वन्तरमाह वर्णव्यत्यये चेति। ननु कूपादौ न सिंहादाविव वर्णव्यत्ययो ऽत आह एकस्येति। तस्यैवान्वयेति। उपलक्षस्य तु तदीयशक्त्युद्बोधकत्वरूपं द्योतकत्वं प्रादिवत्। अत एव तेषामिवैषामपि प्रा-

सकारस्य यो यूपे यूपार्थः स थकारस्येति। वर्णानुपलब्धौ चानर्थगतेः * ॥ वर्णानुपलब्धौ चानर्थगतेर्मन्यामहे ऽर्थवन्तो वर्णा इति। वृक्ष ऋक्षः काण्डीर आण्डीरः वृक्ष इति सवकारेण कश्चिदर्थो गम्यते। ऋक्ष इति वकारापाये सोर्थो न गम्यते। काण्डीर इति सककारेण कश्चिदर्थो गम्यते आण्डीर इति ककारपाये सोर्थो न गम्यते। किं तर्ह्युच्यते ऽनर्थगतेरिति। न साधीयो ह्यत्रार्थस्य गतिर्भवति। एवं तर्हीदं पठितव्यं स्याद् वर्णानुपलब्धौ चातदर्थगतेरिति। किमिदमतदर्थगतेरिति। तस्यार्थस्तदर्थः तदर्थस्य गतिस्तदर्थगतिः न तदर्थगतिरतदर्थगतिरतदर्थगतेरिति। अथ वा सोर्थस्तदर्थस्तदर्थस्य गतिस्तदर्थगतिर्न तदर्थगतिरतदर्थगतिरतदर्थगतेरिति। स तर्हि तथा निर्देशः कर्तव्यः। न कर्तव्यः। उत्तरपदलोपोत्र द्रष्टव्यः। तद्यथा। उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः खरमुखः। एवमतदर्थगतेरनर्थगतेरिति संघातार्थवत्त्वाच्च * ॥ संघातार्थवत्त्वाच्च मन्यामहे ऽर्थवन्तो वर्णा इति। येषां संघाता अर्थवन्तोवयवा अपि तेषामर्थवन्तः। येषां ह्यवयवा अर्थवन्तः समुदाया अपि तेषामर्थवन्तः। तद्यथा। एकश्चक्षुष्मान् दर्शने समर्थः तत्समुदायश्च शतमपि समर्थम्। एकश्च तिलस्तैलदाने समर्थः तत्समुदायश्च खार्यपि तैलदाने समर्था। येषां पुनरवयवा अनर्थकाः समुदाया अपि तेषामनर्थकाः। तद्यथा। एकोन्धो दर्शने ऽसमर्थस्तत्समुदायश्च शतमप्यसमर्थम्। एका च सिकता तैलदाने ऽसमर्था तत्समुदायश्च खारीशतमप्यसमर्थम्। यदि तर्हीमे वर्णा अर्थवन्तः अर्थवत्कृतानि प्राप्नुवन्ति। कानि। अर्थवत्प्रातिपादकमिति प्रातिपादिकसंज्ञा प्रातिपदिकादिति

---

ध्यते ऽर्थावसायइत्यर्थः। वर्णानुपलब्धौ चेति। अर्थान्तरावगमात्प्रकृतोर्थो न गम्यते इति विवक्षितम्। इतरस्त्वर्थावगत्यभावमात्रमनेनोक्तमिति मत्वा पृच्छति किं तर्हीति। न साधीय इति। परमतापेक्षया प्रकर्ष आरोप्यते। यथा न किं चिदयं तत्र करोतीत्युक्ते कश्चिदाह सुतरामयं करोतीति। एवं तर्हीति। प्रकृतोर्थो न गम्यते अर्थान्तरं तु गम्यते इत्यर्थ.। तस्यार्थ इति। वर्णस्य परं प्रति वर्णानामर्थवत्त्वमसिद्धमिति कथं तस्येति वर्णः परामृश्यते इत्याह सोर्थ इति। प्रकृतोर्थ इत्यर्थः। उष्ट्रमुख इति। गतार्थत्वादप्रयोग एव द्वितीयमुखशब्दस्य लोपो विधीयते। अत्र हि उष्ट्रो मुखमस्येत्येव विग्रहः। न च

---

तिपदिकसञ्ज्ञापादनं करिष्यते। तृतीयहेतुमाह वर्णानुपलब्धौ चेति। अनर्थगतेरित्यस्य तद्वर्णसत्तायां योर्थस्तदर्थानवगतेरित्यर्थ इत्याह अर्थान्तरेति। प्रश्नमुपपादयति। भाष्ये [न साधीयइति] नञि काकुः। परमतापेक्षयेति। परेणानर्थगतेरित्युक्तत्वादिहार्थगतिरस्तीत्यभ्युपगमस्य परमते कदाचणः अन्यस्थलीयार्थगत्यपेक्षयात्रातिशयेनार्थगतिरस्तीति विवक्षेति भावः। तच्छब्दार्थमाह वर्णस्येति। परं तु तच्छब्देन तद्वर्णघटितपरामर्शे न कश्चिद्दोषः। अत एव पूर्वं भाष्ये सककारेण कश्चिदर्थो गम्यतइत्युक्तमित्याहुः। लाघवेन तु कर्मधारयमाह। भाष्ये [सोर्थ इति]। प्रकृतार्थः। तस्मिन् वर्णे सति योर्थः प्रतीयते स इत्यर्थः। ननु दृष्टान्ते सप्तम्युपमानपूर्वेतिवचनेनोत्तरपदलोपेपि प्रकृते तच्छब्दलोपः केन। किं च तच्छब्द उत्तरपदमपि न तच्छब्देन नञः समासाभावादत आह गतार्थत्वादिति। तथा च तद्वदत्रापि लक्षणेति भावः। चतुर्थहेतुमाह।

स्वाद्युत्पत्तिः । सुबन्तं पदमिति पदसंज्ञा तत्र को दोषः । पदस्येति नलोपादीनि प्राप्नुवन्ति । घनं वनमिति । संघातस्यैकार्थ्यात्सुबभावो वर्णात् * ॥ संघातस्यैकत्वमर्थः । तेन वर्णात्सुबुत्पत्तिर्न भविष्यति । अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः * ॥ अनर्थकास्तु वर्णाः । कुतः । प्रतिवर्णमर्थानुपलब्धेः । न हि प्रतिवर्णमर्था उपलभ्यन्ते । किमिदं प्रतिवर्णमिति । वर्णं वर्णं प्रति प्रतिवर्णम् । व्यत्ययापायोपजनविकारेष्वर्थदर्शनात् * ॥ वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनान्मन्यामहे ऽनर्थका वर्णा इति । वर्णव्यत्यये । कृतेस्तर्कुः । कसेः सिकताः । हिंसेः सिंहः । वर्णव्यत्ययो

प्राप्ता प्राप्यन्तरस्य मुखं भवतीति विशिष्टावयववृत्तिरुष्ट्रशब्दः सादृश्यान्मुखं विशिनष्टि । एवमिहाप्यनर्थगतेरित्यत्रार्थशब्देन प्रक्रान्तोऽर्थ उच्यते न अर्थमात्रमित्यर्थः । न लोपादीनीति । श्रवणं तु विभक्तेर्न भवति । यतो यदैवावयवानां प्रातिपदिकसंज्ञा प्रवर्त्तते तदैव समुदायस्यापि तत्र तदन्तर्गतत्वाद्विभक्तेर्लुका भवितव्यं समासग्रहणेन च तुल्यजातीयस्य सुबन्तावयवसमुदायस्य प्रातिपदिकसंज्ञा निवार्यते, न त्वर्थवत्समुदायमात्रस्य येनैव चार्थेन समुदायस्यार्थवत्त्वं तेनैव तदवयवानामपीति विभक्त्युत्पत्तिश्चोद्यते । अत्र परिहारमाह संघातस्येति । वृत्त इत्यनेनैकत्वं विभक्त्या द्योत्यते तच्चैकमित्येकैव विभक्तिरुत्पद्यते यथा बहवो द्रष्टारो दृश्यमर्थमेकेनैव प्रदीपेन पश्यन्ति । सा चोत्पद्यमाना समुदायादेव तन्त्रेण सर्वानुग्राहिण्युत्पद्यते । समुदायद्विर्वचनवत् । पदसंज्ञा तु समुदायस्यैव भवति न तु प्रत्येकमसुबन्तत्वाद्यस्मात्प्रत्ययविधिरित्यनुवर्तनादसुबन्तत्वात् । अनर्थकास्त्विति । धात्वादिव्यतिरिक्ता वर्णाः पक्षीक्रियन्ते । अन्यथा शास्त्रविरोधः प्राप्नोति । किमिति । असमासशङ्कया प्रश्नः समासेन तूत्तरम् ।

भाष्ये [सङ्घातार्थवत्त्वाच्चेति । एका सिकतेति भाष्यप्रयोगादेव सिकताशब्दस्यैकवचनान्तत्वमपि । तदन्तर्गतत्वादिति । इदञ्चिन्त्यम् । इत्थंभूतलक्षणइति सूत्रस्थत्वग्रन्थविरोधात् । तत्र हि संज्ञाप्रवृत्त्युत्तरकालजातविभक्तेस्तन्मध्यपतितत्वेऽपि तदवयवत्वं नेत्युक्तं तस्मादन्तरङ्गत्वादवयवप्रातिपदिकत्वे तन्निमित्तसुपि तदनन्तरं कृदन्तत्वनिमित्तकप्रातिपदिकत्वे सुब्लोप इति वक्तुं युक्तं ध्वनतीत्यादौ तु न तदापत्तिः धातुप्रत्ययान्तपदयोस्तदवयवपरत्वेन तत्र तदप्राप्तेः । धात्वादेस्तदवयवत्वन्तु व्यपदेशिवद्भावेन बोध्यम् । वस्तुत इत्थंभूतेति सूत्रस्थकैयटोक्तिरयुक्तेति तत्रैव निरूपयिष्याम इति न दोषः । चकारे अइत्यादिपदार्थः । सुबन्तावयवसमुदायस्येति । सुबन्तावयवेति बहुव्रीहिस्ततः कर्मधारयः । इदमुपलक्षणम् । भेदे सति यदर्थयोः संसर्गस्तदीयद्वारकार्थवत्समुदायस्य तेन तिङन्तसमुदायस्य व्यावृत्तिः । प्रकृते न भेद इत्याह येनैव चेति । तच्चैकमिति । सङ्घातस्यैकत्वमिति भाष्यस्य सङ्घातस्याप्येकत्वमर्थः । एवञ्च विभक्तिः समुदायादेवेति भावः । ननु समुदायादुत्पद्यमाना विभक्तिः सर्ववर्णसंबन्धिनी चेत् प्रतिवर्णं पदत्वं प्राप्नोतीत्यत आह पदसञ्ज्ञा त्विति । यतश्चार्थबोधनाय विभक्त्युत्पत्तिस्तस्य सञ्ज्ञा प्रवर्त्तते न त्वन्येषामिति भावः । केचित्तु विभक्तिः प्रकृत्यर्थगतप्रकृतिबोध्यसङ्ख्याद्योतिका । सङ्ख्या च समुदायस्यैवार्थो न प्रत्येकवर्णानामिति न तेभ्यः स्वाद्युत्पत्तिः । एकत्वं सङ्घातस्यार्थ इति भाष्यस्वरसात् प्रकृत्यंशवर्णव्यत्ययापाययोः सङ्ख्यान्तरानुपजनात्सा समुदायस्यैवार्थ इति तद्भावः । न चाव्ययेभ्य इवैकवचनं दुर्वारम् । सङ्ख्यारहितार्थप्रतिपादकेषु तथा स्वीकारेऽपि वस्तुतः सङ्ख्यावत्यर्थे सङ्ख्यानभिधायकत्वाद्युत्पत्तौ मानाभावात् । एवञ्चैषां प्रकृतित्वमेव नेति न केवला प्रकृतिरित्यस्यापि न विषयः । एतेन प्रत्येकं पदसञ्ज्ञानुमहाय द्विर्वचनवैषम्यात् स्यादेव प्रत्येकं सुबुत्पत्तिरित्यपास्तमित्याहुः । अनुमानेन साधितामर्थवत्तां प्रत्यक्षविरोधेन दूषयति । अनर्थकास्त्विति । सर्ववर्णानां पक्षत्वे हेतोर्भागासिद्धत्वं स्यादत आह धात्वादीति । विपक्षे बाधकमाह अन्यथेति । वर्णव्यत्ययेत्यादिहेतोरर्थानुपलब्धेरिति हेतोश्च धात्वाद्यतिरिक्तवर्णविषयत्वे एव बङ्गेरित्यपि बोध्यम् । असमासशङ्कयेति । तथा च षष्ठी न प्रतीयेति भावः । तेनैवेति ।

नार्थव्यत्ययः। अपायो लोपः। हतः घ्नन्ति घ्नन्तु अघ्नन्। वर्णापायो नार्थापायः। उपजन आगमः। लविता। लवितुम्। वर्णोपजनो नार्थोपजनः। विकार आदेशः। घातयति। घातकः वर्णविकारो नार्थविकारः। यथैव वर्णव्यत्ययापायोपजनविकारा भवन्ति तद्वदर्थव्यत्ययापायोपजनविकारैर्भवितव्यम्। न चेह तद्वत्। अतो मन्यामहे ऽनर्थका वर्णा इति। उभयमिदं वर्णेषूक्तम्। अर्थवन्तो ऽनर्थका इति च। किमत्र न्याय्यम् उभयमित्याह। कुतः। स्वभावतः। तद्यथा। समानमीहमानानां चाधीयानानां केचिदर्थैर्युज्यन्ते अपरे न। न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुं कश्चिद्वा ऽनर्थक इति कृत्वा सर्वैरनर्थकैः। तत्र किमस्माभिः शक्यं कर्तुम्। यद्धातुप्रत्ययप्रातिपदिकनिपाता एकवर्णा अर्थवन्तो ऽतोन्ये ऽनर्थका इति। स्वाभाविकमेतत्। कथं य एष भवता वर्णानामर्थवत्तायां हेतुरुपादिष्टः। अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनाद्वर्णव्यत्यये चार्थान्तरगमनाद्वर्णानुपलब्धौ चानर्थगतेः संघातार्थवत्त्वाच्चेति। संघातान्तराण्येवैतान्येवंजातीयकानि अर्थान्तरेषु वर्तन्ते। कूपः सूपो यूप इति। यदि हि वर्णव्यत्ययकृतमर्थान्तरगमनं स्याद् भूयिष्ठः कूपार्थः सूपे स्यात् सूपार्थश्च कूपे कूपार्थश्च यूपे यूपार्थश्च कूपे सूपार्थश्च यूपे यूपार्थश्च सूपे। यतस्तु खलु न किं चित्सूपस्य वा यूपे यूपस्य वा कूपे कूपस्य वा यूपे सूपस्य वा कूपे कूपस्य वा सूपे यूपस्य वा सूपे। अतो मन्यामहे संघातान्तराण्येतान्येवंजातीयकान्यर्थान्तरेषु वर्तन्तइति। इदं खल्वपि भवता वर्णानामर्थवत्तां ब्रुवता साधीयो ऽनर्थकत्वं द्योतितम्। यो हि मन्यते यः कूपे कूपार्थः स ककारस्य सूपे सूपार्थः स सकारस्य यो यूपे यूपार्थः स यकारस्येति। ऊपशब्दस्त्वस्यानर्थकः स्यात्। तत्रेदमपरिहृतं संघातार्थवत्त्वाच्चेति। एतस्यापि प्रातिपदिकसंज्ञायां परिहारं

---

तेनैव वीप्सा द्योतितेति द्विर्वचनं भवति। वर्णव्यत्ययेति। यदुक्तं वर्णव्यत्यये चार्थान्तरगमनाद्वर्णानुपलब्धौ चानर्थगतेरिति तस्यानैकान्तिकत्वमुद्भाव्यते। उभयमित्याहेति। यत्रान्वयव्यतिरेकाभ्यामर्थवत्ता शक्यते कल्पयितुं तत्रैवासावभ्युपगन्तव्या न सर्वत्रेत्यर्थ। संघातान्तराणीति तदुक्तम्। न कूपसूपयूपानामन्वयोर्थस्य विद्यते। अतोर्थान्तरवाचित्वं संघातस्यैव गम्यते इति। एतस्यापीति। दृष्टो ह्यतदर्थेन गुणेन गुणिनोर्थभावः सुराङ्गवद्रथाङ्गवच्चेति। आचारादिति। आचारो व्यवहारः। तृषि-

---

वीप्सायां तस्य विधानादिति भावः। ननु वर्णव्यत्ययादिष्वर्थदर्शनं नार्थवत्त्वाभावसाधकमत आह यदुक्तमिति। एवञ्चार्थवत्त्वसाधकहेतौ व्यभिचारप्रदर्शनद्वारानर्थकतासाधकत्वमस्य। भाष्ये [ अर्थदर्शनादिति ] अस्य वर्णव्यत्ययाद्यभावे योर्थस्तस्यैव दर्शनादित्यर्थः। [ नार्थव्यत्यय ] इत्यस्य नार्थान्तरावगतिः किंतु तस्यैवावगतिरित्यर्थः। उभयस्थन्याय्यत्वं विषयभेदेनेत्याह यत्रान्वयेति। यथा ति इत इत्यादौ न सर्वत्र कूपादाविव्यर्थः। न कूपसूपेति। वर्णानामर्थवत्त्वे ऊपशब्दस्य त्रिष्वन्वयादर्थान्वयः स्यान्न च दृश्यते ऽत उ·

वक्ष्यति । अइउण् ऋऌक् एओङ् ऐऔच् । प्रत्याहारे ऽनुबन्धानां कथमज्ग्रहणेषु न । यएते ऽन्नु प्रत्याहारार्था अनुबन्धाः क्रियन्ते एतेषामज्ग्रणेन ग्रहणं कस्मान्न भवति । किंच स्यात् । दधि णकारीयति । मधु णकारीयति इको यणचीति यणादेशः प्रसज्येत । आचारात् ॥ किमिदमाचारादिति । आचार्याणामुपचारात् । नैतेष्वाचार्या अच्कार्याणि कृतवन्तः । अप्रधानत्वात् ॥ अप्रधानत्वाच्च न खल्वप्येतेषामन्नु प्राधान्येनोपदेशः क्रियते । क्व तर्हि हल्षु । कुत एतत् । एषा ह्याचार्यस्य शैली लक्ष्यते । यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति । अचो ऽन्नु हलो हल्षु । लोपश्च बलवत्तरः ॥ लोपः खल्वपि तावद्भवति । ऊकालोजिति वा योगस्तत्कालानां यथा भवेत् । अचां ग्रहणमच्कार्यं तेनैषां न भविष्यति ॥ अथ वा योगविभागः करिष्यते । ऊकालो । ऽच् । उ ऊ उ३ इत्येवं कालो ज्भवति । ततो ह्रस्वदीर्घप्लुतः । ह्रस्वदीर्घप्लुतसंज्ञश्च भवति । ऊकालोच् । एवमपि कुक्कुट इत्यत्रापि प्राप्नोति । तस्मात्पूर्वोक्त एव परिहारः । एष एवार्थः । अपर आह । ह्रस्वादीनां वचनात् प्राग्यावत्तावदेव योगोस्तु । अच्कार्याणि यथा स्युस्तत्कालेष्वक्षु कार्याणि । अथ किमर्थमन्तःस्थानामण्सूपदेशः क्रियते । इह सय्ँ यन्ता सव्ँ वत्सरः यल्ँ लोकं तल्ँ लोकमिति । परसवर्णस्यासिद्धत्वादनुस्वारस्यैव द्विर्वचनम् । तत्र परस्य परसवर्णे कृते तस्य यय्ग्रहणेन ग्रहणात् पूर्वस्यापि परसवर्णो यथा स्यात् । नैतदस्ति प्रयोजनम् । वक्ष्यत्येतत् । द्विर्वचने परसवर्णत्वं सिद्धं

---

मृषिकृषेरिति यण्न कृतः । अप्रधानत्वादिति । प्रधानाप्रधानसन्निधौ प्रधानमेव कार्याणां प्रयोजकमिति परार्थानामनुबन्धानामच्संज्ञा न प्रवर्त्ततइत्यर्थः । शैलीति । शीले भवा शैली समवधानपूर्विका प्रवृत्तिः । यथा लोके ब्राह्मणैः सह ब्राह्मणा भोज्यन्ते क्षत्रियैः सह क्षत्रिया इति । एवमिहाप्याचार्येण वर्णा निर्दिष्टा इत्यर्थः । लोपश्चेति । परत्वान्नि-

---

मुदायान्तरस्वप्रयुक्तमेवार्थान्तरस्वन्तदर्थानवगतिश्च न तु व्यत्ययाविकृतमित्यर्थः । ननु ककारसकारयकाराणामेवार्थवत्त्वमूपस्तु शक्त्युद्बोधक एवेति कस्यार्थस्य सत्ता तत्र तत्रापाद्यत इति चेत्तर्हि भग्नमेव वर्णानामर्थवत्त्वम् । तत्रैव पदे ऊपयोरर्थाभावात् । किं च सङ्ख्यासमुदायस्यैवार्थ इत्यपि नियन्तुमशक्यं कूपगतैकत्वस्य यूपादिभिरप्रतीत्या संख्ययापि काश्चिभिरन्वयव्यतिरेके सत्त्वाद् द्विवचनेन वैषम्यन्तु प्रागुक्तमेव तस्मात्समुदायस्यैवार्थवत्त्वं तदेव ध्वनयन्नाह । भाष्य [ इदं खल्वपीति ]दृष्टो हीति । भतदर्थेन रथाङ्गेन शोभिनो रथस्य यथार्थवत्ता तथा प्रकृतेपीति भावः । भाष्ये [अज्ग्रहणेष्विति] । प्रत्याहारे ऽक्षरसमाम्नाये ऽज्ग्रहणेषु अच्प्रत्याहारग्राहकेषु पठितानामनुबन्धानां प्रत्यासत्त्याक्षु ग्रहणं कुतो नेत्यर्थः । तत्फलितार्थमाह यएते अक्षु इति । तद्बोधकसूत्रेषु प्रागुक्तेषु । प्रत्याहारार्थास्तदुपकारकाः । अज्ग्रहणेन । अच्शब्देन । अणगादिप्रत्याहारेषु तेषां ग्रहणे फलाभावं मनसि निधायाज्ग्रहणेनेत्युक्तम् । न च हयादौ टग्रहणस्यापत्तिः । हल्षु उच्चारणार्थाकारोच्चारणेनोच्चारणार्थवर्णहीनहलां हल्घटितप्रत्याहारे ग्रहणाभावस्य वक्तुं शक्यत्वात् । प्राधान्येन । प्रत्याहारेषु ग्रहणार्थत्वेन । परार्थेति । अजादिस्वरूपबोधनार्थत्वेन परार्थत्वम् । यथाकारादयः संज्ञिविशेषसमर्पणायोपात्ता न तथाणादय इत्यर्थः । अप्रधानत्वमप्याचार्याचारेण साधयति । भाष्ये [ आचार्यस्येति ] । आचार्यशब्देनानादिः शब्दपुरुषः । एवञ्चान्यत्र सञ्ज्ञिविशेषसमर्पणायोपात्तत्वाविशेषामसञ्ज्ञित्वमेवेति भावः ॥

वक्तव्यमिति। यावता सिद्धत्वमुच्यते परसवर्ण एव तावद्भवति परसवर्णे तर्हि कृते तस्य यग्रहणेन ग्रहणाद् द्विर्वचनं यथा स्यात्। मा भूद् द्विर्वचनमानन्न च भेदो भवति। सति द्विर्वचने त्रियकारकमसति द्विर्वचने द्वियकारकम्। नास्ति भेदः। सत्यपि द्विर्वचने द्वियकारकमेव। कथम्। हलो यमां यमि लोप इत्येवमेकस्य लोपेन भवितव्यम्। एवमपि भेदः। सति द्विर्वचने कदाचिद्द्वियकारकं कदाचित् त्रियकारकम्। असति द्वियकारकमेव। स एष कथं भेदो न स्याद् यदि नित्यो लोपः स्याद् विभाषा च स लोपः। यथा ऽभेदस्तथास्तु। अनुवर्त्तते विभाषा शरोचि यद्वा· रयत्ययं द्वित्वम्। यदयं शरोचीति द्विर्वचनप्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो ऽनुवर्त्तते विभाषेति। कथं कृत्वा ज्ञापकम्। नित्ये हि तस्य लोपे प्रतिषेधार्थो न कश्चित्स्यात्। यदि नित्यो लोपः स्यात्। प्रतिषेधवचनमनर्थकं स्यात्। अस्त्वत्र द्विर्वचनम्। झरो झरि सवर्णे इति लोपो भविष्यति। पश्यति त्वाचार्यः विभाषा स लोप इति। ततो द्विर्वचनप्रतिषेधं शास्ति। नैतदस्ति ज्ञापकम्। नित्येऽपि तस्य लोपे स प्रतिषेधो ऽवश्यं वक्तव्यः। यदेतदचो रहाभ्यामिति

---

स्यत्वाद्वा। आदिरन्त्येनेत्यनेनाच्संज्ञाविधानकाले ऽनुबन्धानां लोपादसन्निधाना-दच्संज्ञा न प्रवर्तते। अनुबन्धा ह्युच्चारणाएव सन्ति। इत्संज्ञाप्रतिबद्धं कार्यमसन्त एव प्रतिपादयन्ति। स्वतस्तु न किं चित्कार्यं प्रतिपद्यन्ते। ऊकालोजिति-सिद्धे ऽच्त्वे योगविभागेन कालविशेषावच्छिन्नस्याच्त्वं नियम्यते। ततो ऽनुबन्धाना-मूकालत्वाभावादच्त्वाभावः। एवमपीति। ककाराकृतेरुपदेशान्मात्रिकस्याच्त्वं मन्यते। अत्र च यद्यप्ययं परिहारो ऽस्ति द्वावेतौ ककारौ न च वर्णद्वयेनैका जातिर्व्यज्यते इति

---

परत्वादित्याद्यन्तरङ्गत्वोपलक्षणमेवञ्च पूर्वमनुबन्धलोपादादिरन्त्येनेति सञ्ज्ञाविधानकाले ऽसन्निधानादि· त्यन्वयः। एवञ्चानुबन्धसदृशाभिन्नानामेव मध्यगसदृशानां बाह्यतां बोधयतीति भावः। भाष्ये (लोपःखल्वपि तावदिति)। सर्वतः प्रथममित्यर्थः। यत्तु एवमपि लणित्यकारस्य हल्षु ग्रहणापत्तेराचारादित्येव समाधिरत्र युक्त इति। तन्न। अतोल्लान्तस्येति सूत्रे लकारोच्चारणेन लण्सूत्रस्थस्यानुनासिकत्वाभावज्ञाप· नात्। एवञ्च तस्यानुबन्धत्वमेव न किं तूच्चारणार्थत्वमेव। अत एव भाष्ये अइउणित्या· दिसूत्रचतुष्टयोपादानेनैवैतद्विचारप्रवृत्तिः कृता। श्लोके चाज्ग्रहणेष्वित्यवोक्तम्। उरण्रपरसूत्रे च लपरत्वस्योपसङ्ख्यानमेव कार्यमिति तुल्यास्यसूत्र वक्ष्यते। भाष्ये (तत्कालानामचां ग्रहणम्) अच्प्र· त्येव यथा स्यादिति योगविभागः कार्य इत्यन्वय। सिद्धेच्त्व इति। अकारादीनामुपदेशात्सवर्णग्रहणाच्चेति भावः। ननु ककारद्वयस्य मात्रिकवर्णत्वं कथमेकस्यैव ऋलृगित्यत्रोपदेशादत आह। ककाराकृतेरिति। न च वर्णद्वयेनेति। जातिरपि स्वपर्याप्त्यधिकरणव्यङ्ग्यैव तद्द्वारैव च कार्यभागिति भावः। भाष्ये (एष एवार्थ इति)। अपर आहेत्यादिना वार्त्तिककृतोक्त इत्यर्थः। ह्रस्वादीनामिति। ह्रस्वदीर्घप्लुत इत्यतः प्राग्यावद् ऊकालोजिति तावदेवास्तु पृथक् सूत्रम्। फलं दर्शयति। अज्निमित्तकार्याणि। त· त्कालेष्वचु कर्त्तुमर्हाणि तथा स्युरित्यन्वयः। अणः सुष्टूपदेशः। अणूसूपदेशः। अणशब्दोच्चारणान्त· दन्तःस्थानां बोधकम्। अणुदिदित्यत्र किमर्थं क्रियतइत्यर्थो भाष्यस्येत्याह अणुदिदिति। अणु अण्मध्ये तेनात्र स्थाने किमर्थ उपदेश इति तु नार्थ इत्याह इण्ग्रहणेनेति। इह सर्यैयन्तेत्यादि भाष्यं गुणाभेदका इति पक्षेऽभेदकत्वपक्षे चेदमेवाण्ग्रहणं मानमिति भावः। यथास्थितसूत्रन्यासे इदम्। जा· तिपक्षेयाण्ग्रहणप्रत्याख्याने तु न कश्चिद्विचारः। एवं गुणा अभेदका इति न्याय्यपक्षेऽपि न विचार इति

द्विर्वचनं लोपापवादः स विज्ञायते । कथम् । यर इत्युच्यते । एतावन्तश्च यरः । यदुत झरो वा यमो वा । यदि चात्र लोपः स्याद् द्विर्वचनमनर्थकं स्यात् । किं तर्हि तयोर्योगयोरुदाहरणं यदकृते द्विर्वचने त्रिव्यञ्जनः संयोगः । प्रत्तं अवत्तं आदित्यः । इहेदानीं कर्त्ता हर्त्तेति द्विर्वचनसामर्थ्याल्लोपो न भवति । एवमिहापि लोपो न स्यात्कर्षति हर्षतीति तस्मान्नित्येऽपि लोपे ऽवश्यं स प्रतिषेधो वक्तव्यः। तदेतदसन्तं संदिग्धं वर्त्तते आचार्य्याणां विभाषानुवर्त्तते न वेति ॥

लण् ॥ ६ ॥ अयं णकारो द्विरनुबध्यते पूर्वश्चैव परश्च। तत्राणुग्रहणेष्विण्ग्रहणेषु च संदेहो भवति। पूर्वेण वा स्युः परेण वेति। कतमस्मिंस्तावदण्ग्रहणे संदेहः । ढ्रलोपे पूर्वस्य दीर्घोण इति। असंदिग्धं पूर्वेण न परेण। कुत एतत्। पराभावात्। न हि ढ्रलोपे परेणः सन्ति । ननु चायमस्ति । आतृढ आवृढ इति । एवं तर्हि सामर्थ्यात्पूर्वेण न परेण । यदि हि परेण स्यादण्ग्रहणमनर्थकं स्यात् । ढ्रलोपे पूर्वस्य दीर्घोच इत्येव ब्रूयात् । अथ वैतदपि न ब्रूयात् । अचो ह्येतद्भवति ह्रस्वो दीर्घः प्लुत इति। अस्मिंस्तर्ह्यण्ग्रहणे संदेहः केण इति । असंदिग्धं पूर्वेण न परेण । कुत एतत् । पराभावात् । न हि के परेणः सन्ति । ननु चायमस्ति गोका नौकेति । एवं तर्हि सामर्थ्यात्पूर्वेण न परेण । यदि हि परेण स्यादण्ग्रहणमनर्थकं स्यात् । केऽच इत्येव ब्रूयात् । अथ वैतदपि न ब्रूयात् । अचो ह्येतद्भवति ह्रस्वो दीर्घः प्लुत इति ।

---

तथापि पूर्वमेव मात्राकालोऽत्र गम्यते न च मात्रिकं व्यञ्जनमस्तीत्युक्तत्वात्पुनरिह नोक्तः। अथ किमर्थमिति । अणुदित्सवर्णस्येति कस्मान्न कृतमिति प्रश्नः । इण्ग्रहणे ग्रहणार्थस्त्वन्तः स्थानामत्रावश्यं कर्तव्य उपदेशः। गीर्ष्वित्यादौ मूर्द्धन्यो यथा स्यादिति । ननु च भेद इति श्रुतिकृतोऽस्त्येव भेदः सूक्ष्मत्वात्तु दुर्लक्ष्यः । तदेतदिति । ज्ञापकत्वमस्य विघटयति । आचार्योपदेशपारम्पर्यात्तु ज्ञायते अनुवर्त्तते विभाषेति । तस्मात् त्रिव्यञ्जनसंयोगश्रवणायाणुदिदिति णकारेण प्रत्याहारः कृतो न चकारेणेति स्थितम् ॥ ५ ॥

---

बोध्यम् । भाष्ये ( वक्ष्यत्येतांदति ) सिद्धत्ववचनं चावश्यकम् । अन्यथा परस्यानुस्वारस्य वा पदान्तस्येति परसवर्णे तस्यासिद्धत्वात्पूर्वस्यानुस्वारस्य यर्षीत्यस्थानापत्तौ रूपासिद्ध्यापत्तेः । तर्हि द्विर्वचनसिद्धिरेव फलमित्याह । [ परसवर्णे तर्हीति ] ननु न भेदो ऽनुपलब्धेरत आह । [ श्रुतिकृत इति ] । [ यदि नित्यो लोपः स्यादिति ] । तदाभेदो न स्यादित्यर्थः । [ विभाषाचेति ] । चस्त्वर्थे । एकदेश्याह । [ यथाऽभेद इति ] यथा द्विर्वचनप्रवृत्त्यप्रवृत्त्योर्भेदो न भवति तथैवास्तु मानुवृत्तद्विभाषाग्रहणमिति भावः । तृतीयो ज्ञापकमुपन्यस्यति । [ अनुवर्त्ततइत्यादिना ] । झरोझरीति लोपे इत्यर्थः । मध्यस्थतया इलां यमामित्यस्यापि वैकल्पिकत्वं सिद्धमिति भावः । [ लोपापवाद इति ] । यद्यपि हर्यनुभव इत्यादौ तदुदाहरणे लोपे ऽप्राप्तेऽपि द्विर्वचनमारभ्यते तथापि कृते द्वित्वे पश्चाल्लोपे ऽपि द्विवर्चनं व्यर्थमित्याशयेनापवादत्वोक्तिरिति भावः । तयोर्योगयोः । लोपविधायकयोः । प्रत्तमित्यादौ दाधातोः क्ते धातोस्तकारो ऽच उपसर्गादित्यनेन । आदित्ये आदित्याद् भवाद्यर्थेण्यान्ताण् ण्यः । तद् व्याचष्टे । ज्ञापकत्वमस्य विघटयतीति । सर्वथा संभवीत्युपसंहरतीत्यर्थः । ज्ञापकेन तदनुवृत्तिं साधयतस्तत्खण्डने ऽनुवृत्तिः सन्दिग्धा एवेति भावः । लण्सूत्रे विभाषा स लोप इत्युक्तेराह आचार्येति । अण्ग्रहणाज्ज्ञापकादित्यपि काश्चित् । तत्तु वार्तिककृताण्ग्रहणप्रत्याख्यानान्नोक्तम् ॥ ५ ॥

अस्मिंस्तर्ह्यणग्रहणे सन्देहः। अणो ऽप्रगृह्यस्यानुनासिक इति। असंदिग्धं पूर्वेण न परेण। कुत एतत्। पराभावात्। यदि हि परेण स्यात् अणग्रहणमनर्थकं स्यात्। अचो ऽप्रगृह्यस्यानुनासिक इत्येव ब्रूयात्। अथ वैतदपि न ब्रूयात्। अच एव हि प्रगृह्या भवन्ति। अस्मिंस्तर्ह्यणग्रहणे संदेहः। उरण्रपर इति। असंदिग्धं पूर्वेण न परेण। कुत एतत्। पराभावात्। न ह्युः स्थाने परेणः सन्ति। ननु चायमस्ति। कर्त्रर्थं हर्त्रर्थमिति। किं च स्यात्। यद्यत्र रपरत्वं स्याद् द्वयो रेफयोः श्रवणं प्रसज्येत। हलो यमां लोप इत्येवमेकस्यात्र लोपो भविष्यतीति। विभाषा स लोपः। विभाषा श्रवणं प्रसज्येत। अयं तर्हि नित्यो लोपः रोरीति। पदान्तस्येत्येवं सः। न शक्यः सः पदान्तस्येत्येवं विज्ञातुम्। इह हि लोपो न स्यात्। जर्गृधेर्लङ्। अजर्घाः। पास्पर्द्धेः। अपास्पाः इति। इह तर्हि मातॄणां पितॄणामिति रपरत्वं प्रसज्येत। आचार्यप्रवृत्तिर्ज्ञापयति नात्र रपरत्वं भवतीति यदयमृत इद्धातोरिति धातुग्रहणं करोति। कथं कृत्वा ज्ञापकम्। धातुग्रहणस्यैतत्प्रयोजनम्। इह मा भूत्। मातॄणां पितॄणामिति। यदि चात्र रपरत्वं स्याद्धातुग्रहणमनर्थकं स्यात्।

---

लण्॥६॥संदेहो भवतीति। किं प्रत्यासत्तिराश्रीयते ऽथ व्याप्तिरिति संदेहः। न हि के पर इति। नन्वल्पोपानदुपानत्केति ह्रस्वे कर्त्तव्ये नहो ध इत्यस्यासिद्धत्वादस्ति के परतो हकारः। तथा गीष्केत्यादौ रेफः अत्राहुः। नमुनइत्यत्र नेति योगविभागेन धात्वादीनामसिद्धत्वाभावात्तेषु च कृतेषु हकारादीनामभावः। न हि पदान्ता इति। ननु च भोभगोइत्यत्राण्ग्रहणस्य प्रयोजनं वक्ष्यते वृत्तव् करोतीत्यत्र हलि सर्वेषामिति लोपो मा भूदिति तत्कथमुच्यते न हि पदान्ता इति। उच्यते। अप्रगृह्यस्येति पर्युदासेनाच एवानुनासिकेन भाव्यं न तु हल इत्युक्तं न हि पदान्ता इति कार्यभाज इत्यर्थः। अचो ऽप्रगृह्यस्येति हलो हि न भाव्यमित्यत्राण्ग्रहणसामर्थ्यात्पूर्वेणेति स्थितम्। तत्र वृत्तं वृश्चतीति क्वि-

---

लण् ॥६॥ क्रिमिति। क्व प्रत्यासत्तिः। क्व व्याप्तिरिति सन्देह इत्यर्थः। भाष्ये (कतमस्मिन्निति) वक्ष्यमाणरीत्या सर्वत्र निर्णायकसत्त्वात्तत्प्रश्नः। कतमस्मिन्निति पाठेऽपि डतरादिविधौ उणाधिप्रत्याख्यानान्न दोष इति बोध्यम्। न हि ढ्लोप इति। गर्द्धेत्यादौ गुणो ऽसिद्ध इति भावः। दीर्घो च इत्येवेति। मात्रालाघवाभावेऽपि सङ्ख्यालाघवायासन्देहाय चेति भावः। तथा गीष्केति। विसर्गस्यासिद्धत्वादिति भावः। तेषु च कृतेष्विति। परत्वादिति भावः। योगविभागस्य भाष्यानारूढत्वाज्ज्ञोकेत्यादिभाष्यात्के पर इति भाष्याच्च तेषामनभिधानं वक्तुमुक्तम्। भाष्ये [अचो हीति] अचश्चेति परिभाषणादिति भावः। न हि पदान्ता इति। पदानामेवानुनासिको ऽवसाने जायत इत्याशयेनेदमुक्तम्। न तु तत्र पदान्ताधिकारो ऽस्ति। लोप इति। अत्रा हलो विशेषणादिति भावः। पर्युदासेनेति। क्रियमाणे ऽप्यण्ग्रहणे इत्यर्थः। भाष्येऽपि न सत्त्वं निषिध्यते। किंतु कार्यित्वमेवेत्याह कार्यभाज इति। एवञ्चानुनासिकप्राप्तियोग्याः पदान्ता न सन्तीत्यर्थः। वस्तुतो ऽस्या अग्रे सिद्धान्त्युक्तित्वेन तदज्ञानेनैव पूर्वपक्षस्यौचित्येनैवं भाष्यव्याख्यानमनुचितं पूर्वपक्षस्य सन्देहस्य चानुत्थानात्तस्मादष्टमाध्यायस्थं भाष्यमेकदेश्युक्तिरित्येवोचितम्। व्याख्यातञ्च तत्रोपाध्यायैरित्थमेव। भाष्ये (कर्तृहर्त्रिति)। अचामुपलक्षणम्। अत एवाचो ऽप्रगृह्यस्येत्युक्तमन्यथा को ऽप्रगृह्यस्येति वदेत्। निषेधात्संप्रसारणप्रसङ्ग इति। चिन्त्यमिदम्। णौ परतस्तत्प्रकृतिभूतप्रातिपदिकस्य टिलोपविधानेन वृश्चतेः स्थानित्वे मानाभावेन वकारे एकदेशविकृतन्यायेन वृश्चतित्वस्य दुर्लभत्वात्। अर्धाधिकविकारेण प्रत्यभिज्ञाभावाच्च। अत एव राजकीयमित्यादौ अल्लोपेन। अभ्च एव टिलोपस्थानित्वे तु

रपरत्वे कृतेऽनन्त्यत्वादित्वं न भविष्यति । पश्यत्वाचार्यो नात्र रपरत्वं भवतीति ततो धातुग्रहणं करोति । इहापि तर्हीत्वं न प्राप्नोति । चिकीर्षति जिहीर्षतीति । मा भूदेवम् । उपधायाश्चेत्येवं भविष्यति । इहापि तर्हि प्राप्नोति मातॄणां पितॄणामिति । तस्मात्तत्र धातुग्रहणं कर्तव्यम् । एवं तर्हि सामर्थ्यात्पूर्वेण न परेण । यदि परेण स्याद् अण्ग्रहणमनर्थकं स्यात् । उरज्रपर इत्येव ब्रूयात् । अस्मिंस्तर्ह्यण्ग्रहणे संदेहः । अणुदित्सवर्णस्य चाप्रत्यय इति । असंदिग्धं परेण न पूर्वेण । कुत एतत् । सवर्णेऽण्ग्रहणं तपरं ह्युर्ऋत् । यदयमुर्ऋदित्यृकारे तपरकरणं करोति तज्ज्ञापयत्याचार्यः परेण न पूर्वेणेति । इण्ग्रहणेषु तर्हि संदेहः । असंदिग्धं परेण न पूर्वेण । कुत एतत् य्वोरन्यत्र परेणेण् स्यात् । यत्रेच्छति पूर्वेण संमृह्य ग्रहणं तत्र करोति य्वोरिति । तच्च गुरु भवति । कथं कृत्वा ज्ञापकम् । तत्र विभक्तिनिर्देशे संमृह्यग्रहणे ऽर्द्धचतस्रो मात्राः । ·प्रत्या-

---

पि कृते वृत्तवृश्चमाचष्टे इति णिचि टिलोपे च कृते वृत्तवयतेर्विचि कृते वृत्तव् इति भवति । क्विपि तु क्वौ लुप्तं क्वौ विधिं प्रति च न स्थानिवदिति निषेधात्संप्रसारणप्रसङ्गः। लोपो व्योर्वलीति लोपप्रसङ्गश्च । विचि तु स्थानिवद्भावाद्वल्निमित्तो लोपो न भवति । हलि सर्वेषामित्यनेन तु लोपे क्रियमाणे पूर्वत्रासिद्धे न स्थानिवदिति स्थानिवत्वनिषेधाद्वलोपः प्राप्तोऽग्रहणानुवृत्त्या निवर्त्यते । अजर्घा इति । गृधेर्यङ्लुकि रुगागमे ऽभ्यासस्य कृते लङि सिपि शब्लुकि गुणरपरत्वसिब्लोपभष्भावजश्त्वरुत्वरलोपदीर्घत्वेषु रूपम् । इहापि तर्हीति । धातुग्रहणेन हि लिङ्गेनाधातोरेव रपरत्वं निवर्त्तितम् । धातोस्तु रपरत्वे सत्यनन्त्यत्वान्न प्राप्नोतीति प्रश्नः । इहापीति । तस्माद्धातुग्रहणस्य सप्रयोजनत्वान्न ज्ञापकत्वमित्यर्थः । सवर्णे इति । अचीकृतदिति ऋकारस्य ऋकार एव यथा स्यात् ऋकारो मा भूदित्येवमर्थं तपरत्वं क्रियते । यदि च पूर्वेण णकारेणाण्ग्रहणं स्यादकारो ऽनण्त्वा-

---

प्रकृतिभावापत्तिः । एतेन विचि एकदेशविकृतन्यायेन वृश्चतित्वान्षत्वापात्तिः । न च णिलोपस्य स्थानिवत्त्वान्न षत्वम् । पूर्वत्रासिद्धीये तन्निषेधादिति परास्तम् । न च व्रश्चेति सूत्रे पदाधिकारेण वृश्चान्तत्वमेकदेशविकृतन्यायेन सुलभमिति वाच्यम् । स्कोरिति सूत्रादन्तेग्रहणमनुवर्त्य वैयधिकरण्येनैवान्वयाश्रयणेनादोषात् । अत एवान्तेग्रहणं चरितार्थम् । अर्धाधिकविकाराच्च । एवञ्च वृक्षभृड्जोर्णिजन्तात्क्विपि वृक्षभ् इत्यादौ षत्वं नेत्याहुः । वलोपप्रसङ्गश्चेति । इदमुपलक्षणं क्वौ विधौ स्थानिवत्त्वनिषेधादूठ्प्रसङ्गश्चेत्यपि बोध्यम् । भाष्ये (रारीति] । त्रिपाद्यां बहिरङ्गासिद्धत्वाभावादिति भावः । भष्भावः । एकाचो बशित्यनेन । तत्र ह्येकाच इति झषन्तस्येति च धातोरित्यपेक्षया व्यधिकरणषष्ठीति भावः । रुत्वम् । दश्चेत्यनेन । भाष्ये [इहापि तर्हि] इत्यस्य ऋत इत्वमिति शेषः । ननु धातुग्रहणेन ऋकारस्य दीर्घो न रपर इति ज्ञापनादङ्गेनेति दीर्घस्यापि रपरत्वात् कथमत्रेत्वाप्राप्तिरत आह । धातुग्रहणेनेति । भाष्ये [ तस्मात्तत्रेति ] । न च इह किंचिन्नपो इतीति न्यायेन ज्ञापकत्वमप्यस्त्विति वाच्यम् । गु इत्यादेरनुकरणे प्रकृतिवदनुकरणमित्यस्याभावे ग्रोयङीत्यादावित्वाभावार्थमिहापि तदावश्यकत्वात् । गत्यन्तराभावे एव तन्न्यायेन ज्ञापकत्वाश्रयणाच्च । तदाह । तस्मादिति । एवं च रपरत्वेपि मातृणामित्यादौ उपधायाश्चेतीत्ववारणेन धातुग्रहणस्य चारित्यार्थ्येन रपरत्वानिवृत्तौ न ज्ञापकतेत्यर्थः । भाष्ये [ सामर्थ्यात्पूर्वेणेति ] । न च गल्लेत्यादौ याणादेशे लपरत्वार्थमेव परेणाण्ग्रहणं स्यादिति सामर्थ्यं कथम् । ऌकारांशे हल्रूपाणि रोरीति प्रवृत्त्या फलाभावेन तत्साहचर्याद् ऌकारांशेपि हल्रूपाणि अप्रवृत्तिरित्याशयात् । रलयोः समानश्च

हारग्रहणे पुनस्तिस्रो मात्राः सोयमेवं लघीयसा न्यासेन सिद्धे सति यद् गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः परेण न पूर्वेणेति । किं पुनर्वर्णोत्सत्तावियं णकारो द्विरनुबध्यते । एतज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा व्याख्यावतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति । अणुदित्सवर्णं परिहाय पूर्वेणाणग्रहणं परेणेण्ग्रहणमिति व्याख्यास्यामः ।

ञमङणनम्॥७॥झभञ्॥८॥किमर्थमिमौ मुखनासिकावचनावुभावनुबध्येते।न ञकार एवानुबध्येत।कथं यानि मकारेण प्रत्याहारग्रहणानि हलो यमां यमि लोप इति। सन्तु ञकारेण हलो यञां यञि लोप इति।नैवं शक्यम्।झकारभकारयोरपि झकारभकारयोर्लोपः प्रसज्येत । न झकारभकारौ झकारभकारपरौ स्तः। कथं पुमः खय्यम्पर इति । एतदप्यस्तु ञकारेण पुमः खय्यञ्परे इति । नैवं शक्यम् । झकारभकारपरेऽपि हि खयि रुः प्रसज्येत । न झकारभकारपरः खयस्ति । कथं ङमो ह्रस्वादचि ङमुण्णित्यमिति । एतदप्यस्तु ञकारेण ङञो ह्रस्वादचि ङञुण्णित्यमिति । नैवं शक्यम् । झकारभकारयोरपि हि पदान्तयोर्झकारभकारावागमौ

---

च्छिन्नकालस्य ग्राहक एवं न भवतीति ऋकारो नैव स्थानी नाप्यादेशः प्रसजतीति किं तपरत्वेन । कृतं तज् ज्ञापकं परेणाण्ग्रहणस्य । अर्द्धचतस्र इति । अर्द्धेन चतस्रः । चतुर्थी हि मात्रा तत्रार्द्धेति । किं पुनरिति । वर्णोत्पत्तिर्वर्णोच्छेदः । वर्णान्तरमनुबन्धः किं न क्रियते इत्यर्थः । व्याख्यानत इति न्यायादागमाद्वा शब्दशक्तिरनुसरणीयेत्यर्थः ।

झभञ् । न झकारेति । झकारस्य पदान्तस्य जश्त्वेन भाव्यमिति तस्याभावः । उज्झेर्झकार. संयोगान्तस्येति लुप्यते इति तस्याप्यभावः । सन्तु

---

तित्वेन तत्रापि रोरीत्यस्य प्रवृत्तेरित्यन्ये । लकार यण्घटितप्रयोगानभिधानमेवतज्ज्ञाप्यप्रामाण्यादित्यन्ये । भाष्ये [ सवर्णेण्तपरमिति ) । यदुर्कृत्सूत्रे तपरं करोति तज्ज्ञापकं सवर्णेण्ग्रहणं परणकारकमिति वार्त्तिकाक्षरार्थः। इत्येवमर्थमिति। ह्रस्वो यथा स्याद् दीर्घो मा भूदित्येवमर्थमित्यर्थः। ऋकारइति। उद्देश्यसमर्पक इत्यर्थः । न च भाव्यमानत्वेन सवर्णग्रहणाप्रसक्तेस्तद्वैयर्थ्यम् । तपरत्वाभावे आदेशान्तरानिवृत्त्यर्थत्वेन स्वरूपाभ्यनुज्ञानार्थत्वेनापूर्वबाध्यत्वाभावेन चाविधेयत्वात् । कृते तु तपरत्वे भाव्यमानतापीत्यन्यत् । भाष्ये [ संमृद्योति ] आदेशेन तौ ।निवर्त्येत्यर्थः । अर्धचतुर्थाइति वक्तुमुचितमत आह । अर्धेनेति । भाष्ये [ तिस्रोमात्रा इति ] । इयानि पदच्छेदाभिप्रायेणेदम् । तदुक्तम् । विभक्तिनिर्देशे इति । संहितायां तु सार्धमात्राद्वयमेवेति बोध्यम् । अणादिग्रहणेषूक्तैर्महद्भिर्यत्नैः सन्देहपरिहारं प्रतिपत्तिगौरवमिति लाघवाय वर्णान्तरमेव किं नानुबध्यत इत्याशयेनाह । भाष्ये ( किंपुनरिति ] । [ एतत् ) । वक्ष्यमाणम् । [आचार्यः । शिवः । ननु ज्ञापितेपि प्रवर्त्तकतया निवर्त्तकतयो वा नास्य चारितार्थ्यमत आह । न्यायादिति । उक्तो न्यायः आगम उपदेशपरम्परा तत्सिद्ध एवायमर्थो णकारानुबन्धरूपस्वव्यवहारेण बोध्यत इत्यर्थः । एवञ्च व्याख्यानेनैव पूर्वणकारेण क्वचित् के चित्परणकारेणेति निर्णये ज्ञापकानुसरणक्लेशो वृथेति सूचितम् ॥

[ञमङणनम् ॥ ७ ॥ झभञ् ॥ ८ ॥ भाष्ये ( नझकारेत्यादि ) । अनूहितवर्णमात्रानुकरणन्तु सूत्रादन्यत्र नास्तीति हयवरट्सूत्रे प्रपञ्चितम् । ( झकारभकारयोरपि हि पदान्तयोरिति ) । पदान्तयोस्तयोः सतोस्ततः परस्याजादेः पदस्य झभौ स्यातामित्यर्थः ।

स्याताम् । न झकारभकारौ पदान्तौ स्तः । एवमपि पञ्चागमास्त्रय आगमिनो वैषम्यात्संख्यातानुदेशो न प्राप्नोति । सन्तु तावद्येषामागमानामागमिनः सन्ति । झकारभकारौ पदान्तौ न स्त इति कृत्वा आगमावपि न भविष्यतः । अथ किमिदमक्षरमिति । अक्षरं न क्षरं विद्यात् न क्षीयते न क्षरतीति वा ऽक्षरम् । अश्नोतेर्वा सरोऽक्षरम् । अश्नोतेर्वा पुनरयमौणादिकः सरन् प्रत्ययः । अश्नुते इत्यक्षरम् । वर्णं वाहुः पूर्वसूत्रे । अथ वा पूर्वसूत्रे वर्णस्याक्षरमिति संज्ञा क्रियते । किमर्थ-

---

तावदिति । उद्देशानुदेशाभ्यां संख्यासाम्याद्यथासंख्ये लब्धे प्रयोगे यस्यागमस्यागमी विद्यते स प्रवर्त्तते नान्य इत्यर्थः । किमिदमिति । अक्षरसमाम्नाय इति व्यवहाराद्यो वा इमां स्वरशो ऽक्षरश इति चोक्तत्वात्प्रश्नः । अक्षरं न क्षरमिति । क्रियाशब्दोऽयं नित्यस्यार्थस्य वाचक इति दर्शयति । तत्र क्षियः क्षरतेर्वा विनाशार्थस्य नञ्पूर्वस्य रूपम् । तच्च ब्रह्मतत्त्वं परमार्थतो नित्यम् । व्यवहारनित्यनया तु वर्णपदवाक्यस्फोटानां नित्यत्वं जातिस्फोटस्य वा । अश्नोतेर्वेति । सरन्प्रत्ययस्यानुबन्धलोपे कृते अनुकरणं सर इति । तत्रार्थमश्नुते व्याप्नोतीत्यक्षरं पदं वाक्यं वा । वर्णं वाहुरिति । रूढिरियं वर्णस्येत्यर्थः । पूर्वसूत्रे इति । व्याकरणान्तरे वर्णा अक्षराणीति वचनात् । किमर्थमिति । वर्णानां साधुत्वस्याप्रतिपाद्यत्वात्पदस्यैव साधुत्वान्वाख्यानात्प्रश्नः । वर्णज्ञानमिति । वर्णा येन शास्त्रेणाज्ञायन्ते तद्वाचो विषयः । शास्त्रेण हि वाग्विषीयते आबध्यते शास्त्रेण तस्याः परिज्ञानादित्यर्थः । यत्र चेति । ब्रह्म वेदः पदे वर्त्तते तस्य च शास्त्रं विषयः लौकिकानां वैदिकानां च शास्त्रं विषय इत्यर्थः । तदर्थमिति ।

---

( एवमपि पञ्चागमा इति ) । लक्ष्यसंस्कारकालिकसङ्ख्यासाम्यं यथासंख्यप्रवृत्तौ निमित्तमिति मन्यते । सिद्धान्ती तु प्रतिपत्तिकालिकमेव सङ्ख्यासाम्यं तत्प्रवृत्तौ निमित्तमित्याह । सन्त्विति । येषामागमानामागमिनः सन्ति तेषां भवन्तु इत्यर्थः । अनुदेशः । प्रतिनिर्देशः । भगवता तु स्पष्टप्रतिपत्तये ऽनुबन्धद्वयमदर्शि । इतिव्यवहारादिति । अइउण्सूत्रे ऽयं व्यवहारो भाष्ये । प्रश्न इति । तद्घटकीभूताक्षरपदार्थावगमायेति भावः । भाष्ये अक्षरमित्यस्य नक्षरमिति विग्रहप्रदर्शनम् । ( तच्चेति ) । अक्षरं चेत्यर्थः । ब्रह्मतत्त्वस्यैव तत्त्वे हेतुगर्भविशेषणमाह परमार्थतो नित्यमिति । यतस्तत् प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूपनित्यत्ववदित्यर्थः । नन्वेवं प्रकृते किमायातमत आह व्यवहारनित्यतया चेति । सर्वेषां शब्दानामाकाशवत् सृष्ट्यादावुत्पत्तिः प्रलये च नाश इत्यर्थः । एवञ्च व्यवहारनित्यतयाऽक्षरब्रह्मसादृश्यवत्तान्तेषां पदादिरूपाणामयं वर्णसमाम्नायः शास्त्रप्रवृत्तिद्वारा बोधक इत्यक्षरसमाम्नाय इति चतुर्दशसूत्रीविषयव्यवहारोपपत्तिः । एवञ्च शब्दे औपचारिकोऽक्षरपदप्रयोग इति भावः । न्यायादिनये त्वाह जातिस्फोटस्य वेति । भाष्ये [ अश्नोतेर्वेति ] तद्व्याचष्टे अर्थमश्नुतेइति । वर्णानामनर्थकत्वेन चिन्त्यमिदं. नानादेशेषु युगपदेकस्यैव शब्दस्याभिव्यक्तिदर्शनेन स्फोटस्यापि व्यापकत्वमिति भाष्यार्थ इत्यन्ये । ननु न्यायादिनये व्याप्यवृत्तिषु विनाशिषु वर्णेषु कथं तद्व्यवहारोत आह । ( वर्णं वाहुरिति ) । चघटितः पाठोऽत्र प्रामादिकः । व्याख्यानभाष्ये अयमेवेत्युक्तेः । नन्वनन्तरोक्तयोगाभावात्कथमेषु प्रयोगोत आह । रूढिरिति । तदुक्तम् । भाष्ये ( अक्षरमिति ) । सम्ज्ञेति । व्याकरणान्तरेइति । पूर्वसूत्रशब्दे षष्ठीतत्पुरुष इति भावः । एवञ्चाक्षरसमाम्नायइत्यस्य श्रुतिरूपवर्णसङ्घात इत्यत्र तात्पर्यम् । भाष्ये ( उपदिश्यतइति ) । अक्षरसमाम्नायोपदेशः किमर्थ इत्यर्थः । पूर्वं कृतोऽप्ययं विचारः कंचिद्विशेषं वक्तुं पुनः क्रियते । येन शास्त्रेणेति । चतुर्दशसूत्र्यात्मकेन तन्मूलकपाणिनिव्याकरणेन वेत्यर्थः । ( तत् ) । शास्त्रम् । ( वाचो विषयः ) । बन्धनं प्रतिपादकमित्यर्थः । भाष्ये ( यत्र चेत्यनेन ) वाक् परामृश्यते इत्याह । पदे वर्ततइत्यादिना । शास्त्रं विषय इति । प्रतिपादकमित्यर्थः । वर्णज्ञानं शास्त्रं वाचोविषयः । का सा वाग् ( यत्र च

मुपदिश्यते। अथ किमर्थमुपदिश्यते। वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते। सोयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः। सर्ववेदपुण्यफलावाप्तिश्चास्य ज्ञाने भवति। मातापितरौ चास्य स्वर्गे लोके महीयते॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे द्वितीयमान्हिकम्॥

वृद्धिरादैच्॥ १॥ कुत्वं कस्मान्न भवति। चोः कुः पदस्येति। भत्वात्। कथं भसंज्ञा। अयस्मयादीनि च्छन्दसीति। छन्दसीत्युच्यते। न चेदं

---

शास्त्रप्रवृत्त्यर्थमित्यर्थः। इष्टबुद्ध्यर्थमिति कलादिदोषरहितवर्णज्ञानार्थमित्यर्थः। लघ्वर्थमिति। अनुबन्धकरणार्थमित्यर्थ.। वाक्समाम्नाय इति। एतावद्भिरेव वर्णैर्वाग्व्यवहार इत्यर्थः। पुष्पितः फलित इति। दृष्टादृष्टफलाभ्यामभ्युदयनिःश्रेयसाभ्यां वा। चन्द्रतारकवदिति। अनादित्वान्नित्यत्वं वाग्व्यवहारस्य सूचयति। ब्रह्मराशिरिति। ब्रह्मतत्त्वमेव शब्दरूपतया प्रतिभातीत्यर्थः। सर्ववेदेति। सर्ववेदाध्ययनकृतस्य पुण्यस्य यत्फलं तत्प्राप्नोतीत्यर्थः। मातापितराविति। माहात्म्यातिशयः शब्दशास्त्रस्य प्रत्याहारमात्रफलाख्यानद्वारेणान्वाख्यायते। महीयेते इति। पूज्येते इत्यर्थः। महीयशब्दः कण्ड्वादियगन्तः॥ ६॥ इत्युपाध्यायजैयटपुत्रकैयटकृते व्याकरणमहाभाष्यप्रदीपे प्रथमस्याध्यायस्य प्रथमे पादे द्वितीयमान्हिकम्॥ २॥

वृद्धिरादच्॥ कुत्वं कस्मान्न भवतीति। अनेकशक्तेः शब्दस्य शक्त्यवच्छेदेन संज्ञिनि विनियोगान्नित्यत्वाच्च सर्वसंज्ञानां लौकिकत्वाच्छन्दस्यानुकरणश-

---

ब्रह्म वर्त्तते ) चात्पुराणादीति भाष्याक्षरार्थः। तदर्थमित्येतद्व्याचष्टे। ( शास्त्रप्रवृत्त्यर्थमिति )। कलादीति। इदं प्रयोजनं पस्पशान्ते दूषितम्। ( अनुबन्धकरणार्थमिति )। लघ्वर्थमित्यक्षराणामत्रार्थे स्वारस्यं चिन्त्यम्। अनुबन्धकरणमूलकप्रत्याहारद्वारा लाघवेन शास्त्रप्रवृत्त्यर्थमित्यर्थो वा। ( वाक्समाम्नायः )। वाक्संग्रहोपाय इत्यर्थः। तदाह। एतावद्भिरेवेति। दृष्टफलेनाभ्युदयेन वा पुष्पितोऽदृष्टफलेन निःश्रेयसेन वा फलितः। वाग्व्यवहारस्येति। तत्संग्राहकस्य चतुर्दशसूत्रीरूपस्येत्यर्थः। यथाश्रुते हि भाष्ये ऽक्षरसमाम्नायोद्देशेन प्रवृत्तविशेषणानामन्यपरतया योजने भाष्यविरोधः। अत एवैतत्प्रतीकमुपादाय हरिणा "अस्याक्षरसमाम्नायस्य वाग्व्यवहारजनकस्य न कश्चित्कर्त्तास्त्येवमेव वेदपारम्पर्येण स्मर्यमाणमिति" व्याख्यातम्। ब्रह्मतत्त्वमेवेति तदुक्तं नन्दिकेश्वरेणाकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वर इत्यादिना सर्ववर्णानां मायेश्वररूपता वर्णेभ्य एव च महदादिसृष्टिरित्यर्थपरतया चतुर्दशसूत्रीं योजयता। तदाह। ( सर्ववेदेत्यादि )। अन्ये तु वर्णज्ञानं चतुर्दशसूत्र्यात्मकं शास्त्रं वाचो वेदशास्त्रपुराणरूपायाः सकलवाचो विषयो बन्धनम्। यत्र च वर्णसमाम्नाये ब्रह्मबोधतया वर्त्तते व्याख्याता चैषा चतुर्दशसूत्री ब्रह्मपरतया नन्दिकेश्वरेण। तदर्थं सकलवाग्ज्ञानार्थे ब्रह्मबोधनार्थञ्च। अनेन सकलवेदाध्ययनेन यत् फलन्तदक्षरसमाम्नायज्ञानेन सूचितं तद्वक्ष्यति। ( सर्ववेदेत्यादि )। ( सोयमित्यादि ) भाष्यग्रन्थश्चैतच्छ्लोकपूर्वार्धस्यैव व्याख्यानपरः। तत्र वर्णज्ञानमित्यस्य व्याख्या ( सोयमक्षरसमाम्नाय इति )। वाग्विषय इत्यस्य व्याख्या वाक्समाम्नाय इति सर्ववाग्रूपत्वात्। तदध्ययनतन्मूलव्याकरणाध्ययनाभ्यां पुष्पितः। फलितः तदर्थभावनया जनिततत्त्वज्ञानरूपफलः। [ चन्द्रतारकवत् प्रतिमण्डित ] इत्यनेनास्यानादित्वं सूचयति। तादृशोयं ब्रह्मराशिर्वेदितव्यः। बोध्यबोधकयोरभेदात्। सर्ववेदेति। सर्ववेदाध्ययनजन्यपुण्यरूपफलस्य चित्तशुद्धिरूपस्य प्राप्तिरस्य ज्ञाने ऽध्ययनमात्रे भवति। इदमेव पूर्वं पुष्पितत्वम्। तादृशपुत्रवत्त्वेन च मातापित्रोः स्वर्गे पूजा भवति। यथा कृतराजसूययुधिष्ठिररूपपुत्रेण पाण्डोः स्वर्गे पूजेति। इष्टबुद्ध्यर्थमित्यादि तु प्राग्व्याख्यातत्वान्न व्याख्यातमित्याहुः॥

इति कालोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमे पादे द्वितीयमान्हिकम्॥ २॥

छन्दः । छन्दोवत्सूत्राणि भवन्ति । यदि भसंज्ञा वृद्धिरादैजदेङ्गुण इति जश्त्वमपि न प्राप्नोति । उभयसंज्ञान्यपि छन्दांसि दृश्यन्ते । तद्यथा । स सुष्टुभा

---

ब्दत्वाज्जातिशब्दत्वाद्वा शास्त्रप्राप्तिरस्तीति प्रश्नः । तत्र कुशब्दः पञ्चसु वर्गेष्वासक्तस्वरूपो वाचकत्वेन नियुक्त इति शब्दस्वरूपे प्रवृत्तिनिमित्ते भावप्रत्ययः । छन्दोवदिति। न वैशेषिकादिसूत्राण्यपि त्वङ्गत्वाद्व्याकरणसूत्राण्येव । इष्टिश्चेयं छन्दोव-

---

वृद्धिरादैच् ॥ द्विपदं सूत्रम् । क्रममनयोः साधुत्वमिति भाष्यप्रदर्शनात् । अन्यथोद्देश्यानेकत्वाद् वृद्धिशब्दस्याावृत्तिर्वाक्यार्थबोधाय कार्या स्यात् । द्वन्द्वे तु समाहारस्यैकस्योद्देश्यस्य शब्दतः संभवात् तां विनापि सिध्यति । न च समाहारे टच्प्रसङ्गः । समासान्तविधेरनित्यत्वात् । प्रतेरंश्वादय इति सूत्रेंऽश्वादिगणे राजन्शब्दपाठाल्लिङ्गात् । अन्यथा राजाह इति टचा सिद्धे किं तेन । यद्वा पदत्रयं पस्पशायां भाष्ये वृद्धिः आद् ऐजिति पदविभागदर्शनात् । वृद्धिशब्दस्त्वावृत्त्या योज्यः । अत्र पक्षे अनयोरिति भाष्यं खण्डयोरित्यर्थकम् । असाधुशब्दोच्चारणं पाणिनेरश्रद्धेयतापत्त्या तदुक्तपदानां साधुत्वं विचारयति । भाष्ये ( कुत्वमित्यादि ) । ननु ऐच्छब्दस्यादिरन्त्येनेत्यनेन कृत्रिमतया लौकिकवैदिकबहिर्भूतत्वेन कथं सुबादिशास्त्रप्राप्तिः । लौकिकत्वञ्च लोकेऽर्थबोधनाय प्रयुक्तशब्दत्वमत आह अनेकेति । नित्यत्वाच्चेति । चो हेतौ, यतः शब्दार्थसम्बन्धस्य नित्यत्वात्सर्वसंज्ञानां नित्यत्वमतो लौकिकत्वाच्छास्त्रप्राप्तिरित्यन्वयः । लोकेऽर्थान्तरेऽप्रसिद्धानामपि सञ्ज्ञानां नित्यत्वमिति बोधयितुं सर्वशब्दः । नन्वेवं वृद्धिरादैजित्यादिनां वैयर्थ्यमत आह शक्तीति । शक्त्यवच्छेदस्तत्सङ्कोचः । विनियोगो विशेषनियमः । अभिमतातिरिक्तार्थान्तरव्युदासाय च सः । परिसंख्यायाञ्चात्र शास्त्रे प्रायेण नियमव्यवहार इति बोध्यम् । यद्वा शक्त्यवच्छेदः शक्तिनिश्चयः शब्दार्थस्यानवच्छेदे इत्यादावच्छेदशब्दस्य तदर्थकत्वदर्शनात् । फलरूपे हेतौ तृतीया । विनियोग उपदेशः । शक्तिनिश्चयफलकोपदेशादित्यर्थः । एवञ्च तत्सङ्केतकरणरूपप्रकरणादर्थान्तराप्रतीतिरिति बोध्यम् । इदमेव युक्तं सर्वार्थवाचकत्वेपि सङ्केतरूपत्वेनाज्ञातशक्तिबोधकतया विधित्वसंभवेनैषां नियमार्थत्वासंभवात् । नन्वेवं लौकिकार्थबोधो न स्यादत उक्तम् अनेकशक्तेरिति । स्वशास्त्रे एव प्रकरणादन्यार्थाबोध इति भावः । अनेकास्मिन्ननेका वा शक्तिरस्येति विग्रहः । अन्त्ये सर्वनाम्नो वृत्तिमात्रइति पुंवत्त्वम् । कोपधप्रतिषेधे तद्धितवुग्रहणाद्वा स्त्रिया इति पुंवत्त्वम् । आश्रयभेदादेव शक्तिभेद इति मते आद्यम् । निरूपकभेदाद्भेदे द्वितीयः । नित्ये शब्दार्थसंबन्धे पुरुषव्यापारात्प्रागवाचकस्य न पुरुषव्यापारेण वाचकता शक्या कर्तुमतः सर्वे सर्वार्थवाचका इत्यभ्युपगमादनेकशक्तित्वावसायः । तादात्म्यमेव च शब्दार्थयोः शक्तिः । अत्र पक्षे गौणमुख्यविभागः प्रसिद्ध्यप्रसिद्धिमूलः । 'अन्यायो ऽनेकार्थत्वमिति' त्वश्रद्धेयमेवेति निरूपितं मञ्जूषायाम् । अत्र लौकिकशब्दत्वं साध्यम् । शास्त्रीयसञ्ज्ञात्वसमानाधिकरणं नित्यत्वं हेतुरतो न वैदिकेषु व्यभिचारः सर्वसञ्ज्ञानामिति वदता सूचितमिदम् । अपूर्वाः सञ्ज्ञाः क्रियन्तइति पक्षेपि लौकिकत्वं साधयति । अनुकरणेति । अयमपि लौकिकत्वे हेतुः । आदिरन्त्येनेत्यनेन सञ्ज्ञात्वेन विनियुक्तस्यैव शब्दस्यानुकरणं सूत्रे लक्षणया तेनैवोपस्थापितयोरैकारौकारयोस्तात्पर्यवशाच्छब्दबोधविषयतेति बोध्यम् । अनुकरणे च सर्वशब्दानां साधुत्वेन शास्त्रविषयतेति भावः । यत्त्वैजित्या अन्तावयवद्वारा समुदायानुकरणमिति तन्न तथासत्यादिरन्त्येनेति सूत्रवैयर्थ्यापत्तेः । वृद्धिशब्दादेः शास्त्रविषयताया एवमप्यनुपपादनाच्च । नन्वनुकरणत्वानुभवः किं च त्रयीशब्दानां प्रवृत्तिरिति पक्षे उक्तहेतुद्वयस्याप्यभावो ऽत आह जातीति । वैयाकरणव्यवहाराच्च तत्सिद्धिरिति भावः । अत्र पक्षे ज्ञानिबोधार्थमेव सञ्ज्ञासूत्राणीति बोध्यम् । अत्रापि पक्षे लौकिकत्वं सञ्ज्ञापक्षवदेव बोध्यम् । हरदत्तस्तु वृद्धिशब्दो वृद्धेर्भावे क्तिन्नन्तः । अभेदोपचाराच्च वृद्धियुक्तादैक्षु वृत्तिः । लक्षणयैव सिद्धे सूत्रं नियमार्थं वृद्धियुक्तप्लुतदीर्घैकारादीनां बोधो मा भूदिति त्रयीपक्षे सूत्रार्थमाह । तन्न । अदेङ् गुण इत्यादावसम्भवात् । ननु कुत्वमित्यत्र सञ्ज्ञात्वपक्षे ककारादिपञ्चकगतप्रवृत्तिनिमित्ताभावाद् भावप्रत्ययो ऽनुपपन्नः । किं चात्र ककारस्य प्राप्तिर्न तु कुवृत्तिधर्मस्येति कुत्वमित्यसङ्गतमत आह तत्रेति । आसक्तस्वरूपः संबद्धस्वरूपः एवञ्च कुशब्दः कुशब्दत्वस्ककारादिषु शक्त इत्येवं शक्तिग्रहात्कुशब्दस्य प्रवृत्तिनिमित्तत्वम् । संबन्धश्चानादिव्यवहारसिद्धतादात्म्यम् । तादात्म्येन कुशब्दं प्रवृत्तिनिमित्तीकृत्य शक्तित्वेन तस्य ग्रहे बाधकाभावात् । केचित्तु

मृक्वता गणेन । पदत्वात्कुत्वं भत्वाज्जश्त्वं न भवति । एवमिहापि पदत्वाज्जश्त्वं भत्वात्कुत्वं न भविष्यति । किं पुनरिदं तद्भावितग्रहणं वृद्धिरित्येवं ये आकारैकारौकारा भाव्यन्ते तेषां ग्रहणमाहोस्विदादैज्मात्रस्य । किं चातः । यदि तद्भावितग्रहणं शालीयो मालीय इति वृद्धलक्षणश्छो न प्राप्नोति । आम्रमयं शालमयम् । वृद्धिलक्षणो मयण् न प्राप्नोति । आम्रगुप्तायनिः शालगुप्तायनिः । वृद्धलक्षणः फिञ् न प्राप्नोति । अथादैज्मात्रस्य ग्रहणम् । सर्वो भासः सर्वभास इत्युत्तरपदवृद्धौ सर्वं चेत्येष विधिः प्राप्नोति । इह च तावती भार्या यस्य तावद्भार्यः यावद्भार्यः । वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधः प्राप्नोति । अस्तु तर्हि आदैज्मात्रस्य ग्रहणम् । ननु चोक्तं सर्वो भासः सर्वभास इत्युत्तरपदवृद्धौ सर्वञ्चेत्येष विधिः प्राप्नोतीति । नैष दोषः । नैवं विज्ञायते उत्तरपदस्य वृद्धिरुत्तरपदवृद्धिरुत्तरपदवृद्धाविति । कथं तर्हि । उत्तरपदस्येत्येवं प्रकृत्य या वृद्धिस्तद्वत्युत्तरपदे इत्येवमेतद्विज्ञायते । अवश्यं चैत-

---

दिति । किं पुनरिति । उभयथा शास्त्रे दर्शनात्पक्षद्वये च दोषसम्भवात्प्रश्नः । उत्तरपदस्येत्येवमिति । तत्र हि वृद्धौ सर्वं चेत्यप्युच्यमाने वृद्धिमात्रस्योत्तरपदस्याभावात्सामर्थ्याद्वृद्धिमदुत्तरपदं ग्रहीष्यते इत्यतिरिच्यमानमुत्तरपदग्रहणं सामर्थ्यादुत्तरपदा-

---

शब्दस्य स्वरूपं कुशब्दत्वं सामान्यं तस्कादिष्वारोपितं प्रवृत्तिनिमित्तं तद्धर्मकश्च वाचिकेत्याहुः तेन च कुत्वशब्देन स्वार्थाश्रयः ककारो लक्ष्यत इति ककारः कस्मान्नेति चोद्यपर्यवसानम् । वस्तुतः कुत्वकुपदयोर्भवभसञ्ज्ञापदयोश्च पर्यायतेति ऋलृक् सूत्रे निरूपितमिति न कश्चिद्दोषः । अङ्गत्वात् । पदपदार्थबोधनद्वारा वेदोपकारकत्वात् । मुखं व्याकरणमित्यादिनाङ्गत्वनिरूपणाच्च । प्रधानञ्च षट्स्वङ्गेषु व्याकरणमिति पस्पशायां भाष्योक्तेश्च । अस्यामिष्टौ नार्षत्वं प्रयोजकं नैषेष्टिरस्ति छन्दोवत्कवयः कुर्वन्तीति यूस्त्र्याख्याविति सूत्रे भाष्योक्तेः । तस्मादङ्गत्वमेव प्रयोजकमिति भावः । ननु छन्दसि विहितस्य सूत्रे कथं प्रवृत्तिरत आह इष्टिरिति । तथा च भाष्यकारीयातिदेशात्सूत्रेषु छन्दःकार्यप्रवृत्तिरिति भावः । भाष्ये ( जस्त्वमपीति ) । संहितया पाठे इत्यर्थः । उभयसञ्ज्ञान्यपीति । उभे सञ्ज्ञे येषामिति विग्रहः । सञ्ज्ञाद्वयहेतुककार्यदर्शनेन तद्वत्त्वकल्पनेति भावः । ननु सूत्रादादैज्मात्रग्रहणपक्ष एव प्रतीयत इति प्रश्नानुपपत्तिरत आह उभयथेति । लुगादिसञ्ज्ञासु तद्भावितपक्षस्य लोपसञ्ज्ञायामदर्शनमात्रस्येति भावः । ननु टिघुभादिसञ्ज्ञास्वतद्भावितानामेव ग्रहणं दृश्यत इति सोऽपि पक्षः शङ्कितुमुचित इति चेन्न । तत्र हि तद्भावितासम्भवादतद्भावितानामेव ग्रहणं न च तथा प्रकृते इति उभयथेत्युक्तम् । वृद्धिशब्दे तन्त्राद्यङ्गीकारे तद्भावितग्रहणं वृद्धिशब्दैकत्वे द्वितीयः पक्ष इति भावः । भाष्ये ( वृद्धिलक्षणो मयडिति ) । नित्यं वृद्धशरादिभ्य इति अस्य वृद्धसञ्ज्ञाद्वारा वृद्धिलक्षणत्वं बोध्यम् । 'वृद्धलक्षण' इति पाठे एषां वृद्धत्वाभावेन समुदायानां वृद्धित्वाभावादित्यर्थः । फिञिति । उदीचां वृद्धादगोत्रादिति । न च प्राचामवृद्धादिति फिनाप्येतत्सिद्धं पुंवद्भावनिषेधोऽप्याम्रगुप्तायनीभार्य इत्यादौ जातेश्चेति सिद्ध इति वाच्यम् । आम्रगुप्तायनेरपत्यं युवेत्यर्थे ऽणो द्व्यचः तिर्यार्षञित इति लुकि आम्रगुप्तायनिरित्येवरूपं पितरि पुत्रे चेष्यते फिनि तु ञितः परत्वाभावान्न सिध्येत् । न चाब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसङ्ख्यानमिति तत्सिद्धिः ब्राह्मणगोत्रे तदप्रवृत्तेः । भाष्ये ( एष विधिरिति ) । पूर्वपदान्तोदात्तत्वमित्यर्थः । तावद्भार्ये आसर्वनाम्न इत्यात्वस्य वतुर्निमित्तमिति पुंवत्त्वनिषेधप्राप्तिः । यदि प्रथमपक्षे दोषो दुरुद्धरोऽस्तु तर्हीत्यन्वयः । भाष्ये तद्वत्युत्तरपदे इति । समासाक्षिप्तोत्तरपदशब्देन सामानाधिकरण्यायोत्तरपदस्येत्येवं वृद्धिर्यस्मिन्निति बहुव्रीहिरिति भावः । तत्राधिकारलक्षणायां बीजमाह तत्र हीति । न च आ भवतीति औः सर्वस्य औः सर्वौरित्यादौ वृद्धिरूपोत्तरपदसम्भवः । न चैकादेशे व्यपवर्गाभावः । नेन्द्रस्येति निषेधेन पूर्वोत्तरपदसम्बन्धिकार्यस्य

देवं विज्ञेयम् । तद्भावितग्रहणे सत्यपीह प्रसज्येत । सर्वः कारकः सर्वकारक इति । यदप्युच्यते । इह तावती भार्या यस्य तावद्भार्यः यावद्भार्य इति । वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधः प्राप्नोतीति । नैष दोषः । नैवं विज्ञायते । वृद्धेर्निमित्तं वृद्धिनिमित्तं वृद्धिनिमित्तस्येति । किं तर्हि । वृद्धेर्निमित्तं यस्मिन् सोयं वृद्धिनिमित्तः वृद्धिनिमित्तस्येति । किं च वृद्धेर्निमित्तम् । योसौ ककारो ञकारो णकारो वा । अथ वा यः कृत्स्नाया वृद्धेर्निमित्तम् । कश्च कृत्स्नाया वृद्धेर्निमित्तम् । यस्त्रयाणामाकारैकारौकाराणाम् । संज्ञाधिकारः संज्ञासंप्रत्ययार्थः * । अथ संज्ञेत्येवं प्रकृत्य वृद्ध्यादयः शब्दाः पठितव्याः । किं प्रयोजनम् । संज्ञासंप्रत्ययार्थः । वृद्ध्यादीनां शब्दानां संज्ञेत्येष संप्रत्ययो यथा स्यात् । इतरथा ह्यसंप्रत्ययो यथा लोके * । अक्रियमाणे हि संज्ञाधिकारे वृद्ध्यादीनां संज्ञेत्येषः संप्रत्ययो न स्यात् । इदमिदानीं बहुसूत्रमनर्थकं स्यात् । अनर्थकमित्याह । कथम् । यथा लोके । लोके ह्यर्थवन्ति चानर्थकानि च वाक्यानि दृश्यन्ते । अर्थवन्ति तावत् ।

---

धिकारमवगमयति । वृद्धेर्निमित्तं यस्मिन्निति । निमित्तशब्दोपादानसामर्थ्याद्व्यधिकरणपदो बहुव्रीहिराश्रीयते । अन्यथा वृद्धेस्तद्धितस्येत्येव ब्रूयात् । वृद्धिनिमित्तत्वाच्च तद्धितस्य तद्धित एव वृद्धिशब्देनाभिधायिष्यते । अथ वा वृद्धेः संबन्धी यस्तद्धित इति वैयधिकरण्येन संबन्ध आश्रयिष्यते । योसौ ककार इति । कञणेषु सत्सु वृद्धिर्भवतीति तेषामेव निमित्तत्वम् । अथ वेति । निमित्तशब्दोपादानादेवाश्रितबहुत्वसंख्यो वृद्धिशब्दः समस्यते वृद्धीनां निमित्तं वृद्धिनिमित्तमिति । संज्ञाधिकार इति वार्त्तिकम् । तस्य व्याख्यानमथ संज्ञेत्येवमिति । अथशब्दः संज्ञायाः प्रस्तावद्योतनार्थः । वृद्ध्यादीनामिति । संप्रत्यय इत्येतदपेक्षया कर्मणि षष्ठी वृद्ध्यादयः संज्ञात्वेन यथा प्रतीयेरन्नित्यर्थः । यथा लोके इति । कात्यायनेनासंप्रत्यये लोको दृष्टान्तत्वेनोपात्तः । भाष्यकारस्तु वाक्याध्याहारेणानर्थकत्वे लोकं दृष्टान्तत्वेन योजयति बहुसूत्रमिति । बहुव्रीहिः । प्रकरणं चान्यपदार्थः ।

---

कादेशात्प्राक् प्रवृत्तिस्वीकारात् । तथा च सर्वशब्दान्तोदात्तत्वे शेषनिघातेन औकारस्यानुदात्तत्व एकादेशस्य स्वरितो वानुदात्ते इति पाक्षिकः स्वरितः स्यादिति वाच्यम् । तादृशानामभिधाने दृढतरमानाभावात् स्वरितत्वानुधिकारलाभ इति बोध्यम् । अन्यथावृद्धेरिति । वृद्ध्यात्मकतद्धिताभावाद्वृद्धिनिमित्तग्रहणमिति भावः । नन्वर्शःशब्दादर्श आद्यचि दाप्यर्शसत्यादौ वृद्धिरूपसम्भव इत्यरुचेराह अथ वेति । व्यधिकरणबहुव्रीह्याश्रयणसामर्थ्यादेव व्यपदेशिवद्भावाप्रवृत्तिरिति भावः । तेषामेवेति । एव शब्दोऽप्यर्थे । विशिष्टस्य निमित्तत्वे विशेषणानामपि तत्त्वमिति भावः । ननु वृत्तावभेदैकत्वसङ्ख्यावगतेर्बहुवचनान्तेन विग्रहो ऽनुपपन्नो ऽत आह निमित्तेति । तत्र कार्त्स्न्यं प्रतिपत्तिकालिकं न प्रयोगसमवायीति न पारिषद्याभार्ये दोषः । न च वैयाकरणभार्येऽपि निषेधापत्तिः । इष्टापत्तेः । अत एवादैङ्मात्रस्येति पक्षे ऽत्र दोषानुद्भावनम् । तद्भावितानामेवेति पक्षेऽपि नव्याभ्यामिति सूत्रे ऐजंशेऽपि वृद्धिपदसंबन्धेन निषेधप्रवृत्तिरत्र सूपपादा । अत एव देविकाशिंशपेति सूत्रे भाष्यकृता तत्संबन्धो दर्शित इत्याहुः । आदैङ्मात्रग्रहणादेव मालादीनाञ्चेति सार्थकम् । अन्यथाऽस्या ऽवृद्धत्वाप्रसक्त्या ऽवृद्धमित्येव सिद्धे किन्तेन । वार्त्तिकमिति । सूत्रे ऽनुक्तदुरुक्तचिन्ताकरत्वं वार्त्तिकत्वम् । एतेन सूत्रव्याख्यानाय प्रवृत्तस्य कात्यायनस्यायुक्ता दुरुक्तचिन्तेत्यपास्तम् । प्रस्तावेति । वार्त्तिके ऽधिकारशब्दोक्तिः स इति भावः । वृद्ध्यादीनां सञ्ज्ञात्वाद्भेदनिबन्धनषष्ठ्यनुपपन्नेत्यत आह संप्रत्ययइति । भाष्ये ( सञ्ज्ञेत्येष इति )। शब्दार्थज्ञानानामितरेतराध्यासादिदं नानुपपन्नम् । भाष्यकारस्त्विति । अधिका-

देवदत्त गामभ्याज शुक्लां दण्डेन, देवदत्त गामभ्याज कृष्णामिति । अनर्थकानि । दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डः अधरोरुकमेतत्कुमार्याः स्फैय्यकृतस्य पिता प्रतिशीन इति । संज्ञासंज्ञ्यसंदेहश्च * । क्रियमाणेपि संज्ञाधिकारे संज्ञासंज्ञिनोरसन्देहो वक्तव्यः। कुतो ह्येतद् वृद्धिशब्दः संज्ञा आदैचः संज्ञिन इति। न पुनरादैचः संज्ञा वृद्धिशब्दः संज्ञीति। यत्तावदुच्यते संज्ञाधिकारः कर्त्तव्यः संज्ञासंप्रत्ययार्थ इति । न कर्त्तव्यः । आचार्याचारात्संज्ञासिद्धिः *। आचार्याचारात्संज्ञासिद्धिर्भविष्यति । किमिदमाचार्याचारादिति । आचार्याणामुपचारात् । यथा लौकिकवैदिकेषु * । तद्यथा लौकिकेषु वैदिकेषु च कृतान्तेषु । लोके तावन्मातापितरौ पुत्रस्य जातस्य संवृते ऽवकाशे नाम कुर्वाते देवदत्तो यज्ञदत्त इति । तयोरुपचारादन्येपि जानन्ति इयमस्य संज्ञेति । वेदेपि याज्ञिकाः संज्ञां कुर्वन्ति स्फ्यो यूपश्चषाल इति । तत्रभवतामुपचारादन्येपि जानन्ति इयमस्य संज्ञेति । एवमिहापि । इहैव तावत्के चिद्व्याचक्षाणा आहुः । वृद्धिशब्दः संज्ञा आदैचः संज्ञिन इति । अपरे पुनः सिचि वृद्धिरित्युक्त्वा आकारैकारौकारानुदाहरन्ति तेन मन्यामहे यथा प्रत्याय्यन्ते सा संज्ञा ये प्रतीयन्ते ते संज्ञिन इति । यदप्युच्यते । क्रियमाणेपि संज्ञाधिकारे संज्ञासंज्ञिनोरसंदेहो वक्तव्यं इति । संज्ञासंज्ञ्यसंदेहश्च * । संज्ञासंज्ञिनोश्चासंदेहः सिद्धः । कुतः । आचार्याचारादेव । उक्त

---

समाहारे द्विगुर्वा । अर्थवन्ति चेति । यथा लोकेर्थवन्ति प्रयुङ्क्ते एवमनर्थकान्यपीत्यर्थः । यावदाप्तत्वमाचार्यस्य न साधितं तावदनर्थकत्वाशङ्का । झटिति समन्वयानवगमाद्वा। दश दाडिमानीति । पदार्थानां समन्वयाभावादत्रानर्थक्यम् । आचार्याचारादिति । आचार्याणां व्यवहारादित्यर्थः । वृद्धिसब्द. संज्ञेति । वृद्धिशब्दस्य प्रत्यायनशक्तिर्व्याख्यानेनैव प्रकाश्यते । यथा दैचां वर्णानामिति वर्णत्वम् । अपरइति । प्रदेशाद्वा संज्ञासंज्ञ्यभिव्य-

---

ं विना ऽसंप्रत्यये दृष्टान्तस्य लौकिकस्याभावादर्थापरिज्ञानं दृष्टान्तानुपयोगाच्चेति तद्भावः । वाक्याध्याहारेणेति । ( इदमिदानीमिति ) । वाक्याध्याहारेणेत्यर्थः । ननु द्विगौ आकारान्तोत्तरपदत्वात् स्त्रीत्वे ङाप्स्यादत आह बहुव्रीहिरिति । अन्यपदार्थस्याशब्दत्वाद्बहुव्रीहिर्दुर्ज्ञेयो ऽत आह समाहारे इति । पात्राद्यन्तादित्वात्स्त्रीत्वाभावः । अत एव त्रिसूत्रीत्यादि सङ्गच्छते। बहुसूत्रशब्दस्यैव तत्र पाठादित्यभिमानः । नन्वनर्थकदृष्टान्ते ऽर्थवन्तीत्यादि व्यर्थमत आह यथेति । यद्यप्यन्वितार्थकपदसमूह एव वाक्यम् । तथापि भाष्ये पदसमूहे एव वाक्यशब्दः प्रयुक्तो ऽतो ऽनर्थकानि वाक्यानीति न विरुद्धम् । झटिति । विनाचार्याचारादिज्ञानेन । पदार्थानाम् । कुण्डमजाजिनमित्यादीनाम् । स्फ्यकृतो ऽपत्यं ( स्फैयकृतः ) उपचारो नाम गौणी वृत्तिरिति भ्रमं व्युदस्यति व्यवहारादिति । अनेन व्यवहाराच्छक्तिग्रह उक्तः स च शक्तिग्राहकशिरोमणिः । भाष्ये ( वेदे याज्ञिका इति ) यज्ञकाण्डद्रष्टार ऋषय इत्यर्थः । वेदकर्तृत्ववत्सञ्ज्ञाकर्तृत्वन्तेषान्द्रष्टव्यम् । भाष्ये ( इहैवेति ) वृद्धिरादैच्सूत्र एवेत्यर्थः । असत्याः शक्तेर्व्याख्यानेनोत्पादयितुमशक्यत्वादाह । वृद्धिशब्दस्येति । प्रत्यायनशक्तिः । प्रत्यायने बोधजनने कारणीभूता शक्तिः । भाष्ये ( उदाहरन्तीति ) वृद्धिरादैजिति सूत्रार्थकथनार्थं तत्प्रदेशत्वेन सिचि वृद्धिरित्युक्त्वा तदुदाहरणत्वेनाकार्षीद् अचैषीदश्रौषीदित्युदाह

आचार्याचारः । अनाकृतिः * । अथ वा ऽनाकृतिः संज्ञा आकृतिमन्तः संज्ञिनः । लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते । लिङ्गेन वा * । अथवा किंचिल्लिङ्गमासज्य वक्ष्यामीत्थंलिङ्गा संज्ञेति । वृद्धिशब्दे च तल्लिङ्गं करिष्यते नादैच्छब्दे । इदं तावदयुक्तं यदुच्यते आचार्याचारादिति । किमत्रायुक्तम् । तमेवोपालभ्यागमकं ते सूत्रमिति तस्यैव पुनः प्रमाणीकरणमित्येतदयुक्तम् । अपरितुष्यन् खल्वपि भवाननेन परिहारेणानाकृतिर्लिङ्गेन वेत्याह । तच्चापि वक्तव्यम् । यद्यप्येतदुच्यते । अथ वैतर्हि इत्संज्ञा न वक्तव्या लोपश्च न वक्तव्यः । संज्ञालिङ्गमनुबन्धेषु करिष्यते । न च संज्ञाया निवृत्तिरुच्यते । स्वभावतः संज्ञा संज्ञिनं प्रत्याय्य स्वयं निवर्तते । तेनानुबन्धानामपि निवृत्तिर्भविष्यति । सिद्ध्यत्येवम् । अपाणिनीयं तु भवति । यथान्यासमेवास्तु । ननु चोक्तं संज्ञाधिकारः संज्ञासंप्रत्ययार्थं इतरथा ह्यसंप्रत्ययो यथा लोकइति । न च यथा लोके तथा व्याकरणे । प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य

---

क्तिः संज्ञासूत्रार्थाद्वा प्रदेशार्थस्य व्यवस्थेत्यर्थः । अनाकृतिरिति । आकृत्या साहचर्याद्भेदो लक्ष्यते तेनायमर्थः । वृद्धिशब्द एकत्वात्संज्ञा । आदैचां बहुत्वात्संज्ञित्वम् । लाघवार्थं हि संज्ञाकरणम् । यथा सर्वादीनि सर्वनामानीत्यनेकस्यैका संज्ञा क्रियते न त्वेकस्यानेका संज्ञा प्रयोजनाभावात् । आकृतिमत इति । अवस्थाभेदेष्वपि स एवायमिति प्रत्यभिज्ञानिमित्तकं देवदत्तत्वादिकं सामान्यमस्तीत्याकृतिमत इत्युक्तम् । लिङ्गेन वेति । कलादिना वर्णदोषेणेत्यर्थः । तमेवोपालभ्येति । यो हि सूत्रकारमुपालभते न गमकं ते सूत्रमिति स कथं वृत्तिकारादीन् प्रामाण्येनाश्रयतीत्यर्थः । अपरितुष्यन्निति । त्वयापि परिहारान्तरं ब्रुवता ऽऽचार्याचारो न प्रमाणत्वेनाश्रित इत्यर्थः । तच्चापीति । लिङ्गेन वेत्येतद्वक्तव्यमित्यर्थः । अनाकृतिः संज्ञेत्येतत्तु न्यायसिद्धत्वान्न वक्तव्यम् । अथ वैतर्हीति । एवं सतीत्यर्थः । ङकारादिष्वनुबन्धेषु कलादिकमासङ्क्ष्यते । ततस्तेषां संज्ञात्वे सति ङादात्मनेपदमिति करिष्यते संज्ञा च संज्ञिनं प्रत्याय्य स्वयं निवर्ततइतीत्संज्ञा लोपश्च न वक्तव्यौ भवत इत्यर्थः । प्रमाणभूत इति प्रमाण्यं प्राप्त इत्यर्थः । भू प्राप्ताविन्तीत्यर्थः ।

---

न्तीत्यर्थः । एवञ्च वृद्धिशब्दस्य प्रत्यायकत्वमादैचां प्रत्याय्यत्वं निर्णीय वृद्धिरादैच्सूत्रस्य सञ्ज्ञाबोधकत्वं वृद्धिशब्दस्य सञ्ज्ञात्वञ्च निर्णयन्तीति भावः । ( तेन ) । अपराचार्योक्तोदाहरणेन । नन्वाकृतिर्जातिस्तद्भेदं आदैक्ष्वपि तदभावस्तु न वृद्धिशब्दोऽमीत्यत आह आकृत्येति । बहुव्रीहिरिति भावः । अनाकृतिरित्येतन्न्यायसिद्धमित्याह । लाघवार्थमिति । नन्वेकस्यापि तव्यादरनेकाः कृत्कृत्यप्रत्ययसञ्ज्ञाः क्रियन्ते ऽत आह प्रयोजनेति । सति हि प्रयोजने तथा । प्रकृते तु न तथा, प्रयोजनाभावादिति भावः । प्रत्यभिज्ञानिमित्तकम् । प्रत्यभिज्ञाप्रमाणकमित्यर्थः । वस्तुतो भाष्ये ( आकृतिमत ) इत्यस्य भेदवत इत्यर्थः । अवस्थाभेदेन च तदारोपितः सः । आरोपितभेदे च जातिसत्त्वे न मानम् । अत एव देवदत्तेत्यादौ न ङीषिति कश्चित् । सकथं वृत्तिकारानिति । ( तस्यैवेति ) भाष्यस्य च तदीयस्यैवेत्यर्थ इति भावः । लिङ्गेन वेत्येतदिति । लिङ्गासङ्गः । इत्थं लिङ्गासंज्ञाति च वक्तव्यमित्यर्थः । ङकारादिष्वितिधात्वादिपठितेष्वित्यर्थः । ननु सञ्ज्ञालिङ्गकृतेपीत्संज्ञाद्यभावे कथन्तेषां निवृत्तिरत आह । भाष्ये ( स्वभावतः संज्ञेति ) । तद्बोधाद्यै सञ्ज्ञाच सञ्ज्ञिनमिति । भाष्ये ( अपाणिनीयन्त्विति ) । अनन्तस्यलेषु शेषविशिष्टपठने आनुनासि-

महता प्रयत्नेन सूत्राणि प्रणयति स्म तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं किम्पुनरियता सूत्रेण । किमतो यदशक्यम् । अतः संज्ञासंज्ञिनावेव । कुतो नु खल्वेतत्संज्ञासंज्ञिनावेवेति । न पुनः साध्वनुशासनेऽस्मिन् शास्त्रे साधुत्वमनेन क्रियते । कृतमनयोः साधुत्वम् । कथम् । वृद्धिरस्मायविशेषणोपदिष्टः प्रकृतिपाठे तस्मात् क्तिन्प्रत्ययः । आदैचोप्यक्षरसमाम्नाये उपदिष्टाः । प्रयोगनियमार्थं तर्हीदं स्यात् । वृद्धिशब्दात्परे आदैचः प्रयोक्तव्या इति । नेह प्रयोगनियम आरभ्यते । किं तर्हि । संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसंबन्धो भवति । तद्यथा । आहर पात्रं पात्रमाहरेति । आदेशास्तर्हीमे स्युः । वृद्धिशब्दस्यादैच आदेशाः । षष्ठीनिर्दिष्टस्यादेशा उच्यन्ते । न चात्र षष्ठीं पश्यामः । आगमास्तर्हीमे स्युः । वृद्धिशब्दस्यादैच आगमाः । आगमा अपि षष्ठीनिर्दिष्टस्यैवोच्यन्ते । लिङ्गेन च । न

---

त्वरयाधृषद्वेति णिजभावपक्षे रूपम् । वृत्तिविषये च प्रमाणशब्दः प्रामाण्ये वर्तते । दर्भपवित्रेति । प्रमादाभावं दर्शयति प्राङ्मुख इति । प्राच्या अभ्युदयहेतुत्वात् । महतेति । मनःप्रणिधानं दर्शयति । एवंच सर्वमागमाद् बोद्धव्यम् । एवमानर्थक्ये परिहृते संज्ञासंप्रत्ययाय पक्षान्तराणि प्रश्नमुखेन प्रतिक्षिपति किमत इति । कृतमनयोरिति । आदैच्छब्दस्य द्वन्द्वत्वादनयोरिति द्विवचननिर्देशः । आदैच इति । तेषां च द्वन्द्वनिर्देशोयमादैच्छब्द इत्यर्थः। प्रयोगनियमार्थमिति । आदैज्वृद्धिरिति प्रयोगो मा भूदित्यर्थः । नेहेति । प्रयुज्यतइति प्रयोगस्तत्र स्वतन्त्रस्य पदस्य प्रयुज्यमानस्य नियमो नारभ्यतेऽपि तु पदावयवस्य प्रकृतिप्रत्ययोपसर्जनागमादिरूपस्य । लोके च केवल एव वृद्धिशब्दः प्रयुज्यतइति न तस्यानेन नियमः क्रियते । लोके च प्रयुक्तानामिदमनुशासनम् । षष्ठीनिर्दिष्टस्येति । स्थानेशब्दोऽर्थवाची । तिष्ठन्त्यस्मिन् शब्दाः इति स्थानम्" । न च वृद्धिशब्दार्थमादैचो

---

क्यादिवत् प्रतिज्ञाकरणे च दुर्ज्ञेयत्वादिति भावः । ननु भवतेर्जन्मार्थत्वेनाभूततद्भावप्रतीत्याच्चौ सति प्रमाणीभूत इति स्यात् तदविवक्षायान्तु प्रमाणमाचार्थः प्रकारान्तरेण भूत इत्यर्थः स्यादत आह प्रामाण्यमिति । वृत्तिविषये इति प्रकृताभिप्रायम् । प्रमादः पिशाचादिसंबन्धः । आगमः । संप्रदायः प्रकृतभाष्योक्तिर्वा । भाष्ये ( अनर्थकेनेति ) । बोध्यार्थरहितेनेत्यर्थः । तेन पारायणे सर्वेषामदृष्टार्थत्वेपि दृष्टप्रयोजनराहित्यरूपमनर्थकत्वं धर्णापदसूत्राणामस्त्येवेति न वक्ष्यमाणसूत्रादिप्रत्याख्यानासङ्गतिः । सञ्ज्ञासंप्रत्ययाय । सञ्ज्ञात्वनिश्चयाय । भाष्ये ( किमतइति ) । अतस्तादृशकर्तृकत्वात्किं कथमर्थवत्त्वं ( यद् ) यतस्तद् ( अशक्यम् ) अशक्यनिरूपणमित्यक्षरार्थः । साध्वनुशासने इत्यनेन साधुत्वपक्षस्याकाण्डता वारिता । सूत्रत्वादिति । अनयोरित्यस्य पदयोरिति विशेष्यम् । पदानामेव साधुत्वान्वाख्यानादितिभावः । भाष्ये [ अविशेषेणेति ] । प्रत्ययविशेषमनादायेत्यर्थः । ननु वर्णसमाम्नाये आकाराद्युपदेशेप्यादैच्छब्दस्य किमागतमत आह तेषाञ्चेति । सञ्ज्ञाग्रहणद्वारेणेति शेषः । तपरइति । आदिरन्त्येनाति च तेषां कृतयोरादैच्सञ्ज्ञयोर्द्वन्द्वनिर्देशेन सूत्रशास्त्रेण कृतं साधुत्वमित्यर्थः । ऐजित्यपि तन्मूलकादिरन्त्येनेत्यनेन बोधितमित्याशयेन भाष्ये ऽक्षरसमाम्नाये उपदिष्टा इत्युक्तम् । ननूपसर्जनं पूर्वं परश्चेत्यादिभिः प्रयोगनियम आरभ्यत एवेत्यत आह प्रयुज्यतइति । स्वतन्त्रस्येति । गत्युपसर्गनिरासः । तौ हि द्योतकत्वात्परतन्त्रौ । पदावयवस्येति । आदिना । द्योतकः । युक्त्यन्तरमाह लोके चेति । शिष्टलोकाभिप्रायप्रयुक्तानाञ्चेदमनुशासनमिति भावः । केवलः । आदैच्पदासंबद्धः । भाष्ये [ संस्कृत्येति ] । साधुत्वेनान्वाख्यायेत्यर्थः । [ अभिसम्बन्धः ] । पौर्वापर्यलक्षणः । षष्ठ्यभावेपि नाभिन्नमित्याशावादेशदर्शनादाह स्थानेति । षष्ठीस्थाने

चात्र षष्ठीं न खल्वप्यागमलिङ्गं पश्यामः । इदं खल्वापि भूयः सामानाधिकरण्यमेकविभक्तिकत्वं च द्वयोश्चैतद्भवति । कयोः । विशेषणविशेष्ययोर्वा संज्ञासंज्ञिनोर्वा । तत्रैतत्स्याद्विशेषणविशेष्ये इति । तच्च न । द्वयोर्हि प्रतीतपदार्थकयोर्लोके विशेषण-

---

वक्तुं शक्ताः । तेनात्र षष्ठ्यर्थाभावादिति तात्पर्यम् । तथा हि षष्ठ्यभावेपि तदर्थसद्भावाद्भवत्येव स्थान्यादेशभावः । यथा नाभिनभं च परस्त्रीपरशुश्चेति । आगमा अपीति । अत्राप्यर्थोपेक्ष्यते । अनागमकानामर्थे सागमका इत्यर्थः । लिङ्गेन चेति । देशविशेषप्रतिपत्तये टकारादिलिङ्गं तत्र क्रियतइत्यर्थः । इदं खल्वपीति । विशेषणविशेष्यभावनिराकरणेन संज्ञापक्षं स्थापयति । देवदत्तः पचतीत्यस्ति सामानाधिकरण्यं न त्वेकविभक्तित्वम् । गौरश्व इत्यस्त्येकविभक्तित्वं न तु सामानाधिकरण्यमित्युभयोरुपादानम् । संज्ञासंज्ञिनोरप्यस्ति विशेषणविशेष्यत्वं प्रसिद्ध्यप्रसिद्धिवशात्तु भेदेनोपादानम् । तत्तु सामानाधिकरण्यं शब्दयोरेव केचिदिच्छन्ति । द्वाभ्यां शब्दाभ्यां भिन्नप्रवृत्तिनिमित्ताभ्यामेकास्यार्थाभिधेयस्य प्रतिपादनाद्विशेषणविशेष्यार्थप्रतिपादनाच्च विशेषणविशेष्यत्वम् । अन्ये तु नीलोत्पलमिति प्रवृत्तिनिमित्तयोर्जातिगुणयोरेकमधिकरणमाश्रय इति सामानाधिकरण्यं

---

इति सूत्रगत इति शेषः । तत्र हि सूत्रे स्थानशब्दो ऽधिकरणव्युत्पत्त्यार्थवाची भावव्युत्पत्त्या प्रसङ्गवाची च तन्त्रेणोपादीयते । अन्यथा केवलार्थशब्दं प्राप्तिशब्दं वोपाददीत । एवञ्च या ऽनियोगा षष्ठी सा प्रसङ्गनिरूपितसम्बन्धार्थिकैवेत्येको ऽर्थः । द्वितीये तु षष्ठीशब्दो लक्षणया स्थानिपरः । स्थाने इति सप्तमी वाच्यस्यार्थस्याधिकरणत्वविवक्षया बोध्या । योगशब्दश्च युज्यतइति व्युत्पत्त्या आदेशवाची ततोर्श आद्यच् । तेन स्थानी स्वार्थाभिधानसमर्थादेशवानित्यर्थ इति भावः । भाष्यस्य तु षष्ठीनिर्दिष्टस्य स्थानिनो यो ऽर्थस्तस्य वाचका उच्यन्ते । न चात्रेक्षु षष्ठीनिर्दिष्टस्य स्थानिनो ऽर्थानभिधेयत्वेन पश्याम इत्यर्थः । षष्ठ्यर्थाभावादिति । षष्ठीबोध्यस्थान्यर्थाभिधानसामर्थ्याभावादिति भावः । तदर्थसद्भावादिति । आदेशस्य स्थान्यर्थबोधनसामर्थ्यसद्भावादित्यर्थः । वस्तुतस्तु स्थानं प्रसङ्ग एव । स चार्थवत एव । अर्थप्रत्यायनाय शब्दप्रयोगात् । एवञ्चार्थप्रयुक्त एव स्थान्यादेशयोः सम्बन्ध इति स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति वदन्ति । अत्रापीति । वस्तुतो ऽवयवषष्ठ्यैवागमा उच्यन्ते इत्यर्थो भाष्यस्य । कृत्वादिलिङ्गभ्रमव्यावृत्तये आह देशेति । देशविशेषप्रतिपत्त्यर्थयत्नसाध्यागमप्रतीतिर्यत्नाभावे नेत्यर्थः । [ इदं खल्वपीति ] भाष्यं पूर्वोक्तपक्षाणामसम्भवं प्रतिपादयति तद्व्याचष्टे विशेषणेति । अस्तिसामानाधिकरण्यमिति । न च तादृशे संज्ञासञ्ज्ञित्वसम्भावनेति भावः । इत्युभयोरिति । विशेषणविशेष्यत्वसञ्ज्ञासञ्ज्ञित्वसम्भावनास्थलप्रदर्शनायेत्यर्थः । सञ्ज्ञासञ्ज्ञिनोरपीति । वृद्ध्यादिसंज्ञा इह स्वरूपेणैव सांज्ञिनं सजातीयाद्यागान्तराद्विजातीयाच्च द्रव्यादेर्व्यवच्छिनत्तीति विशेषणम् । सञ्ज्ञी च व्यवच्छेद्यः सन्विशेष्यः । विषयताविशेषरूपमपि तत्तयोरस्त्येवेति भावः । प्रसिद्धीति । [ द्वयोर्हि प्रतीते ] त्याविना भाष्ये उक्तमेतत् । यद्वा सत्यपि व्यवच्छेद्यव्यवच्छेदकभावे संज्ञासंज्ञिनोर्विशेष्यविशेषणभावो लोके न प्रसिद्ध इत्यर्थः । ननु सामानाधिकरण्यं नाम द्वयोः शब्दयोरेकाभिधेयसम्बन्धस्तत्तु न युक्तम् । सामानाधिकरण्यस्य शब्दधर्मत्वेन विशेषणत्वादेश्चार्थधर्मत्वेन विशेषणविशेष्ययोः सामानाधिकरण्यमिति भाष्यासङ्गतेः । संज्ञासंज्ञिनोरेकाभिधेयसम्बन्धाभावेन संज्ञासंज्ञिनोर्वा सामाधिकरण्यमित्यस्याप्यसङ्गतिरत आह तत्त्विति । भिन्नप्रवृत्तीत्यनेन पर्यायनिरासः । वस्तुत इदं चिन्त्यम् । अघ्न्ये देवि सरस्वति इडे काव्ये विहव्ये एतानि ते ऽघ्न्ये नामानीत्यादौ नामन्त्रिते समानाधिकरणे इत्यस्य व्यावृत्तये तत्र सामान्यवचनग्रहणमिति तत्सूत्रस्थभाष्यविरोधापत्तेः । युगपदधिकरणवचनतापक्षे पद्वीमृद्व्यावित्यत्र समानाधिकरणलक्षणपुंवद्भावशङ्कापरभाष्यविरोधापत्तेश्च । विशेषणत्वादिकं चोपपद्यतइत्याह विशेषणेति । भाष्ये ( संज्ञासञ्ज्ञिनोरित्यत्र सांज्ञिपदेन सांज्ञिसमर्पकशब्दो ऽभिप्रेतः । संज्ञाशब्दे च शब्दः प्रवृत्तिनिमित्तं सांज्ञिनि तत्सम्बन्धात् । संज्ञिबोधकशब्दे च संज्ञिगततद्धर्मः प्रवृत्तिनिमित्तम् । एवञ्च वृद्धिशब्दवदभिन्ना आदैच इति बोधः । वृद्धिशब्दवत्त्वं च लोकसिद्धतादात्म्येनेत्याशयः । अन्ये त्विति । संज्ञासंज्ञिनोस्तूक्तं प्रवृत्तिनिमित्तमिति

विशेष्यभावो भवति । न चादैच्छब्दः प्रतीतपदार्थकः । तस्मात्संज्ञासंज्ञिनावेव । तत्र त्वेतावान्सन्देहः कः संज्ञी का संज्ञेति । स चापि क सन्देहः । यत्रोभे समानाक्षरे । यत्र त्वन्यतरल्लघु सा संज्ञा यद् गुरु स संज्ञी । कुत एतद् । लघ्वर्थं हि संज्ञाकरणम् । तत्राप्ययं नावश्यं गुरुलघुतामेवोपलक्षयितुमर्हति । किं तर्ह्यनाकृतितामपि । अनाकृतिः संज्ञा ऽऽकृतिमन्तः संज्ञिन इति । लोके पि ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते । अथ वा ऽऽवर्तिन्यः संज्ञा भवन्ति । वृद्धिशब्दश्चावर्तते न चौदच्छब्दः । तद्यथा । इतरत्रापि देवदत्तशब्द आवर्तते न मांसपिण्डः । अथ वा पूर्वोच्चारितः संज्ञी परोच्चारिता संज्ञा । कुत एतद् । सतो हि कार्यिणः कार्येण भवितव्यम् । तद्यथा । इतरत्रापि सतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते । कथं वृद्धिरादैजिति । एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम् ।

---

विशेषणविशेष्यभावाच्चार्थयोरेव मन्यन्ते । न चादैच्छब्द इति । न ह्येतस्य कश्चिल्लौकिकार्थः प्रसिद्ध इत्यर्थः । आवर्तिन्य इति । देवदत्तादिशब्दो हि स्नानादिप्रतिपादनायावर्तते । अथ वेति । सत्यसति वा संज्ञिनि बुद्ध्या विषयीकृते शब्देन पूर्वं निर्दिष्टे संज्ञा प्रवर्तते इत्यर्थः । ततश्चादेङ् गुण इत्यादावदेङादयः संज्ञिनो गुणादयः संज्ञाः । इह तु मङ्गलार्थोऽन्यथा पाठक्रमः । आर्थस्त्वन्यथा क्रमः । अन्ये तु सिद्धिहेतवो भविष्यन्ति । अपृक्त एकालिंति परिभाषा न संज्ञेति नास्ति व्यभिचारः । अपृक्तशब्देन ह्येकाकी कथ्यतइत्य-

---

सामानाधिकरण्यम् । एकविभक्तिकत्वन्त्वत्र पक्षे शब्दद्वारा बोध्यम । विभक्तिशब्देन शक्तिर्वा । भाष्ये [ संज्ञासंज्ञिनोरि ] त्यस्य तत्प्रवृत्तिनिमित्तयोरित्यर्थः । अन्ये त्विति मते ऽरुचिबीजन्तु प्रतीतपदार्थकयोरिति बहुव्रीहिस्वरसभङ्गः । विशेषणविशेष्यभावो भवतीत्यस्य तदर्थप्रतिपादकत्वं भवतीत्यर्थः । ननु वैयाकरणानामादैच्छब्दः प्रतीतपदार्थ एवेत्यत आह ॥ नहीति । वृद्धिशब्दार्थान्वययोग्य इति शेषो ऽत्र द्रष्टव्यः । केचित्तु वृद्ध्यादिशब्दाः शब्दपरा एव वृद्धिशब्दाभिन्ना आदैच इति बोधः । तदुक्तं हरिणा । वृद्ध्यादयो यथा शब्दाः स्वरूपोपनिबन्धनाः । आदैच्प्रत्यायितैः शब्दैः सम्बन्धं यान्ति संज्ञिभिः" इति । सामानाधिकरण्यं चैकविशेष्यकप्रतीतिजनकत्वमित्याहुः । भाष्ये ( यत्रोभे इति ) । प्रत्ययः अनीयरित्यादौ । लघ्वर्थमित्यस्य लाघवार्थमित्यर्थः । न मांसपिण्ड इति । दूरस्थस्यापि नामोच्चारणमात्रेण दानादिसम्भवादिति भावः । सतो हीत्यादिना न भावरूपं विवक्षितम् । अभावस्यापि लोपादिसंज्ञादर्शनात् । नापि विद्यमानत्वं प्रत्ययविधौ संज्ञाविशिष्टस्यापि विधानादत आह बुद्ध्येति । अत एव "सावर्णिर्भवितामनुरि'त्यादौ न दोषः । एवंच सच्छब्देन पूर्वं बुद्ध्या विषयीकृतत्वं विवक्षितमित्यर्थः । बुद्धिसत्ता समाविष्ट एव चार्थः शब्देन बोध्यत इति सिद्धान्तात् । तत्त्वं हि पूर्वोच्चारितस्यैव भवतीत्याह शब्देन पूर्वमिति । भाष्ये [ माङ्गलिको ] मङ्गलप्रयोजनः । [महतः] अर्थतः । एकैकं सूत्रं शास्त्रमिति शास्त्रौघस्येत्युक्तम् । [मङ्गलादीनी] त्यादिना स्वप्रयोजनं श्रोतृप्रयोजनं चोक्तम् । [प्रथन्ते] विस्तृतानि भवन्ति तेन समाप्तिरर्थाक्षिप्ता । आर्थस्त्वन्यथेति । आदैज् वृद्धिरित्याकारः । अनुपूर्वीज्ञानस्यासत्तिविधया हेतुत्वादिति भावः। कथं तर्हि वृद्धिशब्दस्य संज्ञात्वप्रतीतिरत आह अन्ये त्विति । लाघवाद्यः । आदैचो वृद्धिपदाभिन्ना इत्यर्थः । एवञ्चानुपूर्वीव्यत्यासेन विलम्बेन बोधजनकशब्दोच्चारणं मङ्गलार्थं क्षम्यतामिति बोध्यम् । अन्येकशब्दः प्रथमार्थकः प्रथमन्तथाकरणं मङ्गलार्थमेव । एवञ्चान्यत्रापि तथाकरणमुद्देश्यविधेयभावेनान्वये तादृशस्यैव साधुत्वमिति भ्रमवारणार्थमित्याहुः। परिभाषेति । तदा हि यत्रापृक्तपदं तत्रैकाल्त्याद्युपतिष्ठतइत्यर्थात्प्राथम्यं युक्तमेवेत्यर्थः। वस्तुत इदं वृद्धिसूत्रेपि सुवचम् । किं चैवम पृक्तसञ्ज्ञायामित्यादिभाष्यवार्त्तिकव्यवहारानुपपत्तिः।केचित्तुपरिभाषात्वेपि एकाल्प्रत्यय इत्येतदुद्देशेनापृक्तत्वविधेयत्वं विधेयम् । पदपरत्वार्थे तत्रापि लक्षणावश्यकत्वेन सामानाधिकरण्यान्वयार्थन्तावत्पर्यन्तलक्षणाया

माङ्गलिक: आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते । मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि च भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च वृद्धियुक्ता यथा स्युरिति । सर्वत्रैव हि व्याकरणे पूर्वोच्चारितः संज्ञी परोच्चारिता संज्ञा । अदेङ् गुण इति यथा । दोषवान् खल्वपि संज्ञाधिकारः । अष्टमेऽपि हि संज्ञा क्रियते । तस्य परमाम्रेडितमिति । तत्रापीदमनुवर्त्यं स्यात् । अथ वा ऽस्थाने ऽयं यत्नः क्रियते न हीदं लोकाद्भिद्यते । यदीदं लोकाद्भिद्येत ततो यत्नार्हं स्यात् । तद्यथा । अगोज्ञाय कश्चिद्गां सक्थनि कर्णे वा गृहीत्वोपदिशति अयं गौरिति । न चास्मायाचष्टेऽयमस्य संज्ञेति । भवति चास्य संप्रत्ययः । तत्रैतत्स्यात्कृतस्तत्र पूर्वैरभिसंबन्ध इति । इहापि कृतः पूर्वैरभिसंबन्धः । कैः । आचार्यैः । तत्रैतत्स्यात् । यस्मै तर्हि सम्प्रत्युपदिशति तस्याकृत इति । लोकेऽपि यस्मै सम्प्रत्युपदिशति तस्याकृतः । अथ तत्र कृतः । इहापि कृतो द्रष्टव्यः । सतो वृद्ध्यादिषु संज्ञाभावात्तदाश्रय इतरेतराश्रयत्वादप्रसिद्धिः * । सतः संज्ञिनः संज्ञाभावात्तदाश्रये संज्ञिने वृद्ध्यादिष्वितरेतराश्रयत्वादप्रसिद्धिः । का इतरेतराश्रयता । सतामादैचां संज्ञया भवितव्यम् । संज्ञया चादैचो भाव्यन्ते । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । तद्यथा । नौर्नावि बद्धा नेतरत्राणाय भवति । ननु च भो इतरेतराश्रयाण्यपि कार्याणि दृश्यन्ते । तद्यथा । नौः शकटं वहति शकटं च नावं वहति । अन्यदपि तत्र किंचिद्भवति जलं स्थलं वा । स्थले शकटं नावं वहति जले नौः शकटं वहति । यथा तर्हि त्रिविष्टब्धकम्भवति । तत्राप्यन्ततः सूत्रकं भवति । इदं पुनरितरेतराश्रयमेव । सिद्धं तु नित्य-

---

नेनानियमेन ग्रहणे प्राप्ते नियमः क्रियते । अस्थानइति । अन्तरेणापि संज्ञाशब्दप्रयोगं लोकव्यवहारवदत्र संज्ञासंज्ञिसम्बन्धः सिध्यतीत्यर्थः । सतो वृद्ध्यादिष्विति । विधौ चायं दोषो नानुवादे मृजेर्वृद्धिर्यस्येत्यादौ । तत्र च संज्ञाविधानस्य चरितार्थत्वान्मृजेर्वृद्धिरित्यादौ वृद्धिशब्द एवादेशः प्राप्नोति । ननु च भो इति । नौशकटस्याभिमतदेशान्तरप्राप्तिरितरेतराश्रयेति चोद्यम् । सामग्र्यन्तरानुप्रवेशेन चोत्तरम् । सिद्धं त्विति । न हि

---

उचितत्वात् । पदत्रयाध्याहारे गौरवाच्च । एवञ्च परिभाषात्वे ऽप्युद्देश्यत्वेन तस्यैव पूर्वपाठो युक्तः । आनुपूर्व्याव्यत्यासाद्बोधस्तूभयोः सम इति वदन्ति । भाष्ये [अनुवर्त्यं स्यादिति] । तथासंबद्धमद्व्यवायादशक्यमिति भावः । (अस्थाने) । अनवसरं । [भिद्यते] । विलक्षणं भवतीत्यर्थः । [ अभिसम्बन्धः ] संज्ञासंज्ञिभावः । ततो ज्ञातुं शक्य इति भावः । [ तस्याकृत ] इत्यस्य तेनाज्ञात इत्यर्थः । तथा च तेन कथं प्रतिपत्तुं शक्य इति भावः । [ अथ तत्रेति ] अनुमानादिना ज्ञात इत्यर्थः । [ सतो वृद्ध्यादिष्विति ] सतो निष्पन्नस्य । संज्ञाभावात्, संज्ञासम्बन्धात् । तदाश्रये, संज्ञाश्रये संज्ञया संज्ञिविधायके शास्त्रे मृजेर्वृद्धिरित्यादौ वृद्ध्यादिपदेषु इतरेतराश्रयत्वादप्रसिद्धिर्वाक्यार्थाप्रसिद्धिरित्यर्थः । अविद्यमाने सम्बन्धस्य वक्तुमशक्यत्वादिति भावः । वहनक्रियायामितरेतराश्रयत्वाभावेऽपि तत्फलतीत्याह नौरिति । सामग्र्यन्तरेति । कारणान्तरेत्यर्थः । सूत्रक कीलादि । न च सामान्यलक्षणया भूतभाविसकलविषयकशक्तिग्रहः सम्भवत्येव । अन्यथा तावपि

शब्दत्वात् * । सिद्धमेतत् । कथम् । नित्यशब्दत्वात् । नित्याः शब्दाः । नित्येषु शब्देषु सतामादैचां संज्ञा क्रियते न संज्ञया आदैचो भाव्यन्ते । यदि तर्हि नित्याः शब्दाः किमर्थं शास्त्रम् । किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम् * । निवर्तकं शास्त्रम् । कथम् । मृजिरस्मायविशेषेणोपदिष्टस्तस्य सर्वत्र मृजिबुद्धिः प्रसक्ता तत्रानेन निवृत्तिः क्रियते । मृजेरक्ङित्सु प्रत्ययेषु मृजिप्रसङ्गे मार्जिः साधुर्भवतीति । प्रत्येकं गुणवृद्धिसंज्ञे भवत इति वक्तव्यम् * । किं प्रयोजनम् । समुदाये मा भूतामिति । अन्यत्र सहवचनात्समुदाये संज्ञाऽप्रसङ्गः * । अन्यत्र सहवचनात्समुदाये वृद्धिगुणसंज्ञयोरप्रसङ्गः । यत्रेच्छति सहभूतानां कार्यं करोति तत्र सहग्रहणम् । तद्यथा । सह सुपा । उभे अभ्यस्तं सहेति । प्रत्यवयवं च वाक्यपरिसमाप्तेः * ।

---

मृजेरपूर्व आकारो भाव्यते किंतु मृजावुपदिष्टे मार्ष्टीत्यादीनामसाधुत्वबुद्धिः प्राप्नोतीति तेषां साधुत्वान्वाख्यानं क्रियते । प्रत्येकमिति । यद्यपि नित्यशब्दत्वेनैतदपि व्यवतिष्ठते तथापि न्यायव्युत्पादनायोपन्यासः । समुदाये मा भूतामिति । अन्यथा मृजेर्वृद्धिरित्यादौ समुदाय आदेशः प्राप्नोति । समुदायावयवसन्निधौ क्व तात्पर्यं कस्य च नान्तरीयकत्वमिति विचार्यते अन्यत्रेति । यत्साध्या समुदायप्रतिपत्तिरिति यन्नाभावे न भवतीत्यर्थः । ननु सहग्रहणं नियमार्थं स्यात्समुदायस्यैव समाससंज्ञा यथा स्यान्नावयवानामिति । नैतदस्ति । उभयत्र तात्पर्याभावाद्युगपदुभयत्र प्रसङ्गाभावाल्लिङ्गत्वमेव सहग्रहणस्यान्यत्र समुदाये तात्पर्यं नास्तीत्यस्यार्थस्य । उभे अभ्यस्तं सहेति । अत्र सहग्रहणं वार्तिककारस्य कर्तव्यत्वेन स्थितम् । भाष्यकारस्तूभेग्रहणस्यैतत्प्रयोजनं स्थापयिष्यति । प्रत्यवयवं चेति अत्र वाक्यशब्देन वाक्यार्थः फलमुच्यते । तच्च देवदत्तादीनां भोजनं तस्य चैतदेव रूपं यत्प्रत्येकपरिसमाप्त्या संपद्यते । अन्नादनादिरूपत्वात्तृ-

---

तत्तद्बोधवृद्धौ असंनिहितसकलाकारविषयकशक्तिग्रहासम्भवेनानुवादेऽपि दोषः स्यात् । सामान्यलक्षणानङ्गीकारेऽपि शक्तिग्रहबोधादीनां समानप्रकारकत्वेनैव कार्यकारणभावाभ्युपगमान्न दोष इति वाच्यम् । जातिप्रकारकशक्तिग्रहस्य स्वाश्रयीभूतसकलव्यक्तिबोधकत्वेऽप्यनुत्पन्ने जात्याश्रयत्वसम्बन्धस्य वक्तुमशक्यतया भाविव्यक्तेर्जात्याश्रयत्वाभावात् तद्बाधासम्भवेन मृजेर्वृद्धिरित्यत्र तज्जन्योत्पत्तिज्ञप्त्योः परस्पराश्रय इति भावात् । वृद्धिरादैजित्यस्य विद्यमानेषु बुद्धिस्थेषु चारितार्थ्येन भाविनामुद्देश्यत्वासम्भवेन तत्र वृद्धिपदस्य शक्तिग्रहासंभवाच्च । यद्यप्यस्य सूत्रस्य शाटकं वयेत्यादाविव भाविसञ्ज्ञाविज्ञानेन सिध्यति । यथा च तन्तोत्पत्त्यनन्तरं गृहीतशक्तिकशाटकसादृश्याच्छाटकपदशक्तिग्रहस्तथा प्रकृतेऽपि । स्पष्टञ्चेदमिग्यण इति सूत्रभाष्ये । तथाप्यत्र वास्तवमेव परिहारमाह । भाष्ये [ सिद्धन्त्विति ] । एतच्च मञ्जूषायां विस्तरेण निरूपितम् । न्यायेति । वक्ष्यमाणन्यायेत्यर्थः । ननु वृद्धिर्यस्येत्यादौ समुदायासंभवात् प्रत्येकमेव संज्ञेत्यत आह अन्ययेति । एवञ्च तमादाय तत्रापि सम्भवः । द्वन्द्वनिर्देशात्समुदायस्यैव स्यादिति भावः । समुदायेति । "मातापित्रोर्मृतेऽहनी" तिवद्बोधे साहित्यं न तु क्रियानिष्पत्तौ इति भावः । उभयत्रेति । समुदायेऽवयवे चेत्यर्थः । उभयत्र तात्पर्याभावे हेतुर्युगपदिति । फलाभावादिति भावः । यद्यपि पर्यायः प्राप्नोति तथापि समासविधिनियमोभयपरत्वे गौरवमित्यतो लिङ्गत्वकल्पनमेवोचितमित्यत्र तात्पर्यम् । भाष्यकारस्त्विति । तदेकदेशीत्यर्थः । ह्लु इत्यनुवृत्त्यैव सिद्धे उभेग्रहणं सहार्थकमिति भावः । न ज्ञापकादेव किन्तु युक्तितोऽपि प्रत्येकं संज्ञेत्याह । भाष्ये [ प्रत्यवयवमिति ] प्रत्येकं वाक्यपरिसमाप्तिमुपक्रम्य प्रत्येकं भुजिसमाप्त्युक्तिरयुक्ता न हि भुज्यर्थोऽत्र वाक्यार्थः किन्तु ण्यन्तायाऽर्तें गाह प्रत्येति । वाक्यार्थस्तु अत्र प्रयोजकव्या-

प्रत्यवयवं च वाक्यपरिसमाप्तिर्दृश्यते । तद्यथा । देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामिति । न चोच्यते प्रत्येकमिति । प्रत्येकं च भुजिः परिसमाप्यते । ननु चायमप्यस्ति दृष्टान्तः । समुदाये वाक्यपरिसमाप्तिरिति । तद्यथा । गर्गाः शतं दण्ड्यन्तामिति । अर्थिनश्च राजानो हिरण्येन भवन्ति । न च प्रत्येकं दण्डयन्ति । सत्येतस्मिन् दृष्टान्ते यदि तत्र सहग्रहणं क्रियते । इहापि प्रत्येकमिति वक्तव्यम् । अथ तत्रान्तरेण सहग्रहणं सहभूतानां कार्यं भवति । इहापि नार्थः प्रत्येकमिति वचनेन ॥ अथ किमर्थमाकारस्तपरः क्रियते । आकारस्य तपरकरणं सवर्णार्थम् * । अकारस्य तपरकरणं क्रियते । किं प्रयोजनम् । सवर्णार्थम् । तपरस्तत्कालस्येति तत्कालानां सवर्णानां ग्रहणं यथा स्यात् । केषाम् । उदात्तानुदात्तस्वरितानाम् ।

---

प्तिफलत्वाच्च भोजनस्य । नाट्यक्रिया तु समुदाये समाप्यते । गीतादिक्रियासमुदायरूपत्वात्तस्याः संयोगसंज्ञा त्वन्यर्थत्वात्समुदाये प्रवर्तते । वृद्धिसंज्ञा तु लक्ष्ये पृथगादैचां दर्शनाद् मालादीनां चेति लिङ्गाच्च प्रत्येकं व्यवतिष्ठते । गर्गाः शतं दण्ड्यन्तामितीति । अत्र शतस्येप्सिततमत्वात् प्राधान्यम् । अपादानस्थानप्राप्ता गर्गा गुणकर्म न च गुणभेदेन प्रधानस्य भेद इति शतदण्डनं समूहे परिसमाप्यते । अर्थिनश्चेति । शतस्य प्राधान्यं प्रतिपाद्यते । दण्डपरायां हि चोदनायां शतस्य प्राधान्यमतो वाक्यादवगम्यते । अथ तत्रान्तरेणेति । न्यायादन्वर्थत्वाच्च समाससंज्ञाया समुदाये परिसमाप्तौ सिद्धायां योगविभागार्थं तत्र सहग्रहणं स्थितमिति तत्रान्तरेणेत्युक्तम् । अथ किमर्थमिति । किमाकृतिपक्षे भिन्नकालनिवृत्त्यर्थमथ वा व्यक्तिपक्षे गुणान्तरयुक्तानां ग्रहणार्थमिति प्रश्नः । आकारस्येति । व्यक्तिः पदार्थो, भेदकाश्च गुणा इति दर्शने यद्गुणस्यैवोच्चारणं तद्गुणस्यैव संज्ञाप्रसङ्गे गुणान्तरयुक्तानामपि संज्ञाप्रतिपत्त्यर्थं तपरत्वमित्यर्थः ।

---

पारस्तस्य समुदायविषयत्वसंभवात्फलग्रहणम् । तच्च प्रयोज्यव्यापाररूपमित्याह तच्चेति । ननु विशिष्टपरिमाणस्यादनीयस्य भोजनक्रिया समुदायपर्याप्तत्यापि वक्तुं शक्यमत आह तृप्तिफलत्वाच्चेति । सर्वापि क्रिया प्रत्येकं समाप्यत इति भ्रमो न कार्य इत्याह नाट्येति । गीतादीति । आदिना नृत्तवाद्यादि । अन्वर्थत्वं संयुज्यन्ते वर्णा अत्रेति । लक्ष्यानुसारात्तत्र समुदाये वाक्यपरिसमाप्त्याश्रयणमिति तत्त्वम् । प्रकृतेन्यतरन्यायाश्रयणे हेतुमाह वृद्धिसंज्ञेति । लिङ्गादिति । प्रत्येऽवृद्धामिति निषेधबाधनार्थं हि तदिति भावः । न च नामधेयरूपमालादीनामाद्युदात्तार्थं तत् तस्य वा नामधेयस्येति पत्ते वृद्धत्वादिति वाच्यम् । अभिव्यक्तेति न्यायेन तत्राप्रवृत्तेः । समुदाये समाप्तौ युक्तिमाह अत्र शतस्येति । एवं चाकथितसूत्रे दण्डिरपि परिगणनीय इति भाव इत्येके । उद्देश्यत्वरूपमार्थप्राधान्यं शतस्येत्यनुद्देश्यत्वेन गर्गा गुणकर्म । दण्डेश्च स्वसम्प्रदानकदानानुकूलव्यापारानुकूलव्यापारः शासनरूपोऽर्थः । शासनं नियन्त्रणे, तत्र ण्यन्त इव कर्तुरित्युभयोः कर्मत्वम् । कर्तृप्रत्ययसमभिव्याहारे धात्वर्थप्रधानव्यापारविशेषणफलाश्रयत्वेन गर्गाणां शाब्दं प्राधान्यं तत्रैव प्रधाने कर्मणि लकारः । "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इत्युक्तेः । दुहादिष्वस्याप्रामाणिकः पाठ इति वक्ष्यते । अपादानस्थानप्राप्ता इत्यनेन चानुद्देश्यत्वमात्रमभिप्रेतमिति परे । शतस्य प्राधान्यमिति । शारीराभिहननलक्षणदण्डव्यावर्तनेनेति भावः । नन्वन्तरेणापीति वाच्ये सार्वकालिकासत्त्वप्रतिपादकमपि शब्दरहितमयुक्तमत आह न्यायादिति । शतदण्डनन्यायेत्यर्थः । योगविभागेति । तिङन्तसमासायेति भावः । भाष्ये [ किमर्थमिति ] । चतुर्थीतत्पुरुषः । तपरकरणं क्रियत इति । पाकं पचतीतिवत् सामान्यविशेषभावेन सहप्रयोगः । आत्वजातेर्भिन्नकालवर्णवृत्तित्वाभावाद् द्वितीयमाश्रयति व्यक्तिरिति । यद्-

किं च कारणं न स्यात् । भेदकत्वात्स्वरस्य । भेदका उदात्तादयः । कथं पुनर्ज्ञायते भेदका उदात्तादय इति । एवं हि दृश्यते लोके । य उदात्ते कर्तव्ये ऽनुदात्तं करोति खण्डिकोपाध्यायस्तस्मै चपेटां ददाति ऽन्यत्त्वं करोषीति । अस्ति प्रयोजनमेतत् । किं तर्हीति । भेदकत्वाद् गुणस्येति वक्तव्यम् । किं प्रयोजनम् । आनुनासिक्यं नाम गुणः तद्भिन्नस्यापि ग्रहणं यथा स्यात् । किं च कारणं न स्यात् भेदकत्वाद् गुणस्य । भेदका गुणाः । कथं पुनर्ज्ञायते भेदका गुणा इति । एवं हि दृश्यते लोके । एको ऽयमात्मा उदकं नाम तस्य गुणभेदादन्यत्त्वं भवति । अन्यदिदं शीतमन्यदिदमुष्णमिति । ननु च भोः अभेदका अपि गुणा दृश्यन्ते । तद्यथा । देवदत्तो मुण्ड्यपि जट्यपि शिख्यपि स्वमाख्यां न जहाति । तथा बालो युवा वृद्धः वत्सो दम्यो बलीवर्द इति । उभयमिदं गुणेषूक्तम् । भेदका अभेदका इति । किं पुनरत्र न्याय्यम् । अभेदका गुणा इत्येव न्याय्यम् । कुत एतत् । यदयमस्थिदधिसक्थ्यक्ष्णामनङुदात्त इत्युदात्तग्रहणं करोति । तज्ज्ञापयत्याचार्यो ऽभेदका गुणा इति । यदि भेदका गुणाः स्युः । उदात्तमेवोच्चारयेत् । यदि

---

किं च कारणमिति । अभेदका हि गुणाः । मुण्डेन हि कृते चौर्ये कुन्तलित्वावस्थायामपि चौरोयमिति व्यपदिश्यतइति प्रश्नः । भेदकत्वादिति । सर्वगुणसंग्रहार्थं गुणग्रहणं कर्तव्यमित्यर्थः । एकोयमिति । उदकत्वजातियोगादत्रैकत्वं न विवक्षितं किं तर्हि विशिष्टभाजनस्थमेकमुदकद्रव्यं तदेव च गुणान्तरयोगादन्यत्त्वेन लोके व्यपदिश्यते । उभयमिति । आम्नायशब्दा नियतस्वरा इति वेदे गुणानां भेदकत्वम् । लोके तूभयथा व्यवहारः । गोपिण्डोपि वत्साद्यवस्थाभेदात् क्रयविक्रयादिषु मूल्यादिभेदाद्भेदेन व्यवह्रियते स एवायमिति प्रत्यभिज्ञानादभेदेनापीति प्रश्नः । किं पुनरिति । अत्रेति । शास्त्रे । उदात्तमेवेति । तस्माद् गुणरहितस्योच्चारणाभावान्नान्तरीयकत्वादुच्चार्यमाणोपि गुणः प्रयत्नमन्तरेण न विवक्षित इत्यर्थः।यद्येवं कथमन्यत्रोक्तमुदात्तनिपातनं करिष्यतइति । यावता तत्राप्यविवक्षा प्राप्नोति । नैष दोषः । तत्रापि स्थानेन्तरतम इति वचनादादेशस्य यः स्वरः प्राप्तस्तस्मिन्नुच्चारयितव्ये उदात्तोच्चारणं प्रयत्नेन विवक्षार्थं विज्ञायते । एवमनुनासिकस्य प्रयत्नाधिक्येनोच्चारणं तद्विवक्षा-

---

गुणस्येत्यादि बहुव्रीहिः। भाष्ये [किंच कारणंमिति] । निमित्तकारणहेतुष्विति हेतौ प्रथमा । अतिप्रयोजनमेतावदिति काक्वा सूचितमाशयं पृच्छति । [किंतर्हीति ] । किंतर्हीति प्रश्ने इति। इदं वक्तव्यमित्यर्थः । तदाह । भेदकत्वादित्यादि। आत्यात्मनैकत्वे व्यक्तिभेदादेवोपपत्तेर्न गुणभेदकृतभेदे इदमुदाहरणं स्यादत आह । उदकत्वेति । आत्मशब्दो द्रव्यवाची भाष्ये [बालो युवेति] । भाष्ये [स्वामाख्यां न जहाती] त्यनुकर्षः । एतेनाभेदकत्वं प्रत्यभिज्ञाप्रमाणं दर्शितम्। ननु गुणेषूभयाङ्गीकारे खण्डिकोपाध्यायचपेटादानं विरुध्येतेति चेन्न । यत उभयमिति लोकमात्रविषयमिति न विरोध इत्याह आम्नायेति । ननूभयोरपि न्याय्यत्वप्रतिपादनेन।किं पुनरत्र न्याय्यमिति प्रश्नो ऽयुक्तो ऽत आह शास्त्रे इति। अत्रेति । निर्धारणसप्तमी नेति भावः । इत्येव न्याय्यमिति । विधेयाऽभिन्नविषय इति शेषस्तत्रैतत्कृतस्यापि अप्रत्यय इति निषेधात् । अतस्तथैव ज्ञापकमुपन्यस्यति। [यदयमिति] प्रयत्नं स्वशब्देनोपादानरूपम्। (कथमिति) यथा वध्यादेशे उदात्तनिपातनेन एकाच इति सूत्रस्यमेकाज्ग्रहणं न कार्यमिति । यः स्वरः प्राप्तइति हन्तेरनुदात्तत्वादनुदात्त इत्यर्थः । न चैवमस्थ्यादीनामाद्युदात्तत्वेनादेशानङः

तर्ह्यभेदका गुणाः अनुदात्तादेरन्तोदात्ताच्च यदुच्यते तत्स्वरितादेः स्वरितान्ताच्च प्राप्नोति नैष दोषः । आश्रीयमाणो गुणो भेदको भवति । तद्यथा शुक्लमालभेत कृष्णमालभेत । तत्र यः शुक्ले आलब्धव्ये कृष्णमालभते न हि तेन यथोक्तं कृतं भवति । असन्देहार्थस्तर्हि तकारः । ऐजित्युच्यमाने सन्देहः स्यात् । किमिमावैचावेवाहोस्विदाकारोप्यत्र निर्दिश्यतइति । सन्देहमात्रमेतद्भवति । सर्वसन्देहेषु चेदमुपतिष्ठते । व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति । त्रयाणां ग्रहणमिति व्याख्यास्यामः । अन्यत्रापि ह्ययमेवंजातीयकेषु सन्देहेषु न कं चिद्यत्नं करोति । तद्यथा । औतोम्शसोरिति । इदं तर्हि प्रयोजनम् । आन्तर्यतस्त्रिमात्र-

---

र्थमेव । उञः ऊँ इति यथा । अन्ये त्वाहुः । एकश्रुत्या सूत्राणि पठ्यन्ते इति क्वचिदुदात्तोच्चारणं तद्विवक्षार्थमिति । अनुदात्तादेरिति । अणुपलक्षणार्थानुदात्तश्रुतिः स्यादिति प्रश्नः । उत्तरे त्वज्ग्रहणमेव कुर्यादित्यभिप्रायः । व्याख्यानत इति । प्रस्थे वृद्धमित्याद्युदात्तत्वे सिद्धे मालादीनां चेति मालाशब्दस्य वृद्धार्थत्वादुपादानस्याकारप्रश्लेषनिश्चय इत्यर्थः । इदं तर्हीति । ननु भाव्यमानत्वादादैचोऽत्र ग्राहका न भवि-

स्यान्त्यनुरूपेनुदात्ते उच्चारणीये उदात्तोच्चारणं विवक्षार्थमिति ज्ञापितेपि व्यर्थमुदात्तग्रहणमिति वाच्यम् । परमास्थिशब्दादावन्तोदात्ते उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाभावादित्याशयात् । नन्वेवमपि चतसर्याद्युदात्तनिपातनसामर्थ्याच्चतसृ इत्यत्र चतुरः शसोत्यस्याप्रवृत्तिरिति भाष्योक्तमनुपपन्नम् । चतुः शब्दस्य त्रः सङ्ख्याया इत्याद्युदात्ततया तत्स्थानिकचतसरि स्थानिस्वरेणाद्युदात्तोच्चारणोपपत्त्या चतुरः शसीत्येतद्बाधकत्वायोगादत आह अन्ये त्विति । एकश्रुतिश्च विभाषा छन्दसीति वैकल्पिकी । तत्पाठे क्वचिदुदात्तोच्चारणं विवक्षार्थम् । त्रैस्वर्येण पाठमभिप्रेत्य प्रकृतसूत्रस्थं ज्ञापकमित्यविरोधः । अन्ये त्वित्य-स्वरुचिबीजन्तु निपातनं नामान्यादृशे प्रयोगे प्राप्ते ऽन्यादृशप्रयोगकरणं तद्रूपाद्यत्नात् तत्र तत्रोदात्तादिविवक्षा । तिसृचतसृ इत्यत्रापि छन्दःप्रयुक्ते ऽन्तोदात्ते उच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थम् । संपूर्णाष्टाध्यायी आचार्येणैकश्रुत्या पठितेत्यत्र न मानम् । क्वचित्कस्य चित्पदस्यैकश्रुत्या पाठो यथा दण्डिनायनादिसूत्रे ऐक्ष्वाकेति । एतावदेव भाष्याल्लभ्यते । यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्रह्मयज्ञवत् तथापि व्याख्यानतो ऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः । ( स्वरितादेरिति ) भाष्ये उपलक्षणम् । उदात्तादेरन्तानुदात्ताच्च प्राप्नोतीत्यपि बोध्यम् । ( आश्रीयमाण इति ) शब्देन निपातनेन वाश्रीयमाण इत्यर्थः । नन्वेवमनुदात्तादिग्रहणं व्यर्थं स्यादत आह अजिति । ऐजर्थन्तपरत्वमित्याह इदन्तर्हीति भाष्ये । चतुर्मात्रोपि प्लुतः प्लुतावैच इति सूत्रे भाष्ये स्पष्टः । कार्यकालमाश्रित्य चोदयति । नन्विति । अयं भावः । तत्पक्षे मृजेर्वृद्धिरित्यादावुपस्थितं वृद्धिरादैजिति परैकवाक्यतयान्वेति । एवं वृद्धिपदन्तु प्रत्यभिज्ञामात्रफलकं अनुवाद एव । एतच्च भाव्यमानत्वं स्पष्टमेवेति । उत्तरस्य त्वयं भावः । अनुवादत्वकल्पनापेक्षया तत्रोपस्थितं वृद्धिरादैजिति तत्रैव शक्तिग्रहं संपाद्य वाक्यभेदेन मृजेर्वृद्धिरित्यस्यार्थं बोधयति । ज्योतिष्टोमेन यजेतेत्यादौ तु शक्तिग्राहकशास्त्रान्तराभावादगत्या विधावेव सामानाधिकरण्यान्नामधेयत्वावगतिः कल्प्यते न तु विद्यमाने शक्तिग्राहके तथा कल्पनमुचितं पदस्यानुवादकत्वकल्पनञ्चेति । यत्तु कार्यकालपक्षे वृद्धिरादैजित्यादेर्यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठत इत्यर्थः । यथा च ज्योतिष्टोमादिपदानां यागविधावेव सामानाधिकरण्यान्नामधेयत्वावगतिस्तथेहापि मृजेर्वृद्धिरित्यादौ सामानाधिकरण्यान्नामधेयत्वावगतिः । उपस्थापकेन वृद्ध्यादिपदेन उपस्थाप्यस्य वृत्त्या बोधनात्परं संज्ञासूत्रत्वावगतिरिति तन्न । कार्यकालं संज्ञापरिभाषं भस्येत्युपस्थितमिदं भवति । यचि भमितीति ष्यङः संप्रसारणमिति सूत्रस्य भाष्येण कार्यकालं संज्ञापरिभाषं प्रगृह्यः प्रकृत्येत्युपस्थितमिदं भवति । ईदूदेद्द्विवचनं प्रगृह्यमिति ईदूदेदिति सूत्रस्यभाष्येण च विरोधात् । त्वदुक्त्या . ह्युपस्थितमिदं भवति यचीतीत्येव वक्तव्यं स्यात् । अथ संज्ञेत्यादिप्रकृतसूत्रस्यवार्तिकविरोधश्च । प्रकारान्तरेणात्रत्यतत्प्रत्याख्यानपरभाष्यविरोधश्च । किं च मृजेर्वृद्धिरित्यादिसूत्रस्थवृद्ध्यादिपदानां तदुपस्थितिसम्पत्त्या चारितार्थ्येन स्वोपस्थापितपदार्थे ऽन्वयं

चतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति । खट्वा इन्द्रः खट्वेन्द्रः । खट्वा उदकं खट्वोदकम् । खट्वा ईषा खट्वेषा । खट्वा ऊढा खट्वोढा । खट्वा एलका खट्वैलका । खट्वा ओदनः खट्वौदनः । खट्वा ऐतिकायनः । खट्वैतिकायनः । खट्वा औपगवः खट्वौपगव इति । अथ क्रियमाणेपि तकारे कस्मादेव त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति । तपरस्तत्कालस्येति नियमात् । ननु तः परो यस्मात्सोयं तपरः नेत्याह । तादपि परस्तपरः । यदि तादपि परस्तपरः ऋदोरबिति इहैव स्यात् । यवः स्तवः । लवः पव इत्यत्र न स्यात् । नैष तकारः । कस्तर्हि । दकारः । किं दकारे प्रयोजनम् । अथ किं तकारे । यद्यसन्देहार्थस्तकारः दकारोपि । अथ मुखसुखार्थस्तकारः दकारोपि । वृद्धिरादैच् ॥

इको गुणवृद्धी ॥ ३ ॥ इग्ग्रहणं किमर्थम् । इग्ग्रहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थम् ॥* इग्ग्रहणं क्रियते । किं प्रयोजनम् । आकारनिवृत्त्यर्थं सन्ध्यक्षरनिवृत्त्यर्थं व्यञ्जननिवृत्त्यर्थं च । आकारनिवृत्त्यर्थं तावत् । याता वाता । आकारस्य गुणः प्राप्नोति ।

---

ष्यन्ति । नैतदस्ति । न ह्यत्र संज्ञाविधावादैचो भाव्यन्ते किं त्वैजित्त्वात्त्रिमात्रचतुर्मात्राणां ग्रहणात्संज्ञाप्रसङ्गाद् गुणविधौ तेषामपि प्रसङ्गात्तन्निषेधाय तपरत्वम् । एवं स्थिते चोदयन्ति । यद्यैजर्थस्तकारस्तेनाकारस्य सम्बन्धाभावात् कथमादित्ये तत्पदम् । उच्यते । तात्पर्येणैजर्थत्वं तकारस्योच्यते आनुषङ्गिकं त्वाकारार्थत्वं ज्ञापकद्वारेण ह्याकारप्रश्लेषे विज्ञायमाने प्रतिपत्तिगौरवं भवति । सति तु तकारे ऽऽकारस्य स्वरूपप्रतिपत्तिः स्पष्टा भवतीति तकारसहितस्याकारस्यासंदिग्धानुकार्यप्रतिपादनार्थत्वाद्विभक्त्युत्पत्तौ सत्यमादित्ये तत्पदं सिद्धम् ॥ २ ॥

इको गुणवृद्धी ॥३॥ इग्ग्रहणमिति ॥ वक्ष्यमाणज्ञापकवशादाकारादिनिरासादिक एव गुणवृद्धी भविष्यत इति प्रश्नः । आत्संध्यक्षरेति । आकारादीनां स्थानित्वस्य निवृत्त्यर्थमित्यर्थः । आकारस्याङ्गान्त्यस्य वृद्धिविधावभावाद्विशेषाभावाच्चाकारस्य आतो लोप इति लोपविधानादाकारस्य गुणप्रसङ्गमुदाहरति यातेति । ग्लायतीति । एचां द्विमात्रत्वाविशेषात्

---

मानाभावात् तत्रेक्परिभाषानुपस्थित्या ऽऽपत्तिः । वृद्धिपदेनाविधानात् । मृजेर्वृद्धिरित्यादौ इक्पदोपस्थापकस्यापि विधेयाकाङ्क्षासत्त्वाद् विधिविषये एव तत्प्रवृत्तेश्च भवत्येवान्वयः । एवञ्च ज्योतिष्टोमवाक्यावैलक्षण्येनात्र नामधेयता दुरुपपादा । किं चोपस्थाप्यार्थस्य वृत्त्या बोधनात्संज्ञासूत्रत्वं वा इको गुणेत्यादिवदुपस्थापकत्वात्परिभाषात्वं वेत्यत्र विनिगमकाभावः । वृद्ध्यादिपदैर्वृत्त्या बोधनञ्च दुरुपपादम् । अनुवादेपि संज्ञासूत्रोपस्थितिरणो ऽप्रगृह्यस्य वृद्धिर्यस्येत्यादिविषये भाष्ये स्पष्टेति दिक् । भाष्ये [ कितकार ] इत्यस्य तादपि परस्तपर इत्येवमङ्गीकुर्वत इति शेषः । सम्बन्धाभावादिति । शेषषष्ठ्यभावादित्यर्थः । तान्तस्य पदत्वाभावे जश्त्वं न स्यादिति भावः । आनुषङ्गिकं फलं दर्शयति ज्ञापकद्वारेणेति ।

इको गुणवृद्धी ॥२॥ गुणवृद्धिग्रहणस्योत्तरत्र निषेध्यसमर्पणायावश्यकत्वेपि इक्पदस्येकः स्थाने इत्यर्थमावश्यकत्वेपि योगविभागविषयकोयं प्रश्नो भाष्ये [ इग्ग्रहणमिति ] । ननु इग्ग्रहणेनाकारादीनां निवृत्तिरशक्या कर्तुमत आह स्थानिस्वस्येति । ननु आकारस्य वृद्ध्युदाहरणादाने गुणांशे च आकारोदाहरणादाने किं बीजमत आह आकारस्येति । वृद्धिविधौ सिचि वृद्धाविधौ अयासीदित्यादौ । अपवादत्वात्सगिड्भ्यां सा बाध्यते इति भावः । इतरवृद्धिविधौ सम्भवेप्याह विशेषाभावादिति । आकारस्येति । व्यल्लोपाविति पूर्वविप्रतिषेधेनातो लोपस्य वृद्धिगुणबाधकत्वादिति भावः । पुत्रीयतीत्यादौ त्वविशेष इति बोध्यम् । आका-

इग्ग्रहणान्न भवति। सन्ध्यक्षरनिवृत्त्यर्थम्। ग्लायति। म्लायति। सन्ध्यक्षरस्य गुणः प्राप्नोति। इग्ग्रहणान्न भवति। व्यञ्जननिवृत्त्यर्थम्। उम्भिता। उम्भितुम्। उम्भितव्यम्। व्यञ्जनस्य गुणः प्राप्नोति। इग्ग्रहणान्न भवति। आकारनिवृत्त्यर्थेन तावन्नार्थः। आचार्यप्रवृत्तिर्ज्ञापयति नाकारस्य गुणो भवतीति। यदयमातोऽनुपसर्गे क इति ककारमनुबन्धं करोति। कथं कृत्वा ज्ञापकम्। कित्करणे एतत्प्रयोजनं क्ङितीत्याकारलोपो यथा स्यात्। यदि चाकारस्य गुणः स्यात् कित्करणमनर्थकं स्यात् गुणे कृते द्वयोरकारयोः पररूपेण सिद्धं रूपं स्याद्। गोदः कम्बलद इति। पश्यति त्वाचार्यो नाकारस्य गुणो भवतीति। ततः ककारमनुबन्धं करोति। सन्ध्यक्षरनिवृत्त्यर्थेनापि नार्थः। उपदेशसामर्थ्यात्सन्ध्यक्षरस्य गुणो न भविष्यति। व्यञ्जननिवृत्त्यर्थेनापि नार्थः। आचार्यप्रवृत्तिर्ज्ञापयति न व्यञ्जनस्य गुणो भवतीति। यदयं जनेर्डं शास्ति। कथं कृत्वा ज्ञापकम्। डित्करणे एतत्प्रयोजनं डितीति टिलोपो यथा स्यात्। यदि च व्यञ्जनस्य गुणः स्याद् डित्करणमनर्थकं स्याद्। गुणे कृते त्रयाणामकाराणां पररूपेण सिद्धं रूपं स्यादुपसरजो मन्दुरज इति। पश्यति त्वाचार्यो न व्यञ्जनस्य गुणो भवतीति ततो जनेर्डं शास्ति। नैतानि सन्ति ज्ञापकानि। यत्तावदुच्यते। कित्करणं ज्ञापकं नाकारस्य गुणो भवतीति। उत्तरार्थमेतत्स्यात्। तुन्दशोकयोः परिमृजापनुदोरिति। यत्तर्हि गापोष्टगित्यनन्यार्थं ककारमनुबन्धं करोति। यदप्युच्यते। उपदेशसामर्थ्यात्संध्यक्षरस्य गुणो न भविष्यतीति। यदि यद्यत्संध्यक्षरस्य प्राप्नोति तत्तदुपदेशसाम-

---

प्रयत्नाधिक्याभावादिकारोपदेशेऽप्येकारो गुणः स्यात्। उम्भितेति। भकारस्यौष्ठ्यत्वादोकारो गुणः स्यात्। पररूपेणेति। अतो लोपस्तु न भवति। आर्धधातुकोपदेशे यदकारान्तं तस्य लोपविधानात्। उपदेशसामर्थ्यादिति। प्रतिपत्तिलाघवार्थमेकारमेवोपदिशेदित्यर्थः। यदयं जनेरिति। यद्येवं मिदेर्गुणो विधीयमानो ज्ञापकेन व्यञ्जनस्य निरस्तत्वादिग्ग्रहणाभावाच्च सर्वादेशः प्राप्नोति। मिद इर्मिदिरित्याश्रयणादिकारस्यैव भविष्यतीत्यदोषः। यत्तावदिति। विशेषप्रतिपादनाय सकलज्ञापकाक्षेपः। केचिदाहुः। टकः कित्त्वेन ज्ञापकेनाकारनिवृत्त्यर्थत्वे निराकृते यदप्युच्यतइति ज्ञापकाक्षेपो ग्रन्थच्छायां न पुष्णाति। तस्मादार्थेन क्रमेण सर्वज्ञापकभङ्गोपन्यासं कृत्वा यथा सम्भवं ज्ञापकसमर्थनं

---

रस्य गुणेति। सार्वधातुकार्धधातुकयोरित्यनेन। नन्वैकारोच्चारणसामर्थ्याद् गुणो नेष्यत आह एचामिति। सर्वेषां विवृत एव प्रयत्न इत्यभिमानः। आर्धधातुकोपदेश इति। गुणनिष्पन्नश्च तदुत्तरकालिक इति भावः। प्रतिपत्तिलाघवम्। प्रक्रियालाघवम्। "तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव चेति" पाणिनीयशिक्षोक्तेः प्रयत्नलाघवमिति बोध्यम्। इग्ग्रहणेति। ततश्च मिदेरिति नावयवषष्ठी किं तु स्थानषष्ठीति सर्वादेशो गुणः स्यादित्यर्थः। भाष्ये (नैतानि सन्ति ज्ञापकानीति) छत्रिन्यायेन। ननु नैतानि सन्ति ज्ञापकानीति प्रतिज्ञयाग्रे ज्ञापकसमर्थनमयुक्तमित्यत आह विशेषेति। टकः कित्त्वं ज्ञापकं (यं विभि प्रती) स्यादिविशेषप्रतिपादनायेत्यर्थः। शङ्कते। केचिदिति। यदप्युच्यते इति। समुच्चयार्थापिशब्देनेति शेषः। आर्थेन

र्थ्याद्बाध्यते । आयादयोपि तर्हि न प्राप्नुवन्ति । नैष दोषः । यं विधिं प्रत्युपदेशो ऽनर्थकः स विधिर्बाध्यते । यस्य तु विधेर्निमित्तमेव नासौ बाध्यते । गुणं च प्रत्युपदेशो ऽनर्थकः । आयादीनां पुनर्निमित्तमेव । यदप्युच्यते जनेर्डवचनं ज्ञापकं न व्यञ्जनस्य गुणो भवतीति । सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति। न च जनेर्गुणेन सिद्ध्यति । कुतो ह्येतत् । जनेर्गुण उच्यमानो ऽकारो भवति न पुनरेकारो वा स्यादोकारो वेति । आन्तर्यतो ऽर्धमात्रिकस्य व्यञ्जनस्य मात्रिको ऽकारो भविष्यति । एवमप्यनुनासिकः प्राप्नोति । पररूपेण शुद्धो भविष्यति । एवं तर्हि गमेरप्ययं डो वक्तव्यः । गमेश्च गुण उच्यमान ओकारः प्राप्नोति । तस्मादिग्ग्रहणं कर्त्तव्यम्।यदीग्ग्रहणं क्रियते । द्यौः पन्थाः स इममिति एतेपीकः प्राप्नुवन्ति । संज्ञया विधाने नियमः * । संज्ञया ये विधीयन्ते तेषु नियमः । किं वक्त-

---

कर्त्तव्यम् । आयादयोपीति । एकारोच्चारणस्य सामर्थ्यादविकृतरूपश्रवणार्थत्वादिति भाव । यं विधिमिति । आयादेशस्यैकार एव निमित्तमित्यायादेशो न बाध्यते । न हि ग्लायइत्येवं पाठः शक्यः कर्त्तुम् । त्वया ग्लायतइत्यादिरूपासिद्धिप्रसङ्गान्न ध्याख्येति निपातनादात्वं गुणवन्न बाधिष्यते । पररूपेणेति । रूपग्रहणस्येदमेव प्रयोजनं यादृक् परस्य रूपं तादृगेव यथा स्यादिति । गमेरप्ययमिति । सप्तम्यां जनेर्ड इत्यतो ऽन्येष्वपि दृश्यतइत्यत्र डोनुवर्तमानो गमेरपि विधीयतइत्यज्ञापकं डित्त्वमिति व्यञ्जननिवृत्त्यर्थं सूत्रं स्थितम् । संज्ञयेति । गुणवृद्ध्यनुवृत्त्यैव गुणवृद्ध्योरिकः सिद्धत्वाद् द्वितीयं गुणवृद्धिग्रहणमाश्रितगुणवृद्धिशब्दव्यापारार्थं विज्ञायते । तेन गुण इत्येवं

---

सामर्थ्यप्राप्तेन । भङ्गेति । भङ्गः सदृश इति भावः । ग्लायतइत्यादीति । आदिना जग्लाविस्यादि । नन्वेव मात्वमपि बाध्येत न हि तस्य ऐकारो निमित्तं ग्ले इति पाठेऽपि सुकरत्वाद् अत आह न ध्याख्येति । ध्या इति कृतात्वनिर्देशेनैकारोच्चारणस्यात्वाबाधकत्वज्ञापनादिति भावः । न चास्य सौत्रत्वम् । बाधकत्वमङ्गीकृत्य सौत्रत्वकल्पनापेक्षयाऽबाधकत्वज्ञापनस्य लघुत्वादित्याहुः । न च रैशब्दादिभ्य आचारक्विपि रायतीत्यादौ सन्ध्यक्षरस्य गुणः स्यादिति वाच्यम् । एजन्तेभ्य आचारक्विबभाव एतद्भाष्यप्रामाण्यादित्यदोषात् । गुणवादिति । वैधर्म्ये दृष्टान्तः । ननु पररूपेपि गुणानामभेदकतया कदाचित्सानुनासिकोपि स्यादत आह रूपग्रहणस्येति । परे तु अत्र पररूपशब्देन परशब्देन वा यदुपस्थितं रूपं प्रयोगस्थं तस्य ग्रहणं स्थाने जायमानः किं गुणक इत्याकाङ्क्षायामन्तरतमपरिभाषयोभयगुणकः । प्रकृते चोभयान्तरतमासंभवात् परशब्देन यद्गुणस्योपस्थितिस्तद्गुणक एव भविष्यतीति भाष्याशयाद्रूपग्रहणस्येत्यादि चिन्त्यम् । गुणानां शब्दत्वादिवत् शब्दरूपत्वाभावेन व्यावृत्त्यसंभवश्च रूपग्रहणेनेत्याहुः । ननु गमेरप्ययं ड इति भाष्यमनुपपन्नं गमो गत्रश्चान्तात्यन्ताध्वदूरपारेति सूत्रे पठितेनान्यत्रापि दृश्यत इति वार्त्तिकेन नगो ऽग इत्यादौ डस्य सत्त्वादत आह । सप्तम्यामिति । सप्तम्यां जनेरित्युत्तरं पठितेन्येष्वपि दृश्यत इति सूत्रे दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वेन तेनैव प्रकृत्यन्तराणति डे सिद्धेन्तात्यन्तेति प्रकरणस्थं वार्त्तिकं न कार्यमिति भावः । भाष्ये ( आन्तर्यत ओकारइति ) । स्थानत आन्तर्यादिति भावः । ननु तनोतेर्डउ सन्वच्चेति डित्करणान्न व्यञ्जनस्य गुण इति चेन्न । उणादीनामव्युत्पत्तिपक्षाङ्गीकारात् । न चैवमपि स्थानप्रयत्नान्तरतमेषु इकारादिषु चरितार्थानि गुणादिशास्त्राणि व्यञ्जने न प्रवर्त्तन्त इति वाच्यम् । ईशादौ शकारे तथाप्यतिप्रसङ्गात् । सूत्रमते स्थानप्रयत्नैक्यादिति भाष्याशयः । स्थानेन्तरतमे इति सप्तम्यन्तपाठस्य भाष्ये प्रत्याख्यानेनास्या युक्तेरसंभवदुक्तिकत्वाच्च । भाष्ये ( एतेपीति )। औकारादयः । एषूदाहरणेष्विकः प्राप्नुवन्तीत्यन्वयः । स इत्यत्र तु न स्यादेवेति भावः । त्यदादीनाम इत्यत्र त्यदादीनामिति तु तदोः सः

व्यमेतत् । न हि । कथमनुच्यमानं गंस्यते । गुणवृद्धिग्रहणसामर्थ्यात् । कथं पुनरन्तरेण गुणवृद्धिग्रहणमिको गुणवृद्धी स्याताम् । प्रकृतं गुणवृद्धिग्रहणमनुवर्तते । क्व प्रकृतम् । वृद्धिरादैजदेङ्गुण इति । यदि तदनुवर्तते । अदेङ्गुणो वृद्धिश्चेत्यदेङां वृद्धिसंज्ञा प्राप्नोति । संबन्धमनुवर्तिष्यते । वृद्धिरादैच् । अदेङ् गुणः । वृद्धिरादैच् । तत इको गुण वृद्धी इति । गुणवृद्धिग्रहणमनुवर्त्तते । अदेङादैज्ग्रहणं निवृत्तम् । अथ वा मण्डूकगतयोधिकाराः । यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः । अथ वा एकयोगः करिष्यते । वृद्धिरादैजदेङ् गुणः । तत इको गुणवृद्धी इति । न चैकयोगे ऽनुवृत्तिर्भवति । अथ वान्यवचनाच्चकाराकरणाच्च प्रकृतापवादो

---

यो गुणो वृद्धिरित्येवं या वृद्धिरिति विज्ञायते । अथवा गुणवृद्धिमात्रग्रहणे गुणवृद्ध्यधिकारादेव सिद्धे पुनर्गुणवृद्धिग्रहणं गुणवृद्धिशब्दव्यापाराश्रयणार्थं विज्ञायते । अदेङामिति । पूर्वसूत्रे संज्ञासंज्ञिसम्बन्धायोपात्तो यादृशो वृद्धिशब्दस्तादृश एवोत्तरत्रानुवर्त्तते इत्यदेङामित्युक्तम् । तेनैतन्न चोदनीयं वृद्धिशब्दोनुवर्तमान आदैचः प्रत्याययतीत्यादैचां गुणसंज्ञा प्राप्नोतीति । संबन्धमिति । संबध्यतइति संबन्धः कर्मणि घञ् । नपुंसकस्याभिधेयत्वान्नपुंसकनिर्देशः । आदैज्ग्रहणसंबद्धं वृद्धिग्रहणमदेङ्गुण इत्यत्रानुवर्तते तेनादेङ्भिर्न संबध्यते । इह त्वनुवृत्तमादैचो जहाति । कान्तारोत्तरणाय सार्थस्येव त्यागोपादाने । अथ वेति । वृद्धिशब्दस्येहाकाङ्क्षावशादुपस्थानं त्वदेङ्गुणइत्यत्र । अथ वैकयोग इति । एको भवतिरध्याह्रियते वृद्धिरादैजदेङ्गुणो भवतीत्येवमेकवाक्यत्वं संपद्यते । यद्यपि प्रतिपत्तिकाले भवतिक्रिया भिद्यते तथाप्येककाला प्रतिपत्तिरित्यादैच्संबद्धा वृद्धिसंज्ञा ऽदेङ्संबद्धा गुणसंज्ञेति नास्ति वृद्धिसंज्ञाया अदेङ्भिः संबन्धः ।

---

सावित्युत्तरार्थं स्यात् संज्ञोपसर्जनव्यावृत्त्यर्थं च स्यादिति बोध्यम् । आश्रितेति । आश्रितो गुणवृद्धिशब्दव्यापार उच्चारणं येषु आदेशेषु विधीयमानेषु तदर्थमित्यर्थः । तेनेति । इत्येवमित्यध्याहृत्य स्वरूपपदार्थकेनान्यतरेण विशेषणादिष्टार्थलाभ इति भावः । अत एव संबन्धानुवृत्तिप्रदर्शनपरभाष्ये गुणवृद्धीइत्युच्चार्य गुणवृद्धिग्रहणमनुवर्तत इति उक्तम् । उपक्रमस्थगुणवृद्धिग्रहणसामर्थ्यादिदं तद्भाष्यस्वारस्यादाह अथ वेति । पुनः पुनरुपादानसामर्थ्यादिहत्यं गुणवृद्धिग्रहणं गुणवृद्धिशब्दविहितगुणवृद्धिलाक्षणिकमिति भावः । यादृश इति । स्वरूपार्थक इत्यर्थः । नन्वेवं सति उत्तरत्र निषेध्यसमर्पणार्थं गुणवृद्धिग्रहणस्य चारितार्थ्येन सामर्थ्यं दुरुपपादम् । अनुवर्त्तमानस्य स्वरूपपरत्वेन निषेध्यसमर्पकत्वाभावादिति चेन्न । आगन्तूनामन्ते निवेश इति न्यायेनादेङ्सूत्रे गुणपदोत्तरं वृद्धिपदोपस्थित्या तत्साहचर्येण तत्र सूत्रे स्वरूपपरत्वं तस्य । उत्तरत्र तु योग्यतया ऽर्थपरत्वम् । इक इतिसूत्रेपि न धात्वित्यादिसाहचर्येणार्थपरत्वम् । इक इति षष्ठीनिर्देशाच्चेति भाष्याशयात् । नपुंसकस्येति । घञजपः पुंसीति तु प्रायिकमिति भावः । यत्तु भावविषयमेवैतदिति तन्न । मांसं भक्ष्योऽस्येति कर्मण्यणीति सूत्रस्थभाष्यप्रयोगविरोधात् । तेनेति । अत्रादैजित्यनुवृत्तिर्न स्वकार्याय किं तु वृद्धिशब्दस्याल्पसंबन्धनिवृत्तये इति भावः । भाष्ये (वृद्धिरादैजदेङ्गुणः) इति सूत्रक्रमनिर्देशः । पुनर्वृद्धिरादैजित्यभिधानमदेङित्यत्र संबन्धानुवृत्तिं दर्शयितुं । (इको गुणवृद्धी) इत्युक्तिस्तु यथान्यासाभिप्रायेण । (आदैजदेङ्ग्रहणमिति) । स्वरितत्वाप्रतिज्ञानेनादेङ्ग्रहणवदादैजित्यपि निवृत्तमित्यर्थः । क्वचित्तु आदैज्ग्रहणं निवृत्तमित्येव पाठः । ननु मण्डूकस्य चेतनत्वात्तथा गतिसंभवेपि शब्दस्य कथं सेत्स्यत आह वृद्धिशब्दस्येति । स्वरितत्वासङ्गादनुवर्त्तमानस्यापीति शेषः । इहेति । इक इति सूत्रइत्यर्थः । अदेङित्यत्र तु न संबन्धः । गुणसंज्ञासंबन्धेनादेङां निराकाङ्क्षत्वादिति बोध्यम् । नन्वेकयोगत्वं नैकार्थत्वं, भिन्नविषयसंज्ञाद्वयाविधानात् । नापि निरन्तरपाठः । तस्येदानीमपि सत्त्वेन करिष्यत इत्यस्यासङ्गतेः । योरणावित्यादावेकयोगेप्यनुवृत्तिदर्शनाच्चात आह एक इति ।

विज्ञायते यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति । अन्यस्याः संज्ञाया वचनाच्चकारस्य चानुकर्षणार्थस्याकरणात्प्रकृताया वृद्धिसंज्ञाया गुणसंज्ञा बाधिका भविष्यति । यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति । अथ वा वक्ष्यत्येतत् । अनुवर्तन्ते च नाम विधयो न चानुवर्तनादेव भवन्ति । किं तर्हि । यत्नाद्भवन्तीति । अथ वा उभयं

---

अथ वान्यवचनादिति । यथा कप्रत्ययेनाण् बाध्यते । असंदिग्धत्वादनवकाशत्वात्तात्पर्याच्च कविधेः । अणस्तु विपर्ययात् । एवमदेङ्गुण इत्यत्र वृद्धिग्रहणमनुवृत्तं सत्संदिह्यते किमुत्तरार्थमिहास्यानुवृत्तिरथेहार्थापीति । सावकाशा च वृद्धिसंज्ञा तात्पर्यं च नास्ति । गुणसंज्ञा तु तात्पर्यादसंदेहान्निरवकाशत्वाच्च वृद्धिसंज्ञासंबन्धमदेङां बाधते । प्रत्ययसंज्ञा तु संज्ञिविशेषणासंयुक्ताधिकारेणात्र विधीयमाना कृत्यादिसंज्ञाविषयेऽपि प्रवर्तते । अथ वेति । विभाषातिलमाषोमेत्यत्र ह्युमाभङ्गयोरधान्यत्वात्खञो ऽप्राप्तौ चोदितायां खञ्ग्रहणस्यानुवृत्तिराश्रिता । अनुवर्तमानश्च खञ् यत्नाभावाद्व्रीहिशाल्यादिभिर्न संबध्यते अपि तु विभाषाश्रुत्या यत्नेन तिलादिभिरेव संबध्यते । तथेहापि वृद्धिग्रहणमदेङ्गुण इत्यत्रानुवर्तमानमपि यत्नाभावाददेङ्भिर्न संबध्यते । इह तु पुनर्गुणवृद्धिग्रहणं यत्नो भवति । अथ वेति । अपेक्षालक्षणं लौकिकमधिकारमाश्रयति । समुदायस्य चापेक्षायां नास्त्येतदनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति गुणस्यैवापेक्षा युक्तेति । समु-

---

प्रतिपत्तिकाले लक्ष्यसंस्कारकवाक्योपप्लवकाले । एककालेति । आदैज् वृद्धिसंज्ञा ऽदेङ्गुणसंज्ञो भवतीति सङ्ग्राहकवाक्यार्थबोध एककाल इति भावः । समूहालम्बनात्मक एकवाक्यार्थबोध इति तात्पर्यम् । यद्वादैज् वृद्धिसंज्ञादेङ्गुणसंज्ञश्च भवत इत्यको वाक्यार्थबोध इति तात्पर्यम् । प्रतिपत्तिर्वाक्यार्थबोधः । जैरणाविस्यादौ अवान्तरवाक्यार्थभेदान्न दोषः । कश्चित्तु एककाला प्रतिपत्तिर्भवतु तावतापि स्वरितत्वगुणप्राप्तेवृद्धिपदसंबन्धाभावः कुत इति चिन्त्यम् । न च स्वविषयवाक्यजबोधानन्तरं निराकाङ्क्षतयान्वयाप्राप्तौ हि तत्प्राप्तय स्वरितासङ्गो न ह्यतदेकयोग इति वाच्यम् । व्यवधाननिबन्धनायामनेकसंबन्धाप्राप्तावनेकसंबन्धाय स्वरितत्वासङ्ग इत्यस्यापि वक्तुं शक्यत्वात् । तस्मादयमत्र भाष्यार्थस्तद्धीते तद्वेदेत्यत्र द्विस्तद्ग्रहणादेकयोगेनुवृत्त्यभाव इति । स्पष्टश्चेदन्तदस्मिन्नस्तीति सूत्रे भाष्ये । एकयोगत्वञ्च द्वयोः संहितापाठ एव । वस्तुत एकयोगेप्यनुवृत्तिर्भवति तदस्यास्त्यस्मिन्निति सूत्रे द्विस्तद्ग्रहणाभावात् । तदधीतइति सूत्रे तु बालानां सुखबोधाय द्विस्तद्ग्रहणमित्यप्युक्तं तत्रैवातोत्र भाष्ये ऽयं समाधिरेकदेशिन इत्याहुः । ननु वृद्धिगुणसंज्ञयोः सामान्यविशेषभावाभावात्कथमुत्सर्गापवादसाम्यमत आह यथेति । आत इत्युपादानादेव तद्विषये कस्यासंदिग्धत्वम् । अत एव तदतिरिक्तावकाशविरहस्तदुद्देशेनैव प्रवृत्तिरूपं तात्पर्यं च । ननु गुणसंज्ञया वृद्धिसंज्ञावत् कृत्यादिसंज्ञयापि प्रत्ययसंज्ञा बाध्येतेत्यत आह । प्रत्ययेति । न तव्याद्याकाङ्क्षया प्रत्ययसंज्ञायाः संबन्धो येन संनिहितकृत्यादिसंज्ञया निराकाङ्क्षत्वान्न प्रत्ययसंज्ञया संबन्धः स्यात् । किं तु संज्ञाकाङ्क्षया । सा हि स्वस्य बहुविषयत्वलाभाय कतिपयानन्तरविषयलाभेपि पुनः पुनर्विषयान्तरमाकाङ्क्षते । बहुविषयत्वञ्चास्याः संज्ञिविशेषासंबन्धेनाधिकारकरणादवसीयत इति भावः । प्रकृते तु न तथेति बोध्यम् । खञोऽप्राप्ताविति । यता मुक्ते इति शेषः । मण्डूकगतयोधिकारा इत्यस्यैव स्वरितलिङ्गेनानुवर्त्तमानं यथाकाङ्क्षा तत्रैव संबध्यते इति विशेषमभिधातुमयं पक्षः । स च संबन्धाय तत्र विभाषाग्रहणरूपं यत्नविशेषं कुर्वतः सूत्रकृतोप्यभिमतः । अस्य विशेषस्य प्रागकथनन्तु एतद्विशेषद्वारा पुनस्तत्परामर्शेन तत्रैव परिहारे मुख्यताबोधनायेति बोध्यम् । इह त्विति । अकर्त्तव्यत्वविशिष्टं पुनर्गुणवृद्धिग्रहणं यत्न इत्यर्थः । अनुवृत्तौ हि तदकर्त्तव्यं भवतीत्याहुः । भाष्ये ( उभयं निवृत्तमिति ) स्वरितलिङ्गासङ्गेनाननुवृत्तिरेव निवृत्तिरित्यर्थः । अपेक्षेति । इक इत्येतावन्मात्रस्यैव साकाङ्क्षत्वात् । समुदायापेक्षायाञ्च लक्ष्यानुसार इव बीजम् । अनन्तरस्येति न्यायेन गुणस्यैवा-

अथ परत्व गुणादीनिति

निवृत्तं तदपेक्षिष्यामहे । किं पुनरयमलोन्त्यशेषः । आहोस्विदलोन्त्यापवादः । कथं चायं तच्छेषः स्यात्कथं वा तदपवादः । यद्येकं वाक्यं तच्चेदं च । अलोन्त्यस्य विधयो भवन्ति । इको गुणवृद्धी अलोन्त्यस्येति । ततो ऽयं तच्छेषः । अथ नानावाक्यम् । अलोन्त्यस्य विधयो भवन्ति । इको गुणवृद्धी अन्त्यस्य चानन्त्यस्य चेति । ततोयं तदपवादः । कश्चात्र विशेषः । वृद्धिगुणावलोन्त्यस्येति चेन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणम् *। वृद्धिगुणावलोन्त्यस्येति चेन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं कर्त्तव्यम् । मिदेर्गुणः । इक इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति । मृजेर्वृद्धिः । इक इति वक्तव्यम् ।

---

दायस्य भेदाभावात् । किं पुनरिति । उभयथा सम्भवाद्दोषदर्शनाच्च प्रश्नः । तत्राङ्गस्य गुण इति षष्ठीनिर्द्देशाल्लिङ्गादलोन्त्यस्येत्युपतिष्ठते गुणश्रुत्या त्विक इति । तत्र यदि पूर्वमिका ऽङ्गं विशेष्यते । इगन्ताङ्गस्य गुणो भवतीति स च भवन्नलोऽन्त्यस्येत्यन्त्यस्य भवति तदा सोऽस्य शेषो भवति । यदा त्वङ्गस्येति पूर्वमेवान्त्यमलं षष्ठी नीयते अङ्गान्त्यस्य गुण इति पश्चादिकान्त्योल् विशेष्यते तदा यस्याय विशेषणत्वात्तच्छेषो भवति । अथ त्वङ्गस्येति गुणवृद्धिविधौ न स्थानषष्ठी । किं तर्ह्यंगपेक्षया ऽवयवषष्ठी । तदा स्थानषष्ठ्यभावादलोन्त्यस्येत्यस्यानुपस्थानमिति तदपवादपक्षो भवति । अप्राप्त्यनुमानमेव हि बाधो वचनेन प्राप्तस्य बाधायोगात् । ततश्चाङ्गावयवस्य यत्र तत्र स्थितस्येको गुणवृद्धी इत्यर्थः संपद्यते । समुच्चयस्त्वसम्भवान्नोपन्यस्तः । न हि युगपद् द्वौ षष्ठ्यर्थौ सम्भवतः स्थानेयोगो ऽवयवयोगश्चेति । विकल्पोपि न भवति एकत्वात्षष्ठ्यर्थस्य । तस्मात्तच्छेषत्वतदपवादपक्षावेवात्राशङ्कितौ । यद्येकमिति । अनेकयोगव्यवहितयोरप्येकस्मिन् कार्यप्रदेशे स्वस्वनिमित्तसन्निधापितयोरङ्गाङ्गिभावाद्विशेषणविशेष्यभावादेकवाक्यतोपपत्तिः । अथ नानेति । अङ्गस्येतीगपेक्षयावयवषष्ठ्यामिकः स्थानित्वात्तद्विशेषणत्वादङ्गस्यानुपस्थानमलोन्त्यस्येत्येतस्य । ततश्चानयोर्भिन्नविषयत्वान्नानावाक्यत्वम् । वृद्धिगुणाविति । मिदादीनामनिगन्तत्वादलोन्त्यस्येत्यंतदङ्गमिग्ग्रहणं न सन्निपततीति

---

पेक्षा युक्तेत्येतन्नास्तीत्यन्वयः । समुच्चयस्त्वङ्च युगपद् बुद्धौ संनिधानात्क्रमेणासंनिधानाच्चेति बोध्यम् । षष्ठीति । स्थानषष्ठीत्यर्थः । षष्ठी स्थान इति परिभाषया तत्त्वनिर्णयः । अस्य च सूत्रस्य गुणवृद्धिशब्दाभ्यां विधीयमानौ वृद्धिगुणाविकः स्थाने इत्यर्थे ऽवान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्तेरुभयोरपि समकालप्रवृत्तिकता बोध्या । गुणश्रुत्येत्यस्य गुणशब्देन विधेयत्वबोधिकयेत्यर्थः । तत्र यदीति । बुद्धेः क्रमिकत्वाद्विशेषणविशेष्यभावे कामचाराच्चेति भावः । सोऽस्येति । इगन्तस्येति षष्ठ्यास्तेनान्त्येत्यनुपसंहारात्तेनाद्विशेषणत्वमेतत्परिच्छेदकत्वन्तस्येति भावः । तदा तस्यायं विशेषणत्वादिति । तच्छेषशब्दे तन्त्रेण बहुव्रीहिषष्ठीतत्पुरुषाविति भावः । भाष्ये [ इको गुणवृद्धी इति । पूर्वपरान्वये तेनैतद्द्वयलाभ इति भावः । परिच्छेद्यपरिच्छेदकभावकृत एव च शेषशेषित्वव्यवहार इति बोध्यम् । अथ त्विति । अवान्तरवाक्यार्थबोधकाले निर्णीतार्थकत्वेन स्थानषष्ठीत्वसंभावनया तत्प्रवृत्तावपि पश्चादिक इत्यस्योपस्थितौ मिदेरित्यादौ योग्यत्वेन तत्साहचर्येण चान्यत्रावयवषष्ठीत्वं र्थये तदसंबन्ध इति भावः । बाधायोगादिति आत्यन्तिकबाधायोगादित्यर्थः । पाक्षिकस्तु बाधः षाडशीग्रहणादौ भवत्येवेति बोध्यम् । समुच्चयइति । मिदेरन्त्यस्यैकश्चस्येत्येवमाकारः । नहीति । प्रत्यर्थं शब्दनिवेशनैकस्य नानेकाभिधायकत्वम् । तन्त्रे आवृत्तौ च न मानमिति भावः । अनेकयोगेति । एवञ्चैकं वाक्यमिति भाष्यमयुक्तमिति भावः । उत्तरमेकस्मिन्नित्यादि अङ्गाङ्गिभावश्च न गुणगुणिभाव इत्याह । विशेषणेति । इकः स्थानित्वादिति । साध

अनन्त्यत्वाद्धि न प्राप्नोति। पुगन्तलघूपधस्य गुणः। इक इति वक्तव्यम्। अनन्त्यत्वाद्धि न प्राप्नोति। ऋच्छत्यॄतां लिटि गुणः। इक इति वक्तव्यम्। अनन्त्यत्वाद्धि न प्राप्नोति। ऋदृशोऽङि गुणः। इक इति वक्तव्यम्। अनन्त्यत्वाद्धि न प्राप्नोति। क्षिप्रक्षुद्रयोर्गुणः। इक इति वक्तव्यम्। अनन्त्यत्वाद्धि न प्राप्नोति। सर्वादेशप्रसङ्गश्चानिगन्तस्य *। सर्वादेशश्च गुणोऽनिगन्तस्य प्राप्नोति। याता। वाता। किं कारणम्। अलोऽन्त्यस्येति षष्ठी चैव ह्यन्त्यमिकमुपसंक्रान्ता। अङ्गस्येति च स्थानषष्ठी। तद्यदिदानीमनिगन्तमङ्गं तस्य गुणः सर्वादेशः प्राप्नोति। नैष दोषः। यथैव ह्यलोऽन्त्यस्येति षष्ठी अन्त्यमिकमुपसंक्रान्ता एवमङ्गस्येत्यपि स्थानषष्ठी। तद्यदिदानीमनिगन्तमङ्गं तत्र षष्ठ्येव नास्ति कुतो गुणः कुतः सर्वादेशः। एवं तर्हि नायं दोषसमुच्चयः। किं तर्हि पूर्वापेक्षोऽयं दोषः। ह्यर्थे चायं च पठितः। मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं सर्वादेशप्रसङ्गो ह्यनिगन्तस्येति। मिदेर्गुणः। इक इति वचनादन्त्यस्य न। अलोऽन्त्यस्येति वचनादिको न। उच्यते च गुणः। स सर्वादेशः प्राप्नोति। एवं सर्वत्र। अस्तु तर्हि तदपवादः। इग्मात्रस्येति चेज्जुसि सार्वधातुकार्द्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधः *। इग्मात्रस्येति चेज्जुसि सार्वधातुकार्द्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधो वक्तव्यः। जुसि गुणः। स यथेह भवति। अजुहवुः। अबिभयुरिति। एवमनेनिजुः पर्यवेविषुः। अत्रापि प्राप्नोति। सार्वधातुकार्द्धधातुकयोर्गुणः। स यथेह

---

तेषु प्रदेशेष्विग्ग्रहणं कर्त्तव्यम्। दोषान्तरमप्याह सर्वादेशप्रसङ्गश्चेति। अङ्गस्येत्येतच्छब्देन सर्वाङ्गेषु व्याप्रियते। तत्रेगन्तेष्वेवालोऽन्त्यस्येति विधिः। अन्यत्र तु षष्ठ्या अन्त्येऽल्यनुपसंहाराद्याता वातेति सर्वादेशो गुणः प्राप्नोति। यथैव हीति। अङ्गस्येति षष्ठ्युच्चारितैवान्त्यमलं नीतेति नास्या अपरं रूपमस्तीति नास्ति सर्वादेशगुणप्रसङ्गः। पूर्वापेक्षोऽयमिति। मिदादिष्विग्ग्रहणं कर्तव्यमित्यत्रैवार्थे हेतुत्वेनेदमुपात्तमित्यर्थः। उच्यते चेति। मिदेरिति चोदनया। इग्मात्रस्येति। यद्यङ्गस्येतीगपेक्षया ऽवयवषष्ठी तदा ऽलोऽन्त्यस्येत्यस्य निमित्ताभावादनुपस्थानं स्थानषष्ठी। हि अस्योपस्थाननिमित्तम्।

---

नालोन्त्यसूत्रप्रवृत्तौ निमित्त, मल्समुदायोत्तरस्थानषष्ठीत्वाभावात्। अङ्गस्येति च स्थानषष्ठीति भावः। तद्विशेषणत्वादिति। अवयवित्वेन विशेषणत्वादित्यर्थः। नानावाक्यत्वामिति। अत्र पक्षे पुगन्तेत्यादिनियमार्थमिति बोध्यम्। मिदादीनामिति। गुणादिविधौ परिभाषाद्वयस्य परस्परसम्बन्धापरित्यागेनोपस्थानं तच्छेषत्वम्। तत्रैकस्या असम्भवे द्वितीयापि न प्रवर्त्तत इति भावः। भाष्ये (अनन्त्यत्वादिति)। तच्छेषपक्षे ऽनन्त्यत्वादिको गुणो न प्राप्नोतीत्यर्थः। अङ्गस्येति च स्थानषष्ठीति। अङ्गस्य स्थाने गुणो भवति स च यत्रान्त्य इक् तत्रान्त्यस्येक इत्यर्थ इत्यभिमानस्तदाह मेदेनेति। शास्त्रस्य बहुविषयत्वायेत्यर्थः। तत्र गन्तेष्वेवेति। तच्छेषत्वादिति भावः। अन्यत्र। अनिगन्तविषये गुणशास्त्रे। अन्त्यमलमिति। इक्परिभाषाशेषभूतालोन्त्यपरिभाषयेत्यर्थः। अङ्गस्येत्यपि स्थानषष्ठीति भाष्ये अन्त्यमिकमुपसंक्रान्तेत्यनुकर्षः। एवञ्च संग्राहकवाक्यस्येगन्तमात्रविषयत्वादनिगन्तविषयकलक्षणाभाव एव। आवृत्तौ च न मानमिति भावः। अत एव गापोष्टकः कित्त्वं सार्थकम्। हिश्च हेत्वर्थ इत्याह। मिदादिष्विति।

भवति कर्ता हर्ता नयति तरति भवति । एवमीहिता ईहितुं ईहितव्यमित्यत्रापि प्राप्नोति । ह्रस्वस्य गुणः । स यथेह भवति । हे अग्ने हे वायो इति । एवं हे अग्निचित् हे सोमसुत् इत्यत्रापि प्राप्नोति । जसि गुणः । स यथेह भवति । अग्नयो वायव इति । एवं अग्निचितः सोमसुत इत्यत्रापि प्राप्नोति । ऋतो ङिसर्वनामस्थानयोर्गुणः । स यथेह भवति कर्तरि कर्त्तारौ कर्त्तार इति । एवं सुकृति सुकृतौ सुकृत इत्यत्रापि प्राप्नोति । घेर्ङिति गुणः । स यथेह भवति । अग्नये वायवे इति । एवमग्निचित्ते सोमसुते इत्यत्रापि प्राप्नोति । ओर्गुणः । स यथेह भवति वाभ्रव्यो माण्डव्य इति । एवं सुश्रुत् सौश्रुत इत्यत्रापि प्राप्नोति । नैष दोषः । पुगन्तलघूपधग्रहणमनन्त्यनियमार्थम् * । पुगन्तलघूपधग्रहणमनन्त्यनियमार्थं भविष्यति । पुगन्तलघूपधस्यैवानन्त्यस्य नान्यस्यानन्त्यस्येति । प्रकृतस्यैष नियमः स्यात् । किं च प्रकृतम् । सार्वधातुकार्द्धधातुकयोरिति । तेन भवे-

---

ततश्चाङ्गावयवस्यान्त्यस्यानन्त्यस्य चेको गुणः प्राप्नोतीति दोषः । ह्रस्वस्य गुण इति । समानन्यायत्वादेतदुक्तम् । अङ्गस्यावयवो यो ह्रस्वस्तस्य गुण इति न त्वत्रैकपरिभाषोपतिष्ठते निर्दिष्टस्थानिकत्वात् । अन्ये त्वाहुः । अत्रापि परिभाषोपस्थाने सति ह्रस्वेनेग्विशेष्यते ह्रस्वस्येको गुणो यथा स्याद् दीर्घस्य मा भूदिति । ओर्गुण इत्यत्राप्यस्या उपस्थानमनन्त्यस्याप्युकारस्य गुणार्थम् । असति ह्यस्या उपस्थानेऽङ्गस्येति स्थानषष्ठी स्यादङ्गं चोकारेण विशेष्यते इत्युकारान्तस्यैवाङ्गस्य गुणः स्यात् । पुगन्तेति । भेत्तेत्यादौ गुणे सिद्धे पुनः श्रुतिर्नियमार्थेति गुरूपधस्येहितेत्यादौ न भविष्यति नापि हे अग्निचिदित्यादौ । उभयनियमाश्रयणादिति भावः । ननु भेदेति दकारस्य ह्लेपयतीति पकारस्य च यथा स्यादिति विध्यर्थमेतत्स्यात् । नैतदस्ति । पुकि अन्तः पुगन्तो, लघ्वी उपधा लघूपधा, ततः समाहारद्वन्द्वनिर्देश इत्यन्त्यस्य गुणेन भाव्यम् । प्रकृतस्येति । एकेन वाक्येन नियमद्वयस्याभावात्प्रकृतस्यैव गुणस्य नियमः स्यात् ।

---

अनन्त्यस्य चेक इति । यद्यपि जुसि चेत्यादीनां प्रधानभूतेग्विशेषणत्वे तस्मिन्निति परिभाषया व्यवहितस्येको न भविष्यति तथापि प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया जुसि चेत्यादिभिरप्यङ्गमेव विशेष्यत इत्यभिप्रायः । समानन्यायेनेति । गुणप्रकरणावैरूप्याय सर्वत्राङ्गस्येत्यवयवषष्ठ्येव स्यादिति भावः । निर्दिष्टेति । अनियमे नियमकारिणीत्वात्परिभाषाया इति भावः । अन्ये त्विति । अयं भावः । न ह्यनियम इति श्रुतिः स्मृतिर्वा किं तु परिभाषा लिङ्गवती फलवती चेति नियमः । फलञ्चेतरव्यावृत्तिवदितरसंग्रहोऽपीति ह्रस्वस्य त्यस्याङ्गविशेषणत्वव्यावर्त्तनेनावयवषष्ठीत्वबोधनेनानन्त्यस्यापि गुणसम्पादनमेव फलं स्यात् । अकारे तु गुणागुणयोर्न विशेष इति । तदेतद्वक्ष्यति । अनन्त्यस्याप्युकारस्येति । नन्वेवं ह्रस्वग्रहणं व्यर्थमत आह दीर्घस्येति । घिसंज्ञा वर्णयोरेवेति पक्षे ङिति गुणस्याग्निचित इत्यादौ प्रसंगो बोध्यः । पुनः श्रुतिः पुनर्गुणविधानम् । ननु चेति । बहुव्रीहिसमासः सामर्थ्यादिक्परिभाषानुपस्थितिश्चेति भावः । भिदो दकारोच्चारणन्तु भिन्नो भिन्नवानित्यादौ चरितार्थम् । क्नोः किरत्वेनानिग्लक्षणत्वेऽपि निषेधप्रवृत्तेः । पुग्विधानमपि क्ष्मापयतीत्यादौ यलोपार्थम् । ओकाररूपगुणार्थञ्च चरितार्थमित्याशयः । पुक्तीति । लाघवान्तस्पुरुषे निर्णीते निषादस्थपतिन्यायेन नियमार्थत्वं न दोषावहमित्यर्थः । ननु पुगन्तग्रहणं दापयतीत्यादौ अनन्त्यस्यानिकोऽपि गुणार्थं स्यादिति कथं नियमार्थत्वमिति चेन्न । गुणे उपधावृद्ध्या विशेषाभावात् । प्रकृतस्यैवेति ।

दिह नियमान्न स्यात् ईहिता ईहितुम् ईहितव्यमिति । ह्रस्वाद्योर्गुणस्त्वनियतः सोनन्त्यस्यापि प्राप्नोति । अथाप्येवं नियमः स्यात् । पुगन्तलघूपधस्य सार्वधातुकार्द्धधातुकयोरेवेति । एवमपि सार्वधातुकार्द्धधातुकयोर्गुणो ऽनियतः सोनन्त्यस्यापि प्राप्नोति । ईहिता ईहितुम् ईहितव्यमिति । अथाप्युभयतो नियमः स्यात् । पुगन्तलघूपधस्यैव सार्वधातुकार्द्धधातुकयोः, सार्वधातुकार्द्धधातुकयोरेव पुगन्तलघूपधस्येति । एवमप्ययं जुसि गुणो ऽनियतः सोनन्त्यस्यापि प्राप्नोति । अनेनिजुः पर्यवेविषुरिति । एवं तर्हि नायं तच्छेषः नापि तदपवादः । अन्यदेवेदं परिभाषान्तरमसंबद्धमनया परिभाषया । परिभाषान्तरमिति च मत्वा क्रोष्ट्रीयाः पठन्ति । नियमादिको गुणवृद्धी भवतो विप्रतिषेधेनेति । यदि चायं तच्छेषः स्यात्तेनैव तस्यायुक्तो विप्रतिषेधः । अथापि तदपवादः । उत्सर्गापवादयोरप्ययुक्तो विप्रतिषेधः । तत्र नियमस्यावकाशः । राज्ञः क च । राजकीयम् । इको गुणवृद्धी इत्यस्यावकाशः । चयनं चायको लवनं लावक इति । इहो-

---

पुगन्तलघूपधस्यैव सार्वधातुकार्द्धधातुकयोरिति, न तु सार्वधातुकार्द्धधातुकयोरेव पुगन्तलघूपधस्येति । अथापीति । अनन्तरस्य विधिर्वेति परिभाषा यदि नाश्रीयेत इत्यर्थः । अथापीति । अभ्युपगमवादेनोच्यते । आवृत्त्यादिन्यायाश्रयणेन वा । एकस्मिंस्तु वाक्ये नियमद्वयं न लभ्यते । एवमपीति । अनेनिजुः पर्यवेविषुरित्यत्र लघूपधं चाङ्गं सार्वधातुकं चास्तीति जुसि चेति गुणः प्राप्नोति । हे पिचव्य हे बुद्धे हे बुद्धय इत्यादौ चालघूपधत्वादनन्त्यस्य गुणो ऽपरिहृतः । एवं तर्हीति । परस्परानपेक्षयोः स्वस्वनिमित्तप्रयुक्तसन्निधानयोर्द्वयोः परिभाषयोः प्रदेशेषु स्वस्वकार्यप्रतिपादनम् । तत्र यदि कथंचिदेकविषये सन्निपातो भवति नैतावता परस्परापेक्षा भवतीत्यर्थः । अन्यदेवेति । अन्तरशब्दो विशेषवाचीत्यन्यतरशब्दयोरविरुद्धः सह प्रयोगो ऽपर्यायत्वात् । चयनमिति । अलोन्त्यपरिभाषायाः प्रयोजनाभावादत्रानुपस्थानमित्याशयः । चायक इति । कथमिक्परिभाषात्रोपतिष्ठते यावता ऽच इति स्थानी निर्दिष्टः । अत्राहुः । अच इत्यस्याङ्गविशेषणतयोपयोगादचः स्थानित्वाभावाद् वृद्धिग्रहणेन लिङ्गेनेक्परिभाषात्राप्युपतिष्ठत एव । मेद्यतीति । इक इति वचनादिकारस्य प्राप्नोति । अलोन्त्यस्येति

---

अनन्तरस्यैवेत्यर्थः । नन्वनन्तरस्येतिन्यायविरुद्धो ऽयं नियम इत्यत आह अनन्तरस्येति । लक्ष्यानुसारेणानाश्रयणं बीजं बोध्यम् । अभ्युपेत्यवादः क्लेशेनाङ्गीकार इत्याहुः । पिचव्येति । उगवादिभ्यो यत् । उवर्णान्तस्याङ्गस्येको गुण इति व्याख्यानमभिप्रेत्यात्र दोषोपन्यासः परन्तु सौश्रुत इत्यत्रापि प्राप्नोतीति भाष्याननुगुणा सा व्याख्येति चिन्त्योयं कैयट इत्याहुः । क्वचित्तु कैयटपुस्तके पिचव्य इति न दृश्यत एव । तच्छेष इति शब्दोसम्भवदुक्तिकत्वग्रस्तोपीत्याह परस्परेति । विशेषणविशेष्यभावमात्रेण शेषशेषिव्यवहारो न क्वापि दृष्टचर इति भावः । अत एवाग्रे एतत्पक्षोक्तदूषणोद्धारेपि नायं तच्छेष इत्युक्तिः सङ्गच्छते । सन्निपात इति । जायमानोपि संनिपातः सावकाशत्वेन विप्रतिषेधोपयोग्येव न तच्छेषत्वोपयोगी । अत एव नापवादत्वमपि उक्तदोषाच्चेति भावः । [ असम्बद्धमनयेति ] भाष्यस्य शेषशेषिभावानापन्नमुत्सर्गापवादभावानापन्नं चेत्यर्थः । नियमादिति । अलोन्त्यपरिभाषायाः पूर्वाचार्यसंज्ञा नियमइति । तेनैव तस्यायुक्त-

भयं प्राप्नोति मेद्यति मार्ष्टीति । इको गुणवृद्धी इत्येतद्भवति विप्रतिषेधेन । नैष युक्तो विप्रतिषेधः । विप्रतिषेधे परमित्युच्यते । पूर्वश्चायं योगः परो नियमः । इष्टवाची परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवतीति । एवमप्ययुक्तो विप्रतिषेधः । द्विकार्ययोगो हि विप्रतिषेधः । न चात्रैको द्विकार्ययुक्तः । नावश्यं द्विकार्ययोग एव विप्रतिषेधः । किं तर्ह्यसंभवोपि । स चास्त्यत्रासंभवः । को ऽसावसंभवः । इह तावद् वृक्षेभ्यः प्लक्षेभ्य इति । एकः स्थानी द्वावादेशौ न चास्ति संभवः । यदेकस्य स्थानिनो द्वावादेशौ स्याताम् । इहेदानीं मेद्यति मेद्यतः मेद्यन्ति इति । द्वौ स्थानिनौ एक आदेशः । न चास्ति संभवः । द्वयोः स्थानिनोरेक आदेशः स्यादित्येषो ऽसंभवः । सत्येतस्मिन्नसंभवे युक्तो विप्रतिषेधः । एवमप्ययुक्तो विप्रतिषेधः । द्वयोर्हि सावकाशयोः समवस्थितयोर्विप्रतिषेधो भवति । अनवकाशश्चायं योगः । ननु च इदानीमेवास्यावकाशः प्रक्लृप्तः चयनं चायको लवनं लावक इति । अत्रापि नियमः प्राप्नोति । नाप्राप्ते नियमेये योग आरभ्यते ।

---

वचनाद्दकारस्य । नैष युक्त इति । इष्टासिद्धये इत्यर्थः । यथोद्देशपक्षे च परिभाषयोः पौर्वापर्यं न तु कार्यकालतायाम् । द्विकार्ययोग इति । द्वाभ्यां कार्याभ्यां योगोस्य स्थानिनः स विप्रतिषेधविषयत्वाद्विप्रतिषेध । नावश्यमिति । द्विकार्ययोगत्वाभावे केवलोप्यसम्भवो विप्रतिषेध इत्यर्थः । इह तावदिति । दीर्घत्वं च यञ्यनन्तरे विधीयते एत्वं च झल्यनन्तरे न च सम्भवोस्ति यद् द्वयोः स्वेन स्वेन निमित्तेनानन्तर्यं स्यात् । इहेदानीमिति । मिदेरित्येका षष्ठी । सा यद्यवयवसंबन्धे तदेकारस्य गुणेन भाव्यम् । अथ स्थानषष्ठी तदालोन्त्यस्येति वचनाद्दकारस्य । ना चास्ति सम्भवो युगपदुभ-

---

इति । स्वाङ्गेन स्वस्येत्यर्थः । शषशोषिणोरभेदं मत्वा तेनैवेत्याद्युक्तम् । नन्वङ्गस्येति स्थानषष्ठीदर्शनात्सार्वधातुकत्याश्रयत्यलोन्त्यपरिभाषाप्रवृत्त्या कथमिकपरिभाषायाश्रयनमित्यवकाशोऽनआह अलोन्त्येति । अङ्गेनेको विशेषणेन पुगन्तेत्यादिनियमेन च तत्प्रयोजनासिद्धेरिति भावः । अत्राहुरिति । अचा विशेषिताङ्गेनेको विशेषणसम्भवाद्व्यापयति गावावित्यादिस्वेष न जानातीति भावः । इष्टेति । इष्टसिद्धिफलकत्वमेव हि तस्य युक्तत्वमिति भावः । न तु कार्येति । द्वयोरप्येकदेशस्थत्वेन परत्वासम्भवादिति भावः । वस्तुतः कार्यकालपक्षेपि पाणिन्युच्चारणरूपपाठकृतं परत्वमस्त्येव । अन्यत्र प्रयोगरूपदेशे सर्वेषां मेलनेन परत्वस्योच्छेद एव स्यात् । प्रयोगसाधनफलकान्येव शास्त्राणि । न चैवं कार्यकालपक्षमाश्रित्य त्रिपाद्यामेषां प्रवृत्त्यर्थं तद्देशे तु पूर्वाण्येतानि प्रति त्रिपाद्या असिद्धत्वेनाप्रवृत्तिरेव स्यादिति भाष्याद्युक्तं विरुद्ध्येतेति वाच्यम् । परिभाषायाः सिद्धत्वेन तत्पक्षे ऽसिद्धेनापि कार्येण स्वार्थन्तराकर्षणसम्भवादित्यष्टमे उपपादयिष्यमाणत्वात् । ध्वांतरुचेदं तस्मिन्निति निर्दिष्ट इत्यत्र भाष्यकैयटयोरिति चिन्त्यमेतत् । ननु द्विकार्ययोग इत्यस्य द्वाभ्यां कार्याभ्यामन्यस्य योग इत्यर्थः । उत द्वयोः परस्परेण योग इत्यर्थ उभयथापि त्रिपदतत्पुरुषो दुर्लभः कर्मधारयपूर्वपदकोपि न दिक्सङ्ख्ये इति नियमेन तस्य दुर्लभत्वादत आह द्वाभ्यामित्यादि । अत्रापि पक्षे विप्रतिषेधशब्देन सामानाधिकरण्यानुपपत्तेराह विप्रतिषेधेति । द्विकार्ययोगेप्यसम्भवसत्त्वादाह केवलोपीति । ननु आ ए इति ए आ इति वादेशसम्भवोस्त्येवेत्यत आह । न चेति । द्वयोरिति । कार्ययोरित्यर्थः । अनन्तरे यञि दीर्घः साधुरनन्तरे झलि एत्वं साधुरित्यर्थ इति भावः । आद्गुण इत्यादौ द्वयोः स्थानिनोरेकादेशस्य संभवादाह मिदेरिति । नचास्ति संभवो युगपदिति । युगपद्वाक्यार्थद्वयबोधाभावादिति भावः । ननु उक्तरीत्या प्रयोजनाभावादलोन्त्यस्याप्रवृत्तौ अत्रापि नियमः प्राप्नोतीत्यसंगतमित्यत आह यद्यवमिति । एतदभावे संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्सर्वत्राङ्गस्येति स्थानषष्ठ्येव । कृते त्वस्मिन्-

यावता च नाप्राप्ते नियमे ऽयं योग आरभ्यते। ततस्तस्यापवादोयं योगो भवति। उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः। अथापि कथं चिदिको गुणवृद्धी इत्यस्याव-काशः स्यात्। एवमपि यथेह विप्रतिषेधादिको गुणो भवति मेद्यति मेद्यतः मेद्यन्ति इति एवमिहापि प्राप्नोति। अनेनिजुः पर्यवेविषुरिति। एवं तर्हि वृद्धिर्भवति गुणो भवतीति यत्र ब्रूयादिक इति तत्रोपस्थितं द्रष्टव्यम्। किं कृतं भवति। द्वितीया षष्ठी प्रा-दुर्भाव्येत। तत्र कामचारः। गृह्यमाणेन वेकं विशेषयितुम्। इका वा गृह्यमाणम्। यावता कामचारः। इह तावन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेषु गृह्यमा-णेनेकं विशेषयिष्यामः। एतेषां य इगिति। इहेदानीं जुसि सार्वधातुकार्द्धधातु-कह्रस्वाद्योर्गुणेष्विका गृह्यमाणं विशेषयिष्यामः। एतेषां गुणो भवति इकः। इग-न्तानामिति। अथवा सर्वत्रैवात्र स्थानी निर्दिश्यते। इह तावन्मिदेरित्यविभक्ति-को निर्देशः। मिद् एः मिदेः मिदेरिति। अथवा षष्ठीसमासो भविष्यति। मिद इः मिदिः मिदेरिति। पुगन्तलघूपधस्येति नैवं विज्ञायते। पुगन्ताङ्गस्य लघूपधस्य चेति। कथं तर्हि पुकि अन्तः पुगन्तः लघ्वी उपधा लघूपधा पुगन्तश्च लघूपधा च पुगन्तलघूपधं पुगन्तलघूपधस्येति। अवश्यं चैतदेवं विज्ञेयम्। अङ्गविशेषणे सतीह प्रसज्येत। भिनत्ति छिनत्तीति। ऋच्छेरपि प्रश्लिष्टनिर्देशोयं ऋच्छति ऋ ॠ ॠताम् ऋच्छत्यॄतामिति। दृशेरपि योगविभागः करिष्यते। उरङ्ग्गुणः। उः

---

योर्गुणस्येत्यर्थः। एवमपीति। यदीदं नारभ्येत गुणवृद्धी कस्य स्याताम्। अलो-न्त्यस्येति चेद्येन नाप्राप्तिन्यायेन तद्बाधस्यापवादत्वाद्विप्रतिषेधानुपपत्तिरित्यर्थः। एवं च क्रोष्ट्रीयमतमसंबद्धपरिभाषान्तरपक्षश्च नोपपद्यते। एवं तर्हीति। प्रदेशार्थत्वादनयोः परिभाषयोर्गुणत्वात्परस्परेण संबन्धाभावात्प्रदेशे वाक्यपर्यालोचनया वाक्यार्थस्याव-

---

यवषष्ठी सेति भावः। [ अथापि कथंचिदिति ] भाष्यस्य उक्त एवाशयः। क्रोष्ट्रीयमतं विप्रतिषेधः। असंबद्धपरिभाषापक्षश्च तदुपजीव्यस्तत्र विप्रतिषेधाईतोन्त्यस्त्वयुक्त एव। क्व संनिपातः क्वान्यतर-स्यागः स च लस्येत्यत्र विनिगमकाभावेन सर्वेष्टासिद्धेस्तस्माद् द्वयमप्येकपक्षभूतमेव बोध्यम्। प्रदेशार्थत्वा-दिति। परस्परेण संबन्धाभावादित्यन्तेन तच्छेषत्वासंभव उक्तः। पदोपस्थितिपक्षे च विधेयसमर्पकत्वेन गृहीतगुणादिपदश्रुतिरस्था लिङ्गमित्येषामन्तरङ्गा। तत्त्वेन अङ्गश्च प्रथमाया विधेयविभक्तित्वेन तदन्तत्वेन पदज्ञानकाल एव। तदुक्तं भाष्ये [ गुणो भवतीति ]। [ यत्रे ] त्यादि। नियमस्तु स्थानषष्ठीलिङ्गक इति अवान्तरवाक्यार्थबोधोत्तरकालिकत्वेन बहिरङ्गः। एवञ्च मिदादावुपस्थितेकपरिभाषायाः समानाधिकर-ण्यासंभवाद्वैयधिकरण्यान्वये वृत्ते निमित्ताभावादेवालोन्त्यस्येत्यस्यानुपस्थितिः। सार्वधातुकार्धधातुकयोरि-त्यादौ सामानाधिकरण्यान्वये ऽलोन्त्यस्येत्यनेनान्त्यस्यादेशव्यवस्था। एतेनैकस्या अप्रवृत्तौ अपरापि न प्रवर्त्तेते-त्यपास्तम्। पर्यालोचनयेति। प्रदेशे सति संभवे परिभाषाद्वयैकवाक्यतया वाक्यार्थः। अन्यथा त्विकपरिभाषा-गर्भ एव। अस्या अन्तरङ्गत्वादित्यर्थः। भाष्ये [वृद्धिर्भवती] त्यादि। इति शब्दो यत्रेत्यर्थके। (इक इत्येतावतीति इकः सूत्रे इक इति षष्ठ्यन्तानुकरणमित्यर्थः। अनुवृत्तस्य स्वरूपपरत्वेन गुणशब्दो भवतीत्यांद्यर्थः स्यादतः पुनरत्र गुणवृद्धिग्रहणम्। अनुवृत्तस्यार्थपरत्वं तु न। शब्दाधिकारापत्तेः। उभाभ्याञ्च गुणशब्दवान्. गुणो

अङि गुणो भवति । ततो दृशः । दृशेश्चाङि गुणो भवति उरित्येव । क्षिप्रक्षुद्रयोरपि यणादिपरं गुण इतीयता सिद्धम् । सोयमेवं सिद्धे सति यत्पूर्वग्रहणं करोति तस्यैतत्प्रयोजनम् । इको यथा स्यादनिको मा भूदिति । अथ वृद्धिग्रहणं किमर्थम् । किं विशेषेण वृद्धिग्रहणं चोद्यते न पुनर्गुणग्रहणमपि । यदि किं चिद् गुणग्रहणस्य प्रयोजनमस्ति वृद्धिग्रहणस्यापि तद्भवितुमर्हति । को वा विशेषः । अयमस्ति विशेषः । गुणविधौ न क्व चित्स्थानी निर्दिश्यते । तत्रावश्यं स्थानि-

---

स्थानमित्यर्थः । अथवेति । तच्छेषपक्षे उक्तदोषपरिहारः । क्षिप्रक्षुद्रयोरपीति । अत्र च योगविभागः क्रियते । स्थूलादीनां यणादिपरं लुप्यते । ततः पूर्वस्य च गुण इति । अत्र च स्वरितत्वात् क्षिप्रक्षुद्रशब्दावेवानुवर्तेते स्थूलादयो निवृत्तास्तेषां तु यणादिलोपे सत्योर्गुण इति गुणो भवतीति । आभिद्धवदत्राभादित्यसिद्धत्वमनित्यत्वान्न भवति । तत्र क्षिप्रक्षुद्रयोर्यण आदिः पकारो दकारश्च तस्माद्यणादेः परं लुप्यते तस्मादेव च यणादेः पूर्वस्य च गुण इति सिद्धं क्षेपिष्ठः क्षोदिष्ठ इति । यणादिपरमिति । पञ्चमीसमासः । यदि तर्हि पुगन्तलघूपधस्येति स्थानी निर्दिश्यते तच्छेषपक्षाश्रयणाच्चात्रेक्परिभाषा नोपतिष्ठते तदास्य गुणस्यानिग्लक्षणत्वाद् भिन्नं छिन्नमित्यादौ क्ङिति चेति गुणनिषेधो न प्राप्नोति । यथा लैगवायन इति । नैष दोषः । क्नुसनोः कित्त्वविधानाज् ज्ञापकाद् अनिग्लक्षणत्वेपि लघूपधगुणस्य प्रतिषेधो भविष्यति । गुणविधाविति । क्वचिन्न

---

यत्रेत्यादिरर्थस्तदुक्तमिति यत्रेत्यादि गुणपदं यत्र वर्तते इत्याद्यर्थस्तु न अतोगुण इत्यादावव्याप्तेः । भवतिक्रियाया अन्तरङ्गत्वाच्च । अस्मादेव गुणवृद्धिग्रहणादत्र विधीयमान इत्यस्य तदर्थकस्य भवतीत्यस्य वाध्याहार इति बोध्यम् । एतन्मूलकमेवानुवादे परिभाषा नोपतिष्ठत इति । अत एव तदेतद्विषयमेवाचश्चे-त्यतद्विषयमेव च । अचोञ्णितीत्यादौ तु वाक्यार्थबोधकाले श्रोतापदैर्नेवाकाङ्क्षाशान्तौ लिङ्गोपस्थि-तस्य दुर्बलतया नान्वय इति दिक् । ( पुक्ङ्यन्तइति ) सुप्सुपेति समासः । भिनत्तीत्यत्र गुणापादनं क्ङिती-त्यस्य निमित्तसप्तमीत्वाद् । इकः सार्वधातुकार्धधातुकयोरिति विशेषणमिति तु न युक्तम् । तस्या-ङ्गांशे उत्थिताकाङ्क्षत्वात् । भाष्ये ( यणादिपरं गुण इति ) । यणादिपरं लुप्यते ऽवशिष्टस्य गुण इत्यर्थेन क्षिप्रादेः सर्वांशो गुणः सिद्धः स्थूलादौ तु भोर्गुण इत्येव सिद्धमिति भावः । ननु पूर्वस्येत्युक्तावपि यणा-पेक्षादेः परमित्यर्थे पूर्वस्य गुण इत्यनेनापि तत एव पूर्वस्य गुणापत्तौ स्थूलादिषु थकारादेर्गुणः स्यात् । यणा-दिर्यस्य तद्रूपं परं लुप्यते ततः पूर्वस्य गुण इत्यर्थे क्षिप्रक्षुद्रयोरन्त्यस्य व्यञ्जनस्य गुणः स्यादत आह अत्र-चेति । अनित्यत्वादिति । आसन्नित्यत्र लोपनिवृत्त्यर्थात् श्नसोरल्लोप इति तपरकरणादित्यर्थः । तथाहि । अस् अन्तीति स्थिते परत्वाल्लोपे तस्यासिद्धत्वात्पुनः प्रसङ्गनाद विकारान्यानुपूर्व्यभावेन लक्ष्यं लक्षण-स्येति न्यायाप्राप्तौ प्राप्तलोपवारणार्थन्तपरत्वमाटो ऽसिद्धत्वे व्यर्थं सत्तदनित्यत्वे ज्ञापकम् । न चाटोप्य-नापत्तिः । तत्रानित्यत्वे मानाभावात् । तस्मादेव चेति । पूर्वत्वस्यावध्याकाङ्क्षायां परत्वे ऽवधित्वेन क्लृप्त-त्वादुपस्थितत्वाच्च तस्यैवावधित्वमिति भावः । तद् ध्वनयन् व्याचष्टे । पञ्चमीसमास इति । सुप्सुपेत्यनेन । अवयवभूते यणादीत्यत्र समुदितं चेत्यर्थः । न चैवं हूस्वशब्दे स्वरस्य शब्दस्यापि लोपापत्तिः स्थूलादिसाह-चर्येणोपान्त्ययणादेः परस्यैव लोपादित्याहुः । पक्षाश्रयणाच्चेति । परिभाषाणामनियमे नियमकारिणीत्वाच्चे-त्यपि बोध्यम् । एव नुमापयति इत्यादौ पुगन्तेति गुणे उपधावृद्धिरिति न दोषः । क्नुसनोरिति । एतत्क्-ङिति चेति सूत्रे उपपादयिष्यते । भाष्ये शङ्कते(अथवृद्धिग्रहणमिति) । न क्वचित् स्थानी निर्दिश्यते इत्युक्त्या सर्वत्रैव न निर्दिश्यत इति प्रतीयते क्वचिदादिपदप्राग्वर्तिनञः क्वचिदादिपदबोध्याधिकरणादौ सर्वत्राभावप्रती-तेर्व्युत्पत्तिसिद्धत्वात्तच्चायुक्तमत आह क्वचिदिति । भाष्ये सिद्धान्त्याह(वृद्धिग्रहणमुत्तरार्थमिति) । पूर्वपक्ष्याह । ( कंश्चस्यादि ) । अविशेषेणोच्यते साक्ङितीति । प्रत्ययविशेषानाश्रयणमत्राविशेषः । उत्तरस्याविशेषेणे-

निर्देशार्थं गुणग्रहणं कर्त्तव्यम्। वृद्धिविधौ पुनः सर्वत्रैव स्थानी निर्दिश्यते। अचोञ्णिति। अत उपधायाः। तद्धितेष्वचामादेरिति। अत उत्तरं पठति। वृद्धिग्रहणमुत्तरार्थम् *। वृद्धिग्रहणं क्रियते किमर्थम्। उत्तरार्थम्। क्ङितीति प्रतिषेधं वक्ष्यति स वृद्धेरपि यथा स्यात्। कश्चेदानीं क्ङित्प्रत्ययेषु वृद्धेः प्रसङ्गः। यावता ञ्णितीत्युच्यते। तच्च मृज्यर्थम्। मृजेर्वृद्धिरविशेषेणोच्यते सा क्ङिति मा भूत्। मृष्टः। मृष्टवानिति। इहार्थं चापि मृज्यर्थं वृद्धिग्रहणं कर्त्तव्यम्। मृजेर्वृद्धिरविशेषेणोच्यते सेको यथा स्यादनिको मा भूदिति। मृज्यर्थमिति चेद्योगविभागात्सिद्धम् *। मृज्यर्थमिति चेद्योगविभागः करिष्यते। मृजेर्वृद्धिरचः। ततो ञ्णिति। ञिति णिति च वृद्धिर्भवति। अच इत्येव। यद्यचो वृद्धिरुच्यते। न्यमार्ट् अटोपि वृद्धिः प्राप्नोति। अटि चोक्तम् *। किमुक्तम्। अन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति। वृद्धिप्रतिषेधानुपपत्तिस्त्विक्प्रकरणात् *। वृद्धेस्तु प्रतिषेधो नोपपद्यते। किं कारणम्। इक्प्रकरणात्। इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः। न चैवं सति मृजेरिग्लक्षणा वृद्धिर्भवति। तस्मान्मृजेरिग्लक्षणा वृद्धिरेषितव्या। एवं तर्हि। इहान्ये वैयाकरणा मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते। परिमृजन्ति। परिमार्जन्ति। परिममृजतुः। परिममार्जतुरित्याद्यर्थम्। तदिहापि साध्यम्। तस्मिन् साध्ये योगविभागः करिष्यते। मृजेर्वृद्धिरचो भवति। ततोचि क्ङिति। अचि क्ङिति मृजेर्वृद्धिर्भवति। परिमार्जन्ति। परिममार्जतुः। किमर्थमिदम्। नियमार्थम्। अजादावेव क्ङिति नान्यत्र। क्वान्यत्र मा भूत्। मृष्टः। मृष्टवानिति। ततो वा। वाचि क्ङिति मृजेर्वृद्धिर्भवति। परिमृजन्ति। परिमार्जन्ति। परिममृजतुः। परिममार्जतुरिति। इहार्थमेव तर्हि सिजर्थं वृद्धिग्रहणं कर्त्तव्यम्। सिचि वृद्धिरविशेषेणोच्यते सेको यथा स्यादनिको मा भूदिति। कस्य पुनरनिकः प्राप्नोति। अकारस्य। अचिकीर्षीत्। नैतदस्ति। लोपोत्र बाधको भविष्यति। आकारस्य तर्हि प्राप्नोति। अयासीत्। अवासीत्। नास्त्यत्र विशेषः।

---

निर्दिश्यतइति नञो व्यवहितेन संबन्धः। क्वचिन्निर्दिश्यत एव। ओर्गुण इत्यादौ। मृजेर्वृद्धिरिति। तत्र हि सूत्रेभिमतस्थान्यनुपादानादलोन्त्यपरिभाषयान्त्यस्यैव स्यादित्यर्थः। अटोपीति। नन्वडागमात्पूर्वमेव परत्वाद्वृद्धिर्भविष्यतीति लक्षणस्य च प्रवृत्तत्वादटि कृते पुनर्लक्षणं न प्रवर्तिष्यते। एवं तर्हि विप्रतिषेधानपेक्षयैवात्र चोद्यपरिहारावुक्तौ। अचिकीर्षीदिति। पूर्वविप्रतिषेधादतो लोपो यथा चिकीर्षक इत्यादौ।

---

न्त्यस्य स्थानिविशेषानुच्चारणेनेत्यर्थस्तत्राह तत्र हि सूत्रेइति। अडागमात्पूर्वमिति। लादेशेषु कृतेष्वडिति पक्षे इदम्। अटि कृते इति। विकारान्यानुपूर्व्या भेदेन लक्ष्यभङ्गाच्चिन्त्यमिदम्। परत्वादित्यपि चिन्त्यम्। द्वयार्योगपद्यासंभवात्। एवन्तर्हीति। लावस्थायामडिति पक्षे इति भावः॥ भाष्ये(अनन्त्यविकारे इति) तथापि सिध्यतीत्यभिमानः। सिद्धान्तस्त्वन्यार्थामग्महणे कृते तेनैवाटो व्यावृत्तिसिद्धौ सा नैतदर्थेति व्यङ्ग इति सूत्रे-

सत्यां वृद्धावसत्यां वा । संध्यक्षरस्य तर्हि प्राप्नोति । नैव संध्यक्षरमन्त्यमस्ति । ननु चेदमस्ति ढलोपे कृते उदवोढम् । उदवोढाम् । उदवोढेति । नैतदस्ति । असिद्धो ढलोपः । तस्यासिद्धत्वान्नैतदन्त्यं भवति । व्यञ्जनस्य तर्हि प्राप्नोति । अभैत्सीत् । अच्छैत्सीत् । हलन्तलक्षणा वृद्धिर्बाधिका भविष्यति । यत्र तर्हि सा प्रतिषिध्यते नेटीति । अकोपीत् । अमोपीत् । सिचि वृद्धेरप्येष प्रतिषेधः । लक्षणं हि नाम ध्वनति भ्रमति मुहूर्तमपि नावतिष्ठते । अथवा सिचि वृद्धिः परस्मैपदेष्विति सिचि वृद्धिः प्राप्नोति । तस्य हलन्तलक्षणा वृद्धिर्बा-

---

अयासीदिति । परत्वादत्र सगिटोः कृतयोरनन्त्यत्वादाकारस्य नास्ति वृद्धिप्रसङ्ग इति यद्यपि परिहारोऽस्ति तथापि विशेषाभावेन परिहृतत्वान्नायमाश्रितः । उदवोढामिति । ढलोपादीनामसिद्धत्वात्पूर्वं हलन्तलक्षणा वृद्धिस्ततो ढलोपादिषु कृतेषु ढलोपस्यासिद्धत्वादोकारस्य न भविष्यति गोशब्दादाचारक्विपि कृते ऽगवीदिति संध्यक्षरमन्त्यमस्ति तस्य कस्माद् वृद्धिर्न भवतीति उच्यते।सिचि वृद्धिरित्यत्र धातुग्रहणमृत इद्धातोरित्यत्र औपदेशिकधातुग्रहणार्थमनुवर्ततइत्यदोष । लक्षणं हीति । नेटीति लक्षणमविशेषेण वृद्धिग्रहणमात्रस्य निषेधं कथयतीति ध्वनतीत्युच्यते । यो ह्यव्यक्तं कथयति स ध्वनतीत्युच्यते । एव मिहापि अस्या एव वृद्धेर्निषेध इति नास्ति व्यक्तिः । स्यादेतत् । प्रतिषेधस्यैकनिषेधे चरितार्थत्वात्पुनः प्रतिषेध्यान्तरे प्रवृत्तिर्न स्यादित्यत आह भ्रमतीति । सर्वत्र व्याप्रियतइत्यर्थः । स्यादेतत् । यावदेकनिषेधस्य व्यापारस्तावदेव द्वितीयो विधिः प्रवृत्तः प्रवृत्तस्य च निषेधो ऽशक्यः कर्तुमित्याह मुहूर्तमिति ।

---

वक्ष्यतइति न विरोधः । तस्मान्मृजेरिति । निषेधस्य सिद्धये योगविभागमकृत्वा स्थानिसमर्पणायास्याएवोपास्थितिरङ्गीकार्येति भावः । सङ्क्रम इति । गुणवृद्धिप्रतिषेधविषयक्ङितः प्राचां सञ्ज्ञा । अचिइत्येव वचनम् । अजादावीति तु तदादिपरिभाषालब्धार्थानुवादः । अत एवाग्रे वक्ष्यति । ततो ऽचि क्ङितीति । एवञ्च ममृज यूयं ममृजेत्यादौ विकल्पो भवत्येव । एतेनादिग्रहणसामर्थ्यान्मुख्याजादावेव प्रवृत्तिस्तेन पूर्वोदाहृतेषु न वृद्धिरिति हरदत्तोक्तमपास्तम् । कुन्दपरिमृज इत्यत्र यदि वृद्ध्यभाव इष्टस्तर्हि व्यवस्थितविभाषया नेति बोध्यम् । अजादावेवेति । विपरीतनियमस्तु न इष्टानुरोधात् । सिचि वृद्धौ स्थानिविशेषणानाश्रयणरूपो ऽविशेषः । उत्तरार्थत्वे खण्डिते सिद्धान्त्याह इहार्थमेवेति । तत् खण्डयति पूर्वपक्षी ( कस्य पुनरित्यादि ) । पूर्वविप्रतिषेधेति । ण्यल्लोपावियङ्क्तित्यादिः । चिकीर्षक इति । अन्यथा ह्यत्र परत्वाद् वृद्धौ णुकि चिकार्षायक इति स्यात् । परत्वादत्रेति । अपवादत्वादित्यर्थः । परशब्द उत्कृष्टवाची । भाष्ये [ नैव सन्ध्यक्षरमिति ] । वृद्धियोग्यमिति शेषः । उपदेश आत्वविधानादिति भावः । अन्त्यमिति । अङ्गस्य वृद्धिरित्सर्थे ऽलोऽन्त्यपरिभाषाप्रवृत्तेरिति भावः । ढलोपस्यासिद्धत्वादिति । पूर्वं हलन्तलक्षणाया वृद्धेर्जातत्वेनेदानीं सिचि वृद्धिरित्यस्य प्राप्त्या लक्ष्ये लक्षणस्येत्यस्याप्रवृत्तिरिति भावः । धातुग्रहणमिति । सिचा तदाक्षेपे सिद्ध इति भावः । एवञ्च कव्यादिभ्य आचारक्विपि अकवायीदित्यादौ वृद्धिर्नेति लभ्यते । माधवस्तु वृद्धिं मनुते । बहुलं छन्दसीत्यतो बहुलग्रहणानुवृत्त्या सन्ध्यक्षरान्तनामधातौ वृद्धिर्न अन्यत्र भवत्येवेति तदाशयः । तन्न सेशब्दादिभ्य आचारक्विपि न वृद्धिरित्यलम् । वस्तुतस्तु नैव सन्ध्यक्षरमिति एवगर्भतद्भाष्यप्रामाण्येन सन्ध्यक्षरान्तेभ्य आचारक्विबेव नेत्याहुः । ( हलन्तलक्षणा वृद्धिर्बाधिकेति ) भाष्ये इग्लक्षणा भावे येननाप्राप्तिन्यायेनेति भावः । इत्याहेति । इत्याशङ्कायामाहेत्यर्थः । नेकनेति । बाध्यसामान्यचिन्तेयम् । नटीत्यत्र हलन्तस्येत्यनुवर्त्य हलन्तस्य या वृद्धिः प्राप्ता सा सर्वापि नेत्यर्थस्तेनालावीदित्यादौ न दोष इति

धिका। तस्या अपि नेटीति प्रतिषेधः। अस्ति पुनः क्व चिदन्यत्रापि अपवादे प्रतिषिद्धे उत्सर्गोपि न भवति। अस्तीत्याह। सुजाते अश्वसूनृते। अध्वर्यो अद्रिभिः सुतम्। शुक्रं ते अन्यदिति। पूर्वरूपे प्रतिषिद्धे ऽयादयोपि न भवन्ति। उत्तरार्थमेव तर्हि सिजर्थं वृद्धिग्रहणं कर्तव्यम्। सिचि वृद्धिरविशेषेणोच्यते। सा क्ङिति मा भूत्। न्यनुवीत्। न्यधुवीत्। नैतदस्ति प्रयोजनम्। अन्तरङ्गत्वादत्रोवङादेशे कृते ऽनन्त्यत्वाद् वृद्धिर्न भविष्यति। यदि तर्हि सिच्यन्तरङ्गं भवति। अकार्षीत्। अहार्षीत्। गुणे कृते रपरत्वे चानन्त्यत्वाद् वृद्धिर्न प्राप्नोति। मा भूदेवं हलन्तस्येत्येवं भविष्यति, इह तर्हि न्यस्तारीत्। न्यदारीत्। गुणे कृते रपरत्वे चानन्त्यत्वाद् वृद्धिर्न प्राप्नोति। हलन्तलक्षणायाश्च नेटीति प्रतिषेधः। मा भूदेवम्। ल्रान्तस्येत्येवं भविष्यति। इह तर्हि अलावीत् अयावीत्। गुणे कृते ऽवादेशे चानन्त्यत्वाद् वृद्धिर्न प्राप्नोति। हलन्तलक्षणायाश्च नेटीति प्रतिषेधः।

---

उभयत्रापि व्यापारात्मकत्र विश्रास्यतीत्यर्थः। तस्या अपीति। अपिशब्दात्सिचि वृद्धेरपि। अस्तीत्याहेति। नान्तः पादमव्यपर इति पाठमाश्रित्यैवमुक्तम्। यद्येवं वृक्षावित्यत्र नादिचीत्यनेन पूर्वसवर्णदीर्घवद् वृद्धेरपि निषेधप्रसङ्गः। नैष दोषः। संघोद्घावित्यादेर्ज्ञापकादनन्तरस्य नादिचीति निषेधात्। अन्तरङ्गत्वादिति। उवङा-

---

बोध्यम्। बाध्यविशेषचिन्तायामाह। भाष्ये (अथवेति)। तद्व्याचष्टे (अपिशब्दादिति। स्वप्रतिषेध्यहलन्तलक्षणवृद्धिप्रतिषेधद्वारा भूष्टावसरन्यायेन सिचि वृद्धेरप्यभावः प्रतिपाद्यते इत्यर्थस्तद्ध्वनयन्नाह। भाष्ये (अस्तिपुनः क्वचिदित्यादि)। ननु तत्र प्रकृतिभावेन साक्षादेवोत्सर्गापवादयोर्निवृत्तिर्न स्वपवादेन बाधादुत्सर्गस्येत्यत आह नान्तइति। भाष्ये (न भवन्तीति) भूष्टावसरन्यायेनेति भावः। पूर्वसवर्णदीर्घवद्वृद्धेरपीति। अवर्णादचि यद्यत्प्राप्नन्तन्नेति बाध्यसामान्यचिन्तारूपाद्यपक्षेणायं शङ्का ज्ञापकाद्बाध्यविशेषचिन्तैवाश्रीयते इत्युत्तरम्। पूर्वसवर्णदीर्घे निषिद्धे वृद्धेरपीति पाठ भ्रष्टावसरन्यायानित्यत्वेन क्वचिदपवादनिवृत्तावपि तद्विषये उत्सर्गप्रवृत्तिर्ज्ञाप्यते इति भावः। परे त्वथवेतिभाष्यं पूर्वपक्षयुक्तित्वाप्रौढ्या। भ्रष्टावसरन्यायस्तु नास्त्येवोक्तनिर्देशात्। अत एव नान्तः पादमिति सूत्र एङीत्यनुवर्त्य एङि यद्यत्प्राप्नोति तस्य निषेध इत्यर्थमाश्रित्य सर्वनिषेधकत्वं तस्योक्तमिति वदन्ति। इष्टार्थत्वे पूर्वपक्षिणा प्रौढ्यापि खण्डिते सिद्धान्ती तदभ्युपेत्याप्याह। (उत्तरार्थमेवेति)। नूधूधातू कुटादौ। भाष्ये (अनन्त्यत्वादिति)। अचां ऽनन्त्यत्वादित्यर्थः। नन्विकपरिभाषाभावे ऽन्त्यात्पूर्वस्य सा प्राप्नोतीति अनन्त्यत्वादित्यसङ्गतमिति चेन्न। हलन्तेषु हलन्तलक्षणया बाधेनास्या वृद्धेरजन्त एव व्यवस्थितेरित्याशयात्। सिद्धान्त्याह। यदि तर्हीति॥ अत्र यदीत्यनेनापवादत्वात्तद्विषये ऽन्तरङ्गप्रवृत्तिरेव वक्तुमशक्येति ध्वनितम्। इत उत्तरग्रन्थस्तु सिद्धान्त्याशयानभिज्ञपूर्वपक्ष्येकदेशिसिद्धान्त्येकदेशिनोरिति बोध्यम्। लुप्तनिर्दिष्ट इत्यत्र पूर्वं निर्दिष्टः पश्चाल् लुप्त इत्यर्थे मयूरव्यंसकादित्वात्समासः। न च गुणे कृते वार्णादाङ्गमिति न्यायेनायं बाधित्वा वृद्धौ भवादेशे ऽलावीदित्यादेः सिद्धौ वप्रश्लेषो व्यर्थ इति वाच्यम्। सिचि वृद्धिरित्यस्यापवादत्वाज्ज्ञानेनेव एतत्परिभाषाज्ञानेनैवास्य प्रवृत्तेरदोषात्। न च वकारप्रश्लषे ऽशवीदशावीदिति शव धातोर्नित्यवृद्ध्यापत्तिः अस्या एकदेशयुक्तित्वेन तदज्ञानेनैवास्य भाष्यस्य प्रवृत्तेः। जिरिचिर्याद्यज्ञानवद् इत्याहुः। एतद्भाष्यप्रामाण्यात्स धातुः पवर्गीयान्तो ववयोः समानश्रुतित्वाल्लोके दन्त्योष्ठ्यश्रुतिरित्यन्ये। अवरादि वृद्ध्यवृद्ध्योरविशेष इति भाण् निवृत्तये भाष्ये माङ् प्रयुक्तः। एकादेशे पुनरप्याविशेषस्तदवस्था इति भवानित्युक्तं मवौ तु प्रयोजनान्तरासत्त्वेऽप्यैकरूप्याय तत्प्रयोगः। अविमव्योर्नेति निषेधश्च मध्येपवादन्यायेना-

मा भूदेवम् । ल्रान्तस्येत्येवं भविष्यति । ल्रान्तस्येत्युच्यते । न चेदं ल्रान्तम् । ल्रान्तेत्यत्र वकारोऽपि निर्दिश्यते । किं वकारो न श्रूयते । लुप्तनिर्दिष्टो वकारः । यद्येवं मा भवानवीत् । मा भवान् मवीत् । अत्रापि प्राप्नोति । अविमव्योर्नेति वक्ष्यामि । तद्वक्तव्यम् । न वक्तव्यम् । णिश्विभ्यां तौ नियमातव्यौ । यद्यप्येतदुच्यते । अथ वैतर्हि णिश्व्योः प्रतिषेधो न वक्तव्यो भवति । गुणे कृते ऽयादेशे च यान्तानां नेत्येव प्रतिषेधो भविष्यति । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति । न सिच्यन्तरङ्गं भवतीति । यदयमतो हलादेर्लघोरित्यकारग्रहणं करोति । कथं कृत्वा ज्ञापकम् । अकारग्रहणस्यैतत्प्रयोजनम् । इह मा भूत् । अकोषीत् । अमोषीत् । यदि सिच्यन्तरङ्गं स्यात् । अकारग्रणमनर्थकं स्यात् । गुणे कृते ऽलघूपधत्वाद् वृद्धिर्न भविष्यति । पश्यति त्वाचार्यो न सिच्यन्तरङ्गं भवतीति । ततो ऽकारग्रहणं करोति । नैतदस्ति ज्ञापकम् । अस्त्यन्यदेतस्य वचने प्रयोजनम् । किम् । यत्र गुणः प्रतिषिध्यते तदर्थमेतत्स्यात् । न्यकुटीत् न्यपुटीदिति । । यत्तर्हि णिश्व्योः प्रतिषेधं शास्ति तेन नेहान्तरङ्गमस्तीति दर्शयति । यच्च करोत्यकारस्य ग्रहणं लघोरिति कृतेपि । तस्मादिग्लक्षणा वृद्धि * । तस्मादिग्लक्षणा वृद्धिरास्थेया । षष्ठ्याः स्थानेयोगत्वादिङ्निवृत्तिः * । षष्ठ्याः स्थानेयोगत्वात्सर्वेषामिकां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति । दधि मधु । पुनर्वचनमिदानीं किमर्थं स्यात् । अन्यतरार्थं पुनर्वचनम् * । अन्यतरार्थमे-

देशः सिचमेवापेक्षते । वृद्धिस्तु सिचपरस्मैपदे । लुप्तनिर्दिष्ट इति । लोपो व्योर्वलीति भावः । किमत्र प्रमाणमिति चेत् । अभियुक्तस्मरणमेव । णिश्विभ्यामिति । णिश्विग्रहणमकृत्वा ऽविमवौ प्रतिषेधार्थं वक्तव्यौ एवं सति गौरवाभावः । निमातव्याविति । मेङो रूपम् । परिवर्तनीयावित्यर्थः । न सिचीति । न्यायादप्येतत्सिध्यति । येन नाप्राप्तिन्यायेनान्तरङ्गस्य वृद्ध्या बाधात् । प्रयोजनं चास्ति । चिरिजिर्योर्यङ्लुगन्तानां च नयत्यादीनामचिरायीत् । अजिरायीत् । अनेनायीत् । अचेयायीत् । इत्यादौ वृद्धिसिद्धिः । अन्यथा गुणायादेशयोः कृतयोर्यान्तत्वाद् वृद्धिप्रतिषेधः स्यात् । षष्ठ्या इति । स्वतन्त्रमिदं गुणवृद्ध्योर्विधायकमिति पूर्वः पक्षः । अन्यतरार्थमिति । नन्व-

तो ल्रान्तस्येत्यस्यैव तनातेर्हलादेरिति विकल्पो भवत्येवेति बोध्यम् । सिचि वृद्धिरिति सूत्रन्तु अचैषीदित्यादौ गुणे कृते चारितार्थमेतन्मते इति बोध्यम् । कृते ऽस्य चारितार्थ्येपि स्वाप्राप्तिकाले प्राप्तस्य येन नाप्राप्तिन्यायेन बाध इत्येतदाह न्यायादपीत्यादि । बाध्यसामान्यचिन्तया च सकलान्तरङ्गबाध इति बोध्यम् । एवञ्च न ज्ञापकोपयोगः । नापि ज्ञापकसम्भवो नापि प्रयोजनं वार्णपरिभाषया ऽचिरायीदित्यादौ गुणे कृते यादेशात्पूर्वं वृद्धिप्राप्तेः । न वा वकारप्रश्लेषस्य फलं नाप्यविमव्योः प्रतिषेधस्येति शब्धातौ वृद्धि विकल्प एवेति बोध्यम् । नैतदस्ति ज्ञापकमिति भाष्ये । न्यकुटीदित्यादावन्तरङ्गतया वृद्धिबाधकगुणस्य निषेधेऽपि भ्रष्टावसरन्यायेन न वृद्ध्यभावः । सिद्धान्ते न्यायाभावादिति भावः । यत्तर्हि णिश्व्योरिति । ननु णिश्विस्थाने ऽविमवौ इति वदन्तं प्रति णिश्विप्रतिषेधस्य ज्ञापकत्वाभिधानमयुक्तमिति चेन्न । ज्ञापकत्वे संभवति निमानासंभव इत्याशयात् । यच्च करोतीति । इग्ग्रहणाभावे ऽकोषीदित्यादौ व्यञ्जनस्य वृद्धिवार-

तत्स्यात् । सार्वधातुकार्द्धधातुकयोर्गुण एवेति । प्रसारणे च * । प्रसारणे च सर्वेषां यणां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति । याता । वाता । पुनर्वचनमिदानीं किमर्थं स्यात् । विषयार्थं पुनर्वचनम् * । विषयार्थमेतत्स्यात् वाचिस्वपियजादीनां क्वित्येवेति । उरणपरे च * । उरणपरे च सर्वेषामृकाराणां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति । कर्तृ । हर्तृ । सिद्धं तु षष्ठ्यधिकारे वचनात् * । सिद्धमेतत् । कथम् । षष्ठ्यधिकारे इमे योगाः कर्त्तव्याः । एकस्तावत् क्रियते । । तत्रैवेमावपि योगौ षष्ठ्यधिकारमनुवर्तिष्येते । अथवा षष्ठ्यधिकारे इमौ योगावपेक्षिष्यामहे । अथवेदं तावदयं प्रष्टव्यः । सार्वधातुकार्ध-

---

निकोपि यथा स्यादिति विध्यर्थमेतत् स्यात् न तु नियमार्थम् । नियमाद्धि विधेर्बलीयस्त्वात् । एवं मन्यते द्वितीयं गुणवृद्धिग्रहणमनुवर्तते । तेन गुणवृद्धिप्रदेशेषु इक इत्यस्योपस्थानान्नास्त्यनिकः प्रसङ्गः । प्रसारणे चेति । तुल्यन्यायत्वादुपन्यासः । इग्यण इत्यत्र यण इति स्थानषष्ठी : तेन यणः स्थाने इग्भवति स च संप्रसारणसंज्ञ इति वाक्यार्थः स्यात् । वाक्यभेदेन च कार्यद्वयं विधीयते । कर्तृ हर्तृ इति । अन्तरतमस्याणोभावात्सर्वेप्यणः पर्यायेण प्राप्नुवन्ति । सिद्धमिति । स्वातन्त्र्यमेषां निवर्तयति । तेन यत्र षष्ठी तत्रैषामुपस्थानम् । अङ्गस्य वच्यादीनामृत इद्धातोरित्यादौ । इमावपीति । स्वरितत्वादनयोरन्तरालवर्तिभिश्चायोग्यत्वात्सम्बन्धाभावः । अथवेति । षष्ठीस्थाने योगेत्यत्र योगविभागः करिष्यते । षष्ठीति । यदेतदनुक्रान्तं तद्यत्र षष्ठी तत्रोपतिष्ठते इत्यर्थः । तत्र योग्यत्वादनयोरेवापेक्षा नान्येषाम् । ततः स्थानेयोगेति । षष्ठीत्येतदुपतिष्ठते । अथवेति । अन्यतरार्थं पुनर्वचनमिति वदता ऽवश्यमेव संवन्धः कर्तव्यः । यत्र गुणवृद्धिशब्दोच्चा-

---

णाय बाध्यविशेषचिन्तापक्षे त्वया सिचिवृद्ध्यपवादहलन्तलक्षणाया निषेधे तेन न्यायेन सिचि वृद्ध्यप्राप्तेः स्वीकारेण त्वद्रीत्या ज्ञापकमेवेति भावः । एतेन सिच्यन्तरङ्गाभावेपि परत्वाद् गुणस्य वृद्धिबाधकताया दुर्वारत्वेनाकोषीदित्यादौ लघुत्वाभावादेव वृद्ध्यभावे ऽन इति व्यर्थमेवेत्यन्त्यं ज्ञापकमसङ्गतं तथापि णिश्व्योर्गुणे वार्णपरिभाषया ऽयादेशं बाधित्वा प्राप्तवृद्धेर्निषेधाय णिश्विग्रहणमप्यावश्यकमित्याद्यमप्यसङ्गतमित्यपास्तम् । एकदेशयुक्तित्वेनादोषात् । एतदेव ध्वनयन् ( यदि तर्हीति ) सिद्धान्त्युक्तौ यद्यन्तर्भावसूचितम । एवञ्च न्यनुवीदित्यादौ उवङं बाधित्वा प्राप्ताया वृद्धेर्निषेधायेग्लक्षणा सिचिवृद्धिरास्थेयेत्युपसंहरति सिद्धान्ती ( तस्माद् इति ) भाष्ये । इग्लक्षणत्वेन निषेधायाकोषीदित्यादावनिको गुणव्यावृत्तये चेति भावः । बाध्यसामान्यचिन्ता प्रष्टावसरन्यायश्चैकदेशयुक्तिर्न तु सिद्धान्तः । अत एव न्यस्नारीदित्युपक्रम्य हलन्तलक्षणायाश्च नेटीति प्रतिषेध इत्युक्तमित्यलम् । विधायकमिति । इकोयणचीत्यादि तु स्वविषये ऽस्य बाधकमिति न तद्वैयर्थ्यरूपो दोषः ॥ भाष्ये ( इयङ्निवृत्तिर ) त्यस्य गुणवृद्धिरूपादेशेनेत्यादिः । पुनर्वचनमवेङ्गुण इत्यादि रूपम् । नियमाद्धि विधेरिति । प्राप्तस्याधानुवादरूपदोषापत्त्या परिसङ्ख्यारूपो नियमो गुरुरिति भावः । द्वितीयमिति । केवलविधायकत्वे अनुवृत्त्यैव सिद्धे इहत्यगुणवृद्धिग्रहणमनर्थकं स्यादिति भावः । यातीत्यादि निर्देशैर्गुरोरपि नियमस्याश्रयणमित्यन्ये । तुल्यन्यायेति । षष्ठीदर्शनरूपो न्यायः । वाक्यभेदेनेति । ष्यङः सम्प्रसारणमित्यादि निर्वाहाय सामान्येन संज्ञाविधानार्थं वाक्यभेद आवश्यक इति भावः । विषयार्थमित्यस्य निमित्तनियमार्थमित्यर्थः । गुणादिविधावपि अधिकारलब्धा षष्ठीत्याह अङ्गस्येति । तत्रोरण्रपर इत्यत्र षष्ठीत्यनुवर्त्य पूर्वोक्तार्थः सुलभः । एतयोरपि तत्रानुवृत्त्या षष्ठीति सम्बन्धेन तदर्थलाभः । तत्रानुवर्त्तनं यदि लौकिकोधिकारस्तर्हि स आकाङ्क्षानिबन्धनः । न च षष्ठीस्थान इत्यस्याकाङ्क्षेत्यत आह स्वरितत्वादिति । लक्ष्यानुरोधाच्चेत्यपि बोध्यम् । षष्ठीति । योगविभागे च षष्ठीति सूत्रं साकाङ्क्षमिति लौकिको ऽपेक्षालक्षणो ऽधिकार इति भावः । योग्यत्वादिति । व्याख्यानाच्चेत्यपि बोध्यम् ।

धातुकयोर्गुणो भवतीति। इह कस्मान्न भवति। याता। वाता इदं तत्रापेक्षिष्यते। इको गुणवृद्धी इति। यथैव तर्हि इदं यत्रापेक्षिष्यते एवमिहापि तदपेक्षिष्यामहे। सार्वधातुकार्द्धधातुकयोरिको गुणवृद्धी इति॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य प्रथमे पादे तृतीयमाह्निकम्॥ ३॥

न धातुलोप आर्द्धधातुके॥ ४॥ धातुग्रहणं किमर्थम्। इह मा भूत्। लूञ्। लविता लवितुम्। पूञ्। पविता पवितुम्। आर्द्धधातुकइति किमर्थम्। त्रिधा बद्धो वृषभो रोरवीति। किं पुनरिदमार्द्धधातुकग्रहणं लोपविशेषणम्।

---

रणेन गुणवृद्धी विधीयेते तत्रेक इति उपतिष्ठते इति। अन्यथा याता वातेत्यादिषु विध्यर्थत्वे सम्भवति कथमन्यतरार्थं पुनर्वचनं स्यादित्युच्यते। अवश्यकर्तव्यायां चापेक्षायामेकवाक्यतयैवापेक्षास्तु। तेनैकरूप एवार्थो न तु वाक्यभेदेन स्वातन्त्र्यं पारतन्त्र्यञ्च। तदपेक्षिष्यामहइति। अस्य स्वातन्त्र्यं निरसितुमित्यर्थः॥ ३॥ इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे तृतीयमाह्निकम्॥ ३॥

न धातुलोप आर्द्धधातुके॥ गुणवृद्ध्योः प्राधान्यादयं निषेधो न तु तद्गुणाभावादिक्परिभाषायाः। दीधीवेवीटामिति चासंबद्धं परिभाषाया निषेधे स्यात्। कृत्स्नस्य धातोर्लोपे गुणवृद्धिप्रसङ्गाभावादनर्थको निषेधः स्यादिति सामर्थ्याद्धात्वेकदेशलोपोत्र धातुलोपो ऽभिमतः। अवयवक्रिययापि समुदायस्य व्यपदेशदर्शनात्। यथा पटो दग्ध इति। अथवा समुदायशब्दो ऽवयवे तद्रूपारोपाद्वर्तते। धातुग्रहणमिति। उपसर्जनस्यापि यथा परामर्शस्तथा केषां शब्दानामित्यत्र प्रतिपादितम्। विनापि धातुग्रहणेन लोपविशेषणमार्द्धधातुकग्रहणं विज्ञास्यते। अनुबन्धलोपस्य चानैमित्तिकत्वाल्लवितेति गुणनिषेधो न भविष्यतीति प्रश्नः। सिद्धान्ते तु गुणवृद्धिविशेषणमार्धधातुकग्रहणमित्यभिप्रायः। अनुबन्धो न धात्वेकदेशः। यस्मादुपदेशएवंतत्संज्ञा। प्रयोगे तु लूशब्द एव धातुसंज्ञः केवलमसौ ञित्कार्यं लभते। लूशब्दस्यैव हि क्रियावाचित्वमिति तस्यैव धातुसंज्ञा युक्ता। रोरवीतीति। सत्यार्धधातुकग्रहणे

---

उपतिष्ठत इति। अनुवर्त्तत इत्यर्थः। अन्यतरार्थमिति। केवलं विधित्वे पुनर्गुणवृद्धिग्रहणवैयर्थ्यमुक्तमेव। न तु वाक्यभेदेनेति। एकवाक्यत्वे सम्भवति तस्यायुक्तत्वमिति भावः। एतेनेग्यण इत्यपि व्याख्यातम्। तत्रापि संज्ञाविधाने इगनुवाद्यः। अनुवाद्यत्वञ्च य्यङः सम्प्रसारणमित्यादीनां सार्थक्यायावश्यकम्। एवञ्चैकरूप्यायानुवाद्यत्वमेवास्तु न तु विधेयत्वं वचिस्वपीत्यादीनामनियामकत्वापादकमिति बोध्यम्। (तदपेक्षिष्यामह इति)। एवञ्च यथा विधेः स्थान्याकाङ्क्षा तथा ऽस्यापि स्वसम्बन्धिविधेयबोधकशास्त्रापेक्षेति एकवाक्यतैवेति भावः। एवञ्च स्वातन्त्र्यं दूरापास्तमेव। तदाह। अस्येति। आवृत्तौ तु न मानामात्र शिवम्॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टकृते महाभाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमे पादे तृतीयमाह्निकम्॥ ३॥

न धातु प्राधान्यादिति॥ प्राधान्यं च संस्कार्यत्वरूपम्। असंबद्धमिति। अलोन्त्यस्येत्यनेनापि। इक एव प्रसक्त्या परिभाषानिषेधे वैयर्थ्येन। कृत्स्नस्येति। दुर्गाणो लोपश्चेति इक्संनियोगेन कृत्स्नधातुलोपोस्तीति तदसंभवो नोक्तः। अथवेति। आद्यपक्षे अवयवधर्मस्य समुदाये आरोपोन्त्ये समुदायधर्मस्य प्रवृत्तिनिमित्तस्य अवयवे आरोपितत्वमिति भेदः। परामर्शः। शब्देन पृथगुपादानम्। प्रतिपादितमिति। बुद्ध्या पृथङ् निष्कर्षादितिभावः। लोपविशेषणमिति। सूत्रे श्रुतत्वादिति भावः। सिद्धान्तेस्त्विति। निषेध्यत्वेन

आर्द्धधातुकनिमित्ते धातुलोपे सति ये गुणवृद्धी प्राप्नुतस्ते न भवत इति । आहो स्विद् गुणवृद्धिविशेषणमार्द्धधातुकग्रहणम् । धातुलोपे सत्यार्द्धधातुकनिमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इति । किं चातः । यदि लोपविशेषणम् । उपेद्धः प्रेद्धः । अत्रापि प्राप्नोति । अथ गुणवृद्धिविशेषणम् । क्नोपयतीत्यत्रापि प्राप्नोति । यथेच्छसि तथास्तु । अस्तु लोपविशेषणम् । कथम् उपेद्धः प्रेद्ध इति । बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः । असिद्धं बहिरङ्गमन्तरङ्गे । यद्येवं, नार्थो धातुग्रहणेन । इह कस्मान्न भवति । लूञ् । लविता लवितुम् । पूञ्, पविता पवितुम् । आर्द्धधातुकनिमित्ते लोपे प्रतिषेधः । न चैष आर्द्धधातुकनिमित्तो लोपः । अथवा पुनरस्तु, गुणवृद्धिविशेषणम् । ननु चोक्तं क्नोपयतीत्यत्रापि प्राप्नोति । नैष दोषः । निपातनात्सिद्धम् । किं निपातनम् । चेले क्नोपेरिति । परिगणनं कर्त्त-

---

शब्दवत्त्वादन्यपदार्थस्य बहुव्रीहिरसन्दिग्धो भवति नान्यथा । क्रमेण सूत्रप्रत्याख्यानायार्धधातुकस्य च लोपविशेषणत्वे धातुग्रहणानर्थक्यप्रतिपादनाय प्रत्युदाहरणोपन्यासः । किं पुनरिति । आर्धधातुकग्रहणं लोपविशेषणं वा गुणवृद्धिविशेषणं वा बहुव्रीहिपक्षे तूभयविशेषणं वेति पक्षत्रयसम्भवात् प्रश्नः । प्रेद्ध इति । नन्वाद् गुणोऽलिग्लक्षण इति तन्निषेधो न भविष्यति । परिहारान्तराभिधानादेतन्नाश्रितमित्यदोषः । बहिरङ्ग इति । यदा पूर्वं प्रत्ययः पश्चादुपसर्गयोगस्तदा प्रतिषेधोऽन्तरङ्गः गुणो बहिरङ्गः । तदा तु पूर्वमुपसर्गयोगस्तदा गुणोऽन्तरङ्गः । पश्चात्प्रत्ययोत्पत्तौ निषेधो बहिरङ्गः । सर्वथा बहिरङ्गस्यासिद्धत्वादिष्टसिद्धिः । ननु नाजानन्तर्यइति निषेधात् कथं प-

---

गुणवृद्ध्योः शब्दप्राधान्याल्लोपस्य तद्विशेषणत्वादिति भावः । न च लोपशब्दोऽधिकरणघञन्तः । अदर्शनं लोप इत्यादौ भावसाधनस्यैव प्रसिद्धत्वात् । गणे सानुबन्धस्य पाठाद् विशिष्टस्यैव धातुत्वं स्यादत आह अनुबन्ध इति । यस्मादिति । उपदेशपदाभावेऽपि अन्तरङ्गत्वात्सर्वतः पूर्वं सा धातुसंज्ञा तु प्रत्ययविशेषे विधित्सितइति भावः । धातुसञ्ज्ञेत्सञ्ज्ञयोः समकालत्वेऽपि न क्षतिरित्याह लूशब्दस्यैवेति । अन्वयव्यतिरेकाभ्यान्तस्यैव क्रियावाचित्वावगमात् । गणपठितक्रियावाचिनां च धातुत्वविधानादिति भावः । रोरवीतीति । यङ्लुगन्तस्य रूपम् । शब्दवत्त्वात् । शब्देनोपादानात् । नान्यथेति । अन्यथान्तरङ्गत्वात्तत्पुरुष एव स्यादित्यर्थः । ननु पदप्रयोजनचिन्ता वृत्तिकारस्योचिता न भाष्यकारस्येत्यत आह क्रमेणेति । तत्तत्पदप्रयोजनखण्डनक्रमेणेत्यर्थः । क्रममेवाह आर्धधातुकस्य चेति । लोपविशेषणम् श्रुतत्वात् । गुणादिविशेषणं प्राधान्यात् । तत्र लोपविशेषणत्वे आर्धधातुके परे पूर्वस्य धात्वंशस्य लोप इति वाच्योऽर्थस्तत्फलितमुक्तम् । भाष्ये ( आर्धधातुकनिमित्ते लोपे इति ) । एवं गुणवृद्धिविशेषणत्वे आर्धधातुके परे प्रत्यासत्त्या पूर्वस्य धातोर्ये गुणवृद्धी इति वाच्योऽर्थः । अनुवादेऽपि इको गुणवृद्धी अचश्चेति परिभाषातिरिक्तपरिभाषाणां प्रवृत्तिस्वीकारात्तत्फलितमुक्तम् । ( आर्धधातुकनिमित्ते ये इति ) । प्राप्नुत इत्यनेन प्रसक्तस्यैव निषेध इति सूचयति । बहुव्रीहीति । उभयानुग्रहायेति भावः । यद्यपि धातुलोप इति समस्तमार्धधातुकविशेषणं तथापि विशेषणशब्दः परिच्छेदकपर इति न दोषः । नन्वाद् गुण इति । नन्विक् स्थानिकत्वादयमपि इग्लक्षणः । न चात्राप्यनुवृत्तमिक इति स्वरूपपरम् । उत्तरसूत्रे इव स्वरूपपदार्थकत्वव्यवस्थापकशब्दाभावादिति चेन्न इको गुणवृद्धीति सपूर्णमनुवर्त्य यत्रेगन्तत्र न धात्वित्युपनिष्ठत इत्यर्थेनास्यापि परिभाषात्वाङ्गीकार इति भावात् । यद्वा यत्रेग्लक्षणे गुणवृद्धी नेत्यर्थः । तद्वक्ष्यति । यत्रेक्परिभाषा व्याप्रियते तत्राय निषेध इति इक्प्रकरणादिति भाष्यप्रतीक अर्थाधिकारेण स्वरूपपरस्यैवेक इत्यस्यानुवर्त्तनाद्वा । यदेति । पूर्वं धातुः साधनेनेति सिद्धान्तपक्षे इत्यर्थः । तदा त्विति । पूर्वं धातुरुपसर्गेणेति पक्षे पूर्वमत्र जातस्य निषेधायोगादिति भावः ।

व्यम्। यङ्यक्क्यवलोपे प्रतिषेधः *। यङ्यक्क्यवलोपे प्रतिषेधो वक्तव्यः। यङ्। बेभिदिता। मरीमृजः। यक्। कुषुभिता। मगधकः। क्य। समिधिता। दृषदकः। वलोपे। जीरदानुः। किं प्रयोजनम्। नुम्लोपस्त्रिव्यनुबन्धलोपेऽप्रतिषेधार्थम् *। नुम्लोपे स्त्रिव्यनुबन्धलोपे च प्रतिषेधो मा भूदिति। नुम्लोपे। अभाजि। रागः। उपबर्हणम्। स्त्रिवेः। अस्रेमाणम्। अनुबन्धलोपे। लूञ्। लविता। लवितुम्। यदि परिगणनं क्रियते। स्यदः। प्रश्रथः। हिमश्रथ इत्यत्रापि प्राप्नोति। वक्ष्यत्येतत्। निपातनात्स्यदादिष्विति *। तर्हि परिगणनं कर्तव्यम्। न कर्तव्यम्। नुम्लोपे कस्मान्न भवति। इक्प्रकरणान्नुम्लोपे वृद्धिः*। इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः। नैषेग्लक्षणा वृद्धिः। यदीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः। स्यदः। प्रश्रथः। हिमश्रथ इत्यत्र न प्राप्नोति। इह च प्राप्नोति। अवोदः। एधः। ओद्म इति। निपातनात्स्यदादिषु *। निपातनात्स्यदादिषु

---

रिभाषाप्रवृत्तिः। यत्र कार्यविधावानन्तर्येणाचोराश्रयणं तत्र निषेधादनुपस्थानं परिभाषायाः। यथा ऽक्षद्यूरिति। तत्र हीको यणचीति वचनादिगचोराश्रयणम्। अस्मिंस्तु प्रतिषेधसूत्रे नास्त्यचोराश्रयणमित्यदोषः। यङ्यक्क्यवलोप इति। व इत्यत्राकारोऽपि विवक्षितः। तेन धातुपाठे यो ऽकारान्तः पठितस्तस्य ग्रहणम्। अन्यथा स्त्रिविः कथं निवार्येत। बेभिदितेति। बेभिद्यशब्दात्तृच् इट् यस्य हल इति यलोपः। मरीमृज इति। यङोऽचि चेति यङो लुक्। कुषुभमगधशब्दौ कण्ड्वादिगणपठितौ धातू ताभ्यां यक्। ण्वुल्तृचौ। यस्य हल इति यलोपः। समिद्दृषच्छब्दाभ्यां क्यजन्ताभ्यां प्रत्ययौ ण्वुल्तृचौ। क्यस्य विभाषेति यलोप। नुम्लोप इति। नुमिति नकारस्य पूर्वाचार्यसंज्ञा। उपबर्हणमिति। वृहिवृद्धौ। इदित्वान्नुम्। वृंहेरच्यनिटीति वार्तिकेन नलोपः। अस्रेमाणमित्यपि वेदे पठ्यते। तत्र नञ्पूर्वात् स्त्रिवेर्मनिन् प्रत्ययः। वकारलोपः। ऊडादेशश्छान्दसत्वाद्धस्य न भवति। परिगणने सति धातुग्रहणं न कर्तव्यं भवतीत्यनुबन्धलोपः प्रयोजनत्वेन पठितः। इक्प्रकरणादिति। तेन यत्रेक्परिभाषा स्थान्यन्तरनिवृत्तये व्याप्रि-

---

बहिरङ्गस्यासिद्धत्वादिति। द्वितीये। बहिरङ्गनिमित्तस्यासिद्धत्वाद् विधिप्रवृत्तिकाले ऽनिष्पन्नत्वात् निषेधाप्राप्त्येष्टसिद्धिरित्यर्थः। एतेन जातस्य बहिरङ्गस्यान्तरङ्गे कर्त्तव्ये ऽनेनासिद्धत्वप्रतिपादनेपि जातेन्तरङ्गे पश्चात्प्राप्तबहिरङ्गस्थाने नासिद्धत्वप्रतिपादने मानाभावः फलाभावो ज्ञापकविरोधश्चेत्यपास्तम्। परन्त्वयं पक्षः सुट्कात्पूर्व इत्यादिसूत्रेषु भाष्ये दूषित इति भाष्योक्तमेव सम्यक्। नन्विति। इयञ्च षत्वतुकोरिति सूत्रेण ज्ञापिता। अन्यथा बहिरङ्गासिद्धत्वेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव। अचोरिति द्वित्वमविवक्षितम्। धर्मिग्राहकमानस्य तथैव सत्वात्। अनुपस्थानमिति। अस्याप्रत्यादिः। तत्र हीति। ततश्च परोऽक्षूड्सिद्धो नेत्यर्थः। तेनासिद्धपरिभाषाया अनित्यत्वं ज्ञाप्यते। अत एव भाष्ये विप्रतिषेधसूत्रभिन्नस्थले न क्वाप्येतदुल्लेखो यथाऽसिद्धपरिभाषाज्ञापकविप्रतिषेधसूत्रे उक्तमपि पुनर्वाहऊठ सूत्रे उक्तमिति विवरणकृतः। अस्मिन्निति। निषेधस्य प्राप्तिपूर्वकत्वात्पश्चात्प्रवर्त्तमाने इत्यर्थः। वनूयधातोर्णिचि पुकि लोपो व्योरिति यलोपः। वाक्यकारः सूत्रेऽव्याप्स्यतिव्याप्तिपरिहाराय परिगणनमाह परिगणनमिति। अत्र यस्य हल इति लोपः समुदायलोप इति मत्वा यक्क्यपोः परिगणनं बेभिदितेत्युदाहरणञ्च बोध्यम्। ननु भञ्जिरञ्जयोरौपदेशिकनस्यैव भञ्जेश्च चिणि रञ्जेश्च घञि चेत्यादिना लोप इति नुम्लोप इत्यसंगतमत आह नुमितीति। नन्विदित्वहिणा इदं सिद्धमत आह वृहिवृद्धाविति। स नास्त्येवेति पूर्वपक्षाशयः। ऊडादेशइति। ज्वरत्वरस्त्रिव्यवीत्यनेन। भाष्ये

प्रतिषेधो भविष्यति । न च भविष्यति यदीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । स्निग्य-नुबन्धलोपे कथम् । प्रत्ययाश्रयत्वादन्यत्र सिद्धम् । आर्धधातुकनिमित्ते लोपे प्रतिषेधः । न चैष आर्धधातुकनिमित्तो लोपः । यद्यार्धधातुकनिमित्ते लोपे प्रति-षेधः । जीरदानुः । अत्र न प्राप्नोति । रकि ज्यः सम्प्रसारणम् * । नैतज्जीवे-रूपम् । रक्येतज्ज्यः सम्प्रसारणं भवति । यावता चेदानीं रकि जीवेरपि सिद्धं भवति । कथमुपबर्हणम् । बृहिः प्रकृत्यन्तरम् । कथं विज्ञायते बृहिः प्रकृत्य-न्तरमिति । अचीति हि लोप उच्यते । अनजादावपि दृश्यते । निवृह्यते । अनि-टीति चोच्यते । इडादावपि दृश्यते । निबर्हिता । निर्बर्हितुमिति । अजादावपि-न दृश्यते । बृंहयति । बृंहकः । तस्मान्नार्थः परिगणनेन । यदि परिगणनं न क्रियते । भेद्यते छेद्यते । अत्रापि प्राप्नोति । नैष दोषः । धातुलोपइति नैवं विज्ञायते धातोर्लोपो धातुलोपो धातुलोपे इति । कथं तर्हि । धातोर्लोपो यस्मि-स्तदिदं धातुलोपं धातुलोप इति । तस्मादिग्लक्षणा वृद्धिः । यदि तर्हीग्लक्ष-

---

यते तत्रायं निषेध इत्यर्थः । प्रत्ययाश्रयत्वादिति । लोपविशेषणमार्धधातुकग्रहणमित्य-र्थः । जीरदानुरिति । वर्णनिमित्तोऽत्र वकारलोपो न प्रत्ययनिमित्तः । रकि ज्य इति । एवं च जीरेत्यवग्रहः सिद्ध्यति । बहुव्रीहित्वाच्च जीरदानुशब्दे रेफाकार उदात्तः । बृहिरिति । बृहबृहिवृद्धाविति पाठात् । भेद्यत इति । गुणो णिलोपश्चार्धधातुकनिमित्त इति पक्षद्वयेपि दोषः । अपवादविषयपरिहाराच्चान्तरङ्गोपि गुणोत्र न प्रवर्ततइत्युपन्या-सः । कथं तर्हीति । बहुव्रीहौ सत्येकार्द्धधातुकनिमित्तत्वं लोपस्य गुणवृद्ध्योश्चाश्रितमिति

---

( इत्यत्रापि प्राप्नोतीति ) वृद्धिरिति शेषः । न प्राप्नोतीति पाठे निषेध इति शेषः । निपातनादिति । स्यदो जवे अवोदैधौद्मप्रश्रथहिमश्रथा इति निपातनम् । अस्य नलोपमात्रफलकत्वे नलोपविधानेनैव सिद्धे निपात-नवैयर्थ्यापत्तिरिति भावः । तेनेति । अन्यथौगुणा इत्यादावपि परिभाषाप्रवृत्तौ तस्यापीग्लक्षणत्वे लैगवायन इत्यादौ निषेधः स्यादिति भावः । यत्रेक्परिभाषेति । न चेक इत्यनुवर्त्यैको न ते इत्येव व्याख्यानमनुचित-मिति वाच्यम् । मरीमृजः सरीसृप इत्यादावेकः प्रत्ययाव्यवहितपूर्वत्वाभावान्निषेधापत्तेः । तदाह भाष्ये ( इग्लक्षणयोरिति ) यथैतदर्थलाभस्तथोक्तम् । इक्परिभाषालक्षणयोरिति तदर्थः । लोपेति । प्रत्यया-श्रयत्वादिति भाष्यस्य लोपे आर्द्धधातुकप्रत्ययनिमित्तकत्वाश्रयणादित्यर्थ इति भावः । न प्रत्ययेति । प्रत्य-यस्याश्रुतत्वादनाक्षिप्तत्वाच्चेति भावः । अवश्यं जीरदानुशब्दस्यैवमेव व्युत्पत्तिःकार्येत्याह एवञ्चेति । अवान्तरपदत्वे सत्येवावग्रह इत्युत्सर्गादिति भावः । ननु रदानुप्रत्यये रेफाकारउदात्तः समासे त्वन्तोदात्तः स्यादत आह बहुव्रीहिति । जीरस्य प्रत्ययस्वरेणान्तोदात्तस्य बहुव्रीहौ पूर्वपदप्रकृतिस्वरेणेत्यर्थः । जीवेर्विचि तु गुणनिषेधो भवत्येव । एतेनार्धधातुकत्वेन यत्र लोपे निमित्तता तत्रैव लोपे निषेध इत्यपास्तम् । वार्त्ति-कविरोधात् । यङ्लोपि चेत्यत्रापि तत्त्वेनानिमित्तत्वाल्लोलुव इत्याद्यसिद्ध्यापत्तेश्च । धिन्व्यादिभ्यस्तु विज-भाव एव । ( भाष्ये यावता चेदानीमिति ) । क्विन्त्वेन गुणनिषेधादिति भावः । अत्र वलोपो लोपो व्योरि-त्यनेन । इदञ्च यथाश्रुतसूत्रमते । वलोपप्रत्याख्याने तु रकिज्य इत्येव शरणम् । पक्षद्वयेपीति । तन्त्रे णोभयविशेषणत्वपक्षेपीत्यपि बोध्यम् । गुणो ण्याश्रयो णिलोपो यगाश्रयः । अपवादेति । प्रकल्प्य चा-पवादविषयमिति परिभाषयेति भावः । एतेन गुणप्रतिषेधौ यत्र समानकालौ तत्र चरितार्थो निषेधो नान्त-रङ्गगुणं बाधितुं क्षमत इत्यपास्तम् । न च भेद्यते इत्यत्राचः परस्मिन्निति णिलोपस्य स्थानिवत्त्वेन तत्राभा-वातिदेशस्य च सत्त्वेन स्थानिनि णिचि सति अभवतो निषेधस्य लोपेप्यभावातिदेशान्न दोष इति वाच्यम् ।

णयोर्गुणवृद्ध्योः प्रतिषेधः। पापचकः। पापठकः। मगधकः। दृषदकः। अत्र न प्राप्नोति। अलोपस्य स्थानिवत्त्वात् *। अकारलोपे कृते तस्य स्थानिवद्भावाद् गुणवृद्धी न भविष्यतः। अनारम्भो वा *। अनारम्भो वा पुनरस्य योगस्य न्याय्यः। कथं बेभिदिता। मरीमृजकः। कुसुभिता। समिधिता इति। अत्राप्यकारलोपे कृते तस्य स्थानिवद्भावाद् गुणवृद्धी न भविष्यतः। यत्र तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः। क्व च स्थानिवद्भावो नास्ति। यत्र हलचोरादेशः। लोलुवः। पोपुवः। मरीमृजः। सरीसृप इति। अत्राप्यकारलोपे कृते तस्य स्थानिवद्भावाद् गुणवृद्धी न भविष्यतः। लुकि कृते न प्राप्नोति। इदमिह संप्रधार्यम्। लुक् क्रियतामल्लोपो वेति। किमत्र कर्तव्यम्। परत्वादल्लोपः। नित्यो लुक्। कृतेऽप्यल्लोपे प्राप्नोत्यकृतेऽपि प्राप्नोति। लुगप्यनित्यः। कथम्। अन्यस्य कृते लोपे प्राप्नोति। अन्यस्याकृते। शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति। अनवकाशस्तर्हि लुक्। सावकाशो लुक्। को ऽवकाशः। अवशिष्टः। अथापि कथं चिदनवकाशो लुक् स्यादेवमपि न दोषः। अल्लोपे योग-

---

भेद्यते इत्यादौ भिन्ननिमित्तत्वाद् गुणो न निषिध्यते। यत्र हलचोरादेश इति। लुका कृत्स्नो यङ् लुप्यतइत्याशयः। अत्रापीति। कृतेऽप्यकारलोप एकदेशविकृतमनन्यवद्भवतीति यकारः प्रत्ययसंज्ञो भवत्येवेति भावः। नित्यो लुगिति। लुक्शास्त्रप्रवृत्तिर्नित्या। अनवकाश इति। नाप्राप्ते लोपे लुगारम्भात्। सावकाश इति। भिन्नविषयौ लुगल्लोपौ अकारस्य लोपो यकारस्य लुक्। ततश्च नास्ति येन नाप्राप्तिन्यायः। अथापीति। यङोचि चेत्यत्र यकाराकारसमुदायस्य यङ इति निर्दिष्टस्य विवक्षितत्वादवयवे च यङ्व्य-

---

स्थानिवद्भावाश्रयणे सूत्रप्रत्याख्यानमेवेति तदनाश्रयणेन सूत्रवत् तदनाश्रयणेनैवायं दोष इत्याशयात्। भाष्ये ( तस्मादिग्लक्षणा वृद्धिरिति ) प्रतिषेध्येति शेषः। अत एवाभाजीत्यादिसिद्धिरिति भावः। अकारलोप इति। अतो लोप इत्यनेन। यङ्लुगन्ताण्ण्वुलि तु सूत्रमते ऽपि निषेधो न। आर्धधातुकानिमित्तलोपाभावात्। मरीमृजकइति। अत्राल्लोपस्य स्थानिवत्त्वे क्ङित्यजादौ वेष्यतइति विकल्पो न व्यवस्थितविभाषाश्रयणात्। नन्वेवं लुक्शास्त्रं व्यर्थं स्यादत आह कृतेपीति। अवशिष्टे तच्चरितार्थमिति भावः। भाष्ये ( लुकि कृते इति )। अनवकाशत्वादन्तरङ्गानपीति न्यायाच्च लुकि कृते ऽतोलोपो न प्राप्नोतीत्यर्थः। इतर आशयानभिज्ञ आह परत्वादिति। ननु यस्य लोपः कृतस्तस्य लुगप्राप्तेराह लुक्शास्त्रेति। गौणत्वादिति। अतिदेशविषये गौणत्वाङ्गीकारे ऽतिदेशवैयर्थ्यापत्तेरिदं चिन्त्यम्। किं च भिन्नविषयेऽपि बाध्यबाधकभावो दृष्टः यथा व्ययोलिटीति संप्रसारणस्य वकारचारितार्थ्येऽपि हलादिः शेषबाधकता। भाष्यकारोऽपि मिदचोन्त्यादित्यस्य विषयभेदेऽपि प्रत्ययपरत्वबाधकतां वक्ष्यति। तस्मात्कृते चारितार्थ्येऽपि तत्प्राप्तिकालेऽवश्यं प्राप्त्यपवादत्वं भवत्येवेत्याशयः। असंभव एव बाधकत्वमिति वार्तिकानुयायिना सावकाशो लुगित्युक्ते स एवायापीत्याहेति तदुक्तिः। कथं त्विति। भाष्ये (अत इत्येवेति) अलोन्त्यपरिभाषया अत इत्यनुवृत्तेर्वेति भावः। अयञ्च लुक्लोपवादः। एवञ्चार्थादवशिष्टस्य लुगिति बोध्यम्। अत्र च भ्रस्जोरोपधेति सूत्रादन्यतरस्यांग्रहणस्य मण्डूकप्लुत्यानुवर्त्तनेन योगविभागस्येष्टसिद्ध्यर्थत्वेन च क्वचिदेव पृथगल्लोपो न सर्वत्रेति बोध्यम्। मरीमृज इत्यत्र विकल्पस्तु न। व्यवस्थितविभाषाश्रयणात्। यद्वा तत्र विकल्प इष्ट एव। तदर्थं सूत्रकृतोऽप्येतत्कल्पनावश्यकत्वं मनसि निधायैव तामाश्रित्य सूत्रप्रत्याख्यानमेव वरमिति भाष्याशयः। लोलुवादौ उवाङ अनादिष्टादचः पूर्वस्य विधेरभावेन स्थानिवत्त्वाभावे ऽपि नोपधागुणः। अचः पूर्वत्वेन दृष्टलोलूशब्दा-

विभागः करिष्यते । अतो लोपः। ततो यस्य । यस्य च लोपो भवति । अत इत्येव । किमर्थमिदम् । लुकं वक्ष्यति तद्बाधनार्थम्। ततो हलः । हल उत्तरस्य यस्य च लोपो भवति । इह तर्हि परत्वाद्योगविभागाद्वा लोपो लुकं बाधेत। कृष्णो नोनाव वृषभो यदीदम् । नोनुयतेर्नोनाव । समानाश्रयो लुग्लोपेन बाध्यते । कश्च समानाश्रयः । यः प्रत्ययाश्रयः । अत्र च प्रागेव प्रत्ययोत्पत्तेर्लुग्भवति । कथं। स्यदः । प्रश्रथः । हिमश्रथः । जीरदानुः । निकुचित इति । उक्तं शेषे *। किमुक्तम् । निपातनात्स्यदादिषु । प्रत्ययाश्रयत्वादन्यत्र सिद्धम् । रकि ज्यः सम्प्रसारणम् । निकुचितेप्युक्तम् । किम् । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति ॥

पदेशस्य गौणत्वादिति भावः । समानाश्रय इति । तुल्यकालत्वादिति भावः । नोनावेत्यत्र तु बहुलग्रहणानुवृत्त्या अनैमित्तिकोन्तरङ्गो लुक् प्रागेव प्रत्ययोत्पत्तेर्भवति । निकुचित इति । कित्त्वसंयोगेन नलोपे सति उदुपधत्वमिति निमित्तमकित्त्वस्य न भवति । यदि तर्ह्यकारलोपः क्रियते तदा जङ्गम इत्यत्र तस्य स्थानिवद्भावादुपधालोपः प्राप्नोति । नैष दोषः । अनङीति प्रतिषेधात् । अनर्थको ऽयमङिति चेत् । लोपस्यापि तर्ह्यप्राप्तिः । अजादौ प्रत्यये तस्य विधानात् । ननु लोलुवादिपूर्वङादयः स्थानिवद्भावेन न सिद्ध्यन्ति । तेषां स्थानिन्यदर्शनात्सम्भवमात्रेणाप्यतिदेशो भवतीत्यदोषः ॥४॥

स्परस्य गुणे कर्त्तव्ये पञ्चमीसमासेनाल्लोपस्य स्थानिवद्भावसौलभ्यात् । निमित्तत्वेनाश्रितात्पूर्वस्मादित्यर्थे तु न गानम् । अतिप्रसङ्गस्य तदनित्यत्वेनैव परिहारात् । भाष्यानुक्तत्वात्तदनित्यत्वाभावेपि पूर्वस्मात्परस्याव्यवहितस्यैव ग्रहणेन हे गौरित्यत्रादोषः । पूर्वेत्यंश स्वरग्रहणाद्भाष्यप्रामाण्याच्चाव्यवधानांशबाधेप्यत्र तद्बाधमानाभावात् । अतिदेशप्रवृत्तिप्राक्कालिकं च वर्णे व्यवधानं निविष्टम् । किं चादेशस्थानीयस्यापि तस्य तत्स्थानापन्ने यद्धर्मलाभ इति लोकन्यायेनानिष्टाद्यति स्थानिवत्सूत्रे वक्ष्यते । लोलू इत्यस्य लोलुवादेशस्तस्य च गुणघटितो लोलोविस्यादेश इत्याहुः। दरीदृश इत्यत्राङ्गनिमित्तगुणस्तु न । अस्याङस्तस्यैकगोचरत्वेन लाक्षणिकतया भाङ्ग्रहणेनाग्रहणात् । अत एव दरीदृशक इत्यादौ यङन्तात् ण्वुलि अङ्गनिमित्तगुणाभावः । जङ्गमक इत्यादौ यङन्तात् ण्वुलि उपधालोपश्च, अनङीति निषेधाप्रवृत्तेः । जङ्गम इत्यादौ तूक्तयुक्त्या समुदायलुगेवेति न दोषः । निजगिल इत्यादौ मोयङीति नित्यं लत्वमिष्टमेव । सूत्रमते ऽपि न लुमतेति निषेधस्यानित्यत्वाद् यङ्परत्वमस्ति । न वेति विभाषेति सूत्रे भाष्ये चेदं ध्वनितमिति तत्रैव निरूपयिष्यामः । यदि जरीगृह्यादेः सासर्थतेश्चाचि संप्रसारणगुणाविष्टौ तर्हि सूत्रमते ऽपि न लुमतेति निषेधानित्यत्वेन साधनीयौ भाष्यप्रामाण्यादिष्टावेति गम्यते । अत एव पृथगल्लोपे यङो विषयापहाराभावेन अजेर्वी आदेशे यणि वेव्य इति स्यादित्यपास्तम् । योगविभागस्य क्वाचित्कत्वेन तत्र लुक एव प्रवृत्त्या ऽत्ततेः पूर्वादिभ्यो वान्तेभ्यो विनास्त्येव । अनभिधानात् । इदञ्च लोपोव्योरिति सूत्रे भाष्ये ऽपि ध्वनितम् । एतद्भाष्यविरुद्धप्रयोगाणां भाष्यानुक्तानामनभिधानमित्यन्ये । न चैवं न धातुलुक्यचीत्येव सिद्धे आर्धधातुकग्रहणं व्यर्थमिति वाच्यम् । लोपार्धधातुक इत्येव षष्ठीतत्पुरुषेण लोपनिमित्तार्धधातुक इत्यर्थेन लूञादेर्व्यावृत्तिसिद्धौ धातुग्रहणवत्तस्यापि सत्त्वात् । भाष्ये ( लुकं वक्ष्यतीति ) लुगतो लोपापवादः अपवादश्च प्रायेण पश्चाद्भवीति भविष्यन्निर्देशः । ननु भिन्नाश्रययोरपि दीर्घवृद्ध्योरियायेत्यादौ बाध्यबाधकभावो दृष्ट इत्यत आह तुल्यकालेति । बहुलेति । यङो ऽचि चेति चकारेण । अन्तरङ्ग इति । प्राक् प्रवृत्तिकत्वमन्तरङ्गत्वम् । न हि तदापवादत्वप्रवृत्तिरिति भावः । अकित्त्वस्येति । उदुपधाद्भावादिकर्मणोरिति विहितस्येत्यर्थः । एवञ्चाकित्त्वाभावे क्ङिति चेत्येव निषेधः सिद्धो निकुचित इति भावः । सन्निपातः सम्बन्धस्तद्विघात इति कर्मण्यम् । अजादौ प्रत्यये इति । यायायतेः क्विचि यातिरित्यादौ अलोपानापत्तेर्वेरग्रहणस्य वैयर्थ्याच्च चिन्त्यमेतत् । अस्य समाधानं स्वस्माभिरुक्तमेव । संभवेति । अत एव न पदान्तसूत्रे वरेग्रहणञ्चारितार्थम् । सरदकारे यदि स्यादकारलोपस्तदा सम्भव उवङादेरिति भावः ॥ ५ ॥

क्ङिति च ॥ ५ ॥ क्ङिति प्रतिषेधे तन्निमित्तग्रहणम् * । क्ङिति प्रतिषेधे तन्निमित्तग्रहणं कर्त्तव्यम् । क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इति वक्तव्यम् । किं प्रयोजनम् । उपधारोरवीसर्थम् * । उपधार्थं रोरवीसर्थं च । उपधार्थं तावद् । भिन्नः । भिन्नवानिति । किं पुनः कारणं न सिध्यति । क्ङितीत्युच्यते । तेन यत्र क्ङिदनन्तरो गुणो भाव्यस्ति तत्रैव स्यात् । चितम् । स्तुतम् । इह तु न स्यात् । भिन्नवानिति । ननु च यस्य गुण उच्यते तत्क्ङित्परत्वेन विशेषयिष्यामः । पुगन्तलघूपधस्याङ्गस्य गुण उच्यते तच्चात्र क्ङित्परम् । पुगन्तलघूपधस्येति नैवं विज्ञायते पुगन्ताङ्गस्य लघूपधस्य चेति । कथं तर्हि । पुक्ि अ-

क्ङिति च ॥ क्ङिति प्रतिषेध इति । इक इत्यनुवर्तते गुणवृद्धी इति च । तत्र यदीक् क्ङितीत्यनेन विशेष्यते क्ङिति परतो य इगिति तदा तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानान्निर्दिष्टग्रहणस्य चानन्तर्यार्थत्वाच्चितं स्तुतमित्यादावेवं निषेधः स्यान्न तु भिन्नो भिन्नवानित्यादाविति तन्निमित्तग्रहणं कर्तव्यम् । यदा तु क्ङिद्ग्रहणं गुणवृद्धिविशेषणं तदा परसप्तम्या अप्रसङ्ग एव । नहि विहितयोर्निषेधः । अपि त्वनभिनिवृत्तयोरेवेति परिभाषानुपस्थानान्निमित्तसप्तम्येव क्ङितीति भवति । क्ङिन्निमित्ता हि तयोः प्रवृत्तिः । उपधारोरवीत्यर्थमितिउपधाया अपीकः प्रतिषेधार्थं रोरवीतेर्यङ्निमित्तप्रतिषेधनिवृत्त्यर्थम् । अत्र हि तिब्निमित्तो गुणो न यङ्निमित्तः । ननु चेति । आकाङ्क्षया पुगन्तलघूपस्येति संनिधानं मन्यते । तथाहि । क्ङिति गुणवृद्धी न भवत इत्युक्ते कस्येत्याकाङ्क्षायां यस्य प्राप्ते इत्यस्ति पुपन्तलघूपधस्यापेक्षा । अथ-

क्ङिति च ॥ तत्र यदीति । तस्मिन्निति परिभाषानुग्रहायेत्यर्थः । यदा त्विति । निषेध्यत्वेन तयोः प्रधान्यादिति भावः । नहीति । अनभिनिवृत्ते पूर्वपरव्यवहारस्य कर्त्तुमशक्यत्वात्तदनुपस्थानं निवृत्तनिषेधे तु देवदत्तहन्तृहतन्यायेन चितमित्यादाविकः श्रवणं न स्यादिति भावः । निमित्तेति । अत्र यस्य च भावेनेति सप्तमी । सा च ज्ञापकस्वार्थिका । ज्ञापकत्वं च संबन्धं विनानुपपन्नं सद् विधिशास्त्रक्लृप्तनिमित्तत्वमादाय पर्यवस्यति । एवञ्च निमित्ततया क्ङिज्ज्ञाप्ये गुणवृद्धी नेत्यर्थः । तदाह क्ङिन्निमित्ता हि तयोः प्रवृत्तिरिति । केचित्तु सिद्धसाध्यसमभिव्याहारन्यायेन निमित्तत्वं फलतीत्याहुः । परे तु क्ङितीत्यतद् गुणवृद्धिविशेषणमेव । भवनक्रियातदभावयोरमूर्त्तत्वेन क्ङित्परत्वासम्भवात् । इक इत्यस्याप्यनुवृत्त्यनुक्तेः । अनुवृत्तावपि तस्य शब्दपरत्वात् । तस्मान्निमित्तग्रहणाभावे क्ङितीति सप्तम्या तस्मिन्निति निर्दिष्टे पूर्वस्येत्युपस्थित्या क्ङिति अव्यवहिते पूर्वस्य ये गुणवृद्धी प्राप्नुतस्ते नेत्यर्थः ; अनुवादे परिभाषा नोपतिष्ठत इति स्विको गुणवृद्धी अचश्चेति सूत्रद्वयविषयमेवेत्युक्तं भाष्ये । तस्य निषेधस्यानुपलम्भाच्च । तद्वक्ष्यति । भाष्ये ( क्ङिदनन्तरो गुणभाव्यस्तीति ) । निमित्तग्रहणं तु तत्सामर्थ्यात्परिभाषानुपस्थानं तत्प्रत्याख्याने तु लिङ्गाद्विना तदनुपस्थानम् । सम्भवन्त्यां परसप्तम्यां यस्य चेति सप्तम्याः सम्भवाच्च । उपपदविभक्तेरिति न्यायात् । सिद्धसाध्यसमभिहारन्यायस्यापि तस्मिन्निति शास्त्रेण बाध एव । अत एव निमित्तग्रहणप्रयोजनावसरे हत इत्युदाहरिष्यति । कैयटोक्तरीत्या इक्पदानुवृत्तावेव निमित्तग्रहणमिति वार्त्तिकस्योक्तिसम्भवेन तत्प्रयोजनज्ञानानुक्तिसम्भवः स्पष्ट एवेत्याहुः । उपधाया अपीति । उपधार्थं रोरवीत्यर्थं चार्थः प्रयोजनं प्रवृत्तिनिवृत्तिभ्यां प्रतिषेधो यस्य तत्तन्निमित्तग्रहणमिति भाष्यार्थ इति भावः । उपधारोरवीतिभ्यामित्युपधारोरवीत्यर्थमित्यर्थेन नित्यसमास इत्यन्ये । नन्वसंनिहितं पुगङ्गादि कथन्तत्परत्वेन विशेष्यमत आह आकाङ्क्षयेति । ननु निषेध्यं गुणवृद्धी प्रति क्ङित्प्रत्ययपरेरूपं निषेधविषयं प्रति चाकाङ्क्षा नाङ्गं प्रतीत्यत आह अथवेति । निषेध्यगुणादेरप्रत्यये क्ङित्यप्रसङ्गेन प्रत्ययग्रहणमिति

न्तः पुगन्तः लघ्वी उपधा लघूपधा पुगन्तश्च लघूपधा च पुगन्तलघूपधं पुगन्तलघूपधस्येति । अवश्यं चैतदेवं विज्ञेयम् । अङ्गविशेषणे सतीह प्रसज्येत । भिनत्ति । छिनत्तीति । रोरवीत्यर्थं च । त्रिधा बद्धो वृषभो रोरवीति । यदि तन्निमित्तग्रहणं क्रियते । शचङन्ते दोषः । रियाति । पियाति । धियाति । प्रादुद्रुवत् प्रासुस्रुवत् । अत्र न प्राप्नोति । शचङन्तस्यान्तरङ्गलक्षणत्वातिसद्धम् । अन्तरङ्गलक्षणत्वादियङुवङोः कृतयोरनुपधत्वाद् गुणो न भविष्यति । एवं क्रियते चेदं तन्निमित्तग्रहणं न च कश्चिद्दोषो भवति । इमानि च भूयस्तन्निमित्तग्रहणस्य प्रयोजनानि । हतो हथः । उपोयते । औयत । लौयमानिः । पौयमानिः । नेनिक्तइति । नैतानि सन्ति प्रयोजनानि । इह तावद् हतो हथ इति । प्रसक्तस्यानभिनिर्वृत्तस्य प्रति-

---

वा क्ङितीति प्रत्ययग्रहणात्प्रत्ययेनाङ्गं सन्निधाप्यते ततश्च क्ङिति भिन्नमित्यादौ लघूपधस्यानन्तर्यात्सिद्धो निषेधः । लघूपधेति । ततश्च समुदायस्यानिर्देशादवयवस्य चेको व्यवधानात्तदवस्थैवाप्राप्तिरित्यर्थः । तन्निमित्तपक्षस्यापि दुष्टतामाह शचङन्ते दोष इति । सार्वधातुकनिमित्तस्य गुणस्य निषेधेपि लघूपधलक्षणगुणनिषेधाप्रसङ्ग इत्यर्थः । रियति पियति धियतीति । रिपिगतौ धिधारेण इति तुदादौ पाठः । हनो हथ इति । यथैवादिप्रभृतिभ्यः शप इति शब् निवर्त्यते एवमकारोपि निषेधेन निवर्त्येतेत्याशयः । नन्विग्लक्षणोयं गुणो न भवतीति निषेधाप्रसङ्गः । सत्यम् । परिहारान्तरस्य सम्भवान्नैतदाश्रितम् । प्रसक्तस्येति । सामान्यलक्षणेन विशेषलक्षणापरामर्शेन यत्प्राप्तं पुनर्विशेषलक्षणपरामर्शात्स्वरूपेणानभिनिर्वृत्तं तस्य निर्वृत्तिः क्रियते । परमार्थतस्तूत्सर्गापवादयोरेकवाक्यतया मप्राप्त्यनुमानं बाध इति सिद्धान्त । चितमित्यादौ च प्रसक्तानभिनिर्वृत्तगुणनिषेधे वचनस्य चरितार्थत्वाद्धतो हथ इति भूताकारनिवृत्तावव्या-

---

भावः । एवं च प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वात्तस्यैव तद्विशेषणमिति भावः । आद्यव्याख्यायां परिहारभाष्यं योजयति ततश्च समुदायस्येति । द्वितीये त्विदं बोध्यम् । नाचिन्त्यविशेषणत्वं न्याय्यमिति । भाष्ये ( अङ्गविशेषणे हीति ) पुगन्तलघूपधस्येत्यस्य बहुव्रीहिणाङ्गविशेषणत्वे इत्यर्थः । यदीत्यनेन न स्वपक्षस्योपादेयतोच्यते किं तूभयोः साम्यमुच्यते इत्याह तन्निमित्तपक्षस्यापीति । सार्वधातुकनिमित्तस्य लघूपधलक्षणस्य तिबुन्निमित्तस्य । भाष्ये ( अन्तरङ्गलक्षणत्वादिति ) प्राधान्येनाच एव यत्रानन्तर्याश्रयणं तत्रैव नाजानन्तर्य इति निषेधप्रवृत्तेस्तस्या अभावाच्चेति भावः । नन्वदुद्रुवदित्यत्र सार्वधातुकेति गुणात्पूर्वं नित्यत्वाच्चङि द्विर्वचनेऽचीति निषेधादुवङभावे द्वित्वात्परत्वाल्लघूपधगुणो दुर्वार इति चेन्न । अन्तरङ्गत्वाद् द्वित्वस्यैव प्रवृत्तेः । ओर्णोतेर्णिदित्करणेनोपधाकार्यस्य द्वित्वात्प्राबल्यबोधनेपि न क्षतिः । ज्ञापकस्य सजातीयापेक्षत्वेनोपधाकार्यस्य द्वित्वात्प्राबल्यबोधने यत्र द्वित्वसमाननिमित्तता द्वित्वनिमित्तार्थाग्निमित्तता वा तत्रैव तत्प्राबल्यबोधनादित्याहुः । भूयः पुनरर्थे । एवमकारो पीति । क्ङित्परे गुणवृद्धी न प्रयोक्तव्ये इति सूत्रार्थः । तत्र यथा चितमित्यादावसतो गुणादेः प्रागभावः पतिपाद्यतएवं सतोपि निवृत्तिः साध्येत । सतोपि निवृत्तेरदिप्रभृतिभ्य इत्यादौ दृष्टत्वादिति भावः । नन्विति । तथा चेक इत्यनुवृत्तिसामर्थ्यादसत एवाप्रयोगः प्रतिपाद्यत इति भावः । नेनिक्ते इत्यत्र निजाम्त्रयाणां गुणः श्लाविस्यभ्यासस्य गुणः । प्रसक्तत्वानभिनिर्वृत्तत्वयोर्विरोधमाशङ्क्याह सामान्येति । निवृत्तिः । अनभिनिर्वृत्तिः क्रियते । विहितप्रतिषिद्धयोर्विकल्पस्तर्हि स्यादत आह परमार्थेति । गुणविध्येकवाक्यतया क्ङिद्भिन्नसार्वधातुकादौ गुण इत्यर्थात् क्ङिति तयोरप्राप्तिरेवेति भावः । सा च पर्युदासविधया । यद्वा प्रसज्यप्रतिषेधेन वाक्यार्थबोधे तदंशे सामान्यशास्त्रजज्ञानस्याप्रामाण्यं कल्प्यते । एकवाक्यताफलसंपत्तेस्त्वेकवाक्यतायामित्युक्तमिति द्रष्टव्यम् । भूता-

षेधेन निवृत्तिः शक्या कर्तुम्। अयं च धातूपदेशावस्थायामेवाकारः। इह चोपोयते औयत लौयमानिः पौयमानिरिति। बहिरङ्गे गुणवृद्धी। अन्तरङ्गः प्रतिषेधः। असिद्धं वहिरङ्गमन्तरङ्गे। नेनिक्तइति पररूपेण व्यवहितत्वान्न भविष्यति। उपधार्थेन तावन्नार्थः। धातोरिति वर्तते। धातुं क्ङित्परत्वेन विशेषयिष्यामः। यदि धातुर्विशेष्यते विकरणस्य न प्राप्नोति। चिनुतः। सुनुतः। लुनीतः। पुनीत इति। नैष दोषः। विहितविशेषणं धातुग्रहणम्। धातोर्यो विहित इति। धातोरेव तर्हि न प्राप्नोति। नैवं विज्ञायते धातोर्विहितस्य क्ङितीति। कथं तर्हि। धातोर्विहिते क्ङितीति। अथवा कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्र द्रष्टव्यम्। पुगन्तलघूपधस्य गुणो भवतीत्युपस्थितमिदं भवति क्ङिति नेति। अथवा यदेतस्मिन्योगे क्ङिद्ग्रहणं तदनवकाशं तस्यानवकाशत्वाद् गुणवृद्धी न भविष्यतः। अथवाचार्यप्रवृत्तिर्ज्ञापयति भवत्युपधालक्षणस्य गुणस्य प्रतिषेध इति।

---

पारः। आदिप्रभृतिभ्य इत्यनेन तु गत्यन्तराभावात्सन्नेव प्रक्रियादशायां शब्निवर्त्यते। यद्येवं भवत इत्यादौ प्रसक्तोऽनभिनिर्वृत्त एव शवकारः कस्मादनेन न निवर्त्यते। नैष दोषः। शब्भवतीत्यस्यां चोदनायां गुणरूपेणाचोदनान्नायं गुणनिषेधविषयः। उपोयतइति। वेञो यकि संप्रसारणे कृते उभयपदाश्रयत्वाद्बहिरङ्गो गुणः। औयतेत्यादौ बहिरङ्गाश्रयत्वाच्च वृद्धिर्बहिरङ्गा। नेनिक्तं इति। क्ङित्परत्वेनाङ्गस्य विशेषणादङ्गस्य च कार्यित्वात्पूर्वपक्षः। उत्तरस्त्वभ्यासस्य कार्यित्वात्तस्य च पररूपेण व्यवधानादिति। धातुं क्ङित्परत्वेनेति। न धातुलोप इत्यत्रोपसर्जनेपि धातौ धातुशब्दमात्रस्य स्वरितत्वादिहानुवृत्तिरित्यर्थः। यदीति। क्ङित्यनन्तरस्य धातोर्गुणवृद्धी न भवत इति वाक्यार्थं मत्वा प्रश्नः। धातोरेवेति। धातोर्विहितस्य क्ङित्यनन्तरे नेति मत्वा प्रश्नः। धातोर्विहित इति। धातोर्विहिते क्ङित्यनन्तरे यो धातुर्विकरणो वा तस्य प्रतिषेध इत्यर्थः। अथवेति। यत्र गुणवृद्धी विधीयेते तत्र क्ङिति नेत्युपतिष्ठते इत्येवमियं परिभाषा भवति। तत्र पुगन्तलघूपधस्येत्यत्रास्या उपस्थाने सति येन नाव्यवधानमिति भिन्नमित्यादौ निषेधो भविष्यति। अथवेति। मा भूत्परिभाषा तथापि प्रतिषेधस्य प्रतिषेध्यापेक्षायां यावन्तो यादृशाः प्रतिषेद्धव्यास्तावन्ति प्रतिषेधसूत्राणीति पुगन्तलघूपधगुणे प्रतिषेध्ये ऽनवकाशः प्रतिषेधो व्यवहितेपि प्रवर्तते। अथवा यथोद्देशपक्षा-

---

कारेति। सिद्धाभावपरिपालने नैव सिद्धौ असिद्धाभावविधाने गौरवादिति भावः। प्रक्रियायामिति। वस्तुनस्तु तत्रापि लुक्रानुत्पत्तिरेवान्वाख्यायते इति बोध्यम्। नैषइति। एकान्ता अनुबन्धा इति भावः। अयमेव न्याय्यइति तस्य लोप इति सूत्रे वक्ष्यति। कार्यित्वादिति। अङ्गस्य गुणो भवति स च तत्संबन्ध्यभ्यासे क इत्यर्थ इत्यभिमानः। उत्तरस्त्विति। पक्ष इति शेषः। क्ङित्परस्य यस्य गुणः प्राप्तस्तस्य नेति सूत्रार्थ इति भावः। भाष्ये ( धातुं क्ङिदिति ) परत्वेन निर्दिष्टं यत् क्ङिदिति तद्धातुं प्रति विहितमिति विशेषयिष्यामः। तथा च धातुर्विहितं क्ङिद् यतः कुतश्चित्परन्तदवयवस्य गुणो नेति सूत्रार्थ इत्यर्थः। तदू ध्वनयन्नाह मत्वा प्रश्न इति। धातुर्विकरणो वेति। धातुना विहितविशेषणबललब्धमेतदुभयम्। येन नेति। पुगन्तलघूपधेति तत्पुरुष इति भावः। श्रुतत्वात्सार्वधातुकादिकं क्ङितीति च पुगन्तादीनामेव विशेषणमित्यभिमानः। प्रतिषेध्यापेक्षायामिति। गुणवृद्धिश्रुत्या तद्रूपप्रतिषेध्याकाङ्क्षायां यावद्गुणवृद्धिविधायकशास्त्र-

यदयं त्रसिगृधिधृषिक्षिपेः क्नुः । इको झल् हलन्ताच्चेति क्नुसनौ कितौ करोति । कथं कृत्वा ज्ञापकम् । कित्करणस्यैतत्प्रयोजनम् । गुणः कथं न स्यादिति । यदि चात्र गुणप्रतिषेधो न स्यात् कित्करणमनर्थकं स्यात् । पश्यति त्वाचार्यो भवत्युपधालक्षणस्यापि गुणस्य प्रतिषेध इति । ततः क्नुसनौ कितौ करोति । रोरवीत्यर्थेनापि नार्थः । क्ङितीत्युच्यते । न चात्र कितं ङितं वा पश्यामः । प्रत्ययलक्षणेन प्राप्नोति । न लुमता तस्मिन्निति प्रत्ययलक्षणप्रतिषेधः । तथापि न लुमताङ्गस्येत्युच्यते । एवमपि न दोषः । कथम् । न लुमता लुप्तेङ्गाधिकारः प्रतिनिर्दिश्यते । किं तर्हि योसौ लुमता लुप्यते तस्मिन् यदङ्गं तस्य यत्कार्यं तन्न भवतीति । अथाप्यङ्गाधिकारः प्रतिनिर्दिश्यते । एवमपि न दोषः । कथम् । कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्र द्रष्टव्यम् । सार्वधातुकार्द्धधातुकयोर्गुणो भवतीत्युपस्थितमिदं भवति क्ङिति नेति । अथवा छान्दसमेतत् । दृष्टानुविधिश्छन्दसि भवति । अथवा बहिरङ्गो गुणोन्तरङ्गः प्रतिषेधः । असिद्धं बहिरङ्गमन्तरङ्गे । अथवा

---

अयेण भाष्यम् । तथाहि । प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जते इति यदेतस्मिन्नित्युक्तम् । अथवेति । लिङ्गान्निर्दिष्टाङ्गविकला तस्मिन्निति परिभाषोपतिष्ठत इत्यर्थः । अनेकपरिहारोपन्यासो न्यायव्युत्पादनार्थः । बहिरङ्ग इति । ततश्चासिद्धत्वान्निषेधानुपपत्तिरित्यर्थः । अथवेति । ननु बहुव्रीह्यर्थमुभयविशेषणायार्धधातुकग्रहणं स्यादिति कथमनवकाशत्वम् । उच्यते । विनाप्यार्द्धधातुकग्रहणेन बहुव्रीहिर्लभ्यते यत्रैकाचो द्वे इत्यत्र । रोरवीत्यत्रानैमित्तिकत्वाल्लोपस्य गुणनिषेधः पूर्वेण न प्राप्नोतीत्यार्द्धधातुकग्रहणसामर्थ्यात्सूत्रान्तरप्राप्तोपि निषेधो बाध्यत इत्यर्थः । यङ्निमित्तश्च

---

विषयकनिषेधवाक्यानां व्यक्तिपक्षे विनिगमनाविरहादुपप्लव इत्यर्थः । प्रधानानीति । अनेन तद्विषयकनिषेधोपप्लवे बीजं दर्शितमित्याहुः । अङ्गविकलेति । पूर्वस्य परस्य वेति सन्देहेन तदुपस्थितेरिति भावः । न चैवं नेनिक्ते इत्यत्रापि निषेधः स्यात् । येन नेति न्यायेनैकवर्णव्यवधाने एव निषेधप्रवृत्तेर्बोधनात् । न्यायव्युत्पादनेति । न्यायव्युत्पत्तिस्तत्प्रतिपत्तिः । श्रोतॄणान्तदुत्पादनायेत्यर्थः । भाष्ये ( हलन्ताच्चेति ) नन्वेतद्विहितकित्त्वस्य न ज्ञापकत्वम् । विहत्तीत्यादावमागमनिषेधेन धिप्सतीत्यादौ नलोपेन च तच्चारितार्थ्यात् । इको झलित्यपि न । तद्विषये इकः क्ङित्परस्तस्यैव संभवादिति चेन्न सृजिदृशोर्झल्यमकितीति इको झल् दम्भेरिति बहुन्यासेन सिद्धे सामान्यतो विधेशस्य गुणप्रतिषेधार्थत्वेन ज्ञापकासाम्राज्यात् । रुदविदमुषां क्त्वासनोर्गृहमृडगुधकुषक्लिशां क्तः कित्त्वविधानञ्च ज्ञापकं बोध्यम् । अङ्गाधिकारइति । स्वरितलिङ्गासंगनेति भावः । कार्यकालमिति । तथा च तत्रोपस्थितत्वादिदमप्याङ्गमङ्गाधिकारस्थैकवाक्यतापन्नत्वादिति भावः । स्वरितत्वासङ्गवशात्तदधिकारपठितमिव तदधिकारस्थैकवाक्यतापन्नमपि गृह्यते इति तात्पर्यम् । निषेधेपि परिभाषासाहश्यात्परिभाषात्वमुक्तम् । सादृश्यञ्च निषेध्याकाङ्क्षतया तदेकवाक्यतामात्रेणेति बोध्यम् । छान्दसमिति । यङोचि चेति चेन बहुलं छन्दसीत्यनुकृष्य यङो लुग्विधानादित्यर्थः । न च हुश्नुवोरितिसूत्रस्थेन हुश्नुरित्यस्य भाषायां यङ्लुक्सत्त्वाज्ज्ञापकत्वपरभाष्येणोवर्णान्तेभ्यो यङ्लुग् भाषायामप्यस्तीति लभ्यते ऽन्यथा ज्ञापिते ऽप्यचारितार्थ्यं स्पष्टमेवेति वाच्यम् । तत्प्रामाण्येनाजादौ क्ङितीति क्वचित्सत्त्वाङ्गीकारे ऽपि सर्वत्र भाषायान्तत्सत्त्वे मानाभावात् । तत्रत्यभाष्यस्यैकदेश्युक्तित्वाच्च । गुणो बहिरङ्ग इति गुणस्य बहिरङ्गता बहिर्भूतसार्वधातुकाश्रयत्वात् । नन्वसिद्धस्यानिष्पन्नस्यैव निषेधः क्रियते तत्राह असत्त्वादिति । शास्त्रासिद्धत्वात्तत्रासत्त्वबुद्ध्या प्रतियोगिज्ञानाभावान्निषेधानुपपत्तिरिति भावः । उभयविशेषणाय बहुव्रीह्यर्थमित्यन्वयः । तथेति । प्रथमस्यैतत्तु कर्मधारयेपि विशेष्यं शक्यं कर्तुमिति

पूर्वस्मिन्योगे यदाऽऽर्धधातुकग्रहणं तदनवकाशं तस्यानवकाशत्वाद् गुणो भविष्यति । इह कस्मान्न भवति । लैगवायनः । कामयते । तद्धितकाम्योरिक्प्रकरणात् * । इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । न चैते इग्लक्षणे । लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्गः * । लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावः प्राप्नोति । अचिनवम् । असुनवम् । अकरवम् । लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्ग इति चेद्यासुटो ङिद्वचनात्सिद्धम् * । यदयं यासुटो ङिद्वचनं शास्ति तज्ज्ञापयत्याचार्यो न ङिदादेशा ङितो भवन्तीति । यद्येतज्ज्ञाप्यते कथं नित्यं ङितः इतश्चेति । ङितो यत्कार्यं तद्भवति । ङिति यत्कार्यं तन्न भवतीति । किं वक्त-

---

निषेधोऽन्तरङ्गत्वाद्बाध्यते न सार्वधातुकनिमित्त इति रोरुत इत्यादौ निषेधो भवत्येव । एतच्च छान्दसत्वमभ्युपेत्य यङ्लुको भाष्यकारेणोक्तम् । भाषाविषयत्वे तु यङ्लुको बहूनि प्रयोजनान्यार्द्धधातुकग्रहणस्य सम्भवन्ति । तोतोर्ति । दोदोर्ति । दोध्योर्ति । जोहोर्ति । मोमोर्तीत्यादिषु तुर्वीथुर्वीदुर्वीधुर्वीत्यादिभ्यो यङ्लुकि तिपि वकारच्छकारयोराल्लोप इति लोपे कृते ऽसत्यार्द्धधातुकग्रहणे बहुव्रीहावप्याश्रिते न धातुलोपइति गुणनिषेधः प्राप्नोति स मा भूदित्येवमर्थमार्द्धधातुकग्रहणं स्यात् । अनेन चात्र व्यवधानान्नास्ति निषेध इति सति प्रयोजने कथमनवकाशं स्यात् । इग्लक्षणयोरिति । इक इत्येवं ये गुणवृद्धी तयोर्निषेध इत्यर्थः । लकारस्येति । अनुबन्ध इत्संज्ञकत्वाल्लोपस्थानिनि न सन्निधीयतइत्यनल्विधाविति निषेधो न प्रवर्तते । पिच्च ङिन्न भवति ङिच्च पिन्न भवतीति भाष्यकारस्य कल्पना न वार्तिककारस्येति दोषोपन्यासः । कथं नित्यं ङित इति । ननु ङितो लकारस्येति तत्रार्थः स्थितो न तु ङित आदेशस्येति । अन्यथा पचावः पचन्तीति लोपः स्यात् । एवं मन्यते । यासुटो ङित्वेन ज्ञापकेन स्थानिन एव लकारस्य ङिद्व्यपदेश उच्छिद्यते । ङकारोच्चारणं तु लुङ्लङ्लृङ्क्ष्वित्यादौ विशेषणार्थं स्यात् । ङितो यदिति । स्थानिवद्भा-

---

न तद् बहुव्रीहिस्वगमकमिति भावः । ननु सूत्रान्तरप्राप्तनिवृत्तिः कथं तत्राह सामर्थ्यादिति । अयमाशयः । आर्धधातुके इति योगो विभज्यते धातुलोप इति वर्त्तते षष्ठीतत्पुरुषश्च । एवञ्च धात्वेकदेशलोपे सति प्रत्यासत्त्या ऽन्तरङ्गतया च लुप्तधात्वेकदेशनिमित्तौ गुणवृद्धिनिषेधश्चेदार्धधातुक एवेति नियमस्तत्सामर्थ्यादिति । तद् ध्वनयन्नाह यङ्निमित्तश्चेति । भाषांत । हुश्नुवोः सार्वधातुक इत्यत्र हुश्नुग्रहणादिति भावः । इत्यादिभ्यइति । आदिना हुर्छामुर्छौ । राल्लोपइति । तत्र क्ङितीति नानुवर्त्तते तदनुवृत्तिपक्षे तोतोर्मीत्याद्युदाहरणम् । नन्वेवमपि क्ङिति चेति निषेधोऽत्र दुर्वार इति तद्वारणं विनास्य चारितार्थ्यं कथमत आह अनेनेति । बहिरङ्गराल्लोपस्यान्तरङ्गे यङाश्रये प्रतिषेधे कार्येऽसिद्धत्वाद् द्वाभ्यां व्यवधानात्तदप्राप्तिः । सनः क्वित्वेन तु एकव्यवधानमेवाश्रितमिति भावः । वस्तुतस्तु भाष्यप्रामाण्यादेषां प्रयोगाणां लोके भाव इत्येवाश्रयणीयम् । नन्विग्लक्षणयोरित्युक्तावपि लैगवायने इक्स्थानिकत्वेनेग्लक्षणत्वादस्यापि गुणनिषेधोऽत आह इकइतीति । अर्थाधिकारानुरोधेन पदपरम्परेक इति संबध्यत इति भावः । लोपादिति । पदार्थोपस्थितिकाल एवान्तरङ्गत्वाल्लोपप्रवृत्तिरिति भावः । पिद् ङिन्नेति । सार्वधातुकमित्यत्रापिदिति योगविभागेन प्रसज्यप्रतिषेधेनायमर्थो लभ्यते । तत्र योगविभागसामर्थ्यात् स्थानिवत्त्वप्राप्ता अन्या वा ङित्त्वप्राप्तिः सर्वा प्रतिषिध्यत इत्याशयः । भाष्ये ( स्थानिवद्भावः प्राप्नोतीति ) तथाचाचिनवमित्यादौ गुणनिषेधप्रसङ्ग इति भावः। ननु ङितइति । तथा च न स्थानिवत्त्वेन ङित्त्वं प्रार्थ्यमिति भावः । ङिद्व्यपदेशइति। स्थानिसंबन्धिङस्येत्संज्ञाभाव एव ज्ञाप्यते लस्येत्यस्य लघटितस्येति व्याख्या कार्येस्यर्थः। यत्कार्यं पूर्व

व्यमेतत्। न हि। कथमनुच्यमानं गंस्यते। यासुट एव ङिद्वचनात्। अपर्याप्तश्चैव हि यासुट् समुदायस्य ङित्त्वे ङितं चैनं करोति। तस्यैतत्प्रयोजनं ङितो यत्कार्यं तद्यथा स्याद् ङिति यत्कार्यं तन्मा भूदिति। क्ङिति च ॥

———

वेन लादेशे ङिति यत्कार्यं पूर्वस्य तन्न भवतीति ज्ञाप्यते न तु स्थानिन एव ङिद्व्यपदेश उच्छिद्यते। अन्यथा नित्यं ङित इति निर्विषयं स्यात्। यासुट एवेति। ङितो यत्कार्यं तद्यासुटो न किं चिदतिदेष्टव्यमस्ति किं तु ङिति यत्कार्यं विधीयते संप्रसारणादिकं तदतिदिश्यते। तच्चेत्स्थानिवद्भावेन स्यादतिदेशोऽनर्थकः स्यादित्यतिदेशः क्रियमाणो ङिति यत्कार्यं तदभावस्यैव ज्ञापकः। अपर्याप्तश्चेति। समुदायस्य ङिद्व्यपदेशो कर्तव्यं यासुडसमर्थः। यासुट एव ह्यनेन ङित्त्वं क्रियते न समुदायस्य क्ङिति चेत्यत्र तन्निमित्तग्रहणस्य प्रत्याख्यातत्वादगुणनिमित्तेपि यासुटि ङिति गुणनिषेधः सिद्ध्यति। यदि समुदाये स्थानिवद्भावेन ङित्कार्यमभविष्यद् यासुटो ङित्त्वं न व्यधास्यद् विहितं तज् ज्ञापयति ङिति यत्कार्यं तल्लादेशे न भवतीति। केषां चित्पाठः सुपर्याप्तश्चैव हीति। तत्रावयवङित्त्वद्वारेण समुदाये ङित्त्वं विधीयतइति व्याख्येयम्। एवं क्ङितीति निमित्तसप्तमीपक्षे ऽपि गुणनिषेधः सिद्ध्यति। अस्मिन् पक्षे ङितं चैनं करोतीति समुदायः परामृश्यते ॥ ५॥

———

स्येति। प्राप्तमिति शेषः। नान्विति। प्रथमोपस्थितत्वसञ्ज्ञाशास्त्रबाधापेक्षया स्थानिवत्त्वबाध एव युक्त इति भावः। युक्त्यन्तरमप्याह। अन्यथेति। लङ्लिङादेर्ङिद्व्यपदेशस्योच्छिन्नत्वादित्यर्थः। ङित आदेशस्येत्यर्थस्तु नेत्युक्तमेव। तदभावस्यैवेति। ज्ञापकस्य सजातीयापेक्षत्वादिति भावः। (भाष्ये यासुटएव) इत्यस्य न समुदायस्येत्यर्थः। एवस्यावधारणार्थत्वात्। यदि समुदायस्य ङित्त्वं स्यात्तदा ङितो यत्कार्यं तदपि तत्र प्राप्तियोग्यमिति तदभावमपि ज्ञापयेत्। तथा हि नित्यं ङित इत्यादेर्ङित आदेशस्येत्यर्थः। पचावः पचन्तीत्यादौ तु न दोषः। सार्वधातुकमपिदित्यत्रानुवृत्तङिदित्यस्य लुप्तसप्तमीकतया ङितीव कार्यस्यैवातिदेशादिति भावः। न च यासुटि ङिति किं कार्यं प्राप्नोति। तन्निमित्तग्रहणे न निषेधाप्राप्तेरिति वाच्यम्। सम्प्रसारणप्राप्तेः। न हि तत्र प्रत्यय इत्यस्तीत्याहुः। नन्वयवे कृतस्य लिङ्गस्य समुदायविशेषकत्वाद्यासुड् ङिदित्युक्तावपि समुदायस्य ङित्त्वं भवत्येव। अत एव तन्निमित्तग्रहणेपि निषेधः सिध्यति। तच्च स्थानिवत्त्वेन सिद्धमिति व्यर्थं ङित्त्वं स्थानिनो ङिद्व्यपदेशोच्छेदेपि ज्ञापकं स्यात्। ङितो यत्कार्यन्तदभावस्यापि वा ज्ञापकं स्यादत आह। भाष्ये (अपर्याप्तश्चैवेति)। अस्य ङित्त्वस्य केवलं आगमे सम्प्रसारणविधानेन चरितार्थत्वादवयवेऽचरितार्थस्यैव च समुदायविशेषकत्वमत एव पठिता विद्येत्यादौ ङीब् नेति भावः। ङितश्चैनमित्यवयवमित्यर्थः। यासुट एवहीति। यासुड् ङिदिति सामानाधिकरण्यात्। यासुट्पदस्य स्वविधानाय स्वरूपपरस्य ङित्त्वसम्बन्धे तदादिलक्षणायां मानाभाव इति भावः। प्रत्याख्यातत्वादिति। स्वरितत्वप्रतिज्ञानात्समुदायगतनिमित्तत्वस्यावयवे आरोपादपि निषेधप्रवृत्तिरित्यन्ये। यदि च समुदायेइति। ननु स्थानिवत्त्वेन समुदायस्य ङित्त्वे यासुटः कथं ङित्त्वमिति चेन्न। तन्ङित्त्वसाध्यफलस्य तावतापि सिद्धेरिति भावः। केषांचिदिति। अत्र पाठे यासुट एवेत्येवकारः प्रसिद्ध्यर्थकः। केवलयासुटो ङित्त्वं व्यर्थं गुणनिषेधे तन्निमित्तग्रहणात्। सम्प्रसारणमपि धात्वाक्षिप्ते प्रत्यये एव। एवञ्च सामर्थ्यात्समुदायविशेषकं तादिति भावः। ङितं चैनमिति। स्थानिवत्त्वेन ङित्त्वे सिद्धेपीति शेषः। ङितोयत्कार्यमित्यादि। ज्ञापकस्य सजातीयापेक्षत्वादिति भावः। नहि यासुड्विशिष्टस्य ङित्त्वप्रयुक्तं किं चिदनेन ङित्वेन प्राप्नोति। नित्यं ङित इत्यस्य च ङितो लस्येत्येवार्थात्। आदेशस्य ङित इत्यर्थे तु दोष उक्त एव। सार्वधातुकमित्यादौ ङिदित्यस्य उपमेये प्रथमादर्शनेन सप्तम्यन्तताया अन्याय्यत्वादिति भावः। नन्विदं ङित्त्वं स्तुयादित्यादावनिग्लक्षणवृद्धिबाधनार्थं चिनुयुरित्यादौ जुसिचेति निषेधार्थञ्च चरितार्थमिति चेन्न। ङिच्च पिन्नेपि भाष्योक्तकल्पनयैव सिद्धेः एतदर्थमेव हि भाष्ये तत्स्वीकारः। यत्तु सञ्ज्ञापूर्वकविधेरनित्यत्वेन वृद्धिवारण-

दीधीवेवीटाम् ॥ ६ ॥ किमर्थमिदमुच्यते । गुणवृद्धी मा भूतामिति । आदीध्यनम् । आदीध्यकः । आवेव्यनम् । आवेव्यकः । अयं योगः शक्यो ऽकर्तुम् । कथम् । दीधीवेव्योश्छन्दोविषयत्वाद् दृष्टानुविधित्वाच्च छन्दसो ऽदीधेददीधयूरिति च गुणस्य दर्शनादप्रतिषेधः ॥ । दीधीवेव्यौ छन्दसो विषयो दृष्टानुविधिश्च छन्दसि भवति । दीधीवेव्योश्छन्दोविषयत्वाद् दृष्टानुविधित्वाच्च छन्दसः । अदीधेददीधयुरित्यत्र च गुणस्य दर्शनादप्रतिषेधः । अनर्थकः प्रतिषेधः । अप्रतिषेधः । प्रजापतिर्वै यत्किंचिन्मनसा अदीधेत् । होत्राय वृतः कृपयन्नदीधेत् । अदीधयुर्दाशराज्ञे वृतासः । भवेदिदं युक्तमुदाहरणम् । अदीधेदिति । इदं त्वयुक्तम् । अदीधयुरिति । अयं जुसि गुणः प्रतिषेधविषय आरभ्यते स यथैव क्ङितीति चेत्येनं बाधते । एवमेनमपि बाधेत । नैष दोषः । जुसि गुणः प्रतिषेधविषय आरभ्यमाणस्तुल्यजातीयं प्रतिषेधं बाधते । कश्च तुल्यजातीयः प्रतिषेधः । प्रत्ययाश्रयः । प्रकृत्याश्रयश्चायम् ।

---

दीधीवेवीटाम् ॥ छन्दोविषयत्वादिति । भाषायामेतयोः प्रयोगाभावात् । दृष्टानुविधित्वाच्चेति । यद्यपि भाषायामपि दृष्टमेवानुविधीयते । सिद्धे शब्दार्थसंबन्ध इति न्यायात् । तथाप्यादीध्यनमित्यादिप्रयोगश्छन्दसि नास्ति दृष्टस्यैव छन्दस्यनुविधानमित्यर्थः । न तु छन्दस्येव दृष्टानुविधानमिति । अथवा दृष्टानुविधिरित्यस्यायमर्थः । गुणश्छन्दसि दृश्यते न तु सर्वत्र गुणनिषेध इति । अदीधेदिति । लङ् । व्यत्ययेन तिप् । अदीधयुरिति । जक्षित्यादयः षडित्यभ्यस्तत्वाज्जुसादेशो झेः । प्रकृत्याश्रयश्चायमिति । ततश्चान्तरङ्गत्वादनेनैव भाव्यमित्यर्थः । येन नाप्राप्त इति । कार्यविशेषचिन्तापक्षायामयं न्यायो न तु कार्यसामान्यं बाध्यमित्यस्यापेक्षायां न्यायावतारः । कथ दीध्यदिति । लट् । तिप् इतश्च लोपः परस्मैपदेष्विति इकारलोपः । लेटोऽडाटावित्यडागमः । श्यन् व्यत्ययेनेति । श्यनो ङित्वाद् गुणाभावः । यीवर्णयोर्दीधीवेव्योरितीकारलोपः । क्व चित्तु शव्यत्ययेनेति पाठः । तदा शस्य ङित्वाद् गुणाभावः । एरनेकाच इति यणादेशः । इङिति व-

---

मत एवोत औदिति नासूत्रीति । तन्न । अस्यार्थस्य भाष्यास्पृष्टत्वात् । ज्ञाजनोर्जेत्यस्याङ्गवृत्तपरिभाषाज्ञापकत्वपरभाष्यासङ्गतेश्च । अनयैवान्यथासिद्धेः जुसि चेत्यत्र वसस्याचीत्यतोचीत्यनुवृत्त्याजादौ जुसि गुणविधानान्न चिनुयुरित्यत्र दोषः । एवञ्चात्रत्यपूर्वपक्षसिद्धान्तावेकदेशिन एवेति बोध्यम ॥ ५ ॥

दीधी ॥ भाषायामिति । अनन्यभावो हि विषयशब्दार्थ इति भावः । दृष्टस्यैवेति । भाषायान्तु सम्प्रति प्रयोगे दृष्टस्यापि व्याकरणान्तरानुसारेण शिष्टप्रयोगादिना वावगतसाधुत्वस्याप्यनुविधानमित्यर्थः । एवञ्च वेदे आदीध्यनमित्यादिलक्ष्याभावादसम्भवदुक्तिकं सूत्रमिति भावः । अथवेति । एवञ्च लक्षणस्याव्याप्तिप्रतिपादकं भाष्यमिति भावः । व्यत्ययेनेति । दीधीङो ङित्वात्परस्मैपदोपलक्षणन्तिबिति । अन्तरङ्गत्वादिति । नन्वेवं बहिरङ्गस्य जुसि गुणस्य कथमनेन निषेध इति चेन्न । सर्वस्यापि गुणस्य प्रत्ययाश्रयत्वेन बहिरङ्गतयान्तरङ्गनिषेध्याभावादिति भावः । सर्वत्रैतन्न्यायानाश्रयणे हेतुमाह कार्यविशेषेति । यच्छब्देन तत्तद्रूपेण कार्याणां परामर्शादिति भावः । केचित्तु सामान्यचिन्ताविषयेप्येतं न्यायं योजयन्ति । तदा येनेत्यस्य स्वेतरेणेत्यर्थः । भाष्ये ( अकाणिषमिति ) सिजन्तस्याङ्गस्य मिपामि लघूपधगुणः प्राप्नोति । श्वः प्रयोगो लुडर्थः । तत्र हि तिपां डादेशे टिलोपे च तासप्रत्ययान्तमङ्गं भवति । तृचि त्वनङ्गत्वान्न गुणप्राप्तिरिति भावः । भाष्ये ( पुनरिड्ग्रहणस्येति ) । न च नेत्यस्य निवृत्त्यर्थं तत् स्पष्टं चेदं नेड् वशीत्यत्र भाष्ये इति वाच्यम् । क्वचिदेकदेशोप्यनुवर्त्तते इति न्यायेन नेड्वशीत्यत्र नञोऽनिवृत्तिसिद्धेरिति भावः । वस्तुतस्त्वत्रत्यमिदं भाष्यमेकदेश्युक्तिः । आर्धधातुकस्येति सूत्रस्थेड्ग्रहणस्य नेड्वशीतिसूत्रे भाष्ये प्रत्याख्याना-

अथवा येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्ते क्ङितीति नेत्येतस्मिन् प्रतिषेधे उसि गुण आरभ्यते । कस्मिन् पुनः प्राप्ते चाप्राप्ते च । यदि तर्ह्ययं योगो नारभ्यते । कथं दीध्यदिति वेव्यदिति च । श्यन्व्यत्ययेन * । दीध्यदिति वेव्यदिति च श्यन्व्यत्ययेन भविष्यति । इटश्चापि ग्रहणं शक्यमकर्तुम् । कथमकणिषमरणिषं कणिताश्वो रणिताश्व इति । आर्द्धधातुकस्येड्वलादेरित्यत्र इडित्यनुवर्तमाने पुनरिड्ग्रहणस्य प्रयोजनम् । इट् इडेव यथा स्यात् यदन्यत्प्राप्नोति तन्मा भूदिति । किं चान्यत्प्राप्नोति । गुणः । यदि नियमः क्रियते । पिपठिषतेरप्रत्ययः पिपठीः । दीर्घत्वं न प्राप्नोति । नैष दोषः । आङ्गं यत्कार्यं तन्नियम्यते न चैतदाङ्गम् । अथवा असिद्धं दीर्घत्वं तस्यासिद्धत्वान्नियमो न भविष्यति ॥

हलोनन्तराः संयोगः ॥ ७ ॥ अनन्तरा इति कथमिदं विज्ञायते । अविद्यमानमन्तरं येषामिति । आहोस्विदविद्यमाना अन्तरा येषामिति । किं चातः । यदि विज्ञायते अविद्यमानमन्तरं येषामिति । अवग्रहे संयोगसंज्ञा न प्राप्नोति ।

---

र्तमाने इति । नेड्वशिकृतीत्यतः । पिपठीरिति । पिपठिषतेः क्विप् । अतो लोप इत्यकारलोपः । षत्वस्यासिद्धत्वात्ससजुषोरुरिति रुत्वम् । पूर्वत्रासिद्धे न स्थानिवदिति अल्लोपस्य रुत्वे स्थानिवद्भावाभावः । आङ्गमिति । अङ्गस्येत्यनुवर्तनादङ्गाधिकारविहितं यद्रूपान्तरमिटस्तदेव निवार्यते इडेव यथा स्यादिति नियमेनेत्यर्थः । र्वोरुपधाया इति च दीर्घत्वं नाङ्गम् । यत्तु ग्रहो लिटि दीर्घ इति दीर्घत्वं तद्वचनाद्भवति । पिपठिषि ब्राह्मणकुलानीत्यत्र त्वकारलोपस्य स्थनिवद्भावाद् झलन्तत्वाभावान्नुमभावस्तेन पिपठीषीति कथं सान्तमहतः संयोगस्येति दीर्घत्वमिति न चोदनीयम् । क्वौ विधिं प्रति न स्थानिवदित्यर्थो व्यवस्थापयिष्यते न तु क्वौ लुप्तं न स्थानिवदिति । अथवेति । इडेवेत्यस्मिन्नियमे दीर्घत्वस्यासिद्धत्वान्नास्ति नियमेन व्यावृत्तिः । ततश्च शास्त्रदृष्ट्या अविकृतरूप एवेट् । प्रयोगएव तु विकृतः । अलावीदित्यत्र तु सिज्लोप एकादेशे सिद्ध इत्यसिद्धत्वनिषेधवचनात्सवर्णदीर्घत्वं भवति ॥ ६ ॥

हलोऽनन्तराः संयोगः ॥ कथमिति । किमन्तरशब्दस्य नञा बहुव्रीहिरथवा अन्तराशब्दस्येति प्रश्नः । अन्तरं विवरम् । वर्णशून्यः काल इत्यर्थः । अविद्यमाना इति ।

---

त्त्करणेन नियमरूपगुरुतरयत्नमाश्रित्यैतत्प्रत्याख्यानस्यायुक्तत्वात् । अङ्गस्येत्यनुवृत्तावपि अङ्गाधिकारविहितविकारस्यैव व्यावृत्तेः शब्दमर्यादया लाभाच्च । अन्त्योपि सिद्धत्ववचनस्य ज्ञापकत्वाश्रयणे गौरवमिति बोध्यम् । क्विबिति । अप्रत्ययस्य इत्यस्याश्रूयमाणः प्रत्यय इत्यर्थः । कृदन्तत्वात्प्रातिपदिकत्वे स्वादयः । झलन्तत्वाभावादिति । स्वविधौ स्थानिवत्त्वाभावादजन्तलक्षणोऽपि नेति द्रष्टव्यम् । ननु क्वौ लुप्तस्य स्थानिवत्वानिषेधादल्लोपस्य स्थानिवत्वं दुर्लभमत आह क्वाविति । अलावीदित्यत्रेति । न च समानेस्थत्व ह्रस्वादङ्गादिति । सज्लोपाय सिद्धत्ववचनं चरितार्थं सिद्धत्वे हि परत्वात्सिज्लोपे ततो वृद्धिरन्यथा पूर्वं वृद्धौ स न स्यादिति वाच्यम् । लावस्थायामडिति पक्षे सर्वतो वृद्धेरन्तरङ्गत्वेन तत्पक्षे सिज्लोपाप्राप्त्या तदेकवाक्यत्वेन पक्षान्तरेपि सिज्लोपाभावस्यैवौचित्येन समाईत्येव रूपस्यौचित्यात्सत्यभिधाने सिजलोप एकादेश इति तु सिज्लोपोत्तरप्राप्तसवर्णदीर्घरूपैकादेशविषयमेवेति बोध्यम् । वस्तुतो नियमस्यैकदेशयुक्तिस्वाद्विफलोयं विचार इति तत्त्वम् ॥ ६ ॥

हलोन्तराः ॥ अन्तराशब्दो मध्ये इत्यर्थः । नन्वाधारस्येति । कालमात्रस्येत्यर्थः । अर्थेति ।

अप्सुइत्यप्स्विति । विद्यते ह्यत्रान्तरमिति । अथ विज्ञायते ऽविद्यमाना अन्तरा येषामिति न दोषो भवति । यथा न दोषस्तथास्तु । अथवा पुनरस्तु अविद्यमानमन्तरं येषामिति । ननु चोक्तम् । अवग्रहे संयोगसंज्ञा न प्राप्नोति अप्सुइत्यप्स्विति । विद्यते ह्यत्रान्तरमिति । नैव दोषो न प्रयोजनम् । संयोगसंज्ञायां सहवचनं यथान्यत्र * संयोगसंज्ञायां सहग्रहणं कर्तव्यम् । हलोनन्तराः संयोगः सहेति वक्तव्यम् । किं प्रयोजनम् । सहभूतानां संयोगसंज्ञा यथा स्यादेकैकस्य मा भूदिति । यथान्यत्र । तद्यथा । अन्यत्रापि यत्रेच्छति सहभूतानां कार्यं करोति तत्र सहग्रहणम् । तद्यथा । सह सुपा । उभे अभ्यस्ते सहेति । किं च स्यात् । यद्येकैकस्य संयोगसंज्ञा स्यात् । इह निर्यायात् । निर्वायात् । वान्यस्य संयोगादेरित्येत्वं प्रसज्येत । इह च संहृषीष्टेति । ऋतश्च संयोगादेरितीट् प्रसज्येत । इह च संह्रियतइति । गुणोऽर्तिसंयोगाद्योरिति गुणः प्रसज्येत । इह च दृषत्करोति समित्करोतीति संयोगान्तस्येति लोपः प्रसज्येत । इह च शक्ता वस्तेति । स्कोः संयोगाद्योरन्ते चेति लोपः प्रसज्येत । इह च निर्यातो निर्वातः । संयोगादेरातो धातोरिति निष्ठानत्वं प्रसज्येत । नैष दोषः । यत्तावदुच्यते इह तावन्निर्या-

---

मध्ये येषामन्ये वर्णा अविद्यमाना इत्याधेयस्य निषेधो न त्वाधारस्य । अवग्रहइति । अर्धमात्राकालो ऽवग्रह इष्यते । अर्धमात्राकालं स्थित्वा वर्णान्तरं समुच्चार्यते तत्र गुरोरनृत इति प्लुतो न भवेत् । नैव दोष इति । दोषनिवृत्तये संज्ञा क्रियते प्रयोजनाभिनिर्वृत्तये वा इह चोभयाभावः । अधिकरणावृत्तेर्दूराद्धूतसम्बन्धाभावात् । विचार्यमाणानामित्यादौ तु वाक्यस्य टेरित्यनुवर्तते न गुरोरनृत इति । अप्सव्यशब्दे दोष इति चेद् । नैवंविधे विषये प्रकृत्यवयवस्यावग्रहं पदकाराः कुर्वन्ति । अप्सुयोनिरित्यादावपि समासघटकपदानामन्तो ऽवगृह्यते इति सुशब्दात्पूर्वस्य नास्त्यवग्रहः । संयोगसंज्ञायामिति । वृद्धिसंज्ञावदानन्तर्यव्यवस्थितानां हलां प्रत्येकं संयोगसंज्ञा प्राप्नोति । किं च स्यादिति । द्वयोरानन्तर्ये एकैकस्यापि संयोगसंज्ञायां गुरुसंज्ञाप्रतिबद्धकार्यसिद्धिरिति प्रश्नः । निर्यायादिति । सति रेफे यकारः संयोगइत्येत्वप्राप्तिः । ननु समुदायस्यापि संज्ञित्वे अचो रहाभ्यां द्वे इति यकारस्य द्विर्वचने कृते कस्मादेत्वं न भवति । यथा निर्ग्लेयादिति । एत्वे कर्तव्ये पूर्वत्रासिद्धमिति द्विर्वचनस्यासिद्धत्वान्नायं दोषः । शक्ते-

---

वर्णोच्चारणेऽर्धमात्राकालस्य नियतत्वात्तदधिकार्धमात्राकालइत्यर्थः । अत एव मात्राकालोवग्रह इति प्रातिशाख्यान्तरैरविरोधः । नैव दोष इत्यादेः सञ्ज्ञाभावे न दोषः सञ्ज्ञायाञ्च न प्रयोजनमित्यर्थ इत्याह दोषनिवृत्तये इत्यादि । अप्सव्यशब्देइति । अप्सुशब्दाद्दिगादियति अचोऽयेनियन्मतुष्वित्यलुक् । प्रकृत्यवयवस्य । तद्धित प्रकृत्यवयवस्य । अत्र च वैदिकसम्प्रदाय एव शरणम् । अन्तोऽवइति । समासे समस्यमानपदान्ते एवावग्रहः । अयमपि वैदिकसंप्रदाय एव । नन्वनन्तरमहणादेकैकस्य सञ्ज्ञा दुर्लभेत्यत आह आनन्तर्येति । एवञ्च तदुपलक्षणमिति भावः । । सञ्ज्ञाप्रतिबन्धेति पाठे कर्मणि घञ् बोध्यः । सञ्ज्ञाप्रतिबद्धेति पाठः सुगम एव । कस्मादिति । बहूनां सांनिधाने ऽविशेषेण द्वयोर्बहूनाञ्च सञ्ज्ञायाः सिद्धान्तयिष्यमाणत्वादिति भावः । परिहरति एत्वइति । पूर्वत्रासिद्धीयमद्विर्वचने इति तु द्विर्वचने कार्ये ऽन्यस्यासिद्धत्वे नेत्यर्थकं न तु द्विर्वचनस्य तदभा-

यात् निर्वायात् । वान्यस्य संयोगादेरित्येत्वं प्रसज्येतेति । नैवं विज्ञायते । संयोग आदिर्यस्य सोयं संयोगादिः संयोगादेरिति । कथं तर्हि । संयोगौ आदी यस्य सोयं संयोगादिः संयोगादेरिति । एवं तावत्सर्वमाङ्गं परिहृतम् । यदप्युच्यते । इह च दृषत्करोति समित्करोति । संयोगान्तस्येति लोपः प्रसज्येतेति । नैव विज्ञायते संयोगोन्तो यस्य तदिदं संयोगान्तं संयोगान्तस्येति । कथं तर्हि । संयोगावन्तौ यस्य तदिदं संयोगान्तं संयोगान्तस्येति । यदप्युच्यते । इह च शक्ता वस्तेति स्कोः संयोगाद्योरिति लोपः प्रसज्येतेति । नैव विज्ञायते संयोगावादी संयोगादी संयोगाद्योरिति । कथं तर्हि । संयोगयोरादी संयोगादी सयोगाद्योरिति । यदप्युच्यते । इह च निर्यातो निर्वात इति संयोगादेरातो धातोर्यण्वत इति निष्ठानत्वं प्रसज्येतेति । नैवं विज्ञायते संयोग आदिर्यस्य सोयं संयोगादिः संयोगादेरिति । कथं तर्हि । संयोगावादी यस्य सोयं संयोगादिः संयो-

---

ति । तकारे झलि परतः ककारः संयोगो भवत्यादिश्चेति लोपप्रसङ्गः । संयोगाविति । कथं वृत्तावुपसर्जनार्थस्य द्वित्वावगतिरिति चेद्, आदिग्रहणसामर्थ्यात् । अन्यथा संयोगादिति वक्तव्यं स्यात् । संयोगातपरो य आकारस्तदन्तस्याङ्गस्यैत्वमित्यर्थलाभात् संयोगावन्ताविति । अत्रापि संयोगस्य लोप इत्येव संयोगेन पदस्य विशेषणात्तदन्तविधौ लब्धेऽन्तग्रहणमाश्रितसंख्याभेदः संयोगो यथा गृह्येतेत्येवमर्थं विज्ञायते । संयोगयोरिति । षष्ठीसमास आश्रीयते इत्यर्थः । संयोगयोरिति तु द्विर्वचननिर्देशः स्कोर्द्वित्वात्तत्समीपयोरपि हलोर्द्वित्वात्कृतः । तेनायमर्थः । झलि परतो यः संयोगः पदान्ते च यः संयोगस्तस्यादिः समीपो यः ककारः सकारश्च तयोर्लोप इति । न चैवं सति शक्ता वस्तेत्यत्र लोपः प्राप्नोति । संयोगादेरात इत्यत्रापि संयोगादात इत्येव संयोगात्परो य आकारस्त

---

वप्रतिपादकमिति भावः । संयोगोभवत्यादिश्चेति । प्रत्येकं सञ्ज्ञापक्षे स्कोः संयोगावयवत्वासम्भवेन षष्ठीसमासासंभवाल्लाघवाच्च कर्मधारयएवेति भावः । आदिशब्दश्च पूर्वभूतसमीपवाची । आदित्वञ्च प्रत्यासत्त्या संयोगत्वाक्रान्तवर्णान्तरापेक्षयैवेति पदान्तांशे संयोगादिग्रहणचारितार्थ्यं बोध्यम् । अन्यथा ह्यर्कयतेरप्रत्यये ऽर्क् इत्यादावन्त्यकस्यापि लोपः स्यात् । कथं वृत्ताविति । अयं पूर्वपक्षो ऽयुक्तः । संयोगस्य द्वित्ववत्त्वेन प्रतीतेरेवाभावात् । संयोगस्वैनवानेकसंयोगप्रतीतेः । न हि वृत्तावनेकबोध उपसर्जनान्नेति भाष्यसंमतम् । सङ्ख्याविशेषानवगमस्यैव भाष्यकृतोक्तत्वात् । नत्वनेकानवगम इति तेनोक्तमिति विभाव्यताम् । संयोगात्परइति । न चाङ्गावयवसंयोगग्रहणायादिग्रहणम् । तत्र यद्यपि दरिद्रातौ न फलम् । आर्धधातुकविवक्षायामन्त्यस्याल्लोपविधानात्तथापि खट्वादिभ्य आचारक्विबन्तेभ्यो लिङि खट्वायादित्यादौ एत्ववारणं फलमिति वाच्यम् । स्यसिच्सूत्रादुपदेशपदानुवृत्त्या घुमास्थाद्यन्यस्यौपदेशिकस्यैव ग्रहणेन नामधातुष्वेत्वाप्रवृत्तेरिति भावः । खट्वादिभ्य आतोधातोरिति सूत्रस्थभाष्यप्रामाण्येनाचारक्विपोभावाच्च । सिद्धान्ते तु निर्यायादित्यादिवारणायाङ्गावयवसंयोगग्रहणाय तदिति बोध्यम् । भाष्ये ( आदीइति ) यद्यपि मुख्यादित्वमुभयोर्व्याहतं तथाप्येक आदिशब्दो गौण इति भावः । पूर्ववद् द्विवचनान्तसमासेन दोषपरिहार इति न भाष्यार्थः । उभयत्रापि द्विवचनोपपादनाय्त आह षष्ठीति । एवञ्च झलंशेपि संयोगादिविशेषणमर्थवद्भवतीति भावः । आदिशब्दश्च नाद्यवयववाची असम्भवादित्याह समीपइति । झलादिविशेष्यस्य संयोगस्योपसर्जनत्वेपि सौत्रत्वाद् वृत्तिः । नच शक्तेत्यत्र व्यपदेशिवद्भावेन स्वस्यापि स्वसमीपत्वेन दोषस्तदवस्थः । आदिग्रहणसामार्थ्याद् व्यपदेशिवद्भावाप्रवृत्तेः वस्तुतस्तु प्रत्येकं सञ्ज्ञेति पक्षो वाच्यवृत्त्या सूत्रान्न लभ्यत एवेति व्युत्पादयितुङ्गूढाशयः पृच्छति । भाष्ये (कथंकृत्वेति ) । तमेवालाभं व्याचष्टे । संयोगेति । एवञ्चान्वर्थसञ्ज्ञाविरोधात्प्रत्येकं वाक्यपरिसमाप्तिन्यायो नाश्रयितुं शक्यत इति व्यर्थं सहेतीति भावः । किं च श्रुतमानन्तर्यं प्रत्येकसञ्ज्ञावादिनोपलक्षणमाश्रयित-

गादेरिति। कथं कृत्वा एकैकस्य संयोगसंज्ञा प्राप्नोति। प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति। तद्यथा। वृद्धिगुणसंज्ञे प्रत्येकं भवतः। ननु चायमप्यस्ति दृष्टान्तः समुदाये वाक्यपरिसमाप्तिरिति। तद्यथा। गर्गाः शतं दण्ड्यन्ताम् अर्थिनश्च राजानो हिरण्येन भवन्ति। न च प्रत्येकं दण्डयन्ति। सत्येतस्मिन् दृष्टान्ते यदि तत्र प्रत्येकमित्युच्यते इहापि सहग्रहणं कर्तव्यम्। अथ तत्रान्तरेण प्रत्येकमितिवचनं प्रत्येकं गुणवृद्धिसंज्ञे भवतः। इहापि नार्थः सहग्रहणेन। अथ यत्र बहूनामानन्तर्यं किं तत्र द्वयोर्द्वयोः संयोगसंज्ञा भवति। आहोस्विदविशेषेण। कश्चात्र विशेषः। समुदाये संयोगादिलोपो मस्जेः *। समुदाये संयोगादिलोपो मस्जेर्न सिद्ध्यति। मङ्क्ता मङ्क्तुम्। इह च निर्ग्लेयात् निर्ग्लायात्। निर्म्लेयात् निर्म्लायात्। वान्यस्य संयोगादेरित्येत्वं न प्राप्नोति। इह च संस्वरिषीष्टेति। ऋतश्च संयोगादेरितीट् न प्राप्नोति। इह च संस्वर्यते इति गुणोर्त्तिसंयोगाद्योरिति गुणो न प्राप्नोति। इह च गोमान् करोति। यवमान् करोतीति। संयोगान्तस्य लोप इति लोपो न प्राप्नोति। इह च निर्ग्लानो निर्म्लान इति संयोगादेरातो धातोर्यण्वत इति निष्ठानत्वं न प्राप्नोति। अस्तु तर्हि द्वयोर्द्वयोः संयोगसंज्ञा। द्वयोर्हलोः संयोगसंज्ञेति चेद्द्विर्वचनम् *। द्वयोर्हलोः संयोगसंज्ञेति चेद् द्विर्वचनं न सिध्यति। इन्द्रमिच्छति इन्द्रीयति। इन्द्रीयतेः सन्। इन्दिद्रीयिषति। नन्द्राःसंयोगादय इति दकारस्य द्विर्वचनं न प्राप्नोति। न वाज्विधेः *।

---

दन्ताद्धातोर्नत्वमिति सिद्धे आदिग्रहणं द्वित्वसंख्याश्रयणार्थम्। कथं कृत्वेति। संयोगसंज्ञाया अन्वर्थत्वात्संयुज्यन्ते ऽस्मिन् वर्णा इति समुदायः संयोग इत्यर्थाश्रयणात्सहग्रहणं न कर्तव्यमित्यर्थः। आहोस्विदिति। द्वयोरित्यस्य विशेषस्यानाश्रयणाद्बहूनामेवेत्यर्थः। यथा पपाचेत्यत्र समुदायस्यैकाचो द्विर्वचनं नावयवस्यैकाचः। यदा तु द्वयोरेव हलोरानन्तर्यं तदा द्वयोर्भवत्येव। हल इति जातौ बहुवचननिर्देशात्। मङ्क्तेति मस्जिनशोर्झलीति नुमि कृते नसजानां संयोगसंज्ञा न तु सजयोरिति सलोपाप्रसङ्गः। निर्ग्लेयादिति। यः संयोगो नासावङ्गादिः यश्चाङ्गादिर्गकारलकारसमुदायो नासौ संयोगः। इन्दिद्रीयिषतीति। अत्र द्वौ संयोगौ नदौ दरौ च। तत्र दकारस्य संयोगादित्वाद् द्विर्वचननिषेधप्रसङ्गः। न वाज्विधेरिति। अजाश्रयः प्रतिषेधविधिरज्विधिः।

---

व्यं विशेषणत्वमेवोचितम्। नत्वे संभवति उपलक्षणत्वस्यान्याय्यत्वात्। किं चाद्यन्तग्रहणसामर्थ्याद् द्विर्वचनान्तेनैव विग्रह इत्यर्थस्य नियमेनालाभः। बहुवचनान्तेनापि संभवादित्याहुः। वस्तुतो ऽन्वर्थसञ्ज्ञा चिन्त्या, तदाश्रयणे घटपटौ संयुज्येते यत्रेत्यादौ संयोगानुयोगिप्रतियोग्यतिरिक्तस्यैवान्यपदार्थतया प्रतीतेर्व्युत्पन्नत्वेन तद्व्यतिरिक्ततद्घटितपदवाक्यरूपसमुदायस्य सञ्ज्ञापत्तावनिष्टापत्तेः। तस्मान्महासञ्ज्ञाकरणं प्राचामनुरोधेनेत्येव न्यायः अत एव भगवता गर्गदण्डनन्यायमाश्रित्य सहग्रहणं प्रत्याख्यातं न तु महासञ्ज्ञये स्यलम्। नन्वविशेषणेत्यस्य द्वयोर्बहूनाञ्चेति नार्थः। अस्याविशेषस्याग्रे वक्ष्यमाणत्वात्। मस्जौ दोषदानस ... क्तश्चात आह द्वयोरित्यस्येति। अत एव भाष्ये समुदाये संयोगादिलोप इति वक्ष्यति। तत्र युक्तिमाह यथेति। भाष्ये पूर्वं धातुरुपसर्गेणेत्याश्रित्य क्वचित् क्वचिच्च वाक्यसंस्कारपक्षाश्रयेण दोषोपन्यासः। हलइति जातावितिं। वस्तुतो हलौ नं हलश्चेत्येकशेषः। स्वरतीतीति सूत्रे ऽनुदात्तानामित्यत्र भाष्ये तथैव वक्ष्यमाणत्वात्। परेऽनन्तराइति। तस्मादित्युत्तरस्येत्यस्योपस्थितेरिति भावः। चन्द्रीयतेः सनोभिधाने यथेष्टं नामधातुर्ष्व

न वा एष दोषः। किं कारणम्। अज्विधेः। न्द्राः संयोगादयो न द्विरुच्यन्ते। अजादेरिति वर्तते। अथ यद्येवं बहूनां संयोगसंज्ञा अथापि द्वयोर्द्वयोः। किं गतमेतदियता सूत्रेण। आहोस्विदन्यतरस्मिन् पक्षे भूयः सूत्रं कर्तव्यम्। गतमित्याह। कथम्। यदा तावद्बहूनां संयोगसंज्ञा तदैवं विग्रहः करिष्यते। अविद्यमानमन्तरमेषामिति। यदा द्वयोर्द्वयोः संयोगसंज्ञा तदैवं विग्रहः करिष्यते। अविद्यमाना अन्तरा येषामिति। द्वयोश्चैवान्तरा कश्चिद्विद्यते न वा। एवमपि बहूनामेव प्राप्नोति। यान् हि भवानत्र षष्ठ्या प्रतिनिर्दिशति एतेषामन्येन व्यवायेन भ-

---

अजादेरिति कर्मधारयः तेनाच आदेः परेऽनन्तरा न्द्रा न द्विरुच्यन्ते इन्द्रशब्दे तु दकारो नकारेण व्यवहितत्वाद् द्विरुच्यत एव। अविद्यमानमिति। बहूनां चानन्तरत्वे समुदायद्विर्वचनवद्बहूनामेव संयोगसंज्ञा न द्वयोर्द्वयोः। अविद्यमाना इति। मध्ये य आधेयः स द्वयोर्द्वयोरेव मध्यं भवतीति संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वाद्बहुषु द्वयोर्द्वयोः संयोगसंज्ञा भवतीति पक्षः। द्वयोश्चैवान्तरेति। अन्तरान्तरेण युक्त इति द्वितीया कस्मादत्र न भवति। उच्यते। यदा मध्यापेक्षया नियतावधिरूपत्वं विवक्ष्यते। त्वां च मां चान्तरा कमण्डलुः। अग्नी अन्तरा भवखदिरावन्तरेति तदा द्वितीया। यदा तु नियतावधित्वं न विवक्ष्यते अपि तु संबन्धमात्रं तदा षष्ठ्येव भवति। तदा हि न ज्ञायते किं तयोरेवावधित्वमुतान्यसहितयोरित्यवधिनियमाभावाद् द्वितीयाया युक्तग्रहणादनियतावधिविवक्षाविषयाया अभावः। यान् हीति। एषामिति बहुवचननिर्देशादिति न बोद्धव्यम्। बहुत्वस्याविवक्षणात्। अन्यथा शिक्षेत्यादौ द्वयोर्न स्यात्। तस्माद्योसावन्तरेण स द्वयोर्भवति न वेति यदुक्तं तत्रोच्यते। यदा द्वयोर्द्वयोरन्तरा न भवति तदा बहवोऽनन्तरा

---

ति द्वितीयैकाचो द्वित्वं नकारसहितस्यैव। आद्यवयवाचः परत्वाभावेनतन्निषेधाप्रवृत्तेरिति बोध्यम्। बहूनां चानिवरम्वइति। बहूनाञ्चानन्तरत्वे इति क्वचित्पाठः। नन्वत्र विग्रहे कमित्यादौ कमयोः संयोगसञ्ज्ञा स्यात्तयोर्मध्ये वर्णशून्याच्छद्राभावादिति चेन्न। वर्णशून्यकालव्यवायमात्रवारणे फलाभावात्सामर्थ्येन सवर्णकालव्यवायोऽपि व्यावर्त्यत इत्यदोषः। द्विर्वचनवदिति। एषामिति बहुवचनादिति न भ्रमितव्यम। तस्य सूत्रे हल इतिवत्सत्वात्। अन्तराशब्देन विग्रहेऽपि तत्त्वाच्च। अन्यथा द्वयोर्न स्यात्। किं त्वन्तरशब्देन विग्रहाद्बहूनां समवधाने तेषामप्यनन्तरत्वादिति भाव। संसर्गविप्रयोगावत्र भाष्ये दर्शयति। [ द्वयोश्चेति ]। विद्यतइत्यन्तं दृष्टान्तार्थम्। अवत्सा धेनुरित्यादौ विप्रयोगोऽपि विशेषावगतिहेतुर्दृष्टः। अन्तरा विद्यतइति न विद्यतइति वा यत्तद् द्वयोरेवेत्यर्थः। नियतावधिरूपत्वेति। अवधित्वं हि अन्यासहितत्वे एव तयोर्नियमेन भवति। अन्यसाहित्ये तु न तत्रावधित्वस्य नियमेन प्रतीतिरवधित्वविवक्षायामेव च द्वितीयेति भावः। यस्य च नियमेनावधित्वं तस्यैवावधित्वविवक्षाशब्देनेति तात्पर्यम्। नियतत्वमन्यासहितत्वं तद्विशिष्टत्वेन यावधिरूपता सा विवक्षिता यदा भवतीत्यक्षरार्थः। अन्यथा अवधित्वविवक्षायां द्वितीया तत्त्वविवक्षायां षष्ठीत्यर्थस्यैव शब्दतो लाभेन नियतेति कथनमधिकं स्यादिति बोध्यम्। युक्तग्रहणादिति। न च तदभावेऽन्तरान्तरेणशब्दाभ्यां द्वितीयापत्तिः। तयोरव्ययत्वेन विशेषाभावात्। न च प्रथमाबाधनेन सपूर्वायाः प्रथमाया इत्यस्याप्रवृत्त्यर्थम। व्यवस्थितविभाषया तस्य सुपरिहरत्वात्। तस्माद्युक्तग्रहणं सम्बन्धविशेषस्य प्रतिपादनाय अवधित्वस्य प्रतियोगित्वस्य वा। तेन प्रयोगमन्तरेणास्यापि सिद्धम्। एवञ्च सम्बन्धमात्रविवक्षायां षष्ठ्येवेति भावः। ननु भाष्ये द्वयोरिति षष्ठीद्विर्वचननिर्दिष्टस्य द्वित्वाद्यानिति बहुवचननिर्देशोऽनुपपन्न इति चेन्न। प्रकृते द्वयोरित्यनेन न केवलौ वर्णौ निर्दिष्टौ। तथा सति तयोरेवावधित्वे द्वितीयापत्तिः। किं त्वन्यसहितावपि। अत एव षष्ठी। एवञ्च त्रयाणां समवधाने द्वयोः समुदाययोरवधित्वविवक्षयैव द्वयोः समुदाययोरनन्तरत्वे तत्समुदायवर्त्तिहलां बहुत्वात्तदुपपत्तिः। अनन्तरा इत्यनेन च न विद्यते अन्तरा यौ वर्णौ तौ यौ च समुदाया-

वितव्यम् । अस्तु तर्हि समुदाये संज्ञा । ननु चोक्तं समुदाये संयोगादिलोपो मस्जेरिति । नैष दोषः । वक्ष्यत्येतत् । अन्त्यात्पूर्वो मस्जेर्मिदनुषङ्गसंयोगादिलोपार्थमिति । अथ वा ऽविशेषेण संयोगसंज्ञा विज्ञास्यते द्वयोरपि बहूनामपि । तत्र द्वयोर्या संज्ञा तदाश्रयो लोपो भविष्यति । यदप्युच्यते । इह निर्ग्लेयात् । निर्ग्लायात् । निर्म्लेयात् । निर्म्लायात् । वान्यस्य संयोगादेरित्येत्वं न प्राप्नोति । अङ्गेन संयोगादिं विशेषयिष्यामः । अङ्गस्य संयोगादेरिति । एवं तावत्सर्वमाङ्गं परिहृतम् । यदप्युच्यते । इह च गोमान् करोति यवमान् करोतीति । संयोगान्तलोपो न प्राप्नोतीति । पदेन संयोगान्तं विशेषयिष्यामः । पदस्य संयोगान्तस्येति । यदप्युच्यते । इह च निर्ग्लानो निर्म्लान इति संयोगादेरातो धातोर्यण्वत इति निष्ठानत्वं न प्राप्नोतीति । धातुना संयोगादिं विशेषयिष्यामः । धातोः सं-

---

इति तेषामेव प्राप्नोति । यदा हि बहूनां मध्ये भिन्नजातीयो भवति तदा मा भूत् । तदभावे तु प्रवर्तितव्यमेव बहूनां संज्ञया समुदायद्विर्वचनवदित्यर्थः । अन्त्यात्पूर्व इति । तच्चानुषङ्गलोपार्थमवश्यं वक्तव्यम् । अन्त्यादचः परे नुमि सत्यनुपधात्वान्मग्न इत्यत्र नलोपो न स्यात् । कृतेपि संयोगादिलोपे तस्यासिद्धत्वादनुपधात्वमेव नकारस्य । अविशेषेणेति । बहुष्वनन्तरेषु द्वयोर्द्वयोरपि भवति बहूनामपीत्ययमिदानीमविशेषः । कार्यार्थत्वात्संयोगसंज्ञाया विरोधाभावादेकया संज्ञया सर्वेषामनुग्रहणासिद्धया द्विर्वचनेन वैधर्म्यादविशेषेणेत्युक्तम् । बहूनां संनिधौ बहूनामेव संयोगसंज्ञेत्यस्मिन् पक्षे आश्रीयमाणे मस्जेर्दोषोन्त्यात्पूर्व इति परिहृतः । शेषान् दोषान् परिहर्तुमाह यदप्युच्यतइति । पाठक्रमादार्थक्रमो बलीयानिति मस्जेरित्यस्यानन्तरमिदं द्रष्टव्यम् । निर्ग्लेयादित्यादिषु यद्यपि त्रयो हलः संनिहितास्तथापि कार्यार्थत्वात्संज्ञायास्त्रिषु कार्याभावादङ्गपदधात्ववयवस्य संयोगस्य तेषु तेषु लक्षणेष्वाश्रितत्वात्समुदाये कार्याभावे चावयवानां स्वका

---

वनन्तरा न विद्यते तौ च गृह्यन्तएकशेषादिति न दोषः । तत्सर्वमभिप्रेत्याह यदा द्वयोर्द्वयोरिति । द्व्यवयवकसमुदाययोरित्यर्थः । यान् वर्णान् द्वयोः समुदाययोरित्यर्थकषष्ठ्या प्रतिनिर्दिशतीति भाष्यार्थ इति भावः । अनन्तरा इत्यस्यात्र पक्षे व्यावर्त्यं दर्शयन् पूर्वोक्तमर्थं दृष्टान्तेनोपपादयितुमाह यदाहि बहूनामिति । न च सृष्ट्वेत्यादौ रेफसकारयोर्वर्णयोरन्तरा कस्य चित्सत्त्वेपि सरौ रषौ चेति समुदायौ तयोश्चान्तरा न कश्चिदिति तेषां संयोगत्वं स्यादिति वाच्यम् । वर्णयोरन्तरा विद्यमानत्वेनानन्तरत्वाभावात् । सर्वविधाऽनन्तरत्वस्यैव तन्निमित्तत्वादित्याहुः । ( अनुषङ्गो ) नकारस्तल्लोपो ऽनिदितामित्यनेन । बहूनामपीति । न्यायतः सूत्रात्सम्भवमात्रेणेदमुक्तम् । न तु फलोदाहरणमस्य न्याय्यमस्ति । ध्वनितञ्चेदमङ्गेन संयोगादिमिति ग्रन्थेन भाष्ये । ननु द्विर्वचनन्यायेन समुदायस्यैव संज्ञा स्यादिति कथमेतत्पक्षोत्थानमत आह कार्येति । द्विर्वचनं हि श्रवणार्थमेव न शास्त्रीयकार्यार्थम् । एकस्याचो बह्ववयवत्वं युगपद्विरुद्धञ्च । एकेन द्वित्वेन सर्वानुग्रहश्चेति वैषम्यम् । ननु पक्षान्तरेण व्यवधानादासत्त्यभावादित्यत आह पाठेति । शब्दस्यार्थप्रत्यायनाङ्गत्वेन गुणत्वात्तदीयः क्रम आर्थक्रमविरोधे दुर्बल इति भावः । अङ्गपदधात्ववयवेति । संयोगादेरित्यादावावयन्तशब्दयोरवयववाचितयेति भावः । अयमाशयः । अङ्गादेरादावन्ते वा व्यञ्जनत्रयाभावात् त्रयाणां फलाभावात्संज्ञाप्राप्तौ कथं द्वयोर्न स्यादिति । यद्यपि सामानाधिकरण्यान्वयेपि अङ्गाद्यवयवस्यैव संयोगस्याश्रयणं नान्यस्येति अङ्गेन संयोगादिं विशेषयिष्याम इत्यनुपपन्नं तथापि संयोगरूपमादिमङ्गेन परिच्छेत्स्यामः । अङ्गाद्यवयवसंयोगस्यैव बहुव्रीहिणाश्रयणमित्यर्थ इति न दोषः । एतञ्च बहूनामपीत्याश्रयणे

योगादेरिति। स्वरानन्तर्हितवचनम् *। स्वरैरनन्तर्हिता हलः संयोगसंज्ञा भवन्तीति वक्तव्यम्। किं प्रयोजनम्। व्यवहितानां मा भूत्। पचति पनसम्। ननु चानन्तरा इत्युच्यते तेन व्यवहितानां न भविष्यति। दृष्टमानन्तर्यं व्यवहितेपि*। व्यवहितेप्यनन्तरशब्दो दृश्यते। तद्यथा। अनन्तराविमौ ग्रामावित्युच्यते। तयोश्चैवानन्तरा नद्यश्च पर्वताश्च भवन्तीति। यदि तर्हि अन्तरशब्दो व्यवहितेपि भवति आनन्तर्यवचनमिदानीं किमर्थं स्यात्। आनन्तर्यवचनं किमर्थमिति चेदेकप्रतिषेधार्थम् * एकस्य हलः संयोगसंज्ञा मा भूदिति। किं च स्यात्। यद्येकस्य हलः संयोगसंज्ञा स्यात्। इयेप। उवोष। इजादेश्च गुरुमतोनृच्छ इत्याम् प्रसज्येत। न वा ऽतज्जातीयव्यवायात् *। न वा एष दोषः। किं कारणम्। अतज्जातीयस्य व्यवायात्। अतज्जातीयकं हि लोके व्यवधायकं भवति। कथं पुनर्ज्ञायते। अतज्जातीयकं हि लोके व्यवधायकं भवतीति। एवं हि कं चित् कश्चित्पृच्छति अनन्तरे एते ब्राह्मणकुले इति। स आह। नानन्तरे। वृषलकुलमनयोरन्तरेति। किं पुनः कारणं क्व चिदतज्जातीयकं हि लोके व्यवधायकं भवति क्व चिन्न। सर्वत्रैव ह्यतज्जातीयकं व्यवधायकं भवति। कथमनन्तराविमौ ग्रामाविति। ग्रामशब्दोयं बह्वर्थः। अस्त्येव शालासमुदाये वर्तते। तद्यथा, ग्रामो

---

र्यारम्भाद् द्वयोरेव संज्ञा प्रवर्ततइति भाष्यार्थः। व्याख्यानान्तरमत्र क्लिष्टत्वान्नोक्तम्। पचति पनसमिति। हल इति वचनाददा सह सकारमकारयोर्मा भूत्संज्ञा तयोरेव तु प्राप्नोति। ततश्च सलोपप्रसङ्गः। एकप्रतिषेधाथमिति। अनन्तरा इत्यनेन संज्ञाया विषयो निर्दिश्यते। यत्रानन्तरव्यवहारस्तत्र संज्ञा न चैकाकिन्यनन्तरव्यवहार इति भाव। एकप्रतिषेधस्य च प्रयोजनम् इयेषेत्यादाविजादेरित्यामो निवृत्तिः। गुरुमद्वचनमियायेत्यादिनिवृत्त्यर्थं स्यात्। वृषलकुलमिति। यद्यपि ब्राह्मणकुलमपि तयोर्व्यवधायकं

---

फलाभाव इति स्पष्टमेवोक्तम। क्लिष्टकल्पनया तादृशसंयोगानयनन्तु नानभिधानादित्याशयः। अदादिषु षस स्वप्ने इत्येव पाठो न तु षस सस्ति स्वप्नइति। एतद्भाष्यप्रामाण्याऽर्जत्तिरत्यादिसूत्रस्थभाष्यप्रामाण्याच्चेति बोध्यम्। व्याख्यानान्तरमिति। पाठक्रमाबाधायैवं व्याचष्टे। न प्राप्नोतीत्यत्रेतिशब्दो यस्मादर्थ उत्तरान्वयी यस्मादङ्गेन संयोगादिर्विशेष्यते ऽङ्गावयवः संयोगो गृह्यते इत्यर्थः। एवञ्च बहूनामेव संयोगत्वे यः संयोगो नासावङ्गावयवो यश्चाङ्गावयवो नासौ संयोगस्तस्मादेत्वं न प्राप्नोतीति यद्यपि तदप्यसत्। यतो ऽविशेषेण संज्ञोच्यते इति शेष इति तत क्लिष्टम्, शेषपूरणात्। इतेः स्वरसतो वाक्यसमाप्त्यर्थतायाः प्रतीयमानत्वाच्च। एवन्तावत्सर्वमाङ्गं परिहृतमित्यस्यास्वारस्याच्च। हलइतीति। तद्धि असावित्यादौ स्कोरिति सलोपवारणायावश्यकमिति भावः। नचेति। आनन्तर्यस्य सप्रतियोगिकत्वादिति भावः। प्रकृते चान्यस्य प्रतियोगिनो ऽनुपादानादुपस्थितो हलेव प्रतियोगित्वेनाश्रीयत इति बोध्यम्। भाष्ये (उवोषेति) प्रसङ्गोच्चारितम। तस्य तस्य विकल्पितात्मकत्वात्। उवोखेति कवर्गद्वितीयान्तो वा पाठः। इयायेति। इण् लुइत्यस्यामवस्थायां व्यपदेशिवद्भावादित्वमस्ति गुरुमत्त्वन्तु न। न चेयङि कृते गुरुमदिजादित्वादाम स्यादिति वाच्यम्। लिड्धातुसंनियोगेन संपन्नस्य गुरुमदिजादित्वस्य तद्विघातकत्वाभावादिति भावः। कुलमत्र गृहम्। ब्राह्मणकुलमपीति। तत्तद्रूपेण ग्रहणे तस्यापि विजातीयत्वादिति भावः। भाष्ये [ अजयोरन्तरेति ]। षष्ठ्युपादानादन्यसहितयोरवधित्वसूचनात्तद्रूपेणाग्रहणबोधनाद् ब्राह्मणकुल-

दग्ध इति । अस्ति वाटपरिक्षेपे वर्तते । तद्यथा, ग्रामं प्रविष्ट इति । अस्ति मनुष्येषु वर्तते । तद्यथा, ग्रामो गतो ग्राम आगत इति । अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते । तद्यथा, ग्रामो लब्ध इति । तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते तमभिसमीक्ष्यैतत्प्रयुज्यते ऽनन्तराविमौ ग्रामाविति । सर्वत्रैव ह्यतज्जातीयकं व्यवधायकं भवति ।

मुखनासिकावचनोऽनुनासिकः ॥ ८ ॥ किमिदं मुखनासिकावचनम् । मुखं च नासिका च मुखनासिकम् । मुखनासिकं वचनमस्य सोयं मुखनासिकावचनः । यद्येवं, मुखनासिकवचन इति प्राप्नोति । निपातनाद्दीर्घत्वं भविष्यति । अथ वा मुखनासिकमावचनमस्य सोयं मुखनासिकावचनः । अथ किमिदमावचनमिति । ईषद्वचनमावचनमिति, किं चिन्मुखवचनं किं चिन्नासिकावचनम् । मुखद्वितीया

---

तथापि भिन्नजातीयमव्यवधायकमिति यदुक्तं तदनेन निवर्त्यते । ग्रामशब्दोयमिति । केचिदर्थभेदेन शब्दभेदमिच्छन्ति प्रत्यभिज्ञानं तु सामान्यनिबन्धनम् । अन्ये तु एकशब्दत्वं तत्र चानेकशक्तियोग एकशक्तित्वं वेति दर्शनविकल्पः । तत्र यदा एकशब्दत्वपक्षस्तदा तद्यः सारण्यके इति भाष्यं शक्तिभेदादुपचरितभेदाश्रयम् । भेदपक्षे तु ग्रामशब्दोयं बह्वर्थ इति भाष्यम् । अभिन्नसामान्यनिमित्तकत्वाध्यवसायाश्रयम् । तद्यः सारण्यकइति । ततश्च ग्रामशब्दार्थे नदीनां पर्वतानां चान्तर्भावाद्व्यवधायकत्वाभावादानन्तर्यं ग्रामनद्योरुच्यते । ग्रामे नाध्येयमित्यत्र तु ग्रामशब्दो वाटपरिक्षेपे वृत्तिः । शुचौ देशेऽध्ययनप्रतिपादनतात्पर्यात् यतश्च सीमन्यधीयत एव ॥७॥

मुखनासिकावचनोऽनुनासिकः ॥ प्राण्यङ्गत्वात्समाहारद्वन्द्वे ह्रस्वत्वेन भाव्यम् । अवचनमिति नञ्समासाश्रयणे ऽर्थो न संगच्छते इति प्रश्नः । किमिदमिति । निपातनादिति । प्रसङ्गेनास्य लौकिकशब्दस्य साधुत्वं ज्ञाप्यते । निपातनानां च बाधकत्वपक्षे मुखनासिकवचनइति न भाव्यमबाधकत्वपक्षे तु भाव्यमेव । ईषद्वचनमिति । भागस्य-

---

स्याव्यवधायकत्वमेवेत्यन्ये । भिन्नजातीयेति । तयोश्चान्तरा नद्यश्च पर्वताश्च भवन्तीति भाष्येणेत्यर्थः । (ग्राम शब्दो ऽयमि) त्यस्य [तद्यः सारण्यक] इत्यस्य चाविरोधायाह केचिदिति । अन्यायश्चानेकार्थत्वमिति तदाशयः । सामान्यञ्च ग्रामशब्दत्वादि । अन्ये त्विति । व्यक्तिभेदकल्पनायां गौरवमिति तदाशयः । तत्र चेति । निरूपकभेदाच्छक्तिभेद इति भावः । एकेति । समवायैकत्वनये रसोरूपवानित्यादिप्रयोगवदन्यार्थबोधकाले ऽन्यार्थबोधो वारणीयः । तदर्थसंबन्धेन शक्त्यग्रहात् । तत्तदर्थविशिष्टशक्तिभेदेन च नानार्थत्वव्यवहार इति भावः । तत्र यदेति । एकशक्तित्वपक्षे त्वर्थभेदादुपचरितभेदाश्रयणमिति बोध्यम् । ग्रामशब्दोयं बह्वर्थ इति तु मुख्यार्थमेव । अत्र सर्वार्थनिरूपितवृत्तीनां वर्त्तते इत्येकशब्दबोध्यत्वेनाभेदबोधनादेकशक्तित्वपक्षो भाष्यबोधितः । तत्र वर्त्तनक्रियास्तिक्रियायाः कर्त्री । शालासमुदायादौ ग्रामशब्दस्य वृत्तिरस्तीत्यर्थः । वाटपरिक्षेपो नाम शालासमुदायरक्षणाय सर्वतो मार्गप्रतिरोधकं यत्परितः क्षिप्यते तदुच्यते । सारण्यकससीमकवृत्तिस्त्वत्र न गृह्यते इत्याह शुचाविति । सीमनीति च ॥ ७ ॥

मुखना ॥ प्राण्यङ्गत्वादिति । एतेनेतरेतरयोगद्वन्द्वे रूपसिद्धिरित्यपास्तम् । अर्थइति । अभिमतोर्थ इत्यर्थः । सौत्रत्वादिति कुतो नोक्तमित्यत आह प्रसङ्गेनेति । अबाधकत्वेति । पक्षे स्विस्येनाबाधकत्वस्वीकर्तृवृत्तिमतमसङ्गतमित्युक्तम् । भाष्यकृदसंमतरूपापत्तेः । बाधकान्येव निपातनानीतिसर्वादिसूत्रे भाष्योक्तेः । अस्मिन् पक्षे इति । आङ्ग्राहितस्येति शेषः । वस्तुत आद्यपक्षैकवाक्यतया आ-

वा नासिका वचनमस्य सोयं मुखनासिकावचनः । मुखोपसंहिता वा नासिका वचनमस्य सोयं मुखनासिकावचनः। अथ मुखग्रहणं किमर्थम्। नासिकावचनोनुनासिक इतीयत्युच्यमाने यमानुस्वाराणामेव प्राप्नोति। मुखग्रहणे पुनः क्रियमाणे न दोषो भवति। अथ नासिकाग्रहणं किमर्थम्। मुखवचनोनुनासिक इती-

———— ————

मुखेनोच्चारणाद्भागस्य नासिकया। अस्मिन् पक्षे मुखनासिकवचनमित्यपि भवति। यो हीषदुच्यते स उच्यत एव। यथा ईषच्छुक्लोपि शुक्ल एव। मुखाद्वितीयेति। मुखसहायेत्यर्थः। तत्र नासिका मुखसाहचर्यान्मुखशब्देनोच्यते। मुखं च तन्नासिका च मुखनासिका सा वचनमस्येति। मुखोपसंहितेति। मुखस्य च नासिकायाश्च यदन्तरालं स्थानान्तरमेवानुनासिकस्य दर्शयति। तत्र सामीप्यान्मुखं च तन्नासिका चेत्युभाभ्यामन्तरालं व्यपदिश्यते पदसंस्कारपक्षे तु मुखनासिकापदनिरपेक्षं वचनमित्येतत्पदं लिङ्गसर्वनामनपुंसकाश्रयेण संस्क्रियते। पश्चात्स्त्रीत्वस्य पदान्तरसम्बन्धेन प्रतीयमानत्वाद् बहिरङ्गत्वान्ङीप्प्रत्ययो न भवति। यदा तु स्त्रीत्वाश्रयेण वचनीतिपदं व्युत्पाद्यते तदा मुखनासिकावचनीक इत्येव भवति। अत्र चानेकदर्शनम्। अनुनासिकस्य पूर्वः परो वा भागो मुखेनोच्चार्यते भागो नासिकया। तत्र नासिकावचनभागानुरागवशाद् मुखवचनोपि भागो नासिकावचन इव लक्ष्यते। यथा संयन्तेत्यत्रानुनासिकयकारानुरागाद् अकारोनुनासिकइव प्रतिभाति। अत्र च प्रासादवासिन्यायो नास्ति भागस्यैव मुखेन नासिकया चोच्चारणान्न तु समग्रस्य। अन्येषां तु दर्शनं मुखनासिकान्तरालं स्थानान्तरमेवानुनासिकस्येति। अत्रापि नास्ति प्रासादवासिन्यायः। यदा तु सर्व एव वर्णो मुखेन नासिकया चोच्चार्यते तदा प्रासादवासिन्यायेन भाष्यकारो मुखग्रहणं प्रत्याचष्टे। यथा भ्राष्ट्रेणोखया चापक्वः सूप उभाभ्यां व्यपदिश्यते। यमानुस्वाराणामेवेति।

———— ————

ङरहितैतत्पदवचनपदाभ्यां समासस्यानभिधानमेवेत्याहुः। ननु भागस्य मुखाद्युच्चार्यत्वेन मुखनासिकं वचनमुच्चारणकरणं यस्य वर्णस्येत्यर्थको मुखनासिकवचन इति प्रयोगस्तत्रासङ्गतोऽत आह योहीति। सहायेति। अव्युत्पन्नो द्वितीयशब्दः सहायवाचीत्यर्थः। शाकपार्थिवादित्वादुत्तरपदलोपे शब्दानित्यत्वापत्तिरत आह तत्रेति। परन्त्विदं चिन्त्यम्। भाष्यकृता एवं रीत्या तत्प्रत्याख्यानात्। मुखस्य चेति। उपशब्दस्य सामर्थ्यादिति भावः। यद्यपि वचनशब्दे कर्मणि ल्युटि मुखनासिकेनावचने मुखनासिकया वचन, इति वा तत्पुरुषोपि वक्तुं शक्यस्तथापि कर्मणि तस्य बाहुलकलभ्यत्वात्करणे ल्युटा बहुव्रीहिरेवाश्रितो भाष्ये। तत्रान्त्ययोर्नासिकाशब्दसामानाधिकरण्यात्स्त्रीत्वविशिष्टस्यैव करणत्वेन ल्युटि ङीपि नद्यृतश्चेति कबापत्तिरत आह पदसंस्कारेति। भागस्य मुखेनोच्चारणानुभवादाह तत्रेति। तस्यादित इति सूत्रस्वरसाद्वर्णानां सखण्डत्वमित्याशयः। ये तु तत्तद्देशावच्छिन्नवाय्वभिघातस्य तत्तद्वर्णजनकत्वात्स्थानानां करणत्वमेव। स्थानव्यवहारस्तु वर्णजनकवायुसंयोगाधारत्वाद्वर्णाधारत्वमारोप्य। अत एवोत्तरसूत्रे भाष्ये अस्यन्त्यनेन वर्णानित्यास्यमिति करणे व्युत्पत्तिर्दर्शितेति वदन्ति। तन्मते प्रासादवासिदृष्टान्तासंगतेराह भ्राष्ट्रेण चेति। एतेन कण्ठादिकं तु स्थानं नासिका तु करणमिति मन्दोक्तमपास्तम्। अत एवात्र सूत्रे हरिणा। स हि वर्णो न मुखेनैव नापि नासिकयैव चात्मवृत्तिं लभते किं तु वायुनानुपरतशक्तिना ऽन्यतरकरणमभिहत्यान्यतरकरणे ऽभिहन्यमाने आत्मव्यक्तिं लभते इत्युक्तम्। यमो नाम वर्गपञ्चमे परे वर्गाद्यचतुष्टयान्यतमसदृशो वर्णः। आदितश्चत्वारो वर्णा इति विवरणेपि चतुःशब्दस्य चतुःसदृशे लक्षणा बोध्या। अत एवायोगवाहत्वप्रतिपादकहयवरट्सूत्रस्थभाष्याविरोधः। न्यायावृतारेति। कचटतपानामवेत्येवकारोप्यत्रैव पक्षे नासिकाया आस्यबाह्यत्वपक्षे च बोध्यः। अप्रतिपत्तिरिति। अत्र विड्वनावमिइति वक्तुं शक्यम्। यरोऽनुनासिक इत्यत्र स्वप्रतिपत्तिः। सत्र अमि अम्येत्युक्ते सकलदासिद्धेः। चकारलोपेति। निष्ठावत्वकुत्वयोरसिद्धत्वात् पचेरनुदात्तोप-

त्युच्यमाने कचटतपानामेव प्राप्नोति । नासिकाग्रहणे पुनः क्रियमाणे न दोषो भवति। मुखग्रहणं शक्यमकर्तुम्। केनेदानीमुभयवचनानां सिद्धं भविष्यति। प्रासादवासिन्यायेन। तद्यथा। केचित्प्रासादवासिनः। केचिद् भूमिवासिनः। केचिदुभयवासिनः। तत्र ये प्रासादवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन। ये भूमिवासिनो गृह्यन्ते ते भूमिवासिग्रहणेन। ये तूभयवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च। एवमिहापि केचिन्मुखवचनाः केचिन्नासिकावचनाः केचिदुभयवचनाः। तत्र ये मुखवचना गृह्यन्ते ते मुखग्रहणेन। ये नासिकावचना गृह्यन्ते ते नासिकाग्रहणेन। ये उभयवचना गृह्यन्ते ते मुखग्रहणेन नासिकाग्रहणेन च। भवेदुभयवचनानां सिद्धम्। यमानुस्वाराणामपि प्राप्नोति। नैव दोषो न प्रयोजनम्। इतरेतराश्रयं तु भवति। का इतरेतराश्रयता। सतोनुनासिकस्य संज्ञया भवितव्यम्। संज्ञया चानुनासिको भाव्यते तदितरेतराश्रयं भवति। इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते। अनुनासिकसंज्ञायामितरेतराश्रये उक्तम् *। किमुक्तम्। सिद्धं तु नित्यशब्दत्वादिति। नित्याः शब्दाः नित्येषु च शब्देषु सतोनुनासिकस्य संज्ञा क्रियते। न संज्ञया अनुनासिको भाव्यते। यदि तर्हि नित्याः शब्दाः। किमर्थं शास्त्रम्। किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम्। निवर्तकं हि शास्त्रम्। कथम्। आङ्स्मायविशेषेणोपदिष्टोऽननुनासिकस्तस्य सर्वत्राननुनासिकबुद्धिः प्रसक्ता तत्रानेन निवृत्तिः क्रियते। छन्दस्यचि परत आङो ऽननुनासिकस्य प्रसङ्गेनुनासिकः साधुर्भवतीति।

**तुल्यास्यप्रयत्नं सवर्णम् ॥ ९ ॥** तुलया सम्मितं तुल्यम्। आस्यं च

---

प्रासादवासिन्यायानवतारपक्षे इति भावः तत्र। विधिप्रदेशेषु यमानुस्वारा एवादेशाः स्युः। विड्वनोरनुनासिकस्यादित्यादिषु त्वनुवादप्रदेशेषु यमानुस्वाराणामसम्भवादप्रतिपत्तिः स्यात्। कचटतपानामिति। पक्वमिति चकारलोपप्रसङ्गः। ओदनपगित्यत्रानुनासिकस्य क्विझलोः क्ङितीति दीर्घप्रसङ्गः। प्रासादवासिन्यायेनेति। अयं न्यायः क्रियाशब्देष्वेव न रूढिशब्देषु। नैव दोषइति। अनुवादे तावद् यमानुस्वाराणामसम्भव एव विधावप्यान्तरतम्यान्मुखवचनस्योभयवचनो भविष्यति न तु केवलो नासिकावचनः ॥८॥

तुल्यास्यप्रयत्नं सवर्णम् ॥ चत्वारोत्र पक्षाः सम्भवन्ति। द्वन्द्वगर्भो बहुव्रीहिः। त्रिपदो बहुव्रीहिः। तुल्यास्यशब्दयोस्तत्पुरुषस्ततो बहुव्रीहिः। आस्यप्रयत्न-

---

देशवनतीत्यनेनोक्ति भावः। ननु प्रासादवासिन्यायेन मुखग्रहणप्रत्याख्यानवत्सूत्रमेव कुतो न प्रत्याख्यायते इत्यत आह अयमिति। योगेन ह्युभयग्रहणं स रूढिषु नास्तीत्यर्थः। अनुनासिकशब्दस्य च रूढिशब्दत्वम्। तस्य क्रियाशब्दत्वन्तु वक्तुमशक्यम्। अनु पश्चान्नासिका व्याप्रियते यस्मिन्निति योगस्य ङमङ्ङणनेषु निरूपयितुमशक्यत्वात् विनिगमनाविरहेण युगपदुभयोर्व्यावृत्तेः। एतेनानु पश्चान्नासिकागत इत्यर्थको नासिकानुगत इति योगोपि परास्तः। यथाकथंचिद्योगोपपादने तु रूढिरेव फलितेति दिक् ॥ ८॥

प्रयत्नश्च आस्यप्रयत्नम् । तुल्यास्यं च तुल्यप्रयत्नं च सवर्णसंज्ञं भवति । किं पुनरास्यम् । लौकिकमास्यम् । ओष्ठात्प्रभृति प्राक्काकलकात् । कथं पुनरास्यम् । अस्यन्त्यनेन वर्णानिति आस्यम् । अन्नमेतदास्यन्दतइति वा आस्यम् । अथ कः प्रयत्नः । प्रयतनं प्रयत्नः । प्रपूर्वाद्यततेर्भावसाधनो नङ् प्रत्ययः । यदि लौकिक-

---

शब्दयोस्तत्पुरुषः ततो बहुव्रीहिरिति । तत्र द्वन्द्वगर्भो बहुव्रीहिरिति पक्षे वार्तिकस्यावतार इति तमेव भाष्यकारः पूर्वं दर्शयति । तुलया संमितमिति । व्युत्पत्त्यर्थमेव तुलोपादीयते । रूढिशब्दस्त्वयं सदृशपर्यायः । यथा प्रवीणः कुशलप्रतिलोमोनुलोम इत्यवयवार्थाभावः । एवं तुल्यशब्देपि । किं पुनरास्यमिति । किं मुखमथ तत्र भवं ताल्वादिकं स्थानमिति प्रश्नः । लौकिकमिति । पशुरपत्यं देवतेत्यादिवत् प्रसिद्धमित्यर्थः । यद्यपि ताल्वादिकमपि लौकिकमास्यं तथापि तत्र योगवशादास्यशब्दो वर्तते इति झटिति न तत्प्रसिद्धमिति मुखमेव प्रसिद्धत्वाल्लौकिकमित्युक्तम् । तस्यैव च प्राथम्याद् ग्रहणं युक्तमित्यर्थः । ओष्ठादिति । काकलकं हि नाम ग्रीवायामुन्नतप्रदेशः । कथं पुनरिति । यदि निमित्तवशात्प्रवर्तते । ततस्ताल्वादिष्वपि प्रवर्तिष्यतइति प्रश्न । अस्यन्त्यनेनेति । सत्यपि निमित्ते रूढिवशान्मुखे एव प्रवर्तते न ताल्वादिष्वित्यर्थः । कृत्यल्युट इति करणे ण्यत् । असनमत्र जातिस्फोटपक्षेभिव्यक्तिः । व्यक्तिस्फोटपक्षे तूत्पत्ति । अन्नमेतदिति । आङ्पूर्वात्स्यन्दतेरन्येष्वपि दृश्यतइति डः । एतदास्यं कर्म अन्नं कर्तृ आस्यन्दते द्रवीकरोति अन्नप्रक्षेपणेन मुखस्य द्रवत्वोत्पादनात् । अथ कः पुनः प्रयत्न इति । किं प्रयतनं प्रयत्नः । अथ प्रारम्भो यत्नस्येति प्रश्नः । भावसाधन इति । भावेभिधेये नङ्प्रत्ययः क्रियते । तेन नङ्शब्दस्येह भावः साधनं भवति । किमास्योपादानइति । आस्यएव सर्ववर्णानां निष्पादनादिति भावः । नासिकापि न बाह्या

---

तुल्यास्यम् ॥ तत्पुरुषइति । तुल्यास्यशब्दयोर्मयूरव्यंसकादित्वात्पूर्वपदार्थप्रधानस्तत्पुरुषः । आस्यप्रयत्नशब्दयोश्च साधनं कृतेत्यनेन समासः । ननु स्थानादिकं न तुलया संमीयते ऽत आह व्युत्पत्त्यर्थमेवेति । किं मुखमिति । अतद्धितान्ततद्धितान्तास्यशब्दविषयकसन्देह इत्याशयः । तद्धितान्तमपि लौकिकमेव न वैदिकमित्यत आह पशुरिति । झटिति । पदश्रवणमात्रेणेत्यर्थः । निमित्तवशात् । अवयवार्थवशात् । जातिस्फोटेति । वर्णानिति वर्णपदं बोधकपरम् । तत्र जातेर्बोधकत्वे तस्या नित्यत्वादाभिव्यक्तिरसन, न्तदाश्रयव्यक्तीनां वाचकत्वे तूत्पत्तिरिति भाव । अत एव वर्णानिति बहुवचनं सङ्गच्छते । एकैव व्यक्तिस्तत्तद्रूपेणाभिव्यक्ता वाचिकेति पक्षे तदसंगतिः स्पष्टैव । क्व चित्तु व्यक्तिस्फोटपक्षे ऽभिव्यक्तिः । जातिस्फोटपक्षेतूत्पत्तिरिति पाठः । अयमेव सांप्रदायिकः पाठः । एकैव व्यक्तिर्वाचिका कत्वादिकं तु ध्वनिनिष्ठं ध्वनिविशेषव्यङ्ग्यं वा सा च नित्येति व्यक्तिस्फोटवादस्तत्राभिव्यक्तिः स्पष्टैव । बहुवचनं त्वेकस्यैव बहुरूपत्वादारोपितबहुत्वमाश्रित्य नेयम् । व्यक्तयो ऽनन्ता जन्याश्च । तत्र जातिरेव शक्तेति जातिस्फोटवादस्तत्रोत्पत्तिरित्यर्थः । अन्येष्वपीति । दृशिग्रहणाद्धात्वन्तरादपि स इति भावः । ननु साधनशब्देन कारकशक्तिरभिधीयते इति भावस्य साधनत्वमनुपपन्नमत आह । भावेइति । नङ् । यजयाचेत्यनेन । ननु तुल्यावास्यप्रयत्नमात्रौ येषां जनकावित्यर्थे नासिकास्थानमङादिनिवृत्तयर्थमास्योपादानं स्यादत आह नासिकापीति । एवञ्चास्यग्रहणे कृतेपि तद्व्यावृत्तिर्दुरुपपादेति भावः । वस्तुतस्तु अवधारणगर्भसमासे ह्रस्वाकारादीभिर्ह्रस्वाकारादीनां सावर्ण्यानापत्तिः । तज्जनकवायुसंयोगानामपि तुल्यत्वात् । अनवधारणगर्भसमासे त्वनुनासिकव्यावृत्तिरपि दुरुपपादैवेति भाष्याशयः । एवञ्च नासिकाया बाह्यत्वेपि न क्षतिः । अत एव मुखनासिकेति सूत्रे मुखञ्च नासिकाचेति, मुखद्वितीया नासिकेति च विग्रहप्रदर्शनं भाष्ये । नह्यवयवावयविविषये एवं प्रयोगः सचेतसाम् । सहस्तो देवदत्त इत्यादौ विद्यमानवाची सहशब्दः । अत एव मुखवचनो ऽनुनासिक इतीयत्युच्यमाने कचटतपानामेव प्रसज्येतेति भाष्ये एवशब्दः सङ्गच्छते । अन्यथा यमादीनां ङादीनाञ्च मुखवचन-

मास्यम्। किमास्योपादाने प्रयोजनम्। सर्वेषां हि तत्तुल्यम्। वक्ष्यत्येतत्। प्रयत्नविशेषणमास्योपादानमिति। सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यात् *। सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गो भवति। जबगडदशाम्। किं कारणम्। प्रयत्नसामान्यात्। एतेषां हि समानः प्रयत्नः। सिद्धं त्वास्ये तुल्यदेशप्रयत्नं सवर्णम् *। सिद्धमेतत्। कथम्। आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्तीति वक्तव्यम्। एवमपि किमास्योपादाने प्रयोजनं सर्वेषां हि तत्तुल्यम्। प्रयत्नविशेषणमास्योपादानम्। सन्ति ह्यास्याद्बाह्याः प्रयत्नाः ते हापिता भवन्ति। तेषु सत्स्वसत्स्वपि सवर्णसंज्ञा सिद्धा भवति। के पुनस्ते। विवारसंवारौ, श्वासनादौ, घोषवदघोषता, अल्पप्राणता, महाप्राणतेति। तत्र वर्गाणां प्रथमद्वितीया विवृतकण्ठाः श्वासानुप्रदाना अघोषाश्च। एके ऽल्पप्राणा इतरे महाप्राणाः। तृतीयचतुर्थाः संवृतकण्ठा नादानुप्रदाना घोषवन्तः। एकेल्पप्राणाः।

---

वर्णोत्पत्तिनिमित्तं किं तद्यास्यान्तश्चर्म विततमस्ति पणवचर्मवत् तत्संबद्धा रेखा नासिका तस्यां वाय्वभिघाताद्वर्णोत्पत्तिः। विसर्जनीयस्यैकीयमतेनोरस्यत्वात्सावर्ण्याभावेपि न दोषः। वक्ष्यतीति। नास्य परीक्षावसर इति भावः। सवर्णसंज्ञायामिति। द्वन्द्वे प्रयत्नस्यास्येनाविशेषणान्मुखप्रयत्नयोस्तुल्यत्वाद्भिन्नस्थानानामपि प्रसङ्गः। भाष्ये शकारः प्रत्याहारपाठवशात्पठितः। अत्र प्रत्याहारे जबगडदानां प्राप्नोतीत्यर्थः शकारस्य तु विवृतत्वात्स्पर्शानां स्पृष्टत्वादप्रसङ्ग एव। ततश्च ऊर्ग्जं इत्यादौ झरोझरीति

---

त्वात्तदसङ्गतिः स्पष्टैव। आस्यानन्तर्गतत्वे तु न दोषः। मुखमात्रवचनत्वाभावात्। प्रासादवासिन्यायप्रदर्शकभाष्येणापि ध्वनितमेतत्। कैयटोक्तास्यान्तर्गतत्वपक्षे तु सूत्रे मुखपदं मुखावयवपरं ब्राह्मणवसिष्ठन्यायेन च नासिकातिरिक्तावयवग्रहणम्। एवकारश्चाप्यर्थः। दृष्टान्तोप्येकांशेन बोध्य इति। नन्वेवमपि विसर्जनीयव्यावृत्तये तस्यात्र आह विसर्जनीयस्येति। ततश्चान्येषां कण्ठादिस्थानमेवेति भावः। उरस्यमते ऽप्याह। सावर्ण्याभावेपीति। ननु इदानीमेव किं नोच्यते ऽत आह। नास्येति। द्वन्द्वे प्रयत्नस्यास्येनाविशेषणादित्यस्योपयोगश्चिन्त्यः। अत्रेति। एतद्वर्णसमूहसाध्यप्रत्याहारे इत्यर्थः। ऊर्ग् अन्नन्त स्माज्जात ऊर्ग् जः। आस्ये इति। देशविशेषणवैयर्थ्याभिप्रायेण प्रश्न इति भावः। न च नासिकाया आस्यानन्तर्गतत्वपक्षे तद्व्यावृत्तये देशविशेषणमावश्यकमिति वाच्यम्। अनुनासिकाकारादौ कण्ठादिषु वाय्वभिघातादभिव्यक्तेषु वर्णेषु नासिकाभिघातेनानुनासिक्यं धर्म उत्पद्यते इत्यनुभवेन वृद्धिरादैच्सूत्रस्यारम्भकत्वाद् गुणस्येति वाच्यम्। आनुनासिक्यसङ्ग्रहार्थं नव्यैकोऽयमान्मेत्यादिभाष्यैकैयटादौ तथैव लाभेन च तेषु नासिकाया देशत्वाभावस्य क्लृप्तत्वात्। ञादिष्वपि तथैवेत्यभिमानात्। देशपदेन ताल्वादिस्थानमेवोच्यते इति जबगडादिषु न दोषः। भाष्ये (प्रयत्नविशेषणमिति)। देशप्रयत्नमिति द्वन्द्वस्तु सौत्रत्वात्साधुरिति भावः। स्पृष्टतेत्यादि। आस्यान्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां वर्णाभिव्यक्तिजनकस्पर्शेषत्स्पर्शदूरावस्थानसमीपावस्थानरूपाभ्यन्तरकार्यकारिप्रयत्नविशेषा एतैः पदैरुच्यन्ते तेषां चास्यान्तर्गतत्वमास्यान्तर्गततत्तत्स्थानेषु वायुसंयोगजनकत्वेनेति बोध्यम्। आस्ये इत्यस्य यत्कार्यं तज्जनक इति शेषो वा। भाष्ये (तेहापिता इति)। सवर्णसंज्ञा स्वनिमित्तत्वेन बाह्यप्रयत्नान् जहातीति तया ते स्वनिमित्तत्वं हापिता इत्यर्थः (विवारसम्वारौ)। कण्ठबिलस्य विकाससङ्कोचौ। विवृतः कण्ठो यैः श्वासोऽनुप्रदीयते यैरित्यर्थः। (एके) उक्तवाक्ययोः प्रथमोपात्ताः। (नादः) वर्णोत्पत्त्यनन्तरभावी अनुरणनरूपः शब्दः। [यथा तृतीया] इत्यनेन तेषामल्पप्राणत्वं बोधितम्। देशविशेषणमप्यास्यग्रहणमावश्यकमिति गूढाशयेनाह। भाष्ये (आनुनासिक्यमेषामधिको गुण इति)। अयं भावः। अत्र देशपदेन ताल्वादिस्थानमुच्यते। स्थानशब्देन च योग

अपरे महाप्राणाः। यथा तृतीयास्तथा पञ्चमाः। आनुनासिक्यवर्जम्। अनुनासिक्यमेषामधिको गुणः। एवमप्यवर्णस्य सवर्णसंज्ञा न प्राप्नोति। बाह्यं ह्यास्यात्स्थानमवर्णस्य। सर्वमुखस्थानमवर्णमेक इच्छन्ति। एवमपि व्यपदेशो न प्रकल्पते। आस्ये येषां तुल्यो देश इति। व्यपदेशिवद्भावेन व्यपदेशो भविष्यति। सिध्यति। सूत्रं तर्हि भिद्यते। यथान्यासमेवास्तु। ननु चोक्तं सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यादिति। नैष दोषः। नहि लौकिकमास्यम्। किं तर्हि। तद्धितान्तमास्यम्। आस्ये भवमास्यम्। शरीरावयवाद्यत्। किं पुनरास्ये भवम्।

---

लोपप्रसङ्गः। एवमपीति। आस्ये येषां तुल्यो देश इत्यास्येन देशो विशेष्यते। तत्र व्यभिचाराभावादास्येन देशस्य विशेषणमयुक्तमित्यर्थः। प्रयत्नविशेषणमिति। तस्य सम्भवव्यभिचारसद्भावादित्यर्थः। बाह्यप्रयत्नव्युदासाच्चत्वार आभ्यन्तरा गृह्यन्ते। स्पृष्टेषत्स्पृष्टतासंवृततावितृतताख्याः। बाह्यं ह्यास्यादिति। काकलकस्याधस्तादुपजत्रुस्थानमवर्णस्यैक इच्छन्ति। सति च बाह्यदेशसम्भवे तद्व्यवच्छेदायास्येन देशो विशेष्यतइति प्रश्नः। सर्वमुखेति। अवर्णनिष्पत्तौ सर्वमेव मुखं व्याप्रियतइति नास्य बाह्यस्थानता। एवमपीति। अवर्णस्यास्यमेव देशो न त्वास्ये देशः व्यपदेशिवद्भावेनेति। सर्वावस्थायुक्तमास्यमास्यशब्देनोच्यते। देशशब्देन तु विशिष्टैवावस्था वर्णोत्पादनहेतुः। तत्र बुद्धिकृतभेदाश्रयेण व्यपदेशः। नहीति। प्राथमकल्पिकमित्यर्थः। यौगिकस्य तु व्यवहितस्य ग्रहणम्। स्थानमिति। ताल्वादि करणमिति। स्पृष्टतादि।

---

रूढ्या वर्णाभिव्यक्तिजनकवायुसंयोगानुयोगि ताल्वाद्युच्यते। तत्र यद्यपि ञकारादीनां गुणमात्रजनिका नासिका स्वरूपस्य कण्ठादिभिरेवाभिव्यक्तिसिद्धे स्तथापि ञादीनां स्वरूपस्य न केवलताल्वादिना नापि केवलनासिकया ऽभिव्यक्तिरिति विनिगमनाविरहादुभयावच्छिन्नवायुसंयोगस्यैव तज्जनकत्वात्तेषां नासिकापि स्थानम्। न चैवं त्वङ् करोषीत्यादौ चारितार्थ परसवर्णशास्त्रं संयन्तेत्यादौ न प्रवर्त्तेत। उक्तरीत्या यादीनां नासिकास्थानत्वाभावेन स्थानत आन्तर्याभावादिति वाच्यम्। स्थानेन्तरतमे इति सप्तम्यन्तपाठस्य दूषितत्वेनास्या युक्तेर्गर्भस्रावात्। अनुनासिकाकारादीनामपि सा स्थानमिति त्वयुक्तमेव। एवं हि उत्पादकसामीभेदात्कङयोरिव स्वरूपभेदस्यैवापत्तौ अभेदकगुणपक्षेपि निरनुनासिकैः सानुनासिकग्रहणानापत्तिः। एवञ्च यावत्स्थावसाम्ये सवर्णसञ्ज्ञेति सिद्धान्ते नासिकारूपदेशभेदात्कङादीनामप्राप्तसावर्ण्यसिद्धये आस्येन देशविशेषणमावश्यकम्। नासिकाया आस्यान्तर्गतत्वेपि मुखनासिकेति सूत्रेनासिकातिरिक्तावयवकमुखस्यैव ग्रहणेन तत्साहचर्यादत्राप्यास्यपदेन तादृशस्यैव ग्रहणं बोध्यम्। अन्यथात्र स्थाने एतत्कथनवैयर्थ्यापत्तिः। आस्यग्रहणव्यावर्त्यानां सावर्ण्यानुपयुक्तानां प्रदर्शनमेव ह्यत्र प्रक्रान्तम्। न चेदं प्रयत्नविशेषणमास्यग्रहणव्यावर्त्यमेवास्तु। अनुनासिकयकारादीनां ञादिभिः सावर्ण्यंच व्यावर्त्यं तत्फलञ्च तञ्जुङ्क्ष्वे तन्नमतीत्यादौ अनुस्वारस्य ययीत्यनेन यकारलसारयोरनुनासिकयोरभाव इति वाच्यम्। अनुस्वारस्य नासिकास्थानत्वेन स्थानतोन्तरतमयोञ्नर्णयोरेव प्रवृत्तेः। अनुनासिकयादीनान्तु उक्तरीत्या न नासिका स्थानमित्यदोषात्। इदमेव ध्वनयितुं गुण इत्युक्तम्। गुणपदेन च सावर्ण्यानुपयोगिना आन्तरतम्यपरीक्षोपयोगिनो विवारादय उच्यन्ते। एवञ्च तत्सादृश्यादत्रापि गुणशब्दप्रयोगः। अत एव बाह्यप्रयत्नानुपक्रम्य "मोनुनासिकानह्नावि" ति शिक्षायामुक्तम्। अत एवोदात्तादिभिः सहैकादशबाह्यप्रयत्न इति कैयटो वक्ष्यति। उदात्तादीनामपि वृद्धिसञ्ज्ञासूत्रशेषे गुणत्वेन व्यवहारात्। अत एवएवमप्यवर्णस्य सञ्ज्ञा न प्राप्नोति बाह्यं ह्यास्यात्स्थानमवर्णस्यैवमपि व्यपदेशो न प्रकल्पते आस्ये येषां तुल्यो देश, इति भाष्यं स्वरसतः सङ्गच्छते। अन्यथा प्रयत्नविशेषणमात्रस्योक्तेर्देशविशेषणत्वाभावेन तदसङ्गतिः स्पष्टैव। आस्येन देशविशेषणाभावान्न दोष इत्येव वक्तव्ये सर्वमुखेत्यादिसमाधानस्यापि निर्दलत्वापत्तिश्च। एके इत्यनेन सर्वम-

स्थानं करणं च । एवमपि प्रयत्नो ऽविशेषितो भवति । प्रयत्नश्च विशेषितः । कथम् । नहि प्रयतनं प्रयत्नः । किं तर्हि प्रारम्भो यत्नस्य प्रयत्नः । यदि प्रारम्भो यत्नस्य प्रयत्नः । एवमप्यवर्णस्य एङोश्च सवर्णसंज्ञा प्राप्नोति । प्रश्लिष्टावर्णावेतौ । अवर्णस्य तर्ह्यैचोश्च सवर्णसंज्ञा प्राप्नोति । विवृततरावर्णावेतौ । एतयोरेव

---

जिह्वाया अग्रोपाग्रमध्यमूलानि वा । यद्येवं प्रयत्नग्रहणं न कर्तव्यं तस्याप्यास्ये भवत्वाद् आस्यग्रहणेन ग्रहणात् । सत्यमेतत् । प्रत्येकं तु व्यापारनिरासार्थमुभयोरुपादानं तेन द्वयोस्तुल्यत्वे सवर्णसंज्ञा भवति । अविशेषित इति । आस्येनेत्यर्थः । द्वन्द्वपक्ष एवात्र स्थित इति प्रश्नः । ततश्च बाह्याः प्रयत्ना न त्यक्ताः स्युः । प्रारम्भो यत्नस्येति । अत्र पूर्वं स्पृष्टतादयश्चत्वारः पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायौ विवारादयो बाह्या एकादश प्रयत्ना उत्पद्यन्ते । एनमपीति । संध्यक्षरेषु प्रथमभागस्याकारेण साद‍ृश्यात्सवर्णसंज्ञाप्राप्तिरिति प्रश्नः । प्रश्लिष्टावर्णाविति । नात्र भागविवेकोस्ति पांसूदकवदित्यर्थः । अवर्णस्येति विभागोत्र सुलक्ष्य इति प्रश्नः । ततश्च नाव्यमित्यत्र यस्येतिलोपप्रसङ्गः । एतयोरिति । ततश्च एत ऐ इत्यौकारोपि स्यात् । भाष्य-

---

तत्तु कण्ठस्थानमिति ध्वनयति । व्यवहितस्येति । यद्यपि रूढियोगापहारिणी तथाप्यास्यपदोपादानसामर्थ्याद्व्यवहितस्यापि ग्रहणमिति भावः । ताल्वादीति । शिक्षायान्तेन रूपेणैव वर्णस्थानस्वकथनादिति भावः । एतेन ताल्वादिषूर्ध्वाधोभागभेदादुदात्तादीनां सवर्णसञ्ज्ञा न प्राप्नोति इत्यपास्तम् । आस्यभवशब्देन तद्रूपावच्छिन्नस्यैव ग्रहणादोषात् । ननु प्रयत्नपदेनैव तद्ग्रहणसिद्धिरत आह जिह्वाया अग्रस्यादि । प्रत्येकं त्विति । प्रत्येकनिरूपितसाद‍ृश्यग्रहणनिरासार्थमित्यर्थः । यद्यपि ज्ञापकेनापि प्रत्येकव्यापारनिरासः सुकरस्तथापि यावदास्यभवैक्यविवक्षायां ह्रस्वदीर्घयोः सावर्ण्यानापत्तिः । तत्तज्जनकवायुसंयोगानामतुल्यत्वात् । अतः प्रयत्नपदमास्यपदेन स्थानमात्रग्रहणार्थं स्थानं करणञ्चेति भाष्ये करणपदेन वायुसंयोगोपि प्रयत्नग्रहणाच्च नातिप्रसङ्ग इति तात्पर्यम् । अत एव यावत्स्थानैक्यपरेण 'नैतौ तुल्यस्थानाविति' भाष्येण न विरोध इति दिक् । भाष्ये (प्रारम्भो यत्नस्येति) अत्र यत्नस्येति निर्धारणे षष्ठी । जातौ चैकवचनम् । आरम्भ इति कर्मणि घञ् । यत्नानां मध्ये प्रथमं वर्णोत्पत्तेः पूर्वमारभ्यमाण इत्यर्थः । अत्रापि नासिकाया अग्रहणमुपपादितरीत्यैवेति बोध्यम । अत्रेवं बोध्यम । शब्दप्रयोगेच्छयोत्पन्नयत्नान्नाभिप्रदेशात्प्रेरितो वायुर्वेगान् मूर्धपर्यन्तं गत्वा ततः प्रतिनिवृत्तो यत्नविशेषसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति ततो यत्नविशेषसहायेन परावृत्तिसमये गलविवरादीनां विकासादीन् करोति । तत्र ये तत्तत्स्थानाभिघातका यत्नास्ते आस्यान्तर्गततत्तत्कार्यकारित्वादास्ये प्रयत्ना इत्युच्यन्ते । आभ्यन्तरा इति प्रारम्भइति च गलविवरादिविकासादिकाराश्चास्यबहिर्भूतदेशे कार्यकरत्वाद्बाह्या इति । एवं मात्राकालिकत्वाधिक्यमपि वाद्यल्पत्वकृतमिति नाभिप्रदेशात्प्रेरकयत्न एव कश्चिद्विलक्षणोऽल्पं वायुं प्रेरयति कश्चिदधिकमिति तस्य यत्नस्य वायुप्रेरणारूपं कार्यमास्यबाह्यदेशमिति तस्यापि व्यावृत्तिरास्यपदेनोक्ता अइउण्सूत्रे भाष्ये । मूर्ध्नि प्रतिहते वर्णोत्पत्तेः पूर्वं स्पृष्टतादयः पश्चान्निवृत्ते प्राणाख्ये इत्यन्वयः कैयटे । अत एव "सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णाञ्जनयते" इति शिक्षया न विरोध इति दिक् । भाष्ये (यदि प्रारम्भ) इत्यत्र यदीत्यस्य यद्यपीत्यर्थः । अकारेणेति । ततश्च स्वसवर्णाकारस्य तत्र सत्त्वेन तद्द्वारा तुल्यस्थानत्वेनावर्णैङोः सावर्ण्ये नाव्यमित्यत्र यस्येति लोपप्रसङ्ग इत्यभिमानः । पांसूदकेति । प्रश्लिष्टावित्यस्य प्रकर्षेण श्लिष्टौ मिलितावित्यर्थः । ततश्च तदननुभवेन केवलताल्वादिस्थानकत्वेन च न तयोः सावर्ण्यप्राप्तिरिति भावः । विभागोत्रेति । एवञ्च पूर्ववत्तयोः सावर्ण्यं प्राप्नोत्येवेत्यर्थः । भाष्ये (एतदुत्तरं विवृततरौ वर्णाविति) । एवञ्च तद्द्वारा एतयोरपि विवृततरत्वेन प्रयत्नभेदाध्रस्वेन न सावर्ण्यम् । अकारस्य ततो ऽपि विवृततरत्वात्तेनाप्यनयोर्न सावर्ण्यं फलाभावश्चेति भावः । एतयोरेवेति । यत्किञ्चित्स्थानसाम्ये सवर्णसञ्ज्ञेत्यभिमानः । क्वचित् । अवसो ऽसेर्वाङ्-

तर्हि मिथः सवर्णसंज्ञा प्राप्नोति । नैतौ तुल्यस्थानौ । उदात्तादीनां तर्हि सवर्णसंज्ञा न प्राप्नोति । अभेदका उदात्तादयः । अथवा किं न एतेन प्रारम्भो यत्नस्य प्रयत्न इति । प्रयतनमेव प्रयत्नः । तदेव च तद्धितान्तमास्यम् । यत्समानं तदाश्रयिष्यामः । किं सति भेदे । सतीत्याह । सत्येव हि भेदे सवर्णसंज्ञया भवितव्यम् । कुत एतत् । भेदाधिष्ठाना हि सवर्णसंज्ञा । यदि हि यत्र सर्वं समानं तत्र स्यात्सवर्णसंज्ञावचनमनर्थकं स्यात् । यदि तर्हि सति भेदे किं चित्समानमिति कृत्वा सवर्णसंज्ञा भविष्यति । शकारच्छकारयोः षकारठकारयोः सकारथकारयोः सवर्णसंज्ञा प्राप्नोति । एतेषां हि सर्वमन्यत्समानं करणवर्जम् । एवं तर्हि प्रयतनमेव प्रयत्नः । तदेव हि तद्धितान्तमास्यं न त्वयं द्वन्द्वः । आस्यं च प्रयत्नश्च आ-

---

मानेनापि क्वचित्सवर्णग्रहणादर्शनात् । अभेदका इति । लिङ्गेनैतत्प्रतिपादितं न शास्त्र एते स्वशब्दोपादानमन्तरेण कार्येषु भिद्यन्तइति । तेन प्रारम्भभेदेप्युदात्तादीनां मिथः सवर्णसंज्ञा भविष्यति । यत्समानमिति । स्पृष्टत्वस्य समानत्वाद्वर्ग्याणां बाह्यप्रयत्नभेदेपि सवर्णसंज्ञा भविष्यति । किं सतीति । स्पृष्टताद्यभेदाद्विवारादिभेदेपि यथा भवति तथा स्पृष्टतादिभेदेपि विवाराद्यभेदात्प्राप्नोतीति प्रश्नः । सत्येवेति । झरो झरीत्येवान्यथा ब्रूयात् । यथासंख्यनिरासार्थं हि तत्र सवर्णग्रहणं कृतम् । शिण्ढि इत्यत्र डकारस्य ढकारे परतो लोपार्थम् । यदि च यत्र सर्वं समानं तत्रैव सवर्णसंज्ञा स्याद् डकारढकारयोर्भेदात्सवर्णत्वं नास्तीति सवर्णग्रहणमनर्थकं स्यात् । सर्वमिति । वर्गाणां प्रथमद्वितीया इत्यस्यां शिक्षायां पठितमघोषत्वादि । करणं तु भिन्नम् । वर्ग्याणां स्पृष्टत्वादूष्मणां च विवृतत्वात् । सति च सवर्णत्वे निश्छद्म निष्ठुरं निस्स्थानं मधुलिट्स्थानमित्यत्र

---

दो म इत्यादौ । भाष्ये ( नैतौ तुल्यस्थानाविति ) । तोर्लीति परसवर्णरहिततद्वानाशामितिनिर्देशाद् यावत्स्थानसाम्यमत्र विवक्षितमिति भावः । यस्त्वेषां समुदितं स्थानमिति । तन्न । "दन्त्योष्ठ्यो वः स्मृतो बुधैः ॥ ए ऐ तु कण्ठ्यतालव्यावि" ति शिक्षायां प्रत्येकं तत्र भव इत्यधिकारस्थयदनापत्तेः । दन्तोष्ठ्य इति पाठस्त्वसङ्गतः शरीरावयववत्समुदायस्य शरीरावयवत्वाभावात् । स्वाङ्गसमुदायस्य स्वाङ्गत्वाभाववत् । स्वजनकवायुसंयोगावच्छेदके कण्ठादौ स्वाधारत्वमारोप्य कण्ठ भव इत्याद्युपपत्तिः । शरीरे मे वेदनेत्यप्येवमेवेति दिक् । ( उदात्तादीनां तर्हीति ) । यावत्स्थानैक्यवद् यावत्प्रयत्नैक्यविवक्षणादिति भावः । स्वशब्दा उदात्तादिशब्दाः । एवञ्चात्र प्रयत्नशब्देनोदात्तादीनां न ग्रहणमिति भावः । भाष्ये ( उदात्तादीनां सवर्णसञ्ज्ञा न प्राप्नोती) त्यस्य (आस्येन प्रयत्नो ऽविशेषित ) इत्यस्य च समाध्यन्तरमाहैकदेशी । [ अथवा किं न एतेनेति ] । नो ऽस्माकमेतेन प्रारम्भो यत्नस्येत्यर्थकप्रयत्नशब्दाश्रयणेन किमित्यर्थः । क्लिष्टत्वादिति भावः । बाह्यप्रयत्नभेदेपीति । एवमुदात्तादिभेदेपि भविष्यतीत्यपि बोध्यम् । यद्यपि सवर्णसञ्ज्ञाया न प्रयत्नभेदगर्भत्वं तथापि ज्ञापकादितरथासिद्धिरित्याह झरो झरीति । भाष्ये [ सत्येवं हि भेदइति ] यत्किं चित्प्रयत्नभेदे सत्येवेत्यर्थः । [ कुत एतदिति ] । सूत्राक्षरैस्तदलाभ इति प्रश्नः । समाधत्ते । भेदाधिष्ठानाहीति । यत्किंचित्प्रयत्नभेदेत्यर्थः । तत्र ज्ञापकमाह यदि हीति । सवर्णसञ्ज्ञावचनमित्यस्य सवर्णपदोच्चारणमित्यर्थः । सञ्ज्ञा त्वणुदित्सवर्णस्येत्याद्यर्थमावश्यकीति बोध्यम् । भेदादिति । बाह्यप्रयत्नभेदादित्यर्थः । नन्वेवं यत्किंचित्स्थानैक्यादेकारौकारयोः सावर्ण्यापत्तिरिति चेन्न । ज्ञापकात्प्रयत्नांशे यावत्प्रयत्नसमानत्वस्यागेपि स्थानांशे तत्त्यागे मानाभाव इत्याशयात् । यत्तुष्येकेषामित्यादिनिर्देशः स्थानांशे यावत्स्थानतुल्यत्वाविवक्षणाच्च । यत्तु तुल्यत्वस्य भेदघटितत्वात्सवर्णसंज्ञा भेदाधिष्ठानेत्यर्थ इति । तन्न । तेन सावर्ण्यनियामकप्रयत्नयोः स्थानयोश्च परस्परभेदलाभेपि वर्णानां यत्किंचित्प्रयत्नभेदस्य ततो ऽलाभात् । स्थानानामन्ततस्तत्कालरूपोपाधिभेदेन भेदो बोध्यः । भाष्ये [ यदि

स्यप्रयत्नमिति। किं तर्हि त्रिपदोयं बहुव्रीहिः। तुल्य आस्ये प्रयत्न एषामिति अथवा पूर्वस्तत्पुरुषस्ततो बहुव्रीहिः। तुल्य आस्ये तुल्यास्यः। तुल्यास्यः प्रयत्नः एषामिति। अथवापरस्तत्पुरुषस्ततो बहुव्रीहिः। आस्ये प्रयत्न आस्यप्रयत्नः। तुल्य आस्यप्रयत्न एषामिति। तस्य *। तस्येति तु वक्तव्यम्। किं प्रयोजनम्। यो यस्य तुल्यास्यप्रयत्नः स तस्य सवर्णसंज्ञो यथा स्यात्। अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञो मा भूत्। तस्यावचनं वचनप्रामाण्यात् *। तस्येति न वक्तव्यम्। अन्यस्य तुल्यास्यप्रयत्नोन्यस्य सवर्णसंज्ञः कस्मान्न भवति। वचनप्रामाण्यात्। सवर्णसंज्ञावचनसामर्थ्यात्। यदि हि अन्यस्य तुल्यास्यः प्रयत्नोऽन्यस्य सवर्णसंज्ञः स्यात्। सवर्णसंज्ञावचनमनर्थकं स्यात्। संबन्धिशब्दैर्वा तुल्यम् *। संबन्धिशब्दैर्वा पुनस्तुल्यमेतत्। तद्यथा। संबन्धिशब्दाः। मातरि वर्तितव्यं पितरि शुश्रूषितव्यमिति। न चोच्यते स्वस्यां मातरि स्वस्मिन् पितरीति। संबन्धाच्चैतद्गम्यते। या यस्य माता यश्च यस्य पितेति। एवमिहापि तुल्यास्यप्र-

———————

झरो झरीति लोपः प्राप्नोतीति। छद्मना निष्क्रान्तमिति प्रादिसमासः। अनचि चेति शकारस्य द्विवचनम्। तुल्य आस्यइति। तद्धितान्त आस्यशब्दो न स्वाङ्गवाच्येवेत्यमूर्द्धमस्तकादित्यलुङ् भवति। तद्धितान्तास्यशब्दाश्रयणसामर्थ्यादेवास्यइत्येकत्वं विवक्ष्यते। तेनैकस्मिन्नेव स्थाने ययोस्तुल्यः प्रयत्न इत्याश्रीयते। अथवेति। मयूरव्यंसकादित्वात्सप्तम्यन्तोत्तरपदस्तत्पुरुषः। तस्येति। यत्तदोर्नित्याभिसम्बन्धादाह यो यस्येति। अन्यथा वर्णान्तरापेक्षया तुल्यास्यप्रयत्नत्वेन सवर्णत्वे लब्धे तदाश्रयमन्यस्यापि कार्यं प्राप्नोति। सूत्रारम्भस्तु रेफोष्मणां निवृत्त्यर्थः स्यात्। तस्यावचनमिति। तस्येत्ययमनुकरणशब्दः तस्येत्यस्यावचनमित्यर्थः। सवर्णसंज्ञावचनमिति। न च रेफोष्मणां निवृत्त्यर्थं वचनं, रेफस्यापि रेफः सवर्णो भवत्येव। एवमूष्मसु द्रष्टव्यम्। एवं वचनसामर्थ्याद्दोषं परिहृत्य शाब्दन्यायेन परिहर्तुमाह सम्बन्धिशब्दैरिति।

———————

तर्हि सति भेदे। इत्यादिसिद्धान्तिवचः। [ शकारच्छकारयोरिति ]। तस्मात्प्रारम्भो यत्नस्येति आवश्यकमिति भावः। ननु निश्छद्मेत्यत्र हलः परत्वाभावात्कथं लोपप्राप्तिरत आह अनचि चेति। तत्रैकदेशी प्रौढ्या समाधानमाह एवं तर्हीत्यादि। स्वाङ्गवाच्येवेति। अमूर्धेत्यादिपर्युदासादेव स्वाङ्गे लब्धे स्वाङ्गादिति पुनः श्रुतिरसधारणार्थेति भावः। संज्ञायामित्यनुवृत्तेर्न दोष इत्यन्ये। नन्वेवं भिन्नस्थानानामपि स्यादत आह तद्धितान्तास्येति। आस्यपदोपादानसामर्थ्याच्च तद्ग्रह इति भावः। एकत्वं विवक्ष्यतइति। तद्विवक्षां विनापि प्रत्यासत्त्या प्रयत्नयोरेकास्यभववृत्तित्वलाभ इत्यन्ये। त्रिपदबहुव्रीहौ सप्तम्यन्तस्य पूर्वनिपातापत्तेः पूर्वपदार्थप्रधानतत्पुरुषस्याव्ययगतिकगतिस्वाङ्गाख्ये तृतीय आश्रितः। रेफोष्मेति। रेफोष्मणां सवर्णा न सन्तीत्युक्तेरिति भावः। तस्यावचनमिति वार्त्तिके तच्छब्देन कस्य परामर्शोत आह तस्येत्यव्ययमिति। तस्यावचनमित्यत्र षष्ठीतत्पुरुष इति भावः। एवञ्च स्यो न विभक्तिरिति लुगभावः। वस्तुतस्तच्छब्देन पूर्वोक्तस्य तस्य शब्दस्य परामर्श इति वक्तुं युक्तम्। रेफस्यापीति। रेफोष्मणामित्येतद्विजातीयसवर्णाभावप्रतिपादनपरमित्यर्थः। तत्र रेफांशे। तुल्यास्यप्रयत्नासंभव एव ऊष्मसु तु नाज्झलाविति निषेधादिति बोध्यम्। एवञ्च व्यावर्त्याभावेन सवर्णसञ्ज्ञावचनसामर्थ्याद् यस्य तस्येति लप्स्यत इति भावः। ननु सवर्ण इति सञ्ज्ञाशब्दस्य कथं संबन्धिशब्दत्वमत आह तुल्यास्येत्यादि। स्वार्थभिन्नप्रतियोगिकसम्बन्धनिमित्तः शब्दः संबन्धिशब्द इति भावः।

यत्नं सवर्णमित्यत्र संबन्धिशब्दावेतौ । तत्र संबन्धादेतदवगन्तव्यम् । यत्प्रति यत्तु-ल्यास्यप्रयत्नं तत्प्रति तत्सवर्णसंज्ञं भवतीति।ऋकारऌकारयोः सवर्णविधिः *।ऋका-रऌकारयोः सवर्णसंज्ञा विधेया। होतृ ऌकारः। होतॄकार इति। किं प्रयोजनम्। अकः सवर्णे दीर्घ इति दीर्घत्वं यथा स्यात्। नैतदस्ति प्रयोजनम्। वक्ष्यत्येतत्। सवर्णदीर्घत्वे ऋति ऋ वा वचनम्, ऌति ऌ वा वचनमिति। तत्सवर्णे यथा स्यात्। इह मा भूत्। दध्यॢकारः। मध्वॢकार इति। यदेतत्सवर्णदीर्घत्वे ऋतीति एतदृत इति वक्ष्यामि। ततः ऌति। ऌकारे परत ऌकारो वा भवतीति। ऋत इत्येव। तत्र

---

सम्बन्धिशब्दाविति। तुल्यास्यप्रयत्नशब्दस्य सम्बन्धिशब्दत्वात्तत्समानार्थोऽपि प्रदेश-वाक्येषूपात्तः सवर्णशब्दः सम्बन्धिशब्दः। यथा तुल्याय कन्या दातव्येत्युक्ते न शूद्रेण तुल्याय ब्राह्मणः कन्यां ददाति अपि त्वात्मना। तथेहापीत्यर्थः। ऋकारऌकारयोरिति। स्थानभेदान्न प्राप्नोतीत्यारम्भः। अत्र चानयोरेव श्रुतत्वान्मिथः सवर्णसंज्ञा विज्ञायते न त्वेतयोरन्येन सहेति बोध्यम्। वक्ष्यत्येतदिति। तत्र ऌवावचनमित्यत्र दीर्घ इत्यनु-वर्तते। तत्र ऌति ऌशब्दे विकल्पिते ऽप्राप्त एव पक्षे दीर्घो भविष्यति। स च भवन् ऌवर्णस्य दीर्घाभावादृवर्णस्यान्तरतम्याद्दीर्घ ऋकारो भविष्यति। तत्सवर्ण इति। यद्यविधाय सवर्णसंज्ञां तदुच्येत अज्मात्रस्य ऌति तत्कार्यं स्यात् यथा दध्यॢकारइति। तस्माद्विधेया सवर्णसंज्ञा। ऋत इति वक्ष्यामीति! ऋकारस्यऋकार एव सवर्ण इति ऋत्येव भविष्यति। ततः ऌति। ऋत इत्येव। इदं चासवर्णार्थम्। तेन ऌति रूपद्वयं सिद्धम्। तत्रासंहितायामृकारे होतृ ऋकार इति रूपं संहितायामपि ऋत्यक इति शाकलप्रकृतिभावे एतदेव रूपम्। शाकलाभावे होतृकारो होतॄकार इति रूपद्वयम्। ऌकारे ऽसंहितायां संहितायां च शाकले होतृ ऌकारइति। शाकलाभावे होतॄकारो

---

परे तु अत्र सूत्रे द्वन्द्वनिर्देशलभ्यौ तुल्यास्यतुल्यप्रयत्नशब्दावित्यर्थो भाष्यस्य। सवर्णशब्दो हि प्रदेशेऽपि सवर्ण-पदवत्परो न तुल्यास्यप्रयत्नत्वप्रवृत्तिनिमित्तक इति तस्य संबन्धिशब्दत्वं दुरुपपादमुपक्रमोपसंहाराभ्यां चैव-मेवोचितम्। उपक्रमे हि तुल्यास्यं च तुल्यप्रयत्नं च सवर्णसञ्ज्ञं भवतीत्युक्तमित्याहुः। ऋकारऌकारयोरिति अत्र ऋत्यक इति प्रकृतिभावः। वार्त्तिकेऽप्येवमेव पाठ इति प्रामाणिकः। सावर्ण्यप्रतियोग्यनिर्देशादाह अत्र चेति। भाष्ये। होतृऌकारः होतॄकारइति। ऌकारशब्दो देवतावाचीत्येके। विवृतस्य ऌकारस्य दीर्घ-स्याभावादृकारो दीर्घ उदाहृत इति बोध्यम्। नैतदस्तीति ( सवर्णसञ्ज्ञाया इति शेषः )। नन्वीषत्स्पृष्टेन युक्तोऽपि विवृतदीर्घः सवर्णसंज्ञां विना दुर्लभो ऽत आह तत्रेति। भाष्ये तद्वचनद्वयारम्भेऽपि सवर्णसंज्ञा-वश्यकीत्याह तत्सवर्ण इति। अज्मात्रस्येति। अनज्व्यावृत्त्यर्थमक इति वर्त्तते। सवर्णसंज्ञाभा-वात्सवर्ण इति नानुवर्त्तेत इति भावः। खण्डयति। यदेतादिति भाष्ये। सवर्णइतीति। आद्यवार्तिके सवर्णग्रहणमनुवर्त्तते इति भावः। तेन ऌतीति। सिद्धान्तेऽपि व्यवस्थितविभाषया अनभिधानेन वा होतृऌकारे पूर्ववार्तिकं गम्लृ ऌकारे चोत्तरवार्त्तिकं न प्रवर्त्तते एवं कॄ इति दीर्घस्य ऋकारे परे पूर्वस्य तस्यैव ऌकारे उत्तरस्य चाप्रवृत्तिस्तत एवेति भावः। रूपद्वयमिति। ईषत्स्पृष्टघटितं विवृतदीर्घघटितं चेति भा-वः। तत्रासंहितायामिति। समासे संहिता नित्या असमासे त्वीदृशं रूपं दुर्लभम्। होतृशब्दे विभक्ति-श्रवणापत्तेः। होतृशब्दस्य नपुंसके संबुद्धौ रूपमित्यप्यतिक्लिष्टमिति चिन्त्यम्। भाष्ये तु होतृऌकार इति दीर्घप्रवृत्तियोग्यदृशोच्चारणमिति स्थितं इति शेषः। एवं शाकले होतृऌकार इत्यपि चिन्त्यम्। सव-र्णत्वविधायकवचनाभावे एतद्विचारसत्त्वेन तत्र ऋत्यक इत्यस्याप्राप्तेः। इकोसवर्ण इत्यपि न समास इति निषिद्धम्। नित्यमङ्गयान्तु तत्र भाष्ये प्रत्याख्यातमित्याहुः। सवर्णसञ्ज्ञावचनेनैकेनैव सिद्धे तद्द्वयं न

वक्तव्यं भवति । अवश्यं तद्वक्तव्यम् । ऊकालोऽज् ह्रस्वदीर्घप्लुतसंज्ञो भवतीत्युच्यते । न च ऋकार ऌकारो वाऽस्ति । ऋकारस्य ऌकारस्य चाच्त्वं वक्ष्यामि । तच्चावश्यं वक्तव्यम् । प्लुतो यथा स्यात् । होतृ ऋकारः । होतॄकारः । होतृ ३ कार इति । होतृ ऌकारः होतॢकारः । होतॢ ३ कार इति । किं पुनरत्र ज्यायः । सवर्णसंज्ञावचनमेव ज्यायः । दीर्घत्वं चैव हि सिद्धं भवति । अपि च ॠकारग्रहणेन ॡकारग्रहणं संनिहितं भवति । यथेह भवति ॠसकः । खट्वॄश्यः । मालॄश्यः । इदमपि सिद्धं भवति । खट्वॢकारो मालॢकार इति । वा सुप्यापिशलेः । उपर्कारीयति । उपार्कारीयति । इदमपि सिद्धं भवति । उपल्कारीयति । उपाल्कारीयति । यदि तर्हि ॠकारग्रहणेन ॡकारग्रहणं संनिहितं भवति । उरण्रपरः ।

---

होत्ऌकार इति रूपद्वयम् । तन्न वक्तव्यमिति । द्वावप्येतौ दीर्घौ ॠ ॡ इति तत्र ॠकारे कदा चिद्द इति दीर्घः कदा चिद् इति । ऌकारेपि ॠ ॡ इत्येतौ भविष्यतः सत्यां सवर्णसंज्ञायामिति भाव । न चेति । अर्धतृतीयमात्रत्वादिति केचिदाहुः । अन्ये तु ईषत्स्पृष्टकरणत्वादनयोर्ऋकारऌकारयोश्च विवृतत्वात्ताभ्यां तयोरग्रहणादनच्त्वमाहुः । अच्त्वं वक्ष्यामीति । सत्यच्त्वे दीर्घसंज्ञा तयोर्भविष्यति । येषां तु मतमर्धतृतीयमात्रावेताविति तेषां मते सत्यप्यच्त्वे द्विमात्रत्वाभावादेतयोर्दीर्घसंज्ञा न प्राप्नोति। तस्माद् द्विमात्रावेतावभ्युपगन्तव्यौ । तच्चावश्यमिति । त्वयापि ॠवावचनम्ॡवावचनमिति ब्रुवता ऽच्त्वमनयोर्वक्तव्यम् । अन्यथा विधानमात्रमेव तयोः स्याद् नाच्कार्यं प्लुतः । सति त्वच्त्वे ताभ्यां त्रिमात्रयोरपि सावर्ण्याद् ग्रहणे सति प्लुतसंज्ञा भविष्यतीति प्लुतसिद्धिः । किं पुनरिति । एकैकस्मिन् संहितायां शाकलाभावपक्षे रूपद्वयं साध्यम । तच्चोभयथापि सिध्यति । तत्र सवर्णसंज्ञायामसत्यां यथा सिध्यति तथा पूर्वमेवोक्तम । सत्यां तु यथा सिध्यति तथोच्यते । अकः सवर्णे दीर्घ इत्यत्रान्तरतमत्वदीर्घत्वयोरुपादेयविशेषणयोर्विवक्षितत्वादुभयविशिष्टैकासम्भवाद्विकल्पः यश्चान्तरतमो नासौ दीर्घो यश्च दीर्घो नासावन्तरतम इति द्वयोर्ऋकारयो रेफद्वययुक्तत्वाद्विवृतत्वाच्च कदा चिद्रेफद्वययुक्त ॠ भवति कदा चिद्विवृत ॠकारः । ऌकारेपि कदा चिद्दकारान्तरतम ॠकारः कदा चिद् ॡकार इति साम्यमुभयोः पक्षयोः । लपरत्वमिति । व्याख्यास्यामीत्यर्थ । रपर इत्यत्र र इति लणिति लकाराकारेण प्रत्या-

---

कार्यमित्याह भाष्ये [ तन्न वक्तव्यमिति ] । इतर आह [ अवश्यमिति ] । अर्धतृतीयेति । तावतापि स्थानप्रयत्नसाम्येन ताभ्यां ग्रहणं स्यादित्यरुचेराह ईषत्स्पृष्टेति । विवृतत्वाभावे उपस्थितरेफीयप्रयत्नत्यागे मानाभावादिति भावः । ताभ्यामिति । असावर्ण्यादिति भावः । भाष्ये वचनद्वयप्रत्याख्यानवाद्याह ऋकारस्येत्यादि । सत्यच्त्वे इति । अयोगवाहेषु पाठादिति भावः । नाच्कार्यमिति । तस्य प्लुतसञ्ज्ञा । तत्स्थाने प्लुतश्चेति भावः । अत्र पक्षेपि उक्तयुक्त्या ह्रस्वऋकारद्वयस्थानिकदीर्घैकादेशातिरिक्तविषये आद्यस्य ह्रस्वऋकारऌकारद्वयस्थानिकदीर्घैकादेशातिरिक्तविषये द्वितीयस्य न साधुत्वमिति नातिप्रसङ्गः । पक्षयोस्तुल्यफलता चेति बोध्यम । तदेव ध्वनयन् पृच्छति । भाष्ये [ किंपुनरत्रेति ] । ॠकारइति । विवृत इत्यर्थः । ॡकारइति । ईषत्स्पृष्ट इत्यर्थः । भाष्ये [ दीर्घत्वं चैव हीति ] ईषत्स्पृष्टविवृतरूपो दीर्घो वर्ण इत्यर्थः । तद्व्याचष्टे अपि चेत्यादिना । खट्वॢकार इति । होतॢकार इत्यस्याप्युपलक्षणम् । वचनस्य क्वाप्यदर्शनादाह व्याख्यास्यामीति । अन्ये तु लण्सूत्रस्था-

ऌकारस्यापि रपरत्वं प्राप्नोति ऌकारस्य लपरत्वं वक्ष्यामि। तच्चावश्यं वक्तव्यम्। असत्यां सवर्णसंज्ञायां विध्यर्थम्। तदेव सत्यां रेफबाधनार्थं भविष्यति। इह तर्हि रषाभ्यां नो णः समानपदे इत्यत्र ऋकारग्रहणं चोदितम्। मातॄणां पितॄणामित्येतदर्थम्। तदिहापि प्राप्नोति। क्लृप्यमानं पश्येति। अथासत्यामपि सवर्णसंज्ञायाम् इह कस्मान्न भवति। प्रक्लृप्यमानं पश्येति। चुटुतुलशर्व्यवाये नेति वक्ष्यामि। अपर आह। त्रिभिश्च मध्यमैर्वर्गैर्लशसैश्च व्यवाये नेति वक्ष्यामीति। वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्तइति योसौ ऌकारे लकारस्तदाश्रयः प्रतिषेधो भविष्यति। यद्येवं, नार्थो रषाभ्यां नो णत्वे ऋकारग्रहणेन। वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्तइति योसौ ऋकारे रेफः तदाश्रयं णत्वं भविष्यति। तुल्यास्यप्रयत्नं सवर्णम् ॥

नाज्झलौ ॥ १० ॥ अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात् *। अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति। किं कारणम्। अज्झल्त्वात्। अच्चैव हि शकारो हल्च। कथं तावदच्त्वम्। इकारः

---

हार आश्रीयते। तत्रान्तरतम्याद्दकारस्याण् रपर ऌकारस्य लपरः। असत्यामिति। असत्यां सवर्णसंज्ञायामुरण् रपर इत्यत्र ऌकारग्रहणं कर्तव्यं भवति। प्रक्लृप्यमानमिति। कृत्यचइति णत्वप्रसङ्गः। त्रिभिश्चेति। पूर्वस्मादयं विशेषः। पूर्वत्र शरन्तभूतोपि षकारः साक्षाण्णत्वनिमित्तत्वाद् व्यवधायकत्वेन नाश्रीयते इह तु तस्यानुपादानमेव। वर्णैकदेशा इति। अवयवस्य स्वव्यापारानिवर्तनात्। अग्रहणपक्षे तु क्षुभ्नादेराकृतिगणत्वाण्णत्वाभावः। ऋदिताम् ऌदितां च भेदेनानुबन्धनिर्देशाद् भेदेन चोपादानादनुबन्धकार्येषु परस्परग्रहणाभावाद्व्यतिकराभावः ॥ ११ ॥

नाज्झलौ ॥ अकारहकारयोरिकारशकारयोश्च तुल्यस्थानप्रयत्नत्वात्सवर्णसंज्ञा प्राप्ता निषिध्यते। अत एव निर्देशादचामज्भिर्हलां हल्भिः सवर्णत्वानिषेधः। अज्झलोरिति। प्रकृतत्वात्सवर्णसंज्ञाया इति बोध्यम्। शकारप्रतिषेध इति। द्विवचनान्तस्य समासो भेदाधिष्ठानत्वात्सवर्णसंज्ञायाः। इकार इति। अत्र सूत्रे अजितीकारो

---

कारस्यानुनासिकत्वे ऽतोऌान्तस्येत्यत्र भगवान् पाणिनिर्लकारं नोच्चारयेत् प्रत्याहारेणैव निर्वाहात् तस्मात्पूर्वं वचनं कार्यमित्येव भाष्याशय उचित इत्याहुः। आन्तरेति। रश्रुते रपरो लश्रुतेर्लपर इत्यर्थः। लवर्णसञ्ज्ञावादी तदभाववादिनं प्रति तदाप्यावश्यकं तदित्याह तच्चावश्यमिति। ऌकारस्याण्लपरइत्येतत्। साक्षान्निति। रषाभ्यामितिवचनादित्यर्थः। नन्वत्र लकाराभाव इत्यत आह भाष्ये [ वर्णैकदेशा] इत्यादि। अग्रहणपक्षे त्विति। प्रक्लृप्यमानमित्यत्र क्लृप्यमानमित्यत्र चेति भावः। आद्ये कृत्यच इति द्वितीये ऋवर्णान्नस्येति प्राप्तिः। भेदेनेति। ओणृ गम्लृ इति भेदेनानुबन्धनिर्देशः नाग्लोपिशास्वृदितां पुषादिद्युताद्यॢदित इति च भेदेनोपादानमित्यर्थः ॥ ६ ॥

नाज्झलौ ॥ अकारेत्यादि। एवञ्च हरिरित्यादौ दीर्घः शयनमित्यादौ यणापत्तिरिति भावः। अत एवेति। पूर्वसवर्णदीर्घनिर्देशादित्यर्थः। किं चैवं सति अकः सवर्णे, झरो झरि सवर्णे, इत्यस्यासङ्गतिरित्यपि बोध्यम्। भेदाधिष्ठानत्वादिति। व्यक्त्यैक्ये हि तुल्यास्यप्रयत्नत्वासंभव इति भावः। (सवर्णग्रहणेनेति). भाष्ये। सवर्णग्राहकेणाणुदित्सूत्रेणेत्यर्थः। अत्र हि सूत्रे इति। उच्चारितस्यैव प्रत्यायकत्वामत्रस्थपूर्वपक्षी न जानाति प्रत्याहारेषु जातिग्रहणमिति च न जानाति। ननु सति सवर्णत्वे इकारः शकारं गृह्णी-

सवर्णग्रहणेन शकारमपि गृह्णातीत्येवमच्त्वं हल्षु चोपदेशाद्धल्त्वम्। तत्र को दोषः। तत्र सवर्णलोपे दोषः *। तत्र सवर्णलोपे दोषो भवति। परश्शतानि कार्याणि। झरो झरि सवर्णइति लोपो न प्राप्नोति। सिद्धमनच्त्वात् *। सिद्धमेतत्। कथम्। अनच्त्वात्। कथमनच्त्वम्? स्पृष्टं करणं स्पर्शानाम्। ईषत्स्पृष्टमन्तस्थानाम्। विवृतमूष्मणाम्। ईषदित्येवानुवर्तते। स्वराणां च विवृतम्। ईषदिति निवृत्तम्। वाक्यापरिसमाप्तेर्वा *। वाक्यापरिसमाप्तेर्वा पुनः सिद्धमेतत्। किमिदं वाक्यापरिसमाप्तेरिति। वर्णानामुपदेशस्तावद् उपदेशोत्तरकाला इत्संज्ञा इत्संज्ञोत्तरकाल आदिरन्त्येन सहेतेति प्रत्याहारः प्रत्याहारोत्तरकाला सवर्णसंज्ञा सवर्णसंज्ञो-

---

गृह्यमाणः सवर्णं गृह्णातीति शकारस्यापि ग्रहणमस्ति। स्वात्मनि क्रियाविरोधादस्मिन्नेव सूत्रे इदं न व्याप्रियतइति सवर्णत्वनिषेध इकारशकारयोर्नास्ति। यस्येति चेत्यादौ तु शकार इकारेण न गृह्यते। अनेन सवर्णत्वनिषेधात्। इह तु स्वात्मनि व्यापारो नास्ति। अस्ति च पूर्वेण सवर्णत्वमिकारशकारयोरिति भावः। प्रकल्प्य चापवादविषयमिति न्यायो ऽत्र नास्ति। अपवादत्वस्यैवासंपत्त्या। परश्शतानीति। शतात्पराणि शताधिकानीत्यर्थः। कर्तृकरणे कृता बहुलमिति बहुलवचनात्समासः। पारस्करादित्वात्सुडागमः। सकारस्य श्चुत्वम्। अनचि चेति द्विर्वचनम्। झरो झरीति लोपाप्रसङ्गात्त्रिशकारश्रवणप्रसङ्गः। शरोऽच्यनचि चेत्यत्र त्विकारेण शकारो न गृह्यते। अनेन सवर्णत्वनिषेधादित्यस्ति शकारस्य द्विर्वचनम्। सिद्धमनच्त्वादिति। सूत्रप्रत्याख्यानसाधारणमुक्तम्। प्रयत्नभेदादज्झलोः सवर्णसंज्ञायाः प्राप्तिरेव नास्तीत्यर्थः। वाक्यापरिसमाप्तेरिति। भवतु वा तुल्यास्यप्रयत्नत्वं तथापीहेकारेण शकारो न गृह्यते। सवर्णसंज्ञायाश्चास्मिन् सूत्रे ऽनिष्पादात्। अस्मिन् हि सूत्रे निष्पन्ने

---

यात्। तदेव च न नाज्झलाविति निषेधावत आह स्वात्मनीति। यद्यपि स्वाध्यायो ऽध्येतव्य इत्यात्मानमपि विषयीकरोतीति एकस्य विषयत्वविषयित्वयोर्न विरोधस्तथाप्येतद्वाक्यार्थबोधोत्तरमन्यत्र निषेधेपि स्ववाक्यार्थबोधात्प्राक् स्वघटकपदार्थोपस्थितिवेलायां स्ववाक्यार्थबोधरूपसावर्ण्याभावज्ञानाभावान्नेकारशकारयोस्तदभावबोधनमिति भावः। अपवादस्यैवासंपत्त्येति। अपवादस्य नाज्झलावित्यस्यासंपत्त्या प्राग् बोधनाभावेन स्वविषये ऽप्राप्तेः तद्घटकपदोपस्थितयोरिकारशकारयोर्नापवादविषयत्वमित्यर्थः। बहुलेति। मयूरव्यंसकादित्वात्सुप्सुपेति वा समास इत्युचितम्। ननु कथं शस्य द्वित्वम्। अनचि चेति शरोऽचीति वा निषेधापत्तेरत आह शरोऽचीति। ननु प्रयत्नभेदेनानच्त्वे सूत्रमेव व्यर्थं स्यादत आह सूत्रेति भाष्ये (ईषदित्येवेति)। एङैचोः परस्परसावर्ण्याभावाय विवृततरत्वव्याख्यानामपि सवर्णसंज्ञानियामकत्वस्य सूत्रमते ऽप्यावश्यकत्वेन तदाश्रित्य सूत्रानारम्भ एव ज्यायान्। किं च दीर्घप्लुताकारहकारयोः सावर्ण्यव्यावृत्तये इदमपि तस्यावश्यकमिति भावः। (वाक्यापरिसमाप्तेर्वेति) अन्यथा नाज्झलावित्यस्य निषेधस्य स्वस्मिन्नपि प्रवृत्तौ तत्र पूर्वपक्षस्यैवानुत्थानं स्यादिति भावः। अनिष्पादमुपपादयति अस्मिन् हीति। सूत्रे निष्पन्ने इति। ज्ञातवाक्यार्थबोधे इत्यर्थः। प्रवर्त्ततेइति। एते परस्परं सवर्णसंज्ञा इति प्रमारूपं निश्चयज्ञानं निष्पद्यत इत्यर्थः। तदेव च लक्ष्यसंस्कारकमिति भावः। निष्पत्त्यवस्थायाम्। वाक्यार्थबोधावस्थायाम्। सवर्णत्वेषु निष्पन्नेषु। तत्र सवर्णत्वनिष्पत्तिरिष्टविषये सवर्णपदवाच्यत्वग्रहः। नापि स्वात्मनीति। अनिष्पत्तेरिति भावः। अङ्गानिष्पत्त्या अङ्गस्येष्टविषयसवर्णपदवाच्यत्वज्ञानस्यानिष्पत्त्या। भाष्ये (तावत्)। प्रथमम्। (उपदेशोत्तरकालेति)। ज्ञातस्य संज्ञाविधानादिति भावः। प्रत्याहारोत्तरकाला सवर्णसंज्ञेत्यादेरिष्टविषये सवर्णसंज्ञासंज्ञित्वग्रहणान्तदुत्तरकालमणुदित्येतदकारादिभिः

त्तरकालमणुदित्सवर्णस्य चाप्रत्यय इति सवर्णग्रहणम् । एतेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानां ग्रहणं भवति । न चात्रेकारः शकारं गृह्णाति । यथैव तर्हीकारः शकारं न गृह्णाति एवमीकारमपि न गृह्णीयात् । तत्र को दोषः । कुमारी ईहते । कुमारीहते अकः सवर्णइति दीर्घत्वं न प्राप्नोति । नैष दोषः । यदेतदकः सवर्णइत्यत्र प्रत्याहारग्रहणम् । तत्रेकार ईकारं गृह्णाति । शकारं न गृह्णाति । अपर आह । अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात् । अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति । किं कारणम् । अज्झल्त्वात् । अच्चैव हि शकारो हल्च । कथं तावदच्त्वम् । इकारः सवर्णग्रहणेन शकारमपि गृह्णातीत्येवमच्त्वम् । हल्सूपदेशाद्धल्त्वम् । तत्र को दोषः । तत्र सवर्णलोपे दोषः । तत्र सवर्णलोपे दोषो भवति । परश्शतानि कार्याणि । झरो झरि सवर्णइति लोपो न प्राप्नोति । सिद्धमनच्त्वात् । सिद्धमेतत् । कथम् । अनच्त्वात् । कथमनच्त्वम् । वाक्यापरिसमाप्तेर्वा । उक्ता वाक्यापरिसमाप्तिः । अस्मिन्पक्षे

सत्यपवादविषयापरिहारेण इष्टे विषये सवर्णसंज्ञा प्रवर्तते । न त्वेतत्सूत्रनिष्पत्त्यवस्थायाम् । ततश्चाङ्गेषूपदेशात्संज्ञा प्रत्याहारसवर्णत्वेषु निष्पन्नेष्वणुदित्सवर्णस्येत्येतदस्य च्वावित्यादौ प्रवर्तते न त्वङ्गेषूपदेशादिषु । नापि स्वात्मनि । ततश्चात्र सूत्रेऽज्ञानिष्पत्त्याणुदिदित्यस्याप्रवर्तनादिकारेण शकारस्य ग्रहणात्सवर्णत्वं शकारयोः सिद्धम् । एवमीकारोऽप्यत्रेकारेण न गृह्यतइतीकारशकारयोः सवर्णत्वमस्तीति कुमारीशेते इत्यत्र सवर्णदीर्घत्वं प्राप्तमचीत्यनुवृत्त्या निवार्यते । तत्र क्व ग्रहणकशास्त्रं प्रवर्तते क्व नेति विषयविभागप्रदर्शनाय चोद्यं करोति । यथैव तर्हीति । इकारस्य ह्यग्राग्राहकत्वं दृष्टमित्यकः सवर्णे दीर्घ इत्यत्रापि प्राप्तमिति प्रश्नः । अनच्त्वमेव वाक्यापरिसमाप्त्या साध्यते न तु प्रयत्नभेदेनेत्याह अपर आहेति । अस्मिन् पक्षइति ।

---

स्वसवर्णत्वेन ज्ञातानां ग्रहणं बोधयति इत्यर्थः । अपरिसमाप्तिश्च सवर्णनिर्णयं विना तद्ग्रहणबोधनासामर्थ्यमित्यर्थः । तज्जन्ये शक्तिग्रहे बाधकसंभावनाहितापामाण्यसंभावनासत्त्वादिति तात्पर्यम् । यत्तु नाज्झलावित्यतः प्राक्तुल्यास्येत्यस्य बोधाभावेन सवर्णपदार्थज्ञानाभावादणुदिदित्यस्य वाक्यार्थाबोध इत्यर्थ इति । तन्न । अभावज्ञाने प्रतियोगिज्ञानस्य कारणतया तुल्यास्येत्यतः प्राङ् निषेधवाक्यार्थाभावो न तु विपरीतमित्यदोषादिति दिक् । सिद्धमिति । अत्रत्याच्पदार्थोपस्थितिकाले वाक्यार्थबोधरूपसावर्ण्याभावज्ञानाभावादिकारशकारयोः सवर्णत्वज्ञानेऽप्यणुदित्सूत्रजस्येष्टविषये वाक्यार्थबोधरूपशक्तिग्रहस्याभावान्नेकारेणात्र शकारग्रहणमिति भावः । ननु वाक्यापरिसमाप्तिन्यायस्यास्मदादीन्प्रति प्रवृत्तत्वेऽपि पाणिनेस्तच्छास्त्रप्रणयनान्यथानुपपत्त्या तत्तद्विषयज्ञानस्य प्रागपि सत्त्वावश्यकत्वेन तज्ज्ञानस्यैतच्छास्त्रासाध्यत्वेन च नाज्झलावित्यादौ सवर्णाभिप्रायेण प्रयोगः स्यात् । अस्मदादीनां बोधस्तु तत्तात्पर्यज्ञव्याख्यातृपरम्परया लक्षणया भविष्यतीति शकारयोः प्रतिषेधः प्राप्नोति एवमकारयोरपीति चेन्न । ज्ञानसत्त्वेऽपि तदभिप्रायेण प्रयोगे तात्पर्यग्राहकाभावात् । करिष्यमाणसंज्ञाद्यभिप्रायेण पाणिनिव्यवहाराभावस्यैव प्रतिपादनाच्च । अत एव हलन्त्यसूत्रे इतरेतराश्रयमाशङ्क्य एकशेषेण समाहितं भाष्ये । अन्यथा पाणिनिना हल्पदार्थस्य ज्ञातत्वेन तस्यान्योन्याश्रयाभावात्तेन तदभिप्रायेण प्रयोगे श्रोतृबोधस्य लक्षणयैवोपपत्तौ तत्पर्यन्तानुधावनमनर्थकं स्यात् । मम तु पाणिनेस्तथा व्यवहाराभावान्न दोषः । उक्तार्थे ज्ञापकमप्युपन्यस्यति एवमीकारोऽपीति । अत्र पक्ष दीर्घप्लुताकाराभ्यां ह्रकारे सावर्ण्य-

वेसेतदसमर्थितं भवति। एतच समर्थितम्। कथम्। अस्तु वा शकारस्य शकारेण सवर्णसंज्ञा मा वा भूत्। ननु चोक्तं परशतानि कार्याणि। झरो झरीति लोपो न प्राप्नोतीति। मा भूल्लोपः। ननु च भेदो भवति सति लोपे द्विशकारकम्। असति लोपे त्रिशकारकम्। नास्ति भेदः। असत्यपि लोपे द्विशकारकमेव। कथम्। विभाषा द्विर्वचनम्। एवमपि भेदः। असति लोपे कदा चिद् द्विशकारकं कदा चित् त्रिशकारकम्। सति लोपे द्विशकारकमेव। स एष कथं भेदो न स्याद्। यदि नित्यो लोपः स्यात्। विभाषा तु स लोपः। यथा ऽभेदस्तथास्तु॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम्॥

ईदूदेद् द्विवचनं प्रगृह्यम्॥११॥ किमर्थमीदादीनां तपराणां प्रगृह्यसंज्ञोच्यते। तपरस्तत्कालस्येति तत्कालानां सवर्णानां ग्रहणं यथा स्यात्। केषाम्।

---

एकत्र हि साध्ये हेतुविकल्पो भवति। इह तु साध्यभेदः सिद्धेरनत्वं हेतुरनत्वस्य वाक्यापरिसमाप्तिः। एतच्चेति। अस्तु वा ग्रहणमिकारेण शकारस्येति वाक्यशेषाध्याहारात् प्रतिज्ञाविकल्पार्थो वाशब्द इत्यर्थः। ननु चेति। श्रुतिकृतं भेदमुपगम्योच्यते। स एष कथं भेदो नेत्यत्रैवच्छेदः। भेदे एवेत्यर्थः। अपर आह। स्याद्भेदो यदि नित्यो लोपः स्यात्। विभाषा तु स लोप इति ततो नास्ति भेद इत्यर्थः। द्विर्वचनमपि विभाषा। यरोऽनुनासिकेऽनुनासिको वेत्यतो वेत्यनुवर्तनात्। लोपोपि विभाषा झयो होऽन्यतरस्यामित्यतो ऽन्यतरस्यामित्यनुवर्तनादित्यर्थः॥

इति महामहोपाध्यायजैयटपुत्रकैयटकृते व्याकरणमहाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम्॥४॥

ईदूदेद्द्विवचनं प्रगृह्यम्॥ किमर्थमिति। ईदूतोरनण्त्वाद्भिन्नकालनिवृत्त्यर्थं नोपपद्यते तपरत्वम्। उदात्तादीनामभेदकत्वाद् गुणान्तरयुक्तानां सवर्णानां ग्रहणार्थमपि नोपपद्यते। जातिपक्षेऽपि दीर्घोच्चारणात्प्रयत्नाधिक्याद्ध्रस्वानां न भविष्यति प्लुतानां चेष्यत एवेति इष्टव्याघातं प्रत्युत तपरत्वं करोतीति प्रश्नः। तपर इति। व्यक्तिपक्षो

---

वारणान्तु प्रश्लेषाद्बोध्यम्। तत्र तात्पर्यग्राहका वेलास्विस्यादिनिर्देशाः, प्रागुक्तं भाष्यञ्चेति बोध्यम्। प्रदर्शनाय। बोधनाय। भाष्ये (यदेतदिति) तद्बोधवेलायां वाक्यपरिसमाप्तेरितिभावः। एकत्रेति। तुल्यार्थानां विकल्पे इति न्यायादित्यर्थः। मा वा भूदित्येतत्सूचितप्रतिज्ञाया आशयमाह अस्तुवेति। ननु 'व्यञ्जनपरस्यैकस्यानेकस्य वा नोच्चारणं विशेष' इति न्यायात् कथं भेद इत्यत आह श्रुतिकृतमिति। भाष्ये (असति लोपे त्रिशकारमिति) वदन् प्रष्टव्यः। किं द्विशकारं न स्यादिति तवाशय उत त्रिशकारं स्यादिति। आद्ये आह असत्यपीति। द्विशकारं भवत्येवेत्यर्थः। द्वितीये आह एवमपीति। विभाषा द्विर्वचनेपीत्यर्थः। एवमपीत्यनेन भेद एवेत्युक्त्वा तदुपपादनावसरे यदि लोपो न स्यादिति वाच्यं किमुच्यते नित्यो लोपः स्यादिति अतः स्थित्वा भिन्नकर्त्तृकत्वेन योजयति सएषइति। त्रिशकारमिष्टमेवेति तात्पर्यम्। झयोहइति। इदं वृत्तिरीत्या। भाष्यरीत्या तु वा ऽवसानइत्यत इतिं बोध्यम्॥१०॥ इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम्॥

ईदूदेत्॥ व्यक्तिपक्षे ईदूतोस्तपरयोरुपादानं भिन्नकालनिवृत्तये वा गुणान्तरयुक्तग्रहणाय वा स्यात्। तत्र नाद्य इत्याह ईदूतोरिति। एवञ्चाणुदिदित्यस्य प्राप्त्यभावान्न तद्बाधकतपरसूत्रप्रवृत्तये तपरत्वमित्यर्थः। तपरसूत्रेऽणग्रहणानुवृत्त्या तस्य प्राप्तावपि फलाभावान्न द्वितीय इत्याह उदात्तादीनामिति। ननु जातिपक्षे भिन्नकालनिवृत्त्यर्थं स्यात्तत्पक्षे हि तपरसूत्रं नियमार्थमेवेत्य तआह जातीति। प्लुतानाञ्चे

उदात्तानुदात्तस्वरितानाम्। अस्ति प्रयोजनमेतत्। किं तर्हीति। प्लुतानां तु प्रगृह्यसंज्ञा न प्राप्नोति। किं कारणम्। अतत्कालत्वात्। नहि प्लुतास्तत्कालाः। असिद्धः प्लुतः। तस्यासिद्धत्वात्तत्काला एव भवन्ति। सिद्धः प्लुतः स्वरसन्धिषु। कथं ज्ञायते सिद्धः प्लुतः स्वरसन्धिष्विति। यदयं प्लुतः प्रकृत्येति प्लुतस्य प्रकृतिभावं शास्ति। कथं कृत्वा ज्ञापकम्। सतो हि कार्यिणः कार्येण भवितव्यम्। किमेतस्य ज्ञापने प्रयोजनम्। "अप्लुतादप्लुतइत्येतन्न वक्तव्यं भवति"। किमतो यत्सिद्धः प्लुतः स्वरसन्धिषु। संज्ञाविधावसिद्धः। तस्यासिद्धत्वात्तत्काला एव भवन्ति। संज्ञाविधौ च सिद्धः। कथम्। कार्यकालं संज्ञापरिभाषम्। यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्। प्रगृह्यः प्रकृत्येत्युपस्थितमिदं भवति। इदूदेद्द्विवचनं प्रगृह्यमिति। किं पुनः प्लुतस्य प्रगृह्यसंज्ञावचने प्रयोजनम्। प्रगृह्याश्रयः प्रकृतिभावो

---

भेदकाश्च गुणा इति भावः। केषामिति। प्लुतानामग्रहणप्रसङ्गात्प्रश्नः। उदात्तेति। क्व चिदनुनासिकग्रहणमस्ति तद्गुणप्रसङ्गेनोच्चारितं न हि प्रगृह्यो ऽनुनासिकः सम्भवति। अणो ऽप्रगृह्यस्यानुनासिक इति निषेधात्। प्लुतानां त्विति। व्यक्तिपक्षाश्रयणादयं दोषो न तु तपरत्वात्। असिद्ध इति। शास्त्रासिद्धत्वाश्रयणाच्च प्लुतबुद्ध्यावसत्यां प्रगृह्यत्वे विधीयमाने द्विमात्राविषया बुद्धिः प्रवर्तते। तथा हि वक्ष्यति। असिद्धत्ववचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थं चेति। यदयमिति। असिद्धत्वे प्लुतः प्रकृत्येत्येवमाश्रयणायोगात् कार्यित्वेनाश्रयणादसिद्धत्वाभावो ऽनुमीयते। सामान्येन स्वरसन्धिप्रकरणविषयं सिद्धत्वं ज्ञाप्यते। न तु प्रकृतिभाव एव। यथा रोरुत्वं एवं सोत्सर्गं सापवादं च प्रकरणमिति प्रकृतिभावेपि प्रगृह्यत्वहेतुके सिद्धत्वमुच्यते। किमेतस्येति। प्रकृति भावएवाश्रयात्सिद्धत्वमस्त्विति प्रश्नः। इतरो लाघवं दर्शयति अप्लुतादिति। सिद्धे हि प्लुते तन्न वक्तव्यं भवति। अतोतीति तपरत्वादेवोत्वाप्रसङ्गः। किमत इति। यथोद्देशे संज्ञापरिभाषे प्रगृह्यसंज्ञा स्वरसन्धिप्रकरणमध्यपातिता न भवतीति प्रश्नः। कार्यकालमिति। कार्यार्थत्वाद् गुणानां

---

ष्यत एवेति। एतच्च अग्रे भाष्य एव स्फुटम्। इष्टव्याघातमिति। जातिपक्षे इदूदंशेपि तपरत्वेनैव प्लुतव्यावृत्तिरित्यभिमानः। भेदकाश्च गुणा इति। भेदकत्वात्स्वरस्येति वार्त्तिकोक्तेरणविषये भेदकपक्षोप्यस्तीत्यभिमानः। इदं प्रयोजनमीदूतेरेव नन्वेदंशे अणुदित्सूत्रेणैव सिद्धेः। ननु तत्कालसवर्णसंग्रहार्थं तपरत्वमुक्तं नातत्कालव्यावृत्त्यर्थं तत्कुतः प्लुतानां न प्राप्नोतीत्यत आह व्यक्तिपक्षेति। इदूदंशे इदमेदंशे तु तपरत्वादेव दोष इति बोध्यम्। ननु इति शब्दादिसमभिव्याहारे कार्यार्थं प्रगृह्यसंज्ञाप्रवृत्तेरन्तरङ्गत्वात्पूर्वं प्लुते तेन स्थानिनो निवृत्तत्वेन प्लुतासिद्धत्वेपि कथं स्थान्याश्रया प्रगृह्यसंज्ञेत्यत आह शास्त्रेति। प्रवृत्तेपि शास्त्रे ऽसिद्धत्वेन तत्प्रवृत्तिबुद्ध्यभावेन प्लुतबुद्ध्यभावाद् द्विमात्रविषयाया बुद्धेस्त्रिमात्रे सत्त्वाद् द्विमात्रबुद्ध्या त्रिमात्रस्य संज्ञेत्यर्थः। एतेन शास्त्रासिद्धत्वाच्छास्त्राप्रवृत्तौ स्थानिनः प्रगृह्यत्वेपि पुनः प्लुते तस्य तन्न स्यात्। न च स्थानिवत्त्वम्। अनल्विधाविति निषेधात्। प्लुतस्थान्यल्वृत्तिधर्मत्वात्। एवञ्चागच्छत मग्नी ३ इत्यादावणो ऽप्रगृह्यस्येत्यनुनासिकः स्यादित्यपास्तम्। ननु प्राधान्यात्कार्यासिद्धत्वमेव स्यादत आह तथाहीति। उत्सर्गः। स्थानी। सामान्येनेति। तदुत्सर्गेपीत्यर्थः। ननु प्रकृतिभावो न स्वरसन्धिप्रकरणस्थस्तत्राह सोत्सर्गमिति। तदुत्सर्गनिरूपितापवादत्वस्यात्रापि सत्त्वेनेदमपि तत्प्रकरणस्थमेवेति भावः। प्रगृह्यत्वहेतुके प्रकृतिभावेऽपीत्यन्वयः। प्रकृतिभावएवेति। प्लुतप्रकृतिभाव इत्यर्थः। भाष्ये (एतस्ये) त्यस्य स्वरसन्धिप्रकरणविषयत्वेन ज्ञापनस्येत्यर्थः। कार्यार्थत्वादिति। तदेकवाक्यतापन्नं

यथा स्यात् । मा भूदेवम् । प्लुतः प्रकृत्येत्येवं भविष्यति । नैवं शक्यम् । उपस्थिते हि दोषः स्यात् । अप्लुतवदुपस्थितइत्यत्र पठिष्यति ह्याचार्यः । वद्वचनं प्लुतकार्यप्रतिषेधार्थम् । प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसङ्गोऽन्येन विहितत्वादिति । तस्मात्प्लुतस्य प्रगृह्यसंज्ञैषितव्या । प्रगृह्याश्रयः प्रकृतिभावो यथा स्यात् । यदि पुनर्दीर्घाणामतपराणां प्रगृह्यसंज्ञोच्येत । एवमप्येकार एव एकः सवर्णान् गृह्णीयात् ईकारोकारौ न गृह्णीयाताम् । किं कारणम् । अनण्त्वात् । यदि पुनर्ह्रस्वानामतपराणां प्रगृह्यसंज्ञोच्यते । नैवं शक्यम् । इहापि प्रसज्येत । अकुर्वीह अत्र । अकुर्वह्यत्रेति । तस्माद्दीर्घाणामेव तपराणां प्रगृह्यसंज्ञा वक्तव्या । दीर्घाणां चोच्यमाना प्लुतानां न प्राप्नोति । एवं तर्हि किं न एतेन यत्नेन यत्सिद्धः प्लुतः स्वरसंधिष्विति । असिद्धः प्लुतस्तस्यासिद्धत्वात्तत्काला एव भवन्तीति । कथं यत्तज्ज्ञापकमुक्तं प्लुतप्रगृह्या अचीति । प्लुतभावी प्रकृत्येत्येवमेतद्विज्ञायते । कथं यत्तत्प्रयो-

---

कार्यस्य च प्रधानत्वात् प्रधानदेशत्वस्य न्याय्यत्वादिति भावः । उपस्थिते हीति । उपस्थितमनार्ष इतिकरणः । अग्नी ३ इतीत्यत्र प्लुताश्रये प्रकृतिभावे प्रतिषिद्धे प्रगृह्याश्रयः प्रकृतिभाव इष्यते तदाह पठिष्यतीति । यत्र प्रगृह्यसंज्ञा नास्ति स प्लुताश्रयप्रकृतिभावः प्रतिषेधविषयः । देवदत्ता ३ इति देवदत्तेति । यदि पुनरिति । ननु व्यक्तिपक्षाश्रयणात् प्लुतानां न सिध्यति न पुनस्तपरत्वात् । अयमत्राशयः । आकृतिपक्ष आश्रयिष्यते । दीर्घोच्चारणाच्च प्रयत्नाधिक्याद्ध्रस्वानां न भविष्यति । प्लुतानां तु प्रवर्तिष्यते । एवमपीति । अयं भावः । आकृतिपक्षे यथा ह्रस्वानां प्रयत्नाधिक्यान्न भवति तथा दीर्घोच्चारणसामर्थ्याद्विशिष्टव्यक्तिस्थैवाकृतिर्गृह्यतइति प्लुतानां न स्यात् । यथा स्थूलं गामानयेत्युक्ते न कृशस्यानयनं भवतीति । आकृतिपक्षेपि विशिष्टैवाकृतिर्दीर्घा व्यक्तिर्गृह्यते । तथा चानण्त्वादीदूतौ ग्राहकौ न स्याताम् । यदि पुनरिति । ह्रस्वसाहचर्यादेकारोपि ह्रस्वशब्देनाभिधीयतइति ह्रस्वानामिति बहुवचनम् । तत्र ह्रस्वनिर्देशे अण्त्वादाकृतिपक्षे वा यत्नाधिक्याभावाद् भिन्नकालानां ग्रहणं सि-

---

सञ्ज्ञासूत्रं तत्प्रकरणस्थमिति भावः । प्रतिषिद्धेइति । अप्लुतवद्भावेन बाधिते इत्यर्थः । भाष्ये ( प्रगृह्यप्लुतप्रतिषेधेति ) । प्रगृह्याश्रये प्रकृतिभावे प्लुतप्रतिषेधप्रसङ्ग इत्यर्थः । प्रगृह्याश्रयस्यापि कुतो न निवृत्तिरित्यत आह. अन्येनेति । प्रगृह्यः प्रकृत्येत्यनेनेत्यर्थः । नन्वीदृशेपि विषये प्रगृह्याश्रयप्रकृतिभावे सति प्लुताश्रयप्रकृतिभावप्रतिषेधोऽप्लुतवदिति बोधितो व्यर्थ इत्यत आह यत्रेति । न पुनस्तपरत्वादिति । तद्वक्ष्यति भाष्ये "दीर्घाणाञ्चोच्यमाना प्लुतानां न प्राप्नोतीति" । प्लुतानान्त्विति । तपरत्वाभावे इत्यर्थः । तपरत्वं तु तपरसूत्रस्य जातिपक्षेऽनणयपि नियमार्थत्वान्न स्यादिति भावः । ईत्वादि इत्वाद्यनतिरिक्तं मन्यते । आकृतिरिति । विना व्यक्त्युच्चारणं जातिनिर्देशाभावादवश्यं व्यक्त्युच्चारणीयायां लाघवाय ह्रस्व एव प्रयोक्तव्ये गुरुदीर्घोच्चारणेन तद्व्यक्तेरुपलक्षणत्वं विहाय विशेषणत्वस्यैवाश्रयणाद्विशिष्टव्यक्तिस्थैव जातिर्गृह्यते इति न्यूनकालव्यक्तिगताया इवाधिककालव्यक्तिगताया अपि न ग्रहणमिति भावः । भिन्नभिन्नव्याप्यजातिस्वीकारे तु निर्दिष्टव्याप्यजातेः प्लुतेऽभाव एवेत्यपि बोध्यम् । एत्वजातेस्तु प्लुते सत्त्वात्तेन प्लुतग्रहणं भवत्येव । ततो लघुव्यक्तेरभावाच्च । नन्वेवं भाष्ये ऽनण्त्वादिति हेतुरसङ्गतोऽत आह आकृतिपक्षेपीति । ईदृशे विषये तत्तदित्वादिजातिविशिष्टा व्यक्तिरेव गृह्यत इत्यर्थः । जातिप्राधान्ये फलाभावाद् व्यक्तिद्वारा कार्यसंबन्धाश्रयणे गौरवाच्च तस्यायुक्तत्वाच्च । तद्विशिष्ट-

जनमुक्तम्। क्रियते तन्न्यास एव। अप्लुतादप्लुतइति। एवमपि यत्सिद्धे प्रगृह्य-कार्यं तत्प्लुतस्य न प्राप्नोति। अणो ऽप्रगृह्यस्यानुनासिक इति। एवं तर्हि किं न एतेन यत्नेन कार्यकालं संज्ञापरिभाषमिति। यथोद्देशमेव संज्ञापरिभाषम्। अत्र चासावसिद्धः। तस्यासिद्धत्वात्तत्काला एव भवन्ति। कथं पुनरिदं विज्ञायते ईदादयो यद्द्विवचनमाहोस्विदीदाद्यन्तं यद् द्विवचनमिति। कश्चात्र विशेषः। ईदा-दयो यद् द्विवचनं प्रगृह्या इति चेदन्त्यस्य विधिः *। ईदादयो द्विवचनं प्रगृह्या इति चेद् अन्त्यस्य प्रगृह्यसंज्ञा विधेया। पचेथे इति। पचेते इति। वचनाद् भवि-

ष्यतीत्यर्थः। प्लुतभावीति। प्लुतो भावी यस्य सः प्लुतभावी स्थानी प्रकृतः तस्यैव प्रकृतिभावः। ननु प्लुतस्यासिद्धत्वात्स्थान्यपि प्लुतभावित्वात् प्लुतव्यपदेशं कथं लभते। नैष दोषः। प्लुतो ह्यस्य भावीति बुद्ध्या प्रकल्पनमेतत्। न च तत्र प्लुत-स्यासिद्धत्वम्। अन्यथा प्लुतो ऽसिद्ध इत्ययमपि व्यवहारो न स्यात्। कार्यकाल-पक्षमाश्रित्याह एवमपीति। ततश्चाग्नी इत्यत्राप्रगृह्यस्येत्यनुनासिकप्रतिषेधे क्रिय-माणे प्लुतस्य सिद्धत्वात्प्रगृह्यत्वाभावादनुनासिकः स्यात्। यथोद्देशपक्षाश्रयेण तु परिहारः। कथं पुनरयं पक्षो यावता कार्यार्थत्वात्संज्ञापरिभाषस्य कार्यकालैतव न्या-य्या। नैष दोषः। यदा ह्युद्दिश्य प्रयोजनविशेषं प्रयोजनमात्रमभिसन्धाय भविष्यति किं चिदनेन प्रयोजनमिति संज्ञापरिभाषं प्रणीयते तदा सम्भवत्येवायं पक्षो यथाश्रुत-ग्राहिप्रतिपत्त्रपेक्षः। महावाक्यार्थपर्यालोचनप्रवृत्तप्रतिपत्त्रपेक्षस्तु कार्यकालपक्षः। कथं पुनरिति। ईदादयो यदि संज्ञिनस्तद्विशेषणं तु द्विवचन तदा द्विवचनान्तत्वमी-दादीनां न सम्भवतीति द्विवचनानामेवेदादीनां संज्ञया भाव्यम्। अथ द्विवचनं संज्ञि तद्विशेषणमीदादयस्तदा तदन्तविधिरप्रधानेन प्रधानस्येति ईदाद्यन्तं द्विवचनमिति पक्षः। तत्रोभयोरपि पक्षयोर्दोषदर्शनात्प्रश्नः। पचेते इति। इकारोऽत्र द्विवचनं

व्यक्तिग्रहणं ऽप्यणत्वाभावान्न तौ ग्राहकाविति भावः। भाष्ये (तस्माद्दीर्घाणामेव तपराणामिति) गुणान्त-रयुक्तसंग्रहायासन्देहाय चेत्यर्थः। कर्मधारयभ्रमं व्युदस्यति प्लुतो भावीति। यद्यप्याश्रयात्सिद्धत्वेनापि सिध्यति, तथापि शास्त्रबाधापेक्षया लक्षणाश्रयणमुचितमिति भाष्याभिप्रायः। प्रकृतइति। प्लुतशब्देन बो-धित इत्यर्थः। बुद्ध्येति। शास्त्रीये कार्ये ऽसिद्धत्वं न चायं व्यवहारः शास्त्रीयं कार्यमिति भावः। कार्य-कालपक्षमाश्रित्येति। अयं भावः। तत्र पक्षे संज्ञाशास्त्राणां न पृथग् बोधकत्वम्। पूर्वत्रासिद्धमिति चातिदेशः कार्यार्थः, कार्यज्ञानञ्च वाक्यार्थबोधोत्तरमिति यद्देशे वाक्यार्थबोधस्तद्देशस्थत्वमेव तस्य। किं च पूर्वत्रासिद्धमित्यस्याधिकारत्वेन पूर्वं पूर्वमसिद्धमिति तदर्थः। तत्र कार्यकालपक्षे तत्तद्देशोपस्थितसंज्ञापरिभा-षाणामप्यसिद्धत्वबोधनम्। एवञ्च प्लुतदृष्ट्या ऽनुनासिकविधेरसिद्धत्वेन तदेकवाक्यतापन्नस्यापि तद्दृष्ट्या ऽसिद्धत्वेन प्लुतशास्त्रे ऽनुवृत्तपूर्वत्रासिद्धमित्यत्र पूर्वग्रहणेन ईदूदेद् अदसोमादित्यस्य ग्रहीतुमशक्यत्वमिति। यथोद्देशे तु स्वातन्त्र्येण संज्ञादीनां कार्यबोधकत्वात्तत्प्रति प्लुतासिद्धत्वबोधनं शक्यमेव। एतेन कार्यकाल-पक्षेपि पाठक्रमपूर्वत्वाक्षतिरित्यपास्तम्। भाष्ये (यत्सिद्धे प्रगृह्येति) प्लुते सिद्धकाण्डस्थे यत्प्रगृह्यकार्य-मित्यर्थः। यत्प्रगृह्यकार्यंदृष्ट्या प्लुतः सिद्धस्तदिति यावत्। यथोद्देशेति। नन्वत्र पक्षे ऽग्नी ३ इत्यादौ प्लुत-स्यासिद्धत्वेन ततः प्रागेव प्लुताभावपक्षे ऽनुनासिकप्रतिबन्धेन फलवत्यां संज्ञायान्ततः प्लुते तं द्विमात्र-त्वेन पश्यन्त्या अपि संज्ञायाः पुनः प्रवृत्तौ बीजाभावादल्विधित्वेन स्थानिवत्त्वाभावाच्चाप्रगृह्यत्वेनानुना-सिकः स्यादिति चेन्न। संज्ञायाः कार्यार्थतया पुनः प्रवृत्तौ कार्यसिद्धिरूपबीजस्य सत्त्वेन पुनस्तस्याः सुल-भत्वात्। एतदेव ध्वनयता प्लुतस्यासिद्धत्वात्तत्काला एव भवन्तीत्येवकारः प्रयुक्तः। प्लुतात्प्राक् संज्ञायाश्च तत्काला एवेति तदर्थं इत्यलम्। प्रणीयते। बोध्यते। ईदादय इति। प्राथम्यादद्सो मादित्यनेनैकरूप्याच्चेति

ष्यति । अस्ति वचने प्रयोजनम् । किम् । खट्वे इति माले इति । अस्तु तर्हि ईदाद्यन्तं यद् द्विवचनमिति। ईदाद्यन्तं यद् द्विवचनमिति चेदेकस्य विधिः । ईदाद्यन्तं द्विवचनमिति चेदेकस्य प्रगृह्यसंज्ञा विधेया । खट्वे इति माले इति । न वाद्यन्तवत्त्वात् * । न वा एष दोषः । किं कारणम् । आद्यन्तवत्त्वात् । आद्यन्तवदेकस्मिन् कार्यं भवतीत्येवमेकस्यापि भविष्यति । अथवा एवं वक्ष्यामि ईदाद्यन्तं यद् द्विवचनान्तमिति । ईदाद्यन्तं यद् द्विवचनान्तमिति चेल्लुकि प्रतिषेधः * । ईदाद्यन्तं यद् द्विवचनान्तमिति चेल्लुकि प्रतिषेधो वक्तव्यः । कुमार्योरगारं कुमार्यगारम् । वध्वोरगारं वध्वगारम् । एतद्धीदाद्यन्तं श्रूयते द्विवचनान्तं च भवति प्रत्ययलक्षणेन । सप्तम्यामर्थग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधस्य । यदयमीदूतौ च सप्तम्यर्थ इत्यर्थग्रहणं करोति तज्ज्ञापयत्याचार्यो न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवतीति । तत्तर्हि ज्ञापकार्थमर्थग्रहणं कर्तव्यम् । न कर्तव्यम् । ईदादिभिर्द्विवचनं विशेषयिष्या-

---

न भवति अपि तु तस्यान्त. । वचनादिति । द्विवचनावयवे द्विवचनशब्दो वर्तिष्यतइत्यर्थः । अस्तीति । मुख्ये सम्भवति गौणस्य ग्रहणमन्याय्यमित्यर्थः । खट्वेइतीति । अन्तादिवच्चेत्यादिवद्भावादेकारो द्विवचनम् । एकस्येति । असहायस्येत्यर्थः । ईदूतोः केवलयोरेव सम्भव इति वचनसामर्थ्यात्तयोरेव सिद्ध्यति । एकारान्तस्य तु द्विवचनस्य पचते इत्यादौ सम्भवात्खट्वे इत्यत्र न सिद्ध्यतीति दोषः । येन विधिस्तदन्तस्येत्यत्र स्वस्य च रूपस्येति नाश्रितामिति दोषोपन्यासः । अथवेति । प्रत्ययग्रहणे यस्मादिति द्विवचनेन तदन्तविधिः । पश्चाद् द्विवचनान्तमीदादिभिर्विशेष्यतइत्ययं तृतीयः पक्षो भवति । ईदाद्यन्तं यद्द्विवचनान्तमिति । ननु संज्ञाविधौ प्रत्ययग्रहणे तदन्तविध्यभाव । सुप्तिङन्तं पदमित्यत्रान्तग्रहणेन ज्ञापित इति कथमेतत्पक्षोपपत्तिः । चतुर्थपक्षप्रतिक्षेपाय वक्ष्यत्येवैतद्भाष्यकार इति नैतदपूर्वं चोद्यम् । दोषान्तरेणेमं पक्षं निराकर्तुमाह लुकि प्रतिषेध इति । दोषसद्भावेनैवास्य पक्षस्य निराकरणात्तदन्तविध्यभावोत्र नोक्तः । कुमार्यगारमिति । कथं पुनरत्र द्विवचनान्तस्य समासः । यावता वृत्तौ संख्याविशेषो न गम्यते । नैष दोषः । यथा तावकीन इत्यादावादेशेन संख्याविशेषो व्यज्यते तथेहापि सत्यां प्रगृह्यसंज्ञायां प्रकृतिभावेन द्वित्वं व्यज्येतेति दोषोपन्यासः । सप्तम्यामिति । ईदूतौ सप्तमीत्येव तदन्तविधौ सति प्रत्यलक्षणेन सोमो गौरी अधिश्रित इत्यादौ सिद्धायां प्रगृह्यसंज्ञायामर्थग्रहणं ज्ञापयति प्रगृह्यसंज्ञाप्रकरणे प्रत्ययलक्षणं न भवतीति । तत्तर्हीति । आद्यन्तवद्भावानाश्रयणाय तृतीयः पक्षः परिगृहीतः । तत्र च दोषप्रतिविधानार्थ-

---

भावः । तदेति । अन्तशब्दो ऽवयववचनस्तदन्तस्येति बहुव्रीहिश्चेत्यर्थः अयेति । संज्ञाया आनन्तर्यायेन विधिरित्यस्यानुग्रहाच्चेति भावः । भाष्ये ( अन्तस्येति ) । द्विवचनान्त्यस्य वर्णस्येत्यर्थः । गौणस्येति जघन्यत्वसामान्याल्लाक्षणिकमपि गौणपदेन गृह्यत इति भावः । प्रथमोपस्थितद्वस्यपरित्यागेन एकारान्तोदाहरणादाने बीजमाह ईदूतोरिति । नाश्रितामिति । वार्तिककृतेति शेषः । तदन्तविधिरिति । अस्मादेव वचनाच्छब्दस्वरूपं विशेष्यमाश्रयेति भावः । इत्ययं तृतीयः पक्षइति । व्यपदेशिवद्भावानाश्रयणमस्य बीजम् । तदन्तविध्यभावो ऽत्र नोक्त इति । ईदादिभिः श्रूयमाणत्वेन द्विवचनविशेषणमेव न्याय्यमित्येतत्पक्षासंभवरूपो दोषो नोक्त इत्यपि बोध्यम् । आदेशेनेति । एकार्थयुष्मदादेर्विहितेन तवकाद्यादेशेनेत्यर्थः । प्रकृतिभावेनेति । अन्यथा ऽनुपपद्यमानेनेत्यर्थः । एवं हि सिद्धान्ते प्रगृह्यत्वाभावेन द्वित्वव्यञ्जकाभावादस्य

मः । ईदादिविशिष्टेन च द्विवचनेन तदन्तविधिर्भविष्यति । ईदाद्यन्तं यद्द्विवचनं तदन्तमीदाद्यन्तमिति । एवमप्यशुक्ले वस्त्रे शुक्ले सम्पद्येतां शुक्लयास्तां वस्त्रे इति । अत्र प्राप्नोति । अत्र हीदादि च द्विवचनं तदन्तं च भवति प्रत्ययलक्षणेन । अत्राप्यकृते शीभावे लुग्भविष्यति । इदमिह संप्रधार्यम् । लुक्क्रियतां शीभाव इति । किमत्र कर्तव्यम् । परत्वाच्छीभावः । नित्यो लुक् । कृते शीभावे प्राप्नोत्यकृतेपि प्राप्नोति । अनित्यो लुगन्यस्याकृते शीभावे प्राप्नोत्यन्यस्य कृते । शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति । शीभावोप्यनित्यः । न हि कृते लुकि प्राप्नोति । उभयोरनित्ययोः परत्वाच्छीभावः । शीभावे कृते लुक् । अथापि कथं चिन्नित्यो लुक्स्यादेवमपि दोषः । वक्ष्यत्येतत् । पदसंज्ञायामन्तग्रहणमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थमिति । इदं चापि प्रत्ययग्रहणमयं चापि संज्ञा-

---

मधिकमर्थग्रहणं ज्ञापकं कर्तव्यं भवतीति सुतरां गौरवं भवतीत्यर्थः । ईदादिभिरिति । अत्र पक्षे कुमार्यगारमित्यत्राप्रसङ्गः । न ह्यत्रेदूदेदन्तं द्विवचनम् । किं तर्हि औसिति सकारान्तम् । तदन्तमिति । द्विवचनान्तमित्यर्थः । ईदाद्यन्तमिति । ईदादिभिः साक्षात्समुदायस्य सम्बन्धाभावादीदादिशब्देन ईदाद्यन्तमुच्यते तेनेदाद्यन्तान्तमित्यर्थ । शुक्लयास्तामिति । शुक्लशब्दाद् द्विवचनमौ तस्य नपुंसकाच्चेति शीभावः । ततश्च्विप्रत्ययः । शीशब्दस्य सुप इति लुक् । अस्य च्वावितीत्वं तद्धितान्तत्वात्सुप् तस्याव्ययादिति लुक् अत्र हि शीशब्द ईकारान्तं द्विवचनं तदन्तश्च समुदायः प्रत्ययलक्षणेनेति प्रगृह्यसंज्ञा प्राप्नोति । अत्र हीदादि च द्विवचनमिति । ईदादिशब्देनेदाद्यन्तमुच्यते । क्व चित्तु पाठः । ईदाद्यन्तं च श्रूयतइति । तत्रैवं व्याख्येयम् । ईदाद्यन्तं च श्रूयते सूत्रे तदन्तविधिरीदादिभिर्द्विवचनस्याश्रयितइत्यर्थः । यस्त्वयमस्य च्वावितीकारः स द्विवचनस्य न कश्चिदिति न तदभिप्रायेण भाष्यं व्याख्येयम् । अथापि कथं चिदिति । स्थानिविशेषानपेक्षायां कृताकृतप्रसङ्गित्वेन लुक्शास्त्रस्य प्रवर्तनादित्यर्थः । अथवा नित्यत्वेन बाधकत्वं लक्ष्यते तेनान्तरङ्गानपीति न्यायेन शीभावस्य लुग् बाधक इत्यर्थः । एवमपि दोष इति । पक्षस्योत्थानमेव नास्तीति तत्पक्षासम्भव एव दोषः । अवश्यमिति । यदाश्रयणभयादयं पक्षो ऽङ्गीकृतः । तस्याद्यन्तवद्भावस्यास्मिन्नपि पक्षे ऽवश्यमाश्रयणमङ्गीकृतम् । अग्नी इत्यत्र हीकार एव द्विवचनं न त्वोकारान्तम् । तस्मादिति । द्वितीय एव पक्षोऽस्त्वित्यर्थः । मणीवादीनां प्रतिषेधो वक्तव्य इति भाष्यवार्त्तिककाराभ्यामपठितत्वादप्रमाणमेतत् ।

---

प्रयोगस्यासाधुत्वापत्तिरसाधुप्रयोगं च भगवतो ऽश्रद्धेयतापत्तिरतः पूर्वपदार्थतावच्छेदकरूपेणैव बोधो न तु सङ्ख्यावत्त्वेनेत्येव भाष्यसंमतमतो वृत्तौ सङ्ख्यानवगमे ऽप्यनेकार्थप्रतीत्या तथा विग्रहे बाधकाभाव इति बोध्यम् । सुतरामिति । अकरणात्करणं गुरु तस्य च ज्ञापकत्वेनाश्रयणमिति सुतराङ्गौरवमित्यर्थः । ( ईदादिभिरिति ) भाष्ये । श्रुतस्याश्रुतेन संबन्धो न्याय्य इति भावः । साक्षात् । द्विवचनमनपेक्ष्य । समुदायस्य । प्रत्ययान्तस्य । नन्वत्र पक्षे न द्विवचनेनेदादी विशेष्येते इति कथमीदादि च द्विवचनमित्यत आह ईदादीति । तदन्तत्वरूपस्य व्यपदेशिवद्भावेन बोध्यम् । श्रूयते सूत्र इति । यच्छ्रूयते सूत्रे द्विवचनन्तदीदाद्यन्तमिति भाष्ये योजनेत्याशयः । अनित्यत्वेऽपि लुकः शीभावो नित्यश्चेत्तुल्यबलत्वात्परत्वादिति पूर्वोक्तमनुपपन्नमतो भाष्ये शीभावोऽप्यनित्य इत्युक्तम् । कृते लुकि तदप्राप्तिस्तु प्रसङ्गरूपषष्ठ्यर्थस्याभावादिति भावः । अग्नीइतीति । खट्वेइत्यस्याप्युपलक्षणमेतत् द्वितीयइति प्रत्ययांशे तदन्तविधिसत्त्वेन

विधिः। अवश्यं खल्वस्मिन् पक्षे आद्यन्तवद्भाव एषितव्यः। तस्मादस्तु स एव मध्यमः पक्षः॥

**अदसो मात्**॥१२॥ मात्प्रगृह्यसंज्ञायां तस्यासिद्धत्वादयावेकादेशप्रतिषेधः*। मात्प्रगृह्यसंज्ञायां तस्य ईत्वस्य ऊत्वस्य चासिद्धत्वादयावेकादेशाः प्राप्नुवन्ति। तेषां प्रतिषेधो वक्तव्यः। अमी अत्र। अमू अत्र। अमी आसाते। अमू आसाते। ननु च प्रगृह्यसंज्ञावचनसामर्थ्यादयादयो न भविष्यन्ति। वचनार्थो हि सिद्धे *। नेदं वचनाल्लभ्यम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किम्। यत्सिद्धे प्रगृह्यकार्यं तदर्थमेतत्स्यात्। अणो ऽप्रगृह्यस्यानुनासिक इति। नैकं प्रयोजनं योगारम्भं प्रयोजयति। यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयादणो प्रगृह्यस्यानुनासिकोदसो नेति। विप्रतिषेधाद्वा *। अथवा प्रगृह्यसंज्ञा क्रियताम् अयादयो वेति। प्रगृह्यसंज्ञा भवि-

---

मणीवोष्ट्रस्येति तु प्रयोगो वाशब्दस्योपमानार्थस्य। रोदसी वेत्यादिस्तु च्छान्दसः प्रयोगः। छन्दसि तु सर्वे विधयो विकल्पन्ते इति॥ ११॥

अदसो मात्॥ मात्प्रगृह्येति। अस्मिन् सूत्रन्यासे इत्यर्थः। ऊत्वस्य चेति। चशब्दान्मत्वस्य च। शास्त्रस्यासिद्धत्वाच्च स्थानिलक्षमेव कार्यं प्राप्नोति नादेशलक्षणमित्ययादिप्रसङ्गः। अमी आसाते इत्ययादेशः प्राप्नोति अमू आसाते इत्यावादेशो ऽमी अत्रेत्यत्र एकादेशः। ननु च द्विपदाश्रयत्वाद्वहिरङ्गा अयादयोन्तरङ्गेष्वीत्वादिष्वसिद्धा इति पूर्वाभावे कथं पूर्वत्रासिद्धमितीत्वादीनामासिद्धत्वं स्यात्। नैष दोषः। नाजानन्तर्ये इति वहिरङ्गपरिभाषानिषेधात्। ननु चेति। यथोद्देशपक्षे आश्रयात्सिद्धत्वं भविष्यतीत्यर्थः। कार्यकालपक्षमाश्रित्याह वचनार्थो हीति। वचनस्य प्रयोजनमित्यर्थः। नैकमिति। अनेककार्यसिद्ध्यर्थं संज्ञासूत्रं नैकेन प्रयुज्यतइत्यर्थः। अन्यत्तु सूत्रमेकेनापि प्रयुज्यते सुदूगादणित्यादि। तत्रैवायमिति। न च तत्रेदूदेद्ग्रहणं कर्तव्यं मादिति वा। यस्मादणोनुनासिको ऽवसाने विधीयते पूर्वेण णकारेणाण्ग्रहणमिति असौ अमुके अमुकाभ्यामित्यादावनुनासिकस्याप्रसङ्ग एव। तदेवं कार्यकालेपि संज्ञापरिभाषे प्रकरणो-

---

पत्तद्वयस्यैकत्वबुद्ध्या तस्य मध्यमत्वोक्तिरिति बोध्यम्। एतदिति। वृत्तिकारोक्तमित्यर्थः।॥ ११॥

अदसो मात्॥ अस्मिन्निति। मात्पदघटिते इत्यर्थः। यदि तु अदसोदादित्युच्यते दात्परश्च पूर्वोत्तरसाहचर्यादवर्णभिन्नो ऽज्ञ औकारैकाररूप एव तदा न स्याद्दोष इति भावः। इदमेव ध्वनयितुमदसः प्रगृह्यसंज्ञायामिति नोक्तम्। नन्वीत्वोत्वयोरसिद्धत्वेपि अदसोमादित्यत्रेदूदेदिति निवर्त्य मात्परौकारैकारयोरपि प्रगृह्यत्वान्नायादिप्रसङ्गो ऽत आह चशब्दान्मत्वस्येति। एवञ्चैदौतोर्मात्परत्वाभावादेवमपि न प्रगृह्यत्वप्राप्तिरिति भावः। नन्वीत्वादीनामसिद्धत्वेपि तन्निवर्तितैकाराद्यभावेन कथमयादिप्राप्तिः। किं च्वायादीन् प्रत्यसिद्धत्वेपि प्रगृह्यसंज्ञायामाश्रयात्सिद्धत्वेन तत्संज्ञायान्तत्सामर्थ्यान्नायादयो ऽत आह शास्त्रेति। नादेशलक्षणमिति। प्रकृतिभाव इत्यर्थः। प्रगृह्यत्वन्त्वनुनासिकपर्युदासेन चरितार्थमिति भावः। एकादेशः। एङःपदान्तादतीति। नाजानन्तर्ये इति। उत्तरकालप्रवृत्तिके अयादावजानन्तर्यादिति भावः। वैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तेर्विसर्जनीयसूत्रे भाष्ये वक्ष्यमाणत्वान्न दोष इति परे। यथोद्देशेति। नन्वाश्रयात्सिद्धत्वेन प्रगृह्यत्वे ऽपि मूत्वादेरसिद्धत्वादायादिकं स्यादेवेति चेन्न। एवमपि संज्ञाशास्त्रवैयर्थ्यात्तत्राश्रयणनायादिकं प्रत्यपि सिद्धत्वं ज्ञाप्यत इत्याशयात्। भाष्ये (यत्सिद्धेइति) न च तत्र पूर्वसूत्रेणैव सिद्धिः। अद्विवचने तदप्रवृत्तेः। पूर्वसूत्रविषये यथोद्देशस्यैव भाष्यकृताङ्गीकाराच्च। नन्वीदाद्युपजीवनायात्र करणामित्यत आह नचेति। हे ऽमुक अमुका इत्यादौ तु अदस इत्यावस्थं न विद्यते दस्य स्थाने सो यस्य तादृशादस इत्यर्थे नानुनासिकः स्वमतेपि भवत्येवेति भाष्याशयमाहुः। तादृशानामनभिधानमेवेत्यन्ये। प्रकरणोक्त-

ष्यति विप्रतिषेधेनेति । नैष युक्तो विप्रतिषेधः । विप्रतिषेधे परमित्युच्यते पूर्वा च प्रगृह्यसंज्ञा परेऽयादयः । परा प्रगृह्यसंज्ञा करिष्यते । सूत्रविपर्यासः कृतो भवति । एवं तर्हि परैव प्रगृह्यसंज्ञा । कथम् । कार्यकालं संज्ञापरिभाषम् । यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । प्रगृह्यः प्रकृत्येत्युपस्थितमिदं भवति अदसो मादिति । एवमप्ययुक्तो विप्रतिषेधः । कथम् । द्विकार्ययोगो हि विप्रतिषेधः । न चात्रैको द्विकार्ययुक्तः । एचामयादयः । ईदूतोः प्रगृह्यसंज्ञा । नावश्यं द्विकार्ययोग एव विप्रतिषेधः । किं तर्ह्यसंभवोपि । स चास्त्यत्रासंभवः । कोसावत्रासंभवः । प्रगृह्यसंज्ञाऽभिनिर्वर्तमाना अयादीन् बाधते । अयादयोऽभिनिर्वर्तमानाः प्रगृह्यसंज्ञाया निमित्तं

---

त्कर्षेण विधीयमाना प्रगृह्यसंज्ञा सर्वप्रगृह्यकार्यार्थो सत्यसिद्धत्वं बाधिष्यतइत्यर्थः । विप्रतिषेधाद्वेति । अयावेकादेशप्रतिषेधो वक्तव्यः, विप्रतिषेधाद्वा प्रगृह्यसंज्ञेति विकल्पार्थो वाशब्दः । नैकं प्रयोजनमित्यादिस्तु परिहारो भाष्यकारेणोक्तो न वार्तिककारेणेति न तदपेक्षो विकल्प । नैष युक्त इति । इष्टसिद्धये इति भावः । करिष्यतइति । आश्रयिष्यतइत्यर्थः । इतरस्त्वगृहीताभिप्राय आह सूत्रविपर्यास इति । अभिप्रायं प्रकाशयितुमाह एवं तर्हीति । द्विकार्ययोगो हीति । द्वाभ्यां कार्याभ्यां यो युज्यते स विप्रतिषेधविषयत्वाद्विप्रतिषेधः । असम्भवोपीति । असम्भव एव विप्रतिषेधः स तु कदा चिद् द्विकार्ययोगो भवति कदा चित्केवलोपि । तथाहि । सति सम्भवे द्विकार्ययोगो न विप्रतिषेधः । यथैकस्य दधातेरडागमद्विर्वचने भवतः । अदधादिति । क्वचिदेकस्य द्विकार्ययोगाभावेप्यसम्भवो भवति । यथा त्रपूणामित्यत्र नुम्नुटोः प्रकृतिप्रत्ययमक्तयोः परस्परनिमित्तव्याघातात् । आयादीन् बाधतइति । प्रकृतिभावविधानात् । निमित्तमिति । ईत्वमूत्वं च । आ-

---

र्षेणेति । संज्ञाप्रकरण उत्कर्षेण गुरुभूतन्यासेनेत्यर्थः । सर्वेति । प्रकृतिभावानुनासिकप्रतिषेधेत्यर्थः । भाष्ये ( विप्रतिषेधाद्वेति ) । अन्तरङ्गत्वात्मूत्वादौ कृते पदान्तरसमभिव्याहारे ऽयादिभ्यः परत्वात् संज्ञासिद्धौ तत्सामर्थ्यान्मुत्वादिकं प्रकृतिभावं प्रत्यपि नासिद्धम् । आश्रयाच्च संज्ञां प्रत्यपि नासिद्धमिति भावः । ननु प्रगृह्यसंज्ञाभिनिर्वर्तमानेत्यादि वक्ष्यमाणप्रकारेण घटन एव विरोध इत्ययुक्तमेतदित्यत आह इष्टेति । भाष्ये (परेवेति) । पूर्वपाठेपि तत्र वाक्यार्थबोधाभावेनेति भावः । कथमिति । पाठकृतं स्वगतं पूर्वत्वमनपगतमिति प्रश्नः । उत्तरयति कार्यकालमिति । तत्पक्षे संज्ञाशास्त्रस्य प्रदेशदेश एवार्थबोधस्तदुत्तरञ्च विरोधोपस्थितिस्तत्कार्यज्ञानं चेति तत्रत्यपरत्वमेव विप्रतिषेधसूत्रप्रवृत्तौ बीजमिति भावः । परेवेत्येवकारेण पाठकृतं पूर्वत्वं विद्यमानमपि विप्रतिषेधसूत्रप्रवृत्तौ न नियामकमिति सूचितम् । परिभाषाणान्तु, तत्पक्षेपि तत्तद्देशे ऽर्थबोधोस्त्येवेति तद्विषये विप्रतिषेधसूत्रप्रवृत्तौ पाठकृतमेव तन्नियामकमिति तात्पर्यम् । आकडारस्थभपदसंज्ञादिविषये तु यथोद्देशपक्ष एवेति-तत्र परया पूर्वबाधसिद्धिः । ष्यङः संप्रसारणमिति सूत्रस्थं भसंज्ञायाः कार्यकालत्वपरं भाष्यं त्वेकदेश्युक्तिरिति तत्रैव निरूपयिष्यामः । परे तु परेवेत्यस्य संज्ञापदेन तत्कार्यं प्रकृतिभावउच्यते इति भावः । आशयानभिज्ञस्य प्रश्नः ( कथमिति ) । एकदेशिन उत्तरं ( कार्यकालमि ) त्यादीत्याहुः । एतेन कार्यकालपक्षेपि पाठकृतपरत्वमयादीनामेव । अन्यथा ङमो ह्रस्वादचीत्यादौ त्रिपादीस्थे कार्यकालपक्ष एव परिभाषाप्रवृत्त्या परत्वात्तत्र तस्मादित्युत्तरस्येत्यस्येवेति सिद्धान्तासङ्गतिरुभयोरप्येकदेशस्थत्वेन परत्वासंभवादित्यपास्तम् । द्वाभ्यामिति । योग इति । कर्मणि घञ् । द्विकार्यशब्दस्य पात्राद्यन्तत्वादस्त्रीलिङ्गस्य योगशब्देन कर्तृकरणे कृतेति समासः । ईदूतोऽप्रगृह्यसंज्ञेत्यस्य तत्कार्यं प्रकृतिभाव इत्यर्थः । कदाचिदिति । एवञ्च प्रकृते केवलासंभवरूपः स इत्यर्थः । केवलाद्विकार्ययोगो न सर्वथा विप्रतिषेध इत्याह तथाहीति । ईत्वमूत्वं चेति । तद्विघातेन संज्ञाभावे तत्कार्यप्रकृतिभावविघातः स्पष्ट एवेति भावः । केचित्तु संज्ञाकार्यस्य अयादिभिर्विप्रतिषेधो ऽयुक्तः । वाक्यसंस्कारपक्षे मूत्वादितः पूर्वमेवायादिप्राप्त्या मूत्वाद्युत्तरञ्च संज्ञायां तत्प्राप्त्या युग-

विघ्नन्तीत्येषो ऽसंभवः। सत्यसंभवे युक्तो विप्रतिषेधः, एवमप्ययुक्तो विप्रतिषेधः। सतोर्हि विप्रतिषेधो भवति न चात्रेत्वोत्वे स्तः। नापि मकारः। उभयमप्यासिद्धम्। आश्रयात्सिद्धत्वं च यथा रोरुत्वे। आश्रयात्सिद्धत्वं भविष्यति। तद्यथा। रुरुत्वे आश्रयात्सिद्धो भवति। किं पुनः कारणं रुरुत्वे आश्रयात्सिद्धो भवति। न पुनर्यत्रैव रुः सिद्धः तत्रैवोत्वमप्युच्यते। नैवं शक्यम्। असिद्धे ह्युत्वे आद्गुणाप्रसिद्धिः *। असिद्धे ह्युत्वे आद्गुणस्याप्रसिद्धिः स्यात्। वृक्षोत्र। प्लक्षोत्र। तस्मात्तत्राश्रयात्सिद्धत्वमेषितव्यम्। यथा तत्राश्रयात्सिद्धत्वं भवति। एवमिहाप्याश्रयात्सिद्धत्वं भविष्यति॥ अथवा प्रगृह्यसंज्ञावचनसामर्थ्यादयादयो न भवि-

---

ष्यन्ति। ... 

श्रयात् सिद्धत्वमिति। प्रगृह्यसंज्ञायां कार्यित्वेनाश्रयणादसिद्धत्वाभावादीत्वादीनां तेषामयादीनां च विप्रतिषेधो निरूप्यते। तथाहि। सतोर्हि विप्रतिषेधो भवतीति पूर्वपक्षे ईदादीनामेव स आक्षिप्तः। तत्रायादीनां चयनं लावकः। अग्ने ऽत्रेत्यत्रावकाशः। ईत्वादीनां तु यत्रायादीनामप्रसङ्गः सोवकाशः। अमी स्थिता अमू स्थितौ अमीभ्य इति। अमी अत्रेत्यादावुभयप्रसङ्गे परत्वादीत्वादय एव भवन्ति। अत्र व्याख्यानान्तरं क्लिष्टत्वान्नोपन्यस्तम्। न पुनर्यत्रैवेति। रोः सुपीत्यस्यानन्तरमत उरंतीति वक्तव्यम्। एवं चासिद्धत्वं न बाधितं भवति। अत्र पाठक्रमे ऽसिद्धत्वस्य प्राप्त्यभावात् प्लुतस्य चोत्वे सिद्धत्वात्तत्कालत्वाभावादप्लुतादप्लुते इति न वक्तव्यं भवति। अथ वेति। यथोद्देश-

---

पक्षाप्त्यभावात्। तस्मात् प्रगृह्यसंज्ञाशब्देन तज्जनकमूत्वादिकं लक्षयित्वा तस्यायादिभिर्विप्रतिषेधे इति वार्त्तिकार्थस्तमपि दूषयति। भाष्ये (एवमपीति) कार्यित्वेनाश्रवणादिति। तत्सामर्थ्यादयादीन् प्रत्यपि सिद्धत्वमित्यर्थः। यथोद्देशे इदम्। कथं कार्यकालमिति तु प्रकृतिभावायादिविप्रतिषेधविषयमिदानीं तु स नेति स्पष्टमेव। असिद्धत्वाभावादिति। ईत्वादीनामसिद्धत्वाभावादित्यन्वयः। सामान्यत एवासिद्धत्वाभावबोधनादित्यर्थः। तेषा. मीत्वादीनाम्। परत्वादिति। ईत्वादिषु जातेषु तेषामसिद्धत्वाभावादयादीनामप्रसङ्ग एवेति भावः। व्याख्यानान्तरमिति। प्रगृह्यत्वकार्यप्रकृतिभावेनायादीनां विप्रतिषेधपरमेव भाष्यम्। सतोरित्यस्य युगपत्प्राप्तयोरित्यर्थः। वाक्यसंस्कारपक्षे ईत्वादीनामसिद्धत्वेन ततः प्रागेव तत्प्राप्तिः कृते त्वीत्वादावस्येति न तयोर्युगपत्प्राप्तिरिति भावः। तदाह नचात्रेत्यादि। अत्र अयादिप्राप्तिकाले। असत्त्वे हेतुः। उभयमप्यसिद्धमिति। पूर्वत्रासिद्धेनेति शेषः। परिहरति आश्रयादिति। पदसंस्कारपक्ष एवात्राश्रीयतइति भावः। एवञ्चोभयोर्युगपत् प्राप्तिः प्रगृह्यसंज्ञायान्तत्कार्ये च तयोः सिद्धत्वादयादीन् प्रति चासिद्धत्वादित्युपपन्नो विप्रतिषेध इति। वाक्यसंस्कारपक्षे कृतस्य पूर्वपक्षस्य पदसंस्कारपक्षाश्रयेण परिहार इति क्लेशः। परे त्वनुक्तशास्त्रविप्रतिषेधखण्डनतत्समर्थनपरत्वेन व्याख्यापेक्षयेदमेव युक्तम्। पक्षान्तरेरपि परिहारकरणादित्याहुः। रोःसुपीत्यस्यानन्तरमिति। न चैवं हशि चेत्यस्यैतदुत्तरत्वाद्रो रीति दृष्ट्या ऽसिद्धत्वापत्तौ मनोरथासिद्धिः। ढो ढे लोपः, रो रीत्यनयोर्यरो ऽनुनासिक इत्यतः पूर्वं पाठः कार्य इत्याशयात्। अनुनासिकपर्युदासेन चारितार्थ्यमाशङ्क्याह यथोद्देशेति। 'एतद्वचनसामर्थ्याद्वेति' वार्त्तिकं तद्व्याख्यानभाष्यञ्चेत्यर्थः। पूर्वभाष्यस्य व्याख्यान्तरवादिनस्तु वाक्यसंस्कारपक्षे ऽप्याह अथवेति। वस्तुतस्तु प्रकृतिभावोपस्थितसंज्ञावान्तयोर्निमित्तत्वेनाश्रयणरूपवचनसामर्थ्यादयादीन् प्रत्यपि सिद्धत्वं ज्ञाप्यते इति कार्यकालेपि न दोषः। किं च यथोद्देशेपि संज्ञां प्रति निमित्तत्वेनाश्रयणात्तद्दृष्ट्या मीत्वस्य सिद्धत्वेन संज्ञायामनुनासिकप्रतिबन्धेन चारितार्थ्यमस्त्येव। प्रकृतिभावविषयकसंज्ञोपप्लवसामर्थ्याश्रयणे तु किं विशिष्य यथोद्देशाश्रयणेनेवमुपक्रमस्थभाष्येपि बोध्यमित्याहुः। भाष्ये 'योगविभागाद्वे' ति वार्त्तिकं व्याचष्टे (अथवेति) अदस इत्यस्य पञ्चम्यन्तत्वे उत्तरत्र मादित्यस्य, विशे-

ष्यन्ति । अथ वा योगविभागः करिष्यते । अदसः । अदसः परे ईदादयः प्रगृह्यसंज्ञा भवन्तीति । ततो मात् । माच्च परे ईदादयः प्रगृह्यसंज्ञा भवन्तीति । अदस इत्येव । किमर्थो योगविभागः । एको यत्तत्सिद्धे प्रगृह्यकार्यं तदर्थः अपरो यदसिद्धः । इहापि तर्हि प्राप्नोति । अमुया अमुयोरिति । किं च स्यात् । यद्यत्र प्रगृह्यसंज्ञा स्यात् । प्रगृह्याश्रयः प्रकृतिभावः प्रसज्येत । नैष दोषः । पदान्तप्रकरणे प्रकृतिभावः । न चैष पदान्तः । एवमप्यमुकेत्र, अत्रापि प्राप्नोति । द्विवचनमिति वर्तते । यदि द्विवचनमिति वर्तते अमी अत्र न प्राप्नोति । एवं तर्हि एदन्तमिति निवृत्तम् । अथवा ऽऽहायमदसो मादिति । न च ईत्वोत्वे स्तः । नापि मकारः । तत एवं विज्ञास्यामः । मार्थादीदाद्यर्थानामिति । उक्तं वा*। किमुक्तम् । अदस ईत्वोत्वे स्वरे बहिष्पदलक्षणे सिद्धे वक्तव्ये । प्रगृह्यसंज्ञायां चेति । तत्र

---

पत्त्याश्रयेणैतदुच्यते । कार्यकालपक्षेप्याह अथ वेति । अदस इति सम्बन्धसामान्ये षष्ठी । अदसः सम्बन्धिन ईदूदेत इति । इहापीति । अदस् टा अदस् औस् अत्वं टाप् सवर्णदीर्घत्वम् आङि चाप इत्येत्वम् । अदे आ अदे ओस् इति स्थिते अदस इत्यत्र मादिति विशेषणाभावात्प्रगृह्यसंज्ञायां सत्यामयादेशाप्रसङ्गः । अमुकेत्रेति । अदस इत्यनेन प्राप्नोति । एदन्तमिति । ईदूतोरेव स्वरितत्वप्रतिज्ञानादिति भावः । अननुवृत्तिरेव च निवृत्तिः । यद्येवं मादूग्रहणं न कर्तव्यम् । एदूग्रहणानिवृत्त्यैवामुकेत्रेत्यत्राप्रसङ्गात् । नैतदस्ति । सति मादूग्रहणे योगविभागो भवति नान्यथा । एकयोगे परिहारान्तरमप्याह अथ वेति । मार्थादिति । मार्थ एव स्थानी मशब्देनोक्त ईदूदेदर्थश्चेदूदेदिति । न चास्यां कल्पनायामसिद्धत्वं भवति । बुद्धिपरिकल्पनायामसिद्धत्वाभावस्योक्तत्वात् । उक्तं वेति । असिद्धत्वमेवात्र प्रतिषिद्धमित्यर्थः । स्वरे इति । अचीत्यर्थः । बहिष्पदलक्षणे इति । द्वितीयपदव्यवस्थित इत्यर्थः । तेनैकपदव्यवस्थितेऽचि असिद्धे ईत्वोत्वे । तेनामुया ऽमुयोरित्यत्रायादेशो भवत्येव । प्रगृह्यसंज्ञायां चेति । प्रगृह्यसंज्ञायामेव सिद्धत्वेन सिद्धे लक्ष्ये प्रपञ्चार्थः पूर्ववाक्योपन्यासः । तत्र सति दोष इति । मात्परं यदीदाद्यन्तमिति दोषोपन्यासः । पूर्वसूत्रे हि तदन्तं गृहीतमितीहापि तदन्तस्यैवानुवृत्तिरिति भावः । स्वरितत्वेन शब्दमात्रमनुमीयतइति उत्तरेऽभिप्रायः । तत्र मादूग्रहणेन गृ-

---

षणानापत्तिरत आह संबन्धेति । यत्तत्सिद्धइति । मूत्वे इति शेषः । यत्र कार्ये मूत्वं सिद्धं तत्प्रगृह्यकार्यमित्यर्थः । ( अपरोयदसिद्धइति ) । यत्र मूत्वमसिद्धं तदित्यर्थः । ननु समस्तत्वात्समुदायानुवृत्तिः स्यात्तत्कथमेतो निवृत्तिरत आह ईदूतोरेवेति । नान्यथेति । सिद्धान्ते तु व्यर्थमेव मादूग्रहणमिति भावः । 'भाष्ये मार्थादीदाद्यर्थानां' वेति वार्त्तिकं व्याचष्टे ( अथवाहेति ) । ननु एवं सति अदे ऽत्रौ इत्यस्यामवस्थायां प्रगृह्यत्वेपि मीत्वमूत्वयोः कृतयोरीकारादीनामप्रगृह्यत्वात्तैस्तैरयथ्यमल्विधित्वेन प्रगृह्यत्वाभावादिति चेन्न । प्रवेदं प्रगृह्यस्थानिकस्यापि लक्षणया ग्रहणेनादोषात् । द्वितीयेति । द्वितीयपदस्थेऽचि यत्कार्यं तत्रासिद्धत्वं नेत्यर्थः । अन्ये तु 'अथ वा वचनसामर्थ्यादि'त्यादि भाष्ये भाष्यकृत एवोक्तिरत एव सांप्रतपुस्तकेषु वार्त्तिकपाठ इत्याहुः । अन्ये तु अन्त्ये 'उक्तं वेत्यस्य' वार्त्तिकत्वं मत्वा कोष्ठे वार्त्तिकपाठो भ्रष्ट इत्याहुः । सिद्धेइति । प्रगृह्यत्वे सिद्धत्वमयादीन् प्रति सिद्धत्वं विना सप्रयोजनं नेति सामर्थ्यात्तान् प्रत्यपि तौ सिद्धाविति भावः । विशेष्यासंनिधाने कथं तदन्तविधिरत आह पूर्वसूत्रेइति । अर्थाधिकारादिति भावः । शब्दमात्रमीति । एवञ्च विशेष्याभावान्न तदन्तविधिरिति भावः ॥ १२ ॥

सक्ति दोषः *। तत्र सककारे दोषो भवति। अमुकेत्र। न वा ग्रहणविशेषणत्वात्। न मादूग्रहणेन ईदाद्यन्तं विशेष्यते, किं तर्हि, ईदादयो विशेष्यन्ते मात्परे ये ईदादय इति॥

शे॥ १३॥ इह कस्मान्न भवति काशे कुशे वंशे इति। शेऽर्थवद्ग्रहणात् *। अर्थवतः शेशब्दस्य ग्रहणं न चैषो ऽर्थवान्। एवमपि हरिशे बभ्रुशे इत्यत्रापि प्राप्नोति एवं तर्हि लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येवं न भविष्यति। अथवा पुनरस्तु अर्थवद्ग्रहणे नानर्थकस्येति। कथं तर्हि हरिशे बभ्रुशे इति। एकोत्र विभक्त्यर्थेनार्थवान्। अपरस्तद्धितार्थेन। समुदायोनर्थकः॥

निपात एकाजनाङ्॥ १४॥ निपात इतिं किमर्थम्। चकारात्र जहारात्र। एकाजिति किमर्थम्। प्रेदं ब्रह्म प्रेदं क्षेत्रम्। एकाजित्यप्युच्यमाने ऽत्रापि

---

ह्यमाणमीदूदेद्विशेष्यते। तेनामुकेत्रेत्यत्र व्यवधानाद्दोषाभाव एवायोगविभागे दोषप्रसङ्गादेदन्तमिति निवृत्तमित्युक्तम्। एकयोगे तु तन्निवृत्या न किंचित् प्रयोजनमिति न वा ग्रहणविशेषणत्वादित्युत्तरमुक्तम्॥ १२॥

शे॥ इह कस्मादिति। अत्र हि प्रत्यक्षमेव शे इति रूपम्। युष्मे अस्मे इत्यत्र तु शकारस्यानुबन्धस्य स्मरणादनुमेयमिति प्रश्नः। शे ऽर्थवद्ग्रहणादिति। स्वशब्दस्येत्येवान्तरङ्गत्वाद्हेयत्वादसाधारणत्वाच्च रूपपरिग्रहे सिद्धे रूपवदर्थस्याप्यङ्गीकरणार्थं रूपग्रहणं कृतम्। अत्र च शेशब्दो ऽनर्थकः। सप्तम्येकवचनं त्वर्थवत्। तयोः समुदायोर्थान्तराप्रादुर्भावादनर्थकः। एवमपीति। अत्र हि मत्वर्थीयसप्तम्येकवचनयोरर्थवतोः समुदायोर्थवानेव। अवयवधर्मानुविधानात्समुदायस्येति प्रश्नः। लक्षणेति। प्रतिपदोक्ते हि झटिति प्रतिपत्तिर्भवति। लाक्षणिके तु लक्षणानुसन्धानद्वारेण बहिरङ्गेति न तस्य ग्रहणम्। अथ वेति। अर्थवत्समुदायस्यापि कस्य चिदानर्थक्यम्। यथा दश दाडिमादिवाक्यस्य पदार्थानां परस्परसमन्वयाभावादिहापि हरिशशब्दवाच्यार्थगतसंख्याधिकरणशक्तिप्रतिपादनाय प्रवृत्ता सप्तमी न शप्रत्ययमात्रप्रतिपाद्येनार्थेनान्वेतीति शेशब्दस्यानर्थक्यम्॥ १३॥

निपात एकाजनाङ्॥ निपात इति किमर्थमिति। निपातस्य वैकाचो ऽर्थवत्त्वात् प्रत्ययस्य केवलस्य प्रयोगाभावादानर्थक्यात् कल्पितरूपत्वात् कल्पनायाश्च नियमाभावात् प्रश्नः। चकारात्रेति। अन्वयव्यतिरेकाभ्यां प्रत्ययस्याप्यर्थवत्त्वमिति भावः।

---

शे॥ प्रत्यक्षमेवेति। एवञ्च (इहेति) भाष्यस्य इहैवेत्यर्थः। (युष्मइति) सुपां सुलुगिति विभक्त्यादेशः शेशब्दः इत्यर्थः। शेश्चासावर्थवांश्च तस्य ग्रहणादित्यर्थः। शक्तिग्रहनिरपेक्षप्रतीतिकत्वेनान्तरङ्गत्वम्। अर्थप्रतीतावपि प्रतीयमानत्वमहेयत्वम्। शब्दान्तरैरप्रत्यायनादसाधारणत्वम्। अप्रादुर्भावो ऽप्रतीतिर्मत्वर्थीयो लोमादिशः। आनर्थक्यमिति। प्रत्यक्षानुमानिकन्यायापेक्षया रूपग्रहणानुगतार्थवत्परिभाषा प्रबलेति भावः॥१३॥

निपात॥ आनर्थक्यादिति। अर्थवत्त्वानिश्चयादित्यर्थः। तत्र हेतुः कल्पितरूपत्वादिति। ततः किं तत्राह कल्पनायाइति। अत एव कोचिच्छतिपमन्यं शप्तिपौ वदन्ति। तत्रेयता ऽर्थवत्त्वमिति न निश्चेतुं शक्यत इत्यर्थः। निपातग्रहणाभावे एकाजिति वर्णग्रहणादर्थवत्परिभाषाया अप्रवृत्तावर्थवद्ग्रहणे मानाभाव इति चेन्न बहुव्रीहिरित्याशयात्। गौणमुख्यन्यायस्य तु नेह प्रवृत्तिः। पर्युदासेनैवाजूपत्वे लब्धे एकाऽज्ग्रहणस्य गौणमुख्यसङ्ग्रहार्थत्वात् न्यायानित्यत्वाच्च। एतेन सत्यभिधानानेनिरिरभवद् ई अभवदित्यादौ

प्राप्नोति । एषो ऽपि ह्येकाच् । एकाजिति नायं बहुव्रीहिः एको ऽज् यस्मिन् सो ऽयमेकाज् एकाजिति । किं तर्हि । तत्पुरुषो ऽयं समानाधिकरणः । एकः अच् एकाच् । एकाजिति । यदि तत्पुरुषो ऽयं समानाधिकरणो नार्थ एकग्रहणेन । इह कस्मान्न भवति प्रेदं ब्रह्म । प्रेदं क्षेत्रम् । अजेव यो निपात इत्येवं विज्ञायते । किं वक्तव्यमेतत् । नहि । कथमनुच्यमानं गंस्यते । अज्ग्रहणसामर्थ्यात् । यदि हि अच्चान्यच्च तत्र स्याद् अज्ग्रहणमनर्थकं स्यात् । अस्ति ह्यन्यदज्ग्रहणस्य प्रयोजनम् । किम् । अजन्तस्य यथा स्याद्धलन्तस्य मा भूत् । नैव दोषो न प्रयोजनम् । एवमपि कुत एतत् । द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोराद्यन्तवदेकस्मिन् येन विधिस्तदन्तस्येति च । इयमिह परिभाषा

---

निपातो ऽपि केवलो न प्रयुज्यते द्योतकत्वादिति साम्यमेव निपातप्रत्यययोः । अततेर्डः । अ आगच्छ आगच्छेत्यपि प्रत्युदाहरणम् । एकाजिति किमर्थमिति । एकग्रहणसामर्थ्याद्बहुव्रीहिं मन्यते । ततश्च प्रेदं ब्रह्मेत्यनिष्टनिवृत्तिर्न कृतेति प्रश्नः । तत्पुरुषो ऽयमिति । अन्तरङ्गत्वाद् वृत्तिपदार्थप्राधान्याच्चेति भावः । नैव दोष इति । ननु पुरो ऽहिरिति हलन्तस्य प्रकृतिभावाद्रोरुत्वं न स्यात् । नैष दोषः । प्रगृह्यसंज्ञायां रुत्वस्यासिद्धत्वात् । सकारस्य च कार्यान्तराप्रसङ्गात् उत्वे तु रुत्वमाश्रयात्सिद्धम् । एवमपीति । अन्यतरनिवृत्त्या ऽज्ग्रहणस्यार्थवत्त्वादज्मात्रं गृह्यते तदन्तं निरस्यते विपर्ययस्तु न भवतीति विशेषाभावात् प्रश्नः । पारार्थ्यसाम्यात् संज्ञातिदेशौ परिभाषाशब्देनोक्तौ । सावकाशयोरिति । निरवकाशस्य बाधकत्वादेवमुक्तम् । तत्र तदन्तविधेरवकाशः । ओरावश्यके, लाव्यं पाव्यम् । आद्यन्तवद्भावस्यावकाशः । मिदचो ऽन्त्यात्परः । तानि यानीति । अत्र हि साक्षादन्त्यग्रहणमस्तीति तदन्तविध्यभावः । समवस्थितयोरिति । इह प्राप्त-

---

प्रगृह्यत्वं न स्याद् गौणमुख्यन्यायादिति परास्तम् । अतएवादित्यत्रैव च्व्यन्तप्रतिषेध आरब्धः । अन्वयेति । व्याकरणानुसन्धानानुगृहीताभ्यामित्यर्थः । तस्यैव चास्मच्छास्त्रप्रवृत्त्युपयोगित्वादितिभावः । वस्तुतो ऽनर्थकनिपातेपि अस्य प्रवृत्तेरोत्सूत्रे भाष्ये वक्ष्यमाणत्वादत्रार्थवत एव ग्रहणमिति न नियमः । प्रश्नाशयस्तु अनाङिति पर्युदासादप्रत्ययस्य ग्रहणमिति । उत्तराशयस्तु पर्युदासेन तथा ऽऽश्रयणे न मानम् । निपातग्रहणादेव तेन प्रत्ययानुकरणे एतत्प्रवृत्तिरिति । अ आगच्छेत्यत्रापि प्लुते प्रकृतिभावो दुर्वार इति परास्तम् । प्लुताभावे कथं चिदुदाहरणत्वं यदि तर्हि सवर्णदीर्घे तथा बोधः । एकग्रहणेति । स्वाङ्गसमुदाये स्वाङ्गत्वाभावादच्समुदायेऽच्त्वाभावेनैकग्रहणं विनापि कर्मधारयार्थलाभादिति भावः । अन्तरङ्गत्वे हेतुमाह वृत्तीति । भाष्ये ( इहकस्मादिति ) । अजन्तो निपात इत्यर्थ इति प्रश्नः । ( अजेव य इति ) निपातनाद्विशेषणादित्यर्थः । ( किंवक्तव्यमिति ) । निपातस्य न्यायप्राप्तविशेष्यत्वाभावायेत्यर्थः । ( यदि हीति ) । अजन्तग्रहणेऽज्ग्रहणवैफल्यमिति भावः । ( प्रगृह्यसंज्ञायामिति ) । ननु सान्तस्य प्रगृह्यत्वे एकदेशविकृतन्यायेन रान्तस्यापि तत्त्वात्प्रकृतिभावः स्यादिति चेन्न । प्रकृतिभावेप्यसिद्धत्वात् अथ निपातस्य विशेष्यतयाजन्त इति व्याख्यानेप्यज्ग्रहणसामर्थ्यान्मुख्याजन्तपरिग्रहेण केवलाज्व्यावृत्तिरज्ग्रहणस्य फलं स्यादिति मनसि निधाय पृच्छति । ( एवमपीति ) भाष्ये । अन्यतरनिवृत्त्येति । निपातस्य विशेषणत्वे तदन्तपरिभाषाप्रसक्तिरेव निवृत्तिः । विशेष्यत्वे त्वाजिति विशेषणसामर्थ्यात्तदन्तस्यैव ग्रहणे मुख्याजन्तपरिग्रहादाद्यन्तवदित्यस्य निवृत्तिरिति भावः । विपर्ययः । निपातस्य विशेष्यत्वेनाजन्तपरिग्रहः केवलाचो निवृत्तिरिति । इतिविशेषाभावादिति । अत्र च कारणाभावादित्यर्थः । संज्ञा येन विधिरिति । अतिदेश आद्यन्तवदिति । लाव्यमिति ।

भविष्यति आद्यन्तवदेकस्मिन्निति । इयं च न भविष्यति येन विधिस्तदन्तस्येति । आचार्यप्रवृत्तिर्ज्ञापयति । इयमिह परिभाषा भवति आद्यन्तवदेकस्मिन्निति । इयं च न भवति येन विधिस्तदन्तस्येति । यदयमनाङिति प्रतिषेधं शास्ति । एवं तर्हि सिद्धे सति यदज्ग्रहणे क्रियमाणे एकग्रहणं करोति तज्ज्ञापयत्याचार्यः । अन्यत्र वर्णग्रहणे जातिग्रहणं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् । सिद्धमिति यदुक्तं तदुपपन्नं भवति । अनाङिति किमर्थम् । आ उदकान्तात् । ओदकान्तात् । इह कस्मान्न भवति आ एवं नु मन्यसे आ एवं किल तदिति । सानुबन्धकस्येदमाकारस्य ग्रहणम् । अननुबन्धकश्चात्राऽऽकारः । क्व पुनरयं सानुबन्धकः क्व निरनुबन्धकः । ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित् ॥

---

योः । आचार्यप्रवृत्तिरिति । यदि तर्हि लिङ्गेन तदन्तविधिर्निराक्रियते तदा तन्मूलाद्यन्तवत्परिभाषा कथं प्रवर्तेत । नैष दोषः । आद्यन्तवदित्यस्योपस्थानाय तदन्तविधिः प्रथमं सन्निधीयते पश्चात्तु लिङ्गात् परित्यज्यते । अथ वा लिङ्गादज्ग्रहणं निपातेन विशेष्यते इति विशेष्येण च तदन्तविधेरभावादतिदेशस्यापि मा भूत् प्रवृत्तिस्तत्फलसंपत्त्या तूक्तं परिभाषा भविष्यतीति । एवं तर्हीति । संज्ञाया विधीयमानत्वात् प्राधान्यात् संज्ञिनो गुणत्वात् पशुना यजेतेतिवत् संख्याविवक्षायां सिद्धायामेकग्रहणमन्यत्र जातिसंप्रत्ययार्थम् । अच्समुदायग्रहणशङ्कानिरासार्थं ह्येकग्रहणं ज्ञापनफलं सम्पद्यते । किं पुनः स्याद् यद्यत्राच्समुदायस्य ग्रहणं स्यात् । उच्यते । इह अइउ अपेहीति समुदायस्यैका संज्ञा स्याद् नावयवानां समुदायैकाज्द्विर्वचनवदित्यन्त्यस्यैव प्रकृतिभावाद्यणादेशो न स्यात् । पूर्वयोस्तु स्वरसन्धिः स्यात् अच्समुदायपरिग्रहानुरोधित्वाच्च निपातसमुदायो गृह्येत एकनिपातस्याच्समुदायस्याभावात् । अनाङिति किमर्थमिति । ङिदङितोराकारयोर्विषयविभागप्रदर्शनाय प्रश्नः।इह कस्मादिति । अनुबन्धनिवृत्तौ विशेषापरिज्ञानात् प्रश्नः । अर्थवशाद् विशेषावसाय इत्युत्तरम् । ईषदर्थे । आ उष्णमोष्णमिति । आङीषदर्थे इति

---

उद्शब्दे इत्यत आवश्यके ण्यत्नभिधानान्नेति भावः । ( यदि तर्हीति )। एवञ्च इयमिह भवतीति भाष्यमनुपपन्नमिति भावः । ननु पूर्वं प्रवर्त्य पश्चात्परित्यागापेक्षयाप्रवृत्तौ लाघवमित्यभिप्रेत्याह । ( अथवेति )। ननु एकग्रहणाभावेच्समुदायस्य स्यादिति तन्निवृत्त्यर्थमेकग्रहणं तत्राह संज्ञाया इति । गुणत्वादिति । संज्ञोपकारकत्वादित्यर्थः । पशोरपि यागोपकारकत्वाद्गुणत्वं, न हि यागः पश्वर्थोऽपि तु यागार्थः पशुः । ग्रहं संमार्ष्टीत्यादौ तु ग्रहार्थत्वात्संमार्गस्य ग्रहस्य प्राधान्यमिति न तद्गतसङ्ख्या विवक्षितेति भावः।परे तु संज्ञा स्वकार्यद्वारा संज्ञ्युपकारिका न तु संज्ञी संज्ञोपकारकः । अन्यथा ग्रहोऽपि कर्मत्वेन संमार्गार्थः स्यादिति विधेयविशेषणं विवक्षितमनुवाद्यविशेषणमविवक्षितमिति मीमांसकमर्यादैव ज्यायसी भाष्यसंमता चेतीदं चिन्त्यम् । तस्मात् स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच्समुदायेऽच्त्वाभावान्न तद्ग्रहणप्रसक्तिरित्येकग्रहणं विनापि सिद्धिरिति तज्ज्ञापकमिति भाष्याशय इत्याहुः । ( जातिग्रहणमित्यस्य ) तज्जात्याश्रयानेकव्यक्तिग्रहणमित्यर्थः । अन्यथा जातिग्रहणेऽपि जातेरेकैकव्यक्तिव्यङ्ग्यतयासङ्गतिरेव । प्रवृत्तिनिमित्ततया जातिग्रहणस्य सर्वत्र सत्त्वेन तस्यावक्तव्यत्वाच्च । (इहेत्यादि) अत्रेदं चिन्त्यम् । समुदायसंज्ञयावयवानामननुग्रहान्नात्र द्विर्वचनन्यायः । नापि निपातसमुदायस्य निपातग्रहेण ग्रहणं स्वाङ्गसमुदायस्य स्वाङ्गग्रहणे-

ओत् ॥ १५ ॥ किमुदाहरणम् । आहो इति उताहो इति । नैतदस्ति प्रयोजनम् । निपातसमाहारो ऽयम् । आह उ आहो इति । उत आह उ उताहो इति । तत्र निपात एकाजनाङित्येव सिद्धम् । एवं तर्ह्येकनिपाता इमे । अथ वा प्रातिषिद्धार्थो ऽयमारम्भः । ओषु यातं मरुतः । ओषु यातं बृहती शक्वरी च । ओ चित्सखायं सख्यावव्रत्याम् । ओतश्च्विप्रतिषेधः * । ओदन्तो निपात इत्यत्र च्व्यन्तस्य प्रतिषेधो वक्तव्यः । अनदः अदः अभवत् अदो ऽभवत् ।

---

चोक्तम् । क्रियायोगे । आ इतः । एतः । प्रादिषु हि ङित्पठ्यते । आङ् मर्यादाभिविध्यो-रिति समासविधौ ङिन्निर्दिष्टः । आ उदकान्तात् ओदकान्तात् आ अहिच्छत्रात् आ-हिच्छत्रादिति विना तेनेति मर्यादा । सह तेनेत्यभिविधिः । पूर्वप्रक्रान्तस्य वाक्यार्थ-स्यान्यथात्वद्योतनायांऽऽकारः प्रयुज्यते । आ एवं नु मन्यसे । नैवं पूर्वममंस्थाः संप्रति मन्यसे इति वाक्यारम्भसूचनायाऽऽकार इत्यपरे । तथा स्मृतेः सूचक आकारः प्रयुज्यते ततः स्मृतो ऽर्थो निर्दिश्यते । आ एवं किल तदिति ॥ १४ ॥

ओत् ॥ निपातसमाहारो ऽयमिति । अनर्थकानामपि निपातानां कमीमिदुइत्या-दीनां दर्शनादर्थभेदाभावे ऽपि निपातसमाहारत्वमुक्तम् । एवं तर्हीति । चादिषु तथा पाठादिति भावः । ओषु यातमिति । आ उ ओ इत्यत्रान्तवद्भावाद्व्यवत्ययमाङिति अना-ङिति प्रतिषेधः प्राप्नोति । पर्युदासे तु सति न दोषः । तत्र ह्याङ्सदृशस्योकारस्याङा सहैकादेश आदिवद्भावादुकारग्रहणेन गृह्यते इति सिध्यत्येव प्रगृह्यसंज्ञा । तस्याश्च प्र-योजनं क्व चिच्छाखायामो आयतमिति पाठे प्रकृतिभावः । अदो ऽभवदिति । च्व्यन्तत्वे-नात्र निपातत्वम् । ऊर्यादिच्वीत्यत्र निपाताधिकारात् प्रतिषिद्धार्थत्वादस्य कथमत्र प्रा-प्तिरिति चेद्, उभयार्थत्वाददोषः । तथा ह्योदन्तस्य निपातस्य प्रगृह्यसंज्ञा विधीयमाना

---

नैव एकैकत्र सूत्रचारितार्थ्यादिति । तस्मात्तितउशब्दैकदेशे अउशब्दानुकरणे उक्तसमुदायानुकरणे वानितिपरे निपातसंज्ञके अउअकरोदित्यादौ प्रगृह्यत्वं स्यान्नवारणायैकगृह्णमिति तत्त्वम् । भाष्ये ( दम्भेरिति ) । दम्भेः सनि दम्भ इच्चेतीत्वे सनीवन्तेति इडभावपक्षे इक्समीपो नकारो न ततो झलादिः सन् परः यतश्च भात्परः सन्न स इक्समीप इति 'हलन्ताच्चेति' कित्त्वाभावे 'अनिदिताम्' इति नलोपो न स्या-दिति चोद्ये जात्याश्रयानेकस्येक्समीपत्वं सनश्च तस्मात्परत्वमितिकित्त्वं धिप्सतीति सिद्धिरित्यर्थः । अ-नेन सामीप्यमव्यवहित एवेति सूचितम् । प्रदर्शनाय । प्रदर्शनं कारयितुमित्यर्थः । किं चिद्विधानायोपात्त-स्यान्यविधानाय पुनरुपादानमन्वादेशः । प्रकृते च विधानद्वयाभावादेतमित्येनादेशो न कृत इत्याहुः । विना-तेनेत्यादि । यथा आ काशीं वृष्टो देव इत्यादौ काशीमभिव्याप्य काशीं वर्जयित्वेति वार्थः ॥ १४ ॥

ओत् ॥ दर्शनादिति । वेदे च्वादीना पादपूणार्थानाञ्च लोकेपीत्यादिः । अर्थभेदाभावेपि । तत्रा-नात्वभावेपि । अवयवा अनर्थकाः । निपातसमुदाय एवार्थवानिति भावः । उशब्दोऽत्र निरनुबन्धकः । तेन उञ इत्यनेन सिद्धिरिति न भ्रमितव्यम् । पर्युदासे त्विति । वस्तुतः पर्युदासेपि दोषः । आङ्भिन्नत्व-स्याशास्त्रीयत्वात् । न च स्वाश्रयमाङ्भिन्नत्वम् । आङ्त्वस्य पूर्वान्तवत्त्वेनातिदेशे ऽतिदिश्यमानविरुद्धस्वा-श्रयधर्मप्रयुक्तकार्यस्य निवृत्तेरतिदेशस्वभावसिद्धत्वात् । न चान्तवत्त्वमेव दुर्लभं शास्त्रीयकार्याभावादिति वाच्यम् । तत्रापि प्रतिषेधस्य गम्यतया शास्त्रतात्पर्यविषयत्वेन प्रगृह्यत्वाभावस्य शास्त्रीयतया ऽन्तवत्त्वप्रवृ-त्तेरिति बोध्यम् । तस्याश्चेति । प्रगृह्येषु पदपाठे इति शब्दप्रयोगनियमादपि फले विशेषो बोध्यः । भाष्ये ( ओतश्च्वीति ) । पूर्वसूत्रवदत्राप्यर्थाधिकाराद्गौणमुख्यन्यायास्याप्रवृत्तिरित्याशयः । प्रतिसिद्धार्थत्वादिति ।

तिरो ऽभवत् । न वक्तव्यः । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येत्येवं न भविष्यति । एवमपि अगौः गौः समपद्यत गोऽभवत् । अत्र प्राप्नोति । एवं तर्हि गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति । तद्यथा । गौरनुबन्ध्यो ऽजो ऽग्नीषोमीय इति न वाहीको ऽनुबध्यते । कथं तर्हि वाहीके वृद्ध्यात्वे भवतः । गौस्तिष्ठति गामानयेति । अर्थाश्रय एतदेवं भवति । यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति । शब्दाश्रये च वृद्ध्यात्वे ॥

---

प्रतिबन्धाभावाददो ऽभवदित्यत्रापि भवति ओषु यातमित्यत्रापि परत्वादनाङिति प्रतिषेधं बाधते इति प्रतिषिद्धार्थमपि स्यादिति को विरोधः । ओकारस्य प्रतिपदोक्तस्य ग्रहणमित्युत्तरम् । एवमपीति । ओकारस्यात्र प्रतिपदोक्तत्वमस्ति । गमेर्डो इति साक्षादुच्चारणात् । यस्य हि साक्षादुच्चारणं नास्ति आद्गुण इत्यादिसामान्यलक्षणेन यद्रूपं निष्पाद्यते तल्लाक्षणिकमुच्यते । एवं तर्हीति । गुणादागतो गौणः यथा गोशब्दस्य जाड्यादिगुणनिमित्तो ऽर्थो वाहीकः । मुखमिव प्रधानत्वान्मुख्यम् । तत्र स्वं रूपमित्यत्र रूपग्रहणेनार्थपरिग्रहस्य ज्ञापितत्वादर्थवतः कार्येण भवितव्यम् । स चार्थः प्राथम्यान्मुख्य एव गृह्यते गौणे ह्यर्थे शब्दः प्रवर्तमानो मुख्यार्थारोपेणैव प्रवर्तते । अनियतश्च गौणो ऽर्थः । तस्माल्लौकिको ऽयं न्यायो गौणमुख्ययोरिति । गो ऽभवदित्यत्र च जाड्यादिना धर्मेण गोत्वमारोपितमिति गौणत्वमर्थस्य । गो ऽभवदित्यत्र वृत्तौ प्रकृतेः कर्तृत्वे संघीभवन्ति ब्राह्मणा इति बहुवचनदर्शनात् । प्रकृतौ च गोत्वमारोपितं न तु मुख्यमिति प्रगृ-

---

प्रतिसिद्धसंज्ञाकं पदं प्रतिसिद्धपदेनोच्यते । परत्वादिति । निषेधाश्च बलीयांस इत्यस्य तु नायं विषयः । तस्य पूर्वेण सह पाठात्तन्निषेधकत्वादिति भावः । प्रतिपदोक्तस्येति । न च प्रतिसिद्धार्थोयमारम्भ इति पूर्वभाष्यासङ्गस्यात्रैतत्परिभाषाया अप्रवृत्तिरेवानित्यत्वादुचितेति वाच्यम् । अस्यैकदेशयुक्तित्वादेतद् ध्वनयन् भाष्ये आह । ( एवमपीति ) । ननु लक्षणेन प्रतिपादितत्वादिदमपि लाक्षणिकमत आह यस्य हीति । प्रधानत्वात् । अर्थान्तरप्रतीतिनिरपेक्षतया प्रतीयमानत्वात् तादृशार्थबोधकत्वाच्छब्दस्यापि गौणत्वं मुख्यत्वञ्च बोध्यम् । गौणमुख्यन्यायबीजं दर्शयितुमाह तत्र स्वं रूपमिति । प्राथम्यमेवोपपादयति गौणे हीति । आरोपाय हि पूर्वं तदुपस्थितिरावश्यकेति भावः । मुख्यार्थारोपेणेति । आरोपितसिंहत्ववान् माणवकादिसमभिव्याहारे सिंहशब्दार्थइति भावः । मुख्यस्यैव ग्रहणे युक्त्यन्तरमाह अनियतश्चेति । सिंहशब्दस्य माणवकबलीवर्दादिषु प्रयोगादिति भावः । एतेन 'वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेरोकारस्य लाक्षणिकत्वमित्यादिचिन्त्यमि, त्यपास्तम् । अनयैव तस्यापि वारणाद्, ह्वावामश्चेत्यादेस्तज्ज्ञापकस्य लक्षणप्रतिपदोक्तपरिभाषानित्यत्वमात्रज्ञापकतया वर्णग्रहणे सर्वत्र तदप्रवृत्तौ मानाभावाच्च । न चेयमपि अर्थवत्वपरिभाषामूलकत्वात्तद्वदेव विशिष्टरूपोपादानविषयेति कथमत्र वर्णग्रहणे प्रवर्त्ततात्तत्रैवार्थोपस्थितेः सत्त्वादिति वाच्यम् । निपात इति विशिष्टरूपोपादानसत्त्वात् । निपातसंज्ञा हि चादिपदोपस्थितचादीनां सति संभवेऽर्थवतामेवेति ये सार्थकास्तेषां निपातपदेनापि तत्तदर्थविशिष्टानामेवोपस्थितिरिति प्रकृतसूत्रस्थनिपातपदेन मुख्यार्थकनिपातानामेव ग्रहणं न तु गौणार्थकानामिति भावः । एवञ्च कार्यकालपक्षेपि च्व्यन्ता निपाता इत्यस्यात्रानुपस्थितिरेतत्परिभाषावशात् । विशिष्टरूपपदेन चार्थवद्रूपमेवोच्यते । प्रकृते गौणत्वमुपपादयति जाड्यादिनेति । आरोपे बीजमाह प्रकृतेः कर्तृत्वमिति । एवञ्च गोऽभवदित्यस्य गोभिन्नकर्तृकं गोसदृशरूपेण भवनमर्थः । यत्र च योगीश्वरशापादिना मुख्यगोरूपप्राप्तिस्तत्र च्विर्नेष्यते इति गोसदृशरूपेण भवनप्रतीतेस्तस्य गौणत्वमीति भावः । ननु सुवर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवत इति भाष्ये विकृतेरपि कर्तृत्वदर्शनादुक्तं वृत्तावीति । एवञ्च च्व्यन्ते प्रकृतेरेव कर्तृत्वमिति भावः । प्रकृतेरेव कर्तृत्वे हेतुमाह सङ्घीभवन्तीति । ननु शब्दाश्रये चेति भाष्यस्यार्थराहित्वर्णमात्राश्रये इत्यर्थः

उञ ऊँ ॥ १७ ॥ १८ ॥ इह कस्मान्न भवति । आहो इति उताहो इति । उञ इत्युच्यते न चात्रोञं पश्यामः । ऊञो ऽयमन्येन सहैकादेश उञ्ग्रहणेन गृह्यते । आचार्यप्रवृत्तिर्ज्ञापयति नोञ एकादेश उञ्ग्रहणेन गृह्यते इति । यदय-

---

द्यत्वाभावः । शब्दाश्रये चेति । स्वार्थे वृत्तात् प्रातिपदिकाद्विभक्त्युत्पत्तौ कार्येषु कृतेषु शब्दान्तरसन्निधानाद् गौणत्वं प्रतीयते । तस्य च स्वार्थस्य मुख्यव्यपदेशो नास्ति गौणापेक्षया सम्बन्धिशब्दत्वान्मुख्यव्यपदेशस्य गौणाभावेऽभावाच्छब्दाश्रये चेत्युक्तं न त्वत्रार्थौ नापेक्ष्यते । तत्र यथा श्वेतं छागमालभेतेति गुणद्रव्ययोः श्रौतः क्रियासम्बन्धः । वाक्यीयात्तु न्यायात् पश्चात् परस्परेण । एवं गां वाहीकमानयेति पूर्वक्रियाभिसम्बन्धापेक्षया विभक्त्युत्पत्तौ वाक्यीयात्तु न्यायात् सामानाधिकरण्याद् गौणार्थप्रादुर्भावो भवतीति पदकार्येष्वेवायं न्यायो न प्रातिपदिककार्येष्वित्युक्तं शब्दाश्रये चेति ॥ १५ ॥

उञ ऊं ॥ इह कस्मादिति । निपातसमाहारं मत्वा प्रश्नः । यदयमिति

---

प्रतीयते स चायुक्तः सर्वनामस्थानम् शसाक्षिप्तप्रातिपदिकस्यैत इत्यनेन विशेषणादनयोरपि विशिष्टशब्दाश्रयत्वादत आह स्वार्थे इति । स्वार्थादिप्रयुक्तकार्येण पूर्णस्य पदस्यार्थप्रतिपादनाय प्रयोगार्हस्य पदार्थान्तरान्वयबोधप्रतिसन्धाने गौणार्थप्रतीतेरिति भावः । आक्षेपे आक्षिप्तस्य वा शब्दे ऽन्वये मानाभावाच्च । गौणापेक्षयेति । मुख्यशब्दस्य गौणापेक्षया संबन्धिशब्दत्वात् गौणाभावे गौणस्यबुद्ध्यसंनिधाने मुख्यव्यपदेशस्य मुख्यपदस्याभावादित्यन्वयः । एवञ्च शब्दाश्रये चेति भाष्यस्यमुख्यव्यपदेशरहितस्वार्थबोधकप्रातिपदिकरूपशब्दाश्रये इत्यर्थः । पदव्यपदेशराहितस्य कार्यित्वेऽऽनाश्रयणमिति फलितमिति तात्पर्यम् । ननु द्वितीयादेः कर्मत्वाद्यर्थकस्य कारकत्वज्ञानसापेक्षतया गां वाहीकमानयेत्यादौ विशिष्टस्य क्रियासंबन्धेन कर्मत्वेपि तदभिधानाय जायमाना द्वितीया समुदायस्याप्रातिपदिकत्वात्प्रत्येकं प्रवर्तते ततश्च पूर्वमेव गौणत्वाद्गात्वञ्च न स्यादत आह तेत्रात । श्रौत क्रियासंबन्धइति । द्वितीयाश्रुत्यनुपपत्त्या कल्पित इत्यर्थः । विभक्त्यन्तेन हि उपस्थितार्थस्य क्रियान्वय इति ततः प्राग्गुणे साक्षात्परं परासाधारण्येन द्रव्ये च साक्षात् सामान्यतः क्रियाजन्यफलाश्रयत्वादिविवक्षयोभयत्र विभक्तिरिति भावः । वाक्यीयात् न्यायात् । आकाङ्क्षादिमूलकशक्त्या । पश्चात् विभक्त्युत्पत्त्यनन्तरम् । एवमिति । द्वितीयादेः सामान्यतः क्रियासंबन्धज्ञानापेक्षत्वात् तज्ज्ञानमूलकाद्द्वितीयाद्युत्पत्तौ गोपदार्थस्य वाहीकान्वयः पश्चादेव । एवञ्च कर्मणोरेव विशेष्यविशेषणभावः । न तु विशिष्टस्य कर्मत्वमिति भावः । यत्तु विभक्त्यर्थस्य क्रियाकारकसंबन्धरूपत्वेन तयोः संबन्धबोधः श्रुतिकृत इति श्रुतेर्वाक्यापेक्षया शीघ्रं प्रवृत्त्या प्रथमं तयोरन्वयबोधः पश्चाद्गुणद्रव्ययोः परस्परान्वयबोधः । एवञ्च वाहीकमानयेत्यादावपीति कैयटार्थं व्याख्याय दूषयन्ति । गां वाहिकं पाठयेत्यादौ यत्र गौणार्थप्रादुर्भावं विना क्रियासंबन्ध एवासंभवी तत्र पूर्वमेव गौणत्वाविगतेरात्वाद्यनापत्तिरिति तदेतेन परास्तम् । विभक्त्यन्तस्यैव प्रयोगेण तत उपस्थितानामर्थानामितरान्वयेन प्रातिपदिकमात्रार्थेन पूर्वमन्वय इत्यस्य वक्तुमप्यशक्यत्वाच्च । तादृशबोधद्वयकल्पने गौरवाच्च । अनुभवाभावाच्च । किं च अपदस्याप्रयोगेण बाढ्भिः सर्वत्र पदस्यैव गौणार्थत्वग्रहेण अस्वं स्वं संपद्यते अमहान् महान् भूतस्त्वद्भवतीत्यादौ भाष्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणेन चास्य न्यायस्य पदकार्यमात्राविषयत्वमुपात्तविशिष्टरूपाविषयत्वं बोध्यम् । अतएवात इञित्यादेः श्वशुरसदृशस्यापत्यमित्यर्थेऽपि प्रवृत्तिः । किं च गामित्युक्ते सर्वा क्रिया प्रसक्तेत्याद्यर्थवत्सूत्रस्थभाष्यबलात्संस्कृत्य संस्कृत्य वेदान्युत्सृज्यन्ते तेषां यथेष्टमभिसंबन्धी भवाति इति वृद्धिसूत्रस्थभाष्याच्च सामान्यतः क्रियाजन्यफलाश्रयत्वादेरेव द्वितीयादिनियामकत्वेन मदुक्तव्याख्यैव तस्योचिता । प्रयोक्ताऽपि पदान्येवार्थे मुख्ये गौणे वा प्रयुयुक्षति न तु प्रातिपदिकादिक्रमणेति सूच्यते पदकार्येष्विति । सामानाधिकरण्यादिति । इदमुपलक्षणं पठनादिक्रियान्वयादित्यपि बोध्यम् ॥ १५ ॥ ॥ १६ ॥

उञ ऊ ॥ प्रश्नइति । एवञ्चात्र ऊँ आदेशः प्राप्नोतीति भावः । संज्ञासिद्धिरिति । निपात एकाजित्यनेनेत्यर्थः । स्थानिवद्भावेन तु नैतल्लभ्यम् । एकादेशस्यान्यत्वृत्तिधर्मत्वात् । एकादेशस्यान्यत्मात्र-

मोदित्योदन्तस्य निपातस्य प्रगृह्यसंज्ञां शास्ति । नैतदस्ति ज्ञापकम् । उक्तमेतत् प्रतिषिद्धार्थो ऽयमारम्भ इति । दोषः खल्वपि स्याद् यद्युञेकादेश उञ्ग्रहणेन गृह्येत जातु अस्य रुजति जानू अस्य रुजति । जान्वस्य रुजति । मय उञो वो वेति वत्वं न स्यात् । एवं तर्ह्येकनिपाता इमे । अथ वा द्वावुकाराविमौ । एको ऽननुबन्धकः । अपरः सानुबन्धकः । तद्यो ऽननुबन्धकस्तस्यैष एकादेशः । उञ इति योगविभागः * । उञ इति योगविभागः कर्तव्यः । उञः शाकल्यस्याचार्यस्य मतेन प्रगृह्यसंज्ञा भवति । उइति । विति । तत ऊँ । उञ ऊँ इत्ययमादेशो भवति शाकल्यस्याचार्यस्य मतेन दीर्घो ऽनुनासिकः प्रगृह्यसंज्ञकश्च, ऊँ इति । किमर्थो योगविभागः । ऊँ वा शाकल्यस्य * । शाकल्यस्याचार्यस्य मतेन ऊँ विभाषा यथा स्याद् ऊँ

---

एकादेशे कृते आदिवद्भावात् संज्ञासिद्धिः । इह रूपत्रयं साध्यम् । उ इति । विति । ऊँइति । तच्चैकयोगेन न सिध्यति । एकयोगे ह्युञ इति श्रुतिरादेशेन श्रुतत्वात् सम्बध्यते न प्रगृह्यसंज्ञया सा तु निपात एकाजनाङिति नित्यैवास्य भवति शाकल्यश्रुत्यनुवृत्त्या चादेशे विकल्पिते रूपद्वयं स्यात् । उ इति । ऊं इति न तु वितीति । तदर्थमाह उञ इति योगविभाग इति । ऊञ इत्यत्र शाकल्यस्येतौ प्रगृह्यमिति चानुवर्तते तत्र प्रगृह्यसंज्ञैव शाकल्यस्य मतेन विधीयते नान्येषामिति स्मृत्यन्तरानुसन्धानद्वारेण विभाषा संपद्यते । उ इति वितीति । ऊं इत्यत्र यदि शाकल्यस्येति नापेक्ष्यते तदा प्रगृह्यस्योञो नित्यमादेशः स्यात् । ततश्च विति ऊं इति एते द्वे एव रूपे स्याताम् । तस्माच्छाकल्यग्रहणानुवृत्त्या आदेशविकल्पे सति त्रीणि रूपाणि सिध्यन्ति । ऊंवा शाकल्यस्येति । शा-

---

वृत्तिधर्मस्तु नायम् । उञिति समुदायेऽपि सत्त्वात् । तेनान्तादिवद्भावेन ताद्रूप्यानतिदेशे ऽपि न दोषः । भाष्ये (यद्युञइति) सामान्येन ज्ञापकमिति भावः । वत्वाभावपक्षे ऊँ आदेशो न स्यादित्यपि दोषो बोध्यः । नित्यैवेति । आदेशाभावपक्ष इत्यर्थः । न तु वितीति । न च उ इतीत्यस्य निरनुबन्धकोकारमादाय सिद्धत्वेन शाकल्यानुवृत्तिसामर्थ्यात्पक्षे वितीति भविष्यतीति वाच्यम् । मय परत्वे किम्वितीत्यादौ मकारसहितनिरनुनासिकवकारघटितरूपासिद्धिप्रसङ्गात् । शाकल्यानुवृत्तिसामर्थ्यान्निपातेति प्रगृह्यत्वाभावे मय इति वत्वस्यासिद्धत्वेनेको यणचीति वत्वे ऽनुस्वारापत्तेः । उ इतीत्यतः सानुबन्धकबोधस्यापीष्टत्वेन तदनापत्तेश्चेति भावः । अन्ये तु अनेन प्रकरणात् प्रगृह्यत्वस्य ऊँ आदेशस्य च विधानेन तस्य निपात इति प्रगृह्यसंज्ञाप्राप्तत्वादेतदादेशविकल्पे ऊँ इति वितीति सिद्ध्यति न तु उ इति । अतो योगविभागः । न चाप्वादे विशिष्टे ऊ आदेशे हि असति निपातइति प्रगृह्यत्वं स्यात् । अप्रवर्त्तमानापवादस्योत्सर्गबाधकत्वाभावादत एव पारेमध्ये इत्यव्ययीभावाभावे उत्सर्गः षष्ठीसमासो भवतीति वाच्यम् । प्रगृह्यपदस्य सर्वत्र साक्षादुद्देश्यसंबन्धस्य क्लृप्तत्वेनात्र विधेयविशेषणत्वे मानाभावात् सह विधानेन वाक्यभेदस्याप्यभावात्स्थानिवद्भावेन च ऊं इत्यस्य प्रगृह्यकार्यं बोध्यमेवञ्च पक्षे प्रगृह्यत्वाभावे ऽप्यस्य तात्पर्यान्नैतदभावे निपात इत्यस्य प्रवृत्तिरित्याहुः । प्रगृह्यस्येति । अनुवर्त्तमानप्रगृह्यपदस्यादेशेन संबन्धे उञ्मात्रस्य नित्यं प्रगृह्यसंज्ञकस्य ऊंभावस्य विधानापत्तौ योगविभागेन प्रगृह्यसंज्ञाविधानस्य वैयर्थ्यापत्तेरनुवर्त्तमानं प्रगृह्यपदं षष्ठ्यन्ततया विपरिणमय्य स्थानिना संबध्यत इति भावः । द्वे एवेति । न च उ इतीति रूपमपि निरनुबन्धकोकारमादाय सिद्धम् । सानुबन्धकप्रतीत्यनापत्तेः । मयः परत्वे किम्वितीत्यादौ मकारसहितनिरनुनासिकवकारघटितरूपासिद्धिप्रसङ्गाच्च । वस्तुतस्तु उञ इत्यस्यात्रानुवृत्तस्यार्थाधिकारादप्रगृह्यपरतैव । प्रगृह्यमितिचादेशविशेषणमेव । तथैव भाष्यस्वरसादिति ऊँ इति उ इति च रूपे स्यातां न तु वितीति तदर्थं विकल्पानुवृत्तिः । ऊंइति दीर्घोच्चारणात्प्रगृह्यपदस्यात्र संबन्ध इति सर्वमवदातम् । किमर्थो योगविभागइति ।

इति उ इति । अन्येषामाचार्याणां मतेन विति ॥

ईदूतौच सप्तम्यर्थे ॥ १९ ॥ ईदूतौ सप्तमीत्येव * ईदूतौ सप्तमीत्येव सिद्धं नार्थो ऽर्थग्रहणेन । लुप्ते ऽर्थग्रहणाद्भवेत् । लुप्तायां सप्तम्यां प्रगृह्यसंज्ञा न प्राप्नोति । क्व । सोमो गौरी अधिश्रितः । इष्यते चात्रापि स्यादिति तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थमर्थग्रहणम् । नात्र सप्तमी लुप्यते । किं तर्हि । पूर्वसवर्णो

---

कल्यस्य श्रुतेरेव फलं वाग्रहणेन प्रतिपादयति । एतदेव व्याचष्टे । शाकल्यस्य विभाषा यथा स्यादिति । प्रगृह्यसंज्ञा ऽऽदेशश्च । तत्र यद्यपि पूर्वसूत्रे फलरूपतया निर्देशात् प्रदेशेष्विव प्रगृह्यशब्दो द्विवचनाद्यभिधेयः । तथापीहोञ इति षष्ठीनिर्देशात् स्वरूपपदार्थकः संपद्यते ॥ १८ ॥

ईदूतौ च सप्तम्यर्थे ॥ ईदूतौ सप्तमीत्येवेति । सप्तमीसहचरितं यदीदूदन्तं सप्तम्यां वा परतस्तत् प्रगृह्यसंज्ञं भवतीत्येवं प्रत्ययलक्षणेन लुप्तायामपि सप्तम्यां सोमो गौरी अधिश्रित इत्यादौ भविष्यति प्रगृह्यसंज्ञेति प्रश्नः । लुप्त इति । संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधादसत्यर्थग्रहणे सप्तम्या एव संज्ञिनीत्वादसत्याश्च कार्याभावात् प्रत्ययनिमित्तं यत्रान्यस्य कार्यं विधीयते तत्रैव प्रत्ययलक्षणसद्भावाद् गौरीत्यत्राप्रसङ्गादर्थग्रहणं कृतम् । अर्थग्रहणे सति अर्थनिमित्ता संज्ञेयं भवति न प्रत्ययश्रवणनिमित्तेति लोपे ऽपि सिध्यति । पूर्वसवर्ण इति । सति च पूर्वसवर्ण एकादेशं चादिव-

---

प्रगृह्यत्वादेशयोः शाकल्यमते एव प्राप्त्या एकप्रयोगे एव प्रवृत्तिः स्यादेवञ्च ऊं इति वितीति च रूपे ते चैकयोगेपि सिध्यत इति प्रश्नः । एवञ्चैकयोगे वितीति न सिध्यतीति प्रागुक्तकैयटाशय एवेति बोध्यम् । शाकल्येति । एवञ्च योगविभागसामर्थ्याच्छाकल्यानुवृत्तिसामर्थ्याच्च तत्र यथाश्रुतं किं तु विकल्पमात्रतात्पर्यकमिति विकल्पद्वयेन सकलेष्टसिद्धिरिति भावः । एवञ्च शाकल्यमतएव विकल्पः फलितः । तदाह । भाष्ये ( शाकल्यस्य विभाषेति ) । शाकल्यमते ऊं आदेशविकल्पे यत्फलाति तद्दर्शयति । प्रगृह्यसंज्ञादेशश्चेति । तन्मते पर्यायेणोभयं सिध्यतीत्यर्थः । ननु प्रगृह्यमित्यस्य प्रथमान्तस्य कथमुञ इत्यनेन षष्ठ्यन्तेनान्वय इत्यत आह यद्यपीति । फलरूपतयेति । फलं संज्ञाया बोध्यतया संज्ञिनः । तेन च तद्बोधकं लक्ष्यते । तद्रूपतया । तत्समानविभक्तिकतयेत्यर्थः । द्विवचनाद्यभिधेय इतिबहुव्रीहिः प्रगृह्यशब्दवदभिन्नं द्विवचनादीति बोधः । प्रगृह्यशब्दत्वेन च द्विवचनादि प्रगृह्यपदाभिधेयमिति बोध्यम् । स्वरूपपदार्थक इति । उञो वाचकं प्रगृह्यपदमित्यर्थादिति भावः । वस्तुतः पूर्वत्रापि शब्दपर एव शब्दार्थयोरभेदात्सामानाधिकरण्यं पटः शुक्ल इतिवत् । प्रकृते तु पटस्य शुक्ल इत्यत्रेवोक्तरीत्या वैयधिकरण्येनान्वय इति न कश्चिद्दोषः । केचित्तु प्रदेशे वृद्धिपदाभिन्ना आदैच इति उपस्थितिः । संज्ञावाक्ये तु तथा शाब्दबोधः । द्विवचनाद्यभिधेयइत्यस्य द्विवचनादिविशेष्यकबोधजनक इत्यर्थः । षष्ठीसमभिव्याहारे तु विशेष्यतया सरूपपदार्थक इति कैयटं योजयन्ति ॥ १८ ॥

ईदूतौ च ॥ ईकारोकारात्मकसप्तम्या असंभवं मत्वाह सप्तमीसहेत्यादि । तात्पर्यानुपपत्त्या च लक्षणेति भावः । सप्तम्यां वेति । सप्तमीति पदं लुप्तसप्तमीकं व्याख्यास्यतइति भावः । जघन्यवृत्तिकल्पनापेक्षयेदं स्वाध्यमिति तात्पर्यम् । लुप्तायामपीति । न लुमतेति निषेधस्तु अनित्यत्वान्न सप्तम्यां परत इत्यर्थे ऽपीति भावः । ननु प्रत्ययग्रहणेन तदन्तविधौ ईकाराद्यन्तं यत्सप्तम्यन्तमित्यर्थे प्रत्ययलक्षणेन सिद्धं सोमो गौरी इति तत्राह संज्ञेति । सप्तम्या एवेति । सप्तमीपदस्य लुप्तसप्तम्यन्तत्वे सप्तमीसहचरितलाक्षणिकत्वे च न मानमिति भावः । यद्यपीकारोकारसप्तम्योरसंभव एव तत्र मानं, तथापि वचनादित्यादिना तद्वक्ष्यतीत्यत्र तात्पर्यम् । असत्त्याश्च कार्याभावादिति । प्रगृह्यसंज्ञाकार्यं हि सन्धिकार्याभावफलकप्रकृतिभावः । लुप्ते षष्ठ्यर्थप्रसङ्गस्य निरूपयितुमशक्यत्वेन सन्धिकार्याप्राप्त्या प्रकृतिभावानुपयोगात्तत्कार्या-

ऽत्र भवति । पूर्वस्य चेत् सवर्णो ऽसावाडाम् भावः प्रसज्यते * । यदि पूर्वसवर्ण आट् आम्भावश्च प्राप्नोति । एवं तर्हि आहायमीदूतौ सप्तमीति । नास्ति सप्तमी ईदूतौ । तत्र वचनाद्भविष्यति । वचनाद्यत्र दीर्घत्वम् * । नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् । यत्र सप्तम्या दीर्घत्वमुच्यते । दृतिं न शुष्कं सरसी शयानमिति । सति प्रयोजने इह न प्राप्नोति । सोमो गौरी अधिश्रित इति । तत्रापि सरसी यदि । तत्रापि सिद्धम् । कथम् । यदि सरसी-शब्दस्य प्रवृत्तिरस्ति । अस्ति च लोके सरसीशब्दस्य प्रवृत्तिः । कथम् । दक्षिणापथे हि महान्ति सरांसि सरस्य इत्युच्यते । ज्ञापकं स्यात् तदन्तत्वे । एवं

---

ङ्राबाद्भवतीकारः सप्तमीति सिद्धा संज्ञा । आडाम्भाव इति । एकादेशं बाधित्वा ऽऽडामौ स्याताम् । वचनादिति । सर्वत्रैव सप्तमी लुप्यतइति वचनसामर्थ्यात् सप्तमीशब्देन सप्तमीसहचरितस्य ग्रहणान्मुख्यकल्पनाऽसम्भवे गौणी कल्पना गृह्यते इत्याश्रयणात् सिध्यतीति भावः । मुख्यकल्पना सम्भवत्येवेत्याह यत्रेति । सरसीत्यत्र सरःशब्दात् परस्य ङिशब्दस्येयाडियाजीकाराणामुपसंख्यानमितीकारे कृते भवतीकारः । सप्तमीति तत्रैव स्यान्न तु गौरीत्यत्रेति भावः । सरसी यदीति । यदीति सम्भावनायाम् । तस्मात् स्थितमेतद्वचनात् सर्वत्र लुप्तायामपि सप्तम्यां भविष्यतीति नार्थो ऽर्थग्रहणेन । ज्ञापकमिति । ईदूदेदित्यत्र तृतीयचतुर्थपक्षयोरित्यर्थः । इह प्रगृह्यसंज्ञाप्रकरणे यदि प्रत्यलक्षणं स्यात् तदेदूतौ च सप्तमीत्येव सप्तमीसहचरितं सप्तम्यां वा परतो यदीदूदन्तं तत् प्रगृह्यसंज्ञमिति प्रत्ययलक्षणेन लुप्तायामपि सप्तम्यां संज्ञा भविष्यतीति किमर्थग्रहणेन तत् क्रियमाणं प्रत्ययलक्षणाभावं सूचयति । संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेरभावात् तदन्तपक्षस्तत्र नैव स्थित इति ज्ञापनफलाभावादाह मा वेति । वाप्यश्वो नद्यातिरिति । संज्ञायामिति समासे कृते सप्तमीसहचरितमीकारान्तं पूर्वपदमिति स्यात् प्रगृह्यसंज्ञेति

---

भाव इत्यर्थः । तदेवाह प्रत्ययनिमित्तमित्यादिना । ( पूर्वसवर्णे इति ) स च सुपां सुलुगित्यनेन । एकादेशमिति । परत्वान्नार्णादाङ्गस्य बलीयस्त्वाच्चेति भावः । एवञ्च ङ्यन्ते गौरीत्यादौ लुक आवश्यकत्वेन तदर्थमर्थग्रहणमिति तात्पर्यम् । सर्वत्रैवेति । ननु यथीत्यादिभ्यो ङौ दीर्घे तत्र इत्यादौ ओस्सुपोः पूर्वसवर्णादेशे च ईदूदन्तसप्तमीसंभवात्कथमेतदिति चेन्न । ईदूत्सप्तमी प्रगृह्यम्, अदसः, एच्च द्विवचनमित्येव सिद्धे स्थलान्तरे ईदूतौ सप्तमीति गुरुवचनसामर्थ्येन सप्तमीसहचरितग्रहणमिति भाष्याशयान्न दोष इति केचित् । तन्न । न चास्तिसप्तमी ईदूताविति भाष्यासङ्गतेः । तस्मादेतद्भाष्यप्रामाण्यात्तेषामनभिधानमिति तत्त्वम् । सरः शब्दादिति । सरस्शब्दस्यासुन्नन्तत्वेनाद्युदात्तत्वेपि स्वरव्यत्ययाद् 'दृतिं न शुष्कं सरसी शयान' मित्यत्र सरसीत्यस्यान्तोदात्तत्वं बोध्यम् । निराकर्त्तुः संशयार्थो यदिशब्दो ऽनुपपन्न इत्यत आह संभावनायामिति । शास्त्राणि चेत्प्रमाणं स्युरितिवदसंदिग्धे संदिग्धवद्वचनमिदमिति भावः । सरसीशब्दो यदि ङीषन्तस्तदान्तोदात्तत्वं न्यायसिद्धम् । असुन उगन्तत्वान् ङीबन्तत्वे तु स्वरव्यत्ययादेव तत्त्वम् । एवञ्च ततो लुकैवोक्तप्रयोगे सिद्धे इयाडिति वार्त्तिके ईकारादेशो न विधेय इति भाष्याशयः । तस्मात्पूर्वोक्तरीत्या वचनसामर्थ्याल्लुप्तेपि सिद्धिः । सप्तमीसहचरितत्वञ्च प्रत्ययलक्षणेन बोध्यम् । संज्ञायामितीति । अत एवाग्रे भाष्ये जहत्स्वार्थावृत्तिरिति सङ्गच्छते । न च वाक्येन संज्ञानवगमादस्य नित्यसमासत्वे वाप्यामश्व इति विग्रहो नोचित इति वाच्यम् । वाक्यात्संज्ञिनो ऽनवगमेन नित्यसमाससदृशत्वेपि न तद्विधायके वाग्रहणासंबन्ध इति समासाघटकीभूतानान्तद्विषये विग्रहाभावे मानाभावात् । ध्वानितञ्चेदं द्वितीयतृतीयेति सूत्रे भाष्ये इति तत्रैव निरूपयिष्यते । सप्तमीसहचरितमिति ।

तर्हि ज्ञापयत्याचार्यो न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। कुमार्योरगारं कुमार्यगारम्। वध्वोरगारं वध्वगारम्। प्रत्ययलक्षणेन प्रगृह्यसंज्ञा न भवति। मा वा पूर्वपदस्य भूत्। अथ वा पूर्वपदस्य मा भूदित्येवमर्थमर्थग्रहणम्। वाप्यामश्वो वाप्यश्वः। नद्यामातिर्नद्यातिः। अथ क्रियमाणे ऽप्यर्थग्रहणे कस्मादेवात्र न भवति। जहत्स्वार्थावृत्तिरिति। अथाजहत्स्वार्थायां वृत्तौ दोष एव। अजहत्स्वार्थायां च न दोषः। समुदायार्थो ऽभिधीयते॥ ईदूतौ सप्तमीत्येव लुप्तेऽर्थग्रहणाद्भवेत्। पूर्वस्य चेत् सवर्णो ऽसावाडाम्भावः प्रसज्यते॥ १॥ वचनाद्यत्र दीर्घत्वं तत्रापि सरसी यदि। ज्ञापकं स्यात् तदन्तत्वे मा वा पूर्वपदस्य भूत्॥ २॥

दाधा घ्वदाप्॥ २०॥ घुसंज्ञायां प्रकृतिग्रहणं शिदर्थम्। घुसंज्ञायां प्रकृतिग्रहणं कर्तव्यम्। दाधाप्रकृतयो घुसंज्ञा भवन्तीति वक्तव्यम्। किं प्रयो-

---

तदर्थमर्थग्रहणम्। अथेति। अस्त्येवात्र सप्तम्यर्थ इति प्रश्नः। जहत्स्वार्थेति। समासस्यैवार्थवत्वात् पूर्वोत्तरपदयोर्वर्णवदानर्थक्यात् सप्तम्यर्थो नास्तीत्यर्थः। समुदायार्थ इति। वृत्तौ हि पूर्वपदं स्वार्थमप्यभिधत्ते प्रधानार्थमपीति स्वार्थसंसृष्टस्य प्रधानार्थस्याभिधानात् पांसूदकवत् स्वार्थस्य विवेकानवगमात् समुदायार्थो वृत्तौ संसृष्टरूपेणैवाभिधीयते। सप्तम्यर्थग्रहणेन यावानर्थो वाक्ये सप्तम्यन्तेनाभिधीयते केवलो ऽसंसृष्ट उद्भूतस्तस्यैवेह ग्रहणमिति समासे न भवति प्रगृह्यसंज्ञा॥

दाधा घ्वदाप्॥ दाधाशब्दयोर्घुसंज्ञा विधीयमाना रूपान्तरयुक्तानां दोदेङ्धेटां न प्राप्नोतीत्याह घुसंज्ञायामिति। किं प्रयोजनमिति। दोदेङ्धेटामेजन्ताना-

---

प्रत्ययलक्षणेनेति भावः। वर्णवदानर्थक्यादिति। सं यामिति समासे ऽस्य रूढिशब्दत्वादवयवार्थाप्रतीतेरितिभावः। 'वाप्यामश्व' इति विग्रहप्रदर्शनन्तु रथन्तरादिपदानां रथेन तरतीत्यादिविग्रहप्रदर्शनवद्बोध्यम्। अत एव "जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी" ति वृद्धैरुक्तम्॥ भाष्ये (अथाजहत्स्वार्थायामिति)। सुप्सुपेति समासेन केवलयौगिके इत्यर्थः। प्रधानार्थमपीति। अश्वपदशक्तिसमुदायशक्तिसहकारेण गृहीतशक्तिकाद्वापीपदात् स्वार्थविशिष्टप्रधानार्थस्यैवोपस्थितेरित्यर्थः। तत्र समुदायशक्तिः संसर्गांश एव। तदाह स्वार्थसंसृष्टस्येत्यादि। विवेकानवगमात् पृथगनुपस्थितेरित्यर्थः। पांसूदकं मिलितं यथा संसृष्टमेव ज्ञानविषयो न तु पृथक् तथा समासात् संसृष्ट एवोपस्थितिविषयो न तु पृथगित्यर्थः। यावानित्यस्य विवरणं केवल इति। कैवल्यं विवृणोति। असंसृष्टउद्भूतइति। असंसृष्टत्वं विशेषणाविशिष्टत्वम्। उद्भूतत्वमितराविशेषणत्वमिति बोध्यम्। समुदायरूपोर्थः पूर्वपदार्थविशिष्ट उत्तरपदार्थो ऽभिधीयते ऽभिधाभिः परस्परसहकारेणोपस्थाप्यत इति भाष्यार्थः। अर्थग्रहणसामर्थ्यात् सप्तम्यर्थमात्रपर्यवसन्नार्थकमर्थग्रहणमिति भावः। गौरीत्यादौ त्वस्त्येव गौर्यादिपदानां सप्तम्यर्थपर्यवसन्नत्वम। समभिव्याहृतपदान्तरार्थानन्वयित्वेनोपस्थितिविषयत्वस्यैव सप्तम्यर्थपर्यवसन्नस्वरूपत्वात्। न चार्थग्रहणेपि गौरीत्याद्यसिद्धिः। सप्तम्यर्थे ईकाराद्यभावात् ईदाद्यन्तमित्यर्थस्तु दुर्लभो विशेष्यभावादिति वाच्यम्। सामर्थ्याच्छब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावात्॥ १९॥

दाधाघ्व॥ दाधाशब्दयोरिति। प्रयोगस्थदाधारूपाणामेव सूत्रे ऽनुकरणादिति भावः। दोदेङ्धेटामेजन्तानामिति। एषाञ्चात्र प्रकृतिवदनुकरणं भवतीति, न्यायादर्शितीति प्रसज्यप्रतिषेधाश्रयणा-

जनम्। आत्वभूतानामियं संज्ञा क्रियते। सा आत्वभूतानामेव स्यात्। अनात्वभूतानां न स्यात्। ननु च भूयिष्ठानि घुसंज्ञाकार्याणि आर्धधातुके तत्र चैत आत्वभूता दृश्यन्ते। शिदर्थम्। शिदर्थं प्रकृतिग्रहणं कर्तव्यम्। शित्यात्वं प्रतिषिध्यते तदर्थम्। प्रणिदयते प्रणिद्याति प्रणिधयतीति। भारद्वाजीयाः पठन्ति। घुसंज्ञायां प्रकृतिग्रहणं शिद्विकृतार्थम्। घुसंज्ञायां प्रकृतिग्रहणं कर्तव्यम्। किं प्रयोजनम्। शिदर्थं विकृतार्थं च। शित्युदाहृतम्। विकृतार्थं खल्वपि। प्रणिदाता प्रणिधाता। किं पुनः कारणं न सिध्यति। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति। प्रतिपदं ये आत्वभूतास्तेषामेव स्यात्। लक्षणेन ये आत्वभूतास्तेषां न स्यात्। अथ क्रियमाणेऽपि प्रकृतिग्रहणे कथमिदं विज्ञायते दाधाः प्रकृतय इति आहोस्विद्दाधां प्रकृतय इति। किञ्चातः। यदि विज्ञायते दाधाः प्रकृतय इति स एव दोषः। आत्वभूतानामेव स्यात्। अनात्वभूतानां न स्यात्। अथ विज्ञायते दाधां प्रकृतय इति। अनात्वभूतानामेव स्यादात्वभूतानां न स्यात्। एवं तर्हि नैवं विज्ञायते दाधाः प्रकृतय इति नापि दाधां प्रकृतय इति। कथं तर्हि। दाधा घुसंज्ञा भवन्ति प्रकृतयश्चैषामिति। तत्तर्हि प्रकृतिग्रहणं

---

मनुकरणानि व्यवस्थाप्याऽऽत्वे कृत्वे ददातिदधातियच्छत्यनुकरणानां चैकशेषे कृते द्वन्द्वनिर्देशात् सिद्धा दोदेङ्धेटामपि घुसंज्ञा कृतात्वानां चैषां स्थानिवद्भावेन सिद्धेति प्रश्नः। आत्वभूतानामिति। भवतेः प्राप्त्यर्थाद्दाधृषाद्वेति विभाषितणिचः कर्तरि कर्मणि वा क्तप्रत्ययः। तत्र आत्वं भूता आत्वेन वा भूता आकारान्ता इत्यर्थः। न लक्षणेन कृतात्वा इति विज्ञेयम्। अस्याप्ययमभिप्रायः। एजन्तानुकरणत्वे प्रमाणाभावात् प्रक्रियागौरवाच्च प्रयोगएव ये आकारान्ताः प्रयुज्यन्ते तदनुकरणानामयमेकशेषनिर्देशः। सामान्यानुकरणं वा दा इति धा इति पृथक् पदं निर्दिष्टमिति। प्रणिदयतइति। घुसंज्ञायां सत्यां नेर्गदेति णत्वं भवति। प्रणिदातेति द्यतेर्देङो वा रूपं प्रणिधातेति धेटः। लक्षणेति। लाक्षणिके हि लक्षणानुसन्धानद्वारेण प्रतिपत्तिर्बहिरङ्गा प्रतिपदोक्ते त्वन्तरङ्गा। कथमिति। दाधाप्रकृतय इति षष्ठीसमासः कर्मधारये वा उभयथाप्यव्याप्तिरिति प्रश्नः। दाधा प्रकृतय इति दीयतइत्यादावीत्वादेः। आत्वभूतानामिति। दाणदाञ्धा-

---

ञ्चात्वमिति भावः। अत्र च पक्षे लक्षणप्रतिपदोक्तपरिभाषानिरनुबन्धकपरिभाषादीनां न प्रवृत्तिः। सर्वेषां स्वरूपेणैवानुकृतत्वात्। दारयतिधारयत्योश्च नातिप्रसङ्गः। तयोरनुकरणे आत्वासंभवेनेह दृध इत्यनयोरनुपात्तत्वाद् दीङोपि नेह ग्रहणम्। एज्विषयाभावेन तदनुकरणे आत्वासम्भवादिति बोध्यम्। नत्वात्वभूतानामित्यस्य जातात्वानामित्यर्थे दाणादीनां संज्ञा न स्यान्निष्ठायाः पूर्वनिपातश्च स्यादत आह भवतेरिति। प्राप्तात्वानामित्यर्थः। प्रमाणाभावादिति। प्रयोगार्थस्याच्छास्त्रस्योपस्थितप्रयोगस्यानुकरणे संभवति अनुपस्थितेजन्तानुकरणे प्रमाणाभाव इत्यर्थः। गौरवाच्चेति। दीङस्तुजाशशास्त्रे कृते प्रणिदातेत्यत्र नेर्गदेति णत्वानापत्तेश्चेत्यपि बोध्यम्। एकशेषस्य सर्वदा धारूपाणामानन्त्येन ज्ञानासंभवाद् दुर्ज्ञेयत्वेप्याह सामान्येति। ननु समाहारद्वन्द्वे दाधमिति स्यादन्यत्र दाधाविति स्यादत आह पृथक्पदमिति। सो रुत्वे यत्वे लोपे च निर्विसर्गं साधु। विकृतानान्दोरद्घोरिति सूत्रे धेण्निवृत्यर्थं दाग्रहणपर्यालोचनया घुत्वं सुलभमिति मत्वा वार्त्तिके शिदर्थमित्युक्तम्। भारद्वाजीयैस्तु तावद्विवेकासमर्थान्प्रति विकृतार्थमित्यप्युक्तम्। प्र-

कर्तव्यम्। न कर्तव्यम्। इदं प्रकृतमर्थग्रहणमनुवर्तते। क्व प्रकृतम्। ईदूतौ च सप्तम्यर्थे इति। वक्ष्यामि दाधा घ्वदाप्। अर्थ इति। नैवं शक्यम्। ददातिना समानार्थान् रातिरासतिदासतिमंहतिप्रीणातिप्रभृतिनाहुः तेषामपि घुसंज्ञा प्राप्नोति। तस्मान्नैवं शक्यम्। न चेदेवं प्रकृतिग्रहणं कर्तव्यमेव। न कर्तव्यम्। शिदर्थेन तावन्नार्थः प्रकृतिग्रहणेन। अवश्यं तत्र मार्थं प्रकृतिग्रहणं कर्तव्यम्। प्रणिमयते प्रणयमयतेसेवमर्थम्। तत् पुरस्तादपकृष्यते घुप्रकृतौ माप्रकृतौ चेति। यदि प्रकृतिग्रहणं क्रियते प्रनिभिनोति प्रनिमीनाति। अत्रापि प्राप्नोति। अथाक्रियमाणेऽपि प्रकृतिग्रहणे इह कस्मान्न भवति। प्रनिमाता प्रनिमातुं प्रनिमातव्यमिति। आकारान्तस्य ङितो ग्रहणं विज्ञायते। यथैव तर्हि अक्रियमाणे प्रकृतिग्रहणे आकारान्तस्य ङितो ग्रहणं विज्ञायते। एवं क्रियमाणेऽपि प्रकृतिग्रहणे आकारान्तस्य ङितो ग्रहणं विज्ञास्यते। विकृतार्थेन चापि नार्थः। दोष एवैतस्याः परिभाषायाः लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति गामादाग्रहणेष्वविशेष इति। समानशब्दप्रतिषेधः * समानशब्दानां प्रतिषेधो वक्तव्यः। प्रनिदारयति

ज्ञाम्। प्रकृतयश्चैषामिति। प्रत्यासत्त्यैषामिति लभ्यते। अर्थ इतीति। एतद् द्वितीयं वाक्यम्। सन्निधानाच्च दाधामर्थे यो वर्तते स घुसंज्ञ इति प्रकृतीनामपि सिध्यति। तत्पुरस्तादिति। नेर्गदेति सूत्रे घुमाशब्दयोर्मध्ये प्रकृतिग्रहणं कर्तव्यं तदुभाभ्यामभिसम्भन्स्यते। प्रनिमिनोतीति। मीनातिमिनोतिदीङां ल्यपि चेत्यात्त्वविधानाद्भवति माप्रकृतित्वमनयोः। गामादाग्रहणेष्विति। अस्य चार्थस्य दैपः पित्त्वमदाविति पित्प्रतिषेधे सामान्यग्रहणार्थं लिङ्गम्। अन्यथाऽस्य लाक्षणिकत्वादत्र ग्रहणं न भविष्यतीति किं प्रतिषेधार्थेन पित्त्वेन। सामान्यापेक्षया च निरनुबन्धकग्रहणइति लक्षणप्रतिपदोक्तयोरिति च परिभाषाद्वयानुपस्थानमिह ज्ञापयतीति धेटोऽपि सिध्यति। दोदाद्घोरित्यत्र दाद इत्येव धेटो निवृत्त्यर्थं सद्धटो घुसंज्ञां ज्ञापयति न हि दधातिनिवृत्त्यर्थं द इत्येतत्। तस्य दधातेर्हिरिति ह्यादेशविधानाद् दद्भावाऽप्रसङ्गात्। समानशब्दानामि-

णिदातित्यादौ लाक्षणिकत्वं स्फुटयति ध्यतेर्देङोवेति। प्रकृतय इत्यस्य सापेक्षत्वादाह ईस्वादेरिति। दाणिति। आत्वभूता इत्यनेन उपदेशे अकारान्ताएवोच्यन्ते तद्विलक्षणास्त्वनात्वभूता इति भावः। प्रत्यासत्त्येति। एवञ्चैषामिति नापूर्वमिति भावः। एतत्सामर्थ्यादेव लाक्षणिकानामप्यनुकरणमनुमास्यत इति तात्पर्यम्। नन्वेकवाक्यत्वं दारयत्याद्येकदेशानर्थकव्यावृत्त्यर्थमेव तस्याद् न त्वन्यरूपप्रापकमत आह एतद्द्वितीयमिति। अर्थवत्परिभाषयैवानर्थकव्यावृत्तौ सिद्धायामर्थग्रहणानुवृत्तिर्वाक्यभेदार्थैवेति भावः। भाष्ये (प्रीणातीति)। यथा पितृभ्यः प्रीणातीत्यादौ। ननु तत्रोभयान्वयाय प्रकृतिग्रहणद्वये कर्त्तव्येऽत्रैव करणं युक्तमत आह तदुभाभ्यामिति। घुप्रकृतिमाशब्दानां द्वन्द्व सन्निधानाविशेषादुभयप्रकृतिर्गृह्यते इति। प्रणिदयते प्रणिमयत इति उभयत्रापि णत्वं सिध्यतीत्यर्थः। आत्वविधानादिति। एज्विषये इकारान्तानामात्वविधानादिति भावः। भाष्ये (एवं क्रियमाणेपीति)। णत्वविधौ माङ्स्यतीति निर्देष्टव्यमिति भावः। यद्यपि लक्षणप्रतिपदोक्तपरिभाषया मीनातिमिनोत्यादेशानां ग्रहणाभावो वक्तुं शक्यस्तथापि मेङो ग्रहणवारणाय गामादाग्रहणेष्वविशेष इत्युक्तेर्माग्रहणे तदप्रवृत्तिर्मानेर्मे इतयस्य योगे णत्ववारणाय च ङित्पाठ आवश्यक इति तात्पर्यम्। सामान्येति। एतद्सूत्रगृहीतदाधापेक्षया परिभाषागृहीतगाद्यपेक्षया परिभाषाद्वयापेक्षया चेत्यर्थः। निरनुबन्धकेति। स च दो ऽवखण्डन इत्ययम्। धेटोपीति। अन्यथा

प्रनिधारयति । दाधा घुसंज्ञा भवन्तीति घुसंज्ञा प्राप्नोति । समानशब्दाप्रतिषेधो ऽर्थवद्ग्रहणात् * । समानशब्दानामप्रतिषेधः । अनर्थकः प्रतिषेधो ऽप्रतिषेधः । घुसंज्ञा कस्मान्न भवति । अर्थवद्ग्रहणात् । अर्थवतोर्दाधोर्ग्रहणात् । न चैतावर्थवन्तौ । अनुपसर्गाद्वा * । अथवा यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति । न चैतौ दाधौ प्रति क्रियायोगः । यद्येवम् । इहापि तर्हि न प्राप्नोति। प्रणिदापयति प्रणिधापयतीति । अत्रापि नैतौ दाधावर्थवन्तौ नाप्येतौ दाधौ प्रति क्रियायोगः । न वा ऽर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते यथा ऽन्यत्र * । न वा एष दोषः । किं कारणम् । अर्थवत आगमस्तद्गुणीभूतो ऽर्थवद्ग्रहणेन गृह्यते । यथा ऽन्यत्र । तद्यथा । अन्यत्रापि अर्थवत आगमो ऽर्थवद्ग्रहणेन गृह्यते । क्वाऽन्यत्र । लविता चिकीर्षितेति । युक्तं पुनर्यन्नित्येषु

---

ति । समानश्रुतीनामित्यर्थः । प्रनिदारयतिधारयतीति । इङ्धृङोर्णिचि वृद्ध्यावाकारे कृते दाधाशब्दौ संपद्येते चार्थवन्तौ पश्चात्तु रपरत्वं क्रियमाणमागमभूतत्वादन्यत्वं न करोतीति प्राप्तिः । अर्थवद्ग्रहणादिति । अर्थवद्ग्रहणे नानर्थकस्येत्यस्य स्वं रूपमित्यनेन ज्ञापितत्वात् । उरण् रपर इति चाण्विधीयमान एव रपरो भवतीति वृद्धिः क्रियमाणा रपरा भवतीति दारधारोरेवार्थवत्त्वं न तु तदवयवयोरिति नास्ति घुसंज्ञा । अनुपसर्गाद्वेति । अभ्युपगम्य घुसंज्ञां दोषं परिहरति । घुसंज्ञापेक्षया यस्योपसर्गत्वं तस्मात् परस्य नेर्घौ परतो णत्वं विधीयते । अत्र दाधापेक्षया नास्ति प्रशब्दस्योपसर्गत्वं किं तु दार्धारोरपेक्षयेत्यदोषः । इहापि तर्हीति । अत्रापि पुकि कृते पकारान्तो ऽर्थवान् न केवलो दाशब्दः पुगन्तमेव च प्रत्युपसर्गत्वं न दाशब्दं प्रतीति प्रश्नः । न वा ऽर्थवत इति । लब्धात्मकस्य भावस्य निमित्तवशादुपचयोपचयौ व्यपदेशहानिं न कुरुतः । यथा देवदत्तस्याङ्गाधिक्याङ्गच्छेदौ । इहाप्यन्तरङ्गत्वात् कृतायां दाधोर्घुसंज्ञायां पश्चादुत्पन्नः पुगागमो घुव्यपदेशं न निवर्तयति नाप्यर्थवत्त्वमित्यदोषः । अनर्थकस्याप्यागमो व्यपदेशहानिं न करोति यथा सत्यपि रेफे अकाराकारयोर्गुणवृद्धिव्यपदेशाहानिः । इह त्वर्थ-

---

ऽस्य लाक्षणिकत्वाद् ग्रहणाप्रसक्तिः । यत्तू सानुबन्धकत्वादिति तन्न । निरनुबन्धकस्य धाइत्यस्याप्रसिद्धत्वात् । ये तु दाविषयमेव तज्ज्ञापकं मन्यन्ते तन्मते धेङ्ग्रो ज्ञापकान्तरमाह दोवदिति । समानत्वं नार्थतइत्याह श्रुतीनामिति । तौचेति । एतेनानर्थकत्वात्तयोर्घुत्वं नेत्यपास्तम् । पश्चादिति । प्रणिदापयतीत्यत्र पुगिर्थति भावः । आगमभूतत्वात् । आगमस्वरूपत्वात् । अभ्युपगम्येति । अदाविति प्रतिषेधार्थेन देपः पित्त्वेन दोदादित्यनेन च परिभाषामात्रानुपस्थानज्ञापनसंभवादिति भावः। किंत्विति। तयोरेव क्रियावाचित्वादिति भावः । भाष्ये ( तद्गुणीभूतइति ) यमुद्दिश्यागमो विहितः स तद्गुणीभूतः शास्त्रेण तदवयवत्वेन बोधितो ऽतस्तद्ग्रहणेन तद्ग्राहकेण तद्बोधकेन गृह्यते बोध्यते आगमविशिष्ट इति परिभाषार्थः । तदाह । लब्धात्मकस्येति । तेन दार्धारोव्यावृत्तिः सूचिता । अपचयइति दृष्टान्तार्थम् । अन्तरङ्गत्वादिति । इदं यथोद्देशे । कार्यकाले तु णत्वादेशा संज्ञा ऽसिद्धा स्यादिति बोध्यम् । वस्तुतः कार्यकालपक्षे पूर्वं पुकः प्रवृत्तावपि दापो दाशब्देन ग्रहणाद् घुत्वं सुलभमेवेति चिन्त्यम् । घुव्यपदेशं न निवर्त्तयति नाप्यर्थवत्त्वमितीति । स्वविशिष्टे तयोरानयनादिति भावः । अकाराकारयोरिति । रेफविशिष्टयोरित्यर्थः । इह त्विति । घुसंज्ञासूत्र इत्यर्थः । अत्रेदं बोध्यम् । अङ्गावयवाकारस्य पुग्विधायकानेकोगिति सूत्रारम्भसामर्थ्येन क्वचिद्वर्णग्रहणे नास्याः प्रवृत्तिः । तेन ह्रिदीये इत्यादौ यणादिकं न । अयमेवार्थो भाष्ये ऽर्थवद्ग्रहणेन ध्वन्यत इत्याहुः ।

नाम शब्देष्वागमशासनं स्यात् । न । नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । आगमश्च नामाऽपूर्वः शब्दोपजनः । अथ युक्तं यन्नित्येषु शब्देष्वादेशाः स्युः । बाढं युक्तम् । शब्दान्तरैरिह भवितव्यम् । तत्र शब्दान्तराच्छब्दान्तरस्य प्रतिपत्तिर्युक्ता । आदेशास्तर्हीमे भविष्यन्ति । अनागमकानां सागमकाः । तत् कथम् । सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।

---

वतो ग्रहणादर्थवत इत्युक्तम् । यदा च प्रकृत्यर्थः प्रेणा विशेष्यते तदा ऽयं परिहारः । ण्यर्थविशेषणत्वे तु प्रस्य दाधौ प्रत्यनुपसर्गत्वाण्णत्वं न भवत्येव । तद्गुणीभूत इति । प्रयोगसंपादनउपकारक इत्यर्थः । युक्तं पुनरिति । ततश्च नित्येष्वागमविरोधात् तद्द्वारेणाऽऽदेशविधानाद्दाप्शब्द एवार्थवान्न दाशब्द इति तदवस्थो दोष इति भावः । अथ युक्तमिति । तत्रापि स्थानिनमपनीयाऽऽदेशः क्रियत इत्यनित्यत्वप्रसङ्गः । यश्चोभयोर्दोषो न तमेकश्चोद्यः । बाढमिति । प्रसङ्गवाची स्थानशब्दो न निवृत्तिवाची ततश्च सन्त एव प्रयोगे नित्याः शब्दा बुद्ध्युन्मज्जननिमज्जनद्वारेण प्रतिपाद्यन्ते । आगमस्त्ववस्थितस्याऽपूर्वःक्रियमाणो नित्यत्वं विरुणद्धि । आदेशास्तर्हीमे इति । इड् भवतीत्येतद्द्वारेण तव्यस्येतव्यादेशः क्रियते । सर्वइति । आगमा अपीत्यर्थः । सर्वपदादेशा इति ।

---

प्रयोगेति । इदं चिन्त्यम् । आगमवत्प्रत्ययादेरपि प्रयोगसंपादने उपकारकत्वेन तेषामपि प्रकृतिग्रहणेन ग्रहणापत्तिः । मूलयुक्तेस्तुल्यत्वात् । अस्य मूलयुक्तित्वाभावे तु तत्कथनवैयर्थ्यापत्तेस्तस्मान्मदुक्तव्याख्यैव ज्यायसी । भाष्ये (यन्नित्येष्विति) । वियदादिवद् वर्णप्रकृतिप्रत्ययपदवाक्यादिरूपाः सर्गाद्यकालिकोत्पत्तिमन्तः प्रलयकालिकनाशवन्तश्चेति पक्षे इति भावः । दाप्शब्द एवार्थवान्न दाशब्दइति । स तु न दाशब्द इत्यर्थः । एवञ्च घुत्वाभावे तदवस्थो दोष इति भावः । श्रौतस्थानषष्ठ्यभावात्स्थानिवत्त्वस्य नैतद्विषये प्रवृत्तिरिति तात्पर्यम् । कूटस्थत्वं व्याचष्टे । भाष्ये ( अविचालिभिरिति ) । तद्विवरणमनपायेत्यादि । द्वन्द्वान्मत्वर्थीये पश्चान्नञ्समासः । नन्वेतावतापि स्वपक्षस्थापनाद्दैतण्डिकत्वमस्य स्यादत आह यश्चेति । प्रसङ्गवाचीति । षष्ठी स्थान इत्यत्रत्यः प्रसङ्गश्च बुद्धेरिति भावः । सन्तएवप्रयोगे नित्याइति । आदेशरूपा इत्यर्थः । बुद्ध्यान्मज्जननिमज्जने यथाक्रममादेशस्य स्थानिनश्च । भाष्ये ( शब्दान्तरइति ) । तद्बुद्धौ प्राप्तायामित्यर्थः । ( आदेशास्तर्हीमेइति ) इमे आगमत्वेन व्यवह्रियमाणा अपि तथा विधीयमाना अपि आदेशास्तत्सदृशा भविष्यन्तीत्यर्थः । आद्यन्तावित्याद्येकवाक्यतया आर्धधातुकस्याद्यावयव इडित्यर्थे वृत्तेर्नित्यत्वानुपपत्तिमूलकवाक्यान्तरकल्पनेन केवलतव्यबुद्धौ प्रसक्तायांमकारादिः साधुरिति बोधः । तेनात्रापि बुद्धिविपरिणाममात्रस्यैव सत्त्वेन न नित्यत्वहानिरिति भावः । यदागमा इति न्यायस्य चात्रापि पक्षे सत्त्वात्पणिशापयतीत्यादौ न दोषः।येत्वत्र पक्षेआगमस्य नास्त्येवेतिवदन्ति ते मान्याः । अनागमकानामित्यादिव्यवहारासङ्गतेः । निरवयवकबुद्धिनिमज्जनसावयवकबुद्ध्युन्मज्जनेनागमत्वव्यवहारस्यापि निर्बाधत्वात् । तत्कथमिति प्रश्ने तुल्यन्यायत्वादाह सर्वे सर्वपदेति । यथा एरुरित्यादौ अवयवयोः श्रौतस्थान्यादेशभावेपि नित्यत्वानुपपत्तिमूलकः समुदाययोरपि स कल्प्यते एवम् । अवयवत्वेन विधानेपि अर्थापत्तिमूलकवाक्यान्तरकल्पनेन निरवयवसावयवबुद्ध्योर्विपरिणाममात्रेणादेशत्वव्यवहारो गौणो नित्यत्वरक्षणाय कल्प्यत इति । यथा च तत्र कल्प्यमानस्थान्यादेशभावेन श्रौतावयवस्थान्यादेशभावस्य न त्यागो ऽत्र एवाचः परस्मिन्नित्यादीनामुक्तिसम्भवः । तथात्रापि श्रौतावयवावयविभावस्य न त्याग इति यदागमा इत्येतत्प्रवृत्तिरव्याहतैवेति । ईदृशस्थान्यादेशभावे स्थानिवत्त्वस्य न प्रवृत्तिः । स्थानिवदिति श्रुतेः श्रौतस्थान्यादेशभावानुपपत्तिमूलकतया कल्प्यमानस्थान्यादेशभावके एरुरित्यादावेव तत्प्रवृत्तेः। न त्वत्र केवलानुमानिके । अत एव लावस्थायामाडिति पक्षेडाविविधानस्यापिबदित्यादौ न पिबाद्यादेशा इति दिक् । तदेतदाह इड् भवतीत्येतद्द्वारेणेति । आगमा अपीत्यर्थ इत्यस्य तथेत्यादिः । अत एवाग्रे वक्ष्यति बुद्धिविपरिणाममात्रं स्थान्यादेशागमागमिभावद्वारेण क्रियते इति । एतेनागमा अपीत्येव सर्वपदव्याख्यायामेकदेशविकारे हीति वाक्यशेषविरोधः ।

एकदेशविकारे हि नित्यत्वं नोपपद्यते। दीङः प्रतिषेधः स्थाध्वोरित्त्वे *। दीङः प्रतिषेधः स्थाध्वोरित्त्वे वक्तव्यः। उपादास्ताऽस्य स्वरः शिक्षकस्येति। मीनातिमिनोतीत्यात्त्वे कृते स्थाघ्वोरिच्चेतीत्त्वं प्राप्नोति। कुतः पुनरयं दोषो जायते। किं प्रकृतिग्रहणादाहोस्विद्रूपग्रहणात्। रूपग्रहणादित्याह। इह खलु प्रकृतिग्रहणाद्दोषो जायते उपादिदीपते। सनि मीमाघुरभलभेति। नैष दोषः। दाप्रकृतिरित्युच्यते। न चेयं दाप्रकृतिः। आकारान्तानामेजन्ताः प्रकृतयः। एजन्तानामपीकारान्ताः। न च प्रकृतेः प्रकृतिः प्रकृतिग्रहणेन गृह्यते। स तर्हि प्रतिषेधो वक्तव्यः। न वक्तव्यः। घुसंज्ञा कस्मान्न भवति। सन्निपातलक्षणो विधिरनि-

---

पदशब्देन न सुप्तिङन्तं गृह्यते ऽपि तु कार्ये प्रतिपद्यमानं प्रकृतिप्रत्ययादि तत् सर्वं पदम्। एकदेशविकारे हीति। यद्यपि सर्वविकारे ऽप्यनित्यत्वं यथा पिठरस्थस्य पयसः पाकादिषु। तथापि विकाराभावप्रतिपादनपरमेतत्। बुद्धिविपरिणाममात्रं स्थान्यादेशागमागमिभावद्वारेण क्रियतइत्यर्थः। यद्येवं दाशब्दस्य दाप्शब्द आदेशः क्रियतइति दाशब्दस्यानर्थक्यप्रसङ्गः। नैष दोषः। नित्यतासमर्थनायाऽऽदेशपक्ष आश्रितः। प्रक्रियायां तु कल्पितायामागमागमिभाव एव। अन्यथागमादेशयोर्भेदेन व्यवहारो न स्यात्। दीङ इति। उपादीस्तइति स्थिते मीनातिमिनोतीत्यात्त्वे कृते दारूपत्वादर्थवत्त्वाच्च घुसंज्ञाप्रसङ्गः। इह खल्विति। एचो विषये आत्त्वविधानाद्दीशब्द एव दाप्रकृतिरिति दोषः। न चेयमिति। एच एव स्थाने आत्त्वविधानादित्यर्थः। संन्निपातेति। अकित्त्वसन्निपातेनात्त्वं क्रियते यदि चात्र घुसंज्ञा स्यात् स्थाघ्वोरिच्चेति कित्त्वं स्यादित्यकित्त्वस्य व्याघातः स्यादिति घुसंज्ञां प्रति नैवाकार आत्मानं दर्शयतीति घुसंज्ञा न प्रवर्तते।

---

आदेशस्योपपादिकाया विकारव्यापकीभूताभावप्रतियोगिस्वरूपनित्यत्वानुपपत्तेः सकलपद्यावृत्तित्वादित्यपास्तम्। पद्यमानमिति। कार्यवत्तया प्रतीयमानं प्रकृत्यादीत्यर्थः। सर्वपदेत्यत्र घञर्थे कः। सर्वशब्दश्चावयवकार्त्स्न्यवाची। यद्येवमिति। एवं चैतदवयवस्यानर्थक्यान्न संज्ञा पुकः पूर्वं दा इत्यस्य तु न संज्ञा कार्यकालपक्षे संज्ञाया णत्वदेशस्थत्वेन पुक्वृष्ट्यासिद्धत्वात् पूर्वमप्रवृत्तेः। न च पुग्विशिष्टस्य दाग्रहणेन ग्रहणम्। यत्रागमा इत्यर्थस्याभावात्। पूर्वोक्तरीत्या स्थानिवत्त्वाप्रवृत्तेश्चेति भावः। आदेशपक्षइति। बुद्धिविपरिणामपक्ष इत्यर्थः। कल्पितप्रक्रियादशायान्तु न कल्पितागमत्वादिव्यवहारस्याग इति यत्रागमा इत्यादेः सत्त्वेनात्रापि पक्षे न दोष इति भावः। सन्निपातपरिभाषाया दीङ आत्वे दारूपाश्रयघुत्वं न। प्रकृतिग्रहणस्य प्रत्याख्यातत्वान्न तन्निबन्धनमपि इति गूढाशयः पृच्छति। भाष्ये (कुतःपुनरिति)। आशयमविदुष उत्तरम्। (रूपग्रहणादिति) इह खलु प्रकृतिग्रहणादिति। घुसंज्ञासूत्रे प्रकृतिग्रहणेऽयं दोषो जायतेऽतस्तत्र प्रकृतिग्रहणं दुष्टमिति भावः। अथैकदेशी एनं दोषं परिहर्तुमाह। (नचेयमिति)। तद्व्याचष्टे। (एचएवेति। मीनातीत्यस्योपदेशकाले प्रवृत्तिमसौ न जानाति। एवञ्च साक्षाद्दाप्रकृतिसंभवे व्यवहितप्रकृतेर्न ग्रहणमिति भावः। अतिफल्गुत्वात्वेतन्मते दूषणानभिनिवेशो भाष्यकृत इति द्रष्टव्यम्। यत्त्विदं वार्त्तिकमतम्। न चैतत्पक्षेवदानमित्याद्यावन्नत्वनिबन्धनयुजाद्यासिद्धिः। तत्राकारान्तलक्षणप्रत्ययविधिरिति वचनेनैव तत्सिद्धेः। भाष्ये त्वेतद्वचनप्रत्याख्यानायैज्विषये आत्वं सिद्धान्तितमित्यन्याहुरिति। तन्न। तादृशवार्त्तिकस्यानुपलम्भात्. विपरीतं मीनातीति सूत्रे उपदेशवचनं कर्तव्यं णचङ्युच्छिद्वर्थमिति वार्त्तिकं तत्रोपदेश एच इति विरुद्धमित्याशङ्क्य एज्विषयइति भाष्यकृता व्याख्यातम्। न तु भवदुक्तवार्त्तिकं तत्प्रत्याख्यानं वा भाष्ये दृश्यते। एवञ्च प्रकृतिग्रहणं घुसंज्ञायां वार्त्तिककारोक्तं दुष्टमेव न तु तदनुरोधेन गुरुभूतवचनान्तरकल्पनाभिनिवेशः। नह्येकदेश्युक्तमतपरिष्कारे गुरुप्रकारेण क्रियमाणेन किंचित्फलमित्याहुः। अकित्त्वेति। एचो विषयस्यान्यथाऽसंभवादिति भावः। कित्त्वमिति। तदभावसंनि-

मित्तं तद्विघातस्येत्येवं न भविष्यति । दाप्प्रतिषेधे न दैप्यनेजन्तत्वात् * । दाप्प्रतिषेधे दैपि प्रतिषेधो न प्राप्नोति । अवदातं मुखम् । ननु चाऽऽत्त्वे कृते भविष्यति । तद्ध्यात्त्वं न प्राप्नोति । किं कारणम् । अनेजन्तत्वात् । सिद्धमनुबन्धस्याऽनेकान्तत्वात् * । सिद्धमेतत् । कथम् । अनुबन्धस्याऽनेकान्तत्वात् । अनेकान्ता अनुबन्धाः । पित्प्रतिषेधाद्वा * । अथ वा दाधा घ्वपिदिति वक्ष्यामि । तच्चा ऽवश्यं वक्तव्यम् । अदाविति ह्युच्यमाने इहाऽपि प्रसज्येत । प्रणिदापयतीति । शक्यं तावदनेनादाविति ब्रुवता वान्तस्य प्रतिषेधो विज्ञातुम् । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं दाप्प्रतिषेधे न दैपीति । परिहृतमेतत् । सिद्धमनुबन्धस्यानेकान्तत्वादिति । अथैकान्तेषु दोष एव । एकान्तेष्वपि न दोषः । आत्त्वे कृते भविष्यति । ननु चोक्तं तद्ध्यात्त्वं न प्राप्नोति किं कारणमनेजन्तत्वादिति । पकारलोपे कृते भविष्यति । नह्ययं तदा दाप् भवति । भूतपूर्वगत्या भविष्यति । एतच्चात्र युक्तम् । यत्सर्वेष्वेव सानुबन्धकग्रहणेषु भूतपूर्वगतिर्विज्ञायते । अनैमित्तिको ह्यनुबन्धलोपस्तावत्येव भवति । अथ वा आचार्यप्रवृत्तिर्ज्ञाप-

---

अत्र केचिदाहुः । दीङस्तृजादावात्त्वे घुसंज्ञा भवत्येवेति प्रणिदातेति णत्वं भवति । अत एव वार्त्तिककारेण स्थाघ्वोरित्त्वइति विशेषो निर्दिष्टः । अन्ये त्वाहुः । निर्देश एवैजन्तानामनुकरणानामात्त्वे कृते दाण्दाञ्धाञां चैकशेषे द्वन्द्वे च दाधा इति निर्देशाद्दीङो नास्ति प्राप्तिः । नहि तदनुकरणस्यात्त्वमस्ति अगुणविषयत्वात् । दाप्प्रतिषेधइति । दाप्लवने इत्यस्यैव निषेधः स्यादित्यर्थः । अवदातमिति । तत्त्वमत्र प्राप्नोति । शक्यं तावदिति । दाप्दैपौ धातुषु वान्तौ पठितव्यौ । तावत्येवेति । इत्संज्ञायां सत्यामेव प्रयोगे दाशब्द एवायं पित्कार्यं तु लभते इत्यर्थः । अथवेति । अनुबन्धानामेकान्तत्वपक्षे उपदे-

---

योगविशिष्टत्वादित्वमपि नेति कार्याभावाद् घुत्वस्याप्रवृत्तिरिति भावः । प्रणिदातेति । ननु प्रणिदीयते इत्यत्र नित्यणत्वप्रसङ्गो णत्वविधौ प्रकृतिग्रहणादिति चेन्न । इष्टापत्तेः । अन्ये त्वाहुरिति । अत्रारुचिबीजन्तु वार्त्तिकभाष्यविरोधाद् न तथा सूत्रतात्पर्यमिति । अगुणेति । गुणनिमित्तप्रत्ययप्रसङ्गाभावादित्यर्थः । इत्यस्यैवेति । न तु दैप इत्यर्थः । तस्य पकारे श्रूयमाणे आत्वायोगादिति भावः । ननु पकारे लुप्ते कथमात्वमुपदेशकाले एजन्तत्वाभावाद् नानुबन्धकृतमित्यस्याश्रयणे तु प्रकृतेपि न दोष इति चेन्न । उपदेश इति षष्ठ्यर्थे सप्तम्याः सत्त्वेनोपदिश्यमानस्यैजन्तस्येत्यर्थेन लुप्ते आत्वप्रवृत्तेः । सति तु तस्मिन्नात्वमेजन्तत्वाभावाद् । यस्मात्परो नास्ति तस्यैवान्तशब्दप्रवृत्तेरिति दिक् । तत्त्वमिति । अच उपसर्गात्त इत्यनेनेत्यर्थः । भाष्ये (अनेकान्ताइति) । एवञ्च पकारसत्त्वेपि एजन्तत्वानपायादात्वप्रवृत्तिरिति भावः । तच्चावश्यमित्यादि विघटयितुं भाष्ये ( अशक्यन्तावदिति ) । लक्षणप्रतिपदोक्तपरिभाषया तु पुगन्ते ऽदाबिति निषेधो न शक्यो वारयितुं गामादाग्रहणे ऽविशेषाद् दाबित्यपि पकारोपलक्षितदाग्रहणमेवेति भावः । वान्तपक्षेपि चर्त्वेन पस्य सिद्धत्वान्नास्ति सूत्रभेदः । सूत्रं तर्हीइति । अपिदिति न्यास इत्यर्थः । शङ्कते । नह्ययमिति । उत्तरयति । भूतपूर्वेति । दात्वम् । श्रुत्या पकारवैशिष्ट्यन्तु अनयेति भावः । इत्संज्ञायामिति । उपदेशोत्तरकालं जातायामेवेत्यर्थः । मेङइति । अन्तरङ्गत्वाद्व्यतीहारनित्यसम्बद्ध एव गृह्यते, न तु पदान्तरसान्निधानेन बहिरङ्गव्यतीहारवृत्तिरिति भावः । केचित्तु माङोऽनभिधानात्क्त्वाप्रत्ययानुत्पत्तिरिति न तस्य ग्रहणमित्याहुः । उदीचां मेङ इति उदीचामङ्ग्रहणस्याप्युपलक्षणमिदम् । न चानुबन्धसत्त्वे मे इत्यस्य धातुत्वाभावात्कथमात्वमनुबन्धलोपे एव धातुत्वमित्यर्थस्य ' न धा-

यति नानुबन्धकृतमनेजन्तत्वमिति ।यदयमुदीचां माङो व्यतीहारइति मेङः सानुबन्धकस्याऽऽत्वभूतस्य ग्रहणं करोति । अथ वा दावेवायं न दैबस्ति । कथमवदायतीति । श्यन्विकरणो भविष्यति ॥

**आद्यन्तवदेकस्मिन्** ॥ २१ ॥ किमर्थमिदमुच्यते । सत्यप्यस्मिन्नाद्यन्तवद्भावादेकस्मिन्नाद्यन्तवद्वचनम् * । सत्यन्यस्मिन् यस्मात् पूर्वं नास्ति परमस्ति स

---

शप्जन्तानामात्वमुच्यमानं दैपो न प्राप्नोतीति ज्ञापकोपन्यासः । माङ इति । मेङो ग्रहणं न माङ । मेङो व्यतिहारेण नित्ययोगात् । माङस्तु विवक्षावशाद् व्यतिमिमीतइति कादाचित्कत्वाद् व्यतिहारयोगस्य । प्रणिदानं व्यतिहार इत्येको ऽर्थः । उदीचां मेङ इति तु न कृतम् । एवं हि नाऽनुबन्धकृतमनेजन्तत्वमिति न ज्ञापितं स्यात् । अथ वेति । दिवादिषु दाप्शोधने इति पठिष्यतइत्यर्थः ॥ २७ ॥

आद्यन्तवदेकस्मिन् ॥ एकशब्दो ऽसहायवाची न संख्यावाची । बहुष्वपि व्यवस्थिततस्यैकत्वसंख्या ऽस्तीति किमेकस्मिन्नित्यनेन कृतं स्यात् । एकस्मिन्नित्युपमेये सप्तमीनिर्देशादाद्यन्तवदित्युपमानात् सप्तम्यन्ताद्वतिर्विज्ञायते यथा मथुरावत् पाटलिपुत्रे प्राकार इति । द्वयोर्ह्युपमानोपमेययोराधाराऽऽधेयसम्बन्धप्रतिपादनाय वाच्यं प्रयुज्यते । यदि च तयोर्भिन्नविभक्तिकत्वं स्याद् उपमानोपमेयभाव एव न गम्यते । सर्वातिदेशानां कार्याऽतिदेशस्य प्राधान्यात्तस्यैवेहाऽऽश्रयणम् । किमर्थमिति । व्यपदेशिवद्भावेनैव सिद्धत्वान्न कर्तव्यमित्यर्थः । इतरो मुख्ये सम्भवति गौणो न स्यादित्याह सत्यन्यस्मिन्निति । आद्यन्तौ विद्येते यस्मिन् शास्त्रे तदाद्यन्तवत् तस्य भावात् प्रवर्तनादित्यर्थः । क्वचिदाद्यन्तभावादिति पाठः । तत्र व्यपदेशिवद्वचनमिति । सर्वकार्यसिद्ध्यर्थं व्यापकं कर्तव्यमित्यर्थः । तत्र निमित्तसद्भावान्मुख्यो व्यपदेशो यस्याऽस्ति स व्यपदेशी यस्तु

---

तुलोप' सूत्रे भाष्यकैयटयोः स्पष्टत्वादिति वाच्यम् । आत्वविधायके धातोरित्यस्यासम्बन्धाद् गवादिशब्दानामुपदेशाभावान्नात्वम् । हरेप्रभृतीनामुपदेशेपि तेषामशित्परत्वाभावाद् नात्वम् । प्रसज्यप्रतिषेधेपि प्रत्यासत्त्या शित्प्रत्ययपरत्वयोग्यानामेजन्तानामेव ग्रहणान्न दोष इति दिक् । दिवादिष्विति । ननु ताच्छीलिके चानशि दायमान इत्यत्र स्वरे भेदः श्यनि धातोरुदात्तत्वं शपि चानशोन्तोदात्तत्वमिति चेन्न । सति शिष्टादपि विकरणस्वरात् सार्वधातुकस्वरस्य बलीयस्त्वोक्तेरुभयथाऽप्यन्तोदात्तत्वानपायादिति दिक् ॥ २० ॥

आद्यन्तव ॥ बहुष्वपीति । यद्यप्युत्तरसङ्ख्या पूर्वसङ्ख्याबाधिका, तथापीतरेषां बुद्धिविषयत्वाभावे बहुमध्यस्थेप्येकत्वाङ्गीकारान्न दोषः । यथा शते पञ्चाशदिति भावः । किमेकस्मिन्नित्यनेनेति । तद्धि सभासंनयने भव इत्यर्थे भाकारस्यादित्वे तस्य वृद्धत्वेन प्राप्तच्छाभावार्थं दरिद्रातेरिवर्णान्तलक्षणाचो ऽभावार्थञ्च । अत्र च स्वरे विशेषः । उपमेये सप्तमीसत्त्वे सप्तम्यन्ताद्वतौ मानमाह द्वयोरिति । प्राकारपदवाच्येनेतिशेषः । आधाराधेयसम्बन्धेति । आधारत्वाधेयत्वरूपसम्बन्धप्रतिपादनायेत्यर्थः । न गम्येतेति । उपमानप्रकारकोपमेयविशेष्यकबोधे समानविभक्तिकत्वस्य तन्त्रत्वादिति भावः । सर्वातिदेशानामिति । रूपनिमित्ततादात्म्यशास्त्रव्यपदेशकार्यातिदेशानां मध्ये इत्यर्थः । प्राधान्यादिति । सर्वेषां कार्यार्थत्वादिति भावः । मुख्ये व्यपदेशिनि। गौणे व्यपदेशिसदृशे। नन्वाद्यन्तवद्भावादिति न वतिः सत्यन्यस्मिन् मुख्याद्यन्तत्वात् । नापि मतुप् । आद्यन्तशब्दवच्छास्त्रसद्भावस्य परपूर्वसत्त्वानपेक्षत्वेन सत्यन्यस्मिन्नित्यस्यायोगादत आह आद्यन्ताविति । आद्यन्तशब्दावित्यर्थः । एवञ्चाद्यन्तवद्भावादित्यस्याद्यन्तपदवच्छास्त्रप्रवृत्तेरित्यर्थः । क्वचिदिति । आद्यन्तव्यवहारादिति तदर्थः । सर्वकार्येति । आद्यन्तापदिष्टाद्यन्तानपदिष्टसर्वकार्यसिद्ध्यर्थं गुर्वपि व्यप-

आदिरित्युच्यते। सत्यन्यास्मिन् यस्मात् परं नास्ति पूर्वमस्ति सोऽन्त इत्युच्यते। सत्यन्यस्मिन्नाद्यन्तवद्भावादेतस्मात् कारणाद् एकस्मिन्नाद्यन्तापदिष्टानि कार्याणि न सिध्यन्ति इष्यन्ते च स्युरिति तान्यन्तरेण यत्नं न सिध्यन्ति इत्येकस्मिन्नाद्यन्तवद्वचनम्। एवमर्थमिदमुच्यते। अस्ति प्रयोजनमेतत्। किं तर्हीति। तत्र व्यपदेशिवद्वचनम् *। तत्र व्यपदेशिवद्भावो वक्तव्यः। व्यपदेशिवदेकस्मिन् कार्यं भवतीति वक्तव्यम्। किं प्रयोजनम्। एकाचो द्वे प्रथमार्थम् *। वक्ष्यत्येकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्देश इति। तस्मिन् क्रियमाणे इहैव स्यात् पपाच पपाठ। इयाय आर इत्यत्र न स्यात्। व्यपदेशिवदेकस्मिन् कार्यं भवतीत्यत्रापि सिद्धं भवति। षत्वे चाऽऽदेशसंप्रत्ययार्थम् *। वक्ष्यति आदेशप्रत्यययोरित्यवयवषष्ठ्येवेति। एतस्मिन् क्रियमाणे इहैव स्यात् करिष्यति हरिष्यति। इह न स्याद् इन्द्रो मावक्षत् सदेवान्यक्षदिति। व्यपदेशिवदेकस्मिन् कार्यं भवतीत्यत्रापि सिद्धं भवति स तर्हि व्यपदेशिवद्भावो वक्तव्यः। न वक्तव्यः। अवचनाल्लोकविज्ञानात् सिद्धम् *। अन्तरेणैव वचनं लोकविज्ञानान् सिद्धमेतत्। तद्यथा। लोके शालासमुदायो ग्राम इत्युच्यते। भवति चैतदेकस्मिन्नप्येकशालो ग्राम इति। विषम उपन्यासः। ग्रामशब्दो ऽयं बह्वर्थः। अस्त्येव शालासमुदाये वर्तते। तद्यथा। ग्रामो दग्ध इति। अस्ति वाटपरिक्षेपे वर्तते। तद्यथा। ग्रामं प्रविष्ट इति। अस्ति च मनुष्येषु वर्तते। तद्यथा। ग्रामो गतो ग्राम आगत इति। अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते। तद्यथा। ग्रामो लब्ध इति। तद्यः सार-

---

व्यपदेशहेत्वभावादविद्यमानव्यपदेश. स तेन तुल्यं वर्तते कार्यं प्रतीति व्यपदेशिवद्भवतीत्युच्यते। वक्षदिति। वच्च लेट् तिप् इतश्च लोप इतीकारलोपो लेटोडाटावित्यडागमः सिप् कुत्वम्। अत्र सकारमात्रं प्रत्ययो न तु प्रत्ययस्यावयवः सकार इति षत्वं न स्यात्। अवचनादिति। अवचनं वचनरहितं यल्लोकविज्ञानं तस्माल्लोकव्यवहारादित्यर्थः। इह तावदियायेति। इण्धातुः प्रयोगभेदाद्बहुरूपः। एति। इतः। यन्ति। अयनम्। आयकः। अगात्। गमयतीति। तस्यायमेकोऽजवयव इव लक्ष्यते। अथवा

---

देशिवदिति आद्यन्तवदित्यस्य स्थाने कार्यमिति भावः। सतेनेति। तेन तुल्यमिति तृतीयायां सर्वविभक्त्यर्थान्तर्भावात्तृतीयान्ताद्वतिरुक्त इति बोध्यम्। भाष्ये (तस्मिन्क्रियमाणइति) तस्मिन्नाश्रीयमाणे इत्यर्थः। पपाचेति। नन्वत्र धातुरेव प्रथम एकाज् न तु धातोः प्रथम एकाजिति कथमत्र व्यपदेशिवद्भावं विना प्राप्तिरिति चेन्न। आदिपर्यायप्रथमत्वस्य सूत्रेणैवातिदेशासिद्धया तत्र व्यपदेशिवद्भावारम्भस्य मुख्यप्रयोजनमित्याशयात्। इयायेत्यादौ तु द्विर्वचनेऽचीति रूपस्थानिवत्त्वादज्व्यतिरिक्ताभावेन नैकाच्त्वमिति बोध्यम्। अवयवषष्ठ्येवेति। प्रत्ययांश इति भावः। एतस्मिन् क्रियमाणे इति अवयषष्ठ्यामेव आश्रीयमाणे इत्यर्थः। विज्ञानशब्दो व्यवहारवाचीत्याह व्यवहारादिति। तत्फलितव्याख्यानभाष्य (अन्तरेणैवेति)। यथा लोके व्यवहारो वचनं विनैव सिध्यति तथा शास्त्रेपि वचनं विना सिध्यतीत्यर्थः। अगादित्यादि। इणो गा लुङि णौ गमिरबोधन इत्यादेशौ। एकोच् असहायोऽजित्यर्थः। नन्वेकाचो ऽवयविनो द्विर्वचनमिति यस्यायमवयवस्तस्य बहुरूपस्य भवितव्यं द्वित्वेनेत्यत आह अथवेति। काल्पनिकभेदेन व्यवहारे दृष्टान्तमाह एवमिति। व्यप-

ण्यके ससीमके सस्थण्डिलके वर्तते तमभिसमीक्ष्यैतत्प्रयुज्यते एकशालो ग्राम इति। यथा तर्हि वर्णसमुदायः पदं पदसमुदाय ऋक् ऋक्समुदायः सूक्तमित्युच्यते। भवति चैतदेकस्मिन्नप्येकवर्णं पदमेकपदा ऋक् एकर्चं सूक्तमिति। अत्राप्यर्थेन युक्तो व्यपदेशः। पदं नामार्थः ऋङ् नामार्थः सूक्तं नामार्थ इति । यथा तर्हि । बहुषु पुत्रेष्वेतदुपपन्नं भवति । अयं मे ज्येष्ठो ऽयं मे मध्यमो ऽयं मे कनीयानिति । भवति चैतदेकस्मिन्नपि अयमेव मे ज्येष्ठो ऽयमेव मे मध्यमोऽयमेव मे कनीयानिति । तथा ऽसूतायामसोष्यमाणायां च भवति प्रथमगर्भेण हतेति । तथा ऽनेत्याऽनाजिगमिषुराहेदं मे प्रथममागमनामिति । आद्यन्तवद्भावश्च शक्यो ऽवक्तुम् । कथम् । अपू-

---

ऽर्थवतो धातोरयं वर्णरूप एको ऽजित्यर्थस्य त्यागोपादानाभ्यां भवति व्यपदेश एकाजिति । एवं शिलापुत्रकस्य शरीरमिति अनेकक्रियाविषयस्याऽवस्थातुरिदमेकावस्थायुक्तं शरीरमित्यस्ति व्यपदेशः । एवं सिप्प्रत्य इट्सहितो ऽपि दृष्टो जोषिषदित्यादौ वक्षदित्यादौ केवलो ऽपीति तस्यायं सकार इति व्यपदिश्यते । लोकनिरूढश्चायं व्यवहार इति लोकवच्छास्त्रेऽपि व्यवहाराद्गौणमुख्यन्यायो ऽत्र नावतरति । पदसमुदाय इति । पादपर्यायः पदशब्दः । तथा चैकपदा ऋगिति पाद एव विवक्षितः । न तु ऋचः कस्याश्चिदप्येकमेव पदं भवति । अत्राऽप्यर्थेनेति । पदादीनां योऽर्थः सोऽन्यपदार्थ इत्यर्थः । अभेदोपचाराच्चार्थ एव पदादिभिरभिधीयते । अयमेव मे ज्येष्ठ इति । प्रथमरूपतयाध्यवसायान्मध्यमकार्यकरणाच्च मध्यम इति व्यपदिश्यते । अन्यो न जनितेति बुद्ध्या कनीयानिति व्यपदिश्यते । असूतायामिति । बहुकृत्वो ऽपि प्रसूता प्रथमपुत्रेण काचिद् हन्यते तथा या प्रसोष्यते सा ऽपि काचित्पूर्वोत्पन्नेन पुत्रेण हन्यत इत्युभयोरुपादानम् । नाऽपि प्रसूता नाऽपि प्रसोष्यते कुक्षिस्थेनैव गर्भेण हता प्रथमगर्भेण हतेत्युच्यते अपत्यपर्यायो गर्भशब्दः । तत्र तस्या एव योग्यताध्यवसायेन भाविगर्भविवक्षया प्रथमगर्भेण हतेत्युच्यते स्त्र्यन्तरेषु बहुपुत्रत्वे सति आद्यगर्भस्य प्रथमव्यवहारदर्शनात् तथाविधस्य प्रथमगर्भव्यवहारः । अनेत्येति । बहुकृत्वो ऽप्यागतः पूर्वमागमनं स्मृत्वा प्रथमव्यपदेशं तत्र मुख्यं करोत्येव आजिगमिषुश्च भावीन्यागमनानि बुद्ध्या व्यवस्थाप्य कुर्यादेव प्रथमव्यवहारं, यस्तु सकृदेवागतः सोऽपि करोति प्रथमव्यवहारमिति प्रतिपादनार्थमनेत्यानाजिगमिषुरित्युपात्तम् । तत्रान्यसंबन्धिषु बहुष्वप्यागमनेषु आद्यस्य प्रथमव्यवहारदर्शनात् तथाविधत्वात् स्यादेकस्मिन्नप्यागमने प्रथमव्यवहारः । इदानीं योगं प्रत्याख्यातुमाह अपूर्वेति । यद्यपि बहुष्ववस्थितेष्वाद्यन्तशब्दौ प्रयुज्येते

---

देशो भेदनिबन्धनसम्बन्धव्यवहारः । शास्त्रेपीति । लोकाप्रसिद्धत्वमेव तत्त्यागे बीजं तच्च न प्रकृते इति भावः । पादपर्याय इति । वर्णसमुदायः पदमित्यत्र तु पदशब्दो यथाश्रुत एव । पदादीनामिति । एकवर्णं पदमित्यादौ । ननु अर्थस्य पदत्वं कथमत आह अभेदेति । तदुपचारश्च शब्दार्थयोरनादिरिति बोध्यम् । पदादिभिः । पदशब्दादिभिः । प्रथमेति । तस्मात्पूर्वस्याभावादिति भावः । मध्यमकार्यं तत्सम्बन्धजसुखादिकम् । बहुकृत्वोपीति । यथा परशुरामेण रेणुका । तथा येति । सम्प्रति गर्भिणीत्यर्थः । गर्भस्थमादाय तत्रापि प्रथमव्यवहार इत्यर्थः । ननु या सूता सा न गर्भेण हता भवति किं त्वपत्येनेति गर्भेण हतायां तद्व्यतिरेकप्रदर्शनमयुक्तमत आह अपत्यपर्याय इति । तच्चोदरस्थं बहिर्भूतं वेत्यन्यत् । तत्र प्रथमव्यवहारे बीजमाह तस्या एवेति । । स्त्र्यन्तरेषु । बहुप्रसववतीषु । तथाविधस्येति । अविद्यमानपूर्वगर्भस्येत्यर्थः । नन्वागमनं विनेदं मे

र्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन् * अपूर्वलक्षण आदिरनुत्तरलक्षणो ऽन्त एतच्चैकस्मिन्नपि भवति । अपूर्वानुत्तरलक्षणत्वादेतस्मात् कारणाद् एकस्मिन्नप्याद्यन्तापदिष्टानि कार्याणि भविष्यन्तीति नार्थ आद्यन्तवद्भावेन । गोनर्दीयस्त्वाह सत्यमेतत् सति त्वन्यस्मिन्निति कानि पुनरस्य योगस्य प्रयोजनानि । आदिवत्त्वे प्रयोजनं प्रत्ययञ्नितदाद्युदात्तत्वे * । प्रत्ययस्यादिरुदात्तो भवतीति । इहैव स्यात् कर्तव्यं तैत्तिरीयः । औपगवः कापटव इत्यत्र न स्यात् । ञ्नित्यादिर्नित्यमिति । इहैव स्याद् अहिचुम्बकायनिः । आग्निवेश्यः । गार्ग्यः । कृतिरि

---

तथाप्यपूर्वानुत्तरत्वमात्रमेतयोः प्रवृत्तिनिमित्तं तच्चैकस्मिन्नप्यस्तीति नार्थः सूत्रेण । भाष्यकारस्त्वाह सति त्वन्यस्मिन्निति । नह्यनपेक्षितप्रतियोगिनोराद्यन्तयोः प्रवृत्तिरित्यर्थः । कस्मादेकस्मिन् मुख्ये आद्यन्तव्यपदेशो नास्तीति कर्त्तव्यो ऽयं योगः । यद्यपि लौकिकेन व्यपदेशिवद्भावेनाद्यन्तव्यपदेश एकस्मिन्नपि सिध्यति । तथापि गौणत्वात्कार्येण न भवितव्यमिति यस्य भ्रान्तिः स्यात्तं प्रति योगो ऽयमारब्धव्यः । प्रत्ययञ्नितदाद्युदात्तत्वइति । प्रत्ययस्याद्युदात्तत्वं ञ्निति चाद्युदात्तत्वमित्यर्थः । कथं पुनर्भिन्नविभक्त्योर्द्वन्द्वः । उच्यते । प्रत्ययस्य यदाद्युदात्तत्वं तस्य प्रत्ययो ऽपि विषयइति प्रत्ययेपि तदुच्यते । यद्वा ञ्निति यदाद्युदात्तत्वं तद् ञ्नितोऽपि संबन्धि भवतीति नाऽस्ति भिन्नविभक्तित्वम् । ऋदोरबित्याद्युदात्तत्वनिवृत्त्यर्थात्पित्त्वाल्लिङ्गादेकाचोपि प्रत्ययस्याद्युदात्तत्वं भविष्यतीति चेदकारविषयमेव लिङ्गं स्यादिती कारोकारयोः प्रत्यययोराद्युदात्तत्वं न स्यात् । विशेषणार्थं वा पित्करणं स्यात् थाथादिसूत्रे इत्यज्ञापकं स्यात् । गार्ग्य इति । अत्र परत्वाद्यस्येति लोपे कृते आदित्वाभावात्प्रकृतेराद्युदात्तत्वं न प्राप्नोति । स्वरविधौ

---

प्रथममागमनामिति व्यवहारसम्भवादनेनेत्येदं मे प्रथममागमनमित्यसङ्गतमत आह बहुकृत्वइति । अनेनेत्यस्येतः पूर्वमिति शेष इति भावः । तथाविधत्वादीति । अविद्यमानपूर्वागमनत्वादित्यर्थः । परे तु पदकृगादिपदानि अर्थशब्दसमुदायवृत्तीनि तस्य शब्दमात्ररूपवर्णपादकृगाद्यवयव इत्येव भाष्यार्थः । न तु शुद्धोर्थोन्यपदार्थइति । तथा ऽप्रतीतेः । एकर्चं सूक्तं पठेत्यादिव्यवहारानापत्तेश्च । एवं चार्थवतो धातोरयमेकोज् वर्णरूप इति अर्थस्य त्यागोपादानाभ्यां भवति व्यपदेश एकाजिताति कैयटोक्त चिन्त्यम् । एतद्भाष्यरीत्या तस्य मुख्यव्यवहारत्वेन व्यपदेशिवद्भावाविषयत्वात् । कैयटरीत्या शुद्धार्थस्यान्यपदार्थत्वे ऽत्रापि तथैवास्तु शब्दार्थयोरभेदाच्च शब्देपि तत्त्वमिति । अत्रापि न व्यपदेशिवद्भावप्रयोजनम् । किं चैकाजिति बहुव्रीहिणा प्रथमस्येत्युपस्थितावयवस्य विशेषणम् । तस्य चानर्थकत्वामिति अर्थस्योपादानत्यागावत्यसम्बद्धौ । एतदेव ध्वनयता पदं नामार्थ इति भाष्ये उक्तम् । धात्ववयवत्वं तु कैयटोक्तरीत्या वक्तुं शक्यम् । अत एव बहुव्रीहिनिर्देशानुपपत्तिरेव व्यपदेशिवदित्याश्रयणे बीजमुक्तम् । ( अत्राप्यर्थेनेति ) भाष्यस्य पदादिशब्दार्थस्यार्थेन युक्तत्वादित्यर्थः । अर्थशब्दोभयवृत्तिपदत्वकृत्वादीत्याशयः । पदं नामार्थ इत्यादेरर्थोपीत्यर्थः । यथातर्हीति । यथैकस्मिंस्तत्तद्धर्मारोपेण युगपज्ज्येष्ठत्वादिव्यवहारस्तथैकस्मिन्नारोपितानेकावस्थाभिः समुदायरूपत्वस्याप्यारोपेणैकत्वादिव्यवहारोपपत्तिर्द्वितीये तृतीये च दृष्टान्ते प्रथमेत्युपलक्षणं चरमस्यापि । तृतीये कदाचिच्चरममागमनमित्यपि व्यवहारात् । आद्यन्तवद्भावश्च शक्यो ऽवक्तुमित्यस्य प्रकारान्तरेणापीति शेष इत्याहुः । वस्तुतस्तु ईदृशेषु पातञ्जलोक्तं विकल्पात्मकं वस्तु शून्येमव ज्ञानमिति आरोपानुपयोग एव । लोकव्यवहारवत्तेनापि शास्त्रीयो व्यवहार इति तत्त्वम् । गोनर्दीयपदं व्याचष्टे भाष्यकारइति । अनपेक्षितप्रतियोगिनोः । अनपेक्षितपरपूर्वयोः । आद्यन्तयोः । आद्यन्तरूपार्थयोः । प्रवृत्तिः । आद्यन्तशब्दप्रवृत्तिरित्यर्थः । तथापीति । वस्तुतो लोकनिरूढत्वाद् गौणत्वमेवात्र नास्तीत्यर्थः । कथमिति । भिन्नविभक्त्यन्तयोरसमप्रधानत्वेन साहित्याप्रतीतिरित्यर्थः । इकारोकारयोरिति । उपाधिः । चिकीर्षुरित्यादौ । सामान्यापेक्ष

त्यत्र न स्यात्। वलादेरार्धधातुकस्येट् प्रयोजनम् * । आर्धधातुकस्येड्वलादेरितीहैव स्यात् करिष्यति हरिष्यति। जोषिषद् मन्दिषदित्यत्र न स्यात्। यस्मिन् विधिस्तदादित्वे प्रयोजनम् *। वक्ष्यति यस्मिन् विधिस्तदादावल्ग्रहणइति। तस्मिन् क्रियमाणे अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इहैव स्यात् श्रियः भ्रुवः। श्रियौ भ्रुवौ इत्यत्र न स्यात्। अजाद्याद्त्वे प्रयोजनम् *। आडजादीनाम्। इहैव स्याद् ऐहिष्ट ऐक्षिष्ट। ऐष्ट अध्यैष्टेत्यत्र न स्यात्। अथान्तवत्त्वे कानि प्रयोजनानि। अन्तवद् द्विवचनान्तप्रगृह्यत्वे प्रयोजनम् *। ईदूदेद् द्विवचनं प्रगृह्यमितीहैव स्यात् पचेते इति पचेथे इति खट्वे इति माले इतीत्यत्र न स्यात्। मिदचोऽन्त्यात्परः। प्रयोजनम्॥ इहैवं स्यात् कुण्डानि वनानि। तानि यानीत्यत्र न स्यात्। अचोऽन्त्यादि टि प्रयोजनम् *॥ टित आत्मनेपदानां टेरे इतीहैव स्यात् कुर्वाते कुर्वाथे। कुरुते कुर्वे इत्यत्र न स्यात्। अलोऽन्त्यस्य प्रयोजनम् *॥ अतो दीर्घो यञि सुपि च इहैव स्यात् घटाभ्यां पटाभ्यामिति। आभ्यामित्यत्र न स्यात् येन विधिस्तदन्तत्वे प्रयोनम् * अचो यद् इहैव स्यात् चेयं जेयम्। एयमध्येयमित्यत्र न स्यात्। आद्यन्तवदेकस्मिन् कार्यं भवतीत्यत्रापि सिद्धं भवति॥

---

स्थानिवद्भावप्रतिषेधाच्च नास्ति द्व्यच्त्वम्। स्वरविधौ व्यञ्जनस्याऽविद्यमानत्वान्नास्ति हलपेक्षमप्यादित्वम्। कृतिरिति। क्तिनो नित्त्वं नादौ च निति कृत्यताविर्त्येवमर्थं स्यात्। सौवर्यः सप्तम्यस्तदन्तसप्तम्य इत्येतदनाश्रित्यैतदुक्तम। जोषिषदिति। लिङर्थे लेट्। इट ईटीति च ज्ञापकं सिज्विषयमेव स्यादिति सिप इण्न स्यात्। यस्मिन् विधिरिति। स्वस्य च रूपस्येति नानुवर्तते इति प्रयोजनत्वेनोपन्यासः। अजाद्याट्त्वे इति। सूत्रकाराऽपेक्षया प्रयोजनोपन्यासः। वार्त्तिककारस्तु अजादीनामटा सिद्धमित्याह अन्तवदिति। येन विधिस्तदन्तस्येत्यनेनैव गतार्थे प्रपञ्चार्थोऽयमुपन्यासः। कुरुतइति। अर्थवता व्यपदेशिवद्भावात् तशब्दाऽकारस्यानर्थकत्वादिह प्रयोजनत्वेनोपन्यासः। आभ्यामिति। अत्र द्वे अन्तवत्त्वे उपयुज्येते। अकारान्तस्याङ्गस्य अलो ऽन्त्यस्य दीर्घो भवतीति पृथक् प्रयोजनत्वेनोपन्यासः। एयमिति। ईङो रूपम्। इणस्तु इत्यमिति भवति॥२०॥

---

ज्ञापकत्वेप्याह विशेषणार्थं वेति। आह्चिचुम्बकात्प्राचामवृद्धादिति फिन्। अग्निवेशाद्गर्गादियञ्। स्वरविधाविति। नन्वस्य स्वरोद्देश्यके विधावित्यर्थो वा हलः स्वरप्राप्ताविस्यर्थो वा। उभयथापि नेह प्राप्तिरिति चेत् सत्य, मत्र सूत्रे ऽजन्तरापेक्षमेवादित्वं गृह्यते। अन्त्यस्याच एव तद्भावस्यैस्वेनोपस्थितत्वादिति भाष्याशयात् किं च स्त्रैणमित्यादावाद्युदात्तत्वं न स्यादिति दोषः। ञित्त्वन्तु वृद्ध्यर्थतया सावकाशं बोध्यम्। क्तिनइति। अनेकाज्भ्यस्तु चिरिजिर्यादिभ्यो ऽनभिधानात् क्तिनभाव इति भावः। ननु तदन्तसप्तमीत्वे गार्ग्यादौ समुदाये मुख्य एवादिः सम्भवतीति न दोष इत्यत आह सौवर्य इति। लेडिति। सिब्बहुलं लेटीति सिप्। इट ईटीति। न च यमरमनमातामित्यत्र वलादेरित्यस्य सम्बन्धे फलाभावात्कथमेतज्ज्ञापकम। रुदादिभ्य इति सूत्रे वलादेरित्यस्य सम्बन्धसत्त्वेन मध्योऽपि सम्बन्धस्यैव न्याय्यत्वात्। अत एव सप्तमे भाष्ये "एकाचस्तौ बलीति" चेत्युक्तम्। येन विधिरिति। तेनैव ह्रीदूदेद्द्विवचनमित्यत्र तदन्तविधिरिति भावः। अर्थवतेति। तत्रस्यार्थस्य त्यागोपादानाभ्यां भेदः सुकर इति भावः। इदं चिन्त्यम्। यद्यपि व्यपदेशिवद्भावेन सिध्यति तथापि गौणत्वान्नेति यस्य भ्रान्तिस्तं प्रति सूत्रारम्भ इति पूर्वग्रन्थविरोधात्सूत्रकारेण तदज्ञानात् तदुदाहरणसम्भवाच्चार्थवतेति चासहायस्यैवोपलक्षणं ससहायस्य प्रायेणानर्थकत्वात् तशब्दाकारमसहाय एव। येन स-

तरप्तमपौ घः ॥२२॥ घसंज्ञायां नदीतरे प्रतिषेधः*॥ घसंज्ञायां नदीतरे प्रतिषेधो वक्तव्यः। नद्यास्तरो नदीतरः। घसंज्ञायां नदीतरेऽप्रतिषेधः *॥ अनर्थकः प्रतिषेधोऽप्रतिषेधः। घसंज्ञा कस्मान्न भवति। तरब्ग्रहणं ह्यौपदेशिकम् *। औपदेशिकस्य तरपो ग्रहणम्। न चैष उपदेशे तरप्शब्दः। किं वक्तव्यमेतत्। नहि। कथमनुच्यमानं गंस्यते। इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते। यत्रास्यैतद्रूपमिति। रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम्। तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते। को ऽसौ। उपदेशो नाम। न चैष उपदेशे तरप्शब्दः। अथ वा ऽस्त्वस्य घसंज्ञा को दोषः। घादिषु नद्या ह्रस्वो भवतीति ह्रस्वत्वं प्रसज्येत। समानाधिकरणेषु घादिष्वित्येवं तत्। यदा तर्हि सैव नदी स एव तरस्तदा प्राप्नोति।

---

तरप्तमपौ घः॥ आतिशायनिकप्रत्ययप्रकरण एव तादी घः पितौ घ इति वा कर्तव्ये प्रकरणोत्कर्षेण संज्ञाकरणं स्वार्थेपि तरबस्तीति सूचनार्थम्। तेनाल्पाच्तरमिति सिद्धं भवतीत्याहुः। नदीतर इति। तरतेर्ऋदोरविति अप्। सर्वत्र चानुबन्धाः स्मर्यमाणा एव कार्यं प्रति हेतुत्वं लभन्तइति घसंज्ञाप्राप्तिः। साहचर्यं चेह व्यवस्थाहेतुः सर्वत्र नाश्रीयते। तथाहि। द्विस्त्रिश्चतुरिति कृत्वोर्थग्रहणं चतुश्शब्दविशेषणार्थं कृतमन्यथा द्विस्त्रिश्शब्दसाहचर्याच्चतुश्शब्दोपि कृत्वोर्थ एव ग्रहीष्यतइति किं कृत्वोर्थग्रहणेन। अप्रतिषेधइति। न प्रतिषेधइति प्रतिषेधनक्रिया नञा निषिध्यते। भाष्यकारस्तु वस्त्वर्थं व्याचष्टे अनर्थकः प्रतिषेध इति। औपदेशिकमिति। उपदेशः प्रयोजनमस्य तत्र वा भवमौपदेशिकम्। यत्रास्येति। अनुबन्धयुक्तामित्यर्थः। न चैष इति। काल्पनिकमस्य तरप्त्वं न तु साक्षान्निर्दिष्टम्। समानाधिकरणेष्विति। आतिशायनिकश्च स्वार्थिकत्वात् समानाधिकरणः। यदा तर्हीति। ननु तीर्णिरिति भवितव्यम्। एवं तर्हि तीर्यन्त इति

---

ह्ययेनाच्चामन्तत्वस्य बहुव्रीह्यर्थस्य चोपपत्तिस्तादृशसहायाभावात्। अन्यथा ऽऽद्यन्तवद्भावोपि न स्याद्। विजातीयकन्यादिसहायसत्त्वेप्येकपुत्रस्यायमेव ज्येष्ठ इत्यादिव्यवहाराद् ईदृशस्थलेपि लोकसिद्धत्वमित्याहुः। इत्यामिति। एतिस्तुशास्विति क्यपो विधानादित्यर्थः॥ २१॥

तरप्त॥ प्रकरणोत्कर्षेणेति। प्रकरणे संज्ञाप्रकरेण उत्कर्षेण गुरुभूतन्यासेनेत्यर्थः। स्वार्थे इति। अनातिशायनिकस्यापि संज्ञाविधानार्थमत्र सूत्रम्। स चानिर्दिष्टार्थत्वात् स्वार्थे। तस्य संज्ञाफलं चोच्चैरेवोच्चस्तरामित्यादौ क्रिमेत्तिङव्ययघादित्यामसिद्धिरिति भावः। इत्याहुरिति। अत्रारुचिबीजन्तु भाष्यानुक्तिः। ननु नायन्तरबित्यन आह सर्वत्र चेति। ननु तमप्साहचर्यात्तद्धित एव तरो ग्रहीष्यते इति नास्त्यबन्ते तरे प्रसक्तिरत आह साहचर्यमिति। प्रत्ययाप्रत्ययथोरिति परिभाषापि नाश्रितेति बोध्यम्। इह शास्त्रे। वस्त्वर्थमिति। तात्पर्यार्थमित्यर्थः। असन्देह इतिवत् प्रतिषेधस्याभाव इत्यर्थको नञ्समासः। एवञ्चार्थक इति भाष्योक्तेर्मध्यमपदलोपी समास इति न भ्रमितव्यमिति भावः। तरप्ग्रहणं तरप्शब्दः। औपदेशिकमुपदेशप्रयोजक इत्यर्थो भाष्यस्य, तदाह। उपदेशः प्रयोजनमिति। प्रयोजकइत्यर्थः। न चैष उपदेशे तरप्शब्दः इति भाष्यस्वरसादाह तत्र वाभवमिति। ( उपदेशे इति ) भाष्ये। भव इति शेषः। ( सर्वेष्वेव सानुबन्धकग्रहणेष्विति ) भाष्यं प्रकृताभिप्रायं शब्दमात्रग्रहणेपि स्वं रूपमित्यनेन रूपाश्रयणादिति बोध्यम्। यत्रास्येति। यत्रास्यैतद्रूपं तत्र घसंज्ञेत्यर्थः। एवञ्चोपदेश एव घसंज्ञा प्रयोगे तु स्थानिवद्भावेन सेति बोध्यम्। काल्पनिकमिति। ऋदोरबिति सूत्रपर्यालोचनावगतत्वेनानुमानिकमित्यर्थः। स्वार्थिकत्वात्। प्रकृत्यभिहितद्योतक-

स्त्रीलिङ्गेषु घादिष्विर्त्येवं तत्र । अवश्यं चैतदेवं विज्ञेयम् । समानाधिकरणेषु घादिष्वित्युच्यमाने इह प्रसज्येत। महिषीरूपमिव ब्राह्मणीरूपमिवेति ॥

बहुगणवतुडतिसंख्या॥ २३ ॥संख्यासंज्ञायां संख्याग्रहणम् * ।संख्या संज्ञायां संख्याग्रहणं कर्तव्यम् । बहुगणवतुडतयः संख्यासंज्ञा भवन्ति । संख्या च संख्यासंज्ञा भवतीति वक्तव्यम् । किं प्रयोजनम् । संख्यासंप्रत्ययार्थम् । एकादिकायाः संख्यायाः संख्याप्रदेशेषु संख्येत्येष संप्रत्ययो यथा स्यात् । ननु चैकादिका संख्या लोके संख्येति प्रतीता ते नास्याः संख्याप्रदेशेषु संख्यासंप्रत्ययो भविष्यति । एवमपि कर्तव्यम् । किं प्रयोजनम् । इतरथा ह्यसंप्रत्ययो ऽकृत्रिमत्वाद्यथा लोके * ॥ अक्रियमाणे हि संख्याग्रहणे एकादिकायाः संख्यायाः संख्येत्येष संप्रत्ययो न स्यात् । किं कारणम् । अकृत्रिमत्वात् । बह्वादीनां कृत्रिमा संज्ञा । कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति । यथा लोके ।

---

तत्र इति सामान्येन पदं संस्क्रियते पश्चात्तद्या विशिष्यते इति न दोषः । स्त्रीलिङ्गेष्विति। स्वार्थिकश्च प्रकृतिलिङ्गानुविधानात् स्त्रीलिङ्गः । महिषिरूपमिवेति। इवशब्दो भिन्नक्रमः। तेनायमर्थः। महिषीइवेयमाकृतिरिति। तत्र सुप्सुपेति समासे कृते ह्रस्वत्वं स्यात२२

बहुगणवतुडतिसंख्या ॥ संख्यासंप्रत्ययार्थमिति संख्याया एकादिकायाः संख्याप्रदेशेषु संप्रत्ययार्थमित्यर्थः । ननु चेति । यथा पशुरपत्यं देवतेति लौकिकोर्थो गृह्यते तथैकादिकापि संख्या ग्रहीष्यते इत्यर्थः । कृत्रिमाकृत्रिमयोरिति। न्यायोयम् । तथाहि । सर्वार्थाभिधानशक्तियुक्तः शब्दो यदा विशिष्टेर्थे संव्यवहाराय । नियम्यते

---

स्यात् । समानाधिकरणः । प्रकृत्या समानविषय इत्यर्थः । सामानाधिकरण्यं चैकविशेष्यकबोधजनकत्वमिति बोध्यम् । ( ननु तीर्णिरिति ) । ऋतः परस्य क्तिनो निष्ठावद्वचनान्नत्वम् । सामान्येनेति । अनिर्धारितकर्मविशेषेणेत्यर्थः । अत एव पुंस्त्वम् । घञजपः पुंसीत्युक्तः । ( महिषीरूपमिवेति ) । नन्विदमसमस्तं समस्तं वा । नाद्यः । उत्तरपदाधिकाराद्रूपशब्दस्य चातथात्वादप्राप्तेः । किं च रूपशब्देनाकृत्यभिधानात्कस्याकृतिरिव महिषीति साकाङ्क्षत्वं स्यात । नान्त्यः । षष्ठीतत्पुरुषे वैयधिकरण्याद्ध्रस्वाप्राप्तेः । विशेषणसमासे तु पूर्वनिपातवैपरीत्यापत्तिः । तस्मादुपमागर्भसमासस्य विग्रहवाक्यमिदम् । स च समासो नोपमानानि सामान्यवचनैरित्यनेन रूपशब्दस्योपमेयवाचकत्वेपि साधारणधर्मावाचकत्वात् । साधारणधर्मो ह्यत्र विसंष्ठुलत्वादिः । नाप्युपमितं व्याघ्रादिभिरिति । रूपशब्दस्योपमेयवाचित्वेन पूर्वनिपातवैपरीत्यापत्तेः । तस्योपमानवाचित्वे तु कस्य रूपमिति विशेषणस्य सापेक्षत्वादूवृत्तिर्न स्यादत आह इवशब्द इति। सुप्सुपेति च । ह्रस्वत्वं स्यादिति। भप्रत्यययोरपि घत्वे तत्साहचर्याद्रूपादेरप्रत्ययस्यापि ग्रहणं स्यादिति भावः । यद्यपि रूपमित्युक्ते कस्य रूपमित्युक्ते कस्य रूपमिति अस्त्याकाङ्क्षा तथापि प्रधानस्य साकाङ्क्षत्वान्न दोषः ॥ २२॥

बहुगण ॥ सङ्ख्यात्वेन संप्रत्ययस्य लोकत एव सिद्धेराह एकादिकायाइति । संख्यासम्प्रत्ययेति वार्त्तिके संख्येति सम्प्रत्यय इत्यर्थः । एकादिकायाः संख्यायाः संख्याप्रदेशेष्विति शेषपूरणं बोध्यम् । (संख्येत्येष) इति भाष्यस्य संख्येत्येतच्छब्दाभिन्न इत्यर्थः।'शब्दार्थप्रत्ययानामितरेतराध्यासात्संकर' इति पातञ्जलसूत्रात्। एतच्च पातञ्जलसूत्रवृत्तावुपपादितमस्माभिः । नारद इत्यबोधि इत्यादावप्येवमेव । एवञ्च कर्मत्वाप्रसक्तेरेव संख्याशब्दजन्य इत्यर्थे संख्येत्याकारक इत्यर्थे च एषशब्दान्वयानुपपत्तिस्तदुपादानवैयर्थ्यञ्चेति बोध्यम् । संख्या ग्रहीष्यतइति । सूत्रं त्वधिकसंग्रहार्थमिति भावः । न्यायोयमिति । अभ्यासाम्रेडितादिसंज्ञाविषये चैतन्न्यायोपयोगो द्रष्टव्यः । नियम्यतेइति । सर्वार्थबोधकत्वेपि लोके तत्रैव गृहीतशक्तिकतया ऽन्यत्र शक्त्यग्रहेणां च अधिकसंग्रहार्थत्वादगृहीतशक्तिग्राहकत्वाच्चास्य नियमत्वं चिन्त्यम् । न्यायबीजन्तु प्रकरण-

गोपालकमानय कटजकमानयेति। यस्यैषा संज्ञा भवति स आनीयते न यो गाः पालयति यो वा कटे जातः। यदि तर्हि कृत्रिमाऽकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति। नदीपौर्णमास्याग्रहायणीभ्य इति अत्रापि प्रसज्येत। पौर्णमास्याग्रहायणीग्रहणसामर्थ्यान्न भविष्यति। तद्विशेषेभ्यस्तर्हि प्राप्नोति गङ्गायमुने इति। एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति न तद्विशेषेभ्यो भवतीति। यदयं विपाट्शब्दं शरत्प्रभृतिषु पठति इह तर्हि प्राप्नोति। नदीभिश्चेति। बहुवचननिर्देशान्न भविष्यति। स्वरूपविधिस्तर्हि प्राप्नोति। बहुवचननिर्देशादेव न भविष्यति। एवं च न वेदमकृतं भवति कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय इति। न च कश्चिद्दोषो भवति। उत्तरार्थं च *। उत्तरार्थं च संख्याग्रहणं कर्तव्यम्। ष्णान्ता षट्। षकारनकारान्तायाः संख्यायाः षट्संज्ञा यथा स्यात्। इह मा भूत्। पामानो विप्रुष इति। इहार्थेन तावन्नार्थः संख्याग्रहणेन। ननु चोक्तम्। इतरथा ह्यसंप्रत्ययो ऽकृत्रिमत्वाद्यथा लोकइति। नैष दोषः। अर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः

---

तदा तत्रैव प्रतीतिं जनयति नान्यत्र। नदीपौर्णमासीति। यू स्त्र्याख्यौ नदीति संज्ञाविधानात् संज्ञिनो ग्रहणं प्राप्तं न तु स्वरूपस्य। अशब्दसंज्ञेति निषेधात्। पौर्णमासीति नियमार्थं पौर्णमास्याग्रहायणीग्रहणमीकारान्तानां न स्यादिति चेत्। एवमप्यूपौर्णमास्याग्रहायणीभ्य इति वक्तव्यं स्यात् ऊकारग्रहणेन च नदीसंज्ञकमेवोकारान्तं पौर्णमास्याग्रहायणीशब्दसाहचर्याद् ग्रहीष्यते। तद्विशेषेभ्य इति। गङ्गादिभ्यः। यदयमिति। नित्यार्थः पाठः स्यादिति चेत् व्यवस्थितविभाषया विपाट्शब्दस्य नित्यष्टज् भविष्यतीत्यदोषः। बहुवचनेति। अन्यथाण्नद्या इत्यादौ यथैकवचनेन निर्देशस्तथेहापि कर्तव्यः स्यात्। न चेदमकृतमिति। अनाश्रितमित्यर्थः। उत्तरार्थं चेति। अयं हि सूत्रोपात्तः संख्याशब्दः स्वरूपपदार्थकः। उत्तरत्र संज्ञिनिर्देशेन प्रयोजनम्। इहार्थेनेति। इहार्थो

---

मिति भाष्ये एव स्फुटीभविष्यति। नियमार्थमिति। नियमश्च सामान्यविषय एव न कालवाचिविषयो व्याख्यानादतो गौर्याद्यन्तेपि न दोषः। नन्वनदीसंज्ञकेभ्यो ऽपि खलप्वादिभ्य ऊकारान्तेभ्यः स्यादत आह ऊकारग्रहणेनेति। वस्तुतस्तु दोषग्रस्तनियमापेक्षया नदीशब्दे कृत्रिमाकृत्रिमन्यायबाधज्ञापनमेव ज्यायः। भाष्ये (तद्विशेषेभ्यस्तर्हीति) प्रासङ्गिकी शङ्का तां व्याचष्टे गङ्गादिभ्यइति। अपगङ्गं परियमुनमित्युदाहरणे। अत्र हि टचि अन्तोदात्तत्वम्। तदभावे परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेष्विति पूर्वपदप्रकृतिस्वरत्वमित्याहुः। नित्यार्थइति। नदीपौर्णमासीत्यत्रान्यतरस्यांग्रहणानुवृत्तेरिति भावः। व्यवस्थितेति। अत्र च ज्ञापकपरमिदमेव भाष्यं मानम्। केचित्तस्माद्भाष्यान्नदीति सूत्रे ऽन्यतरस्यांग्रहणं निवर्त्तयन्ति। बहुवचननिर्देशादेवेति। तस्मात्रपीत्यर्थः। अशब्दसंज्ञेति निषेधादित्यपि बोध्यम्। तत्प्रत्याख्याने स्वयमेव हेतुः। अतो ऽस्मान्निषेधान्नदीपौर्णमासीत्यादौ स्वरूपग्रहणमिति दुर्लभमित्यपास्तम्। लक्ष्यानुसारेण तत्प्रत्याख्यानसामर्थ्येन तस्यात्राप्रवृत्तेः। नदीभिश्चेत्यादौ तु लक्ष्यानुसारादेवार्थग्रहणेन तद्वाचकानां ग्रहणमिति दिक्। अस्य न्यायत्वादकृतमित्ययुक्तमत आह अनाश्रितमिति। स्वरूपेति। न चैवं बह्वादिसामानाधिकरण्यानुपपत्तिः। शब्दार्थयोरभेदारोपेण तदुपपत्तेरिति भावः। संज्ञिनिर्देशेनेति। संख्याशब्दबोध्यपञ्चादिशब्दपरेण संख्याशब्दनिर्देशेनेत्यर्थः। सामान्येति। अर्थशब्दोक्तसामान्यं प्रति इहार्थो यस्येत्यस्य विशेषत्वादित्यर्थः। भाष्ये [अर्थादित्यादि]। लोके कृत्रिमग्रहणे न कृत्रिमत्वं कारणं किं त्वन्यदेवेति भावः। अर्थः सामर्थ्यं तदेव दर्शयति। [अर्थो वास्येति]।

कृत्रिमे कार्यसंप्रत्ययो भवति । अर्थो वा ऽस्यैवंसंज्ञकेन भवति प्रकृतं वा तत्र भवति । इदमेवंसंज्ञकेन कर्तव्यमिति । आतश्चार्थात् प्रकरणाद्वा । अङ्ग हि भवान् ग्राम्यं पांशुलपादमप्रकरणज्ञमागतं ब्रवीतु गोपालकमानय कटजकमानयेति । उभयगतिस्तस्य भवति साधीयो वा यष्टिहस्तं गमिष्यति । यथैव तर्ह्यर्थात्प्रकरणाद्वा लोके कृत्रिमाऽकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति । एवमिहापि प्राप्नोति । जानाति ह्यसौ बह्वादीनामियं संज्ञा कृतेति । न यथा लोके तथा व्याकरणे । उभयगतिः पुनरिह भवति । अन्यत्राऽपि नावश्यमिहैव । तद्यथा । कर्तुरीप्सिततमं कर्मेति कृत्रिमा कर्मसंज्ञा । कर्मप्रदेशेषु चोभयगतिर्भवति । कर्मणि द्वितीयेति कृत्रिमस्य ग्रहणम् । कर्तरि कर्मव्यतिहारइत्यत्राऽकृत्रि-

---

यस्येति सामान्यविशेषभावान्न पौनरुक्त्यम् । आतश्चेति । इतश्चेत्यर्थः । अर्थः । सामर्थ्यम् । यथा गोपालकमानय माणवकमध्यापयिष्यतीति यष्टिहस्तस्याध्यापनासम्भवात्संज्ञिनो ग्रहणम् । प्रकरणं प्रस्तावो यथा भोजनप्रकरणे सैन्धवमानयेति लवणे प्रतीतिर्गमनप्रकरणे त्वश्वे । ग्राम्यमिति -। ऊहितुमसमर्थम् । पांशुलपादमिति । अचिरोषितम् । अत एवाप्रकरणज्ञम् । उभयगतिरिति । किं संज्ञेयं यस्य कस्य चिन्निर्दिष्टा स्यादुत यष्टिहस्तोऽस्य विवक्षितः स्यादिति संदेहवान् भवतीत्यर्थः । साधीयो वेति । यो मम प्रसिद्धः सोनेन चोदितो न च ममैवंसंज्ञकः प्रसिद्ध इत्येवं मन्यते । लोके च गोपालशब्दः संज्ञिनि नियम्यमानः संज्ञ्यन्तरं निवर्तयति क्रियानिमित्तं त्वर्थं न निरस्यति तुल्यजातीयविषय एव हि नियमो भवति । एवमिहापीति । बह्वादय एवात्र सख्यात्वेन प्रकृता इति भावः । न यथा लोक इति । संख्याशब्दो हि बह्वादिप्रतिपादनाय संज्ञात्वेन विनियुक्तो न त्वेकादिसंख्यानिरासाय । अधिकार्थप्रतिपत्त्यर्थत्वादिह संज्ञाकरणस्य । कर्मणि द्वितीयेति । ङ्याप्प्रातिपदिकादनभिहिते कर्मणि संख्यायां द्वितीया विधीयते । न च क्रियायाः संख्या सम्भव-

---

अस्य वाक्यस्यार्थो ऽध्यापनादिरूपं प्रयोजनम् । एवं संज्ञा केन भवति तत्रास्यैव सामर्थ्यमित्यर्थः । प्रकृतं-वेति । इदमेवंसंज्ञकेन कर्त्तव्यमिति तत्र प्रयोजनं प्रकृतं बुद्धिस्थं भवति संज्ञाया बुद्धिस्थत्वादित्यर्थः । इदमन्येषामपि पदार्थनियामकानामुपलक्षणम् । यद्यपि रूढिर्योगापहारिणीत्यन्यत्र सम्भवति । तथापि प्रकरणादिसहकृतो योगो ऽपि बलवानित्यभिप्रेत्येदमेवोक्तम् । अन्वयमुक्त्वा व्यतिरेकेणाप्यर्थादेर्हेतुत्वं प्रतिपादयितुं भाष्ये [ आतश्चेति ] । उभयगतिः उभयविषयकं ज्ञानं तात्पर्यसन्देहरूपमित्याशयेनाह किं संज्ञेयमिति । वक्तृतात्पर्यविषयसन्देहवानित्यर्थः । ननु रूढेर्योगापहारकत्वेन कथं सन्देह इति चेन्न । तत्तत्पुरुषं प्रति प्रसिद्धरूढ्यर्थस्यैव योगापहारकत्वं नान्यस्येति भावात् । तदेव ध्वनयन्नाह । ( साधीयइति ) क्रियाविशेषणमव्ययं वा सम्यगर्थकम् । ( यष्टिहस्तङ्गमिष्यति ) तद्विषयमेव तात्पर्यं ग्रहीष्यतीत्यर्थः । ननु संज्ञाकरणस्य नियमार्थत्वाद्योगार्थप्रतीतिः श्रोतुर्भ्रम इत्यत आह । ( एवंमन्यते लोके इति ) । इदमपि स्वरीत्या । अत्र शास्त्रे प्रकृताः बुद्धौ संनिहिताः । अनेनात्रापि प्रकरणमस्तीत्युक्तं भवति । बुद्धिसंनिधिरेव प्रकरणम् । संज्ञात्वेन विनियुक्त इति । ज्ञापिताज्ञातशक्तिक इत्यर्थः । अत एव न नियमार्थतेत्याह नाश्चाति । तुल्यन्यायेन संज्ञासूत्रमात्रस्य नियमार्थत्वाभावः सूचितः । इह सङ्ख्याप्रदेशे । अधिकार्थेत्यादिनान्वेति । भाष्ये ( न यथेत्यादि ) व्याख्यातृपरम्परावगतवक्तृतात्पर्यानुपपत्त्या प्रकरणाद्यनादरेणोभयगतिरिति भाष्यार्थ इत्यन्ये । कर्मणि सङ्ख्यायामिति । कर्मगतसङ्ख्यायामित्यर्थः । नचेति । तस्या अद्रव्यत्वेन द्रव्यधर्मलिङ्गाद्ययोगादिति

मस्य । तथा साधकतमं करणमिति कृत्रिमा करणसंज्ञा । करणप्रदेशेषु चोभयगतिर्भवति । कर्तृकरणयोस्तृतीयेति कृत्रिमस्य ग्रहणम् । शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे इत्यत्राऽकृत्रिमस्य । तथा आधारोऽधिकरणमिति कृत्रिमा अधिकरणसंज्ञा । अधिकरणप्रदेशेषु चोभयगतिर्भवति । सप्तम्यधिकरणे चेति कृत्रिमस्य ग्रहणम् । विप्रतिषिद्धं चानधिकरणवाचीत्यत्राऽकृत्रिमस्य । अथ वा नेदं संज्ञाकरणं तद्वदतिदेशो ऽयम् । बहुगणवतुडतयः संख्यावद् भवन्तीति । स तर्हि वतिनिर्देशः कर्तव्यः । न कर्तव्यः । नह्यन्तरेण वतिमतिदेशो गम्यते । अन्तरेणापि वतिमतिदेशो गम्यते । तद्यथा । एष ब्रह्मदत्तः । अब्रह्मदत्तं ब्रह्मदत्त इत्याह । तेन मन्यामहे ब्रह्मदत्तवदयं भवतीति । एवमिहाप्यसंख्यां संख्येत्याह । संख्यावदिति गम्यते । अथवा ऽऽचार्यप्रवृत्तिर्ज्ञापयति । भवत्येकादिकायाः संख्यायाः संख्याप्रदेशेषु सम्प्रत्यय इति । यदयं संख्याया अतिशदन्तायाः कन्निति तिशदन्तायाः प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् । न हि कृत्रिमा सन्ता शदन्ता वा संख्या ऽस्ति । ननु चेयमस्ति डतिः । यत्तर्हि शदन्तायाः प्रतिषेधं शास्ति । यच्चाऽपि सन्तायाः प्रतिषेधं शास्ति । ननु चोक्तं डत्यर्थमेतत् स्यात् । अर्थवद्ग्रहणे नानर्थकस्येति । अर्थवतस्तिशब्दस्य ग्रहणं न च डतेस्तिशब्दो ऽर्थवान् ।

---

तीति सामर्थ्यात्कारकस्य ग्रहणम् । कर्तरि कर्मव्यतिहारइत्यत्र तु धातोः साक्षात् क्रियायां वृत्त्या क्रियाया एव ग्रहणम् । कण्वमेघेभ्यः करणइति । तव्यादिप्रत्ययोत्पत्त्यर्थं धातुसंज्ञा क्रियते क्रियावाचिनश्च तव्यादयः साधने उत्पद्यन्तइति सामर्थ्यात् क्रियाग्रहणम् । विप्रतिषिद्धमिति । द्वन्द्वावयवानां शक्त्यनभिधायित्वादधिकरणं द्रव्यं गृह्यते । तद्वदतिदेशोयमिति । संख्याकार्यातिदेशोयमित्यर्थः । यदि हि संज्ञा स्याट्टिघुभादिसंज्ञावदेकाच्तरा क्रियते तस्माल्लौकिकार्थाभिधायी संख्याशब्द उपादीयमानोतिदेशार्थत्वमस्य बोधयति । अथवेति । गुरुसंज्ञाकरणादेकादयः संख्याशब्देन प्रदेशेषु न त्यज्यन्तइति लिङ्गेनाप्यनुमीयतइत्यर्थः । अर्थवत इति । ननूभयसंभवे इयं परिभाषोपतिष्ठते । डत्यन्ता च कृत्रिमास्ति । डतेश्च तिशब्दोनर्थक एवेति तस्यैव निषेधः स्यादित्यज्ञापकत्वमन्तायाः प्रतिषेधः । नैष दोषः । अतिशदन्ताया इत्युच्चारणाकालएवार्थवतस्तिशब्दस्य-

---

भावः । यद्यपि रूपवादिसूत्रस्थभाष्यादेकत्वं क्रियायामस्ति तथापि द्वित्वाद्यभाव इति तात्पर्यम् । कारकम् । शक्तिमद् द्रव्यम् । साक्षात्क्रियायामित्यस्य क्रियायामेव न तु कर्मकारके इत्यर्थः । अन्यथा साक्षात्पदप्रयोजनं चिन्त्यं स्यात् । न हि धातोः परम्परयापि कारके वृत्तिरस्ति येन यद्वावृत्त्या चारितार्थ्यं स्यादित्याहुः । धातुसंज्ञा क्यङन्तस्य सनाद्यन्ता इत्यनेन । साधने । कारके । तव्यादयो ऽन्तः कारकापेक्षितक्रियावाचिन एवोत्पद्यन्त इत्यन्वयः । एवं सर्वसंज्ञाविषये समाधाय प्रकृतविषये समाधानान्तराण्याह । (अथवेति)। ब्रह्मदत्त इत्युक्तिविषयस्याब्रह्मदत्तत्वं स्फोरयितुं ब्रह्मदत्तव्यक्तिं निर्दिशति (एष ब्रह्मदत्तइति) (असङ्ख्यां सङ्ख्येत्याहेति)। नियतविषयपरिच्छेदहेतुर्हि सङ्ख्या । एवञ्च बहुत्वादेरसंख्यात्वामिति भावः । बहुत्वं हि त्र्यादिसंख्याव्यापकाखण्डोपाधिरूपम् । गुर्विति । नन्वतिशदन्ताया इति लिङ्गात्कन्विधौ कृत्रिमा न गृह्ये-

अथ वा महतीयं संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः। कुत एतत्। लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम्। अन्वर्थसंज्ञा यथा विज्ञायते। संख्यायते अनयेति संख्या। एकादिकया चापि संख्यायते। उत्तरार्थेन चापि नार्थः संख्याग्रहणेन। इदं प्रकृतमुत्तरत्राऽनुवर्तिष्यते। इदं वै संज्ञार्थमुत्तरत्र च संज्ञिविशेषणेनार्थः न चान्यार्थं प्रकृतमन्यार्थं भवति। खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति नहि गोधा सर्पन्ती सर्पणादहिर्भवति। यत्तावदुच्यते न चाऽन्यार्थं प्रकृतमन्यार्थं भवतीति। अन्यार्थमपि प्रकृतमन्यार्थं भवति तद्यथा। शाल्यर्थं

---

ग्रहणमिति प्रतीतिरिति ज्ञापकत्वमेव प्रतिषेधस्य। अथवेति। ननु महत्याः संज्ञायाः करणात्तदर्थानुगतानामुपात्तानामेव संज्ञिनां भवतु संज्ञा यथा सर्वादीनामेव सर्वनामसंज्ञा न त्वधिकानाम्। तेन बहुगणशब्दयोः सङ्घवैपुल्यवाचिनोस्सञ्ज्ञा मा भूदेकादीनां तु कथं स्यात्। नैष दोषः। इहान्वर्थसञ्ज्ञाकरणेन तावदनुरूपः सञ्ज्ञी सर्व आक्षिप्यते। तेनैकादीनां तावद् ग्रहणं भवति पश्चाद्बहुगणवतुडतीति भूयादिनिवृत्त्यर्थं व्याख्यायते। अत एव सङ्घवैपुल्यवृत्त्योर्बहुगणशब्दयोस्सञ्ज्ञा न भवति। तद्वदतिदेशपक्षेपि परस्परसाहचर्यात् संख्यावाचिनोरेव भूयादिनिवृत्तये नियमायातिदेशः क्रियते इति अतिप्रसङ्गो न भवति। सञ्ज्ञिविशेषणेनार्थ इति। ष्णान्तेत्यनेन विशिष्टं सञ्ज्ञिनं प्रतिपादयितुमुपयोग इत्यर्थः। न चान्यार्थमिति। एकशब्दत्वदर्शनादिति भावः।

---

तेति चेन्न। शास्त्रबाधापेक्षयोभयग्रहणज्ञापकत्वस्यैवौचित्यादिति भावः। (नैषइति)। अतिशदन्ताया इत्यस्य बहुव्रीहिगर्भतत्पुरुषत्वेन संख्याविशेषणतया विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वाच्च तत्पदजन्योपस्थितिकालेऽर्थवदनर्थकयोः सम्भवेन पूर्वमर्थवत एव ग्रहणे निर्णीते पश्चात्संज्ञापदार्थान्वयवेलायां जायमानानुपपत्तिज्ञानेन ज्ञापकत्वमेव कल्प्यत इति भावः। एतत्पक्षद्वये महासंज्ञाया अनुग्राहकत्वं वक्तुमयुक्तम्। तन्मूलकपक्षान्तरस्याग्रे वक्ष्यमाणत्वादित्यन्ये। भाष्ये (संज्ञा चनामेति)। नामप्रसिद्धमेतद्। यतोन्यल्लघीयो न भवति सा संज्ञेति। तदर्थानुगतानामिति। संख्यानकरणत्वसमानाधिकरणसंख्याशब्दवदभिन्ना बह्वादय इत्यार्थादिति भावः। कथंस्यादिति। महासंज्ञाकरणस्य चरितार्थतया कृत्रिमन्यायबाधे मानाभावादिति भावः। सर्वइति। नियतानियतसंख्यावाचीत्यर्थ। आक्षिप्यतइति। संख्येति विभक्तसूत्रे इति शेषः। एवञ्च संख्यानकरणीभूताः संख्यासंज्ञा इत्यर्थः। संज्ञायाः संज्ञ्याकाङ्क्षतया तद्वाचकं पदमुपस्थितान्वर्थवाचकमेवं कल्प्यत इत्ययमेवाक्षेप इति भावः। नियमार्थमिति। बहुगणेति द्वितीयसूत्रे संख्येति वर्त्तते। अनियतसंख्यावाचिनाञ्चेद्बह्वादीनामेवेति भावः। अतएवेति। अन्वर्थत्वाश्रयणादेवेत्यर्थः। संज्ञा न भवतीति। प्राप्तेरेवाभावादिति भावः। संख्यावाचिनोरेवेति। बहुगणयोरित्यर्थः। नियमायेति। नियमफलक इत्यर्थः। परे तु परस्परसाहचर्यात्संख्याव्यापकार्थवाचिनोरेव बहुगणयोर्ग्रहणम्। न तु सङ्घवैपुल्यवचनयोरिति व्यर्थान्वर्थसंज्ञा। तस्मात्प्रदेशेषु लोकप्रसिद्धकेवलयोगार्थस्यापि ग्रहणार्थं महती संज्ञेति भाष्याशयः। 'असख्यां सङ्ख्येत्याहेति' भाष्येण बह्वादिषु सङ्ख्यापदयोगार्थाभावबोधनाच्चेति योगविभागो व्यर्थः। 'एकादिकया चापि संख्यायते इत्यस्य एकादिकया संख्यायते सापि संख्याप्रदेशेषु यथा गृह्यतेति महासंज्ञाकरणमित्यर्थः। चस्तु वाक्यालङ्कारे। उभावपि वाक्यालङ्कार एव। यद्वा बह्वादिकयापि संख्यायते स्वव्याप्यत्रित्वादिद्वारेत्यर्थः। वत्वन्तडत्यन्तयोर्यावदादिशब्दकतिशब्दयोर्थद्यपि साक्षात्संख्यानकरणीभूतार्थप्रतिपादकत्वमुपपादयितुमशक्यं तथापि कतीत्यत्र संख्यानकरणीभूतार्थविषयप्रश्नार्थकत्वेन तत्त्वम्। एवं वत्वन्ते ऽप्यूह्यमित्याहुः। भाष्ये (संज्ञार्थमिति)। संज्ञा शब्दस्वरूपं तदर्थकमित्यर्थः। संज्ञिनिरूपितसंख्याशब्दनिष्ठशक्त्यवगमार्थं स्वरूपपरमिति भावः। ननु ष्णान्तेत्यनेन संख्या विशेष्यत इति संज्ञिविशेषणं संख्याग्रहणमित्ययुक्तमत आह ष्णान्तेति। भाष्ये (संज्ञी)। यद्संज्ञासंज्ञी विशेष्यते स्वेतरव्यावृत्ततया प्रतिपाद्यते येनेत्यर्थः।

कुल्याः प्रणीयन्ते ताभ्यश्च पानीयं पीयते। उपस्पृश्यते च शालयश्च भाव्यन्ते। यदप्युच्यते न खल्वप्यन्यत् प्रकृतमनुवर्त्तनादन्यद्भवति नहि गोधा सर्पन्ती सर्पणादहिर्भवतीति। भवेद् द्रव्येष्वेतदेवं स्यात्। शब्दस्तु खलु येन येन विशेषेणाभिसंबध्यते तस्य तस्य विशेषको भवति। अथ वा सापेक्षो ऽयं ष्णान्तेति निर्देशः क्रियते। न चाऽन्यत्किंचिदपेक्ष्यमस्ति तेन संख्यामेवापेक्षिष्यामहे। अध्यर्धग्रहणं च समासकन्विध्यर्थम् *। अध्यर्धग्रहणं च कर्तव्यम्। किं प्रयोजनम्। समासकन्विध्यर्थम्। समासविध्यर्थम्। कन्विध्यर्थं च। समासविध्यर्थं तावत्। अध्यर्धशूर्पम्। कन्विध्यर्थम्। अध्यर्धकम्। लुकि चाऽग्रहणम् *। लुकि चाऽध्यर्धग्रहणं न कर्तव्यं

---

भवतु तर्हि प्रतियोगं शब्दभेद इत्याह न खल्वपीति। यथा गोधा देशान्तरगमनमात्रेण गोधात्वं न जहाति एवं शब्दोऽपि रूपान्तरं न गृह्णात्येवेत्यर्थः। अन्यार्थमपीति। पदार्थानां शक्तिवैचित्र्यात्। शब्दस्त्विति। स्वरितत्वाद्वाक्यान्तरे शब्दान्तरं वाक्यार्थानुग्राहिवस्तुप्रतिपादनयोग्यमनुमीयते। सादृश्यात्तु तत्त्वाध्यवसाय इत्यर्थः। सापेक्षोयमिति। स्त्रीलिङ्गेन निर्देशः कृतः। तत्र प्रकृतत्वादन्यपदार्थ·वेन संख्या स्वरितत्वेन विनाप्यपेक्ष्यतइत्यर्थः। अध्यर्धग्रहणं चेति। वार्तिके संख्याग्रहणं कर्तव्यत्वेन स्थितं तदपेक्षया समुच्चयार्थश्चशब्दः। विध्यर्थं चेदं ग्रहणम्। अध्यर्धशब्दस्य त्रिभागचतुर्भागादिशब्दवदसंख्यावाचित्वात्। अर्धशब्दश्चैकदेशवाची न संख्यावाची। एकदेशादिशब्दवत्। तस्याधिशब्देन समासे कृते यौगिकोऽर्थः प्रतीयते न संख्या। अध्यर्धशूर्पमिति। अर्द्धेन शूर्पेण क्रीतमिति दिक्संख्येइत्यनुवर्तमाने तद्धितार्थेति समासः। ततः शूर्पादञन्यतरस्यामिति अञष्ठञो वा अध्यर्धपूर्वेति लुक्। अध्यर्धकमिति। संख्याया अतिशदन्तायाः कन्निति कन्। द्विगोरित्येव सिद्धमिति। समासविध्यर्थमिति सम्बन्धसामान्ये षष्ठी। तेन समासे विधीयमाने समासनिमित्ते चान्यस्मिन् कार्ये विधीयमानइत्यर्थः तेन द्विगुनिमित्तो लुगपि लभ्यते। अन्ये त्वाहुः। अध्यर्धशब्दः

---

ननु स्वरितत्वबलेनानुमीयमानस्य शब्दान्तरत्वाच्छब्दभेदेनार्थभेदस्य सत्त्वेन न चान्यार्थमित्ययुक्तमत आह एकेति। यस्य स्वरितत्वं प्रतिज्ञातं तदेवानुवर्त्तते न तु तज्जातीयं शब्दान्तरमिति भावः। अर्थाधिकार एव चाभ्यर्हितस्तदर्थस्य चायोग्यत्वादिहासम्बन्ध इति भावः। इत्याहेति। इत्याशङ्क्याहेत्यर्थः। भाष्ये ( न खल्वपीति) प्रकृतमनुवर्त्तनाद्देशान्तरगमनादन्यद्भवतीति न खल्वित्यन्वयः। यथेति। सर्पणस्योभयत्र तुल्यत्वेन प्रसक्तमहित्वङ्गोधायां वार्यतइति नार्थः। सर्पणस्याहिशब्दप्रवृत्तिनिमित्तत्वाभावात् किं तु देशान्तरगमनं नान्यत्वापादकमित्यर्थ इति भावः। रूपान्तरम् अर्थभेदम्। पदार्थानामिति द्वन्द्वः। शक्तिवैचित्र्याद्। अनेकशक्तित्वादित्यर्थः। एवञ्च पूर्वत्र तया शक्त्या स्वरूपपरस्यापि उत्तरत्रान्यया शक्त्या योग्यतावशादर्थपरत्वे बाधकाभावः। शब्दाधिकारो ऽत्र लक्ष्यानुरोधादाश्रीयत इति भावः। ( भवेद् द्रव्येष्वेतदेवस्यादिति )। स्यादिति सम्भावनायां लिङ्। भवेदिति प्रार्थनायाम्। द्रव्ये विषये पूर्वोक्तार्थकर्तृका सम्भाविता सत्ता भवत्वित्यर्थः। शब्दभेदनयेऽपि न क्षतिरित्याह शब्दस्त्विति। येनयेनविशेषेणेति। विशेष्यत इति विशेषः परिच्छेद्यः। तस्य तस्य विशेषकः परिच्छेदकः। तत्परिच्छेदकार्थवानन्य एव शब्दो भवतीत्यर्थः। तदुपपादयति स्वरितत्वेनेति। अध्यर्धस्यासंख्यावाचित्वमुक्तमुपपादयत्यर्धशब्दश्चेति। ननु समासकन्सिद्धये विधीयमाना संज्ञा कथं लुकोनिमित्तमतआह समासेति। समासपदेन द्विगुसमास एव। तस्यैव संख्याकार्यत्वात्। तन्निमित्तकमपि द्विगुनिमित्तकमेवेत्याह तेनाद्विग्विति। भाष्ये ( चाधिकग्रहणञ्चेति ) लुगाभिन्नसंख्याकार्यसिद्धयर्थम्

भवति । अध्यर्धपूर्वद्विगोर्लुगसंज्ञायामीति । द्विगोरित्येव सिद्धम् । अर्धपूर्वपदश्च पूरणप्रत्ययान्तः * । अर्धपूर्वपदश्च पूरणप्रत्ययान्तः संख्यासंज्ञो भवतीति वक्तव्यम् । किं प्रयोजनम् । समासकन्विध्यर्थमेव । समासविध्यर्थं कन्विध्यर्थं च । समासविध्यर्थं तावत् । अर्धपञ्चमशूर्पम् । कन्विध्यर्थम् । अर्धपञ्चमकम् । अधिकग्रहणं चालुकि समासोत्तरपदवृद्ध्यर्थम् * । अधिकग्रहणं चालुकि कर्तव्यम् । किं प्रयोजनम् । समासोत्तरपदवृद्ध्यर्थम् । समासविध्यर्थमुत्तरपदवृद्ध्यर्थं च । समासविध्यर्थं तावत् । अधिकषाष्टिकः । अधिकसाप्ततिकः । उत्तरपदवृद्ध्यर्थम् । अधिकषाष्टिकः । अधिकसाप्ततिकः । अलुकीति किमर्थम् । अधिकषाष्टिकः । अधिकसाप्ततिकः । बहुव्रीहौ चाग्रहणम् * । बहुव्रीहौ चाधिकशब्दस्य ग्रहणं न कर्तव्यं भवति । संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येयइति । संख्येत्येव सिद्धम् । वह्वादीनामग्रहणम् * । वह्वादीनां ग्रहणं शक्यमकर्तुम् । केनेदानीं संख्याप्रदेशेषु संख्यासंप्रत्ययो भविष्यति । ज्ञापकात्सिद्धम् । ज्ञापकं किम् । यदयं वतोरिड्वेति संख्यायां विहितस्य कनो वत्वन्तादिटं शास्ति । वतोरेव तज्ज्ञापकं स्यात् । नेत्याह । योगापेक्षं ज्ञापकम् ॥

---

संख्यावाच्येव । तथा हि गण्यते । एको ऽध्यर्धो द्वौ अध्यर्धौ अर्द्धतृतीय इति । तन्मते नियमार्थमध्यर्धशब्दस्यैव संख्यात्वेन ग्रहणं यथा स्यात् सार्धादीनां मा भूदिति । वाक्यभेदेन च द्वितीयो नियमस्तस्य च समासकन्विध्यर्थं संख्यात्वं न कार्यान्तरार्थमित्यर्थः । अधिकषाष्टिक इति । अधिकया षष्ट्या क्रीत इति संख्याविशेषणमधिकशब्दो न संख्येति वचनम । तद्धितार्थेति समासः । प्राग्वतेष्ठञ् । अलुकीति वचनाल्लुकि कर्तव्ये संख्यासञ्ज्ञा नास्तीत्यध्यर्धपूर्वेति लुङ् न भवति । ततः संख्यायाः संवत्सरसंख्यस्य चेति उत्तरपदवृद्धिः । नतूत्तरपदवृद्ध्यर्थमिति । वचनाल्लुङ् न भविष्यति किमलुकीत्यनेन । नैतदस्ति । अर्हत्यर्थात् परेष्वर्थेषु यः प्रत्ययस्तस्य लुगभावात्तत्र चोत्तरपदवृद्धिः स्यात् । ज्ञापकात्सिद्धमिति । एकादिवन्नियतसंख्यावाचित्वं बह्वादीनां नास्तीति ज्ञापकाश्रयः । योगापेक्षमिति । अस्य योगस्य प्रत्याख्यानादेतद्योगापेक्षमिति न बोद्धव्यम । किन्तु योगानपेक्षत इति योगापेक्षम् । यदयं बहुपूगगणसङ्घस्य तिथुक् वतोरिथुक् षट्कतीति डटि परत आगमं शास्ति तज्ज्ञापयति भवति संख्याकार्यमिति ॥

---

धिकग्रहणं सङ्ख्यासंज्ञायां कर्त्तव्यमित्यर्थः । नन्विति । ञ्यादादिषु तद्विधानादिति भावः । परेष्वर्थेष्विति । तमधीष्ट इत्यादिष्वित्यर्थः । नियतसंख्यावाचित्वमिति । नियतविषयपरिच्छेदहेतुस्वरूपसङ्ख्यावाचित्वमित्यर्थः । भाष्ये ( यत्नर्यामिति )। न च वैपुल्यादिवाचिनामपि संख्याकार्यापत्तिः सङ्ख्यापदार्थे सम्बन्धिबह्वादिग्रहणाज्ञापनेन चरितार्थस्य सर्वथा तदसंबन्धिवैपुल्यादिवाचकग्रहणज्ञापने सामर्थ्याभावात् पूगादिभ्यो डडर्थे बहुगणेति सूत्रे कृतेपि ज्ञापकावश्यकत्वमिति भावः । केचित्तु 'वतोरिड्वे' त्यनेन सङ्ख्यानकरणत्वाभाववतामप्यन्येषां प्रयोगेषु दृश्यमानसङ्ख्याकार्याणां संख्याकार्यं ज्ञाप्यते । तेनाधिकादीनामपि सिद्धं तदाह । योगापेक्षमित्यर्थः । एतेन पूगादिभ्यः शसादिप्रसङ्गोपि वारित इत्याहुः ॥ २३ ॥

ष्णान्ता षट् ॥ २४ ॥ षट्संज्ञायामुपदेशवचनम् * । षट्संज्ञायामुपदेशग्रहणं कर्तव्यम् । उपदेशे षकारनकारान्ता संख्या षट्संज्ञा भवतीति वक्तव्यम् । किं प्रयोजनम् । शताद्यष्टनोर्नुम्नुडर्थम् । शतानि सहस्राणि । नुमि कृते ष्णान्ता षडिति षट्संज्ञा प्राप्नोति । उपदेशग्रहणान्न भवति । अष्टानामित्यत्राऽऽत्वे कृते षट्संज्ञा न प्राप्नोति । उपदेशग्रहणाद्भवति । उक्तं वा । किमुक्तम् । इह तावच्छतानि सहस्राणीति सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति । अष्टनोऽप्युक्तम् । किमुक्तम् । अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थमिति । अथवा आकारोऽप्यत्र निर्दिश्यते षकारान्ता नकारान्ता आकारान्ता च संख्या षट्संज्ञा भवतीति । इहापि तर्हि प्राप्नोति । सधमादो द्युम्न एकास्ताः ।

---

ष्णान्ता ॥ षट्संज्ञायमिति । प्रकृतिप्रत्ययादिविभागेन प्रतिपादनं गुरुैः प्रापणमुपदेशः । तेन प्रकृतिप्रत्ययाद्युपदेशे या षकारनकारान्ता संख्या सा षट्संज्ञेत्यर्थ । नुम्नुडर्थमिति । अर्थशब्दः प्रयोजनवाची तत्र नुमि शतानीत्यादौ षट्संज्ञानिवृत्तिः प्रयोजनम् । नुटि तु विधीयमाने षट्संज्ञाप्रवृत्तिः प्रयोजनम् । अष्टानामिति । परत्वान्नित्यत्वाच्चात्वे कृते नुटोऽप्राप्तिः कार्यकालत्वात्सञ्ज्ञायाः प्रवृत्तेर्नास्त्यन्तरङ्गत्वम् । अष्टनो दीर्घेति । तत्र हि दीर्घग्रहणमष्टस्विति सुप उदात्तत्वनिवृत्त्यर्थं क्रियते । यदि च कृतात्वस्य षट्संज्ञा न स्यात्तदा ऽष्टस्विति परत्वात् षट्स्वरो झल्युपोत्तममिति भविष्यतीति किं दीर्घग्रहणेन, कृतं च तत्कृतात्वस्यापि षट्संज्ञा ज्ञापयति ततश्च अपवादत्वात् षट्स्वरोऽनेन बाध्यतइति दीर्घपक्षइवादीर्घपक्षेऽपि विभक्तेः स्वरः स्यादिति कर्तव्यन्दीर्घग्रहणम् । एकास्ता इति । सङ्ख्यावाचित्वाऽभ्युपगमवादी व्यत्ययेन बहुवचनं

---

ष्णान्ता षट् ॥ स्वरूपप्रतिपत्त्यर्थोच्चारणस्यान्यत्रोपदेशत्वप्रसिद्धेरुपदेशग्रहणे पञ्चादिषु न स्यादत आह प्रकृतीति । प्रकृतिप्रत्ययविभागेन प्रतिपादनरूपं यद् गुरुैः प्रापणं तदुपदेशपदेनात्र गृह्यत इत्यर्थः । एतदभिप्रायेणैवोपदेशेऽजिति सूत्रे वक्ष्यति 'संकीर्णावुद्देशोपदेशाविति' प्रत्ययाद्युपदेश इति । आदिना ऽऽगमः यथा सप्तनादौ सप्त्यशूभ्यान्तुट् चेति । प्रकृत्यादिभिरुपदेशे प्रातिपदिकस्वरूपबोधने या ष्णान्ता संख्या निष्पन्ना भवति सेत्यर्थः । यद्यपि शतानीत्यादावपि नुमागमोपदेशेन नान्तसंख्यानिष्पत्तिरस्ति तथापि विभक्त्युत्पत्त्यवधिभूतप्रातिपदिकस्वरूपनिष्पादकानामेव तेषां ग्रहणं न तु विभक्तिनिमित्तकानामपि बहिरङ्गत्वादिति भावः । तत्रेति । नुमनुटारर्थः प्रयोजनं यस्येति बहुव्रीहिरिति भावः । नन्वन्तरङ्गत्वात्पूर्वमेव षट्त्वं प्रवृत्तमात्वेपि बहिरङ्गतया आत्वस्यासिद्धत्वान्न निवर्त्स्यतीत्यत आह । कार्यकालेति । सुप उदात्तत्वेति । अष्टन इति प्राप्तेस्यर्थः । आद्युदात्तत्वेति क्वचित्कोऽपपाठः । यद्वा दीर्घग्रहणं षट्त्वे यथोद्देशपक्षाश्रयणस्यैव ज्ञापकं तद्द्वारैव च षट्संज्ञाज्ञापकत्वं तत्पक्षे आत्वस्य बहिरङ्गतया ऽसिद्धत्वेन नान्तत्वबुद्ध्या षट्त्वपस्त्येव, स्पष्टं चेदमष्टनो दीर्घादित्यत्र कैयटे । किं च यथोद्देशपक्षे षट्त्वं स्थानिवद्भावेनापि सुलभं नकारान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य समुदायधर्मत्वेन तन्निमित्तकनुडादेरल्विधित्वाभावादिति बोध्यम् । न चात्वस्य नित्यत्वादष्टस्विति प्रयोग एवासङ्गत इति वाच्यम् । तद्वैकल्पिकत्वस्यापि ज्ञापनात् । यावता विनानुपपन्नं तत्सर्वं ज्ञाप्यत इति सिद्धान्तात् । परत्वादिति । अष्टन्स्वर आत्वपक्षे चरितार्थः । न च तत्प्रवृत्त्युत्तरमष्टस्वित्यादौ अष्टन्स्वरः स्यादेवेति वाच्यम् । सकृद्गतिन्यायाश्रयणात् । अपवादत्वादिति । न च स्वरप्रवृत्तेः पूर्वमन्तरङ्गत्वादेकादेशस्याप्रवृत्तेर्यद्धितुपरमित्यादिसूत्रस्य भाष्यसंमतत्वेनाष्टाविस्यादावष्टन्स्वरश्चरितार्थ इति वाच्यम् । अष्टनो घृतादित्वादन्तोदात्त-

एका इति। नैष दोषः। एकशब्दोऽयं बह्वर्थः। अस्त्येव संख्यापरः। तद्यथा। एको द्वौ बहव इति। अस्त्यसहायवाची। तद्यथा। एकाग्नयः। एकहलानि। एकाकिभिः क्षुद्रकैर्जितमिति। असहायैरित्यर्थः। अस्त्यन्यार्थे वर्तते। तद्यथा। प्रजामेका रक्षत्यूर्जमेकेति। अन्येत्यर्थः। सधमादो द्युम्न एकास्ताः। अन्या इत्यर्थः। तद्यो ऽन्यार्थे वर्तते तस्यैष प्रयोगः। इह तर्हि प्राप्नोति। द्वाभ्यामिष्टये विंशत्या चेति। एवं तर्हि सप्तमे योगविभागः करिष्यते। अष्टाभ्य औश्। ततः षड्भ्यः। षड्भ्यश्च यदुक्तमष्टाभ्योऽपि तद्भवति। ततो लुक्। लुक् च भवति। षड्भ्य इति। अथ वा उपरिष्टाद् योगविभागः करिष्यते। अष्टन आ विभक्तौ। ततो रायः। रायश्च विभक्तावाकारादेशो भवति। हलीत्युभयोः शेषः। यद्येवं

---

मन्यते। अन्यवाचित्वाश्रयं तूत्तरम्। इह तर्हीति। द्वाभ्यामिति। षट्स्वरः स्यात्। सप्तम इति अष्टाभ्य इति कृतात्वानुकरणादौश्त्वविधानसामर्थ्याच्च लुङ् न विधीयते। हलीति। ततश्चाष्टानामिति नुटि कृते आत्वं भवति। जश्शसोस्त्वष्टाभ्य इति कृतात्वनिर्देशाज् ज्ञापकादत्वं भवति। कृतात्वस्य हि निर्देशस्य प्रयोजनं यत्रात्वं तत्रौश्त्वं यथा स्यादिति। यदि ह्येतत्कृतात्वनिर्देशस्य प्रयोजनं न स्याल्लाघवार्थमष्टभ्य औशिति ब्रूयात्। यद्येवमिति। हलादावुच्यमानमात्वमौजसोर्न प्राप्नोतीति यत्राष्टार्थस्य प्राधान्यं तत्रौश्त्वेन भवितव्यम्। तत्रैव चौश्त्वेनात्वमनुमीयते इति

---

त्वेनैकादेश उदात्तेनेत्यंथ तत्रान्तोदात्तत्वसिद्धेः। घृतादावस्य पाठे चेदमेव भाष्ये मानम्। गौणे प्रियाष्टाभिरित्यादौ षट्स्वराष्टन्स्वरयोः प्रवृत्तिरस्त्येव। तेषामनभिधानाच्च। एतेन कत्वष्टन् शब्दोऽव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्त इति कष्टाभिरित्यस्यैकादेशस्वरेणासिद्धेस्तत्राष्टन्स्वरः सावकाश इति परास्तम्। तस्या व्यनभिधानात्। ननु संख्यावाचित्वे एका इति बहुवचनमनुपपन्नमन्यत्र तु षट्संज्ञायाः प्राप्तिरेव नेत्यत आह संख्येति। षट्स्वरइति। षट्त्रिचतुर्भ्यो हलादिरित्यनेन। न च षान्तनान्तसाहचर्यादाकारान्तो बहुवचनान्तएव गृह्यत इति नायं दोषः। साहचर्यस्य सर्वत्राव्यवस्थापकत्वमित्याशयात्। कृतात्वेति। ततश्च कृतात्वस्य कार्यकालपक्षे ऽसत्यपि षट्त्वे ऽतिदेशान्नुट्सिद्धिरित्यर्थः। औश्त्वेति। अत एव विभक्तौ जश्शसोरनुवृत्तिर्न। तथा हि सति लुगेवातिदिश्येतेति तद्वैयर्थ्यं स्पष्टमेव। विपरीतं तु न व्याख्यानात्। ततश्चेति। न च सन्निपातपरिभाषयात्वं न स्यात्। अष्टानामिति रूपन्तु नुटि नोपधाया इति दीर्घे नलोपे च सिद्धमिति वाच्यम्। असिद्धस्यापि तद्विघातकविधेरनया ऽप्रवृत्तिबोधनेन नलोपस्याप्यनापत्तेः। अत एव पुग्घ्रस्वत्वस्यानिमित्तं स्यादवीवपदिति भाष्ये कृन्मेजन्तसूत्रे उक्तम्। जानातेर्ह्रस्वे न ज्ञापकेन ह्रस्वविषये तदप्रवृत्तिरिति च कैयटो वक्ष्यति। अन्यथा पुगपेक्षया ह्रस्वस्य बहिरङ्गासिद्धतया तस्या अप्राप्तौ भाष्यासङ्गतिः स्पष्टैव। किं चातिदेशिकनिमित्तविघाताभावमादाय नास्या अप्रवृत्तिः। एवं हि लक्ष्मीस्यादौ संबुद्धिह्रस्वे कृते संबुद्धिलोपे कृतेपि प्रत्ययलक्षणेन निमित्तविघाताभावात्तन्नास्या अप्रवृत्तिः। व्याप्तिपरतत्सूत्रस्यभाष्यविरोधः। किं च गव्यितस्यादौ संनिपातपरिभाषया लोपो नेति सिद्धान्तभङ्गः। वस्तुतस्तु षट्त्वसन्निपातनिमित्तको नुट् न यलोपस्य बहिर्भूततृतीयनिमित्तकत्वेन बहिरङ्गतया ऽसिद्धत्वात्। वस्तुतस्तु षट्त्वसन्निपातनिमित्तको नुट् न च तस्य सान्निपातस्यात्वं विघातकं नापि नलोपः स्थानिवद्भावेन तयोः कृतयोरपि षट्त्वसत्त्वात्तत्र पक्षे दीर्घे ऽष्टन्स्वरव्यावृत्त्यर्थं सदात्वविकल्पज्ञापनार्थमिति बोध्यम्। महद्यां पुनः प्रसङ्गपक्षे अष्टभिरित्यत्र षट्स्वरे कृते ऽष्टन्स्वरव्यावृत्त्यर्थं सदात्वविकल्पज्ञापनार्थमिति बोध्यम्। अजादावौर्जश्शसोस्तत्रात्वं न स्यादत आह जश्शसोरिति। भाष्ये ( प्रियाष्टान इति प्राप्नोतीति )। इत्येव प्राप्नोतीत्यर्थः। अन्यथा ऽपकर्षाभावेपि आत्वस्य वैकल्पिकतया तस्य दुर्वारत्वेन भाष्यासङ्गतेः। ननु जसि ज्ञापकसिद्धात्वप्राप्तेरौश्च प्राप्नोत्यत आह यत्रेति। बहुवचननिर्देशादिति भावः। षड्भ्य इत्येतत्साहचर्यादस्य प्राधान्ये एव प्रवृत्तिरिति भावः। तस्य च

प्रयाष्टौ प्रियाष्टा इति न सिध्यति। प्रियाष्टानौ प्रियाष्टान इति प्राप्नोति। यथालक्षणमप्रयुक्ते॥

डति च॥२५॥ इदं डतिग्रहणं द्विः क्रियते संख्यासंज्ञायां षट्संज्ञायां च। एकं शक्यमकर्तुम्। कथम्। यदि तावत् संख्यासंज्ञायां क्रियते षट्संज्ञायां न करिष्यते। कथम्। ष्णान्ता षडित्यत्र डतीत्यनुवर्तिष्यते। अथ षट्संज्ञायां क्रियते संख्यासंज्ञायां न करिष्यते। डति चेत्यत्र संख्यासंज्ञाऽप्यनुवर्तिष्यते॥

---

अत्रप्यात्वमत्र ज्ञापकान्न प्राप्नोति, विभक्तिमात्रे त्वात्वं विधीयमानमौजसोः सिध्यति। अष्टन आ विभक्तावित्यत्र पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति तदन्तविधिसद्भावाद्बहुवचननिर्देशाभावाद् गुणभूतेप्यष्टार्थे आत्वेन भाव्यमित्यत्रापि सिद्धयतीति प्रश्नः। यथालक्षणमिति। यस्य विशिष्टः प्रयोगो न स्मर्यते नापि प्रयोगनिषेधस्मृतिः तद्यथालक्षणमनुगन्तव्यम्। तदत्र मा भूदात्वमित्यर्थः। नैव वा लक्षणमप्रयुक्ते प्रवर्तते प्रयुक्तानामेव लक्षणेनान्वाख्यानात्॥२४॥

डति च॥ यदि तावदिति। तत्र वतुसाहचर्यात्तद्धित एव डतिर्गृह्यते न तु पातेर्डतिः कृत्। अथेति। तत्र सङ्ख्यासंज्ञाया अनुवर्त्तनादन्वर्थत्वाच्च तस्याः सङ्ख्याप्रश्नविषय एव डतिर्गृह्यते न त्वौणादिकः॥२५॥

---

यथा प्रकारान्तरेण गौणे ऽप्रवृत्तिस्तथा सर्वादिसूत्रे उपपादयिष्यते। शुद्धलक्षणैकचक्षुष्कस्यायं पूर्वपक्षित्वामिति तात्पर्यम्। औश्त्वेनेति। औशेत्यर्थः। त्वप्रत्ययप्रयोगस्तु अनुकरणात् अनुकार्यरूपे भावे इति बोध्यम्। आत्वे इत्यादिभाष्यप्रयोगात्। औश्त्वेनेति। तद्विधायकसूत्रस्यात्वनिर्देशेनेत्यर्थः। अत्र गौणे। ज्ञापकादिति। अस्य प्राप्तियोग्यमपीति शेषः। क्वचित्तु ज्ञापकादिति न दृश्यते। नन्वपकर्षपक्षेपि अष्टनो विहितमात्वं कथन्तदन्ते स्यादत आह पदाङ्गेति। बहुवचननिर्देशाभावादिति। साहचर्याभावादित्यपि बोध्यम्। लक्षणैकचक्षुष्कस्यैवोत्तरमिति मत्वा व्याचष्टे तत्र मा भूदात्वमिति। पक्षान्तरेपि अनभिधानादात्वाभाव एव बोध्यः। यत्तु भवत्येवात्रात्वमित्यर्थ इति तन्न। अपकर्षपक्षे आत्वसाधकोपायाभावेन फलभेदापत्तेः। नन्वयं भाष्यार्थो न युक्तः। तथा हि सतीष्यत एवैतदित्येव ब्रूयात्। किं चाप्रयुक्ते इति वाक्यशेषो ऽसङ्गतः प्रयुक्ते ऽपि लक्षणानतिक्रमसत्त्वात् प्रयुक्तानां हीदमन्वाख्यानमिति भाष्योक्तेश्चेत्यरुचेराह नैव वेति। लक्षणस्याभावो ऽलक्षणं तस्य योग्यता यथालक्षणमित्यव्ययीभावः। अप्रयुक्ते लक्षणाभावस्य योग्यता न तु लक्षणस्येत्यर्थः। एवञ्च तादृशप्रयोगो ऽसाधुरिति भावः। किं च भाष्यकारस्य लक्ष्यैकचक्षुष्कतया इयमेव व्याख्या ज्यायसी। एवञ्च हरदत्तादीनां प्रियाष्टन्शब्दादिषु आत्वादिप्रवृत्तिविचारो ऽन्यश्च तत्प्रयोगविचारः प्रामादिक एवेत्यवधेयम्। एतेन पूर्वव्याख्याने ऽस्य साधुत्वमुत्तरव्याख्याने ऽसाधुत्वमिति विरुद्धार्थकव्याख्यानद्वयमयुक्तं, किं च अष्टाभ्य इति निर्देशात्कृताकारादेवाष्टनो जश्शसोरौशिति तद्विषये ऽप्यात्वम्। अन्यथा ऽष्टन इत्येव ब्रूयादिति साम्प्रतिकभाष्ये एकवचननिर्देशात् प्रधान एवौशात्वे इति प्रश्नाशयोपि चिन्त्य इत्यपास्तम्। गौणे प्रियाष्टादीनामनभिधानमित्यत्रस्यसिद्धान्तानुसारेण तद्भाष्यस्य सत्त्वात्। अरुच्यैव व्याख्यानन्तरप्रवृत्तेश्च॥२४॥

डतिच॥२५॥ भाष्ये (यदि तावदिति) ष्णान्ता च षडिति सूत्रं पाठ्यं तत्र चकाराद्यत्नात्स्वरितलिङ्गात्तनुवर्त्तमानं डतिग्रहणं संभन्त्स्यत इति भावः। ननु पातेरिति। एवञ्चार्थाधिकारादिहापि तद्धितस्यैव ग्रहणमिति भावः। सङ्ख्येति महासंज्ञासामर्थ्यात्तत्र सङ्ख्याप्रश्नविषयडतेरेव ग्रहणमित्यपि बोध्यम्। भाष्ये (डतिचेत्यत्रेति) चकारात्षट्संज्ञानन्तरं करणाच्चानेन संज्ञाद्वयस्यापि विधानमित्यर्थः। अन्वर्थत्वाच्चेति। संख्यायते ऽनयेति हि सः। न च तस्यार्थस्य डत्यन्ते संभवः। सङ्ख्याप्रश्नविषयत्वन्तु न तदर्थ इति चिन्त्यमेतत्। तस्मादुणादीनामव्युत्पन्नत्वान्न तत्र डतिरिति तस्याग्रहणमित्युचितम्। व्युत्पत्तावपि पातेः क्तिनापि सिध्यतीति न तत्र डतिनियम इति बोध्यम्। संङ्ख्याप्रश्नेति। संनियोगशिष्टन्यायाच्च षट्संज्ञापि तस्यैवेति भावः॥२५॥

क्तक्तवतू निष्ठा ॥ २६ ॥ निष्ठासंज्ञायां समानशब्दप्रतिषेधः * । निष्ठासंज्ञायां समानशब्दानां प्रतिषेधो वक्तव्यः । लोतो गर्त इति । निष्ठासंज्ञायां समानशब्दाप्रतिषेधः * । निष्ठासंज्ञायां समानशब्दानामप्रतिषेधः । अनर्थकः प्रतिषेधो ऽप्रतिषेधः । निष्ठासंज्ञा कस्मान्न भवति । अनुबन्धोऽन्यत्वकरः । अनुबन्धः क्रियते सोऽन्यत्वं करिष्यति । अनुबधो ऽन्यत्त्वकर इति चेन्न लोपात् * । अनुबन्धो ऽन्यत्त्वकर इति चेत्तन्न । किं कारणम् । लोपात् । लुप्यते ऽत्रानुबन्धः । लुप्ते ऽत्रानुबन्धे नान्यत्त्वं भवति । तद्यथा । कतरदेवदत्तस्य गृहम् । अदो यत्राऽसौ काकइति । उत्पतिते काके नष्टं तद्गृहं भवति । एवमिहापि लुप्ते ऽनुबन्धे नष्टः प्रत्ययो भवति । यद्यपिं लुप्यते जानाति त्वसौ सानुबन्धकस्येयं संज्ञा कृतेति । तद्यथा । इतरत्रापि कतरद्देवदत्तस्य गृहम् । अदो यत्रासौ काक इति । उत्पतिते काके यद्यपि नष्टं तद्गृहं भवति । अन्ततस्तमुद्देशं जानातीति । सिद्धविपर्यासश्च * । सिद्धश्च विपर्यासः । यद्यपि जानाति संदेहस्तु तस्य भवति । अयं स तशब्दो लोतो गर्त इति अयं स तशब्दो लूनो गीर्ण इति । तद्यथा । इतरत्रापि कतरद्देवदत्तस्य गृहम् । अदो यत्रासौ काक इति । उत्पतिते काके यद्यपि तमुद्देशं जानाति सन्देहस्तस्य भवति इदं तद्गृहमिदं तद्गृहमिति । एवं तर्हि कारककालविशेषात् सिद्धम् । * । कारककालविशेषाद्युपादेयौ । भूते मस्तशब्दः कर्मणि कर्तरि भावे चेति । तद्यथा । इतरत्रापि य एष मनुष्यः प्रेक्षापूर्वकारी भ-

क्तक्तवतू निष्ठा ॥ इहानुबन्धाः कार्यार्थमुपादीयन्ते । प्रयोगश्चैषां लुप्तत्वान्नास्ति । यत्र च सारूप्यं तत्र च सन्देहः । कथमस्यानुबन्धकार्यं कृतमस्य तु न कृतमिति पूर्वपक्षाऽभिप्रायः । सिद्धान्तवादी तु मन्यते । अध्रुवेणानुबन्धेन नियतसन्निधाना अर्थाः कारककालादयो लक्ष्यन्ते । तद्दर्शनादनुबन्धस्मृतौ च तल्लक्षितानां कार्याणां साधुत्वं विज्ञायते । तत्र यदा देवदत्तेन लूनः शालिरिति कश्चित्प्रयुङ्क्ते तदा लक्षणज्ञः कर्मभूतकालाऽवगमात् क्तप्रत्ययं मन्यते । यदा तु लोतमालभेतेति प्रयोगस्तदा मेषवाची लोतशब्दस्तन्प्रत्ययान्तः प्रयुक्त इति मन्यते । सिद्धविपर्यास इति । सिद्धो विपर्यासः संशय इत्यर्थः । इदं तद्गृहमिति । बुद्धेरनवस्थितत्वमनेन प्रतिपाद्यते । न त्वेतद् द्विवे-

क्तक्तवतू ॥ अनुबन्धानां नित्यलुप्ततया विशेषणत्वासंभवादुपलक्षणत्वेन तशब्दमात्रस्योपलक्ष्यत्वं मन्यमानो वार्त्तिकमारभत इत्याह इहेति । सारूप्यं, प्रयोगे इति शेषः । मन्यतइति । निश्चिनोतीत्यर्थः । नियतं संनिधानं येषामिति विग्रहः । कारकेति । न तशब्दमात्रं लक्ष्यं किं स्वर्थविशेषाद्यवच्छिन्नामिति भावः । तद्दर्शनादिति । कालादिज्ञानादित्यर्थः । तन्प्रत्ययान्तइति । ककारानुपलक्षितः प्रयुक्त इति निश्चिनोतीत्यर्थः । भाष्ये । ( नष्टं गृहमिति ) । अज्ञातमित्यर्थः । नष्टः प्रत्ययइति । अज्ञातानुबन्धः प्रत्ययो भवतीत्यर्थः । सानुबन्धकस्येति । पूर्वं यः ककारवांस्तस्येत्यर्थः । उद्देशम् ऊर्ध्वदेशम् सिद्धविपर्यासश्चेति । चस्त्वर्थे । सिद्धस्तु विपर्यास इत्यर्थः । यद्यपि विपर्यासो भ्रमात्मकनिश्चयस्तथाप्ययथार्थत्वसाम्यादिह संशयोऽभिमत इत्याह संशयइति । बुद्धेरनवस्थितत्वामिति । संन्देहाभिनय इत्यर्थः । वीप्सादीति । पदार्थविषयव्याप्तीच्छाप्रयोक्तृधर्मो हि वीप्सेति भावः । भाष्ये [ कारकेति ] । कालातिरिक्तप्रत्ययार्थपरम् । [ वेदिकां

वति सो ऽध्रुवेण निमित्तेन ध्रुवं निमित्तमुपादत्ते वेदिकां पुण्डरीकं वा । एवमपि प्राकीर्ष्टेत्रापि प्राप्नोति । लुङि सिजादिदर्शनात् * । लुङि सिजादिदर्शनान्न भविष्यति । यत्र तर्हि सिजादयो न दृश्यन्ते । प्राभित्तेति । दृश्यन्ते ऽत्रापि सिजादयः । किं वक्तव्यमेतत् । नहि । कथमनुच्यमानं गंस्यते । यथैवायमनुपदिष्टान् कारककालविशेषानवगच्छति । एवमेतदप्यवगन्तुमर्हति । यत्र सिजादयो नेति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
प्रथमाध्यायस्य प्रथमे पादे पञ्चममाह्निकम् ॥५॥

सर्वादीनि सर्वनामानि ॥ २७ ॥ सर्वादीनीति कोऽयं समासः । बहुव्रीहिरित्याह । कोऽस्य विग्रहः । सर्वशब्द आदिर्येषां तानीमानीति । यद्येवं

---

चनं वीप्साद्यर्थाभावात् । प्राकीर्ष्टेति । अत्र भूतकालो ऽस्तीति भावः । दृश्यन्तेत्रेति । सिजादीत्यादिशब्दः प्रकारे तत्र प्राभित्त घटं देवदत्त इति प्रयोगे कर्तृकत्वाद्यवगमाल्लुङन्तस्यायं प्रयोगो न निष्ठान्तस्येति प्रतिपद्यते । अञ्जिघृषिधृषिभ्यः क्त इत्यस्य निष्ठासंज्ञा न भवति । उणादीनामव्युत्पन्नत्वाद्बाहुलकाद्वा अन्यथा निष्ठा च द्व्यजनादित्याद्युदात्तत्वं स्यात् ॥ २६ ॥

इति श्री कैयटकृते भाष्यप्रदीपे प्रथमाध्यायस्य प्रथमपादे पञ्चममाह्निकम् ॥

सर्वादीनि सर्वनामानि ॥ कोऽयमिति । ननु नपुंसकबहुवचननिर्देशादेव बहुव्रीहिनिश्चयात्समासान्तराशङ्कैव नास्तीति प्रश्नानुपपत्तिः । एवं तर्हि किमयं बहुव्रीहिरेवाहोस्विद्बहुव्रीहितत्पुरुषयोरेकशेषः । यथा कतन्तेभ्यः कण्वादिभ्य इति चेति प्रश्नः । तत्र सारूप्यार्थं सर्वश्चासावादिश्च सर्वादिरित्यत्रादिशब्द उपादीयते न त्वस्य प्रयोजनान्तरमस्तीति तत्र नपुंसकमनपुंसकेनेति वा स्वरभिन्नानां यस्योत्तरस्वरविधिः स

---

पुण्डरीकं वेति ] भाष्ये । एवञ्च साक्षादितरव्यावर्त्तकं विशेषणम् । स्वोपस्थाप्यार्थद्वारा इतरव्यावर्त्तकमुपलक्षणमिति भावः । प्राकीर्ष्टेति । यद्यप्यत्र निघातप्रवृत्तेर्न निष्ठास्वकृतो विशेषस्तथापि यन्माप्रकीर्ष्टस्यस्योपलक्षणमिदम् । अत्र हि निपातैर्यदीति निघाते निषिद्धे निष्ठा च द्व्यजनादित नित्यमाद्युदात्तत्वं स्यात् । असंज्ञायामपि तत्प्रवृत्तिं मन्यते आदिः सिचइति विकल्पस्त्विष्यत इति भावः । सिचो ऽत्र लुप्तत्वनादर्शनादाह आदिशब्दइति । अञ्जिघृषीति । यद्यप्यत्रोपलक्ष्यकालकारकाद्यभावस्तथापि गुणाभावदर्शनात् क्तोऽयमित्यवगतिः । एवञ्च सनादिविधावित्संज्ञकनकारोपलक्षितः प्रकृत्यर्थानुवादी इच्छार्थो वा सकारो भवतीत्यर्थः । अनुवादे सन्यत इत्यादौ तादृशनकारोपलक्षिते सकारे इत्यर्थः । अत एवाटअत्यादेः सार्थक्यम् । अन्यथा यत्र सूत्रे आण् न तत्र वृद्धिरिष्यते यत्र चेष्यते प्रयोगे न तत्राडिति तद्व्यर्थं स्पष्टमेवंपि सर्वमवदातम् ॥ २६ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते भाष्यप्रदीपोद्योते प्रथमाध्यायस्य
प्रथमे पादे पञ्चममाह्निकम् ॥ ५ ॥

सर्वादी ॥ नन्विति । आदिशब्दस्य नित्यपुंस्त्वेन एकवचनान्तत्वेन च समासान्तरे नपुंसकत्वबहुत्वानुपपत्तेरिति भावः । प्रकृते तत्पुरुषः कर्मधारयः । दृष्टान्ते षष्ठीतत्पुरुषः । नत्वस्येति । कर्मधारयघटकस्येत्यर्थः । बहुव्रीहेरेवं शेषे युक्तिमाह तत्र नपुंसकमिति । तत्पुरुषस्तु पुंलिङ्ग इति भावः । स्वरभिन्नानामिति । स्वरेण विलक्षणानां मध्ये उत्तरसूत्रेण यस्य स्वरविधिरित्यर्थः । कर्मधारयः समासस्येत्यन्तोदात्तः । परस्तु बहुव्रीहौ प्रकृत्येति, परशास्त्रेणान्तोदात्तपूर्वपद इति बोध्यम् । तत्राद्ये सर्वशब्दस्य संज्ञा न प्राप्नोति ।

सर्वशब्दस्य सर्वनामसंज्ञा न प्राप्नोति। किं कारणम्। अन्यपदार्थत्वाद्बहुव्रीहेः। बहुव्रीहिरयमन्यपदार्थे वर्तते। तेन यदन्यत्सर्वशब्दात्तस्य सर्वनामसंज्ञा प्राप्नोति। तद्यथा। चित्रगुरानीयतामित्युक्ते यस्य ता गावो भवन्ति स एवानीयते न गावः। नैष दोषः। भवति हि बहुव्रीहौ तद्गुणसंविज्ञानमपि। तद्यथा। चित्रवाससमानय लोहितोष्णीषा ऋत्विजः प्रचरन्तीति। तद्गुण आनीयते तद्गुणाश्च प्रचरन्ति। इह सर्वनामानीति पूर्वपदात्संज्ञायामग इति णत्वं प्राप्नोति तस्य प्रति-

---

शिष्यतइति वा बहुव्रीहेः शेषः। वक्ष्यमाणेन न्यायेन विनाप्येकशेषेण सर्वशब्दस्य संज्ञा सिध्यतीति मत्वाह बहुव्रीहिरिति। एवमपि संदेहः किं प्राथमकल्पिको बहुव्रीहिः। अथ बहुव्रीहितत्पुरुषयोरेकशेषेण बहुव्रीहिरिति पृच्छति कोस्य विग्रह इति। तानीमानीति। अन्यपदार्थस्य प्राधान्यं प्रदर्श्यते। अन्यथा यथा चित्रा गावोस्येति गवां विशेष्यत्वं तद्वतश्च विशेषणत्वमवगम्यते तथेहाप्यवगम्येत। अत्र चार्थे बहुव्रीहेर्नेष्यते। यदा तु स्वामिनः प्राधान्यं गवां विशेषणभावस्तदा तु बहुव्रीहिः। अत एव चित्रा गावो यस्य स चित्रगुरिति स्वामिनः प्राधान्यं प्रदर्श्यते। तानीमानीति सर्वनामद्वयोपादानेन प्रत्यक्षविषयत्वादिदंशब्दस्य गणपठितेषु सर्वशब्दस्यान्तर्भावात्तद्गुणसंविज्ञानं सूचयति। तस्यान्यपदार्थस्य गुणा उपलक्षणानि तेषामपि कार्ये संविज्ञानं तद्गुणसंविज्ञानम्। तत्र चित्रगुरानीयतामिति स्वस्वामिभावसंबन्धः षष्ठ्यर्थ इति स्वविशेषोपलक्षितस्य स्वामिन एवानयनं न तु गवाम्। दण्डी विषाणी चानीयतामित्यत्र तु संयोगसमवायलक्षणेन संबन्धेन संबन्धिनि कार्ये विज्ञायमाने उपलक्षणस्याप्यन्तर्भावो भवति। इहाप्यादिशब्दस्यावयववाचित्वादुद्भूतावयवभेदस्समुदायस्समासार्थः। तस्य च समुदायस्य युगपल्लक्ष्ये प्रयोगाभावात्तदन्तर्भूतानामेव पृथक् प्रयोगत्वात्कार्यार्थतया संज्ञया भवितव्यमिति सर्वशब्दस्यापि सा सिध्यति। यथा देवदत्तशालायां ब्राह्मणा आनीयन्तामित्युक्ते देवदत्तोपि यदि ब्राह्मणो भवति स्वशालास्थश्च तदा-

---

अन्त्ये तु सिध्यतीति विशेषः। वक्ष्यमाणेन। तद्गुणसंविज्ञाने। प्राथमकल्पिकः। एकशेषनिरपेक्षत्वेन प्रथमप्रतीतः। वक्ष्यमाणन्यायानभिज्ञस्य प्रश्न इति भावः। विग्रहप्रश्नोत्तरं तानीत्याद्याधिककथनमयुक्तमत आह अन्यपदार्थस्येति। नेष्यत इति। प्रथमान्तानामन्यपदार्थप्राधान्ये बहुव्रीहिविधानादिति भावः। नन्वेवमपि तानीत्येव सिद्धे इमानीति व्यर्थमत आह सर्वनामद्वयेति। सर्वनामद्वयोपादानेन तद्गुणसंविज्ञानं सूचयतीत्यन्वयः। प्रत्यक्षेति। उद्भूतावयवभेदस्य गणपाठितस्य समुदायस्येदमा परामर्शात्तत्र च सर्वशब्दस्यान्तर्भावादिति भावः। गुणाश्च दर्शयति उपलक्षणानीति। प्रकारतया ऽन्वयीनीत्यर्थः। कार्ये संविज्ञानमिति। तच्च द्वेधा। क्वचिद् विशिष्टस्य क्रियायां संनिधानमात्रेण यथा क्रियायोगाभावेपि शुक्लवाससं भोजयेति। क्वचित्तु विशेषणस्यापि क्रियायोगेन यथा शुक्लवाससं पश्येति। कार्ये यत्र तद्भावभावि तत्र तद्गुणत्वमित्यर्थः फलितः। एवं तद्गुणसंविज्ञाने तद्विशिष्टस्येतरान्वयः। अन्यत्र तदुपलक्षितस्येत्यपि भेदः। अयं शब्दशक्तिस्वभावगम्योन्तर्भावः कार्यित्वम्, कार्यसंनिहित्वं वा। एवञ्च, यत्र संयोगसमवायान्यतरसंबन्धेन संबन्ध्यन्यपदार्थस्तत्र तद्गुणः। अन्यत्रातद्गुण इत्युत्सर्ग इति गोलार्थः। ननु प्रकृते न संयोगो नापि समवाय इत्यत आह इहापीति। एवञ्च समवायेन सम्बन्धिनो ऽन्यपदार्थत्वेन तद्गुणत्वमंशोचितमित्यर्थः। बहुवचनोपपत्तये आह उद्भूतावयवभेदइति। अवयवगतसंख्यारोपेण बहुवचनमिति भावः। नन्वेवं समुदायस्यैव संज्ञा स्यादत आह तस्य चेति। युगपत्प्रयोगाभावात् पृथक् प्रयोगसत्वाच्च कार्यार्थया संज्ञया तदन्तर्भूतानामेव प्रवर्तितव्यमित्यन्वयः। 'पृथक् प्रयोगत्वादिति' पाठे बहुव्रीहेस्त्वो बोध्यः। सिध्यतीति। विनिगमनाविरहादिति भावः। नन्वेवं सर्वशब्दस्य सम्बन्धिविशेष्य-

षेधो वक्तव्यः । सर्वनामसंज्ञायां निपातनाण्णत्वाभावः ॥ सर्वनामसंज्ञायां निपातनाण्णत्वं न भविष्यति । किमेतन्निपातनं नाम । अथ कः प्रतिषेधो नाम । अविशेषेण किं चिदुक्त्वा विशेषेण नेत्युच्यते । तत्र व्यक्तमाचार्यस्याभिप्रायो गम्यते इदं न भवतीति । निपातनमप्येवंजातीयकमेव । अविशेषेण णत्वमुक्त्वा विशेषेण निपातनं क्रियते । तत्र व्यक्तमाचार्यस्याऽभिप्रायो गम्यते इदं न भवतीति । ननु च निपातनाच्चाऽणत्वं स्यात् यथा प्राप्तं च णत्वम् । किमन्ये ऽप्येवं विषयो भवन्ति । इको यणचीति वचनाद् यण् स्यात् । यथाप्राप्तश्चेक् श्रूयेत ।

---

सोप्यानीयतएव । णत्वं प्राप्नोतीति । राजपुरुषादिवत्संज्ञाशब्दा अपि शास्त्रप्रक्रियायां सन्तमसन्तं वावयवार्थमाश्रित्य व्युत्पाद्यन्तइति णत्वप्रसङ्गः । प्रयोगे च सणत्वा अणत्वाश्च नित्या एव शब्दाः । तत्र संज्ञायां सणत्वा एव साधवो ऽसंज्ञायां त्वणत्वा एवेति शास्त्रव्यापाराण्णत्वं प्राप्नोत्येव । सर्वार्थाभिधानयोग्यशब्दस्य शक्तिनियममात्रं संज्ञाकरणमिति शब्दार्थसम्बन्धनित्यत्वस्यापि न विरोधः । निपातनादिति । लोकेप्ययं णत्वरहित एव प्रयुज्यते तस्यात्र प्रसङ्गेन साधुत्वं प्रतिपाद्यते । किमेतदिति । भवत्वस्य साधुत्वं णत्वप्रतिषेधे त्वस्य तात्पर्याभावाद्विकल्पः प्राप्नोतीति भावः । इतरः प्रतिषेधेन साम्यं प्रतिपादयितुं पर्यनुयुङ्क्ते । अथ क इति । सर्वत्रैव ह्यप्राप्त्यनुमानं बाधः । निपातनञ्चापि णत्वाप्राप्त्यनुमानमिति भावः । ननु चेति । प्रतिषेधस्य निवृत्तावेव तात्पर्यम् । निपातनस्य तु तद्रूपसाधुत्वप्रतिपादने न तु रूपान्तरनिवृत्ताविति भावः । इको यणचीति । यणो हि साधुत्वं प्रतिपाद्यते न त्विग्निवृत्तिरित्यर्थः । षष्ठ्यात्रेति । ततश्च संहिताविषये स्वाभाविको ऽप्रयोग इकः षष्ठीनिर्देशेन प्रतिपाद्यते यथा दर्भाणां स्थाने

---

स्वाभावात्कथं तस्य सर्वनामत्वमत आह यथेति । स्वरूपेणोपलक्षणमपि सर्वशब्दः समुदायान्तर्भूततया सम्बन्धविशेष्योऽपि । यथा देवदत्तत्वेन विशेषणमपि देवदत्तो ब्राह्मणत्वेन विशेष्य इति भावः । ( अन्यपदार्थत्वादिति ) भाष्यस्थान्यः पदार्थो यस्य तत्त्वादित्यर्थः । ननु सर्वनामशब्दो यदि व्युत्पन्नस्तदा संज्ञोपसर्जनप्रतिषेधवार्त्तिकारम्भानुपपत्तिर्नोचेत्पूर्वोत्तरपदविभागाभावात् पूर्वपदाश्रिति णत्वाप्राप्तिरत आह राजेति । सन्तमन्वर्थसंज्ञायाम् । असन्तं शुद्धरूढे रथन्तरादौ । आश्रित्येति । द्वितीयविषये आरोप्येत्यर्थकं सामविशेषे रथकरणकतरणकर्तृत्वमारोप्य साधुत्वान्वाख्यानं यथा तथा सर्वार्थवाचकस्वरूपार्थमारोप्य प्रकृतेपीति न वार्त्तिकानुपपत्तिर्नापि णत्वाप्राप्तिरिति भावः । ननु शब्दनित्यताविरोधात्कथमसतो णत्वस्यापादानमत आह प्रयोगे चेति । ननु संज्ञा चेत्कृत्रिमा तदा शब्दार्थसंबन्धनित्यताहानिरसंज्ञा चेन्न णत्वप्राप्तिरत आह सर्वार्थेति । शक्तिनियमनं शक्तिसंबन्धबोधनमेवेत्याहुः । न च 'भृञो संज्ञायामि'ति सूत्रे भाष्ये यदेत्संज्ञायां विधीयते तत्र न संज्ञायामभिधेयायामित्यर्थः । किं तर्हि तत्तत्कार्यविशिष्टेन चेत्संज्ञा गम्यत इत्यर्थ इति वक्ष्यते । ततश्चात्र कथं णत्वाप्राप्तिः । न हि कृतणत्वेन संज्ञावगतिरत एव रघुनाथादिशब्दे न णत्वमिति वाच्यम् । आधुनिकविनियोगस्थले शास्त्रानुगतस्यैव विनियोग उचित इत्याशयात् । अत एव महत्याः संज्ञायाः करणे एतत्प्रयोजनमिति वक्ष्यमाणं सङ्गच्छते । अनादिविनियुक्तसंज्ञास्थले तु यथा विनियुक्तानामेव साधुत्वमिति रघुनाथादौ णत्वभावो ऽध्वपरिमाणसंज्ञाभूतगव्यूतिशब्दे च न वलोपः संज्ञात्वभङ्गापत्तेरिति दिक् । सौत्रत्वादित्यत्र कुतो नोक्तमत आह लोकेइति । साम्यं दर्शयति । सर्वत्रैवेति । निपातनञ्चेति । भावाभावयोरेकत्र विरोधादिति भावः । नन्विति । प्रयोगभेदेन च भावाभावविरोधपरिहार इति भावः । भाष्ये [ किमन्येपीति ] । अन्योपि विधयः किमेवंजातीया इति वक्ष्यमाणाभिप्रायेण प्रश्नः । आशयानभिज्ञ उत्तरयति । [ भवन्तीति ] । यथा स्थानिवदादेश इत्येतद्विषये स्थानिप्रयुक्तं भवति यथा प्राप्तस्यादेशप्रयुक्तस्य न निवृत्तिरिति भावः । शङ्कते । इको यणीति । अस्य यदि भवन्तीत्यादिः । ततश्च संहितेति । स्थानिनो निवृत्तिर्नाम तत्साधुत्वबुद्धनिवृत्तिः । सा च संहितायां शाकलाभावे इति

नैष दोषः । अस्त्यत्र विशेषः । षष्ठ्या ऽत्र निर्देशः क्रियते । षष्ठी च पुनः स्थानिनं निवर्तयति । इह तर्हि कर्तरि शप् दिवादिभ्यः श्यन्निति वचनाच्च श्यन् स्यात् । यथाप्राप्तश्च शप् श्रूयेत । नैष दोषः । शबादेशाः श्यन्नादयः करिष्यन्ते । तत् तर्हि शपो ग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । कर्तरि शबिति । तद्वै प्रथमानिर्दिष्टम् । षष्ठीनिर्दिष्टेन चेहार्थः । दिवादिभ्य इत्येषा पञ्चमी शबिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति । तस्मादित्युत्तरस्येति । प्रत्ययविधिरयम् । न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति । नायं प्रत्ययविधिः । विहितः प्रत्ययः प्रकृतश्चानुवर्तते । इह तर्हि अव्ययसर्वनाम्नामकच् प्राक् टेरिति वचनाच्चाकच् स्याद् यथाप्राप्तश्च कः श्रूयेत । नैष दोषः । नाप्राप्ते हि के ऽकजारभ्यते स बाधको भविष्यति । निपातनमप्येवंजातीयकमेव ।

---

शरैः प्रस्तरितव्यमिति न तत्र दर्भाः प्रस्तीर्यन्ते ॥ इह तर्हीति । विकल्पः प्राप्नोतीति भावः । समुच्चयस्तु न भवति एकेन परदेशस्याऽवष्टब्धत्वाद्धातुसार्वधातुकयोरुभयोरर्थाभिधाने एकेनैव साहायकस्य सम्पादनात् । शबादेशा इति । श्यनश्च शित्करणं ज्ञापकं स्थानिवद्भावाभावस्य । तेन करोतीत्युप्रत्ययस्याऽपित्त्वादनुदात्तत्वं न भवति कुर्वन्तीत्यत्र शप्श्यनोर्नित्यमिति नुमागमो न भवति । आदित्यधिकाराद्वा । रुधादिभ्यः श्नमित्यत्र रुधादीनां श्रुतत्वात्तेषामेवान्त्यादचः परः श्नम् भवति न तु शपः परः । यथा च भ्रस्जो रोपधयोरमन्यतरस्यामिति रमागमो रोपधयोर्निवर्तक एवं शपः श्नम् । इह तर्हीति । देशभेदाद्विरोधाभावे ऽपि काकचोरका-

---

भावः । प्रस्तीर्यन्त इति । किं तु तत्प्रसङ्गे शराः प्रस्तीर्यन्त इति शेषः । तथा च स्थानषष्ठीनिर्देशे उभयत्रापि तात्पर्यमिति भावः । विकल्प इति । स्थानषष्ठ्यभावेनोभयत्र तात्पर्याभावादिति भावः । परदेशस्येति विकरणविधौ धातोः परश्चेत्यधिकारेण धातोः परो विकरणः प्रयोक्तव्यं इत्यर्थादिति भावः । ननु धातोः परो विधातव्य इत्यर्थे पूर्वं श्यनि विहिते पश्चाच्छबपि स्यात् तिङ्विकरणवत् । सार्वधातुके इति च विषयसप्तमी स्यादत आह धात्विति । सहायकं सहायकार्यम् । ननु श्यनादीनामादेशत्वे स्थानिवद्भावात्पित्त्वे करोतीत्यादौ विकरणस्यानुदात्तत्वं स्यात् । न च सतिशिष्टस्वरबलीयस्त्वस्य विकरणान्यविषयत्वेनाप्रत्ययस्य कथमुदात्तत्वं सिद्धान्तेऽपीति वाच्यम्; सार्वधातुकस्वरापेक्षयैव विकरणस्वरस्य तेन दुर्बलत्वकथनादत आह श्यनश्च शित्करणमिति । न च शित्त्वं नियमार्थं स्यात् शिदेव न पिदिति । शित्त्वस्य नियमार्थत्वकल्पनापेक्षया ऽतिदेशबाधस्यैवौचित्यात् । अतिदेशबाधश्च तवाप्यावश्यक एव । क्व चित्तु निष्करणमिति पाठः । तद्धि प्रत्ययाद्युदात्त्वबाधेन ञ्नितीत्यनेन निदन्तस्याद्युदात्तत्वाय स्थानिवत्त्वाऽपित्त्वेनानुदात्तत्वं तु लसार्वधातुकस्यापि अदुपदेशादित्यनुदात्तत्वे धातोरुदात्तत्वं सिद्धमेवेति तदर्थं सत् तज्ज्ञापकमिति भावः । परन्त्वयं पाठः स्थानिवत्सूत्रस्थकैयटविरुद्धः । आदित्यधिकाराद्वेति । तुदतीत्यादौ नित्यनुम्व्यावृत्तये पूर्वोक्तसमाधिरेवावश्यक । शप्श्यनोरिति सूत्रस्थं श्यन्ग्रहणमप्युक्तार्थे ज्ञापकमिति बोध्यम् । नन्वेवं शेषः परःश्नम् स्यादत आह रुधादिभ्यइति । सार्वधातुके इति सप्तम्या रुधादिभ्य इति पञ्चम्याः षष्ठीकल्पनात्तेषामेवान्त्यादचः परः श्नमिति भावः । तृणह इति निर्देशश्च रुधादीनामागमित्वे लिङ्गम् । नन्वेवं शपः श्रवणं स्यादत आह यथाचेति । शप इत्यस्य षष्ठीकल्पनसामर्थ्यादिति भावः । भाष्ये (विहितःप्रत्ययइति) । शब्रूपः प्रत्यय इत्यर्थः । एकार्थत्वादिति । अज्ञातादेरेकेन द्योतितत्वान्न द्वयोः समुच्चय इति भावः । येन नाप्राप्तिन्यायेनाकजादीनां बाधकत्वे परेणोक्ते सिद्धान्ती तेनैव न्यायेन निपातनानामपि बाधकत्वमेवेत्याह निपातनमपीति । भाष्ये (एतदिति) सततं सन्ततमित्युभयमित्यर्थः । श्लोकोन्यायार्थमवश्यमिति । एकदेशानुमितद्वारा

नाप्राप्ते णत्वे निपातनमारभ्यते तद्बाधकं भविष्यति। यदि तर्हि निपातनान्यप्येवंजातीयकानि भवन्ति। समस्तते दोषो भवति। इहान्ये वैयाकरणाः समस्तते विभाषा लोपमारभन्ते समोहिततततयोर्वेति। सततम्। संततम्। सहितम्। संहितम्। इह पुनर्भवान्निपातनाच्च लोपमिच्छति। अपरस्पराः क्रियासातत्यइति। यथाप्राप्तं चाऽलोपम्। संततमित्येतन्न सिध्यति। कर्तव्योऽत्र यत्नः। बाधकान्येव हि निपातनानि भवन्ति। संज्ञोपसर्जनप्रतिषेधः *। संज्ञोपसर्जनीभूतानां सर्वादीनां प्रतिषेधो वक्तव्यः। सर्वो नाम कश्चित्तस्मै सर्वाय देहि। अतिसर्वाय देहि। स कथं कर्तव्यः। पाठात्पर्युदासः पठितानां संज्ञाकरणम् *। पाठादेव पर्युदासः कर्तव्यः। शुद्धानां पठितानां संज्ञा कर्तव्या। सर्वा-

---

र्थत्वाद्विकल्प एव चोद्यते न समुच्चयः। कर्तव्योऽत्र यत्न इति। लुम्पेदवश्यम इत्ययं श्लोकोऽन्यार्थमवश्यं पठितव्यस्तेनैव सततं सन्ततमिति च सिध्यति न तु निपातनेनेत्यर्थः। सांतत्यमिति चानभिधानात् ष्यञन्तस्य प्रयोगाभावः। पुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तः पृषोदरादित्वान्न भवति। संज्ञोपसर्जनीभूतानामिति। ये विषयान्तरे दृष्टास्तएवेमामवस्थां प्राप्ता इति विवक्षया च्विप्रत्ययनिर्देशः। सर्वाय देहीति। पदकार्येषु गौणमुख्यन्यायो न तु प्रातिपदिककार्येष्विति शब्दाश्रये च वृद्धयात्वे इत्यत्रोक्तमिति प्रसिद्ध्यप्रसिद्धिवशात्सम्भवन्नपीह स नोक्तः। समासकृत्तद्धिताव्ययसर्वनामाऽसर्वलिङ्गा जातिरेकद्रव्योपनिवेशिनी संज्ञेत्येतदनपेक्ष्य संज्ञाप्रतिषेधः। तत्र ह्यपेक्ष्यते परया पूर्वा संज्ञा बाध्यतइति संज्ञासंज्ञया सर्वनामसंज्ञाया बाधनात्प्रसङ्गाभावः। अतिसर्वायेति। प्रादिसमासोऽयं बहुव्रीहौ संज्ञाप्रतिषेधात्। प्रयोजनं सर्वनामाव्ययसंज्ञायामिति तदन्तविधिः परमसर्वस्मादित्याद्यर्थ आश्रितः। पाठादिति। यथा तिङो गोत्रादीनीत्यत्र कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादिपाठविशेषणं तथेहापि सर्वादिसन्निवेशो विशे-

---

सातत्य इति निर्देशेन स एव श्लोको ज्ञाप्यते इत्यर्थः। नत्विति। निपातनेन सततमिति न साध्यत इत्यर्थः। नन्वेवं सन्ततात्ष्यञि सान्तत्यमित्यपि स्यादत आह इति चानभिधानादिति। अत एव भगवता सन्ततमिति न सिध्यति इत्येवोक्तं न तु सूत्रोच्चारितसजातीयं सान्तत्यमिति न सिध्यतीत्युक्तम्। पुराणशब्देनेति। पुराणप्रोक्तेष्वित्यत्र निपातितेनेत्यर्थः। पृषोदरादित्वादिति। एवञ्च तेनैवोभयोरपि साधुत्वं न तु निपातनेनेति भावः। च्विप्रत्ययेति। गणपठितेभ्यः संज्ञोपसर्जनानां भेदात्संज्ञाया अप्राप्तौ प्रतिषेधानर्थक्यमिति शङ्कानुदासाय भाष्ये च्विरूपात्त इति भावः। तत्तत्पदत्वारोपवत् तदर्थे उपसर्जनत्वमप्यारोपितमिति च्वेरुपपत्तिरिति तात्पर्यम्। पदकार्येष्विति। न च संज्ञा तथेति भावः। इदमेव वार्त्तिकं तस्य न्यायस्य पदकार्यविषयत्वे लिङ्गमिति तात्पर्यम्। अत एवाभिव्यक्तपदार्था ये इति न्यायस्याप्यत्राप्रवृत्तिरिति बोध्यम्। अत्र न गुणयोगेन लाक्षणिकत्वरूपं गौणत्वमत आह प्रसिद्धेति। तन्मूलं प्रासङ्गिकत्वादिकमत्रापि तुल्यमित्यर्थः। समासेति। अनेन क्रमेणैताः संज्ञा एकसंज्ञाधिकारे कार्या इति वक्ष्यत्याकडारसूत्रे। तदनपेक्ष्यायं संज्ञाप्रतिषेध इत्यर्थः। एकद्रव्योपनिवेशिनीति। लौकिकसंज्ञालक्षणम्। एतेन सर्वनामादिसंज्ञास्वनेकविषयास्वित्यमव्याप्तमिति परास्तम्। नन्वतिसर्वस्य गणे पाठाभावात्संज्ञासूत्रे विशेष्यासन्निधानेन तदन्तविधेरभावाच्च कथमत्र प्राप्तिरत आह प्रयोजनमिति। शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः। एतत्तदन्तविधिफलत्वेन परमस इत्यस्योपन्यासः क्वचिद्दृश्यते स चिन्त्यः। त्यदादीनाम इत्यादावङ्गविशेषणत्वमूलकतदन्तविधिना सिद्धत्वात्। एैभावे तु विहितविशेषणमिति बोध्यम्। यथेति। यथा तत्सूत्रं निघातविधायकं वाक्यभेदेन पाठविशेषणञ्च तथेहापीत्यर्थः। यद्यविशेषेणेत्यस्य सर्वकार्यार्थमित्यर्थस्तर्हि नेत्याह विशेषणं चेत्युत्तरग्रन्थासङ्गतिरत आह कियत्सर्वेषामिति। यथापि समाथाप्यपि न सर्वेषां कार्यमुभयथशवाद-

दीनि सर्वनामसंज्ञानि भवन्ति । संज्ञोपसर्जनीभूतानि न सर्वादीनि । किमविशेषेण । नेत्याह । विशेषेण च किं प्रयोजनम् । सर्वाद्यानन्तर्यकार्यार्थम् । सर्वादीनामानन्तर्येण यदुच्यते कार्यं तदपि संज्ञोपसर्जनीभूतानां मा भूदिति । किं प्रयोजनम् । प्रयोजनं डतरादीनामद्‌भावे * । डतरादीनामद्‌भावे प्रयोजनम् । अतिक्रान्तमिदं ब्राह्मणकुलं कतरद् अतिकतरं ब्राह्मणकुलमिति । त्यदादिविधौ च * । त्यदाविधौ च प्रयोजनम् । अतिक्रान्तो ऽयं ब्राह्मणस्तमतितद् ब्राह्मण इति । संज्ञाप्रतिषेधस्तावन्न वक्तव्यः । उपरिष्टाद्योगविभागः करिष्यते । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम् । ततो ऽसंज्ञायामिति । सर्वादीनीत्येवं यान्यनुक्रान्तानि असंज्ञायां तानि द्रष्टव्यानि । उपसर्जनप्रतिषेधश्च न कर्तव्यः । अनुपर्जनादिस्येष योगः प्रत्या-

---

ख्यते असंज्ञोपसर्जनानि सर्वादीनि गणसन्निविष्टानि नान्यानीत्यर्थः । किमविशेषेणेति । किं यत् सर्वेषां सर्वादीनां कार्यं तदर्थमेवेति प्रश्नः । विशेषेण चेति । चशब्दादविशेषेणेत्यर्थः । यद् गणपाठोपलक्षितं विशिष्टं कार्यं त्यदादीनामः, अद्‌ड्डतरादिभ्य इत्यादि तदर्थमपि पाठविशेषणमित्यर्थः । यत्तु कार्यं युष्मदस्मद्भ्यां ङसो ऽशित्यादि स्वरूपमात्राश्रयं न सन्निवेशापेक्षं तदविशेषेण भवति । तत्र हि न गणपठितयोर्युष्मदस्मदोर्निर्देशो ऽपि त्वौणादिकयोः । अनुपसर्जनादिति । ननु प्रधानेन तदन्तविध्यर्थो योग आरब्धव्यः

---

सम्भवात् । तथाप्यन्तर्गणानाश्रयणेन विधीयमानं कार्यमिति तदर्थो बोध्यः । न संनिवेशेति । न सामान्यविशेषसंनिवेशापेक्षमित्यर्थः । अविशेषेणेति । संज्ञोपसर्जनयोरपीत्यर्थः । न गणेति । न गणपठितत्वाकारेणेत्यर्थः । भाष्ये ( सर्वादीना ) न्तदन्तर्भूतानां त्यदादिप्रभृतीनाम् । [ आनन्तर्येण ] आनन्तर्योपलक्षितत्यदादीनामित्यादिरूपेणेत्यर्थः । किं प्रयोजनमिति । क्व प्रयोजनमित्यर्थः । असंज्ञायामिति । योगविभागो गणसूत्रे नाष्टाध्यायीस्थे तस्य जसि विभाषाविधायकत्वादिति बोध्यम् । स्वमज्ञातीत्यादावपीदमनुवर्त्तते इति न दोषः । सर्वादीनीत्येवं यानीति । सर्वादीनि शब्दरूपाणि इत्येवं सर्वविश्वेत्यादिक्रमेण यानि पञ्चात्रिंशदनुक्रान्तानि तानीत्यर्थः । प्रत्याख्यायतइति । स्त्रीप्रत्ययप्रकरणस्थमपि सूत्रं तत्रानुप्रयुज्यमानकार्यान्तरार्थं परिभाषारूपं ज्ञातव्यमिति भावः । नन्विति । अन्यथा समासप्रत्ययविधौ तदन्तविधिप्रतिषेधाद् गृह्यमाणादेव प्रातिपदिकात्स्यात् । प्रत्ययग्रहणे च प्रत्ययग्रहणपरिभाषया प्रत्ययान्तादेव स्यान्न तु तदन्तादिति भावः । अनेन चोत्तरत्र तदन्तविधौ ज्ञापिते उपसर्जने निषेधात् प्रधान एव स फलवानिति प्रधानेनेत्युक्तम् । कौम्भकारेयइति । अणन्तत्वेन कारकशब्दादेव ङीपि कारीशब्दस्यैव स्त्रीप्रत्ययान्ततया तत एव स्त्रीभ्योढकि तस्यैव ढक्यङ्गत्वाद् वृद्धिः स्याद् न कुम्भस्येति भावः । तदन्तविधौ तु समुदायात् ङीपि तत एव ढकि समुदायस्याङ्गत्वात्कुम्भशब्दे वृद्धिः सिध्यति । ननु कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् तदन्तविध्यभावेपि कौम्भकारेयः सिद्धो ऽत आह नचेति । कृत एव ग्रहणे सा, न तु कृत्कृद्ग्रहण इति भावः । नैतदस्तीति । न च कदा चित् कारीशब्दादपि स्यात् । कुम्भेनैकार्थीभूतस्य निष्कृष्यापस्थेनान्यथाभावात् । नन्वेवं कुम्भकारीत्यत्र ङीबेव न स्यात् । कुम्भेनैकार्थीभूतस्याणन्तस्य केवलस्य स्त्रीत्वेनायोगात् । अत एव सूत्रारम्भे न कदाचिदपि कारशब्दात् ङीप् । यस्य च विशिष्टस्य स्त्रीत्वेन योगो न तदणन्तमिति चेन्न । अग्रहस्पूर्वग्रहणेन तदन्तग्रहणज्ञापनात् । नचैवं बहुकुरुचरेत्यादावतिप्रसङ्गवारणायायं निषेधोऽपि सार्थक इति वाच्यम् । टिड्ढाणञित्यादौ उपात्तस्य टिदादेरेव स्त्रीत्वेन विशेषणेनादोषात् । पूर्वत्रोपात्ततदन्तञ्च स्त्रीत्वेन विशेष्यते उत्तरत्र चोपात्तमेवेत्यत्र व्याख्यानमेव शरणमिति वदन्ति । परे तु प्रत्याख्यायते इत्यस्य वार्त्तिककृतेति शेषः । अनुपसर्जनग्रहणमनर्थकम् प्रातिपदिकेन तदन्तविधिप्रतिषेधादिति हि तत्र वार्त्तिकं तद्दीत्यास्य तेन-

ख्यायते तमेवमभिसंभन्त्स्यामः। अनुपसर्जन अ अदिाति। किमिदं अ आदिति। अकारात्कारौ शिष्यमाणावनुपसर्जनस्य द्रष्टव्यौ। यद्येवम् अतियुष्मद् अत्यस्मद् इति न सिध्यति। प्रश्लिष्टनिर्देशोयम्। अनुपसर्जन अ अ अदिति। अकारान्ताद् अकारात्कारौ शिष्यमाणावनुपसर्जनस्य द्रष्टव्यौ। अथवा अङ्गाधिकारे

---

कौम्भकारेय इति यथा स्यादिति न चाणिति कृद्ग्रहणं तद्धितो ऽप्यणस्तीति। नैतदस्ति। स्त्रीप्रत्यये चानुपसर्जनेनेति तदादिनियमाभावात् कारशब्दादपि ङीपि कुम्भकारीशब्दात् स्त्रीभ्यो ढगिति ढग्भविष्यति। अनुपसर्जन अ अदिति। सुपां सुलुगिति षष्ठ्या लुक्। अ अ अदिति। अकारेणाकारात्कारौ विशेष्येते। अकारात्परौ यावकारात्कारौ तावनुपसर्जनस्येत्यर्थः। पञ्चम्या अदित्ययं तु युष्मदस्मद्भ्यामनकारान्ताभ्यां विधीयतइति परिभाषानुपस्थानादुपसर्जनाभ्यामपि भवति त्यदादीनाम इत्ययमकारात्परस्य हलः स्थाने विधीयतइति आकारान्तात्परो ऽकारो भवतीति परिभाषोपस्थानाद् तितादित्यत्र न भवति। एवं तु प्रियौ द्वावस्येति बहुव्रीहौ कृते अकारान्तादविधानात्परिभाषानुपस्थानादत्वं प्राप्नोति। तदोःसस्सावितिच सत्वमविशेषितमित्युपसर्जनस्यापि प्राप्नोति। तत्रायं समाधिः। त्यदादीनाम इत्यत्र त्यदादिषु परिभाषोपस्थानादनुप·

---

सिद्धिरित्याशयः। अनुपसर्जनादिति किमर्थं बहुकुरुचरा तदन्तविधिना प्राप्नोति। अत उत्तरं पठति अनुपसर्जनग्रहणमनर्थकमिति। तत्र भाष्यकृदवतारणेनान्त्यभाष्येण च तस्य वार्त्तिककृत्सिद्धान्तत्वप्रतीतेः। यत्तु तदुत्तरं वचनद्वयं ज्ञापकं तु पूर्वत्र तदन्ताप्रतिषेधस्यातिधीवरी। पूर्वसूत्रानिर्देशो वा ऽऽपिशला ब्राह्मणीति तत्त्वाचार्यदेशीयस्य। तत्राद्यस्य पूर्वत्र तदन्ताप्रतिषेधेपि उत्तरत्र तदन्तविध्यभावेन बहुकुरुचरादावप्राप्त्या ऽस्य सार्थक्यानुपपादनात्तदुक्तिस्त्वम्। अन्त्ये तु स्त्रियामित्यस्याण्विशेषणत्वात् स्त्रियां योण्विहित इत्यादिना भाष्य एव दूषितम्। तेनाद्यस्यैव वार्त्तिककृत्सिद्धान्तत्वं बोधितम्। इदन्तर्हि प्रयोजनम्। प्रधानेन तदन्तविध्यर्थमिति तु तत्र भाष्यकृता स्वयं सूत्रप्रयोजनमुक्तमिति न विरोधः। अयं हि तत्र भाष्याशयः। अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेपि कदा चित् कारीशब्दादपि स्यादिति पक्षे कुम्भकारेय इत्यस्यापत्तिः। यदुक्तं कुम्भेनेत्यादि तत्तुच्छम्। निष्कृष्यापत्यैनेकार्थीभावाभावेपि समुदायेनैकार्थीभावे ऽवयवेनापि तस्यैव सत्वात्सामर्थ्याद्वतेः। विशिष्टसम्बन्ध्यपत्ये विशेष्यसम्बन्धस्याव्याहतेश्च। अनभिधानेन प्रत्याख्यानन्तु न चमत्कारकारि। अत एव परमगार्ग्यस्यापत्यमित्यर्थे तदेकदेशगार्ग्यशब्दात्प्रत्यये परमगार्ग्यायण इति येनविधिरिति सूत्रे भाष्ये उदाहृतमिति तत्रैव निरूपयिष्यामः। न च तदन्तविधावपि व्यपदेशिवद्भावेन केवलादपि ङीब् दुर्वारः। अनुपसर्जनादित्येतत्सामर्थ्येन व्यपदेशिवद्भावाप्रवृत्तेः। मुख्यव्यपदेशिनो ऽभावे एव तदतिदेशप्रवृत्तेश्च। न च स्त्रीप्रत्ययेषु तदादिनियमाभावेन कारीशब्दस्यापि स्त्रीप्रत्ययान्तत्वाऽनपायात्तस्मादपि कदाचिड् ढक् स्यादेवेति वाच्यम्, यतः प्रत्ययग्रहण इति नियमेनाधिकस्यैव व्यावृत्तिर्न न्यूनस्य। अस्यापत्यमिः एरपत्यमित्यर्थे यञिञोश्चेति फको ऽनापत्तेः। एवञ्च तन्निषेधेनानेन तस्यैव सङ्ग्रहो नत्वतद्भावस्य न्यूनस्य। अयमधिकारोप्यचार्थे ज्ञापक इत्याहुः। एकपदत्वे तूद्देश्यविधेयभावानुपपत्तेराह सुपामिति। अअअदित्यत्र अ इति लुप्तपञ्चम्यन्तं तदाह अकारादिति। अकारान्तादिति भाष्ये ऽन्तग्रहणन्तु फलितार्थपरं यथा कथञ्चिद् न त्वत्र तदन्तविधिरिति भ्रमितव्यम्। विशेष्यासंनिधानात्। प्रायेण भाष्येपि अकारादकारात्कारावित्येव पाठः। शेषे लोपस्यान्त्यलोपत्वपक्षे विधानोत्तरमकारात्परत्वसम्भवादाह विधीयतइति। तदुक्तं भाष्ये (शिष्यमाणाविति)। (अपरिहृतमेवेति)। एवञ्चैतदपरितोषाद्भाष्ये पक्षान्तरमिति भाव इति केचित्। परे तु इदं समाधानं सर्वाद्यानन्तर्यकार्यार्थं प्रतिषेधो वक्तव्य इत्यस्यैवार्थस्य डतरादिविषये तस्य प्रधानेपि तदन्ते प्रवृत्तिरिति विशेषं बोधयन् तद्द्वारकयुक्त्यैवोपसर्जनेपि व्यावृत्तिरित्येवं रीत्या तत्फलकत्वाभावमुपसर्जनप्रतिषेधस्य बोधयितुमेकदेशी पक्षान्तरमाह (अथवेति)। अन्त्यं समाधानद्वयन्तु साधारणमित्याहुः। स्वार्थद्वारेणेत्यादेर्निर्वरणन्तदर्थं गतेत्यादि। गृह्यमाणविभक्तेरिति सम्बन्धसामान्ये षष्ठी। तेन

यदुच्यते गृह्यमाणविभक्तेस्तद्भवति । यद्येवं परमपञ्च परमसप्त षड्भ्यो लुग् न प्राप्नोति । नैष दोषः। षट्प्रधान एष समासः। इह तर्हि प्रियसक्थ्ना ब्राह्मणेन अनङ् न प्राप्नोति । सप्तमीनिर्दिष्टे यदुच्यते प्रकृतविभक्तौ तद्भवति । यद्येवमतितद् अतितदौ अतितद इति अत्वं प्राप्नोति । तच्चापि वक्तव्यम् । न वक्तव्यम् । इह तावद् डतरादिभ्यः पञ्चभ्य इति पञ्चमी अङ्गस्येति षष्ठी तत्राशक्यं भिन्नविभक्तित्वाद् डतरादिभ्य इति पञ्चम्याऽङ्गं विशेषयितुम् । तत्र किमन्यच्छक्यं विशे-

---

सर्जनानां तेषां ग्रहणं तत्साहचर्याद् द्विशब्दो ऽपि तथाविध एव गृह्यते । सत्वविधौ च तथाविधानामेवानुवृत्तिरित्यत्रापि न दोषः । अतिसर्वायेत्यादौ त्वविशेषकार्यमपरिहृतमेव । गृह्यमाणविभक्तेरिति । गृह्यमाणानां त्यदादीनां डतरादीनां च स्वार्थद्वारेण संबन्धिनी या विभक्तिस्तदर्थगतसंख्याकर्मादिवाचिनी तस्या इत्यर्थः । यद्येवमिति । गृह्यमाणाद् विहिता या विभक्तिरित्येवं संबन्धं मन्वानस्य प्रश्नः । आर्थः संबन्धो ऽत्र गृहीत इत्युत्तरे ऽभिप्रायः । यद्येवं पञ्चकाः शकुनय इति कनः स्वार्थिकत्वाज्जसो लुक् प्राप्नोति । उच्यते । कनि कृते शब्दान्तरत्वान्नान्तत्वाभावान्नायं षट्संज्ञक इत्यदोषः । युष्मदस्मद्भ्यां ङसोऽशित्यत्र त्वङ्गेन विभक्तिर्विशेष्यतइत्युपसर्जनाभ्यामपि सिध्यति । प्रियस

---

विभक्तौ विधीयमानत्यदाद्यत्वस्यापि सङ्ग्रह इति भावः । षड्भ्य इति षष्ठ्यर्थे पञ्चमीति मन्वानः शङ्कते यद्येवमिति । कनः । सङ्ख्यायाः संज्ञासङ्घेत्यनेन विहितस्य । कनीति । कनि कृते कन्नन्त एव संख्यावाची न प्रकृतिः स च न नान्त इति षट्त्वाभावात्ततः परस्य जसो न लुगित्यर्थः । षड्भ्य इति पञ्चम्येव षड्भ्यः परयोः प्रत्यासत्त्या षडर्थगतसंख्याभिधायिनोर्लुगित्यर्थ इति भावः । युष्मदित्यादिसिध्यतीत्यन्तग्रन्थो ऽत्र पुनरुक्तः । अनुपदमग्रे वक्ष्यमाणत्वात् । परे तु गृह्यमाणविभक्तेरित्यस्य गृह्यमाणाद्विहितविभक्तेरित्येवार्थः । अदड्विषयमेतत् । कतरान्तस्यानभिधानमभिप्रेत्य तत्रादड्भावएवेष्ट इत्याभिप्रेत्य वा तुल्यन्यायात् षड्भ्य इत्यत्रापि विहितविशेषणमेवेति तत्रातिप्रसङ्गं शङ्कते यद्येवमिति । परमपञ्चेत्यादेर्लोके गणनायां व्यवहाराभावेन षट्त्वाभाव इति लुगप्राप्तिरिति प्रश्नः । सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकत्वेन विशिष्टस्यापि षट्त्वमस्त्येव । गणनायां प्रसिद्धानामेवेह संख्यावाचिनां ग्रहणमित्यत्र न मानमित्युत्तरं, पञ्चम्यन्तस्य त्वदुक्तसम्बन्धेन विभक्त्याऽन्वयो दुरुपपादः। आवृत्तौ मानाभावश्च । षट्प्रधान इत्यस्य त्वदभिमतषडर्थप्रधानोऽतः समुदायोपि षट्संज्ञक इत्यर्थः। षष्ठ्यन्तस्थलेपि विहितत्वसम्बन्धेनान्वय इत्याशयेन शङ्कते इह तर्हीति । वैषम्यमुपपादयन् स्वाशयमाह इह तावदित्यादिनेति भाष्यर्थमाहुः शक्यतेति । स च न स्वाङ्गमिति भावः । अङ्गार्थेति । प्रकृतशब्देनाङ्गम् । एतच्चापीति वक्तव्ये तच्छब्दनिर्देशाद्व्यवहितपरामर्शोपि नाव्यवहितस्य चेत्याह गृह्यमाणेत्यादि । अर्थद्वारकमिति । डतरादिभ्यो विहितो योर्थस्तत्प्रतिपादकत्वमित्यर्थः । तदर्थकप्रत्ययविधानेर्थस्यापि विधानमस्तीत्यभिमानः । डतरादिभ्य इत्यस्य षष्ठ्यर्थत्वे तु भिन्नविभक्तित्वादिति भाष्यविरोधः । परे तु विधानस्य सर्वथानाश्रयणेनार्थद्वारकं विधानमाश्रयितव्यमिति स्वग्रन्थाविरोधस्तस्माद्विहितविशेषणमिति यथाश्रुतमेव भाष्यम् । परमकतरदित्यत्रादड्डादेशे नं भाष्यान्तरं मानमस्ति । प्रकृतभाष्यन्तु विपरीतम् तदभावबोधकमेवेति प्रामाणिकाः । त्यदादिप्रकृतिकविभक्तावित्यर्थं मत्वा शङ्कते यद्येवमिति । उक्ताशयेनाह त्यदादिप्रधानइति । अङ्गस्येति सूत्रेतोभिसऐसित्यादौ विविभक्तित्वादसम्बन्धमाशङ्क्याङ्गनिमित्तं या भिसिति सम्बन्धं वक्ष्यति तेन न्यायेनात्रापि सम्बन्धसम्भवादियमेकदेश्युक्तिस्तस्माल्लक्ष्यानुसारात् षड्भ्यो डतरादिभ्य इति सूत्रद्वये विहितविशेषणं भाष्यसम्मतं तस्यार्थस्य लक्ष्यविरोधेन भाष्यकृता दूषणाकरणादित्याहुः । भाष्ये अकारविषयेपि समाधानं वक्तुमाह । ( इहेति ) । इह तावदिति । लक्ष्यानुसारश्च तत्र तत्र तथा तथा व्याख्याने बीजम् । अङ्गस्य विभक्तावित्यादेश्चाङ्गार्थगतार्थप्रतिपादकविभक्तावित्याद्यर्थः । षष्ठ्यन्तत्वेन तथान्वयस्य सूपपादत्वादिति भावः । नञ्समासेपीति उत्तरपदार्थप्रधानत्वादिति भावः । अतिकतरादित्युक्त-

षयितुमन्यदतो विहितात्प्रत्ययाद् डतरादिभ्यो यो विहित इति । इहेदानीमस्थिद-धिसक्थ्यक्ष्णामनङुदात्त इति । त्यदादीनामो भवतीति । अस्थ्यादीनामित्येषा षष्ठी अङ्गस्येत्यापि । त्यदादीनामित्यपि षष्ठी अङ्गस्येत्यापि । तत्र कामचारः । गृह्यमाणेन वा विभक्तिं विशेषयितुमङ्गेन वा । यावता कामचारः, इह तावदस्थिदधिसक्थ्यक्ष्णामन-ङुदात्त इत्यङ्गेन विभक्तिं विशेषयिष्यामः । अस्थ्यादिभिरनङ्म् । अङ्गस्य विभक्ता-वानङ् भवति अस्थ्यादीनामिति । इहेदानीं त्यदादीनामो भवतीति गृह्यमाणेन विभक्तिं विशेषयिष्यामः । अङ्गेनाकारम् । त्यदादीनां विभक्तावो भवति अङ्गस्येति । यद्येवमतिसः अत्वं न प्राप्नोति । नैष दोषः । त्यदादिप्रधान एष समासः । अथवा नेदं संज्ञा-करणं पाठविशेषणमिदम् । सर्वेषां यानि नामानि तानि सर्वादीनि । संज्ञोपसर्जने च विशेषे ऽवतिष्ठेते । यद्येवं संज्ञाश्रयं यत्कार्यं तन्न सिध्यति । सर्वनाम्नः स्मै । आमि सर्वनाम्नः सुडिति । अन्वर्थग्रहणं तत्र विज्ञास्यते सर्वेषां यन्नाम तत्सर्वनाम सर्व-नाम्न उत्तरस्य ङेः स्मै भवति । सर्वनाम्न उत्तरस्याऽऽमः सुड् भवति । यद्येवं

---

क्थ्नेति । सक्थिशब्दश्शकटावयववचनो ऽत्रेति बहुव्रीहौ सक्थ्यक्ष्णोरिति समासान्तेन कृतः । प्रकृतविभक्ताविति । अङ्गार्थसंबन्धिन्यां विभक्तावित्यर्थः । तच्चापीति । गृह्यमाणविभक्तेरिति सप्तमीनिर्दिष्टे यदुच्यते इति च । डतरादिभ्यो यो विहित इति । अर्थद्वारकं विधानमाश्रयितव्यम् । तेन परमकतरदित्यत्रापि भवति । युष्मदस्मद्भ्यां ङसो ऽशित्यत्र तु प्रकरणे ऽङ्गेन विभक्तिर्विशेष्यते अर्थद्वारेण युष्मदस्मद्भ्यां तु परत्वमात्रेणोत्पत्तियुष्मादित्यादावपि कार्यं भवति । अतिस इति । शोभनः स इति प्रादिसमासः । नञ्समासे ऽप्यसः । असट् । अकतरदिति भवति । सर्वेषां यानीति । स्वविषयापेक्षया सर्वनामत्वं बोद्धव्यम् । यथा गोत्वादेः स्वविषयापेक्षं सर्वगतत्वं न तु सर्वादीनि परस्पर पर्यायतां यान्ति । भिन्नार्थत्वात् । एतेषां चापीति । ततश्च सर्वस्मिन्नो-

---

रीत्या चिन्त्यमेव । अत्रापि पक्षेऽतिसर्वायेत्यादौ दोष एव । परमसर्वत्र इत्यादिसिद्धये तदन्तस्यापि सर्वनामत्वावश्यकत्वेन सर्वनाम्नो विहितस्य ङेः स्मै इत्यर्थेपि स्मैभावस्य दुर्वारत्वात् । अतोप्येकदेशयुक्तिरियं पक्षद्वयमतः सर्वसाधारणं समाधिमाह । भाष्ये ( ऽथवानेदमिति ) । द्वन्द्वे चेत्यादिभिश्च सर्वादित्वस्यैव निषेधस्तत्प्रयुक्तकार्याभावे पर्यवस्यति । एवं विकल्पोपीत्यभिमानः । ननु सर्वार्थवाचकत्वं न पूर्वादिशब्दानामित्यसङ्गतमेतदत आह स्वविषयेति । लोकनिरूढप्रवृत्तिनिमित्तेन या अभिधेया व्यक्तयस्ताः स्वविषयः । ननु सर्वादिगणपठितानां शब्दानां सर्वेषां सर्वार्थकत्वेन पर्यायत्वाद् वृथायं व्याख्यानक्लेशोत आह नत्विति । नन्वेवं घटादिशब्दानामपि स्वविषयापेक्षसर्वनामत्वाद् घटायेत्यादौ स्मैभावाद्यापत्तिरिति चेन्न । तद्विधायकेषु सर्वनामग्रहणसामर्थ्येन सकृद्गृहीतशक्त्यैव स्वप्रवृत्तिनिमित्ताश्रयविरुद्धानेकजातीयार्थबोधकानामेव सर्वनामपदेन ग्रहणात् । एतदेव ध्वनयितुं सर्वेषां नामानीति बहुवचनान्तपूर्वपदको विग्रहो दर्शितो भाष्ये । भाष्ये (संज्ञोपसर्जनेचेति) । संज्ञा त्वेकद्रव्यनिष्ठत्वान्न सर्वेषां नामोपसर्जनमपि पदान्तरार्थसंसृष्टार्थवृत्तित्वान्न प्राधान्येन सर्वेषामुपस्थापकं नामपदस्वारस्येन तथैव लाभादित्यर्थः । उपसर्जनांशे विशेषे इत्यस्य विशेषणे इत्यर्थः । भाष्ये ( एतेषाञ्चापीति ) दूषणान्तरम् । एतेषाञ्चापि । घटादिशब्दानामपि । एकैकस्य । तस्य तस्यापि । स स विषयः । सर्वाद्यर्थो विषयः । तस्मिंस्तस्मिन् विषये । सर्वाद्यर्थरूपे विषये । यो यः शब्दो, घटादिशब्दो वर्त्तते । तस्य तस्य, घटादिशब्दस्य सर्वाद्यर्थे वर्त्तमानस्येत्यक्षरार्थः । तद्व्याचष्टे ततश्चेति । पदैः पदार्थानभिधायाकाङ्क्षादिमूलकशक्तिवशात्संसृष्टवाक्यार्थप्रतीतिर्जन्यत इत्यभिहितान्वयवादे शङ्कते न-

सकलं कृत्स्नं जगदित्यत्रापि प्राप्नोति। एतेषां चापि शब्दानामेकैकस्य स स विषयः। तस्मिंस्तस्मिन् विषये यो यः शब्दो वर्तते तस्य तस्य तस्मिंस्तस्मिन् वर्तमानस्य सर्वनामकार्यं प्राप्नोति। एवं तर्ह्युभयमनेन क्रियते पाठश्चैव विशेष्यते संज्ञा च। कथं पुनरेकेन यत्नेनोभयं लभ्यम्। लभ्यमित्याह। कथम्। एकशेषनिर्देशात्। एकशेषनिर्देशोऽयम्। सर्वादीनि च सर्वादीनि च सर्वादीनि। सर्वनामानि च सर्वनामानि च सर्वनामानि। सर्वादीनि सर्वनामसंज्ञानि भवन्ति। सर्वेषां यानि च नामानि तानि सर्वादीनि। संज्ञोपसर्जने च विशेषेऽवतिष्ठेते। अथवा महतीयं संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः। कुत एतत्। लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम्। अन्वर्थसंज्ञा यथा विज्ञायेत। सर्वादीनि सर्वनामसंज्ञानि भवन्ति। सर्वेषां नामानीति।

---

दन इत्योदनशब्दस्यापि सर्वनामकार्यं प्राप्नोति। सामानाधिकरण्यादनयोः। ननु प्रतिनियतवस्तुभागाभिनिवेशित्वाच्छब्दानां सर्वत्वमोदनशब्देन नाभिहितं ओदनत्वमपि सर्वशब्देनेति कुतोऽयं प्रसङ्गः। तत्रेदं दर्शनम्। सर्वशब्दोऽपि ओदनार्थावग्रहेण प्रवृत्त ओदनशब्दोऽपि सर्वशब्दार्थावग्रहेण। प्रतिपत्ता तु केवलात्सर्वशब्दाद्विशेषं न प्रतिपद्यते रूपसादृश्यान्नाप्योदनशब्दादिति तत्प्रतिपत्त्यर्थमुभयोरुपादानम्। तत्रैकस्य सर्वनामकार्यं भवति नापरस्येति प्रमाणाभावादतिप्रसङ्ग उद्भावितः। एकशेषनिर्देश इति। ननु सहविवक्षाया अभावात् कथमेकशेषः। एकशेषफलत्वात्तन्त्रन्याय आवृत्तिर्वैकशेषशब्देनोच्यते। अथवा आकृत्यभिधानपक्षे एकस्यैव प्रयोगे सिद्धे प्रत्याख्यातमेकशेषशास्त्रं संज्ञापरिभाषावच्छास्त्रप्रक्रियासंपादनार्थं भवतीति सहविवक्षामन्तरेणापि भवत्येकशेषः। संज्ञोपसर्जने चेति। यदा सर्वशब्दः संज्ञात्वेन विनियुज्यते तदा प्रसिद्धप्रवृत्तिनिमित्तपरित्यागेन स्वरूपमात्रोपकारी प्रवर्तते इति विशेष एवावतिष्ठते। उपसर्ज-

---

न्विति। गुणद्रव्यादिसमुदायात्मके वस्तुनि प्रतिनियता ये भागाः प्रवृत्तिनिमित्ताख्यास्तदभिनिवेशित्वात्तद्वाचकत्वाच्छब्दानामित्यर्थः। योग्येतरान्विते पदानां शक्तेः स्वार्थवत्पदान्तरार्थोऽपि स्ववाच्य इत्यन्विताभिधानमाश्रित्य परिहरति तत्रेति। अवग्रहः। क्रोडीकारः। न प्रतिपद्यते। निश्चिततयेति शेषः। रूपसादृश्यादिति। ओदनव्यतिरिक्तार्थान्वययोग्यसर्वशब्दरूपस्य तुल्यत्वादित्यर्थः। तत्प्रतिपत्त्यर्थम्। निर्द्धारितविशेषप्रतिपत्त्यर्थम्। अपरे तु पदे पदैकदेशप्रयोगवद् यदा सर्वस्मिन्नोदने इति वाक्ये प्रयोक्तव्ये ओदने इति वाक्यैकदेशः प्रयुज्यते प्रकरणाच्च तत एव पदात्तादृशवाक्यार्थबोधस्तत्र दोष इति भाष्याशयः। यथा च पदशक्तिग्रहकाले पदैकदेशस्यापि तत्र शक्तिग्रह इति पस्पशायां कैयटेनोक्तम्। तथा वैयाकरणमते विशेषणविशेष्यभावे वाक्यस्य शक्त्यङ्गीकारेण तत्र तत्तत्पदार्थालिङ्गिते समुदितस्य शक्तिग्रहकालेऽवयवभूतैकैकपदस्यापि तत्रशक्तिग्रहेणैकैकपदादपि तादृशविशिष्टार्थबोधइति इग्यण इतिसूत्रे भाष्ये ध्वनितम्। आकाङ्क्षावादान्ते च मञ्जूषायां निरूपितमित्याहुः। अतिप्रसङ्ग उद्भावितइति। नचसर्वनाम्नःस्मै इत्यादौ सर्वादेः स्मैइत्यायेव सूत्राणि सन्त्विति न कृत्स्नादिषु दोषः। अपाणिनीयत्वापत्तेः। भाष्ये (एवं तर्ह्युभयमिति)। संज्ञेति। एकैकस्योद्देश्यत्वविधेयत्वसत्त्वात्सहविवक्षाभाव इत्यर्थः। अर्थद्वयबोधेच्छया एकस्य सकृदुच्चारणमिह तन्त्रम्। अन्योच्चारणं तन्त्रेण बोद्धबोधस्तु पुनरनुसन्धानेनेत्याशयेनाह आवृत्तिर्वेति। आवृत्तिर्भेत्यर्थः। प्रत्याख्यातमिति। लौकिकप्रयोगाङ्गत्वेन निराकृतमित्यर्थः। प्रसिद्धप्रवृत्तिनिमित्तेति। तच्च सर्वशब्दस्य यावत्त्वम्। इदमुपलक्षणम्। अनेकार्थसाधारणशक्तिग्रहसहकारेण स्वविषयाणां सर्वेषामर्थानां प्राधान्येन बोधकत्वं सर्वनामत्वमित्यस्यार्थस्य। स्वरूपमात्रोपकारीति। स्वरूपमात्रप्रवृत्तिनिमित्तक इत्यर्थः।

चातः सर्वनामानि । संज्ञोपसर्जने च विशषे ऽवतिष्ठेते । अथोभस्य सर्वनामत्वे को ऽर्थः । उभस्य सर्वनामत्वे ऽकजर्थः * उभस्य सर्वनामत्वे ऽकजर्थः पाठः क्रियते। उभकौ । किमुच्यते ऽकजर्थ इति न पुनरन्यान्यपि सर्वनामकार्याणि। अन्याभावो द्विवचनटाब्विषयत्वात् * । अन्येषां सर्वनामकार्याणामभावः । किं कारणम् । द्विवचनटाब्विषयत्वात् । उभशब्दो ऽयं द्विवचनटाब्विषयः । अन्यानि च सर्वनामकार्याण्येकवचनबहुवचनेषूच्यन्ते । यदा पुनरयमुभशब्दो द्विवचनटाब्विषयः। क

---

नमपि जहत्स्वार्थमजहद्वा अतिक्रान्तार्थविशेषणतामापन्नमतिक्रान्तार्थवृत्तिर्भवत्यतिसर्वायेत्यत्र वाक्ये त्वसंसृष्टार्थत्वात् स्वार्थमात्रं प्रतिपादयतो न विशेषे ऽवस्थानम् । यतो न लघीय इति । शब्दव्यवहारो लघुस्ततोऽपि लघीयो नाम । तत्र गुरुसंज्ञाकरणात्सर्वादीनां विशिष्टो धर्मो ऽनुमीयते नूनमेतानि संज्ञाप्रवृत्तिनिमित्तेन सर्वनामत्वेन युक्तानि । यतस्तदनुरूपा तेषां संज्ञा कृतेति सर्वनामकार्यमन्तर्गणकार्यं च सर्वनामत्वयुक्तानामेव भवति न संज्ञोपसर्जनानाम् । अन्याभावइति । टाब्विषयत्वमपि न द्विवचनादन्यत्र बोद्धव्यम् । तत्रोभादुदात्तो नित्यमित्यत्र नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषये उभशब्दप्रयोगो मा भूत् । उभयशब्दस्यैव यथा स्यादित्युभयपुत्र इत्यादि

---

अतिक्रान्तार्थविशेषणतामिति । एवञ्च प्राधान्येन न सर्वार्थोपस्थापकत्वमिति भावः । जहत्स्वार्थत्वे तु सर्वोपस्थापकत्वमेव नेति बोध्यम् । भाष्ये [ अथवा महतीति ] अयं भावः । अनेकार्थसाधारणशक्तिग्रहसहकारतः प्राधान्येन स्वविषयसर्वार्थोपस्थितिजनकत्वसमानाधिकरणसर्वनामपदवत्त्वेन बोधकमहासंज्ञया तादृशसर्वादीनामेव गणोऽनुकरणम् । तत्र संज्ञायास्तत्त्वाभावःस्पष्ट एव । उपसर्जनस्यापि न प्राधान्येन तदुपस्थापकत्वं, नामपदस्वारस्येन तथैव लाभात् । उपसर्जनं हि इतरविशेषणतयैव स्वार्थोपस्थापकम् । सर्वादीनि तदन्तानि च सर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवन्तीत्यर्थः । सूत्रस्य तदन्ते च तत्प्रधानसमासेऽवयवीयतादृशशक्तिसहकारेण स्वविषयसर्वबोधकत्वं विशेष्यतयाऽस्त्येवेति दिक् । ततोऽपि लघीयो नामेति । संज्ञेत्यर्थः । तन्नाम संज्ञा तयोन्यद् लघुतरं नास्तीत्यन्वयो भाष्ये । यद्वा संज्ञा च नामेति पर्यायप्रदर्शनम् । तच्च यतो नान्यल्लघीयस्तत् । एवञ्च संज्ञायां सर्वतः शब्दव्यवहाराल्लघीयस्त्वं सिद्धम् । लघ्वर्थमित्यस्य लाघवेन शास्त्रप्रवृत्त्यर्थमित्यर्थः । नन्वन्वर्थसञ्ज्ञत्वं नाम योगरूढत्वं तत्र योगार्थस्य रूढ्यर्थेनैवान्वयनियमात् पृथगुद्देश्येनानन्वयात् कथं सर्वावाचकानामेव संज्ञेत्यत आह अनुमीयतइति । नूनमेतानीति । गणपठितानीत्यर्थः । भाष्ये ( ऽयोभस्येति ) । उभयत इत्यादेरुभयशब्दपाठेनैव सिद्धेरिति भावः । ननु टाबन्ते सर्वनाम्नः स्याडित्याद्यन्यसर्वनामकार्यसंभवोऽस्त्येवेत्यत आह टाब्विषयत्वमपीति । अन्याभाव इत्यत्र हेतुत्वेनोपादानादिति भावः । एवञ्चोभशब्दः केवलद्विवचनविषयष्टाप्सहितद्विवचनविषयोवेत्यर्थ इति टाब्ग्रहणमनुवादमात्रं नापूर्वमिति तात्पर्यम् । द्विवचनटाब्विषयत्वे उपपत्तिमाह तत्रेति । द्वित्रिभ्यामिति सूत्रस्थवेत्यस्यास्वरितत्वादेवानुवृत्तौ तयप्स्थानिकत्वेनायचस्तद्विकल्पेनैव वाक्यसिद्धौ फलाभावेन महाविभाषाया अप्यसंबन्धासिद्धौ प्रत्ययान्तरत्वपक्षे तन्निवृत्तौ दोषाच्च नित्यग्रहणं योगविभागेन स्वार्थिकानादेशभूतायच्प्रत्ययान्तरविधायकमिति भावः । अत्र च नित्यशब्दस्य वाच्यार्थविरोधाद्विकल्पाननुवृत्तिः । अयमप्याद्युदात्त एव प्रत्ययसंबद्धोदात्तग्रहणानुवृत्तेः । वृत्तिविषये इति । अत एवोभौ साभ्यासस्येति निर्देशः सङ्गच्छते । इदं च सूत्रे योगविभागस्येष्टासिद्ध्यर्थत्वाद् उभाविति निर्देशाच्च उभयान्यत्रेति वार्त्तिकाच्च द्विवचनाश्रवणं यत्र तत्रैव प्रवर्त्तते नान्यत्र तेन नातिप्रसङ्गः । [ द्विवचनविषयत्वादिति ] भाष्यस्य द्विवचनसत्त्वे एवोभशब्दः साधुरित्यर्थः । द्विवचनासत्ता च वृत्तिविषय एवेत्याशयेन कैयटे वृत्तिविषये इत्युक्तम् । कतरानामिति अस्योभशब्दस्यार्थप्रतिपादकः कः शब्दोन्यत्र तसिलादिविषये द्विवचनाभावे भवतीत्यर्थः । उभयोन्यत्रेति । द्विवचनाविषयत्वाभावासंभावनायामिति भावः । लुग्विषये लुका विषयस्यैवापहारान्न दोषः । संभावनानिवेशाच्चोभशब्दस्य पाठाभावेप्युभयत इत्यादिसिद्धिः । अन्यथोभात्तसिलादेः

इदानीमस्यान्यत्र। भवति उभयान्यत्र उभयशब्दो ऽस्यान्यत्र भवति। उभये देवमनुष्याः। उभयो मणिरिति। किञ्च स्याद् यद्यत्राकज् न स्यात्। कः प्रसज्येत। कश्चेदानीं काकचोर्विशेषः। उभशब्दोऽयं द्विवचनटाब्विषय इत्युक्तम्। तत्राकचि सत्यकचस्तन्मध्यपतितत्वाच्छक्यते एतद्वक्तुं द्विवचनपरोऽयमिति। के पुनः सति नायं द्विवचनपरः स्यात्। तत्र द्विवचनपरता वक्तव्या। यथैव तर्हि के सति नायं द्विवचनपरः। एवमाप्यपि सति नायं द्विवचनपरः स्यात्। तत्रापि द्विवचनपरता वक्तव्या। अवचनादापि तत्परविज्ञानम्। अन्तरेणापि वचनमापि द्विवचनपरो ऽयं भविष्यति। किं वक्तव्यमेतत्। नहि। कथमनुच्यमानं गंस्यते। एकादेशे कृते द्विवचनपरो ऽयमन्तादिवद्भावेन। अवचनादापि तत्परविज्ञानमिति

———

भवति। द्विदण्ड्यादिभ्यश्चेत्यत्र निपातनादुभा बाह्वीत्यादयः साधवः। कश्चेदानीमिति। रूपे स्वरे च नास्ति विशेषः। अवग्रहे च नास्त्यादरो न हि लक्षणेन पदकारा अनुवर्त्याः। उभकाभ्यां हेतुभ्यामुभकयोर्हेत्वोरिति षष्ठीतृतीये सिद्धे। निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति वचनात्। उभयशब्दोऽयमिति। द्विवचने ऽनन्तरे श्रूयमाणे उभयशब्देन साधुना भाव्यं न लुप्ते न व्यवहिते। के पुनः सतीति। पूर्वस्य द्विवचनस्य लुप्तत्वादपरस्य केन व्यवधानात्। तत्र कविषये व्यवहितद्विवचनविषय उभशब्दः साधुर्भवतीति वक्तव्यम्। यथैव तर्हीति। ननु द्विवचनटाब्विषत्वादित्यत्र टाप उपात्तत्वाच्चोद्यानुपपत्तिः। एवं तर्हि टाब्विषयत्वमेकवचनबहुवचनयोर्मा भूदित्येवमर्थमाप्यपि द्विवचनपरता वक्तव्येत्युक्तम्। अवचनादिति। स्वार्थिकत्वादाप उभार्थस्याहानादापि सिद्धा द्विवचनपरतेत्यर्थः। केऽपि तुल्यमिति। द्विवचनविषयत्वादित्यत्र

———

कर्त्तुमशक्यतया द्विवचनस्य लुगभावे तद्विषयस्यैव सत्त्वेनायजनापत्तौ उभयत इत्याद्यसिद्धिः। मम तु यद्यत्र तासिलादिः स्यात् तर्हि लुगपि स्यादिति संभावनया विषयाभावसंभावना ऽस्त्येवेति न दोषः। इदमेव ध्वनयितुं विषयपदमुपात्तम्। उभयोऽन्यत्रेति वार्त्तिके उभयशब्देन स्वार्थिकायजन्तस्यान्यार्थकायजन्तस्य च ग्रहणमिति भावः। रूपेइति। नन्वकचि उभशब्देन तद्विशिष्टस्य ग्रहणादुभकावयवौ यस्येत्यर्थे उभकयो मणिरिति प्रयोगः सिध्यति के तु नेति फले विशेषः स्पष्टः। एवमज्ञातोभयोर्घट इत्यर्थे ऽकचि उभकघट इति रूपम्। के ऽयचि उभयकघट इति स्यादितिरूपे विशेषः स्पष्ट एवेति चेन्न। भाष्यप्रामाण्येनानभिधानात्। अत एव हरिणा उभयान्यत्रेति वार्त्तिकमूलभूतं "उभयस्य द्विवचनं टाप् च लोपश्च यस्येति" व्याकरणान्तरसूत्रमुदाहृतम्। तन्मते ह्येषां प्रयोगाणामभावः स्पष्ट एवेति बोध्यम्। स्वर चेति। चित्स्वरप्रत्ययस्वराभ्यामुभयत्रापि अन्तोदात्तत्वस्यैव सिद्धेरिति भावः। उभकाभ्यामित्यादिर्वचनादित्यन्तो ग्रन्थः प्रक्षिप्तः। पुनरेव दर्शनात्। श्रूयमाणइति। विषयशब्दलभ्योऽयमर्थः। श्रूयमाणत्वञ्च साक्षाद्भावरूपादेशद्वारा वेत्यन्यत्। व्यवधानादिति। द्विवचनविषयत्वस्याव्यवहितस्यैव निवेशादित्यर्थः। उभघटावित्यादौ व्यवहितद्विवचनपरस्य साधुत्ववारणाय कविषयइति। एवञ्चैतद्वचनाकरणलाघवार्थमुभशब्दपाठ इति भावः। भाष्ये (एवमाप्यपीति)। टापा व्यवधानादिति भावः। अन्तरेणापीति। शीर्षे तद्विशिष्टस्यान्तवद्भावेनोभशब्दत्वामिति भावः। आबन्तादेकवचनाद्यापत्तिस्तु नेत्याह स्वार्थिकत्वादिति। एवञ्च तत एकवचनादौ द्विवचनविषयत्वं कथमिति न वक्तव्यमिति भावः। किं वक्तव्यमेतदित्यादिरन्तादिवद्भावेनेत्यन्तो ऽपाठः। अवचनादपीत्यस्य वक्तव्यत्वाभावेन किं वक्तव्यमिति प्रश्नासङ्गतेः। तथा भ्रममूलको वा प्रश्न इति बोध्यम्। द्वयर्थोति। कृत्रिमाकृत्रिमन्यायस्य तु नेह प्रवृत्तिः तस्या इह शास्त्रे

चेत्के ऽपि तुल्यम् * । अवचनाद्वापि तत्पराविज्ञानमिति चेत्केऽपि अन्तरेण वचनं द्विवचनपरौ भविष्यति । कथम् । स्वार्थिकाः प्रत्ययाः प्रकृतितो ऽविशिष्टा भवन्तीति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवति । अथ भवतः सर्वनामत्वे कानि प्रयोजनानि । भवतो ऽकच्छेषात्वानि * । भवतो ऽकच्छेषात्वानि प्रयोजनानि अकच् । भवकान् । शेषः । स च भवांश्च भवन्तौ । अत्वम् । भवादृगिति । किं पुनरिदं परिगणनमाहोस्विदुदाहरणमात्रम् । उदाहरणमात्रमित्याह । तृतीयादयोऽपि दृश्यन्ते । सर्वनाम्नस्तृतीया च । भवता हेतुना भवतो हेतोरिति ॥

विभाषा दिक्समासे बहुव्रीहौ ॥ २८ ॥ दिग्ग्रहणं किमर्थम् । न बहुव्रीहा-

---

द्विवचनशब्देन प्रत्ययो न गृह्यते किं तर्हि द्व्यर्थाभिधानसमर्थ इत्यर्थः । उभयत उभयत्रेति त्रतसोरव्ययत्वाद् द्वित्वाभिधानसामर्थ्यं नास्तीत्यभेदविषय उभयशब्द एव प्रयुज्यते न तूभशब्दः । एवं प्रत्याख्यातो ऽकजर्थ उभशब्दस्य पाठः । सर्वनाम्नस्तृतीया चेति षष्ठीतृतीयार्थः पाठ इति केचित् । निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति वचनात्तदर्थोऽपि पाठो न कर्तव्य इत्यन्ये । अथ भवत इति । अनकारान्तत्वात् स्मायाद्यभावात्प्रश्नः । शेष इति । पाठे सति त्यदादित्वाच्छेषो भवति । तृतीयादयो पीति निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमित्यनपेक्ष्यैतदुक्तम् । इदं तु प्रयोजनम् । भावतायनिः भवच्छू ' भवन्मयः । पूर्वनिपातश्च । भवन्मित्रः । भवतष्ठक्छसाविति वृद्धत्वात् ठक्छसौ ' गुणवचनसंज्ञाबाधनं च । भवतो भावो भावत्यमिति मा भूत् ॥ २७॥

विभाषा दिक्समासे बहुव्रीहौ ॥ दिग्ग्रहणमिति । एकस्मिन् विषये विकल्पप्रतिषेधयोरसम्भवात्सामर्थ्याद्विषयभेद आश्रयितव्य इति प्रश्नः । वचनमन्तरेणाभि-

---

ऽनाश्रयस्य सङ्ख्यासंज्ञासूत्रे भाष्ये उक्तः । अस्य लोकसिद्धव्यवस्थाबोधकत्वेन तत्र न्यायाप्रवृत्तेश्चेति भावः । ननूभकावितिवद् उभतइत्याद्यपि प्रसज्येतेत्यत आह उभयत इत्यादि । तयोरव्ययत्वेन विभक्त्यन्तीयस्वार्थिकत्वेन चाधिकरणापादानशक्तिविशेष्यकबोधजनकत्वात् । द्विवचनत्वञ्च सङ्ख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वम् । अभेदविषयो वृत्तिविषयः । उक्तमर्थं प्रश्नपूर्वं व्युत्पादयति । भाष्ये ( कथं स्वार्थिका इति ) । यतः स्वार्थिकाः प्रकृतितो ऽविशिष्टा अन्यार्थविशेष्यकबोधाजनका अतः प्रकृतिर्गृह्यते अनेनेति प्रकृतिग्रहणं तेन प्रकृतिभूतोभशब्दग्राहकेण द्विवचनशब्देन तत्प्रकृतिकानां स्वार्थिकानां कादीनामपि ग्रहणमित्यर्थः । तेनोभयत इत्यादेर्व्यावृत्तिः । प्रकृतिग्रहणेनेत्यनेन कृत्रिमाकृत्रिमन्यायाप्रवृत्तिर्ध्वनिता । द्विवचनञ्च टाप्साहचर्यात्प्रत्यय एव गृह्यते । एतदर्थमेव टाब्ग्रहणान्तेनोभयोरुभावित्यत्र समासे भवत्येवायजित्याहुः । एवं प्रत्याख्यातइति । किञ्च अकज्मात्रार्थत्वे उभाव्ययसर्वनाम्नामकजित्येव पाठेन सिद्धे संज्ञाप्रयोजके गणे पाठो व्यर्थः । साहचर्याच्च संज्ञादिव्यावृत्तिरिति बोध्यम् । ( इदं त्विति ) । भाष्ये आदिपदसंग्राह्यमित्यर्थः । भावतायनिरिति सति पाठे त्यदादीनि चेति वृद्धत्वे उदीचां वृद्धादिति फिञ् । भवच्छ्रिति । विष्वग्देवयोश्चटेरिति चेन सर्वनाम्नोऽनुकर्षणादद्र्यादेशः । भवन्मय इति । नित्यवृद्धेति मयट् । भवन्मित्रे बहुव्रीहौ सर्वनामसंख्ययोरिति पूर्वनिपातः । भवतेष्ठगिति । छत्रन्तनिवृत्तय वृद्धग्रहणं तत्रानुवर्तत इत्यर्थः । गुणवचनेति । एकसंज्ञाधिकारे सकलप्रातिपदिकविषयगुणवचनसंज्ञेति परा सर्वनामसंज्ञेति भावः ॥ २७ ॥

विभाषा दि ॥ एकस्मिन्निति । सर्वत्र परत्वात्प्रतिषेधे विकल्पस्य वैयर्थ्यम् । सर्वत्र वा विकल्पे भावाभावयोस्तेनैव सिद्धत्वात्प्रतिषेधानर्थक्यमिति तयोरेकविषयत्वासंभव इति भावः । भाष्ये ( दिगुपदिष्टे इति ) । दिक्शब्दोच्चारणेन विहित इत्यर्थः । बहुव्रीहाविति शेषः । व्याप्यधर्मातिदेशो व्यापकधर्मस्याप्या-

विति प्रतिषेधं वक्ष्यति। तत्र न ज्ञायते क्व विभाषा क्व प्रतिषेध इति। दिग्ग्रहणे पुनः क्रियमाणे न दोषो भवति। दिगुपदिष्टे विभाषा अन्यत्र प्रतिषेधः। अथ समासग्रहणं किमर्थम्। समास एव वा बहुव्रीहिस्तत्र यथा स्याद् बहुव्रीहिंवद्भावेन यो बहुव्रीहिस्तत्र मा भूदिति। दक्षिणादाक्षिस्यै देहि। अथ बहुव्रीहिग्रहणं किमर्थम्। द्वन्द्वे मा भूत्। दक्षिणोत्तरपूर्वाणामिति। नैतदस्ति प्रयोजनम्। द्वन्द्वे चेति प्रतिषेधो भविष्यति। नाप्राप्ते प्रतिषेधे इयं विभाषा आरभ्यते सा यथैव न बहुव्रीहाविसेतं प्रतिषेधं बाधते। एवं द्वन्द्वे चेत्येनमपि बाधते। न बाधते। किं कारणम्। येन नाप्राप्ते तस्य बाधनं भवति। न चाप्राप्ते न बहुव्रीहावित्येतस्मिन्प्रतिषेधे इयं विभाषा आरभ्यते। द्वन्द्वे चेत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च। अथ वा पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानित्येवमियं विभाषा न बहुव्रीहावित्येतं प्रतिषेधं बाधिष्यते। द्वन्द्वे चेत्येनं प्रतिषेधं न बाधिष्यते। अथ वा इदं तावदयं प्रष्टव्यः। इह कस्मान्न भवति। या पूर्वा सोत्तरा अस्योन्मुग्धस्य सोऽयं पूर्वोत्तर उन्मुग्धः। तस्मै पूर्वोत्तराय देहीति। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति। यद्येवं, नार्थो बहुव्रीहिग्रहणेन। द्वन्द्वे कस्मान्न भवति। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति। उत्तरार्थं तर्हि बहुव्रीहिग्रहणं

---

मतो विषयभेदो न लभ्यतइत्युत्तरम्। समास एवेति। मुख्य इत्यर्थः। अन्यस्तु तत्कार्यलाभाय तद्व्यपदेशं लभते इत्यमुख्यः। दक्षिणोत्तरपूर्वाणामिति, द्वन्द्वे चेत्यनेनं सर्वाद्यन्तस्य द्वन्द्वस्य सर्वनामसंज्ञाप्रतिषेधो नावयवानामिति सर्वनाम्नो वृत्तिमात्र इति पुंवद्भावः। येन नाप्राप्तइति। अयमत्रार्थः। न बहुव्रीहावित्यनेन सर्वः स्वविषयो व्याप्तः। द्वन्द्वे चेत्यनेन तु न व्याप्तः। विभाषा जसीति जसि विकल्पविधानात्। यदि चानेन द्वन्द्वे विभाषा स्याद् जस्यनुवाददोषः प्रसज्येत। बहुव्रीहौ त्वनुवाददोषमलभमाना कृतार्था सती परत्वादियं विभाषा द्वन्द्वे चेत्यनेन बाध्यते। लक्षणप्रतिपदोक्तयोरिति।

---

ख्यातिदेशात्समासोप्ययमत आह मुख्यइति। दक्षिणदक्षिणस्यैइति। आबाधे चेति द्विर्वचनबहुव्रीहिवद्भावौ। नावयवानामिति। न बहुव्रीहाविनिवद् द्वन्द्वे चिकीर्षित नेत्यर्थो न। यद्यपि द्वन्द्वेपि उद्भूतावयवभेदसमुदायस्य प्राधान्येन तं प्रति बहुव्रीहेरिव द्वन्द्वस्य गुणत्वेन तदप्राप्तिरयमेवोचितस्तथापि त्यदादीनां द्वन्द्वाभावेनादन्तेकाकचोरविशेषण फलाभावात्। अन्यपर्यायस्वच्छब्दस्य सर्वनामत्वेन मानम्। बहुसंमतत्वात्। गयो तत्पाठस्य विभाषा जसीत्यस्यासङ्गतेश्चेति भावः। एवञ्चेदं सूत्रमुपसर्जनप्रतिषेधानुवादकमेव। सूत्रकृता तदनभ्युपगमाद्वा कृतं तत्। अत एव कुक्कुटमयूर्यावित्यादावुपसर्जनह्रस्ववारणाय द्वन्द्वे नेति वचनमारब्धं गोस्त्रियोरिति सूत्रे भाष्ये इति बोध्यम्। पुंवद्भावइति। इदं चिन्त्यम्। मात्रमहयोन सिद्धेः। ननु यथा बहुव्रीहौ द्वन्द्वे चेत्यप्राप्तावपीयं प्रवर्तते तथा द्वन्द्वे न बहुव्रीहावित्यप्राप्तेपीति किमुच्यते नचाप्राप्ते इतीत्यत आह अयमत्रार्थइति। एवञ्च न चाप्राप्ते इत्यस्य भाष्ये बहुव्रीहावित्यादिः। द्वन्द्वे चेत्यस्य तु द्वन्द्वे इत्यादिः। एवञ्च बहुव्रीहौ सर्वत्र निषेधप्राप्तिर्द्वन्द्वे तु द्वन्द्वे चेत्यस्य न सर्वत्र प्राप्तिर्जसि विभाषया बाधादिति भावः। सर्वः स्वविषयइति। सर्वो दिग्बहुव्रीहिरित्यर्थः। न व्याप्तइति। सर्वो दिग्द्वन्द्व इति शेषः। युक्त्यन्तरमप्याह यदि चेति भाष्ये (यापूर्वा सोत्तरेति)। यद्यपि वाक्ये यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वं प्रतीयते। या पूर्वास्वप्रकारकज्ञानविशेष्या सा प्रसिद्धोत्तरा यस्या इत्यर्थात्। एवञ्चोत्तराशब्दस्य पूर्वनिपातः प्राप्नोति तथापि समासे सप्त-

कर्तव्यम् । न कर्तव्यम् । क्रियते तत्रैव न बहुव्रीहाविति । द्वितीयं कर्तव्यम् । बहुव्रीहिरेव यो बहुव्रीहिस्तत्रैव यथा स्याद् बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूत् । एकैकस्मै देहि । एतदपि नास्ति प्रयोजनम् । समासइति वर्त्तते । तेन बहुव्रीहिं विशेषयिष्यामः । समासो यो बहुव्रीहिरिति । इदं तर्हि प्रयोजनम् । अवयवभूतस्याऽपि बहुव्रीहेः प्रतिषेधो यथा स्यात् । इह मा भूत् । वस्त्रमन्तरमेषां तइमे वस्त्रान्तराः । वसनमन्तरमेषां तइमे वसनान्तराः । वस्त्रान्तराश्च वसनान्तराश्च वस्त्रान्तरवसनान्तराः ॥

न बहुव्रीहौ ॥ २९ ॥ किमुदाहरणम् । प्रियविश्वाय । नैतदस्ति प्रयोजनम् । सर्वाद्यन्तस्य बहुव्रीहेः प्रतिषेधेन भवितव्यम् । वक्ष्यति चैतत् । बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानमिति । तत्र विश्वप्रियायेति भवितव्यम् । इदं तर्हि द्व्यन्याय त्र्यन्याय । ननु चात्रापि सर्वनाम्न एव पूर्वनिपातेन भवितव्यम् । नैष दोषः । वक्ष्यत्येतत् । संख्यासर्वनाम्नोर्यो बहुव्रीहिः परत्वात्तत्र संख्यायाः पूर्वनिपातो भवतीति । इदं चाप्युदाहरणम् । प्रियविश्वाय । ननु चोक्तं विश्वप्रियायेति भवितव्यमिति । वक्ष्यत्येतत् । वा प्रियस्येति । न खल्वप्यवश्यं सर्वाद्यन्तस्यैव बहुव्रीहेः प्रतिषेधेन भवितव्यम् । किं तर्हि । असर्वाद्यन्तस्यापि भवितव्यम् । किं प्रयोजनम् । अकज् मा भूदिति । किंच स्याद् यद्यत्राकच् स्यात् । को न

---

दिक्समास इति व्यपदेशो दिङ्नामान्यीति विहितस्य न्याय्यः । तत्र हि दिक्शब्दोऽस्ति । वस्त्रान्तरेति । उपसर्जनप्रतिषेधो वार्तिककारस्य न सूत्रकारस्य । न बहुव्रीहावित्यारम्भात् तन्मतेनेदं प्रयोजनमुक्तम् ॥ २८ ॥

न बहुव्रीहौ ॥ प्रियविश्वायेति । प्रियशब्दस्य विश्वविशेषणत्वात्पूर्वनिपातं मन्यते । द्व्यन्यायेति । संख्यायाः संख्येयपरतन्त्रत्वाद्विशेषणत्वं सर्वनाम्न एवेति नियमः कथमिति चेदुच्यते । विशेषणत्वात्सङ्ख्यायाः पूर्वनिपाते प्राप्ते एवमर्थमुपसङ्ख्यानं स्यात् सर्वनामसङ्ख्ययोः सन्निपाते सर्वनाम्न एव पूर्वनिपातः स्यादिति ।

---

तील्या पूर्वापदस्य ज्ञानविशेष्यपर्यन्तलक्षकत्वेन गुणवाचकत्वाद् विशेषणत्वेन पूर्वनिपात इति बोध्यम् । तत्र हि दिक् शब्दोऽस्तीति । न च शेषग्रहणेनानेकग्रहणेन वा सिद्धे उभयोपादानेन पुनर्विधानद्वारा सर्वत्र विशेषविहितत्वादसौऽपि प्रतिपदोक्तः । स्पष्टं चेदमान्महत इत्यत्र भाष्ये इति वाच्यम् । पूर्वशब्द उत्तरशब्दः समस्यते इत्येवं विधानकल्पनेऽपि दिक्शब्दः समस्यत इत्येवं विधानकल्पने मानाभावेन तत्र दिक्शब्दाभावादिति भावः । भाष्ये ( अवयवभूतस्यापीति ) । प्रधानन्यायेनास्य न स्यात् । अस्य समूहं प्रति गुणत्वादिति भावः । तदेतदवयवपदेन सूचितम् । समूहावयवत्वाद्वृत्तिपदार्थस्येति बोध्यम् । वसनशब्दो गृहवाचीति नैकशेषः । अन्तरशब्दस्य सर्वनामत्वेऽपि परनिपातो राजदन्तादित्वाद् बोध्यः । तन्मतेनेति । किं चावयवयोः सर्वनामत्वेऽपि द्वन्द्वस्य तत्त्वाभावेन सर्वनाम्नो ऽविहितत्वाज्जसा न दोष इत्येकदेशयुक्तिरिदं भाष्यम् ॥ २८ ॥

न बहुव्रीहौ ॥ नियमः कथमिति । सङ्ख्याया अपि तेन पूर्वनिपातविधानादिति भावः । प्राप्ते इति । सप्तमी विशेषण इत्यनेन । नैष इति । लक्ष्यानुरोधादिति भावः । नचैवं वार्त्तिके संख्याग्रहणं व्यर्थं विशेषणत्वादेव तस्य पूर्वनिपातप्राप्तेरिति वाच्यम् । परिच्छेदकत्वरूपविशेषणतया अन्यत्रापि संभवात् । भाष्ये वृत्तिकारोक्तं सूत्रार्थमाह ( नखल्वपीति ) । अस्यार्थस्य यथा लाभस्तथा वक्ष्यते । बहिरङ्गत्वमुत्पादनाय पदान्त-

स्यात् । कश्चेदानीं काकचोर्विशेषः । व्यञ्जनान्तेषु विशेषः । अहकं पिता अस्य मकत्पितृकः । त्वकं पिता अस्य त्वकत्पितृक इति प्राप्नोति । मत्कपितृकः त्वत्कपितृक इति चेष्यते । कथं पुनरिच्छताऽपि भवता बहिरङ्गेण प्रतिषेधेनाऽन्तरङ्गो विधिः शक्यो बाधितुम् । अन्तरङ्गानपि विधीन् बहिरङ्गो विधिर्बाधते । गोमत्प्रिय इति यथा । क्रियते तत्र यत्नः । प्रत्ययोत्तरपदयोश्चेति । ननु चेहापि क्रियते न बहुव्रीहाविति । अस्त्यन्यदेतस्य वचने प्रयोजनम् । किम् । प्रियविश्वाय । उपसर्जनप्रतिषेधेनाप्येतत्सिद्धम् । अयं खल्वपि बहुव्रीहिरस्त्येव प्राथमकल्पिकः । यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तिकत्वं च । अस्ति तादर्थ्यात्ताच्छब्द्यम् । बहुव्रीह्यर्थानि पदानि बहुव्रीहिरिति । तद्यत्तादर्थ्यात्ताच्छब्द्यं तस्येदं ग्रहणम् । गोनर्दीयस्त्वाह । अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ । त्वकत्पितृको मकत्पितृक इत्येव भवितव्यमिति । प्रतिषेधे भूतपूर्वस्योपसंख्यानम् * ।

---

वक्ष्यत्येतदिति । नैष वाक्यार्थो यस्त्वया कल्पित इत्यर्थः । व्यञ्जनान्तेष्विति । उपलक्षणमेतत् । द्विकपुत्रो द्वकिपुत्र इत्यत्राऽपि विशेषदर्शनात् । कथं पुनरिति । अन्तरङ्गत्वात्संज्ञानिमित्तेनाऽकचा तावद्भाव्यं पश्चात्पदान्तरसंनिधाने वर्तिपदार्थविशेषणान्यपदार्थविवक्षायां बहिरङ्गेण बहुव्रीहिणेत्यर्थः । अन्तरङ्गानपीति । प्रत्ययोत्तरपदयोश्चेति सामान्येन ज्ञापकम् । बहिरङ्गोऽपि समासाश्रयो विधिरन्तरङ्गं बाधते इत्यस्यार्थस्येति भावः । क्रियते तत्रेति । लुग्विषयमेव तज् ज्ञापकमित्यर्थः । अस्त्यन्यदिति । अत्र हि विधिप्रतिषेधौ समानकालौ कार्यकालत्वात्संज्ञाया इति मन्यते । अयं खल्वपीति । सूत्रोपारूढ एवायमर्थ इति प्रतिपादयति । अप्रयोगसमवायि यत्प्रक्रियावाक्यं तत्राऽयं प्रतिषेधो न लौकिके वाक्ये प्रयोगार्हे । तस्य पृथगेव प्रयोगात्तादर्थ्याभावात् । गोनर्दीयस्त्वाहेति । सूत्रप्रत्याख्यानमेतद् यथोत्तरं हि मुनित्रयस्य प्रामाण्यम् । स्वरः स्वाङ्गशि-

रेत्यादि । वर्तिपदार्थविशेषणेति बहुव्रीहिः । बहुव्रीहिणेति । ततो बहिरङ्गबहुव्रीहिनिमित्तकेन निषेधेनेति शेषः । सामान्येनेति । न लुग्विषयमेवेति भावः । उत्तरपदग्रहणं चात्र ज्ञापकं अन्तर्वर्तिसुपा प्रत्ययपरत्वेनैव सिद्धेरित्यादि सप्तमे निरूपयिष्यामः । गोमत्प्रिय इत्यत्र लुका हल्ङ्यादिलोपो बाध्यते तेन नुम्दीर्घौ नेति भावः । भाष्ये ( ननु चेहापीति ) । वैयधिकरण्येन संबन्धाश्रयणसामर्थ्यादन्तरङ्गस्यापि निवृत्तिरित्यर्थः । प्रथमार्थे सप्तम्याश्रयणेन सामानाधिकरण्येनैव सम्बन्धो न तु विद्यत्यध्याहारेणेत्याशयेनाह अस्त्यन्यदिति । अन्तर्हीति । बहुव्रीहेर्विभक्त्युत्पत्तौ सर्वनामकार्यस्मायाद्यप्राप्तेरिति भावः । तत्रावयवनिषेधसामर्थ्यादन्तरङ्गस्यापि बाध इति तात्पर्यम् । ननु एतत्प्रकरणस्थसप्तमीनिर्देशाः प्रथमार्थाः । अत एव द्वन्द्वे चेति निषेधः समुदायस्यैव । एवञ्च वाच्यवृत्त्या ऽसर्वाद्यन्तस्य निषेधो न लभ्यते इत्यत आह भाष्ये ( अयं खल्वपीति )। एतेन बहुव्रीहाविस्यत्र चिकीर्षित इत्यध्याहारेण सिद्धे बहुव्रीहिपदस्य लक्षणा व्यर्थेति परास्तम् । तद्व्याचष्टे सूत्रेति । भाष्ये ( ऐकपद्यमे ) कार्थीभावः । एककारकशक्तियोगो वा एकविभक्तित्वं बोध्यम् । तादर्थ्यात्ताच्छब्द्यं यद्यो लभते तस्येदं ग्रहणमित्यन्वयः । तद्यत्र तादर्थ्यादिति पाठः क्वचित् । तत्र बहुव्रीह्यर्थवाक्ये संज्ञाया अप्राप्त्या तत्स्थपदपर्यन्तं लक्षणा बोध्या । तदेतद् बहुव्रीह्यर्थानि पदानीत्यनेन सूचितम् । ननु वाक्ये निषेधश्चेदहकं पितेति प्रयोगो न स्यात् किं च सुपरत्वाभावात्स्वाहौ न स्यातामत आह अप्रयोगेति । तदेतद्वृत्तिकारोक्तं दूषयति अकच्स्वरौ त्विति । एषा स्मृतिरविशेषात्सर्वप्रकरणविषया । सूत्रप्रत्याख्यानेति । समुदाये निषेधस्य महासंज्ञया उपसर्जनप्रतिषेधेन वा सिद्धत्वादिति भावः । एवञ्च महासंज्ञादिद्वारार्थानुवादकं प्रपञ्चार्थं सूत्रम् । एवं द्वन्द्वे चेत्यपि सममिति सूत्रकृतो हृदयम् । यथोत्तरमिति । उत्तरोत्तरस्य बहु-

प्रतिषेधे भूतपूर्वस्योपसंख्यानं कर्तव्यम् । आढ्यो भूतपूर्व आढ्यपूर्वः । आढ्यपूर्वाय देहीति । प्रतिषेधे भूतपूर्वस्योपसंख्यानाऽनर्थक्यं पूर्वादीनां व्यवस्थायामिति वचनात् * । प्रतिषेधे भूतपूर्वस्योपसंख्यानमनर्थकम् । किं कारणम् । पूर्वादीनां व्यवस्थायामिति वचनात् । पूर्वादीनां व्यवस्थायां सर्वनामसंज्ञोच्यते न चात्र व्यवस्था गम्यते ॥

तृतीयासमासे ॥ ३० ॥ समास इति वर्तमाने पुनः समासग्रहणं किमर्थम् । अयं तृतीयासमासो ऽस्त्येव प्राथमकल्पिकः । यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तिकत्वं चेति । अस्ति च तादर्थ्यात्ताच्छब्द्यम् । तृतीयासमासार्थानि पदानि तृतीयासमास इति । तद्यत्तादर्थ्यात्ताच्छब्द्यं तस्येदं ग्रहणम् । अथवा समास इति वर्तमाने पुनः समासग्रहणस्यैतत्प्रयोजनम् । योगाङ्गं यथा विज्ञायेत । सति च योगाङ्गे योगविभागः करिष्यते । तृतीया तृतीयासमासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । मासपूर्वाय देहि । संवत्सरपूर्वाय देहि । ततो ऽसमासे । असमासे च तृतीयायाः सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । मासेन पूर्वाय देहि । संवत्सरेण पूर्वाय देहीति ॥

---

वामदन्तानामित्याद्युदात्तत्वम् । आढ्यपूर्वायेति । अबहुव्रीह्यर्थं वचनम् । नचाऽत्रेति । प्राधान्येनेति भावः । अत्र हि पूर्वत्वमाढ्यत्वस्य विशेषणम् । यथाऽतिपूर्वायेति पूर्वार्थो ऽतिक्रान्तस्येत्युपसर्जनत्वात्पूर्वार्थस्य न भवति संज्ञा । मयूरव्यंसकादित्वाच्चाऽत्र समासः ॥ २९ ॥

तृतीया समासे ॥ अत्र तादर्थ्यात्ताच्छब्द्यलाभे सति प्रयोगार्हस्य लौकिकस्य वाक्यस्य ग्रहणे सति मासेन पूर्वायेति प्रयोगः साधुः । वाक्यभेदेन च मुख्ये समासे निषेधः । अथवेति । पर्युदासाश्रयणात्समाससदृशस्य वाक्यस्य ग्रहणम् । पूर्वसदृशेति च प्रतिपदोक्तस्तृतीयासमासो गृह्यते ॥ ३० ॥

---

लक्ष्यदर्शित्वात् । स्पष्टंचेदं धिन्विकृण्व्योरिति सूत्रे भाष्ये । एतेन सूत्रसार्थक्याय वृत्तिकारोक्तं व्याख्यानमेव प्रबलमित्यपास्तम् । शिडिति सर्वनाम । स्वरोदाहरणं विश्वप्रियायेति । भाष्ये (भूतपूर्वस्येति) । भूतपूर्वार्थकपूर्वाद्यन्तस्य समासस्येत्यर्थः । प्राधान्येनेति । प्रयोगकालरूपस्यावधेर्झटिति बोधेन व्यवस्थासत्त्वेपि पूर्वार्थस्योपसर्जनत्वान्न भवतीति भावः ॥ २९ ॥

तृतीया ॥ अयमपि समुदायनिषेध एव । सर्वाद्यन्ततृतीयासमासः सर्वनाम नेत्यर्थः । प्रयोगार्हस्येति । मासेन पूर्वाय देहीति भाष्योदाहरणादिति भावः । भाष्ये (तादर्थ्यादिति) च लोकदृष्ट्योक्तम् । लोको हि तस्यैव वाक्यार्थं वृत्तिं निषण्णां मन्यते । नन्वेवं सति समुदायस्य निषेधो न लभ्यते ऽत आह वाक्यभेदेन चेति । आवृत्त्येति भावः । भाष्ये (अथवेति) । योगाङ्गमिति । योगरूपमङ्गमष्टाध्याय्या इत्यर्थः । तृतीयासमासे सर्वादीनीति तृतीयासमासरूपाणि सर्वाद्यन्तानीत्यर्थः । अन्यथा पूर्वशब्दस्य निषेधेपि समासस्य तदनिषेधादुदाहरणे स्मै स्यात् । अवयवस्य तस्यापि ततो विभक्तेरविहितत्वान्न दोषः । सप्तम्युच्चारणन्तु सूत्रानुरोधादिति बोध्यम् । तृतीयायाः सर्वादीनीति तृतीयान्तात्पराणीत्यर्थः । तद्बीजं दर्शयति पर्युदासेति । भाष्ये पञ्चम्युपादानात्पूर्वपदभूतेनास्य प्रवृत्तिः । सदृशस्येति । प्रयोगार्हत्वेन समाससमानपदार्थकत्वेन च सादृश्यम् । प्रतिपदोक्तइति । तेन मासेन कृताय पूर्वस्मै इत्यत्र तदर्थके मासपूर्वस्मै इत्यत्र च न दोषः । अत एव भाष्ये प्रथमोपस्थितानन्यान्सर्वादीन् विहाय पूर्व एवोदाहृत इति बोध्यम् ॥३०॥

**विभाषा जसि ॥ ३२ ॥** जसः कार्यं प्रति विभाषा अकज्झि न भवति द्वन्द्वे चेति प्रतिषेधात् ॥

**पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ॥३४॥** अवरादीनां च पुनः सूत्रपाठे ग्रहणानर्थक्यं गणे पठितत्वात् * । अवरादीनां च पुनः सूत्रपाठे ग्रहणमनर्थकम् । किं कारणम् । गणे पठितत्वात् । गणे ह्येतानि पठ्यन्ते । कथं पुनर्ज्ञायते स पूर्वः पाठः । अयं पुनः पाठ इति । तानि हि पूर्वादीनि इमान्यवरादीनि । इमान्यपि पूर्वादीनि । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति स पूर्वः पाठः । अयं पुनः पाठ इति । यदयं पूर्वादिभ्यो नवभ्यो वेति नवग्रहणं

---

विभाषा जसि ॥ जसः कार्यं प्रतीति । जस इजसीति निर्देशादिकारेण ईकारस्य ग्रहणादित्याहुः । अन्ये तु कार्यकालत्वात्संज्ञाया जसः शीत्यत्रैवोपस्थानं मन्यन्ते ॥३२॥

पूर्वपरा ॥ अवरादीनां चेति । किमर्थं प्रतिपदं पूर्वादीनि जसि विभाषार्थं पठितानि यावता गण एवार्थविशेषेण विशिष्टानि नित्यसर्वनामसंज्ञार्थं पठ्यन्ते । तत्र पूर्वादीनि नवेत्येव सूत्रं पठितव्यम् । प्राप्तविभाषा चेयं भविष्यति । तेषामेवाऽत्र प्रत्यभिज्ञानाद् गण एवार्थनिर्देशः पाठविशेषणं भविष्यति । यथा तिङो गोत्रादीनीत्यत्र कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादिपाठविशेषणमिति वार्तिककाराऽभिप्रायः । अवरादीनामित्यत्र प्रकारार्थ आदिशब्दस्तेन पूर्वपरशब्दावपि गृह्येते । कथं पुनरिति । पूर्वं गणपाठो नियतसंनिवेशो व्यवस्थितः पश्चात्तु सूत्रपाठ इत्यत्र प्रमाणाभावात् । आदिशब्दः प्रकारवाची दृष्टो व्यवस्थावाची च तत्र सर्वादीनीत्यत्राऽऽदिशब्दस्य प्रकारार्थताऽपि संभवति । प्रकारार्थताप्रदर्शनाय पश्चादभियुक्ता गणान् पठन्ति । यदुक्तम् । श्रेण्यादयः पठ्यन्ते कृतादिराकृतिगण इति । कृतादयश्च वृत्तिकारैर्निदर्शनार्थं पठिताः । तत्र वेदे मध्यमस्यामवमस्यामिति प्रयोगदर्शनात्प्रकारार्थताऽऽदिशब्दस्य सर्वादीनीत्यत्र संभाव्यत इति प्रश्नः । तानि हि पूर्वादीनीति । पूर्वकालपठितत्वात्पूर्वशब्देन सर्वशब्दोऽभिधीयते । तेनाऽयमर्थः । सर्वादीनित्यत्र व्यवस्थावाच्यादिशब्दः । प्रकारवाचित्वे

---

विभाषाज ॥ इकारेणेति । तद्रूपस्य सर्वनामकार्यस्याभावाद् इति भावः । सूत्रे जसीति च लुप्तसप्तमीकं लुप्तद्वितीयान्तं वा । अन्ये त्विति । जसीत्यस्यं च जस्घटिते सर्वनामकार्यविधायकसूत्रे द्वन्द्वे विभाषेति संज्ञाविकल्पायोपतिष्ठते इत्यर्थ इत्यभिमानः । भाष्ये ( ऽकज्झि न भवती ) त्यस्य समुदायनिष्ठकुत्साबोधकः कज् न भवतीत्यर्थः । कृताकचा समासस्तु भवत्येव । तत्र सर्वाद्यन्तत्वात्तेन विकल्पो भवत्येव । समुदायकुत्साविवक्षायां केनायं विकल्पः । द्वन्द्वस्य सर्वाद्यन्तत्वाभावादिति बोध्यम् ॥ ३२ ॥ ३३ ॥

पूर्वपरा ॥ भाष्ये [ पुनः सूत्रपाठ इति ] । गणपाठोत्तरकालिके सूत्रपाठे इत्यर्थः । ननु पूर्वादीनि नवेत्येतावत्युक्ते गणस्थग्रहणेन प्राप्तविभाषात्वे ऽभावतात्पर्यकत्वेन गौरवादर्थान्तरे एवाप्राप्तविभाषा स्यादत आह तेषामेवाचेति । नन्वेवमर्थविशेषलाभो न स्यादत आह गण एवेति । प्रकारार्थ इति । वस्तुतो लघ्वक्षरत्वादज्झाद्यन्तत्वाच्च सूत्रे ऽवरशब्दस्य पूर्वनिपात उचित इत्याशयेनावरादीनामित्युक्तिर्वार्त्तिककृत इति बोध्यम् । ननु सर्वादीनीति व्यवहाराद् गणपाठस्य पूर्वता निश्चीयत ऽत आह आदिशब्द इति । ननु गणपाठस्य निदर्शनार्थत्वे आदिपदस्य प्रकारार्थता स्यात् तदेव कुत इत्यत आह तत्र वेद इति । प्रकारेति । सर्वनामकार्यवत्त्वमेव सादृश्यमिति भावः । छान्दसः प्रयोगइति । एवञ्च सर्वादीनीति व्यवहारादेव गणपाठस्य पूर्वत्वनिश्चय इति भावः । अत्र वदन्ति ।

करोति । नवैव हि पूर्वादीनि । इदं तर्हि प्रयोजनम् । व्यवस्थामसंज्ञायामिति वक्ष्यामीति । एतदपि नास्ति प्रयोजनम् । एवं विशिष्टान्येवैतानि गणे पठ्यन्ते । इदं तर्हि प्रयोजनम् । द्व्यादिपर्युदासेन पर्युदासो मा भूदिति । एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति । नैषां द्व्यादिपर्युदासेन पर्युदासो भवतीति । यदयं पूर्वत्रासिद्धमिति निपातनं करोति । वार्त्तिककारश्च पठति जश्भावादिति चेदुत्तरत्राभावादपवादप्रसङ्ग इति । इदं तर्हि प्रयोजनम् । जसि विभाषां वक्ष्यामीति ॥

हि कृत्स्नादीनामपि संज्ञा स्यात् । मध्यमस्यामिति तु व्यत्ययेन च्छान्दसः प्रयोगः । इमान्यवरादीनीति । अवरकालपाठात्पूर्वशब्दोऽवरशब्देनोच्यते । तेन पूर्वं गणपाठः । पश्चात्सूत्रपाठ इत्यर्थः । हेत्वभिधानमन्तरेणाऽशक्योऽयमर्थः प्रतिपत्तुमित्याह इमान्यपीति । नवग्रहणमिति । तत्र हि नवग्रहणं त्यदादीनां निरासार्थं क्रियते । यदि च नियतसंनिवेशो गणपाठः पूर्वस्ततोऽधिकव्यवच्छेदाय नवग्रहणं कर्तव्यम् । इदं तर्हीति । प्रतिनियतविशेषणाभिधानाय प्रतिपदपाठ इत्यर्थः । एवं विशिष्टान्येवेति । पाठविशेषणं गणेऽर्थनिर्देश इत्यर्थ । द्व्यादिपर्युदासेनेति । त्यदादीनि पठित्वा गणे कैश्चित् पूर्वादीनि पठितानि । तत्राऽद्व्यादिभ्य इति तसिलादीनां प्रतिषेधः प्राप्नोति । तत्र पुनः सर्वनामसंज्ञा तसिलादिविधानार्थं विधीयते तेन द्व्यादिपर्युदासो बाध्यते । यथा अनुलक्षणइति पुनर्विधानेन हेतुतृतीया बाध्यते । वाक्यभेदेन च विभाषा जसि विधीयते । यथा ऽमि पूर्वः संप्रसारणाच्चेत्यत्र वाक्याभेदेन वा छन्दसीति संबन्धाच्छन्दसि विकल्पः क्रियते इति भावः । इदं तर्हीति । यदि पूर्वादीनि नवेत्युच्येत तदा गणपाठेऽर्थनिर्देशस्य नित्यसंज्ञाविधान एवोपयुक्तत्वात् पाठविशेषणे प्रमाणाभावादप्राप्तविभाषेयमर्थान्तरे पूर्वादीनां जसि विज्ञायेत । प्राप्तविभाषायामुक्तानुवाददोषप्रसङ्गादप्राप्तविभाषायामपूर्वविधानात् । विभाषामिति । प्राप्तविभाषामित्यर्थः । प्रतिपदपाठं

तानि पूर्वादीनीत्यनेनैव गणपाठस्य पूर्वत्वे सिद्धे इमान्यवरादीनीति व्यर्थम् । अस्य हि पूर्वादीनीत्यर्थः कैयटाल्लभ्यते । न चायं सूत्रपाठस्य पुनः पाठत्वे साधकः । किं चेमान्यपि पूर्वादीनीति शङ्काप्यनुपपन्ना त्वदुक्तरीत्या हेतोरभिधानात् । एवञ्च हेत्वभिधानमन्तरेणेत्याद्यपि चिन्त्यमेव । तस्मादवरादिशब्द आश्रयवाची भीष्मादिश्च सुयोधन इतिवत् । तानि गणपठितानि पूर्वकालाश्रयाणि । इमान्यष्टाध्यायीपठितानि अवरकालाश्रयाणि इत्यर्थः । एवञ्च तत्तत्कालकृतत्वात्पूर्वादिव्यवहार इति भावः । तत्र मानाभावमूलकं शङ्कते । इमान्यपि । अष्टाध्यायीपठितान्यपि । पूर्वादीनि । पूर्वकालाश्रयाणीत्यर्थः । अत्रापिरेवार्थे ऽन्यथोभयोः परस्परापेक्षया पूर्वकालत्वासंभवनापिरनर्थक एव स्यात् । सर्वादीनीत्यादौ सर्वनामादिशब्दः प्रकार एव तत्तत्कार्यवत्त्वेन च सादृश्यम अतिप्रसङ्गस्त्वनभिधानान्नेत्याशयः । ध्वनितं चेदं कस्येदिति सूत्रे भाष्ये इति । ( नवैवेति ) भाष्ये । अष्टाध्याय्यां पूर्वेत्यादित्रिसूत्रीपठितानीत्यर्थः । अष्टाध्याय्याः पूर्वकालत्वे पूर्वादीति सूत्रेऽष्टाध्यायीसूत्रपठितानामेव तेषां ग्रहणं स्यादिति भावः । प्रतिनियतेति । पूर्वादिसप्तकस्यैव व्यवस्थायामित्यादि स्वशब्दस्यैवाज्ञातीत्यादि अन्तरशब्दस्यैव बहिर्योगेत्यादि विशेषणाभिधानायेत्यर्थः । अष्टाध्यायीपाठेन यथा द्व्यादिपर्युदासाभावस्तथा दर्शयति तत्र पुनरिति । पुनः संज्ञाविधानेन पुनः कार्यविधानद्वारा द्व्यादिपर्युदासो बाध्यत इत्यर्थः । इतिपुनर्विधानेनेति । एतत्संज्ञाकल्पितेन द्वितीयापुनर्विधानेनेत्यर्थः । नन्वेवं जसि विकल्पो न स्यादत आह वाक्यभेदेन चेति । विभाषा जसीत्यनुवृत्त्यस्येत्यर्थः । जश्भावादिति चेदुत्तरत्रेति । ढोढे लोप इति सूत्रे वार्त्तिकमिदम् । एभिश्च सूत्रवार्त्तिकप्रयोगैस्त्वयदादितः पूर्वमेव गणे पूर्वादिपाठ इति बध्यत इति भावः । पाठविशेषणे प्रमाणाभावादिति । व्याख्यानातिरिक्तप्रमाणाभावादिति

स्वमज्ञातिधनाख्यायाम् ॥ ३५ ॥ आख्याग्रहणं किमर्थम् । ज्ञातिधनपर्यायवाची यः स्वशब्दस्तस्य यथा स्यात् । इह मा भूत् । स्वे पुत्राः स्वाः पुत्राः । स्वे गावः स्वा गावः ॥

अन्तरं बहिर्योगोपसंव्यानयोः ॥ ३६ ॥ उपसंव्यानग्रहणमनर्थकं बहिर्योगेण कृतत्वात् * । उपसंव्यानग्रहणमनर्थकम् । किं कारणम् । बहिर्योगेण कृतत्वात् । बहिर्योगइत्येव सिद्धम् । न वा शाटकयुगाद्यर्थम् * । न वा ऽनर्थकम् । किं कारणम् । शाटकयुगाद्यर्थम् । शाटकयुगाद्यर्थं तर्हीदं वक्तव्यम् । यत्रैतन्न ज्ञायते किमन्तरीयं किमुत्तरीयमिति । अत्रापि य एष मनुष्यः प्रेक्षापूर्वकारी

---

चान्तरेणासंकरेणार्थनिर्देशोऽशक्यः कर्तुमिति भाष्यकारेण प्रतिपदपाठः समर्थितः ॥३४॥

स्वमज्ञा ॥ आत्मात्मीयज्ञातिधनवचनः स्वशब्दः । आमिनिज्विषयस्त्वैश्वर्यवाची । आख्याग्रहणमिति । स्वं पुत्रा स्वे गाव इत्यत्र स्वशब्दः आत्मीयत्वमेवाह पुत्रादिशब्दस्तु ज्ञातिधनयोर्वर्तते न स्वशब्द इति प्रतिषेधो न भविष्यतीति प्रश्नः । तस्य यथा स्यादिति । प्रतिषेध इति शेषः । इह मा भूदिति । असत्याख्याग्रहणे स्वे पुत्रा इत्यादौ स्यादेव प्रतिषेधः । अत्राप्यात्मीयत्वं प्रवृत्तिनिमित्तमुपादाय स्वशब्दो ज्ञातिधनयोर्वर्तते पुत्रादिभिः सामानाधिकरण्याद् आख्याग्रहणे तु सति न दोषः । स्वशब्दो ह्यत्रात्मीयस्याऽऽख्या न तु ज्ञातिधनयोरिति विधिः सिद्धः ॥ ३५ ॥

अन्तरम् ॥ बहिरित्यनावृतदेश उच्यते । तेन योगो बहिर्योगः । स च बाह्यस्य भवतीत्यन्तरे गृहा इति नगरबाह्याश्चाण्डालादिगृहा उच्यन्ते । यदा तु बहिश्शब्देन बाह्य उच्यते बाह्येन योगो बहिर्योग इति तदा नगराभ्यन्तरे ये गृहास्ते उच्यन्ते । उभयथापि स्वर्यते । उपसंख्यानशब्दो ऽपि कर्मकरणार्थभेदाद्भिन्नार्थः । ततः सर्वथा बहिर्योगात् सिद्धिं मत्वाह उपसंव्यानेति । न वेति । समानप्रमाणे शाटकयुगे अपरिहिते इदं न ज्ञायते किमुत्तरीयं किमन्तरीयमेतदित्यर्थः । अत्रापीति । यथोपसंव्यानत्वं भाविबुद्ध्या व्यवस्थाप्यते तथा बहिर्योगो ऽपीत्यर्थः । अन्ये त्वाहुः । आदिशब्दो वार्तिके

---

भावः । तथा व्याख्याने बाधकमाह उक्तानुवादेति । भाष्यांशे इत्यर्थः । अभावतात्पर्यकत्वेन गौरवं दोष इत्यपि बोध्यम् । नन्वप्राप्तविभाषात्वव्यारव्यायार्थमात्रनिर्देशः क्रियतां किं प्रतिपदपाठेनेत्यत आह प्रतिपदेति । असंकरेणेति । सप्तस्वेव व्यवस्थासंबन्धः स्वे ऽज्ञातिधनयोरन्तरं बहिर्योगोपेरित्येवंरूप इत्यर्थः । एवमप्याद्यसूत्रे पूर्वादीनि व्यवस्थायामसंज्ञायामित्येव कुतो न सूत्रितम् । सप्तनामेव व्यवस्थायां वृत्तेरिति चिन्त्यम् ॥ ३४ ॥

स्वमज्ञाति ॥ आत्मीयत्वमेवाहेति । आत्मीयत्वेनैव ततः प्रतीतिर्न तु धनत्वादिनेत्यर्थः । ईदृशविशेषलाभार्थमेवाख्याग्रहणम् । तदभावे आत्मीयत्वादिना ज्ञातिधनवाचकेऽपि निषेधः स्यादित्युक्तम् । प्रतिषेधइति शेषइति । अज्ञातीत्यादिप्रतिषेध इत्यर्थः । न तु ज्ञातिधनयोरिति । ज्ञातित्वधनत्वयोरित्यर्थः ॥ ३५ ॥

अन्तर ॥ भिन्नार्थइति नानार्थ इत्यर्थः । ततः सर्वथेति । कर्मणि द्वितीयव्याख्यानेन करणे भाष्यव्याख्यानेनेति बोध्यम् । नन्वल्पमहत्परिमाणाभ्यामन्तरीयत्वोत्तरीयत्वनिर्णयो भविष्यतीत्यत आह समाने इति । पदद्वयमपि सप्तम्यन्तम् । भाष्ये ( किमुत्तरीयं किमन्तरीयमि ) त्येतन्न ज्ञायत इत्यन्वयः ।

भवति निर्ज्ञातं तस्य भवति इदमन्तरीयमिमुत्तरीयमिति । अपुरीति वक्तव्यम् । इह मा भूत् । अन्तरायां पुरि वसति । वाप्रकरणे तीयस्य ङित्सूपसंख्यानम् * । वाप्रकरणे तीयस्य ङित्सूपसंख्यानं कर्तव्यम् । द्वितीयायै द्वितीयस्यै । तृतीयायै तृतीयस्यै । विभाषा द्वितीयातृतीयाभ्यामित्येतन्न वक्तव्यं भवति । किं पुनरत्र ज्यायः । उपसंख्यानमेवाऽत्र ज्यायः । इदमपि सिद्धं भवति । द्वितीयाय द्वितीयस्मै । तृतीयाय तृतीयस्मै ॥

स्वरादिनिपातमव्ययम् ॥ ३७ ॥ किमर्थं पृथग् ग्रहणं स्वरादीनां क्रियते न चादिष्वेव पठ्येरन् । चादीनां वै असत्त्ववचनानां निपातसंज्ञा स्वरादीनां पुनः सत्त्ववचनानामसत्त्ववचनानां च । अथ किमर्थमुभे संज्ञे क्रियेते न निपातसंज्ञैव स्यात् । नैवं शक्यम् । निपात एकाजनाङिति प्रगृह्यसंज्ञोक्ता सा स्वरादीनामप्येकाचां प्रसज्येत । क इव केन । एवं तर्ह्यव्ययसंज्ञैवास्तु तच्चाऽशक्यम् । वक्ष्यत्येतत् । अव्यये नञ्कुनिपातानामिति । तद्गरीयसा न्यासेन परिगणनं कर्तव्यं स्यात् । तस्मात् पृथग्ग्रहणं कर्तव्यम् । उभे च संज्ञे कर्तव्ये ॥

---

शाटकयुगाद्यर्थमित्यत्रोपात्तस्तत्र शाटकानां त्रये चतुष्टये वा तृतीयचतुर्थयोर्बहिर्योगाभावादुपसंख्यानग्रहणं कर्तव्यम् । अपुरीति । गणसूत्रएतत्कर्तव्यम् । लिङ्गविशिष्टपरिभाषया ग्रहणप्रसङ्गात् । इह त्वनेन नार्थः । अत इति जसः शीविधानाद्दाबन्तात्प्राप्त्यभावात् । पूः कस्मिंश्चिद्देशे प्राकाराभ्यन्तरे क्रियते क्व चित्प्राकाराद्बहिरिति अस्ति पुरो बहिर्योगः ॥ ३६ ॥

स्वरादिनिपातमव्ययम् ॥ किमर्थमिति । स्वरादिषु किंचित्क्रियाप्रधानं किं चित्साधनप्रधानमिति असत्त्ववचनत्वाच्चादिष्वेव स्वरादीनि पठितव्यानीति मत्वा प्रश्नः । स्वरादीनां पुनरिति । स्वस्ति वाचयति स्वः पश्येति क्रियासम्बन्धे ऽनेकशक्तिदर्शनात्सत्त्ववाचित्वनिश्चयः । लोहितगङ्गमित्यादीनामव्ययानां सत्त्वधर्मनपुंसकत्वदर्शनाद्व्यक्तमेव सत्त्ववाचित्वम् । न निपातसंज्ञैवेति । प्राग्रीश्वरान्निपाताः स्वरादीनि चादयो ऽसत्त्वे इति सूत्रन्यासः कार्य इत्यर्थः । स्वरादीनामिति । किमो ऽद्दिति अत् प्रत्ययो दक्षिणादाजत्याच् केन्प्रभृतयस्तु कृत एकाचः सन्तीति भाव. । तच्चाशक्यमिति । अव्ययसंज्ञायामेव सत्या मव्ययमेकाजनाङिति सूत्रं कर्तव्यं ततश्चात्प्रभृतीनामपि प्रगृह्यसंज्ञाप्रसङ्गः प्राप्नोति । अथ चादय इकाजनाङिति क्रियते तदा चादीनामसत्त्ववचनत्वाविशेषणमलभ्यम् ॥ ३७ ॥

---

तृतीयचतुर्थयोरिति । शरीरसंयुक्तयोरित्यर्थः । भाष्यस्य स्वयं भावः । बहिर्योग इति स्मर्यते । तेन परम्परया बाह्यसंबद्धस्यापि सिद्धिरिति । ननु जासि विकल्पविधायकसूत्रस्थवार्त्तिकोदाहरणं सप्तम्यन्तमयुक्तमत आह गणेति । पः शब्दस्य विशेष्यत्वे इत्यर्थः । स च स्त्रियामेव तदाह । इहत्विति ॥ ३६ ॥

स्वरादि ॥ क्रियाप्रधानमिति । क्रियायामेव विशेषणमित्यर्थः । यथा हिरुगादि । एतच्चोत्तरसूत्रे कैयटे स्पष्टम् । किंचिदिति । यथोच्चैरादि । अनेकशक्तीति स्वस्तिष्ठति स्वरागत इत्यादावित्यर्थः । अनेककारकशक्तियोग एव च सत्त्वमिति भावः । भाष्ये ( सत्त्ववचनानामसत्त्ववचनानाञ्चे ) त्यस्याभ्य-

तद्धितश्चासर्वविभक्तिः ॥ ३८ ॥ असर्वविभक्तावविभक्तिनिमित्तस्योपसंख्यानम् * । असर्वविभक्तावविभक्तिनिमित्तस्योपसंख्यानं कर्तव्यम् । विना नाना । किं पुनः कारणं न सिध्यति । सर्वविभक्तिर्ह्यविशेषात् * । सर्वविभक्तिर्ह्येष भवति । किं कारणम् । अविशेषेण विहितत्वात् । त्रलादीनां चोपसंख्यानम् * । त्रलादीनां चोपसंख्यानं कर्तव्यम् । तत्र । यत्र । ततः । यतः । ननु

---

तद्धितश्चाऽसर्वविभक्तिः ॥ इह संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधाद् यद्यपि केवलस्य प्रत्ययस्य ग्रहणं तथापि प्रयोजनं सर्वनामाव्ययसंज्ञायामिति वाचनिकस्तदन्तविधिरस्तीति तदन्तस्याव्ययसंज्ञा विज्ञायते । तत्र वृत्तिकारेण व्याख्यातम् । असर्वा विभक्तिर्यस्य सो ऽसर्वविभक्तिरिति । तत्र यदाऽयमर्थः यस्य तद्धितस्याऽसर्वा विभक्तिः कार्या यस्मान्न सर्वा विभक्तिरुत्पद्यते इति तदा न दोषः । यदा तु यस्य तद्धितस्योत्पत्तौ निमित्तत्वेनाऽसर्वा विभक्तिराश्रिता सो ऽसर्वविभक्तिः । यथा सर्वैकान्येति दाप्रत्ययस्य सप्तम्येवोत्पत्तिनिमित्तमित्यस्मिन् सूत्रार्थे विनानानेत्यस्याव्ययसंज्ञा न सिध्यति, नहि विनञ्भ्यामित्यत्र प्रतिनियता का चिद्विभक्तिराश्रितेत्याह असर्वविभक्ताविति । अतिव्याप्तिश्चाऽस्मिन् सूत्रार्थे दाप्तिरितीजः षष्ठ्येव निमित्तमिति संज्ञाप्रसङ्गात् । अविभक्तिनिमित्तस्येति । अश्रूयमाणविभक्तिकमव्ययमाविभक्तीत्युच्यते तन्निमित्तस्य यस्येष्यते न च प्राप्नोति तस्योपसंख्यानं कर्तव्यम् । न तु सामान्येनाऽविभक्तिनिमित्तस्य संज्ञा विधेया विशालविशङ्कटादीनामपि प्रसङ्गात् । किं पुनरिति । एकवचनमुत्सर्ग इति वचनात् क्रमव्यतिक्रमे कारणाभावाद् विनानानेत्यत्रापि असर्वा विभक्तिरुत्पत्तौ निमित्तमिति प्रश्नः । सर्वविभक्तिरिति । अविशेषेणोत्पद्यन्ते उत्पन्नानां नियमः क्रियतइत्यव्ययात् सर्वा विभक्तय उत्पद्यन्तइत्यर्थः । अविशेषादिति । विशेषस्याऽनाश्रयणादित्यर्थः । त्रलादीनां चेति । आदिशब्दस्य प्रकारवा-

---

चित्वात् संज्ञेष्यत इति शेषः । लीहिनेति । अव्ययीभावश्चेति स्वरादिषु पठ्यत इति मते इदम् । नन्वसत्त्वाभावाच्चादिषु पाठाभावाच्च कथं निपातत्वमत आह प्राग्रीति । क्रिमेदिति । तद्धितश्चेति सूत्रमपि तत्संज्ञाविधायकमेव भवति । एतत्प्रयोजनसत्त्वादेव केवलानामपि तेषां संज्ञा स्यादिति भावः । भाष्ये । [एवंतर्ह्यव्ययेति] । प्राग्रीश्वरादव्ययं स्वरादीनि चादयोऽसत्त्वे इति पाठपक्षमित्यर्थः । तदा चादीनामिति । यदि तु चादयः । असत्त्वे इति योगविभागेनासत्त्वे इति पाठविशेषणं क्रियते तदा नायं दोषः । तस्माद्भाष्योक्त एव दोषः । न च तत्र प्रादीनामिति वाच्यम् । ऊर्यादीनामसङ्ग्रहापत्तेः । एवं निपाता आद्युदात्ता इत्यादावपि दोषो बोध्यः ॥ ३७ ॥

तद्धितश्च ॥ यद्यपि केवलस्येति । एवञ्च केवलतद्धितात्कस्या अपि विभक्तेरभावेनासर्वविभक्तिरिति विशेषणमव्यावर्त्तकमिति भावः । वाचनिक इति । शब्दरूपं विशेष्यमाश्रित्य तदन्तविधिरिति भावः । किं च केवलानां संज्ञायां प्रयोजनाभावः प्रयोजकाभावश्च । अन्वर्थं संज्ञालब्धोर्थो हि सम्प्रयोजक इति बोध्यम् । वार्त्तिकोत्थानाय सूत्रार्थं दर्शयति तत्र वृत्तिकारेणेति । सर्वाविभक्तिरिति । सर्वावयविकेत्यर्थः । प्रतिनियतेति । एवञ्च विशेषतः कस्या अपि निमित्तत्वेनानाश्रयणात्सर्वविभक्तिनिमित्तकायमिति भावः । ननु सुबन्तात्तद्धितोत्पत्तेरविभक्तिनिमित्तस्तद्धितोऽप्रसिद्धोऽत आह अश्रूयमाणेति । तन्निमित्तस्येति बहुव्रीहिः । नन्वुत्सर्गत एकवचनमपि सर्वासां स्यादिति बहुवचनान्तविग्रहे सर्वविभक्तेर्निमित्तत्वमव्याहतमत आह क्रमव्यतिक्रमइति । प्रथमातिक्रमे कारणाभावेन प्रथमाया एवैकवचनमिति न दोष इत्यर्थः । अविशेषेणेति । ह्येकयोरित्याद्येकवाक्यतामनपेक्ष्येत्यर्थः । उत्पन्नानां नियमइति । उत्पन्नानां शास्त्रबलान्नियमेन लोपेनेव निवृत्तिः क्रियत इत्यर्थः । इदमप्यर्थनियमे सजातीयापेक्षनस्ययनियमे च बोध्यम् ।

चविशेषेण एते विधीयन्ते । पञ्चम्यास्तसिल् सप्तम्यास्त्रलिति । वक्ष्यत्येतद् इतराभ्योऽपि दृश्यन्तइति । यदि पुनरविभक्तिशब्दो ऽव्ययसंज्ञो भवतीत्युच्यते । अविभक्ताावितरेतराऽऽश्रयत्वादप्रसिद्धिः * । अविभक्ताावितरेतराश्रयत्वादप्रसिद्धिः संज्ञायाः । का इतरेतराश्रयता । सत्यविभक्तित्वे संज्ञया भवितव्यम् । संज्ञया चाऽविभक्तित्वं भाव्यते । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । अलिङ्गमसंख्यमिति वा * । अथवा ऽलिङ्गमसंख्यमव्ययसंज्ञं भवतीति वक्तव्यम् । एवमपीतरेतराश्रयमेव भवति । का इतरेतराश्रयता । सत्यलिङ्गासंख्यत्वे संज्ञया भवितव्यम् । संज्ञया चाऽलिङ्गासंख्यत्वं भाव्यते । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । नैवं वाचनिकमलिङ्गता असंख्यता च । किं तर्हि । स्वाभाविकमेतत् । तद्यथा । समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते अपरे न । तत्र किमस्माभिः कर्तुं शक्यम् । स्वाभाविकमेतत् । तत्तर्हि वक्तव्यमलिङ्गमसंख्यमिति । न वक्तव्यम् । सिद्धं तु पाठात् * । पाठाद्वा सिद्धमेतत् । कथं पाठः कर्तव्यः । तसिलादयः प्राक् पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः । मान्तः । तसि-

---

चित्वात्तसिलपि गृह्यते । वक्ष्यत्येतदिति । भवदादिप्रयोगएवाप्राप्तिश्चोद्यत इत्यर्थः । यदि पुनरिति । प्रयोगे यो ऽश्रूयमाणविभक्तिः सो ऽव्ययमित्यर्थः । न च दधिमध्वित्यत्रातिप्रसङ्गो दध्नीत्यादौ विभक्तिश्रवणात् । अविभक्ताविति । अव्ययत्वादविभक्तित्वमविभक्तित्वादव्ययत्वमिति दोषः । अलिङ्गमसङ्ख्यमिति । अविभक्तिरव्ययमित्यस्य लक्षणस्य दूषितत्वाद् अत्रापि तदेव दूषणमिति प्रदर्शनार्थो वाशब्दः । अलिङ्गासङ्ख्यत्वस्य लौकिकत्वान्नात्रेतरेतराश्रयत्वमिति पूर्वपक्षः । एवमपीति । अर्थमपि कश्चित् क्वचिच्छास्त्रादेव प्रतिपद्यतइति भावः । सिद्धं त्विति । वार्तिककारस्येतरेतराश्रयदोषः स्थित एवेति तुशब्दो विशेषप्रदर्शनार्थः । भाष्यकारेण त्वितरेतराश्रयदोषः परिहृत इति वाशब्दार्थस्तुशब्दो व्याख्यातः । य एव प्रकारवचने थाल् स एव प्रत्नादिभ्यो विधीयते इति नाऽव्याप्तिः । मान्तइति । आम् । अम् । तसिः प्रतियोगे पञ्चम्यास्तसिः तेनैकादिक्

---

विशेषस्येति । द्व्येकयोरित्यत्रैकवाक्यतारूपस्येत्यर्थः । ज्ञापकाद्विभक्तिरिति पक्षे इयमेवेति विशेषस्येत्यर्थः । ननु चलादीनामित्युक्त्वा पलः प्राक् पठितस्य तसिलः कथमुदाहरणदानमत आह आदिशब्दस्येति । ननु विनेत्याद्यवपि पदत्वाय विभक्त्युत्पत्तिरावश्यकेत्यत आह प्रयोगेइति । दध्नीत्यादाविति । प्रयोगमात्रे विभक्त्यभावो विवक्षित इति भावः । अव्ययत्वादिति । अविभक्तिकत्वस्य स्वाभाविकत्वे ऽव्ययाद्राप्सुप इत्यस्य वैयर्थ्यप्रसङ्गादिति भावः । ननु पूर्वलक्षणस्य दूषितत्वाद्वाशब्दोऽसङ्गतोऽत आह अविभक्ताविति । वाशब्दइति । प्रयुक्त इति शेषः । एवञ्चान्वयार्थो वाशब्द इत्यर्थः । अलिङ्गमित्यपि यद्युच्यते एवमपि अन्योन्याश्रयइत्यर्थः । शास्त्रादेवेति । तद्द्योतकाविभक्तिलुक् शास्त्रादेवेति भावः । वाशब्दार्थ इति । वाशब्दस्यार्थ इवार्थो यस्येति बहुव्रीहिः । अयञ्च पाठः स्वरादिषु कार्य इति बोध्यम् । स च पचतिकल्पादिव्यावृत्तये तद्धितश्चेति सूत्रारम्भेप्यावश्यक इति भावः । प्रत्नेत्यादि स्थाल् न परिगणितमध्यवर्तीत्यत आह सएवेति । प्रकारवचन इत्यत्र प्रकारः सादृश्यं विशेषश्च । तत्र शब्दशक्तिमाहात्म्यात् प्रत्नादिभ्य उत्पन्नेन सादृश्यमुच्यते किमादिभ्यस्थाला तु विशेषः । एतच्च प्रत्नपूर्वेति सूत्रं व्यर्थमेव । लोके प्रयोगस्त्वनभिधानादिति भावः । आम

वती। क्त्वोऽर्थाः। नानाञाविति। अथवा पुनरस्त्वविभक्तिश्शब्दे ऽव्ययसंज्ञो भवतीत्येव। ननु चोक्तमविभक्ताावितरेतराश्रयत्वादप्रसिद्धिरिति। नैष दोषः। इदं तावदयं प्रष्टव्यः। यद्यपि तावद्वैयाकरणा विभक्तिलोपमारभमाणा अविभक्तिकाञ्छब्दान् प्रयुञ्जते ये त्वेते वैयाकरणेभ्यो ऽन्ये मनुष्याः कथं तेऽविभक्तिकाञ्छब्दान् प्रयुञ्जतइति। अभिज्ञाश्च पुनर्लौकिका एकत्वादीनामर्थानाम्। आतश्चाभिज्ञाः। अन्येन हि वस्त्रेणैकं गां क्रीणन्ति। अन्येन द्वावन्येन त्रीन्। अभिज्ञाश्च न च प्रयुञ्जते। तदेवं संदृश्यताम्। अर्थरूपमेवैतदेवंजातीयकं येनाऽत्र विभक्तिर्न भवतीति। तच्चाप्येतदेवमनुगम्यमानं दृश्यताम्। किं चिदव्ययं विभक्त्यर्थप्रधानं किं चित् क्रियाप्रधानम्। उच्चैर्नीचैरिति विभक्त्यर्थप्रधानम्। हिरुक् पृथगिति

---

तसिश्चेति। क्त्वो ऽर्थाः क्त्वतुमुन्तुमुच्प्रथाः। अथवेति। वृद्धव्यवहारादेव शब्दार्थसम्बन्धावगमादेकत्वादिव्यवहारवदलिङ्गासङ्ख्यत्वमप्यव्ययार्थस्य प्रसिद्धमित्यर्थः। अत्रैवोपपत्तिमाह तच्चापीति। किं चिदिति। अव्ययानां द्वैविध्यमेवेति प्रतिपाद्यते अलिङ्गासङ्ख्यत्वप्रतिपादनाय। अन्ये त्वाहुः। किं चिदव्ययं क्रियाप्राधानं किं चित्साधनप्रधानम्। अन्यत्तु नापि क्रियाप्रधानं नापि साधनप्रधानम्। यथा स्वः पश्य। लोहितगङ्गं उन्मत्तगङ्गं देश इति। तथा चात्र नपुंसकत्वम्, अव्ययीभावश्चेत्यन्वाख्यायते पूर्वं च भाष्यकारेणोक्तं स्वरादीनां पुनः सत्त्ववचनानामसत्त्ववचनानां चेति। तस्माद्बाहुल्याभिप्रायेणाऽलिङ्गमसङ्ख्यमव्ययमित्युच्यते। उच्चैर्नीचैरिति। सप्तम्यर्थे वर्तते इति साधनप्रधानता। हिरुक् पृथगिति। क्रियाविशेषणत्वादेषां क्रियाप्राधान्यम्। क्रियापदप्रयोगमन्तरेणापि पृथग् देवदत्त इत्यादिप्रयोगः क्रियाऽऽक्षेपादुपपद्यते। शब्दशक्तिस्वाभाव्याच्चैकस्मिन्नर्थे विधीयमानयोस्तेनैकादिक् तसिश्चेत्यणतसोर्भिन्नधर्मत्वम्। तत्र पैलुमूलमिति द्रव्यं प्राधान्येनाभिधीयते। पीलुमूलत इति तु द्रव्योपसर्जनस्तृतीयार्थ

---

चच्छन्दसीत्यम्। किमोत्तिङ्व्ययाघ। प्रतियोगे इति तसिः। शस्प्रभृतिष्वस्तीति। तदूमहृयां चिन्त्यम्। इष्टाचत्वार्थमित्यन्ये। भाष्ये (वति) स्तेन तुल्यमिति विहितः न तूपसर्गाच्छन्दसीति विहितः। उदूवतो निवत इत्यादौ तस्य लिङ्गसंख्याद्यन्वयदर्शनादित्याहुः। एकत्वादिव्यवहारवदिति। पटादिपदानामिति शेषः। अलिङ्गासङ्ख्यत्वमपीति। तथा च सङ्ख्याभावादेव विभक्त्यनुत्पत्तिरिति अविभक्तिरिति न्यासोऽप्यदुष्ट इति भावः। अव्ययादाप्सुप इति सूत्रं तु न्यायसिद्धाया अनुत्पत्तेरेवान्वाख्यापकं प्रत्ययलक्षणप्रतिपत्तिद्वारा पदत्वादिसम्पादनार्थमिति तात्पर्यम्। नन्ववैयाकरणैः सङ्ख्याया अज्ञानादेव तद्वाचकविभक्तिर्न प्रयुज्यत इत्यत आह। भाष्ये (भिज्ञाश्चेति)। पट इत्यादौ तैरपि एकवचनादिप्रयोगकरणादिति भावः। युक्त्यन्तरमप्याह आतश्चाभिज्ञाइति। वस्त्रो मूल्यम्। अत्रैवेति। अलिङ्गासङ्ख्यत्व एवेत्यर्थः। उपपत्तिर्युक्तिः क्रियाप्रधानत्वादिरूपा। एवमनुगम्यमानमित्यस्योपपद्यमानमित्यर्थः। नापि साधनप्रधानमिति। किं तु द्रव्यप्रधानमिति शेषः। तस्माद्बाहुल्येति। एवञ्च तादृशबहुमध्यपाठेन स्वरादीनामप्यलिङ्गासङ्ख्यत्वमनुमीयते। अनेककारकशक्तियोगमात्रेण तु सत्त्ववचनत्वमिति भावः। उन्मत्तगङ्गादीनान्तु वाचनिकमव्ययत्वमव्ययीभाव इति महासंज्ञयापि सूच्यते सत्त्वप्रधानता तु इदं स्वरिति सर्वनाम्ना परामर्शात्। अन्याद्यर्थकप्रतामित्याद्यपि सत्त्ववचनमित्यन्ये। ननु तदर्थे कारकान्वयाभावान्न तस्य क्रियात्वमत आह क्रियाविशेषणत्वादिति। क्रियायामेव विशेषणत्वादित्यर्थः। क्त्वान्ततुमुन्नन्तादिवदिति भावः। स्वरादीन। घटादीनाञ्च स्वः पतिर्घटोदकमित्यादौ नामार्थेऽप्यन्वयः। एतेन तेषामपि क्रियाविशेषणत्वात्क्रियाप्राधान्यं दुर्वारमित्यपास्तम्। अत एवतदर्थे न कारकाणामन्वयः तदन्वययोग्यस्य साध्यस्वरूपक्रियात्वस्य तत्राभावात्। क्रियाक्षेपादिति। स्थित्यादिक्रियाक्षेपादित्यर्थः। द्रव्यं प्राधान्येनेति। पीलुमूलसमानदिक्त्वमिति हि तत्र

क्रियाप्रधानम्। तद्धितश्चापि कश्चिद् विभक्त्यर्थप्रधानः। कश्चित् क्रियाप्रधानः। तत्र यत्रेति विभक्त्यर्थप्रधानः। विना नानेति क्रियाप्रधानः। न चैतयोरर्थयोर्लिङ्गसंख्याभ्यां योगो ऽस्ति। अथाऽप्यसर्वविभक्तिरित्युच्यते। एवमपि न दोषः। कथम्। इदं चाऽप्ययत्ने अतिबहु क्रियते। एकस्मिन्नेकवचनम्। द्वयोर्द्विवचनम्। बहुषु बहुवचनमिति। कथं तर्हि। एकवचनमुत्सर्गः करिष्यते। तस्य द्विबह्वोरर्थयोर्द्विवचनबहुवचने बाधके भविष्यतः। न चाप्येवं विग्रहः करिष्यते। न सर्वा

---

इति तस्य साधनप्रधानता। अयत्नइति। सूत्रारम्भकालइत्यर्थः। पूर्वं हि न्यासान्तराऽऽश्रयेण सूत्रं प्रत्याख्यातम्। अतिबह्विति। एकस्मिन्नित्यपनीय एकवचनमिति सूत्रं कर्तव्यम् ततो द्विबह्वोर्द्विवचनबहुवचने इत्येवं कर्तव्यम्। तेन द्वित्वबहुत्वयोर्द्विवचनबहुवचने भविष्यतः। एकवचनं त्वेकस्मिन्नपि भविष्यति अलिङ्गसङ्ख्येभ्यो ऽव्ययेभ्यश्च। ननु कर्मणि द्वितीयेत्यादीनां कर्मादिषु द्वितीयादीनां नियतत्वात्कथमेकवचनाव्ययेभ्यः स्यात्। नैष दोषः। एतदर्थमेवैकवचनमित्येतत् क्रियते अप्राप्तप्रापणार्थम्। तेन कर्माद्यभावेऽपि भवति। द्वित्वबहुत्वयोस्तु प्राप्तं द्विवचनबहुवचनाभ्यां बाध्यते। न सर्वा विभक्तय उत्पत्तौ निमित्तमस्येति येन वृत्तिकारेण व्याख्यातं तन्मतं दूषितम्। इदानीं वृत्तिकारान्तरमतं विशेषदर्शनेन संस्क्रियते। न चाप्येवमिति। एवं विग्रहे सर्वशब्दस्य प्रकारकात्स्न्र्ये ऽपि वर्तनादेकवचनमत्रोत्पत्तावपि सर्वा विभक्तयः सप्ताव्ययेभ्य उत्पद्यन्ते इति न स्यादसर्वविभक्तित्वम्। कथं तर्हीति। द्रव्यकात्स्न्र्यंवृत्तिः

---

बोधः। द्रव्योपसर्जनइति। तस्मात्प्रत्ययाभिधेयद्रव्योपसर्जनः प्रकृत्यभिधेयस्तृतीयार्थ इत्यर्थः। तृतीयार्थश्च तत्र साहित्यं पीलुमूलेनैकदिक् पीलुमूलतः। एकदिक्त्वस्य पीलुमूलसाहित्यमित्यर्थः। अन्ये तु पीलुमूलेन समानदिशीत्यर्थकमपादानाधिकरणशक्तिप्रधानं पीलुमूलत इतीत्याहुः। भाष्ये ( न चैतयोरर्थयोरिति। यद्यपि क्रियायामेकत्वसंख्या रूपप्सूत्रे भाष्ये उक्ता पचतिरूपमित्यादिवाच्यायाश्च नपुंसकत्वयोग उक्तस्तथापि अव्ययवाच्ययोरेतयोर्लिङ्गसंख्याभ्यामयोग इत्यर्थान्न दोष इति दिक्। सूत्रारम्भकालइति। यद्यपि न्यासान्तरेपि एकस्मिन्निति बह्वेव तथापि एकग्रहणे सति ज्ञापकादिति: सर्वविभक्त्युत्पत्तावस्य सूत्रस्याप्यानर्थक्यमिति एतत्सूत्रपाठकाले एतत्सूत्रसहितमेकस्मिन्नित्यतिबहु व्यर्थं क्रियत इति एकग्रहणं त्यक्त्वाऽस्य सार्थक्यं वक्तु योग्यमित्यर्थ इति भावः। न्यासान्तरेति। पाठाश्रयेणालिङ्गसंख्यामित्यनेन वेत्यर्थः। भाष्ये [ अतिबह्विति ] बहुशब्दो वैपुल्यवाची अतिबहुशास्त्रं व्यर्थः। क्रियते इत्यर्थः। अलिङ्गसंख्येभ्यइति। द्विवचनबहुवचनविधायकयोर्द्विबहुग्रहणसामर्थ्यान्महासंज्ञाबोध्यकत्वाभावेपि एकवचनप्रवृत्तिरिति भावः। कथमेकवचनमिति। प्रथमापि मात्रग्रहणाद् यस्मात्प्रातिपदिकार्थस्य कर्मत्वाद्याधिक्यसंभावना तत्रैवेति भावः। अप्राप्तेति। द्वित्वबहुत्वयोर्द्विवचनबहुवचनविधाने एकवचनस्यार्थात्तदभावे कर्मादौ सिद्धत्वेन सामर्थ्यदिति भावः। अप्राप्तिश्च कर्मत्वाद्यभावप्रयुक्तैव न तु प्रातिपदिकत्वाभावप्रयुक्तापि सुब्विध्येकवाक्यत्वात्। तेन तिङन्तादिभ्यो नापत्तिरिति बोध्यम्। किं च सर्वथा ऽप्राप्तावेवास्य विधायकत्वमिति पचतिकल्पमित्यादौ न सर्वैकवचनापत्तिरिति बोध्यम्। यद्यप्यनिर्दिष्टार्थत्वात् स्वार्थे विधीयमानस्यास्य न द्वित्वादौ प्राप्तिस्तथापि पञ्चकप्रातिपदिकार्थपक्षे एकत्व इव द्वित्वादावपि प्राप्तिरित्याशयेनाह बाध्यत इति। अत्र पक्षे द्व्येकयोरिति सूत्रमपि विध्यर्थमेवेति भावः। यद्यपि अव्ययात्सर्वविभक्त्युत्पत्त्यायं न्यासो दूषितस्तथापि सामान्यापेक्षप्रत्ययनियमे एकवाक्यतया विधाने वा कस्या अप्यप्राप्त्येदं विधायकमिति तत्पक्षे सूत्रसार्थक्योपपादनमिदम्। एवञ्चैतदेव तयोरन्यतरपक्षाश्रयणस्यैकपदे वाक्यार्थानन्वयित्वस्य च ज्ञापकमिति बोध्यम्। एतत्सर्वमुत्सर्गपदेन भाष्ये सूचितम्। तन्मतमिति। दाक्षिरित्यादावपि तद्धितेभ्योपि दृश्यन्त इत्येतद्धितवलादिविषयव्याप्तेश्चेति भावः। वृत्तिकारान्तरेति। तद्विग्रहे अस्येति अपादानस्यैव

असर्वाः । असर्वा विभक्तयो यस्माविति । कथं तर्हि । न सर्वा असर्वा असर्वा विभक्तिरस्मादिति । त्रिकं पुनर्विभक्तिसंज्ञम् । एवं गते कृत्सापि तुल्यमेतन्मान्तस्य कार्यं ग्रहणं न तत्र । ततः परे चाभिमता न कार्यास्त्रयः कृदर्थां ग्रहणेन योगाः ॥१॥ कृत्तद्धितानां ग्रहणं तु कार्यं संख्याविशेषं ह्यभिनिश्चिता ये । तेषां प्रतिषेधो

———

सर्वशब्दः । एकवचनमात्रोत्पत्तौ निरवशेषा विभक्तिर्नोत्पन्ना भवतीति भवत्येवाऽसर्वविभक्तित्वम् । यदा त्वयं न्यायः प्रथमाऽतिक्रमे कारणाभावात्प्रथमाया एवैकवचनमव्ययेभ्य उत्पद्यतइति तदा असर्वा विभक्तयो यस्मादित्यपि विग्रह आश्रिते न दोषः । यदा तु खलेकपोतिकान्यायेन सर्वैकवचनोत्पत्तिपक्षस्तदैतदुक्तम् । अव्ययीभावादप्येकवचनमात्रमेवोत्पद्यते । तावतैव तृतीयासप्तम्योर्बहुलमित्यस्योपपादनात् । एवं गतइति । यदा असर्वा विभक्तिरस्मादिति विग्रह आश्रीयते । तदेवं विज्ञाते सत्येतावल्लक्षणमस्त्वसर्वविभक्त्यव्ययमिति । पञ्चसूत्री न कर्तव्या । एतदसर्वविभक्तित्वं कृत्यपि तुल्यम् । यस्य कृन्मेजन्त इत्यनेनाऽव्ययसंज्ञेष्यते । मान्तस्येति । सूत्रोपलक्षणम् । तत. परइति । कृन्मेजन्त इत्यस्मात् सूत्रात्परं कृदर्थाः कृत्संज्ञाविषयाः क्त्वातोसुन्कसुन इत्यर्थः । ग्रहणेनोच्चारणेन प्रतिपदमित्यर्थः । योगाश्च न कर्तव्याः स्वरादिनिपातमव्ययमित्येवमादयः पञ्चेत्युपसंहारः । इदानीमतिव्याप्तिपरिहारार्थं तद्धितग्रहणं कर्तव्यं तस्मिन् कृते कृन्मेजन्त इत्याद्यपि कर्तव्यमिति दर्शयति । कृत्तद्धितानामिति । संख्याविशेषमिति । तन्निवृत्त्यर्थमित्यर्थः । तेषामिति । असति तद्धितग्रहणे एकादीनामतद्धितान्तानामप्यसर्वविभक्तित्वात् प्रतिषेधो वक्तव्यः स्यादिति तद्धितग्रहणं कर्तव्यम् । तस्मिन् कृते स्वरादिग्रहणं कर्तव्यम् । स्वरादीनामतद्धितान्त-

———

संबन्धस्याविवक्षया षष्ठीति ध्वनयितुं भाष्ये ( यस्मादि ) त्युक्तम् । विशेषेति । एकवचनान्तविग्रहकरणरूपो विशेषः । नन्वेवं सर्वविभक्त्येकवचनोत्पत्तौ बहुवचनान्तविग्रहासङ्गतिरतो भाष्ये ( नचापीति ] । नह्यास्पष्टे प्रकारेति । सर्वा विभक्तय इत्यस्य सर्वप्रकारा इत्यर्थः । अवयवकात्स्न्र्ये तु बहुवचनं व्यर्थमिति भावः। एकवचनान्तविग्रहे तु अवयवकात्स्न्र्ये एव सर्वशब्द इति नानेध्यादौ नाव्याप्तिर्नापि दाधिरित्यादावतिव्याप्तिरिति भावः । भाव पचतिकल्पमित्यादौ च क्रियायाः स्वत एवैकत्वादेकवचनमेव । तथ भाव प्रथमपुरुषस्यैव लान्तसमानाधिकरणयुष्मदाद्यभावादिति रूपप्सूत्रे भाष्ये स्पष्टम् । अव्ययेभ्योपि प्रथमैकवचनमेवास्तु इत्याह यदा त्विति । प्रथमेति । अनेकनियमबाधे गौरवाच्चेत्यपि बोध्यम् । ननु भाष्योक्तपक्षेऽव्ययेभ्यो युगपत्सर्वविभक्त्येकवचनानां कर्तुमशक्यत्वं परइचेत्युक्तेः । किं तु यस्किंचिदेव तस्य लुकि तावतैव पदत्वसंपादनात् । विभक्त्यन्तरोत्पत्तौ मानाभावेन बहुवचनान्तविग्रहेपि न दोषोत आह खलेकपोतेति । वाचः क्रमवृत्तित्वाद्युगपदुच्चारणासंभवेपि बुद्ध्या युगपत्सर्वोत्पत्तिर्वक्तुं शक्येति भावः । विनिगमनाविरहोच बीजं प्रक्रियादशायाञ्च बुद्धिरेव मुख्या । असाधूच्चारणायोगात् । यद्वा प्रधानानुरोधेन गुणावृत्तस्तावेत्यः प्रकृतयः स्युरिति भावः । परे तु प्राथम्यं स्वादिसूत्रे प्रथमाया नियमशास्त्र पर्यालोचनया द्वितीयाया इति न तन्नियामकमिति प्रथमातिक्रम इत्याद्यसङ्गतं तन्न्यायाश्रयणे निजाऽन्तयायामित्यत्र अयाणामित्यस्याग्रुदात्तत्वे स्यादावादिग्रहणस्य वैयर्थ्यंञ्चेत्याहुः । तावतैवेति । टाङ्योरिति वक्तव्ये तृतीयादिग्रहणन्तु वैचित्र्यार्थमिति भावः । इदमेव ध्वनयितुं पञ्चयोगानुपस्यात्तष्टे । [ एवगतं ] इति भाष्ये । प्रातिपदिकमिति । असर्वविभक्तीति न्यासेनैव सिद्धत्वादित्यर्थः । भाष्यश्लोके [ ततेति ) । अव्ययसंज्ञाविधाविस्यर्थः । पञ्चेति । स्वरादिस्यादिरव्ययीभावश्चेत्यन्तः । ये इति यच्छब्दस्य तच्छब्दसाकाङ्क्षत्वादाह निवृत्त्यर्थमिति । तदेवं सूत्रं स्थापितमिति वार्तिकोक्तं सिद्धन्तु पाठादित्यप्यनाश्रितं स्यात् । एवञ्चोभयशब्दादौ दोष इति शङ्कोत्तरस्मेनोत्तरभा-

भवतीति वक्तव्यम्। इह मा भूत्। एको द्वौ बहव इति। तस्मात् स्वरादिग्रहणं च कार्यं कृत्तद्धितानां ग्रहणं च पाठे* ॥ २ ॥ पाठेनेयमव्ययसंज्ञा क्रियते सेह न प्राप्नोति। परमोच्चैः परमनीचैरिति। तदन्तविधिना भविष्यति। इहापि तर्हि प्राप्नोति। अत्युच्चैः। अत्युच्चैसौ। अत्युच्चैस इति। उपसर्जनस्य नेति प्रतिषेधो भविष्यति। स तर्हि प्रतिषेधो वक्तव्यः। न वक्तव्यः। सर्वनामसंज्ञायां प्रकृतः प्रतिषेध इहानुवर्तिष्यते। स वै तत्र प्रत्याख्यायते। यथा स तत्र प्रत्याख्यायते इहापि तथा शक्यः प्रत्याख्यातुम्। कथं च स तत्र प्रत्याख्यायते। महतीयं संज्ञा क्रियतइति। इहापि च महती संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः। कुत एतत्। लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करणएतत्प्रयोजनम्। अन्वर्था संज्ञा यथा विज्ञायेत। न व्येतीत्यव्ययमिति। क्व पुनर्न व्येति। स्त्रीपुन्नपुंसकानि सत्त्वगुणा एकत्वद्वित्वबहुत्वानि च। एतानर्थान् के चिद्वियन्ति के चिन्न वियन्ति। ये न वियन्ति तदव्ययम्। सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥

---

त्वात्। ननूभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वं तथा गोदौ वरणा इति तत एषामपि तद्धितश्चासर्वविभक्तिरित्यव्ययसंज्ञाप्रसङ्ग इत्याह कृत्तद्धितानामिति। प्रतिपदं तद्धिताः पाठितव्या येषामव्ययसंज्ञेष्यतइत्यर्थः। तस्माद्गणपाठ एवाश्रयितव्यः प्रपञ्चार्थस्तु सूत्रारम्भः। तदन्तविधिनेति। प्रयोजनं सर्वनामाव्ययसंज्ञायामिति वचनेनेति भावः। अत्युच्चैसाविति। शक्तिप्रधानान्यप्यव्ययानि वृत्तिविषये शक्तिमत्प्रधानानि भवन्ति। यथा दोषामन्यमहः। दोषाभूतमहरिति। तत उच्चैश्शब्दस्य प्रक्रियायां द्वितीयान्तस्य समासः। क्व पुनरिति। श्लोके सप्तमीनिर्देशात् प्रश्नेऽपि सप्तमी निर्दिष्टा। सदृशमिति। लिङ्गविशेषप्रतिपादने सामर्थ्याभावात्। विभक्तिष्विति। कारकेषु। तत्र यानि साधनप्रधानानि अव्ययानि तेषां शक्त्यन्तरावनावेशात् क्रियाप्रधानानां च शक्तिसंब-

---

न्धमवतारयति ननूभयेति। अत एवोभयोऽन्यत्रेत्यस्योदाहरणम् उभये उभया इति भाष्ये सर्वादिसूत्रे दत्तम्। गोदाविस्यादौ वरणादिभ्यश्चेति चातुरर्थिकलुपि युक्तवद्भावात्प्रत्ययार्थस्य द्वित्वादीति बोध्यम्। इत्याहेति। इत्याशङ्कायामाहेत्यर्थः। भाष्ये (च) स्वर्थे कृत्तद्धितानामित्यत्र कृद्ग्रहणेन कृतामव्ययसंज्ञाविधायके सूत्रेऽपि गणे पाठ्ये इति सूचितम्। कृदित्युपलक्षणमव्ययीभावश्चेत्यस्यापि तदाह तस्मादिति। तदेवं गणपाठमाश्रित्य तद्धितश्चासर्वविभक्तिरित्यष्टाध्यायीपाठः प्रत्याख्यातः। तदाह। प्रपञ्चार्थस्त्विति। शङ्कते। भाष्ये (पाठेनेयमिति)। स्वरादिनिपातमितीत्यर्थः। नन्वत्यादयो द्वितीययेत्युक्तेः कथमुच्चैः शब्देनाधिकरणशक्तिप्रधानेनाद्वितीयान्तेन समास इत्यत आह शक्तीति। द्वितीयान्तस्येति। अतिक्रान्तार्थान्वययोग्यकर्मद्वितीयान्तस्येत्यर्थः। दोषामन्यमित्यत्र कर्मणीत्यधिकारे आत्ममाने खश्। दिनं रात्रिं मन्यत इत्यर्थः। प्रश्नेऽपीति। व्येतीत्यस्य विविधं प्रकारं गच्छतीत्यर्थः। क्वेत्यस्य किं विषये इत्यर्थ इति भावः। अन्यथोत्तरानुसारेण कानीति प्रश्न उचितः। अत एवाग्रे उक्तम्। एतानर्थान् के चिद्वियन्तीत्यादि। विपूर्वस्येणो रूपम्। ये न वियति एतानर्थान्येन वियन्ति विविधप्रकारप्रापकान्न प्राप्नुवन्ति। तत् तद्वाचकमव्ययमित्यर्थः। द्वित्वादेरर्थधर्मत्वाद् इति बोध्यम्। ननु विभक्तिवचनशब्दयोः प्रत्ययपरत्वेऽन्यतरवैयर्थ्यमत आह कारकेष्विति। विषयसप्तम्य एताः। सादृश्यं तत्तल्लिङ्गाद्यभावानुयोगित्वेन। नन्वेवं स्वरादिवाच्यानां कर्मत्वादियोग्यत्वेन सकलकारकविषयं न कारकाभावानुयोगित्वरूपं सादृश्यमत आह तत्र यानीति। साधनं शक्तिः। तादृशाः

कृन्मेजन्तः ॥ ३९ ॥ कथमिदं विज्ञायते। कृद्यो मान्त इति आहोस्वित् कृदन्तं यन् मान्तमिति। किं चाऽतः। यदि विज्ञायते कृद्यो मान्त इति। कारयाञ्चकार हारयाञ्चकारेत्यत्र न प्राप्नोति। अथ विज्ञायते कृदन्तं यन्मान्तमिति। प्रतामौ प्रतामः। अत्रापि प्राप्नोति। यथेच्छसि तथास्तु। अस्तु तावत् कृद्यो मान्त इति। कथं कारयाञ्चकार हारयाञ्चकारेति। किं पुनरत्राऽव्ययसंज्ञया प्रार्थ्यते। अव्ययादिति लुग् यथा स्यादिति। मा भूदेवम्। आम इत्येवं भविष्य-

---

न्धाभावात् सर्वासु च विभक्तिष्वित्युक्तम्। वचनेष्विति। एकत्वादिषु। अव्ययीभाव-स्य शक्तिलिङ्गविशेषयोगेपि वचनादव्ययत्वम्। यथा स्वत्यादीनां कर्मप्रवचनीयसंज्ञा। तत्र यान्यसत्त्वभूतार्थाभिधायीन्यव्ययानि तेषां लिङ्गादिभिरयोगः। तेषां द्रव्यधर्मत्वात्। सत्त्ववाचिनामपि शब्दशक्तिस्वाभाव्यात्तदयोगो यथा युष्मदस्मदोर्लिङ्गायोगः। केचित्तु लिङ्गादिविशेषणायोगात् तत्सामान्येन तु योगमव्ययानामाहुः। तदयुक्तम्। लिङ्गादि-सामान्यसद्भावे प्रमाणाभावात्। यन्न व्येतीति। नानात्वं न गच्छतीति सत्त्वधर्मान्न गृह्णातीत्यर्थः ॥ ३८ ॥

कृन्मेजन्तः॥ कथमिति। किं मेजन्तग्रहणेन कृद्विशेष्यते पूर्वं पश्चात्तु कृता तदन्तविधिः। आहोस्वित्पूर्वं कृता तदन्तविधिः पश्चात्तु कृदन्तं मेजन्तग्रहणेन विशेष्य-त इति प्रश्नः। प्रयोजनं सर्वनामाव्ययसंज्ञायामिति वचनात् तदन्तविधिः। अथ वा अन्वर्थसंज्ञाश्रयणात्प्रत्ययग्रहणे संज्ञाविधावप्यत्र तदन्तविधिर्भवति। नहि केवलस्य प्रत्ययस्याप्रयोगार्हस्य नानागमनमनानागमनं वा सम्भवति। कारयाञ्चकारेति। लिडत्र कृत् स च मान्तो न भवति। प्रतामाविति। क्विपि लुप्ते प्रत्ययलक्षणेन कृदन्तमेतद्भवति श्रुत्या च मान्तम्। अव्ययादिति लुगिति। ननु हल्ङ्यादिलोपेन सिद्धत्वात्किं लुका प्रयोजनम्। यदा तर्ह्यनुप्रयोगवशाद् द्वित्वबहुत्वावगतिस्तदास्ति द्विवचनबहुवचनोत्प-

---

त्युच्चैरादीनि। तेषु च कारकशक्त्यन्तरयोगात्सर्वकारकविषयकाभावानुयोगित्वमस्त्येवेत्यर्थः ॥ शक्तिः कर्मत्वादिः। वचनादिति। अव्ययीभावश्चेति वचनादित्यर्थः। सम्बन्धाभावादिति वार्थः। मत्वार्थ इत्यादौ अभावस्य फलत्ववत् अत्र तदभावस्य कारणत्वमिति बोध्यम्। यथेति क्रियाहेतुकसंबन्धविशेषद्योतका हि अन्वर्थबलात्कर्मप्रवचनीयाः। स्वत्योस्तत्स्वाभावेपि क्रियापदसंनिधौ क्रियागतविशेषद्योतकयोरपि यथा संज्ञा तथा प्रकृते ऽव्ययीभावादीनामित्यर्थः। सत्त्ववचनानामपीति। स्वरादीनामिति शेषः। तदयोगः लिङ्गसङ्ख्या योग इत्यर्थः। सदृशमित्यत्रोक्तं सादृश्यं निरूपयितुं यन्न व्येतीत्यादि। अत्रापि लिङ्गेष्वित्यादाव-वृत्त्या संबध्यते। नानात्वमिति। एतेषु यन्न व्येति। एतद्विषये यन्नानात्वं न प्राप्नोति तदव्ययमित्यर्थः। क्वचित्तु नाना न गच्छतीति पाठः तदा एतद्विषयमनेकप्रकारकं न प्राप्नोतीत्यर्थः ॥ ३८ ॥

कृन्मेजन्तः॥ किं मेजन्तइति। कृतो मेजन्तस्य प्रत्ययमात्रस्य संज्ञा उत कृदन्तस्येति न शङ्कार्थः, प्रयोजनं सर्वनामाव्ययसंज्ञायामिति तदन्तविधेरित्याशयः। पश्चात्त्विति। मेजन्तो यः कृत्तदन्तमव्ययमित्यर्थ इति भावः। संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधादाह प्रयोजनमिति। ननु तद्वचनमप्रत्ययांशे चरितार्थमत आह अथ वान्वर्थेति। एवञ्चाव्ययत्वप्रयोजकस्य महासंज्ञालब्धार्थस्य केवलप्रत्ययेष्वभावात्त-दन्तविधिरिति भावः। अनयैव रीत्या सर्वादिगणे डतरडतमाभ्यां तदन्तविधिर्बोध्यः। नानागमनमिवानाना-गमनमपि न संभवति। संभावितप्रतियोगिकस्य एव तदभावबुद्धेः शब्देन जननात् संभावितप्रतियोगिताव-च्छेदक एवात्राह्मण इत्यादिना भेदबुद्धिवदित्याशयः। लिडत्र कृदिति। तिङ्भावित्वाभावेनातिङिति न कृत्त्वप्रतिषेध इति भावः। प्रतामाविति। तमेः क्विप्। अनुनासिकस्येति दीर्घः। श्रुत्या चेति। तथा

ति । न सिध्यति । लिङ्ग्रहणं तत्राऽनुवर्तते । लिङ्ग्रहणं तत्र निवर्तिष्यते । यदि निवर्तते प्रत्ययमात्रस्य लुक् प्राप्नोति । इष्यते च प्रत्ययमात्रस्य । आतश्चेष्यते । एवं ह्याह । कृञ् चाऽनुप्रयुज्यते लिटीति । यदि च प्रत्ययमात्रस्य लुग्भवति तत एतदुपपन्नं भवति । अथ वा पुनरस्तु कृदन्तं यन्मान्तमिति । कथं प्रतामौ प्रताम इति । आचार्यप्रवृत्तिर्ज्ञापयति न प्रत्ययलक्षणेनाव्ययसंज्ञा भवतीति । यदयं प्रशानूशब्दं स्वरादिषु पठति । कृन्मेजन्तश्चानिकारोकारप्रकृतिः * । कृन्मेजन्तश्चानिकारोकारप्रकृतिरिति वक्तव्यम् । इह मा भूत् । आधये आधेः । चिकीर्षोरिति । अनन्यप्रकृतिरिति वा * । अथ वा अनन्यप्रकृतिः कृदव्ययसंज्ञो भवतीति वक्त-

---

त्तिरिति लुगेषितव्यः । अकच् तु न भवत्यपरिसमाप्तार्थत्वादज्ञातादिभिर्योगाभावाच्च । इष्यते चेति । पूर्वोक्ताद्धेतोस्तरबाद्यनुत्पादादनुप्रयोगएव तरबाद्युत्पत्ति । समाप्तार्थस्य प्रकर्षादियोगादित्यर्थः । तत्रैवार्थे ज्ञापकमाह आतश्चेति । तत्र ह्युक्तं व्यवहितनिवृत्त्यर्थं चेति । प्रशानूशब्दमिति । तस्य मो नो धातोरिति नत्वस्यासिद्धत्वात्सिद्धमव्ययत्वमिति भावः । तुल्यजातीयस्य धातोर्नियमेन व्यावृत्तिः क्रियते इति कारयाञ्चकारेति भवत्येव मान्तस्याव्ययसंज्ञा । शान तेजन इत्यस्य तु प्रशानिति रूपं न भवति । तस्य क्विबन्तस्य प्रयोगादर्शनात् । लावयतेर्लौरित्यस्यापि न भवति । अस्मादेव ज्ञापकाल्लाक्षणिकत्वाद्धौकारस्य । अनिकारोकारेति । एच एतद्विशेषणं न मकारस्य व्यवच्छेद्यासम्भवात् । आधयइति । गुणे कृते अन्तरङ्गबहिरङ्गयोरिति न्यायादव्ययसंज्ञा स्यान्न त्वयादयः । अन्तरङ्गत्वादेव च सुब्लुक् स्यात् । परिभाषान्तरप्रयोजनकथनार्थं लक्षणप्रतिपदोक्तयोरित्येतदनाश्रितम् । लाक्षणिक ह्यनुमेयं प्रतिपदोक्तं तु प्रत्यक्षमिति तस्यैव ग्रहणं न्याय्यम् । संनिपातः संश्लेषः । तन्निमित्तो यो विधिः स तद्विघातस्यानिमित्तं तं संनि-

---

चाव्ययत्वाल्लुक् स्यादिति भावः ॥ द्विवचनेत्यादि । ननु संख्याया अनुप्रयुज्यमानोत्तरतिङ्वाभिव्यक्तत्वात्कथं द्विवचनादिप्रसङ्ग इति चेत् । उपलक्षणमिदम् । सर्वैकवचनोत्पत्तिपक्षे ऽमाविलुगर्थमिदमावश्यकमिति न दोषः । अव्ययात् सुपोलुगितिज्ञापकात्सर्वविभक्तिरिति पक्षे च अकजर्थन्तह्यमन्तस्याव्ययत्वमेष्टव्यमत आह अकच्त्विति । अपरिसमाप्तार्थत्वञ्च संख्याकारकाशिविषयकाञ्स्थिताकाङ्क्षत्वम् । अत एवानुप्रयोगः प्रार्थ्यते स्वार्थे परिपूर्णस्यैव चार्थान्तरेण संबन्ध इति भावः । ननु तरबाद्यनुत्पत्तावामन्तार्थे प्रकर्षाविप्रतीतिः कथमत आह अनुप्रयोग एवेति । तदुत्पन्नतरपैवैतद्गतप्रकर्षप्रतीतिः । कारकादिवदित्यर्थः । भाष्ये लुक्पदमदर्शनमात्रपरमिति भावः । धातुत्वेन तुल्यजातीयतस्याह धातोरिति ॥ तस्य क्विबन्तस्येति । अत्र चेदमेव भाष्यं मानम् । प्रशामाविति तु शान्तिमद्वाचकस्य शान्त्यर्थकस्यैव च गणे पाठस्तस्यैव स्वभावेन लिङ्गाद्यभावात् । वस्तुतो गणे मान्तपाठः । प्रयोगे एव तु नत्वं यथा स्वरादीनां गणे रेफान्तपाठः प्रयोगे तु विसर्गादीति भाष्याशयः । अस्मादेवेति । धातुमात्रापेक्षं ज्ञापकमिति भावः । लाक्षणिकत्वाद्धेति । वर्णग्रहणेपि तत्प्रवृत्तेरिति तात्पर्यम् । भाष्ये ( अनिकारोकारेति ) । यत्त्वन्तग्रहणान्नित्ययोगबहुव्रीहिणोपदेशे एजन्तमित्यर्थादिह न दोष इति । तन्न । परिभाषयैव सिद्धेन्तग्रहणं न कार्यमिति तदाशयात् । गुणे कृतइति । तत्र कृते सुबनपेक्षत्वेनान्तरङ्गाव्ययसंज्ञा सुप्संबन्ध्यजपेक्षत्वादयादयो बहिरङ्गाः । अन्तरङ्गत्वादेवेति । ननु वर्णमात्रापेक्षयायादय एवान्तरङ्गाः । एवन्तर्हि अन्तरङ्गत्वेन बाधकत्वं लक्ष्यते । तेनान्तरङ्गानपीतिन्यायेन लुगिति बोध्यम् । तेन च लुक इव तत्प्रयोजकानामपि प्राबल्यबोधनेनानेनैव गुणे ऽयादीन्बाधित्वा व्ययत्वं बाध्यम् । तद्विघातस्येति । कर्मण्याणित्याह । तामिति । न चानया लुको बाधे ऽपि संज्ञाबाधे मानाभावः । साक्षात्परम्प-

व्यम् । किं पुनरत्र ज्यायः । अनन्यप्रकृतिरिति वचनमेव ज्यायः । इदमपि सिद्धं भवति कुम्भकारेभ्यो नगरकारेभ्य इति । तत्तर्हि वक्तव्यम् । न वा संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति * । न वा वक्तव्यम् । किं कारणम् । संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येत्येषा परिभाषा कर्तव्या । कः पुनरत्र विशेषः । एषा वा परिभाषा क्रियेत । अनन्यप्रकृतिरिति वोच्येत । अवश्यमेषा परिभाषा कर्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि । कानि पुनस्तानि । प्रयोजनं ह्रस्वत्वं तुग्विधेर्ग्रामणि कुलम् * । ग्रामणि कुलं सेनानि कुलमित्यत्र ह्रस्वत्वे कृते ह्रस्वस्य पिति कृति तुगिति तुक् प्राप्नोति । संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति । नैतदस्ति प्रयोजनम् । बहिरङ्गं ह्रस्वत्वम्, अन्तरङ्गस्तुक् । असिद्धं बहिरङ्गमन्तरङ्गे । नलोपो वृत्रहभिः * । वृत्रहभिर्भ्रूणहभिरित्यत्र नलोपे कृते ह्रस्वस्य पिति कृति तुगिति तुक् प्राप्नोति । संनि-

---

पातं यो विहन्ति तस्येत्यर्थः । ग्रामणिकुलमिति । इको ह्रस्व इति पूर्वोत्तरपदसन्निपातनिमित्तं ह्रस्वत्वं तुको न निमित्तम् । तुकि हि सति पूर्वोत्तरपदयोरानन्तर्यविघातः । यदा तु ह्रस्वमात्रस्य तुगागमो न तदन्तस्य अवयवावयवाश्च समुदायावयवो न भवति तदैतत्प्रयोजनं न त्वन्यथा । बहिरङ्गमिति । द्विपदाश्रयत्वात् । यदपि ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वत्वं तदपि अर्थाश्रयत्वाद्बहिरङ्गम् । तुक् तु वर्णाश्रयत्वादन्तरङ्गः । यदि तु सन्निपातलक्षण इत्याश्रीयते तदा ग्रामणिच्छत्रमित्यत्रापि तुग्न स्यात् । ह्रस्वत्वतुगागमयोस्त्वत्र साम्यादन्तरङ्गत्वं बहिरङ्गत्वं नास्तीति च्छेलक्षणस्तुक् सिद्धो भव-

---

त्या वा तद्विघानकमात्रस्यानया प्रतिबन्धात् । अत एवोपादास्तेत्यत्र कित्वं न । अन्यथा ऽनया साक्षात्तद्विषयसन्निपातविघातककुङिनिचेति निषेधाप्रवृत्तिः स्यात् । कित्वन्तु स्यादेव । तत्फलन्तु सन्नियोगशिष्ट स्वसिद्धिरेव । एवञ्चापादस्तेति रूपं स्यात् । अत्र हि क्ङिदिति न कार्यातिदेशः । इस्वकाले तत्कार्यासंभवात् । तस्माद्व्यपदेशातिदेश एव । तस्मात्सन्निपातविघातकशास्त्रप्रवृत्तिनिमित्तातिदेशवत्संज्ञाया अप्यनेनाप्रवृत्तिः । अकजाद्यर्थसंज्ञा तु न । अन्तरङ्गायान्तस्यां बहिरङ्गगुणादेरसिद्धत्वात् । पूर्वोत्तरेति । अधिकृतेनोत्तरपदेन पूर्वपदस्याक्षेपादिति भावः । अवयवेति । तथा ऽप्रतीतेरित्यभिमानः । वस्तुतस्तु इगन्तपूर्वपदस्योत्तरपदसन्निपातविघातः पूर्वपदस्येगन्तत्वसन्निपातविघातश्चेति भाष्याशयः । एवं वृत्रहभिरित्यत्र नान्तस्य स्वादिसन्निपातविघातः । नान्तस्वादिसन्निपातनिमित्तकपदत्वनिमित्तको हि नलोप इति । लोके पाण्याद्यवयवाङ्गुल्यादेर्भुजपुरुषाद्यवयवत्वव्यवहारात् कैयटोक्तं चिन्त्यम् । किं च भवितेत्यादौ तासवयवेटो लघूपधाङ्गावयवत्वेन प्राप्तस्य गुणस्य दीधीवेवीटामिति निषेधो व्यर्थः स्यात् । न च ह्रस्वावयवत्वं तुको यदागमाइति न्यायेनेग्ग्रहणेन तुग्विशिष्टस्य ग्रहणान्न सन्निपातविघातः । आनेमुगिति ज्ञापकेन तदनङ्गीकारात् । एतेनावयवावयवस्य समुदायावयवत्वे अवयवावयवेऽपि अवयविनां समवेतत्वापत्तौ घटस्यापि परमाणुषु समवेतत्वेनाप्रत्यक्षसमवेततया वायुवृक्षसंयोगवदप्रत्यक्षत्वं स्यादिति परास्तम् । भूयोवयवसंनिकर्षस्यैव फलबलात् कारणत्वेनाक्षतेः । संयोगप्रत्यक्षे तु यावदाश्रयप्रत्यक्षमेव हेतुः फलबलादिति दिक् । असिद्धत्वेन समाधानञ्चावश्यकमित्याह यद्यपीति । अर्थाश्रयत्वादिति । इदन्त्यादेशो सून्तस्य प्रतिषेधो वक्तव्य इति स्थानिवत्सूत्रस्थेन वार्त्तिकेन तत्प्रत्याख्यानपरेण भाष्येण च विरुद्धं प्रातिपदिकरूपसमुदायाश्रयत्वादिति वक्तुं युक्तं तदेवाह वर्णाश्रयत्वादिति । इयञ्च बहिरङ्गत्वेन सिद्धिर्नाजानन्तर्य इति निषेधमनाश्रित्य । कुलं ग्रामणि इत्यत्र नपुंसकह्रस्वत्वे संनिपातपरिभाषयैव न तुक् । प्रातिपदिकस्याजन्तत्वसंनिपातेन जातह्रस्वस्य तद्विघातकत्वात् । एतेन परनिमित्तकत्वेन कृत्त्वपित्त्वज्ञानसापेक्षत्वेन च तुगपि ह्रस्वसमान इति नपुंसकह्रस्वत्वे तुग् दुर्वार इत्यपास्तमिति अनुपदमेव वक्ष्यामः । तुकि संनिपातपरिभाषाश्रयणे दोषमप्याह यदि त्विति । अत्रापि वर्णमात्राश्र-

पातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति। एतदपि नास्ति प्रयोजनम्। असिद्धो नलोपः। तस्यासिद्धत्वान्न भविष्यति। उदुपधत्वमकित्त्वस्य निकुचिते *। उदुपधत्वमकित्त्वस्यानिमित्तम्। क्व। निकुचिते। निकुचितमित्यत्र नलोपे कृते उदुपधाद्भावादिकर्मणोरन्यतरस्यामित्यकित्त्वं प्राप्नोति। संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति। एतदपि नास्ति प्रयोजनम्। अस्त्वत्राऽकित्त्वम्। न धातुलोप आर्द्धधातुकइति प्रतिषेधो भविष्यति। नाभावो यञि दीर्घत्वस्यामुना *। नाभावो यञि दीर्घस्यानिमित्तम्। क्व। अमुना। नाभावे कृते अतो दीर्घो यञि सुपि चेति दीर्घत्वं प्राप्नोति। संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति। एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत्। न मु टादेशइति। आत्त्वं कित्त्वस्योपादास्त *। आत्त्वं कित्त्वस्यानिमित्तं स्यात्। क्व। उपादास्तास्य स्वरः शिक्षकस्येति। आत्त्वे कृते स्थाघ्वोरिच्चेतीत्वं प्राप्नोति। संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति। एतदपि नास्ति प्रयोजमम्। उक्तमेतत्। दीङः प्रतिषेधः स्थाघ्वोरित्त्वे इति। तिसृचतसृत्वं ङीब्विधेः *। तिसृचतसृत्वं ङीब्विधेरनिमित्तम्। क्व। तिस्रस्तिष्ठन्ति चतस्रस्तिष्ठन्तीति। तिसृचतसृभावे कृते ऋन्नेभ्यो ङीबिति

ति। असिद्धो नलोप इति। नलोपः सुप्स्वरेत्यसिद्धं बहिरङ्गमिति वा। निकुचितइति। कुचेर्भावे क्तप्रत्ययः। अनिदितामिति नलोप। तत्र कित्त्वनिमित्तमुदुपधत्वमुदुपधादित्यकित्त्वस्यानिमित्तमिति गुणो न भवति। अमुनेति। न मुनइ यस्यायमर्थः। ने कर्तव्ये मुभाव सिद्धो भवति न तु ने परतो यद्दीर्घत्वं प्राप्नोति तत्र तथा च मुभावस्यासिद्धत्वादकारान्तत्वाद्दीर्घप्रसङ्गः। तस्मिन् कृते अदसोऽसेरिति दीर्घस्य दीर्घ ऊकारः प्राप्नोति ततश्चामूनेति स्यात्। उकारसन्निपातनिमित्तस्तु नाभावो दीर्घत्वस्याऽनिमित्तमिति सिद्धममुनेति। न मु टादेशइति। अनेकविभक्त्यन्तस्तत्र समास आश्रितः। टाया आदेशः टायामादेश इति। उपादास्तेति। घुविषयआत्त्वविधानादकित्त्वसन्निपातनिमित्तमात्त्वं स्थाघ्वोरिच्चेति कित्त्वस्याऽनिमित्तं कित्त्वसन्नियुक्तं चेत्त्वमिति

यत्वेन तुगन्तरङ्गः पूर्वपदोत्तरपदाश्रयो ह्रस्वो बहिरङ्गस्तदाषेत्वस्यागणनाच्च तस्मादत्र तुग्न भवत्येवेत्यन्ये। वृत्रहभिरित्यादौ पदसंज्ञाद्वारा नलोपस्य सन्निपातलक्षणत्वम्। असिद्धमिति। सुब्निरपेक्षतुगपेक्षया पदत्वद्वारा तदपेक्षनलोपो बहिरङ्ग इति भावः। यद्दीर्घत्वं प्राप्नोतीत्यस्य तत्रापि मुभावः सिद्ध इत्यर्थ इति शेषः। तत्रेत्यस्य च एवञ्चेत्यादिः। क्वचित्तु प्राप्नोति तत्र तथा च तत्रेति पाठः। असिद्धत्वादिति। शास्त्रासिद्धत्वादिति भावः। कृतेदसोसेरिति। ननु मुत्वासिद्धा उकार एवाकारबुद्धौ सुपि चेत्यन्तरतमे दीर्घे आकारे मस्य स्वत एव सत्वाद्ह्रस्वपरत्वाभावेन कथमनेन दीर्घोकारप्रवृत्तिरिति चेन्न। लोकसिद्धसंनियोग शिष्टन्यायेन मत्वस्यापि निवृत्तेर्ह्रस्वपरत्वसत्त्वात्। नचाचः परस्मिन्निति स्थानिवत्त्वाद्दीर्घस्य नान्यतरापाय इति वाच्यम्। "पूर्वत्रासिद्धीये न स्थानिवदिति निषेधात्। लक्ष्ये लक्षणस्येति न्यायस्तु न लक्ष्यभेदादित्यभिमानः। केचित्तु अमाना, अदाना इति वापत्तिरित्याहुः। दीर्घत्वस्येति। उकारस्वरूपविनाशकस्येत्यर्थः। नन्वेवमपि टादेश एव सिद्धत्वं स्यादत आह अनेकेति। अनेकविभक्त्यन्तपूर्वपद इत्यर्थः। संबन्धसामान्यषष्ठ्या समास इति तात्पर्यम्। कित्त्वस्येति। भाष्येपि स्थाघ्वोरिच्चेति कित्वं प्राप्नोतीति पाठः। इत्त्वमिति पाठे कित्त्वसहितमित्त्वमित्यर्थः। कित्त्ववारणेपीत्वं स्यादत आह कित्त्वेति। नास्ति

ङीप् प्राप्नोति । संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति न तिसृचतसृभावे कृते ङीब् भवतीति । यदयं न तिसृचतसृ इति नामीति दीर्घत्वस्य प्रतिषेधं शास्ति । इमानि तर्हि प्रयोजनानि । शतानि सहस्राणि । नुमि कृते ष्णान्ता षडिति षट्संज्ञा प्राप्नोति । संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति । शकटौ पद्धतौ । अत्वे कृते अत इति टाप् प्राप्नोति । संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति । इयेष । उवोष । गुणे कृते इजादेश्च गुरुमतो ऽनृच्छ इत्याम् प्राप्नोति । संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति । तस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्य ॥ । तस्यैतस्य

---

कित्वाभावे न भवति । यदयमिति । ननु समस्तार्थमेतत्स्यात् । प्रियतिसृणां ब्राह्मणानामिति । अत्र ह्यङ्गं पुंसि वर्ततइति नास्ति ङीपः प्राप्तिरिति केचित् । तदयुक्तम् । न हि ङीब्विधानेऽङ्गाधिकारोऽस्ति तत्राऽवयवस्य स्त्रीत्ववृत्तित्वाद् ङीपः प्राप्तिः केन वार्यतइति ज्ञापकमेव । ज्ञापकादेव च सिद्धत्वात् स्वस्रादिष्वनयोः पाठो न कर्तव्यो भवति । शतानीति । विभक्तिसंनिपातनिमित्तो नुमागमः षट्संज्ञाहेतुकस्य विभक्तिलुको न निमित्तम् । ष्णान्ता षडित्यन्नग्रहणमौपदेशिकप्रतिपत्त्यर्थमित्यत्र न भविष्यतीति चेत् । सङ्ख्यासम्प्रत्ययार्थं बहुव्रीह्यर्थं तत् स्यादित्यदोषः । शकटाविति । विभक्तिसंनिपातकृतमत्वं यदि टापो निमित्तं स्यादानन्तर्यं विहन्येत । शास्त्रीये च कार्ये ऽन्तादिवद्भावो नाऽनन्तर्ये लौकिके टापि च सति शकटायामिति स्यात् । अच्च घेरिति तपरकरणेनाऽप्यत्र टाब् निवर्तयितुं शक्यते इदुतोर्हि स्थाने मात्रिक एवाकारो भविष्यति भाव्यमानत्वाद्वा सवर्णान्याकारो ग्राहको न भविष्यतीति लक्षणान्तरेणाऽपि प्राप्तस्य दीर्घत्वस्य निराकरणार्थं तपरकरणं संपद्यते । इयेषेति । आमि सति लुक् स्यादिति प्रकृतिप्रत्ययसंनिपातस्य विघातः स्यात् । उषविदेति विकल्प ओषाञ्चकतुः ऊषतुरित्यादौ सावकाश इत्युवोषेति नित्य आम्प्रसज्येत । प्रतिपदविधेस्तु बलवत्त्वात्परत्वाच्चा-

---

ङीपइति । यत्त्वन्तरङ्गत्वात्समासात्पूर्वमेव ङीबिति । तन्न । अन्तरङ्गानपीति न्यायेनान्तर्वर्तिविभक्त्याश्रयतिसृादेशस्याप्रवृत्तेः । ज्ञापकमेवेति । ङ्यन्ते तु नास्य प्रवृत्तिर्विभक्तौ लिङ्गविशिष्टाग्रहणात् । नन्वेवं स्वस्रादिपाठो व्यर्थः स्यादत आह ज्ञापकादेवेति । एवञ्चैतज्ज्ञापकपरभाष्यप्रामाण्यादस्य पाठोऽप्रामाणिक इति भावः । विभक्तिनुगिति । तन्निमित्तसंज्ञायाश्चेत्यपि बाध्यम् । अन्तग्रहणमिति । तत्सामर्थ्यादिति मन्यते सामर्थ्यमसिद्धमिति परिहारः । संख्येति । बहुव्रीहेः फलं संख्यासंप्रत्ययः । विभक्तीति । घेः परस्य ङेरौद् घेरन्तादेशश्चाकार इति सूत्रार्थात् । ङ्यादेशौत्वसंनियोगेन विधीयमानमत्वमङ्गप्रत्ययसंनिपातकृतमित्यर्थः । नन्वेकादेशेऽन्तवद्भावादत्र टाब् व्यवधायकोऽत आह शास्त्रीये चेति । ननु टापि वृद्ध्येकादेशे शकटाविति सिद्ध्येदत आह टापि चेति । वृद्धेः परत्वादन्तरङ्गत्वाच्च याडामाविति भावः । संपद्यत इति । तपरत्वाद्धि सवर्णदीर्घत्वं न स्यात् टाप्तु स्यादेव । किं च शकटावित्यादौ वृद्धिरप्येवं न स्यादिति चिन्त्यमिदम् । लुक् स्यादितीति । लुगभावेऽपि शकटावितिवद्यसंनिपातेन गुणो जातस्तदानन्तर्यविघातस्य सत्त्वेनैतत्कथनस्योपयोगश्चिन्त्यः । ननूषविदेत्याम्विधानादुवोषेत्यसङ्गतमत आह उषविदेति । तत्र न द्विर्वचनास्याद् गुरुमत्त्वमिति भावः । प्रतिपदविधेरिति । कदाचिद् गुणे कदाचिद् द्वित्वे एकादेशे गुरुमत्त्वादिजादेरित्येतन्नाप्राप्तमिति भावः । परत्वादिति । तदुक्तम्य ऊषतुरित्यस्यावकाशत्वमभ्युपगम्यदमुच्यते । उवोषेतिकवर्गद्वितीयान्तो वा भाष्ये पाठः । उवोषेत्यत्र पक्षे आमभावेऽपि कृताद्वित्वाद् उवोखाद् दुर्वार एवाम् । रूपे चास्य

लक्षणस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात्। क्व। अत इञ्, दाक्षिः। प्लाक्षिः। न प्रत्ययः संनिपातलक्षणः। अङ्गसंज्ञा तर्ह्यनिमित्तं स्यात्। आत्वं पुग्विधेः क्षापयति *। आत्वं पुग्विधेरनिमित्तं स्यात्। क्व। क्षापयतीति। पुग् ह्रस्वत्वस्यादीदपत् *। पुग् ह्रस्वत्वस्याऽनिमित्तं स्यात्। क्व। अदीदपदिति। सदाद्यकारष्टाब्विधेः *। सदाद्यकारष्टाब्विधेरनिमित्तं स्यात्। क्व। या सेति। इड्विधिराकारलोपस्य ययिवान् *। इड्विधिराकारलोपस्याऽनिमित्तं स्यात्। क्व। ययिवान् तस्थिवानिति। मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य *। मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्याऽनिमित्तं स्यात्। क्व। अग्निमान् वायुमान् परमवाचा

---

अपि विकल्पेनैव भाव्यमित्यनुदाहरणमेतत्। गुरुमत इति नित्ययोगे मतुबाश्रयणादपि शक्योऽत्रामभावः प्रतिपादयितुम्। दाक्षिरिति। प्रयोगे व्यवस्थितस्यैवेकारस्याऽन्वाख्यानमनेन क्रियत इति संनिपातलक्षणत्वं प्रत्ययस्य सम्भाव्यते। न प्रत्यय इति। कल्पितप्रकृतिप्रत्ययविभागेनाऽन्वाख्यानात्प्रकृतेरविद्यमान एव प्रत्यय उत्पाद्यत इत्याशयः। अङ्गसंज्ञेति। सत्यामङ्गसंज्ञायामकारलोप इति स्यादानन्तर्यविघातः। तत्र वर्णविचालस्यानिमित्तं स्यादिति। अङ्गसंज्ञाद्वारेणेत्यर्थः। अत्र केचिद्वर्णाश्रय इति व्याचक्षते। तेषामत्रियाद्यप्युदाहरणम्। अन्ये त्ववर्णाश्रय इत्यकारप्रश्लेषमाहुः। क्षापयतीति। णिचि वृद्धौ कृतायामात्वं पुको न निमित्तं स्यात्। अङ्गस्य य आकारस्तस्य पुगित्यवयवभक्तं पुकं मत्वा दोषोपन्यासः। अग्निमानिति। पूर्वमुदात्तमाश्रित्य मतुप

---

इव। विशेष उर्वोषाऽञ्चकारेति। उषस्वामि ओषाऽञ्चकारेति परे। नित्ययोग इति। इजादेर्गुरोरित्युक्तावपि अनृच्छ इति प्रतिषेधादिजादेर्गुरुमत इत्यर्थलाभे मतुब्ग्रहणादिति भावः। परे त्वेवं सत्यनृच्छ इत्यस्यानर्थक्यापत्तिः। तदुत्पत्तेः प्राग् गुरुमत्त्वाभावात् उम्भादीनां गुरूमनामामनापत्तेश्च। तेषामाशीर्लिङि गुरुमत्त्वाभावादिति भाष्याशयमाहुः। नन्विञ्प्रत्ययो नोभयाधिष्ठानसंबन्धलक्षणसन्निपाताश्रय इत्यत आह प्रयोग इति। अन्वाख्यानं साधुत्वेन। प्रत्ययस्य साधुत्वावच्छिन्नस्य। अविद्यमान एवेति। मन्दमध्यानां तथैव प्रतीतेः साधुत्वान्वाख्यानेऽपि साधुत्वस्य सन्निपातनिमित्तकत्वं न प्रत्ययस्येति भावः। सत्यामिति। यस्मादित्यस्य प्रत्ययविधावुद्देश्यतावच्छेदकावच्छिन्नादित्यर्थे ऽवर्णान्तादिञ् तदङ्गसंज्ञमिति सूत्रार्थ इति भावः। यद्यङ्गसंज्ञाऽनिमित्तं कथं तर्हि वार्त्तिके प्रत्यय इत्युक्तमत आह तद्वेति। आत्रेयेति। इतश्चानिञ इति ढक्। परे तु वार्त्तिकस्यायमाशयः। निमित्तनिमित्तिनोः संम्बन्धवद् विशेषणविशेष्ययोः सम्बन्धोऽपि सन्निपातः। एवञ्च प्रातिपदिकस्यादन्तत्वसंबन्धनिमित्तः प्रत्ययस्तद्विघातस्यानिमित्तमिति। इममाशयमजानानः शङ्कते। (नप्रत्ययइति) एकदेश्युत्तरयति। (अङ्गसंज्ञा तर्हीति) युक्तश्चैतदुपजीव्यविरोधस्यान्याय्यत्वं हि एतन्न्यायमूलम्। तस्य च प्रकृतेऽपि सत्त्वात्। अतिप्रसङ्गस्तु तथैव मयाप्यानित्यत्वेन सुशकवारणः। अत एव ग्रामणिकुलमित्यादौ नपुंसकह्रस्वत्वे तुङ्न। उपजीव्यस्य प्रातिपदिकाजन्तत्वसंबन्धस्य विघातात्। बहिरङ्गपरिभाषयाऽसिद्धत्वन्तु न। तस्य तत्त्वाभावात्। शैवो गाङ्गेय इत्यादावप्यङ्गसंज्ञायाः लोपानिमित्तत्वानापत्त्या वर्णाश्रय इत्यंशस्य वार्त्तिके वैयर्थ्यापत्तेश्चेत्याहुः। आत्वं क्रीङ्जीनां णाविति। स्वाङ्गस्याव्यवधायकत्वादाह आकार इति। श्रुतत्वात्तस्यैव पुगिति भावः। परे तु पुको ऽङ्गभक्तत्वेऽपि न क्षतिः। यादृशयोः सन्निपातः पुग्निमित्तं तस्य विघातसत्त्वाद् यदागमा इति परिभाषाया तद्ग्रहणेन ग्रहणेऽपि सूत्रश्रुतसान्निपातस्याभावात्। अत्र चेदमेव भाष्यं मानम्। ह्रस्वत्वन्तुग्विधेरित्यादि च। सिद्धान्ताशयस्तु परिभाषाया अनित्यत्वमाश्रयणीयमित्येवेत्याहुः। भाष्ये ( पुक्ह्रस्वत्वस्येति ) ण्याकारसन्निपातनिमित्तः पुग्। ह्रस्वे हि तद्विघातः स्पष्ट एव। न च ह्रस्वस्य चङ्परणिनिमित्तस्य णिनिमित्तपुगपेक्षया बहिरङ्गत्वेनासिद्धत्वात्कथमत्र परिभाषाप्राप्तिः। एतद्भाष्यप्रामाण्येनानया ऽसिद्धस्यापि निवृत्तिस्वीकारात्। किं च तथा शास्त्रीयकार्ये ऽसिद्धत्वेऽपि लौकिके सन्निपाते ऽसिद्धत्वाभावात्। भाष्ये (इड्विधिरिति)। वस्वेकाजाद्घसामित्याकारान्तलक्षण इट्। नियमशास्त्रायाञ्च विधि-

परमवाचे इति । नदीह्रस्वत्वं सम्बुद्धिलोपस्य * । नदीह्रस्वत्वं सम्बुद्धिलोपस्यानिमित्तं स्यात् । क नदि कुमारि किशोरि ब्राह्मणि ब्रह्मबन्धु इति । नदीह्रस्वत्वे कृते एङ्ह्रस्वात्सम्बुद्धेरितिं सम्बुद्धिलोपो न प्राप्नोति। मा भूदेवम्। ङ्यन्तादित्येवं भविष्यति । न सिध्यति । दीर्घादित्युच्यते ह्रस्वान्ताच्च न प्राप्नोति । इदमिह सम्प्रधार्यम् । ह्रस्वत्वं क्रियतां सम्बुद्धिलोप इति । किमत्र कर्त्तव्यम् । परत्वाद्ध्रस्वत्वम् । नित्यस्सम्बुद्धिलोपः । कृते ह्रस्वत्वे प्राप्नोति अकृते ऽपि । अनित्यः सम्बुद्धिलोपः । नहि कृते ह्रस्वत्वे प्राप्नोति । किं कारणम् । सन्निपातलक्षणो विधिरनिमित्तं तस्येति । एते दोषाः समा भूयांसो वा । तस्मान्नार्थो ऽनया परिभाषया । नहि दोषाः सन्तीति परिभाषा न कर्तव्या लक्षणं वा न प्रणेयम् । नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । न च मृगास्सन्तीति यवा नोप्यन्ते । दोषाः खल्वपि साकल्येन परिगणिताः, प्रयोजनानामुदाहरणमात्रम्, कुत एतत्- नहि दोषाणां लक्षणमस्ति । तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या प्रतिविधेयं दोषेषु ॥

---

उदात्तत्वं क्रियमाणं पूर्वस्य निघातं न कुर्यात् । परमवाचेति । अन्तोदात्तादुत्तरपदादिति विभक्त्युदात्तत्वं विधीयमानं पूर्वनिघातस्या ऽनिमित्तं स्यात् । मा भूदिति । हल्ङ्यादिसूत्रे दीर्घग्रहणमदृष्टेदमुच्यते । तत्र कृते ऽपि ह्रस्वत्वे स्थानिवद्भावाद्भविष्यतीति भावः। ब्रह्मबन्धुशब्दापेक्षया च नैतदुच्यते । तस्याङ्याबन्तत्वात् । नित्य इति । कार्यं तावन्नित्यम् । तद्येनं केन चिल्लक्षणेन भवत्विति भावः । संबुद्धिलोपस्यावकाशो हे देवदत्तेति । भूयांसो वेति । दुष्टत्वप्रतिपादनाय प्रकर्षारोपः । सर्वादिषु समशब्दस्य सर्वशब्दपर्यायस्य सर्वनामसंज्ञाविधानादस्तुल्यवाचिनोऽत्र समा इति प्रयोग । अस्ति समशब्दः सर्वपर्यायः । यथा समराज्यं वर्तते सर्वेषां राज्यं वर्ततइत्यर्थः । वेदे ऽपि मानः समस्य दूढ्य इति प्रयोगः । सर्वस्य दुर्धियो मान इत्यर्थः । तत्र प्रयोजनानामल्पत्वात्तान्येवोपसंख्यातव्यानीत्यर्थः । प्रतिविधेयमिति । तत्र विधानसामर्थ्यादाङ्गो वर्णविचालो भविष्यति । कष्टायेति ज्ञापकाद्यशब्दे दीर्घो भविष्यति । न यासयोरिति लिङ्गामुखेनैव प्रवृत्तिरिति भावः ।

---

मुखेनैव प्रवृत्तिरिति भावः । पूर्वमिति । ह्रस्वनुड्भ्यामित्यत्रान्तोदात्तादित्यनुवृत्तेरिति भावः। ह्रस्वत्वमम्बार्थेत्यनेन । ननु ह्रस्वग्रहणे निरवकाशत्वेन सन्निपातपरिभाषाबाधकं स्यादत आह संबुद्धिलोपस्येति । भाष्ये ( एते दोषाः समा इति ) । वार्त्तिककारोक्तसकलप्रयोजनापेक्षमिदम् । यद्यपि प्रयोजनानि नव दोषा अष्टौ तथापि अल्पान्तरत्वात्साम्योक्तिः । यद्वान्यत्रापि दोषः संभाव्यत इत्यभिमानः । ननूक्तदोषापेक्षयोक्तप्रयोजनेभ्यो बहुत्वमेव न कुतस्तदतिशयोक्तेत्यत आह दुष्टत्वेति । अन्ये तूक्तेषु दूषितप्रयोजनानीत्युक्त्वा स्थितप्रयोजनत्रयापेक्षया भूयस्त्वोक्तिरित्याहुः । ध्यायतेर्विचि षष्ठ्येकवचने आतो धातोरिति लोपे दुराधानादृभध्येष्विति उत्वम् उत्तरपदादेः ष्टुत्वे दूढ्य इति तदाह दुर्धिय इति । सर्वस्य दुर्बुद्धेरंहतिरुपद्रवो नोस्मान्मा वधीदित्यर्थः । दुःस्थिता धीर्येषामिति विग्रहे गतिकारकपूर्वकत्वाभावाद्यण् न । तस्मान्नार्थइति । पूर्वपक्षाशयमाह तत्रेति । सिद्धान्ती समाधत्ते । भाष्ये ( नहीति ) । परिभाषायाः कर्त्तव्यत्वं युक्त्यन्तरमप्याह सिद्धान्ती । ( दोषाःखल्वपीति ) लक्षणमिति । उपलक्षकं रूपं नास्तीत्यर्थः । तत्र विधानेति । यादृशप्रतिप्रत्ययसन्निपातनिमित्ताङ्गसंज्ञा तादृशसन्निपातविघातं विना यस्येति लोपस्य चारितार्थ्याभावादिति भावः । कष्टायेति । आकारसन्निपातनिमित्तो ङ्यो यमादिनिमित्तदीर्घस्यानिमित्तं स्यादिति भावः

अव्ययीभावश्च ॥ ४१ ॥ अव्ययीभावस्याव्ययत्वे प्रयोजनं लुग्मुखस्वरोपचाराः * । अव्ययीभावस्याव्ययत्वे प्रयोजनम् । किम् । लुग्मुखस्वरोपचाराः । लुक् । उपाग्नि प्रत्यग्नि । अव्ययादिति लुक् सिद्धो भवति । मुखस्वरः । उपाग्निमुखः प्रत्यग्निमुखः । नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्य इत्येष प्रतिषेधः सिद्धो भवति । उपचारः । उपपयःकारः । उपपयः काम इति । अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्येति प्रतिषेधः सिद्धो भवति । किं पुनरिदं परिगणनमाहोस्विदुदाहरणमात्रम् । परिगणनमित्याह । अपि खल्वप्याहुः । यदन्यदव्ययीभावस्याव्ययकृतं प्राप्नोति तस्य प्रतिषेधो वक्तव्य इति । किं पुनस्तत् । पराङ्गवद्भावः । पराङ्गवद्भावेऽव्ययप्रतिषेधश्चोदितः । उच्चैरधीयान नीचैरधीयानेत्येवमर्थम् । स इहापि प्राप्नोति । उपाग्न्यधीयान प्रत्यग्न्यधीयान । अकच्यव्ययग्रहणं क्रियते उच्चकैर्नीचकैरित्येवमर्थम् । तदिहापि प्राप्नोति । उपा-

---

दाव् भविष्यति । ययिवानिति वस्वेकाजादित्ययं नियम इटो न त्वपूर्वोऽयं विधिरिति आकारस्य लोपः । क्नापयतीत्याकारान्तभक्तः पुग्न व्यवधायकः अर्तिह्रीति लिङ्गाद् ह्रस्वः । यदयं मारणतोषणेति जानातेर्मित्त्वमुपधाह्रस्वार्थं शास्ति तज्ज्ञापयति पुकि कृते उपधाह्रस्वत्वं भवतीति नहि जानातेरकृते पुकि ह्रस्वभाविन्युपधा भवति । अग्निमानिति अनुदात्तं पदमेकवर्जमिति परिभाषा स्वरविषया संनिपातपरिभाषां बाधते । एकह्रस्वादित्यत्रापि गुणात्संबुद्धेरिति वक्तव्ये ह्रस्वग्रहणसामर्थ्यात्संनिपातपरिभाषाऽभावः । द्वर्वीत्यत्र छन्दसि गुणाभावपक्षे छान्दसो लुग्भविष्यति ॥ ३९ ॥

अव्ययीभावश्च ॥ प्रयोजनमिति मुखस्वरोपचारौ निवर्त्यमानौ प्रयोजनम् । यथा मशकार्थो धूम इति । अपि खल्विति । एवं खल्वित्यर्थः । परिगणमनेन दृढीक्रियते । उपाग्न्यधयिानेति । अग्निसमीपे, अधीयानेत्यर्थः । तत्र षष्ठ्यामन्त्रितकारकवचन-

---

नन्वेवं दोषाः साकल्येनेति भाष्यविरोधः । कष्टायेति यादेशो दीर्घत्वस्येति अन्ये भाष्यपुस्तकेषु भ्रष्टोऽतो न दोषः । एवञ्च समा इत्यपि यथाश्रुतमेवेत्याहुः । लिङ्गादिति । ह्रस्वनिषेधवैयर्थ्यादिति भावः । नत्वपूर्व इति क्रादिनियमादार्धधातुकस्येड्वल्यैवट्सिद्धमिति नेडाकारान्तसन्निपातनिमित्त इति भावः । परे तु नियमशास्त्राणां विधित्वमेव आर्थे त्वितरनिवृत्तिरित्यर्थस्य भाष्यसंमतत्वेनाकारान्तसन्निपातनिमित्तं एवेडित्यनित्यत्वेनैवात्र समाधानं युक्तमित्याहुः । आकारान्तेति । अङ्गस्येत्यनेन सामानाधिकरण्यस्यौचित्यादिति भावः । अत्र यद्वक्तव्यं तत्प्रागेवोक्तम् । तज्ज्ञापयतीति । अतएव अरज्ञपीति निर्देशः सङ्गच्छते । मितां ह्रस्व इत्योपधाया इत्यनुवर्त्तत इति भावः । ह्रस्वभाविनीति । अचश्चेत्युपस्थितेरिति भावः । अचश्चेत्यस्य श्रुतत्वेन तद्बाधकल्पनापेक्षया ऽस्यैवानुमितस्य लोकन्यायसिद्धस्य बाधकल्पनौचित्येति तात्पर्यम् । बाधतइति । ह्रस्वनुड्भ्यामित्यत्रोपस्थितत्वोपस्थितसामर्थ्यादिति भावः । गुणाभावेति । जसादिषु छन्दसि वावचनमिति वचनादिति भावः ॥ ३९ ॥ ४० ॥

अव्ययीभावश्च ॥ उपचारोनाम अतः कृकमीति विहितविसर्गस्थानिकसत्वम् । यथा मशकार्थइति । एतदेव निवृत्तिकारणमिति पातञ्जलैर्व्यवह्रियते । अनेनेति । कथ्यन्तरवचनसंवादेनेत्यर्थः । तत्र वक्तव्य इत्यन्तं तत् । तच्च यदन्यदित्यन्यत्वे प्रतियोगिनश्चय उक्ता इत्याहुः । किं पुनस्तत्पराङ्गवदित्यादिना तस्यैवोदाहरणप्रदर्शनम् । षष्ठेति । अत्र च कारकत्वम् । तेन समुदायस्य षाष्ठमामन्त्रितस्य चेत्याद्युदात्तत्वम् ।

ग्निकं प्रसग्निकमिति । सुमि अव्ययप्रतिषेधश्चोद्यते । दोषामन्यमहर्दिवामन्या रात्रिरित्येवमर्थम् । स इहापि प्राप्नोति । उपकुम्भंमन्य उपमणिकंमन्य इति । अस्य च्वौ । अव्ययप्रतिषेधश्चोद्यते । दोषाभूतमहर्दिवाभूता रात्रिरित्येवमर्थम् । स इहापि प्राप्नोति । उपकुम्भीभूतम् । उपमणिकीभूतम् । यदि परिगणनं क्रियते नार्थोऽव्ययीभावस्याव्ययसंज्ञया । कथं, यान्यव्ययीभावस्याव्ययत्वे प्रयोजनानि । नैतानि सन्ति । यत्तावदुच्यते लुगिति । आचार्यप्रवृत्तिर्ज्ञापयति । भवत्यव्ययीभावाल्लुगिति । यदयं नाव्ययीभावादत इति प्रतिषेधं शास्ति । उपचार इति । अनुत्तरपदस्थस्येति वर्तते । तत्र मुखस्वर एकः प्रयोजयति । न चैकं प्रयोजनं योगारम्भं प्रयोजयति । यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयान्नाव्ययादव्ययीभावाच्चेति ॥

शि सर्वनामस्थानम् ॥ ४२ ॥ सुडनपुंसकस्य ॥ ४३ ॥ शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शिप्रतिषेधः * । शिसर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शिप्रतिषेधः प्राप्नोति । कुण्डानि तिष्ठन्ति । वनानि तिष्ठन्ति । असमर्थसमासश्च । असमर्थसमासश्चायं द्रष्टव्योऽनपुंकस्येति । न हि नञो नपुंसकेन सामर्थ्यम् । केन तर्हि । भवतिना । न भवति नपुंसकस्येति । यत्तावदुच्यते । शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शिप्रतिषेध इति । नाप्रतिषेधात् * । नायं प्रसज्यप्रतिषेधो नपुंसकस्य नेति । किं तर्हि । पर्युदासोऽयं यदन्य-

---

मिति पराङ्गवद्भावो भवति । न चैकमिति । सामान्यलक्षणमेकप्रयोजनार्थं न कर्तव्यमित्यर्थः । तत्रैवायमिति । न चोक्तं तस्मान्मुखस्वरेणात्र भवितव्यमित्याहुः । अन्ये तु वर्णयन्ति । अनव्ययमव्ययं भवतीत्यन्वर्थसंज्ञाविज्ञानान्मुखस्वरनिवृत्तिर्भवतीति नार्थः सूत्रेणेति । केचित्तु स्वरादिपाठात्सिद्धायामव्ययसंज्ञायां पुनर्वचनमनित्यत्वज्ञापनार्थं तेन कतिपयान्येवाव्ययकार्याणि भवन्तीति नार्थः परिगणनेनेत्याहुः । तेषां वचनमन्तरेण विशेषे प्रमाणाभावः ॥ ४१ ॥

शि सर्व ॥ सुडनपुंसकस्येति चेदिति । अस्मिन् सूत्रन्यासे दोषः । सुट् स्त्रीपुंसयोरित्यस्मिन् न्यासे न दोष इत्यर्थः । प्रसज्यप्रतिषेधाश्रयेण पूर्वपक्षः । पर्युदासाश्र-

---

भाष्ये ( यदयं नाव्ययीभावादिति ) स ह्यनन्तरत्वादव्ययादाप्सुप इत्यस्यैव निषेधो न तु सुपो धातुप्रातिपदिकयोरिति उपमणिकमुख इत्यादौ तन्निषेधेन चरितार्थमिति न भ्रमितव्यम् । न चोक्तमिति । भाष्ये यदीत्यसंदिग्धे सांदिग्धवचनं वेदः प्रमाणं चेदिति वत् । तस्मात्तत्र ग्रहणं कर्तव्यम् । सूत्रञ्च न कार्यमिति भाष्याशय इति वयम् । अन्ये त्विति । चिन्ना ह्यारोपितमव्ययत्वं वास्तवमनव्ययत्वञ्च प्रतीयते इति यथालक्ष्यं किं चिदव्ययकार्यं भवति किं चिन्नेतीष्टं सिद्धमिति भावः । विशेष कार्यविशेषे । किं च द्विर्बद्धं सुबद्धमिति न्यायेन पुनर्विधानात् सार्वत्रिकत्वमेव स्यादित्यपि द्रष्टव्यम् । एवञ्चाव्ययीभावस्याव्ययत्वात्कथयन्नेति इत्युक्तं चिन्त्यम् । भाष्यविरोधात् । अन्यं तु मुखस्वरे नाव्ययीभावादिति नोक्तम् । सूत्रञ्च कृतम् । तस्मादन्यदपि प्रयोजनं तथा उपकूलमित्यादौ षष्ठीसमासप्रतिषेधादित्याहुरिति मतं हरदत्तटीकायां स्पष्टम् । तदपि खल्वप्याहुरित्यादिभाष्याननुगुणम् ॥ ४१ ॥

शिसर्वना ॥ भाष्येऽसमर्थसमासश्चेति दूषणान्तरम् । तत्रासामर्थ्यमसम्बन्धात् । येन वाक्यभेदस्यापि

अनपुंसकादिति । नपुंसके न व्यापारः । यदि केन चित्प्राप्नोति तेन भविष्यति । पूर्वेण च प्राप्नोति । अप्राप्तेर्वा * । अथ वा अनन्तरा या प्राप्तिः सा निषिध्यते । कुत एतत् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति । ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते । नोत्सहते प्रतिषिद्धा सती बाधितुम् । यदप्युच्यते । असमर्थसमासश्चायं द्रष्टव्य इति । यद्यपि वक्तव्यः । अथ वैतर्हि बहूनि प्रयोजनानि । कानि । असूर्यम्पश्यानि मुखानि । अपुनर्गेयाः श्लोकाः । अश्राद्धभोजी ब्राह्मण इति ॥

नवेति विभाषा ॥ ४४ ॥ नवेति विभाषायामर्थसंज्ञाकरणम् । नवेति वि-

---

येत्य सिद्धान्तः । अप्राप्तेर्वेति । प्रसज्यप्रतिषेधे ऽप्यदोषः । तत्र सुडित्यनेन या प्राप्तिस्सा निषिध्यते न तु शिसर्वनामस्थानमिति प्राप्तिः । अन्यथा शिसर्वनामस्थानमिति निरवकाशं स्यात् । नपुंसकस्यैव हि शिः सम्भवति । ननु चेयमिति । परत्वादित्यर्थः । प्रतिषेधयुक्तायुक्तत्वाच्च विरोधसद्भावः । तत्र परत्वात् सुडिति प्राप्तिः पूर्वां प्राप्तिं बाधते तामपि प्रतिषेध इति दोषः । नोत्सहतइति । अपवादविषयपरिहारेणास्याः प्रवर्तनादित्यर्थः । अथ वैतर्हीति । इदानीमित्यर्थः । तत्र स्त्रीपुंसयोरिति वक्तव्ये अनपुंसकस्येति वचनं ज्ञापकं प्रसज्यप्रतिषेधे ऽपि नञ्समासो ऽस्तीति ॥ ४२ ॥

नवेति ॥ नवेति विभाषायामिति । समुदायस्यानुकरणत्वादनुकरणस्य चाचानुकार्येणार्थवत्त्वात्प्रातिपदिकत्वे सति विभक्त्युत्पत्तिः स्त्रीप्रत्यये च तदादिनियमा-

---

संग्रहः । पर्युदासेति । एवं हि समर्थसमासैकवाक्यते लभ्येते । यद्यपि पर्युदासे ऽपि लक्षणा तथापि दोषद्वययुक्तप्रसज्यप्रतिषेधापेक्षया लघुरेवेति भावः । वस्तुतो नञो निपातत्वेनानेकार्थत्वात् पर्युदासपक्षे लक्षणेतिरिक्तं वचः । पर्युदासपक्षे सुडित्यनेनैकवाक्यतया तस्याप्राप्तावपि आद्यस्य प्राप्तौ न मानमिति तात्पर्यम् । भाष्ये ( नपुंसके न व्यापार इति) । निषेधस्येति शेषः । अप्राप्तेरिति । वार्तिकस्य पूर्वसूत्रविहितसंज्ञायाःप्रतिषेधाप्राप्तेरित्यक्षरार्थः । भाष्ये तु वस्त्वर्थ उच्यते । अन्यथेति । सुडित्यनपेक्ष्य नपुंसकसम्बन्धिमात्रस्य निषेध इत्यभिमानः । सुट्संबन्धं तु इदं चिन्त्यम् । शसः शौ चरितार्थत्वात् । ननु संज्ञाया एकत्वेन कार्यैक्ये विरोधाभावात्कथं परत्वमत आह प्रतिषेधेति । शसि सावकाशत्वात् । एवञ्चोभयोर्युगपदसम्भवरूपो विरोधोऽस्तीति भावः । पूर्वां प्राप्तिमिति । एवञ्च सकृद्गतिन्यायेन पुनर्न प्रवर्त्तत इति भावः । अपवादेति । एव च स्वयमप्रवर्त्तमाना कथमन्यबाधिकेति तन्न्यायावसरो नेति भावः । इदानीमित्यर्थइति । तथापीत्यर्थ इत्युचितम् । यद्यपि वक्तव्य इत्युपक्रमात् । स्त्रीपुंसयोरिति । मात्राधिक्येपि स्पष्टप्रतिपत्त्यर्थमित्यर्थः । पुंस्त्रियोरिति तु वक्तुमशक्यं तस्यासाधुत्वाद् इति बोध्यम् । अत्र पर्युदासप्रसज्यप्रतिषेधयोः समफलत्वोक्त्या शास्त्रप्रापितस्य प्रतिषेधे विकल्प इति मीमांसकोक्तं चिन्त्यम् । सामान्यविशेषन्यायेन बाधस्यैवौचित्यात् । तदभावे सम्भावितस्यैव च प्रतिषेध इत्यादि मञ्जूषायां विस्तरः ॥ ४२ ॥ ४३ ॥

नवेति विभाषा ॥ ननु समुदायस्य समासग्रहणनियमेनाप्रातिपदिकत्वात् नवेति विभाषायामित्यनुपपन्नमत आह समुदायस्येति । वार्त्तिकोच्चारितसमुदायस्येत्यर्थः । नन्वेवमपि समुदायस्यानाबन्तत्वात् कथं याडादीत्यत आह स्त्रीप्रत्यये चेति । स्त्रीप्रत्यये चानुपसर्जनेनेति ष्यङः संप्रसारणमित्यत्र भाष्यपठितवचनेनेति भावः । यत्तु हल्ङ्याबिति दीर्घग्रहणादिति तन्न । बहुश्रेयसीत्यादौ लोपार्थं प्रत्ययग्रहणे इति तदन्तविधिना ङ्यन्तेत्यर्थे तस्य स्वादिप्रत्ययलक्ष्यसमाद्विहितस्तदादेरित्येतद्विशेषणतया यङ्यन्तान्तेत्यर्थेन निष्कौशाम्बिव्यावृत्तये दीर्घग्रहणस्यावश्यकत्वादिति दिक् । अनुकरणस्याबन्तत्वन्तु प्रकृतिवदनुकरणमिति

भाषायामर्थस्य संज्ञा कर्तव्या। नवाशब्दस्य यो ऽर्थस्तस्य संज्ञा भवतीति वक्तव्यम्। किं प्रयोजनम्। शब्दसंज्ञायां ह्यर्थासंप्रत्ययो यथान्यत्र *। शब्दसंज्ञायां हि सत्यामर्थस्यासंप्रत्ययः स्यात्। यथान्यत्र। अन्यत्रापि हि शब्दसंज्ञायां शब्दस्यैव संप्रत्ययो भवति नार्थस्य। क्वान्यत्र। दाधा घ्वदाप्। तरप्तमपौ घ इति। घुग्रहणेषु घग्रहणेषु च शब्दस्य संप्रत्ययो भवति नार्थस्य। तर्हि वक्तव्यम्। न वक्तव्यम्। इतिकरणो ऽर्थनिर्देशार्थः *। इतिकरणः क्रियते सो ऽर्थनिर्देशार्थो भविष्यति। किं गतमेतदितिना। आहोस्विच्छब्दाधिक्यादर्थाधिक्यम्। गतमित्याह। कुतः। लोकतः। तद्यथा। लोके गौरित्ययमाहेति गोशब्दादितिकरणः प्रयुज्यमानो गोशब्दं स्वस्मात्पदार्थात्प्रच्यावयति। सो ऽसौ स्वस्मात्पदार्थात्प्रच्युतो यासावर्थपदार्थकता तस्याश्शब्दपदार्थकः संपद्यते। एवमिहापि नवाशब्दादितिकरणः प्रयुज्यमानो नवाशब्दं स्वस्मात्पदार्थात्प्रच्यावयति सोऽसौ स्वस्मात्पदार्थात्प्रच्युतो यासौ शब्दपदार्थकता तस्या लौकिकमर्थं प्रत्याययति। नवेति यद् गम्यते नवेति यत्प्रतीयते इति। समानशब्दप्रतिषेधः *॥ समानशब्दानां

---

भावाद्याडमौ भवतः। अथ वा नवेत्युच्चार्य या विभाषा कृता तस्यामिति व्याख्या। तत्र लोके क्रिय पदसंनिधाने नवाशब्दयोर्यौ ऽर्थौ द्योत्यौ विकल्पप्रतिषेधलक्षणः स संज्ञीत्यर्थः। अन्यथा विभाषाप्रदेशेषु नवाशब्दावेवादेशौ स्याताम्। घुग्रहणेष्विति। शब्दस्य संज्ञाकरणात्प्रदेशेषु तस्यैव संप्रत्यय इत्यर्थः। इतिकरण इति क्रियते इति करणः कर्मणि ल्युट्। इतिश्चासौ करणश्चेति समासः। क्रियतइति सामान्यविशेषभावेन निर्देशः शब्दाधिक्यादिति। उपहासपरमेतच्चोदकस्य वचनम्। शब्दार्थस्यालाभादिति भावः। गौरित्ययमाहेति। यद्यपि नित्ये शब्दार्थसंबन्धे उपात्तस्यार्थस्य त्यागो नास्ति तथापि प्रसिद्धिवशादेतदभिधीयते। अर्थपदार्थकतायाः प्रच्युत इति। तत्त्वतस्त्वादावेव स्वरूपपदार्थको गोशब्दः प्रयुक्तः। सादृश्यात्तु तमर्थमनभिव्यक्तमितिशब्दो द्योतयतीति पदार्थविपर्यासकृदितिरुच्यते। अर्थपदार्थकतेति। संबन्धे भावप्रत्ययः।

---

न्यायात्। तस्यानित्यत्वाच्च न प्रत्ययान्तत्वप्रयुक्तप्रातिपदिकत्वनिषेध इति बोध्यम्। अथवेति। कृता उच्चारिता। समासत्वादेव प्रातिपदिकत्वमसमासेऽपि लिङ्गविशिष्टपरिभाषया विभक्तिरिति भावः। नामपदसन्निधाने नवा शब्दौ त्यादौ प्रत्ययमार्थावगतेराह क्रियापदेति। अन्यथेति। प्रकरणादिवशाच्चार्थविशेषावसाय इति भावः। ननु दाधाध्विस्यादौ न घुशब्दादिना दाधादीनां प्रत्ययः। किं तु दाधाशब्दैरेवेत्यत आह प्रदेशेष्विति। भाष्ये (घुग्रहणेष्वित्यादे) घुप्रदेशेष्वित्यर्थः। करणल्युटि अर्थासङ्गतेराह कर्मणीति। बाहुलकादिति भावः। सामान्येति। पाकं पचतीतिवत्। भाष्ये स्वस्मात्पदार्थात्प्रच्युतः शब्दपदार्थकः सम्पद्यत इत्यन्वयः। स्वस्मात्पदार्थादित्यस्य विवरणं या साविति। दार्ष्टान्तिके च शब्दपदार्थकता स्वरूपमितिवचनात्। तस्या इत्यस्य प्रच्युत इति शेषः। कोऽसौ लौकिकार्थस्तत्राह नवेति। यद्गम्यतइति। तद्विवृणोति। नवेति यत्प्रतीयतइति। स लौकिकार्थ इति शेषः। यद्यपीति। एवञ्च स्वस्मात्पदार्थादित्यनुपपन्नं सर्वस्यापि स्वपदार्थत्वात्। प्रच्युतिश्चानुपपन्नेति भावः। त्यागो नास्तीति चार्थान्तरग्रहणाभावस्याप्युपलक्षणम्। प्रसिद्धिवशादिति। लोकप्रसिद्ध्यैव तत्र स्वपदार्थत्वव्यवहारः तेषामेवास्यायं प्रसिद्धोऽर्थस्त्यक्तोऽप्रसिद्धश्च गृहीत इति प्रसिद्ध्या भाष्ये प्रच्युत्यङ्गीकारावुक्ताविति भावः। वस्तुतो न प्रच्युत्यादिकमित्याह तत्त्वइति। सादृश्यादिति। अर्थभेदाच्छब्दभेद इति पक्षे इदम्। एकशब्दत्वं स्वभेदादिति बोध्यम्। वस्तुतः

प्रतिषेधो वक्तव्यः । नवा कुण्डिका नवा घटिकेति । किं च स्यात् । यद्येतेषामपि विभाषा संज्ञा स्यात् । विभाषा दिक्समासे बहुव्रीहौ । दक्षिणपूर्वस्यां शालायाम् । अचिरकृतायां संप्रत्ययः स्यात् । न वा विधिपूर्वकत्वात् प्रतिषेधसंप्रत्ययो यथा लोके * । न वा एष दोषः । किं कारणम् । विधिपूर्वकत्वात् । विधाय किं चिन्नवेत्युच्यते । तेन प्रतिषेधवाचिनः संप्रत्ययो भवति । तद्यथा लोके । ग्रामो भवता गन्तव्यो न वा । नेति गम्यते । अस्ति कारणं येन नवेति लोके प्रतिषेधवाचिनः संप्रत्ययो भवति । किं कारणम् । विलिङ्गं हि भवान् लोके निर्देशं करोति । अङ्ग हि समानलिङ्गो निर्देशः क्रियतां प्रत्यग्रवाचिनः संप्रत्ययो भविष्यति । तद्यथा । ग्रामो भवता गन्तव्यो न वा । प्रत्यग्र इति गम्यते । एतच्चैव न जानीमः । क्व

---

संबन्धात्प्रच्युतो ऽर्थादपि प्रच्युतो भवति । समानशब्दप्रतिषेध इति । समानः शब्दो वाचको येषामर्थानां तेषामित्यर्थः । विभाषा दिक्समास इति । विभाषाशब्देनाभिनवलक्षणो ऽर्थः प्रत्याय्यते तत्र प्रत्यग्रवाची यो दिक्समास इति संप्रत्ययः स्यात्। तत्र दिशो नित्यत्वान्नवपुराणत्वासंभवात्तन्निमित्तो यदा शालायां व्यपदेशः दक्षिणपूर्वा शाला सा चाभिनवा तदा संज्ञा स्यादित्यर्थः । संज्ञाकार्यव्यङ्ग्यं च प्रत्यग्रत्वं स्यात् । न वा विधिपूर्वकत्वादिति । प्रदेशवाक्यार्थं पर्यालोच्येयं संज्ञा व्यवस्थाप्यते । प्रदेशेषु च कार्याणि विधाय विभाषाशब्द उच्चारितो नवार्थं गमयति । तत्र लोकवन्निपातार्थावगतिर्भवति । न तु प्रत्यग्रार्थावगतिरित्यर्थः । विलिङ्गमिति । भिन्नलिङ्गं व्यधिकरणमित्यर्थः । विलिङ्गत्वेन वैयधिकरण्यं लक्ष्यते न तु प्रतिषेधवाचिनो नवाशब्दस्य लिङ्गयोगो ऽस्ति । एतच्चैवेति । नैव क्व चिद्व्याकरणे समानलिङ्गो निर्देश इत्यर्थः । विभाषा सेनासुरेति यद्यपि समानलिङ्गो निर्देशः तथापि भिन्नविभक्ति-

---

प्रच्युत्यङ्गीकारो तयोरर्थयोर्बोधाविषयत्वबोधविषयत्वे एव न तु मुख्याविति बोध्यम्। पदार्थविपर्यासकृदिति । लोके शब्दविशेषणाकार्थप्रतीतिः शास्त्रेऽर्थविशेषणकशब्दस्य । इतिशब्दसमभिव्याहारे विपरीतमिति विपर्यासः । भाष्येऽपि (स्वस्मात्पदार्थात्प्रच्युत ) इत्यस्य विशेष्यभूतादिति शेषः । अन्यथार्थप्रतीतेः शब्दानालिङ्गिताया अभावेन एतदसङ्गतिः स्यादिति दिक् । इतिकरणस्यार्थनिर्देशार्थत्वे स्थिते नैव समानानां शब्दानां प्राप्तिरत आह समानइति । प्रत्यग्रेति । यद्यपि न चेह वयं विभाषाग्रहणेन सर्वादीन्याभिसंबध्नीम इति भाष्यपर्यालोचनया सर्वादिविशेषणत्वलाभात् प्रत्यग्रत्वं समासविशेषणमयुक्तं तथापि दिग्वाचकसर्वादीनामर्थस्य दिशो नवपुराणत्वासम्भवादुदाहरणपरभाष्याच्च तत्र सर्वादीनीत्यनेन तद्घटितसमासो लक्षणीय इति भावः । तन्निमित्त इति । लक्षणेत्यर्थः । नवासंज्ञेति । न बहुव्रीहाविति निषेधे प्राप्ते इदं नित्यार्थं स्यादिति भावः । भाष्ये (अचिरकृतायामिति ) तस्यां व्याख्यायामित्यर्थ । संप्रत्ययः स्यादित्यस्य संज्ञाया इति शेषः । ननु प्रदेशे विभाषाविधिरित्यादौ न नवाशब्द उच्चारितो नवेति विभाषेति सूत्रे तु न किञ्चिद्विधायोक्त पूर्वोत्तरसाहचर्येणास्य संज्ञासूत्रत्वादित्यत आह प्रदेशेति। इयं संज्ञेति । नवेतिविभाषेत्येतत्संज्ञासूत्रार्थ इत्यर्थः । कार्याणि सर्वनामसंज्ञादीनि । नवार्थम् । नवाशब्दार्थम् । विभाषाशब्दस्यार्थसंज्ञात्वात् । क्वचित्तु तथैव पाठः । भाष्ये (नवेत्युच्यते ) इत्यस्य तदर्थबोधको विभाषाशब्द उच्यते इत्यर्थः । प्रतिषेधवाचिन इति । प्रतिषेधवाच्ययं शब्द इति प्रत्ययो भवतीत्यर्थः । नत्विति । एवञ्च प्रदेशानुगुण्येन प्रकृतसूत्रेऽपि न प्रत्यग्रवाचिनो ग्रहणमित्यर्थः । भिन्नेति । अग्रे समानलिङ्ग इति दर्शनाद्विशब्दो भिन्नार्थ इति भावः । नत्विति । अव्ययत्वादिति भावः । नैवेति । भाष्ये ( क्वचित् क्रियते ) इतयेतच्चैव न जानीम इत्याशयः । नवा विधीत्युक्तवतोऽयं

चिद्व्याकरणे समानलिङ्गो निर्देशः क्रियतइति। अपि चात्र कामचारः प्रयोक्तुः शब्दानामभिसम्बन्धे। तद्यथा। यवागूर्भवता भोक्तव्या न वा।यदा यवागूशब्दो भुजिना संवध्यते भुजिर्नवाशब्देन तदा प्रतिषेधवाचिनः संप्रत्ययो भवति। यवागूर्भवता भोक्तव्या नवा। नेति गम्यते। यदा तु नवाशब्दो यवागूशब्देनाभिसंवध्यते न भुजिना तदा प्रत्यग्रवाचिनः संप्रत्ययो भवति। यथा यवागूर्नवा भवता भोक्तव्या। प्रत्यग्रेति गम्यते। न चेह वयं विभाषाग्रहणेन सर्वादीन्यभिसम्बध्नीमः। दिक्समासे बहुव्रीहौ सर्वादीनि विभाषा भवन्तीति। किं दिक्समासे बहुव्रीहौ सर्वादीनि भवन्ति। विध्यनित्यत्वमनुपपन्नं प्रतिषेधसंज्ञाकरणात् *। विधेरनित्यत्वं नोपपद्यते। शुशाव, शुशुवतुः, शुशुवुः, शिश्वाय, शिश्वियतुः; शिश्वियुः। किं कारणम्। प्रतिषेधसंज्ञाकरणात्। प्रतिषेधस्येयं संज्ञा क्रियते। तेन विभाषाप्रदेशेषु प्रतिषेधस्यैव संप्रत्ययः स्यात्। सिद्धं तु प्रसज्यप्रतिषेधात् *। सिद्धमेतत्। कथम्। प्रसज्यप्रतिषेधात्। विधाय किं चिन्नवेत्युच्यते। तेनोभयं भविष्यति। विप्रतिसिद्धं तु *। विप्रतिषिद्धं तु भवति। अत्र न विज्ञायते केनाभिप्रायेण प्रसजति केन निवृत्तिं करोतीति। न

---

त्वात्सामानाधिकरण्याभावः। अपिचेति। तत्र सामर्थ्याद्विशेषावगतिः। यदा अप्राप्ते यवागूभोजने वाक्यमुदीर्यते तदा प्रत्यग्रार्थावगतिः। यदा त्वातुरं प्रति यवागूभोजननिषेधार्थमुच्यते तदा निषेधावगतिः। न चेहेति। क्रियायाः प्राधान्यात्सैव विभाषाग्रहणेन सम्बध्यते न तु तदङ्गमित्यर्थः। तदेवं स्थितमेतत्। न वा विधिपूर्वकत्वादिति। विध्यनित्यत्वमिति। विकल्प इत्यर्थः। नवाशब्द एक एव निपातः प्रतिषेधवाची तस्येहोपादानादिति भावः। परिहारान्तराभिधानाय तु न बहुव्रीहाविस्यनम्बद्धं स्यादिति नोक्तम्। सिद्धं त्विति। प्रतिषेधाद्विधिरनुमास्यते ततो विकल्पः सेत्स्यतीत्यर्थः। विप्रतिषिद्धं त्विति। एकविषययोर्विधिप्रतिषेधयोर्विरोधादित्यर्थः।

---

प्रन्थः। एवञ्च शास्त्रे समानलिङ्गनिर्देशस्य क्वाप्यभावात् न क्वापि प्रत्यग्रार्थावगतिरित्याशयः। ननूभयविधान्वयसंभवे कथमन्यतरनिर्णय इत्यत आह तत्रेति। अप्राप्ते यवागूभोजनइति। अकर्त्तव्यत्वेनावगत इत्यर्थः। प्ररोचनायेति शेषः। न तु तदङ्गमिति। भवतिक्रियाकर्तुरुद्देश्यरूपं तदङ्गमित्यर्थः। भाष्ये। (विभाषाभवन्तीति)। अत्र विभाषेत्यग्रे सर्वनामानीति शेषः। भवन्ति विभाषेत्यस्य सर्वनामानीत्यादिः। ननु दिक्समासेऽपि नित्यनिषेधे न बहुव्रीहाविति सामान्यसूत्रेणैव सिद्धे विभाषा दिगिति सूत्रस्य वैयर्थ्यापत्तिरत आह परिहारान्तरेति। इति सिद्धे विभाषा दिगित्यसंबद्धं स्यादित्यर्थः। ननु प्रसक्तस्य निषेधे भाव एव न दृष्टो न तु विकल्पोऽत आह प्रतिषेधादिति। विभाषा श्वेरित्यादौ पिद्विषये विधेरनुमानं करिष्यते इत्यर्थः। निषेधानुपपत्तिकल्पितशास्त्रेण प्रसज्येति वार्त्तिकार्थ इति भावः। एवञ्च षोडशीग्रहणाग्रहणवदेकविषयत्वाद्विकल्पसिद्धिरिति तात्पर्यम्। ततइति। अन्यथा कल्पितशास्त्रं व्यर्थं स्यात्। प्रक्षालनाद्धीति न्यायाविरोधान्न निषेधार्थमेव तदिति भावः। ननु विकल्पो विरुद्धविषय एवेति किमुच्यते विप्रतिषिद्धन्त्विति अत आह एकेति। युगपदिति शेषः। विप्रतिषेधोपपादकं भाष्यम्। अत्र नेति। प्रसजति भावमिति शेषः। प्रसज्यते इति प्रसङ्गो विधिः। प्रतिषेधविषयादित्यस्य कालविशेषविशिष्टात्ततोन्यत्र तत्रैव कालान्तरविशिष्टे

वा प्रसङ्गसामर्थ्यादन्यत्र प्रतिषेधविषयात् * । न वा एष दोषः । किं कारणम् । प्रसङ्गसामर्थ्यात् । प्रसङ्गसामर्थ्याच्च विधिर्भविष्यति । अन्यत्र प्रतिषेधविषयात् । प्रतिषेधसामर्थ्याच्च प्रतिषेधो भविष्यति अन्यत्र विधिविषयात् । तदेतत् क्व सिद्धं भवति । या अप्राप्ते विभाषा । या हि प्राप्ते विभाषा कृतसामर्थ्यस्तत्र पूर्वेणैव विधिरिति कृत्वा प्रतिषेधस्यैव सम्प्रत्ययः स्यात् । एतदपि सिद्धम् । कथम्, विभाषेति महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत् । लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम् । उभयोः संज्ञा यथा विज्ञायेत । नेति च वेति च । तत्र या तावदप्राप्ते विभाषा तत्र प्रतिषेध्यं नास्तीति कृत्वा वेत्यनेन विकल्पो भविष्यति । या हि प्राप्ते विभाषा तत्रोभयमुपस्थितं भवति । नेति च वेति च । तत्र नेत्यनेन प्रतिषिद्धे वेत्यनेन विकल्पो भविष्यति । एवमपि विधिप्रतिषेधयोर्युगपद्वचनानुपपत्तिः । विधिप्रतिषेधयोर्युगपद्वचनं नोपपद्यते । शुशाव, शुशुवतुः, शुशुवुः । शिश्वाय, शिश्वियतुः, शिश्वियुः । किं कारणम् । भवतीति चेन्न प्रतिषेधः * । भवतीति चेद् प्रतिषेधो न प्राप्नोति । नेति चेन्न विधिः * । नेति चेद्विधिर्न सिध्यति । सिद्धं तु पूर्वस्योत्तरेण बाधितत्वात् * ।

---

न वा प्रसङ्गेति । सामर्थ्याद्विधिप्रतिषेधयोः पर्यायो भविष्यतीत्यर्थः । महती संज्ञेति । तेन द्वावत्र संज्ञिनौ विकल्पप्रतिषेधावित्यर्थः । यदि हि केवलः प्रतिषेधः संज्ञी स्यात् संज्ञाकरणमनर्थकं स्याद् विभाषाप्रदेशेषु नेत्येव ब्रूयात् । तत्र समुदायस्यैव संज्ञेति विभाषाप्रदेशेषु विकल्पप्रतिषेधावुपतिष्ठेते । अप्राप्तविभाषासु च प्राप्त्यभावात्प्रतिषेधस्याव्यापाराद्विकल्प एवोपतिष्ठते । एवमपीति । यद्यपि विरुद्धयोरेका संज्ञा क्रियते तथापि प्रदेशेषु युगपद्विरोधाद्भावाभावौ विधातुं न शक्येते इत्यर्थः । सिद्धं त्विति । उभयत्र विभाषासु प्रतिषेधेन समीकृते विषये पश्चाद्विकल्पः प्रवर्तत इत्यर्थः । यदि तु पूर्वं विकल्पः प्रवर्तते पश्चात्प्रतिषेधस्ततो विकल्पप्रवृत्तिरनर्थिकैव स्यात् । आनुपूर्वी च या संज्ञाविधावाश्रिता सैव प्रदेशवाक्येष्वाश्रीयते । उभयत्रविभाषार्थो चेयं

---

इत्यर्थः । निषेधसामर्थ्यलब्धोऽयमर्थः । सामर्थ्यात्प्रतिषेधाविषयादित्यत्र विधिरित्युक्ते यत्फलितं तदाह । प्रतिषेधविषयादन्यत्र विधिरित्युक्ते यत्फलितं तदाह प्रतिषेधसामर्थ्याच्चेति । इदमपि पूर्ववद्व्याख्येयं तद्ध्वनयन्नाह पर्यायइति । भाष्ये ( या हि प्राप्तेइति ) । केवलोभयत्रविभाषारूपा वेत्यर्थः । कृतसामर्थ्यइति । पूर्वेणैव कृतप्रशास्त्रेणैव । विधिकृतसामर्थ्यो विहितविधिकल्पकानिषेधांशमात्रक इत्यर्थः । एवञ्च तत्र विधिकल्पनाभावात्प्रतिषेधमात्रप्रत्ययः स्यादिति भावः । एतद्भाष्यात्तपि सामान्यशास्त्रप्राप्तिनिषेधे विकल्पं वदन्तो मीमांसकाः परास्ताः । ( महत्याःसंज्ञायाइति ) भाष्येण संज्ञैव न कर्त्तव्येति विवक्षितं न तु लघ्वी कर्त्तव्येतीत्याह यदि हीति । समुदायस्येति । प्रत्येकधर्मावच्छिन्नस्योभयस्येत्यर्थः । विकल्पप्रतिषेधाविति । प्राप्तविभाषाविषये इत्यर्थः । विकल्पएवोभेयति । उभयोः संज्ञाकरणेपि निषेधस्यान्वयायोग्यत्वाद् द्वितीयस्यैवोपस्थितिरिति भावः । अत्राप्राप्तविभाषाशब्देन केवलाप्राप्तविभाषोच्यते । युगपदिति । अनवगतसांशद्वयक्रमोपस्थानस्य चोद्यमेतदित्यभिप्रायः । भावाभावाविति । इमावेव भाष्ये विधिप्रतिषेधशब्देनोक्तौ । भाष्ये ( पूर्वस्योत्तरेणेति ) । पूर्वस्य प्रतिषेधस्य उत्तरेण विकल्पेन । बाधश्चात्र न निषेधप्रवृत्तिप्रतिबन्धः किं तु तत्फलस्याभावनिष्ठसार्वकालिकत्वस्य प्रतिबन्ध इति बोध्यम् । नन्वेवमपि पूर्ववाक्येन न शब्द एवादेशः स्यात् तत्रार्थपरत्वे मानाभावादत आह इतिकरणइति । एवञ्चोभयत्रापीतिशब्दान्वय इति भावः । एवञ्चार्थद्वयसंज्ञाकरणसामर्थ्यादेव वाक्यभेदेन क्रमेणान्वय इति भावः । एवञ्च केवलप्राप्तविभाषायामुभयत्रविभाषायाञ्च क्रमेण निषेधविकल्पयोरुपस्थितिः । शुद्धाप्राप्तविभाषयान्तु निषेधस्यान्वया-

सिद्धमेतत्। कथम्। पूर्वविधिमुत्तरो विधिर्बाधते। इतिकरणोऽर्थनिर्देशार्थ इत्युक्तम्। साध्वनुशासनेऽस्मिन् शास्त्रे यस्य विभाषा तस्य साधुत्वम् *। साध्वनुशासनेऽस्मिन् शास्त्रे यस्य विभाषा क्रियते स विभाषा साधुः स्यात्। समासश्चैव हि विभाषा क्रियते तेन समासस्यैव विभाषा साधुत्वं स्यात्। अस्तु यः साधुः स प्रयोक्ष्यते। असाधुर्न प्रयोक्ष्यते। न चैव हि कदा चिद् व्याकरणे राजपुरुष इत्येतस्यामवस्थायामसाधुत्वमिष्यते। अपि च। द्वैधा ऽप्रतिपत्तिः *। द्वैधं शब्दानामप्रतिपत्तिः स्यात्। इच्छामश्च पुनर्विभाषाप्रदेशेषु द्वैधं शब्दानां प्रतिपत्तिः स्यादिति। तच्च न सिध्यति। यस्य पुनः कार्याः शब्दाः। विभाषासौ समासं

---

संज्ञा। प्राप्तविभाषायामप्राप्तविभाषायां च संज्ञाकरणस्यानुपयोगात्। तथाहि। प्राप्तविभाषासु पक्षे निवृत्तिः क्रियते पक्षे तु प्रवृत्तिः स्थितैव। अप्राप्तविभाषासु च पक्षे कार्यस्य प्रवृत्तिः क्रियते पक्षान्तरे त्वप्रवृत्तिः स्थितैवेति नास्ति तत्र संज्ञाफलम्। विभाषा श्वेरित्यत्र तु यदि विधिमुखेन विभाषाश्रुतिः प्रवर्तते पित्स्वेव सम्प्रसारणं विभाषा स्यात्। कित्सु यजादित्वान्नित्यमेव स्यात्। अथ प्रतिषेधमुखेन प्रवृत्तिस्तदा कित्स्वेव विकल्प इति पित्सु न स्यात्। संज्ञाकरणे तु पूर्वं प्रतिषेधे कित्सु प्रवृत्तिः पश्चाद्विधिमुखेन सर्वत्र पक्षे सम्प्रसारणस्य प्रवर्तनादिष्टं सिध्यति। यदा तु प्रतिलक्ष्यं भेदेन विभाषा श्वेरित्यस्य व्यापारः क्व चिद्विधिमुखेन क्व चित्प्रतिषेधमुखेन तदा संज्ञाकरणमन्तरेणापि सिध्यतीति अशिष्योऽयं योग इति वक्ष्यते। अशिष्यो वा विदितत्वादिति। साध्वनुशासनइति। साधुत्वप्रतिपादनार्थत्वाच्छास्त्रस्य साधुत्वस्यैव प्राधान्याद्विकल्पेन सम्बन्धः स्याद् न तु तदङ्गभूतानां समाससंज्ञादीनामिति भावः। ततश्च विभाषा श्वेरित्यस्यायमर्थः स्यात्। विभाषा श्वयतेस्साधु संप्रसारणं भवति पक्षे त्वसाध्विति। अस्तु यः साधुरिति। यथा भक्ष्याभक्ष्यसन्निधौ भक्ष्यमेवोपादीयते। न चैव हीति। सर्वदा त्वस्य साधुत्वं नोभयरूपत्वमित्यर्थः। द्वैधा ऽप्रतिपत्तिरिति। साधुत्वविकल्पने विभाषाग्रहणस्योपयुक्तत्वात् शिश्वियतुरित्यादि रूपं न सिध्यतीत्यर्थ।

---

योग्यत्वाच्छुद्धविकल्पोपस्थितिरिति तात्पर्यम्। पूर्वं विकल्पाप्रवृत्तौ दूषणान्तरमाह आनुपूर्व्या चेति। अनुपयोगादीति। उभयगतिरिहेत्युक्तेर्लोकगृहीतविकल्पशक्त्यैव सिद्धेरिति भावः। पक्षे निवृत्तिरिति। एवञ्च तत्र निषेधतात्पर्यकतयैव प्रवृत्तिरिति भावः। अप्राप्तेति। तत्र विधितात्पर्यकतयैव प्रवृत्तिरिति भावः। पित्स्वेवेति। तत्राप्राप्तेरिति भावः। एकस्योभयत्र तात्पर्यन्तु न संभवतीत्याशयः। भावतात्पर्यकत्वलोभेन पिद्विषयैव स्यादिति तत्त्वम्। अस्योभयत्रविभाषाविषयत्वं भाष्ये विभाषा श्वेरित्यस्यैवोदाहरणदानेन बोधितम्। एवञ्च तदर्थमावश्यकेऽस्मिन् अन्यत्रापि स्वशास्त्रगृहीतसङ्केतेनैव बोधान्न या हि प्राप्त विभाषा तत्रोभयमुपस्थितमित्याद्युक्तभाष्यविरोध इति दिक्। साधुत्वप्रतिपादनाच्छास्त्रस्येति पाठः। शास्त्रस्येति कर्त्तुः शेषत्वे षष्ठी। क्वचित्तु साधुत्वप्रतिपादनार्थत्वाच्छास्त्रस्येति पाठः। प्राधान्यादिति। यदिह परिनिष्ठितं तत्साध्विति अर्थापत्तिकल्पितवाक्यस्यैव मुख्यत्वात्तेन मुख्यतया साधुत्वस्यैव विधानादित्याशयः। तदङ्गभूतानामिति। तदुद्देश्यभूतानामित्यर्थः। भाष्ये (यस्य विभाषा क्रियतइति)। यत्सम्बन्धेन विभाषोच्यत इत्यर्थः (समासश्चैव हीति)। हि यतः समासो विभाषा क्रियते समासो विभाषेत्युच्यते तत्र समासोद्देशेन साधुत्वविधानात्तस्यैव विकल्पः स्यादिति भावः। साधुत्वञ्च जातिविशेषः। समासप्रकरणीयविभाषाधिकारस्य भाष्ये प्रत्याख्यानादाह विभाषा श्वेरिति। साधुत्वविकल्पे दूषणमाह भाष्ये (नचैवेत्यादिना)। तद्रूपाच्चष्टे सर्वदा स्विति। सादृश्यादसाधुत्यागपुरःसरं साधूपादानं दुष्करमित्यपि बोध्यम्। तत्र साध्वनुशा-

निवर्तयति। यस्यापि नित्याः शब्दास्तस्याप्येष दोषो न भवति। कथम्। न विभाषाग्रहणेन साधुत्वमभिसम्बध्यते। किं तर्हि। समाससंज्ञाभिसम्बध्यते। समास इत्येषा संज्ञा विभाषा भवतीति। तद्यथा। मेध्यः पशुर्विभाषितः। मेध्योऽनड्वान् विभाषितइति। नैतद्विचार्यते अनड्वाननड्वानिति। किं तर्हि। आलब्धव्यो नालब्धव्य इति। कार्येषु युगपदन्वाचययौगपद्यम् *। कार्येषु शब्देषु युगपदन्वाचयेन च यदुच्यते तस्य युगपद्वचनता प्राप्नोति। तव्यत्तव्यानीयरः। ढक् च मण्डूकादिति। यस्य पुनर्नित्याः शब्दाः प्रयुक्तानामसौ साधुत्वमन्वाचष्टे। ननु च यस्यापि कार्यास्तस्याप्येष न दोषः। कथम्। प्रत्ययः परो भवतीत्युच्यते न चैकस्याः प्रकृतेरनेकस्य प्रत्ययस्य युगपत्परत्वेन संभवोऽस्ति। नापि ब्रूमः

---

यस्य पुनरिति। एवं मन्यते व्याकरणेनैव शब्दा उत्पाद्यन्ते तन्मते विभाषाग्रहणेनापूर्वत्वेन विधेयत्वात्संप्रसारणमेव विकल्प्यतइति द्वैधं प्रतिपत्तिः शब्दानां सिध्यतीति भावः। यस्यापीति। साधुत्वस्यापौरुषेयत्वादविकल्प्यत्वात्तदङ्गानामेव विकल्पः। तद्यथेति। पशुत्वानडुत्त्वयोरविकल्प्यत्वात्क्रिया विकल्प्यते। नन्वन्यत्रोक्तं न च संज्ञाया भावाभावाविष्येते इति इह तूक्तं संज्ञाभिसंबध्यतइति नतश्च विरोधः। नैष दोषः। इह वृत्तिवाक्ययोर्मुख्यार्थभेदादभिन्नार्थत्वमाश्रित्योक्तम्। अन्यत्र तु व्यपेक्षैकार्थीभावभेदाद्भिन्नार्थत्वमाश्रित्यैकर्थीभावे एव संज्ञाया भावाभावौ नेष्येते इत्युक्तमित्यविरोधः। नित्यवादी कार्यपक्षे दूषणमाह कार्येष्विति। युगपद्भावे युगपच्छब्दो वर्ततइति द्वन्द्वः कृतः। अन्वाचयः समुच्चयोऽभिमतो यस्य चकारेण स्वरितत्वेन वा विधानम्। यस्य कार्याः शब्दाः स प्रयोगनिरपेक्षः शब्दानन्वाचष्टइति तव्यादीनां युगपदुत्पत्तिः प्राप्नोति। न चैकस्या इति। ननु व्यवहितेऽपि परशब्दः प्रवर्तते। सत्यम्। अन्तरालस्थमनपेक्ष्यानन्तर्यमारोप्य तत्र परशब्दप्रयोगो निर्दिष्टग्रहणं त्वानन्तर्यार्थमिति कुतो व्यवहितस्य प्रयोगः। कथं तर्ह्युक्तमेका प्रकृतिर्बहवश्च

---

सनइत्युक्तथा शब्दनित्यत्वपक्ष एवायं दोषः ननु कार्यत्वपक्षे इत्युक्तं तदुपपादकं(यस्य पुनरि)त्यादिभाष्यम्। प्राधान्यात्साधुत्वस्यैव विकल्पः स्यादिति यदुक्तं तत्राह साधुत्वस्येति। संज्ञायाः श्रुतत्वेन साधुत्वस्याश्रुतत्वेन श्रुतस्य श्रुतेनैव संबन्धस्य न्याय्यत्वात्प्रयोगासमवायिलङादिस्थले श्रुते विधेयत्वस्यावश्यकत्वाच्चेत्यपि बोध्यम्। पशुत्वेति। साक्षाच्छ्रूयमाणेष्वयोग्यत्वाद्यदा न संबन्धस्तदा किं वक्तव्यमश्रूयमाणेऽयोग्ये संबन्धो नतीत्यर्थः। अन्यत्रेति। समर्थसूत्रे। मुख्यः प्रधानः। अभिन्नार्थत्वमिति। एवञ्च तदर्थे कश्चित्साधुत्वेनान्वाख्यायमानो न त्वाख्यातस्य तदर्थकस्यान्यस्य निवर्त्तकः स्यादिति तस्यापि साधुत्वार्थं विभाषाधिकार आवश्यक इति भावः। वाक्ये व्यपेक्षा परस्पराकाङ्क्षारूपा पदार्थानामपृथगुपस्थितिविषयत्वमेकार्थीभावो वृत्तिविषयः। एवञ्च वृत्तिवाक्ययोर्भिन्नार्थत्वान्न वाक्यानुज्ञानाय विभाषाग्रहणम्। किं तु वृत्तिविषये एव संज्ञाविकल्पार्थं वाच्यम्। न च वृत्तौ संज्ञायाः स इष्यत तस्मादेकार्थीभावस्यैव मन्दमत्यनुग्रहाय स विशेषणमिति तत्रोक्ततात्पर्यमित्यविरोध इति भावः। भाष्ये (समाससंज्ञे) त्यस्य तद्विषयैकार्थीभाव इत्यर्थः। ननु युगपच्छब्दस्यैककाल इत्यर्थकस्य सप्तम्यर्थवृत्तेरन्वाचयशब्देनातादृशेन कथं द्वन्द्व इत्यत आह युगपद्भावइति। कार्येषु शब्देषु यौगपद्यान्वाचयविषये तेषां यौगपद्यं युगपत्प्रयोगः प्राप्नोतीति वार्त्तिकाक्षरार्थः। भाष्ये (युगपद्वचनतेति) बहुव्रीहेस्तल्। अन्वाचयेनेत्युक्त्वा ढक् चेति समुच्चयोदाहरणमसङ्गतमित्यत आह समुच्चयइति। स्वरितत्वेन वेति। यथा काश्यादिभ्यष्ठञ्ञिठाविति वर्त्तमाने वाहीकग्रामेभ्यश्चेत्यत्र। नित्यशब्दवादे तु प्रयोगदृष्टानामेव शास्त्रे काल्पनिकविधेयत्वेनेष्टप्रत्ययाविभागासिद्धिः। रेखागवयन्याय-

प्रत्ययमाला प्राप्नोतीति। किं तर्हि। कर्तव्यमिति प्रयोक्तव्ये युगपद् द्वितीयस्य तृतीयस्य च प्रयोगः प्राप्नोतीति। नैष दोषः। अर्थगत्यर्थः शब्दप्रयोगः। अर्थं संप्रत्याययिष्यामीति शब्दः प्रयुज्यते। तत्रैकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य तृतीयस्य च प्रयोगेण न भवितव्यम् 'उक्तार्थानामप्रयोग इति। आचार्यदेशशीलनेन च तद्विषयता ॥ आचार्यदेशशीलनेन च यदुच्यते तस्य तद्विषयता प्राप्नोति। इको ह्रस्वो ऽङ्यो गालवस्य। प्राचामवृद्धात् फिन् बहुलमिति। गालवा एव ह्रस्वान् प्रयुञ्जीरन् प्राक्षु चैव हि फिन् स्यात्। तद्यथा। जमदग्निर्वा एतत्पञ्चममवदानमवाद्यत्। तस्मान्ना जामदग्न्यः पञ्चावत्तं जुहोति। यस्य पुनर्नित्याः शब्दाः गालवग्रहणं तस्य पूजार्थम्। देशग्रहणं च कीर्त्यर्थम्। ननु च

---

यत्र इति। तत्र यत्राकृतेरेकत्वात्तस्याश्च परत्वादानन्तर्याच्चादोष। तव्यदादयस्त्वेकाकृतियुक्ता न भवन्ति नापि ब्रूम इति। एकस्याः प्रकृतेः सर्वे भवन्तीति न ब्रूमः, किं तर्हि प्रत्ययान्तरेण प्रकृत्यन्तरस्याक्षेपात् कर्तव्यमिति प्रयुयुक्षिते करणीयादीनामपि प्रयोगः प्राप्नोति। अर्थगत्यर्थ इति। तव्यत्तव्यानीयर इत्यस्माद्वाक्याद्वाक्यान्तराण्युपप्लवन्ते। तत्प्रतिपादकानि धातोस्तव्यद्भवति भावकर्मणोरित्यादीनि। तत्र कर्तव्यशब्देन तस्यार्थस्य प्रतिपादितत्वात्करणीयशब्दो न प्रयुज्यते। आचार्येति। आचार्यस्य देशस्य च पुनः पुनः संकीर्तनमाचार्यदेशशीलनं तत्र तस्य शब्दस्य तद्विषयत्वमेव स्यात्। सर्वप्रयोक्तृत्वप्रसङ्गे गालवस्येति नियमार्थं स्यात्। यस्य पुनरिति। अनादित्वाच्छब्दव्यवहारस्य नित्यत्वपक्षे नास्ति प्रयोक्तृनियमः। केवलं गालवः स्मर्तृत्वेन निर्दिष्टो ऽस्य शास्त्रस्य प्रामाण्यं प्रतिपादयितुमिति पूजार्थमाचार्यग्रहणम्। शास्त्रस्य ह्यनाद्यर्थप्रतिपादकत्वात्पूजा भवति। कीर्त्यर्थमिति। कीर्तौ सत्यां तेषां स्वर्गाद्यवस्थानं चिरं भवति। यथा इन्द्रद्युम्नादीनाम्। ननु च यस्यापी-

---

स्याद्यन्तावीति सूत्रे भाष्य एव वक्ष्यमाणत्वात्। व्यवहितेपीति। लोके तथादर्शनादिति भावः। आनन्तर्यमारोप्येति। अनेन परादिशब्दानामव्यवहित एव प्रवृत्तिरत एव व्यवहिताश्चेति सूत्रं सार्थकमिति भावः। शास्त्रे तु सर्वथा न व्यवहिते प्रवृत्तिरित्याह निर्दिष्टग्रहणं त्विति। तुश्चार्थे। छन्दसि परेपि परश्चेत्याशयेऽपि उत्तराङ्गविकलत्समासिति परिभाषायाः प्रवृत्तेरिति भावः। कथं तर्हीति। सरूपसूत्रे इति भावः। एकाकृतीति। एकानुपूर्वी हि एकाकृतिरत्र। भाष्ये (नापि ब्रूम) इत्यस्य नैव ब्रूम इत्यर्थः। अर्थोपि समुदायस्येति शङ्कमानं प्रत्याह तव्यदिति। प्रत्ययादिसंज्ञा तव्यत्तव्यानीयर इति बहुवचननिर्देशात् प्रत्येकमिति प्रत्येकमेव भावाद्यर्थकत्वमिति भावः। पुनः पुनः सङ्कीर्तनमिति। अयं पुनः पुनरित्यस्योपयोगश्चिन्त्यः। एकैकस्मिन् शास्त्रे तदभावाच्च। तस्मात्सङ्कीर्तनमात्रमेवात्र शीलनमिति बोध्यं तेन यत्कार्यमुच्यते इति वार्त्तिकाक्षरार्थः। अत एवाग्रे भाष्ये तत्कीर्तने चेत्येवोक्तम्। तद्विषयत्वमुपपादयति सर्वप्रयोक्त्रिति। इको ह्रस्वो भवति तत्प्रयोक्तृत्वञ्च गालवस्येत्यादिक्रमेण सूत्रार्थः। भाष्ये (प्राक्षु चेति) प्राग्देश एव फिन्प्रयोगः स्यादित्यर्थः। अनादित्वादिति। एवञ्च गालवाऽतिरिक्तशिष्टैरपि प्रयुज्यमानत्वान्नियमासंभवः। किञ्चैतत्पक्षे शास्त्रे रेखागवयन्यायेन कल्पितशब्दविषयमिति कल्पितशब्दे प्रयोक्तृनियमासंभव इति भावः। शास्त्रस्य प्रामाण्यमिति। एवञ्च पूजार्थमित्यस्य स्वशास्त्रपूजार्थमित्यर्थ इति भावः। तदेवाह शास्त्रस्य हीति। भाष्ये (देशग्रहणं चेति)। चेनाऽऽचार्यग्रहणम्। देशग्रहणस्य पूजार्थत्वन्तु वक्तुमशक्यं देशस्य स्मर्तृत्वाद्यभावादितिभावः। स्थिरम्भवतीति। ततश्च देशकीर्तौ तद्देशीयानां स्वर्गस्थानमित्यर्थः। तेन च पाणिनेरपि तदिति भावः। ननु नित्यशब्दवादे गालवादिग्रहणस्य पूजार्थत्वे ह्रस्वाभावविशिष्टस्य साधुत्वबोधनं न स्यात् तत्पक्षे सलघूपायेन साध्वसाधुविवेकाय शा-

यस्यापि कार्याः शब्दास्तस्यापि गालवग्रहणं पूजार्थं स्यात् । देशग्रहणं च कीर्त्यर्थम् । तत्कीर्तने च द्वैधा ऽप्रतिपत्तिः * । तत्कीर्तने च द्वैधं शब्दानां प्रतिपत्तिः स्यात् । इच्छामश्च पुनराचार्यग्रहणेषु देशग्रहणेषु च द्वैधं शब्दानां प्रतिपत्तिः स्यादिति । तच्च न सिध्यति । अशिष्यो वा विदितत्वात् * । अशिष्यो वा पुनरयं योगः । किं कारणम् । विदितत्वात् । यदनेन योगेन प्रार्थ्यते तस्यार्थस्य विदितत्वात् । येपि ह्येतां संज्ञां नारभन्ते तेपि विभाषेत्युक्ते ऽनित्यत्वमवगच्छन्ति । याज्ञिकाः खल्वपि संज्ञामनारभमाणा विभाषेत्युक्ते ऽनित्यत्वमवगच्छन्ति । तद्यथा । मेध्यः पशुर्विभाषितो मेध्यो ऽनड्वान् विभाषित इति । आलब्धव्यो नालब्धव्य इति गम्यते । आचार्यः खल्वपि संज्ञामारभमाणो भूयिष्ठमन्यैरपि शब्दैरेतमर्थं संप्रत्याययति । बहुलमन्यतरस्यामुभयथा वा एकेषामिति । अप्राप्ते त्रिसंशयाः * । इत उत्तरं या विभाषा अनुक्रमिष्यामः । अप्राप्ते ता द्रष्टव्याः । त्रिसंशयास्तु भवन्ति । प्राप्ते ऽप्राप्ते उभयत्र वेति ।

---

न्ति । कार्यपक्षेपि पूजा शक्यते व्याख्यातुं यस्माद् गालवेन ह्रस्वत्वं प्रयुक्तं तस्मात्त्वमपि प्रयुङ्क्ष्वेति स्तुत्यर्थोऽर्थवादः स्यादित्यर्थः । इदानीं कार्यपक्षे दूषणमाह तत्कीर्तनइति । कार्यपक्षे ऽयमर्थः स्याद् यस्माद्गालवेन ह्रस्वत्वं प्रयुक्तं तस्मात्प्रयोक्तव्यमिति । ततश्च ह्रस्वत्वस्य विकल्पो न स्यात् । नित्यत्वपक्षे तु गालवो ह्रस्वत्वस्य स्मर्ताऽन्यो दीर्घस्येति स्मृत्यन्तरानुसन्धानद्वारेण विकल्पः सिध्यतीति नित्यपक्ष एव युक्तः । अशिष्यो वेति । वाशब्दो विकल्पे । तेनाकृतिपक्षे उभयत्रविभाषार्थं सूत्रं कर्तव्यम् । व्यक्तिपक्षे तु लक्ष्यभेदेन लक्षणभेदात्क्वचित्कं चिल्लक्षणं विधिमुखेन प्रवर्तते क्वचिन्निषेधमुखेन प्रवर्तत इतीष्टसिद्ध्या सूत्रं न कर्तव्यमित्यर्थः । अप्राप्त इति । अधि-

---

क्यमिति चेन्न । गालवः स्मर्ता नान्य इति स्मृत्यन्तरानुसन्धानद्वारेण विकल्पसिद्धेः । वाग्रहणे एव कर्त्तव्ये गालवग्रहणं व्यर्थमिति शङ्कानिरासार्थन्तु भाष्ये पूजार्थमित्युक्तम् । भाष्ये ( तत्कीर्त्तने चेति ) । आचार्यदेशकीर्त्तनं चेत्यर्थः । यस्य कार्याः शब्दास्तस्येति शेषः । तदेवाह इदानीमिति । प्रयुक्तमिति । कृतमित्यर्थः । नित्यपक्षे त्विति । कार्यपक्षे त्वेवं वक्तुमशक्यम् । यतो गालवेन कृतोऽतः कर्त्तव्यो नान्येन कृतो ऽतो न कर्त्तव्य इति । अन्येन कृतस्य पुनः करणवैयर्थ्यात् । नह्यन्यकृतस्य पुनः करणमस्ति । नाप्यन्येनाकृतस्याकरणम् । तादृशस्यैव करणात् । एतेनान्येन कृतस्यानुवादो ऽन्यकृतत्वबोधनद्वारा विकल्पबोधक इति परास्तम् । पाणिनिकृतानामपि पचो व इत्यादीनामन्याकृतत्वेन तेषामपि विकल्पापत्तेश्च । तस्मात्कार्यवादोऽसङ्गत इति दिक् ॥ ननु लोकतो ऽनित्यत्वार्थलाभेपि निषेधविकल्पयोरलाभे इत्यत आह । भाष्ये ( आचार्यः खल्वपीति ) एवं च हकोरित्याद्युभयत्रविभाषायां यथा तत्र तयोर्लाभस्तथा विभाषापदघटितेपि भविष्यतीति नार्थः सूत्रेणेति भावः । वाशब्दो विकल्प इति । यत्तु अर्थस्य सांज्ञित्ववद्विभाषापदार्थस्यैव संज्ञात्वम् । तत्रापीतेः संबन्धात् । न च पदजन्यपदार्थोपस्थित्यभावेनान्वयासंभवः । विकल्पवाचिपदस्य तदर्थे लक्षणाभ्युपगमात् । एवञ्च लक्षणातात्पर्यग्राहकमिदं सूत्रम् । अर्थेन संज्ञात्वमिति चेत्तदर्थोच्चिप्तशब्दमात्रस्य संज्ञात्वमस्तु इतिशब्दसंबन्धसामर्थ्यादिति । तन्न । एकस्यानेकसंज्ञायाः शास्त्रे ऽदर्शनात् अनाकृतिः संज्ञेति वृद्धिसूत्रस्थभाष्यविरोधाच्च । तेनाकृताविति । तत्पक्षे लिङ्त्वजातौ विधिमुखेन प्रवृत्तौ पिस्येव स्यान्निषेधमुखेन प्रवृत्तौ किस्येव स्यात् न तु सर्वत्रेति सूत्रं कर्त्तव्यं सति च सूत्रे लिङ्त्वजातौ प्राप्तस्य निषेधे तस्यामेव विकल्पो विधीयमानः सर्वत्र सिध्यतीति भावः । प्रत्याख्यानाशयमाह व्यक्तिपक्षे त्विति । क्वचिद्विधिमुखेनेत्यन्वयः । किं चिल्लक्षणमुभयत्र विभाषारूपम् ।

द्वन्द्वे च विभाषा जसि । प्राप्ते ऽप्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते कथं च अप्राप्ते कथं चोभयत्रेति । उभयशब्दः सर्वादिषु पठ्यते तयपश्चायजादेशः क्रियते तेन वा नित्ये प्राप्ते ऽन्यत्र वा ऽप्राप्ते उभयत्र वेति । अप्राप्ते अयच् प्रत्ययान्तरम् । यदि प्रत्ययान्तरम् उभयीति ईकारो न प्राप्नोति । मा भूदेवं मात्रजित्येवं भविष्यति । कथम् । मात्रजिति नेदं प्रत्ययग्रहणम् । किं तर्हि । प्रत्याहारग्रहणम् । क्व संनिविष्टानां प्रत्याहारः । मात्रशब्दात्प्रभृति आ अयचश्चकारात् । यदि प्रत्याहारग्रहणम् । कति तिष्ठन्ति । अत्रापि प्राप्नोति । अत इति वर्तते । एवमपि तैल-

---

कारोयम् । त्रिसंशया इति । त्रिष्वर्थेषु संशयो यासु तास्त्रिसंशयाः । द्वन्द्वे चेति । प्रकरणोपलक्षणार्थमेतदुपात्तम् । प्रथमचरमतयेत्यत्र तयग्रहणे संशयः । तत्र तयशब्दस्य प्रयोजनं सर्वनामाव्ययसंज्ञायामिति वान्वर्थसंज्ञाविज्ञानाद्वा केवलस्य प्रयोगाभावात्तदन्तस्यैव सर्वनामत्वसंभवात्प्रत्ययग्रहणइति परिभाषया वा तदन्तविधिः । तत्र यदि सर्वादिग्रहणेन तयान्तं विशेष्यते नेमशब्दो ऽव्यभिचारात्प्रथमादयस्त्वसंभवान्न विशेष्यन्ते । तदोभयशब्दस्य जसि नित्या संज्ञा विभाष्यतइति प्राप्तविभाषा स्यात् । अथ सर्वादीनीति निवृत्तं पूर्वविप्रतिषेधश्च तदा प्राप्तविभाषा । अथ परविप्रतिषेधस्तदोभयत्राविभाषा । प्रत्ययान्तरमिति । आदेशपक्षे पूर्वविप्रतिषेधो वक्तव्य इति प्रत्यया-

---

उत्तरत्र तु क्वचित्प्रतिषेधमुखेनेत्येव पाठः । परे तु आकृतिपक्षे किं तज्जात्याश्रयसकलव्यक्तिविषयं लक्षणम् । उत तज्जात्याश्रययत्किंचिद्विषयम् । नाद्यः । सूत्रारम्भेपि न पदघटितवाक्यस्य तद्विषयतया वक्तुमशक्यत्वात् । तस्य यत्किंचिद्विषयता वापादितस्य सर्वविषयत्वेति तु दुर्लभम् । नान्त्योपि । न ब्राह्मणं हन्यादित्यादौ जातिपक्षे सर्वव्यक्तिविषयतया एव दृष्टत्वात् । किं च तत्र किं विधिमुखप्रवृत्त्या पिद्विषयत्वं निषेधमुखप्रवृत्त्या किंचिद्विषयत्वं वेत्यत्र विनिगमनाविरहात्सूत्रं विनाप्युभयमुखेन प्रवृत्ताविष्टसिद्धेः । न च भावतात्पर्यकता पिद्विषयत्वे विनिगमिका । विभाषोपयमने इत्यादौ त्रिसंशयत्वानुपपत्तेः । भावतात्पर्यकतालाभनाप्राप्तविभाषात्वस्यैव संभवात् । विप्रतिषेधशास्त्रबलात्त्वभावतात्पर्यकतापि स्यादिति चेत्प्रकृतेति तुल्यम् । तस्मात्पक्षद्वये ऽपि सूत्रप्रत्याख्याने भाष्यतात्पर्यम् ! किं च सूत्रे कृते त्रिसंशया प्राप्तविभाषात्वपि तत्प्रवृत्तिः स्यादिति सोच्छ्रयेतैव । लक्ष्यानुसारात्प्रवृत्तौ तु सूत्रं व्यर्थमेवेति भाष्याशयः । एतदेव ध्वनयन्त्रिसंशयां प्राप्तविभाषां दर्शयति । त्रिसंशयास्वप्राप्तविभाषात्वमेवेति भ्रमनिरासायेतरयोरपि कथनमित्याहुः । इत उत्तरमित्यस्य लाभे युक्तिमाह अधिकार इति । संशयत्रयस्य क्वाप्यभावादाह त्रिष्विति ॥ द्वन्द्वे च विभाषा जसीत्युक्तोभयशब्दोदाहरणासङ्गतमत आह उपलक्षणेति । विभाषा जसीत्यस्य द्वन्द्वविषयतया द्वन्द्वे च संज्ञानिषेधेन सर्वनामसंज्ञायाप्राप्तविभाषात्वनिश्चयेन निषेधीयप्राप्तविभाषात्वनिश्चयेन वा त्रिसंशयत्वाभावादिति भावः ॥ द्वन्द्वे इत्यस्यासम्बन्धे पूर्वादीनां जसि विकल्पारम्भो व्यर्थः स्यादिति तात्पर्यम् । ननु तयशब्देपि कथं संशयः प्रथमादिसूत्रेण प्रत्ययमात्रस्य संज्ञा सर्वादिसूत्रेण तु उभयशब्दस्य समुदायस्येति भिन्नविषयत्वेनाप्राप्तविभाषात्वनिर्णयादत आह तत्रेति । तयशब्देनेत्यस्य तदन्तविधिरित्यनेनान्वयः । अन्वर्थत्वेन कथन्तदन्तविधिरत आह केवलस्येति । सर्वनामत्वसंभवात् । सर्वार्थबोधकत्वसंभवात् । तथा च तस्य सर्वार्थबोधकत्वासंभवात्सामर्थ्येन संज्ञाविधावपि प्रत्ययग्रहणपरिभाषया तदन्तविधिरिति भावः ॥ पूर्वविप्रतिषेधश्चेति । सर्वादित्वनिबन्धना संज्ञा जसभिन्ने सावकाशा द्वितयादिषु च विकल्प उभयशब्दे जस्युभयप्राप्तौ पूर्वविप्रतिषेधः । न च नित्या संज्ञा ऽन्तरङ्गा । अन्तरङ्गपरिभाषाया अप्रवृत्तेः । तथाहि । नान्तरङ्गं बलीय इत्यस्या अत्र विषयः युगपत्प्राप्त्यभावात् । जसादेः सर्वनाम्नो विहितत्वसंपत्तये तस्याः पूर्वमेव प्रवृत्तिरस्यास्तु जसुत्पत्त्यनन्तरमिति स्पष्टमेव । नाप्यसिद्धं बहिरङ्गमन्तरङ्ग इत्यस्याः अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेरनया तत्प्रवृत्तेर्वारयितुमशक्यत्वात् बहुशस्तथासत्त्वात् । तदुत्तरमप्येतत्प्रवृत्त्या पक्षे तदभावविशिष्टस्य साधुत्वबोधनं पूर्वादिष्विव त्रिसंशयत्वस्य भाष्योक्तस्यासङ्गत्यापत्तेश्चेति

मात्रा घृतमात्रा अत्रापि प्राप्नोति । सदृशस्याप्यसंनिविष्टस्य न भविष्यति प्रत्याहारेण ग्रहणम् । ऊर्णोतेर्विभाषा । प्राप्ते अप्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते कथं चाप्राप्ते कथं चोभयत्र । असंयोगाल्लिट् किदिति वा नित्ये प्राप्ते ऽन्यत्र वा ऽप्राप्ते उभयत्र वेति । अप्राप्ते अन्यद्धि कित्त्वमन्यद्धि ङित्त्वम् । एकं चेन्ङित्कितो । यद्येकं ङित्कितौ, ततः संदेहः । अथ हि नाना, नास्ति संदेहः । यद्यपि नाना, एवमपि संदेहः । प्रौर्णुवीति । सार्वधातुकमपिदिति वा नित्ये प्राप्ते ऽन्यत्र वा ऽप्राप्ते उभयत्र वेति । अप्राप्ते । विभाषोपयमने । प्राप्ते ऽप्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते कथं चाप्राप्ते कथं च उभयत्र । गन्धनइति वा नित्ये प्राप्ते ऽन्यत्र वा ऽप्राप्ते उभयत्र वेति । अप्राप्ते गन्धनइतिं निवृत्तम् । अनुपसर्गाद्वा । प्राप्ते ऽप्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते कथं चाप्राप्ते कथं चोभयत्रं । वृत्तिसर्गतायनेषु क्रम इति वा नित्ये प्राप्ते ऽन्यत्र वा ऽप्राप्ते उभयत्र वेति । अप्राप्ते वृत्त्यादिष्विति निवृत्तम् । विभाषा वृक्षमृगादीनां प्राप्ते ऽप्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते कथं चाप्राप्ते कथं चोभयत्र । जातिरप्राणिनामिति वा

---

न्तरपक्ष आश्रितः । उभादुदात्त इत्यत्र तयस्येति नानुवर्तते तदा प्रत्ययान्तरमयज् भवति । तैलमात्रेति । प्रत्याहारे सति चकारेण मात्रशब्दो न विशेषित इति द्वयासश्शुवसिभसिभ्यश्चान्निति अन्नतादपि मात्रशब्दान्ङीप्प्रसङ्गः । सदृशस्यापीति । प्रमाणे वर्तमानात्प्रमेये यो मात्रज् विहितः स प्रत्याहारेण गृह्यते इत्यर्थः । ऊर्णोतेर्विभाषेति । विभाषोर्णोरिति सूत्रं यद्यसंयोगाल्लिट् किदित्यत्रानुवर्तते ऊर्णुश्चसंयोगान्त एवेत्यसंयोगग्रहणाद्वाक्यभेदेनोर्णोः परस्येडादेर्लिटो नित्यं कित्त्वं प्राप्तं विकल्प्यते ततः प्राप्तविभाषा । इड्डुपजीवनार्थं तु स्थानान्तरे सूत्रं पठितम् । अथ तत्र सूत्रं नानुवर्तते परविप्रतिषेधश्च ततो ऽप्राप्तविभाषा । अथ पूर्वविप्रतिषेधस्तदोभयत्रेति संशयः । अन्यद्धीति । व्यपदेशातिदेशोयमिति कित्त्वङित्त्वयोर्भेदः । एकं चेदिति । कार्यातिदेशपक्षे गुणनिषेधस्य कार्यस्यैकत्वादेकत्वमनयोरित्यर्थः । प्रौर्णुवीति । लङुत्तमैकवचनम् । सार्वधातुकमपिदित्यत्र यदि विभाषोर्णोरित्येतद्वाक्यभेदेन संबध्यते ततः प्राप्तविभाषा । अथासम्बन्धः पूर्वविप्रतिषेधश्च तत उभयत्रविभाषा । परविप्रतिषेधे त्वप्राप्ते । विभाषोपयमनइति यदा

---

दिक् ॥ भाष्ये ( तेन वेत्यादि ) तेन नित्ये प्राप्ते वा अन्यत्राप्राप्ते वेत्यन्वयः ॥ प्रत्ययान्तरेति । एवञ्चोभयथाप्ये ऽस्याप्राप्तेरप्राप्तविभाषात्वमेवेति भावः । न विशेषितइति । न प्रत्याहारघटक इतरव्यावर्त्तकः समुदायानुबन्धस्यावयवानुबन्धत्वाभावादिति भावः ॥ प्रमाणे इति । सदृशस्यैव तत्संनिवेशो सत्त्वादिति भावः । भाष्ये ( ऊर्णोतेर्विभाषेति ) । ऊर्णोर्धातोः कित्त्वविषये विभाषेत्यर्थः । वाक्यभेदेनेत्यस्य विकल्प्यत इत्यनेनान्वयः । इदं सर्वं ङित्त्वकित्त्वयोरैक्याभिमानेन । किमर्थं तर्हि पुरस्तात्कृतमत आह इड्डुपेति । शङ्कते भाष्ये ( अन्यद्धीति ) । तद्व्याख्याभेदइति । तथा च त्रिसंशयत्वानुपपत्तिरिति भावः । गुणनिषेधस्येति । यद्यपि ङित्कित्कार्याणि भिन्नानि बहूनि सन्ति तथाप्यूर्णोतावन्यासंभव इति भावः ॥ इत्यत्रेति । इत्यत्रैवेत्यर्थः ॥ वाक्यभेदेनेति । पृथक्पाठसामर्थ्यादिति भावः । परविप्रतिषेधे त्विति । विज इडित्यतो ऽर्थाधिकारादचेडागम एव गृह्यत इति पक्षे त्वित्यपि बोध्यम् । यमो गन्धने विभाषोपयमने इत्येते सिचः कित्त्वविधायके । यमेति । गन्धनं सूचनम् । उपयमनं स्वीकारः । गन्धनाङ्गमिति बहुव्रीहिः । तत्र गन्धनपूर्वके स्वीकरणे यदि कित्त्वविकल्पः ततः प्राप्तविभाषेत्यर्थः । परभूतासु वीपजनेति भिन्नासु अप्राप्तविभाषासु पूर्वविष-

नित्ये प्राप्ते ऽन्यत्र वा ऽप्राप्ते उभयत्र वेति । अप्राप्ते जातिरप्राणिनामिति निवृत्तम् । उषविदजागृभ्यो न्यतरस्याम् । प्राप्ते ऽप्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते कथं चाप्राप्ते कथं चोभयत्र । प्रत्ययान्तादिति वा नित्ये प्राप्ते ऽन्यत्र वा ऽप्राप्ते उभयत्र वेति । अप्राप्ते प्रत्ययान्ता धात्वन्तराणि दीपादीनां विभाषा । प्राप्ते अप्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते कथं चाप्राप्ते कथं चोभयत्र । भावकर्मणोरिति वा नित्ये प्राप्ते ऽन्यत्र वा ऽप्राप्ते उभयत्र वेति । अप्राप्ते कर्तरीति हि वर्तते । एवमपि संदेहः । न्याय्ये वा कर्तरि वेति । नास्ति संदेहः । सकर्मकस्य कर्ता कर्मवद्भवति । अकर्मकाश्च दीपादयः । अकर्मका अपि वै सोपसर्गाः सकर्मका भवन्ति । कर्मापदिष्टा विधयाः कर्मस्थभावकानां कर्मस्थक्रियाणां च भवन्ति । कर्तृस्थभावकाश्च दीपादयः । विभाषाग्रे प्रथमपूर्वेषु । प्राप्ते ऽप्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते कथं च अप्राप्ते कथं चोभयत्र । आभीक्ष्ण्यइति वा नित्ये प्राप्ते अन्यत्र वाप्राप्ते उभयत्र वेति । अप्राप्ते आभीक्ष्ण्यइति निवृत्तम् । तृन्नादीनां विभाषा । प्राप्तेऽप्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते कथं

---

गन्धनाङ्गमुपयमनं तत्र गृह्यते तदा प्राप्ते पूर्वविप्रतिषेधे त्वप्राप्ते परविप्रतिषेधे तु उभयत्र वेति संदेहः । जातिरिति । चर्मादिमयास्तदा मृगादयो ग्राह्याः । निवृत्तमिति । तन्निवृत्तौ च गौणत्वाच्चर्मादिमयानामग्रहणम् । प्रत्ययान्तादिति वेति । कथं पुनः प्रत्ययान्ताः शब्दाः रूपान्तरयुक्ता उषादिव्यपदेशं लभ्यन्ते । उच्यते । सनाद्यन्ता धातव इत्यस्य यदा ऽयमर्थो व्याख्यायते । धातवः सनाद्यन्ता भवन्ति धातूनामन्तावयवाः सनादयो भवन्ति । यथा समासान्ताष्टजादयस्तदा पूर्वोक्तदोषाभाव इति भावः । प्रत्ययान्ता इति । सनाद्यन्ता धातव इत्ययं योगः संज्ञासंज्ञिसंबन्धार्थ इति भावः । भावकर्मणोरिति वेति । चिण् भावकर्मणोरित्यत्र सूत्रे यदि दीपजनेत्येतत्सूत्रमनुवर्त्य वाक्यभेदेन संबन्धः क्रियते पृथक्पाठसामर्थ्यात्तदा प्राप्तविभाषा । अथ नानुवर्तते परविप्रतिषेधश्च तदा ऽप्राप्तविभाषा पूर्वविप्रतिषेधे तूभयत्रविभाषेति संशयः । अकर्मकाश्चेति । यद्यपि बुधिः सकर्मकस्तथापि एकपरिहारोपन्यासार्थमविशेषेणतदुक्तम् । अर्थान्तरवृत्तित्वादनुभवतिवदिति भावः । कर्तृस्थभावकाश्चेति । अचः कर्तृयकीत्यत्र जायते स्वयमेवेत्युदाहृतम् । तस्य ण्यर्थवृत्तित्वात्कर्मस्थभावकत्वमिति नास्ति तेनास्य

---

यनिवृत्तिः पूर्वविप्रतिषेधाङ्गीकारश्चाप्राप्तविभाषात्वे बीजमिति बोध्यम् । वृत्तिसर्गेत्यात्मनेपदविधायकम् । ननु मृगादीनां प्राणित्वादप्राणिनामिति नित्ये प्राप्ते इत्ययुक्तं मृगादिविषये एव च त्रिसंशयस्मादत आह चर्मादीति । प्रत्ययान्ताइति । प्रत्ययः सनादिरन्तावयवो येषामित्यर्थः । उषादयश्च तदेकदेशा न प्रत्ययान्तरूपा इति भावः । संज्ञासंज्ञिसबन्धार्थइति । अत एव क्यजाद्यन्तानां संज्ञासिद्धिरावृत्तौ तु गौरवमिति भावः । के चित्तु प्रत्ययान्तादित्यनुवृत्तौ उषादिभ्यः कर्तृक्विबन्तप्रकृतिकाचारक्विबन्तेभ्य एव स्यादिति प्राप्तविभाषा तन्निवृत्तौ पूर्वविप्रतिषेधो ऽप्राप्तविभाषा निवृत्तौ परविप्रतिषेधे उभयत्रेति भाष्याशयः ॥ प्रत्ययान्ता धात्वन्तराणीति । अस्यायं भावः । हलन्तेभ्य आचारक्विपो ऽनभिधानमेवेतरप्रत्ययान्तास्तु नोषादय इत्यप्राप्तविभाषात्वमेवेति वदन्ति । एकपरिहारः कर्मस्थभावकत्वाभावरूपः । ननु कर्तरि इत्यनुवृत्तिर्व्यर्था । कर्मणि भावे कर्मकर्तरि च परत्वाच्चिण्भावकर्मणोरित्यस्य प्रवृत्तेरिति चेन्न । विप्रतिषेधलब्धार्थस्यैव स्फुटत्वाय अनुवृत्त्यप्रदर्शनादिति दिक् । तृन्नादीनामीति । आक्रोशे च संज्ञायां, विभाषा तृन्नतीक्ष्ण

चाऽप्राप्ते कथं चोभयत्र। आक्रोशइति वा नित्ये प्राप्ते ऽन्यत्र वाप्राप्ते उभयत्र वेति। अप्राप्ते आक्रोशइति निवृत्तम्। एकहलादौ पूरयितव्ये ऽन्यतरस्याम्। प्राप्ते ऽप्राप्ते उभयत्र वेति संदेहः। कथं च प्राप्ते कथं चाप्राप्ते कथं चोभयत्र। उदकस्योदः संज्ञायामिति वा नित्ये प्राप्ते ऽन्यत्र वा अप्राप्ते उभयत्र वेति। अप्राप्ते संज्ञायामिति निवृत्तम्। स्वादेरिञि, पदान्तस्यान्यतरस्याम्। प्राप्ते ऽप्राप्ते उभयत्र वेति संदेहः। कथं च प्राप्ते कथं चा ऽप्राप्ते कथं चोभयत्र। इञीति वा नित्ये प्राप्ते ऽन्यत्र वा प्राप्ते उभयत्र वेति। अप्राप्ते इञीति निवृत्तम्। सपूर्वायाः प्रथमाया विभाषा। प्राप्ते अप्राप्ते उभयत्र वेति संदेहः। कथं च प्राप्ते कथं चाऽप्राप्ते कथं चोभयत्र। चादिभिर्योग इति वा नित्ये प्राप्ते अन्यत्र वा ऽप्राप्ते उभयत्र वेति। अप्राप्ते चादिभिर्योग इति निवृत्तम्। ग्रो यङि, अचि विभाषा। प्राप्ते ऽप्राप्ते उभयत्र वेति संदेहः। कथं च प्राप्ते कथं चाऽप्राप्ते कथं चोभयत्र। यङीति वा नित्ये प्राप्ते ऽन्यत्र वा अप्राप्ते उभयत्र वेति। अप्राप्ते यङीति निवृत्तम्। प्राप्ते च * इत उत्तरं या विभाषा अनुक्रमिष्यामः प्राप्ते ता द्रष्टव्याः त्रिसंशयास्तु भवन्ति। प्राप्ते ऽप्राप्ते उभयत्र वेति। विभाषा विप्रलापे। प्राप्ते ऽप्राप्ते उभयत्र वेति संदेहः। कथं च प्राप्ते कथं चाप्राप्ते कथं चोभयत्र। व्यक्तवाचामिति वा नित्ये प्राप्ते ऽन्यत्र वा प्राप्ते उभयत्र वेति। प्राप्ते व्यक्तवाचामिति हि वर्तते। विभाषोपपदेन प्रतीयमाने। प्राप्ते ऽप्राप्ते उभयत्र वेति

---

विरोधः। आभीक्ष्ण्यइति निवृत्तमिति। पूर्वविप्रतिषेधश्चेति भावः। तृणादीनामिति। आक्रोशइत्यत्र यद्यच्कौ इति नानुवर्तेते ततोयं संशयः। एकहलादाविति। पूरयितव्यस्य चास्ति संज्ञा उदपानमिति। चादिभिरिति। प्रतिषेधस्याप्राप्तविभाषा स्याप्यते। विधेस्तु प्राप्तविभाषैव। यङीति वेति यङ्लुकि कृते अजादिः परः संभवति। निजेगिलइत्यत्र पश्चादचि कृते यङोचि चेति लुक्। प्राप्ते चेति। प्रकृतानुवृत्त्या प्राप्तविभाषा व्यवतिष्ठते। अन्यत्र वेति 'विप्रवदन्ति शकुनय इत्यत्र पूर्वविप्रतिषेधश्च यदीति भावः। विभाषोपपदेन इति। कर्त्रभिप्राय क्रियाफलविषये आत्मनेपदं भवतीत्येवं प्राप्तविभाषा व्यवतिष्ठते। अथ तु तदर्थद्योतनायात्मनेपदं क्रियते तदोपपदेनैव द्योतितत्वादप्राप्तविभाषा

---

शान्यादिष्विति सूत्रे इत्यर्थः। यद्यच्काविति। अच्का न शक्याविस्यतः तदनुवृत्तौ तु निःसन्देहमप्राप्तविभाषेति भावः। एतद्भाष्यविरोधाच्च तत्राच्काविस्यनुवृत्तिपरा ग्रन्था अयुक्ता एवेति तात्पर्यम्॥ यङ्लुकीति। अचि विभाषेत्यत्र यङीति वर्तते। यद्योभयं यङजाद्योरव्यवहितपरत्वासंभवात् श्रुतस्याचीत्यस्य परविशेषणत्वं यङीति विषयसप्तमी अचि परे यङ्विषये रेफस्य लत्वमित्यर्थः। तत्र विभाषारम्भसामर्थ्याद् यङ्लुकः पूर्वं ग्रो यङीति न भवति। न लुमतेति निषेधानित्यत्वेन पृथग्लोपेन स्थानिवद्भावेन वा यङ्विषय इति प्राप्तविभाषात्वोपपत्तिः। यङीत्येतन्निवृत्तौ विभाषाया असिद्धत्वादेव नित्यं लत्वम्। समुदायलुक्यपि न लुमतेति निषेधान्न तत्प्राप्तिरित्यप्राप्तविभाषात्वोपपत्तिः। उभयत्र विभाषात्वे त्वियमुपपत्तिः। ग्रो यङीत्येतस्मात् प्रकरणे प्रकरणमसिद्धमिति विभाषाया असिद्धत्वाभावः। लुकः पूर्वं यङीत्यस्य न प्रवृत्तिः। अन्तरङ्गानपीति न्यायेन लुकस्तत्प्रयोजकाच्प्रत्ययस्य च पूर्वं प्रवृतेः न च लुकि न लुमतेति निषेध यङ्परत्वाभावाद् ग्रो यङीत्यस्याप्राप्ते कथमुभयत्र विभाषत्वमिति वाच्यम्। वक्तोक्तत्वादिति दिक्। अथ त्विति।

संदेहः । कथं च प्राप्ते कथं चाप्राप्ते कथं चोभयत्र । स्वरितञित इति वा नित्ये प्राप्ते ऽन्यत्र वाप्राप्ते उभयत्र वेति । प्राप्ते स्वरितञित इति हि वर्तते । तिरोन्तर्द्धौ, विभाषा कृञि । प्राप्ते अप्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते कथं चाऽप्राप्ते कथं चोभयत्र । अन्तर्द्धाविति वा नित्ये प्राप्ते अन्यत्र वाऽप्राप्ते उभयत्र वेति । प्राप्तेऽन्तर्द्धाविति हि वर्तते । अधिरीश्वरे, विभाषा कृञि । प्राप्ते अप्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते कथं चाप्राप्ते कथं चोभयत्र । अधिरीश्वर इति वा नित्ये प्राप्ते ऽन्यत्र वा प्राप्ते उभयत्र वेति । प्राप्ते ऽधिरीश्वरइति वर्तते । दिवस्तदर्थस्य, विभाषोपसर्गे । प्राप्ते ऽप्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते कथं वा अप्राप्ते कथं वोभयत्र । तदर्थस्येति वा नित्ये प्राप्ते अन्यत्र वाप्राप्ते उभयत्र वेति । प्राप्ते तदर्थस्येति वर्तते । उभयत्र च । इत उत्तरं या विभाषा अनुक्रमिष्यामः । उभयत्र ता द्रष्टव्याः । त्रिसंशयास्तु भवन्ति । प्राप्ते ऽप्राप्ते उभयत्र वेति । हृक्रोरन्यतरस्याम् । प्राते ऽप्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते कथं वा ऽप्राप्ते कथं वोभयत्र । गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णाविति वा नित्ये प्राप्ते ऽन्यत्र वाप्राप्ते उभयत्र वेति । उभयत्र प्राप्ते तावत् । अभ्यवहारयति सैन्धवान् अभ्यवहारयति सैन्धवैः । विकारयति सैन्धवान् विकारयति सैन्धवैः । अप्राप्ते हरति भारं देवदत्तः । हारयाति भारं देवदत्तम् । हारयति भारं देवदत्तेन । करोति कटं देवदत्तः । कारयति कटं देवदत्तम् । कारयति कटं देवदत्तेन । न यदि । विभाषा साकाङ्क्षे । प्राप्ते ऽप्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते कथं वाप्राप्ते कथं वोभयत्र । यदीति वा नित्ये प्राप्ते ऽन्यत्र वा ऽप्राप्ते उभयत्र वेति । उभयत्र प्राप्ते तावत् । अभिजानासि देवदत्त यत्कश्मीरेषु वत्स्यामः । यत्कश्मीरेष्ववसाम । यत्तत्रौदनं भोक्ष्यामहे । यत्तत्रौदनमभुञ्ज्महि । अप्राप्ते । अभिजानासि देवदत्त यत्कश्मीरान् गमिष्यामः । कश्मीरानगच्छाम तत्रौदनं भोक्ष्यामहे तत्रौदनमभुञ्ज्महि । विभाषा श्वेः । प्राप्तेऽ प्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते

---

स्यात् । गतिबुद्धीति । तत्र विपूर्वो हरतिर्गत्यर्थो ऽभ्यवपूर्वः प्रत्यवसानार्थः । करोतिः क चिदकर्मको यथा विकुर्वते सैन्धवा इति । यदीति वेति । प्रतिषेधे प्राप्ते इत्यर्थः । लट्

---

तथा च स पक्ष एतद्भाष्यविरुद्ध इति भावः । वस्तुतो द्योतकत्वपक्षे ऽपि व्यतिलुनीते गार्ग्यायणीत्यादौ द्योतकसमुच्चयस्य द्वावित्यादौ द्योतकवाचकसमुच्चयस्य च दृष्टत्वेनात्राप्याभ्यामनेपदप्राप्तिरस्तीति प्राप्तविभाषा सूपपादेति चिन्त्यमेतत् ॥ भाष्ये ( गतिबुद्धीति.नित्ये प्राप्ते इति ) । नियमशास्त्राणां विधिमुखेन प्रवृत्तिरिति भावः । तत्र विपूर्व इति विहरति ग्राममित्यादौ गच्छतीत्यर्थावगमादिति भावः । भाष्ये ( ऽप्राप्ते हरति भारमिति ) । ननु गत्यर्थत्वादस्यापि प्राप्तिरस्त्येवेति चेन्न । प्रापणार्थत्वेपि गत्यर्थत्वाभावस्य न गतीति

कथं वा अप्राप्ते कथं वोभयत्र । क्तीति वा नित्ये प्राप्ते ऽन्यत्र वा ऽप्राप्ते उभयत्र वेति । उभयत्र प्राप्ते तावत् । शुशुवतुः, शुशुवुः । शिश्वियतुः, शिश्वियुः । अप्राप्ते । शुशाव, शुशविथ, शिश्वाय, शिश्वयिथ । विभाषा संघुषास्वानाम् । संपूर्वाद् घुषेः । प्राप्ते ऽप्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते कथं वाऽप्राप्ते कथं वोभयत्र । घुषिरविशब्दन इति वा नित्ये प्राप्ते ऽन्यत्र वा संघुषिता वा उभयत्र वेति । उभयत्र प्राप्ते तावत् । संघुष्टा रज्जुः संघुषिता रज्जुः। अप्राप्ते संघुष्टं वाक्यमाह संघुषितं वाक्यमाह। आङ्पूर्वात्स्वनेः प्राप्ते ऽन्यत्र वाप्राप्ते उभयत्र वेति संदेहः । कथं च प्राप्ते कथं वाऽप्राप्ते कथं वोभयत्र । मनसीति वा नित्ये प्राप्ते ऽन्यत्र वा अप्राप्ते उभयत्र वेति । उभयत्र प्राप्ते तावत् । आस्वान्तं मनः । आस्वनितं मनः । अप्राप्ते। आस्वनितो देवदत्तः आस्वान्तो देवदत्त इति ॥

॥ इति महाभाष्ये षष्ठमाह्निकम् ॥

**इग्यणः संप्रसारणम्** ॥ ४५ ॥ किमियं वाक्यस्य संप्रसारणसंज्ञा क्रियते इग्यण इत्येतद्वाक्यं संप्रसारणसंज्ञं भवतीति । आहोस्विद्वर्णस्य इग्यो यणः स्थाने वर्णः स संप्रसारणसंज्ञो भवतीति । कश्चात्र विशेषः । संप्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिः * । संप्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिर्नसिध्यति । संप्रसारणात्परः पूर्वो भवतीति संप्रसारणस्य दीर्घो भवतीति । नहि वाक्यस्य

---

तु यदि प्रतिषिद्धः । दैवयज्ञीत्यादि न विचारितं तस्माद्दिङ्मात्रप्रदर्शनार्थं कृतम् ॥ ४४ ॥

॥ इति भाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥

इग्यणः संप्रसारणम् ॥ पक्षद्वयस्यापि लिङ्गदर्शनाद्युगपच्चोभयो संज्ञित्वस्यैकस्मिन् वाक्ये ऽनुपादानादेकतरपक्षाश्रयणे सर्वकार्यासिद्धिप्रसङ्गात् प्रश्नः । किमियमिति । वाक्यशब्देन वाक्यार्थ उच्यते । इग्यण इत्यत्र भवतीत्यध्याहारादिग्यणो भवतीति योऽयं वाक्यार्थस्तस्येयं संज्ञेत्यर्थः । अथवा वाक्यस्यैवेयं संज्ञा तत्प्रतिपादितं च वाक्यं स्वार्थमपि प्रतिपादयति । यणः स्थाने य इग्वर्णः स संप्रसारणसंज्ञो भवतीति वर्णसं-

---

सूत्रे वक्ष्यमाणत्वात् ॥ दैवयज्ञीत्यादीति । अनार्षयोरित्यनुवृत्त्यादिना ऽत्रापि सन्देहसंभव इति भावः । आदिना विभाषा पुरुषे इति ॥ ४४ ॥ इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते भाष्यप्रदीपोद्योते प्रथमस्य प्रथमे पादे षष्ठमाह्निकम् ॥ ६ ॥

इग्यणः ॥ लिङ्गेति । प्रदेशेषु प्रथमानिर्देशो वाक्यसंज्ञाया अन्यविभक्तिनिर्देशश्च वर्णसंज्ञाया लिङ्गमिति भावः । ननु तर्हि लिङ्गादुभयोरपि संज्ञित्वमस्त्वित्यत आह युगपच्चेति । अनेकस्यार्थस्यैकशब्देन युगपदनुपस्थितेरिति भावः । ननु वाक्यस्य संज्ञायां प्रदेशेषु तस्यैव विधानं स्यादत आह वाक्यार्थ इति । पूर्वसूत्रादितीत्यनुवर्त्य इग्यण इति संप्रसारणसंज्ञमित्यर्थादिति भावः । स्वं रूपमित्युक्तेः शास्त्रे शब्दपरत्वस्यौत्सर्गिकत्वेनेति समभिव्याहारं विना ऽर्थपरत्वासंभवादिति बोध्यम् । ननु यण्स्थानिकत्वोपलक्षित इगेव वाक्यार्थ इति वर्णपक्षादस्य को भेद इत्यत आह भवतीति । एवञ्चेग्भवनं वाक्यार्थ इति भावः । तत्प्रतिपादितमिति । संज्ञयोपस्थितस्यानर्थकत्वे तदर्थानुपयोगे वा संज्ञोपस्थितस्वरूपस्यैवोपादानम् । नचैतदुभयमप्यत्रेति भावः । प्रतिपादयतीति । व्यङः संप्रसारणमित्यादौ । उच्चारितस्यैव प्रत्यायकत्वमित्यणुदिद-

संप्रसारणसंज्ञायां सत्यामेष निर्देश उपपद्यते । नाप्येतयोः कार्ययोः संभवोऽस्ति । अस्तु तर्हि वर्णस्य । वर्णस्य संज्ञा चेन्निर्वृत्तिः *। वर्णस्य संज्ञा चेन्निर्वृत्तिर्न सिध्यति ष्यङः संप्रसारणमिति । स एव हि तावदिग् दुर्लभो यस्य संज्ञा क्रियते । अथापि कथंचिल्लभ्येत केनासौ यणः स्थाने स्यात् । अनेन चैव ह्यसौ व्यवस्थाप्यते तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । विभक्तिविशेषे निर्देशस्तु ज्ञापकः उभयसंज्ञात्वस्य । यदयं विभक्तिविशेषैर्निर्देशं करोति संप्रसारणात्परः पूर्वो भवति संप्रसारणस्य दीर्घो भवति ष्यङः संप्रसारणं भवति इति । तेन ज्ञायते उभयोः संज्ञा भवतीति । यत्तावदाह । संप्रसारणात्परः पूर्वो भवति संप्रसारणस्य दीर्घो भवतीति । तेन ज्ञायते वर्णस्य भवतीति । यदप्याह । ष्यङः संप्रसारणमिति तेन ज्ञायते वाक्यस्यापि संज्ञा भवतीति। अथवा पुनरस्तु वाक्यस्यैव । ननु चोक्तं संप्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिर्न सिध्यतीति।नैष दोषः।यथा काकाज्जातः काकः। श्येनाज्जातः श्येनः। एवं संप्रसारणाज्जातं संप्रसारणमिति । ( यत्सम्प्रसारणाज्जातं सम्प्रसारणं ) तस्मात्परः पूर्वो भवति तस्य दीर्घो भवतीति । अथवा दृश्यन्ते हि वाक्येषु वाक्यैक-

---

ज्ञापक्चः । वर्णविधिरिति । वर्णाश्रयो विधिर्दीर्घादिः । नहीति । वाक्यार्थेन पौर्वापर्याभावात्तस्य चासत्त्वभूतस्य स्थानित्वासंभवादित्यर्थः । दुर्लभ इति । कार्यपक्षे न लभ्यते नित्यपक्षे तु लभ्यत इति दुर्लभत्वमुक्तम् । केनासाविति । लोके इगेव नित्यं प्रयोगेऽस्ति तस्य तु यण्स्थानित्वं शास्त्रसमधिगम्यमित्यर्थः । भाविसंज्ञाविज्ञानं तु परिहारान्तराभिधानाय न तावदत्रोक्तम् । उभयसंज्ञात्वस्येति । उभयोः संज्ञा उभयसंज्ञा तस्या भाव उभयसंज्ञात्वम् । तत्र तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणेनोभयोः संज्ञा सिध्यति । यथा काकादिति । ननु काकत्वाभिसंबन्धात्काकः । अन्यत्र चोक्तम् । येनैवं हेतुनैकः काकस्तेनैवापरोऽपीति । नैष दोषः । यदाऽनुपजातजात्यभिव्यञ्जकसंस्थानविशेषः काको भवति निर्ज्ञातं च तस्य काकाज्जन्म भवति तदैतदुक्तम् । एवमिहापि

---

ति सूत्रस्थभाष्यविरुद्धमिदम् ॥ वर्णविधिरित्यस्य वर्णविषयविधानमित्यर्थे ऽसिद्धेरभावादाह वर्णाश्रय इति । संबन्धसामान्यषष्ठ्या समासः । विधिरिति । कर्मणि किरिति भावः । आदिना एकादेशः । वाक्यार्थेनेति । क्रियारूपेणेत्यर्थः । नाप्येतयोरिति भाष्यं व्याचष्टे । तस्य चेति । चोऽसंभवादित्युत्तरं योज्यः । भाष्ये ( एतयोःकार्ययोरिति ) । पूर्वरूपदीर्घयोरित्यर्थः । स एव तावन्नास्तीति वक्तव्ये दुर्लभत्वोक्तिरनुचितेत्यत आह कार्यपक्षे इति । अनेन भाष्येणातीतानागतयोरविद्यमानयोरप्रत्यासत्त्या शक्तिग्रहदौर्लभ्यमुक्तम् । निरूपितञ्चैतं मञ्जूषायां नामार्थवादे । नित्यपक्षे त्विति । अनेनाथापि कथञ्चिदित्यपि भाष्यं व्याख्यातम् ॥ शास्त्रेति । सितमित्यादौ यण्स्थानिकत्वाभावेन शास्त्रमात्रैकगम्यं तदित्यर्थः । शास्त्रगम्यत्वे चेतरेतराश्रयमेवेति भावः । भाष्ये ( केनासाविति ) । केन मानेन यणः स्थाने इति ज्ञातः स्यात् । अनेन संप्रसारणसंज्ञाविधायकेन शास्त्रेणासौ इग् यणः स्थाने स्थाप्यत इत्यर्थः । उभयोः संज्ञात्वमित्यर्थोऽसंभवी एकस्यैव संज्ञात्वादत आह उभयोः संज्ञेति । एकशेषश्च प्रतिपदमनेकमर्थमुद्दिश्यैकस्याः संज्ञाया एकवाक्यतयैव विधातुं शक्यत्वात्तत्रावृत्तेः क उपयोग इति चिन्त्यम् ॥ भाष्ये ( यथाकाकादिति ) । अज्ञात एव काकत्वे तज्जातत्वमात्रेण तथा व्यवहारवत्त्रापीत्यर्थः । तत्र शङ्कते । नन्विति । अन्यत्र । एको गोत्र इत्यत्र यवाद्रुपेति । न उपजातो जात्यभिव्यञ्जकः संस्थानविशेष आकारविशेषो यस्येत्यर्थः । कथं तर्हि. तथा

देशान् प्रयुञ्जानाः पदेषु च पदैकदेशान्। वाक्येषु तावद्वाक्यैकदेशान्। प्रविश पिण्डीं प्रविश तर्पणमिति। पदेषु पदैकदेशान्। देवदत्तो दत्तः सत्यभामा भामेति। एवमिहापि संप्रसारणनिर्वृत्तात्संप्रसारणनिर्वृत्तस्येति। एतस्य वाक्यस्यार्थे संप्रसारणात्संप्रसारणस्येत्येष वाक्यैकदेशः प्रयुज्यते। तेन निर्वृत्तस्य विधिं विज्ञास्यामः संप्रसारणनिर्वृत्तात्संप्रसारणनिर्वृत्तस्येति। अथवा आहायं संप्रसारणात्परः पूर्वो भवति संप्रसारणस्य दीर्घो भवतीति। न च वाक्यस्य संप्रसारणसंज्ञायां सत्यामेष निर्देश उपपद्यते। नाप्येतयोः कार्ययोः संभवोऽस्तीति तत्र वचनाद्भविष्यति। अथवा पुनरस्तु वर्णस्य। ननु चोक्तं वर्णसंज्ञा चेन्निर्वृत्तिरिति। नैष दोषः। इतरेतराश्रयमात्रमेतच्चोदितम्। सर्वाणि चेतरेतराश्रयाण्येकत्वेन परिहृतानि। सिद्धं तु नित्यशब्दत्वादिति। नेदं तुल्यमन्यैरितरेतराश्रयैः। न हि तत्र किंचिदुच्यते अस्य स्थाने ये आकारैकारौकारा भाव्यन्ते ते वृद्धिसंज्ञा भवन्तीति। इह हि पुनरुच्यते इग्यो यणः स्थाने वर्णः स संप्रसारणसंज्ञो भवतीति। एवं तर्हि भाविनीयं संज्ञा विज्ञास्यते। तद्यथा कश्चित् कंचित् तन्तुवायमाह अस्य सूत्रस्य शाटकं वयेति स पश्यति यदि शाटको न वातव्यः। अथ वातव्यो न शाटकः। शाटको वातव्यश्चेति विप्रतिषिद्धम्। भाविनी खल्वस्य संज्ञा ऽभिप्रेता स मन्ये वातव्यो यस्मि-

---

संप्रसारणाज्जातत्वादुपचाराद्वर्णोऽपि तच्छब्दं लभते इति भावः। प्रविशेति। प्रवेशनक्रिया कर्म योग्यमाक्षिपति तत्र पिण्ड्यां प्रवेशासंभवाद् गृहप्रतिपत्तिः। एवं पिण्डीमिति कर्म योग्यां क्रियामाक्षिपद् भक्षणक्रियां प्रकरणवशात्प्रत्याययति। एवं संप्रसारणादित्येतन्निर्वृत्तार्थमाक्षेप्स्यतीत्यर्थः। यथाच पदैकदेशप्रयोगस्तथा सिद्धे शब्दार्थसंबन्धे इत्यत्र प्रतिपादितम्। अथवेति। यथा ब्राह्मणशतं भोज्यतामित्युक्ते सामर्थ्यात्संख्येया ब्राह्मणा भोज्यन्ते तथेहापि संप्रसारणादित्युक्ते वाक्यार्थेन पौर्वापर्याभावात्तत्फलस्य वर्णस्य प्रतीतिः। भाविनीति। ष्यङः संप्रसारणमिति विधिप्रदेशेषु भाविसंज्ञा-

---

व्यवहार इत्यत आह निर्ज्ञातमिति। एवञ्च तस्माज्जातत्वेनावगते तच्छब्दप्रयोगमुभयत्रापीति दृष्टान्तत्वोपपत्तिः। अन्ये तु काकाज्जातो यथा काकत्वाभिसंबन्धात्काक एवं संप्रसारणाज्जातोऽपि संप्रसारणत्वारोपात् संप्रसारणमिति भाष्यार्थमाहुः। वाक्येष्विति। स्वार्थबोधनाय वाक्येषु प्रयोक्तव्येष्वित्यर्थः॥ योग्या क्रिया दर्शनादिरपीत्यत आह प्रकरणेति। तत्तद्वाक्यस्य वाक्यार्थे शक्तिग्रहकाले तत्तदेकदेशस्यापि तत्तद्वाक्यार्थे शक्तिग्रहः। पदैकदेशस्य पदार्थ इवेति शक्त्यैव बोधः। पूर्वपरिहारे संप्रसारणपदस्य तज्जन्यवर्णे उपचारात्प्रयोगः। अत्र त्वेकदेशेनैव शक्त्या तदर्थप्रतिपत्तिरिति भेदः। तदाह आक्षेप्स्यतीति। आक्षेपोऽत्र बोधनमेव। भाष्ये ( इत्येतस्य वाक्यस्यार्थे इति )। अत्र वाक्यपदं पदसमुदायपरम्। इत्येतस्य इत्येतदर्थकस्य संप्रसारणादुत्पन्नो यत्तस्मादिति संप्रसारणस्य यत्कार्यं तस्येति च वाक्यस्यार्थे इत्यर्थः॥ पूर्वेभ्यः पक्षेभ्योऽस्य भेदमाह यथा ब्राह्मणेति। एवञ्च यथा तत्र सङ्ख्यान्वयः सङ्ख्येयद्वारा तथा प्रकृते स्वनिर्वृत्तद्वारेति भावः। तदेवाह तत्फलस्येति। यथा पितृनाम्ना सङ्कल्पितं द्रव्यं तस्यायोग्यत्वे तत्पुत्राय समर्प्यते तद्वदिति भावः। भाष्ये ( एकत्वेनेति )। साजात्यादेकत्वेन विशिष्टानि बुद्ध्या कृत्वेत्यर्थः। सर्वेषामेकत्वेनैकजातीयत्वेनैकपरिहारेण सर्वाणि परिहृतानीति भावः। नेदन्तुल्यमिति। नित्यशब्दत्वेऽपि यण्स्थानिकत्वस्य शास्त्रैकसमधिगम्यत्वादिति भावः। नेदन्तुल्यमिति। नित्यशब्दत्वेऽपि यण्स्थानिकत्वस्य शास्त्रैकसमधिगम्यत्वा-

न्नुते शाटक इत्येतद्भवतीति। एवमिहापि स यणः स्थाने भवति यस्याभिनिर्वृत्तस्य संप्रसारणमित्येषा संज्ञा भविष्यति। अथवा इजादियजादिप्रवृत्तिश्चैव हि लोके लक्ष्यते। यजाद्युपदेशात्तु इजादिनिवृत्तिः प्रसक्ता। प्रयुञ्जते च पुनर्लोका इष्टम् उप्तमिति ते मन्यामहे अस्य यणः स्थाने इममिकं प्रयुञ्जते इति। तत्र तस्या-साध्वभिमतस्य शास्त्रेण साधुत्वमन्वाख्यायते क्विति साधुर्भवति ङिति साधुर्भवतीति॥

आद्यन्तौ टकितौ॥ ४६॥ समासनिर्देशोऽयं तत्र न ज्ञायते क आदिः कोऽन्तः इति। तद्यथा। अजाविधनौ देवदत्तयज्ञदत्तावित्युक्ते तत्र न ज्ञायते कस्याजा धनं कस्याऽवय इति। यद्यपि तावल्लोक एष दृष्टान्तः दृष्टान्तस्यापि तु पुरुषारम्भो निवर्तको भवति। अस्ति वेह कश्चित्पुरुषारम्भः। अस्तीत्याह। कः संख्यातानुदेशो नाम। कौ पुनष्टकितावाद्यन्तौ भवतः। आगमावित्याह। युक्तं

---

विज्ञानमित्यर्थः। सिद्धं तु नित्यशब्दत्वादित्यतःसमर्थनार्थमाह अथवेति। बुद्धिविपरिणाममात्रं स्थान्यादेशभाव इत्यर्थः। असाध्वभिमतस्येति। प्राक् संप्रसारणशास्त्रादिति भावः। यथासंख्यसंबन्धाद्दुहितरामिति इकारस्य संप्रसारणसंज्ञा न भवति। दिव उदित्युत्वे यणादेशे कृते हल इति दीर्घत्वं तपरकरणान्न भवति। द्युभ्यामिति। अक्षद्युवावित्यत्र संप्रसारणाच्चेति पूर्वैकादेशो न भवति अचः पश्चात्सन्निधानात्। अथवा वार्णादाङ्गस्य बलीयस्त्वात्॥ ४५॥

आद्यन्तौ॥ लोकव्यवहारादत्र क्रमव्यवस्था न सिध्यति अपि तु शास्त्रेणैवेति प्रदर्शनाय पूर्वपक्षः। समासनिर्देशोऽयमिति। अभिन्नस्याऽर्थस्य समासेन प्रतिपादनादित्यर्थः। यद्यपि देवदत्तस्य यज्ञदत्तस्य चाऽजा अवयश्च धनमिति वाक्येपि क्रमव्यवस्था नास्ति तथापि समासे सुतरां नास्ति इति प्रतिपादयितुं समासनिर्देश इत्युक्तम्।

---

दिति भावः। भाविसंज्ञेति। संप्रसारणादिपदस्य तत्त्वेन व्यवहरिष्यमाणे लक्षणेति भावः। अयं समाधिर्वृद्ध्यादिविषयेपि बोध्यः॥ बुद्धीति। तदयं सूत्रार्थः। यणः प्रयोगे प्राप्ते इक् प्रयुज्यमानः संप्रसारणसंज्ञक इति॥ तज्ज्ञानञ्च यजाद्युपदेशज्ञानमात्रेण वचिस्वपीत्येतज्ज्ञानं विनापि जातमिति नान्योन्याश्रय इत्यर्थः। वचिस्वपीत्यादिश्चायमर्थः। एतत्संबन्धियण्प्रयोगे प्राप्ते इक्प्रयुज्यमानः साधुरितीति भावः। असाधोः साधुत्वं ब्रह्मणाप्युपपादयितुमशक्यमत आह प्रागिति। एतदेव ध्वनयितुमभिमतस्येत्युक्तम्। ननु दुहेर्लङि उत्तमपुरुषे लस्येटि तस्य संप्रसारणत्वे ऽदुहितरामित्यादौ हल इति दीर्घः स्यादत आह यथासङ्ख्येति। एवं हि यथासङ्ख्यार्थं ऌकारोपदेशस्यावश्यकत्वे ऌकारोपदेशः किमर्थ इति ऋऌक्सूत्रस्थभाष्यासङ्गतिरिति चिन्त्यमिदम्। तस्मात् संप्रसारणस्येत्यादौ तद्भावितपरत्वाश्रयणान्न दोषः। ध्वनितञ्चेदं वाक्यसंज्ञापक्षस्थापने वाक्यैकदेशन्यायं वदता भगवता। एतेन द्युभ्यां अक्षद्युवावित्यपि सिद्धम्। अचः पश्चादिति। समानाङ्गग्रहणस्य करिष्यमाणत्वादौकारस्य चानङ्गस्थत्वादित्यर्थः। तत्प्रत्याख्याने त्वाह वार्णेति। आङ्गसूत्रङ् ४६

आद्यन्तौ॥ अपि त्विति। एतदर्थमेव स्थानाख्यप्रमाणेन सिद्धेऽपि यथासंख्यसूत्रमावश्यकमिति भावः। अभिन्नस्य अपृथग्भूतस्य। सुतरामिति। यत्र न साहित्यस्य नियमेन प्रतीतिः पृथगुपस्थितिश्च तत्रापि चेन्न क्रमव्यवस्था किमु वक्तव्यं साहित्यप्रतीतावपृथगुपस्थितौ चेत्यर्थः। तथान्वयबोधे तत्तत्पदार्थानां सर्वसाधारणव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनोपस्थितिस्तन्त्रमिति तात्पर्यम्। अन्तो निमन-

पुनर्यन्निसेषु नाम शब्देषु आगमशासनं स्यात्। न नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः। आगमश्च नामाऽपूर्वः शब्दोपजनः। अथ युक्तं यन्नित्येषु शब्देष्वादेशाः स्युः। वाढं युक्तम्। शब्दान्तरैरिह भवितव्यम्। तत्र शब्दान्तरात् शब्दान्तरस्य प्रतिपत्तिर्युक्ता। आदेशास्तर्हीमे भविष्यन्ति। अनागमकानां सागमकाः। तत्कथम्। संज्ञाधिकारो ऽयम्। आद्यन्तौ चेह संकीर्त्येते टकारककाराविताबुदाह्रियेते तत्राद्यन्तयोष्टकारककारावितौ संज्ञे भविष्यतः। तत्रार्द्धधातुकस्येड्वलादेरित्युपस्थितमिदं भवति आदिरिति तेनाकारादिरादेशो भविष्यति। एतावदिह सूत्रमिडिति। कथं पुनरीयता सूत्रेण इकारादिरादेशो लभ्यः। लभ्य इत्याह। कथम्। बहुव्रीहिनिर्देशात्। बहुव्रीहिनिर्देशो ऽयम्। इकार आदिरस्येति। यद्यपि तावदत्रैतच्छक्यते वक्तुम्। इह तु कथम्। लुङ्लङ्लृङ्क्ष्वडुदात्त इति। अत्राशक्यमुदात्तग्रहणेनाकारो विशेषयितुम्। तत्र को दोषः। अङ्गस्योदात्तत्वं प्रसज्येत। नैष दोषः। त्रिपदो ऽयं बहुव्रीहिः। तत्र वाक्यएवोदात्तग्रहणेनाकारो विशेष्यते। अकार उदात्त आदिर-

---

यद्यपीति। दर्शनं दृष्टं तस्यान्तो निश्चयः। यद्यपि लोके एतद्दर्शनमित्यर्थः। संज्ञाधिकारो ऽयमिति। यद्येवं संज्ञा संज्ञिप्रत्यायनार्था संज्ञिनं प्रत्याय्य स्वयमेव निवर्तत इति किमिद्ग्रहणेन टकावित्येवास्तु। नैष दोषः। इत्संज्ञत्वेन देशविशेष उपलक्ष्यते। तेनेत्संज्ञकस्य यो देशस्तद्देशावस्थितौ टकौ संज्ञे भवत इति आलजाटचावित्याटच्प्रत्यये टकारः संज्ञा न भवति। तत्रेड्ग्रहणेनेकारादिः शब्दो गृह्यते स्थाने ऽन्तरतमश्चादेशो भवतीति तव्यस्य इतव्यो भवतीति सिद्धमिष्टम। अङ्गस्योदात्तत्वमिति। तद्यलो ऽन्त्यस्येत्यन्त्यस्य स्यात्। त्रिपदो ऽयमिति। विशेषणस्याप्युदात्तस्य सौत्रत्वान्निर्देशस्य परनिपातः। यत्र तर्हीति। तत्र ह्युदात्तग्रहणमेवानुवर्ततइत्यशक्यो बहुव्रीहिराश्रयितु-

---

इति। दर्शनस्यावसानं निश्चये तस्याकाङ्क्षाभावाद्भवतीति दृष्टान्तशब्देन निश्चय उच्यते इत्यर्थः। एतद्दर्शनमिति। निश्चय इत्यर्थः। एवञ्च यथासङ्ख्यान्वयाभिप्रायेणेदृशप्रयोगो लोके ऽसाधुरिति भावः। भाष्ये (ऽस्तिवेति) प्रश्नः। चपाठस्त्वयुक्तस्तस्य प्रश्नेऽयुक्तत्वात्। भाष्ये (कौ पुनरिति) यौ टकितावाद्यन्तौ तौ किमागमौ उतादेशौ इति प्रश्नः॥ आगमावित्याहेति। आद्यन्तपदसत्त्वादिति भावः। नित्येष्विति। वर्णास्तद्घटिताः प्रयोगेषु श्रूयमाणाः शब्दाश्च व्याकरणकार्या आकाशवन्नित्या इति मत इदम्। तत्र शब्दान्तरादिति। प्रसन्नां शब्दान्तरबुद्धिं विहायेत्यर्थः। अनागमकानामित्यादेर्यद्यपि घुसंज्ञासूत्रे आशय उक्त एवं तथापि तं विस्मृत्य तत्कथमिति प्रश्ने एकदेशी साहचर्यादस्य संज्ञासूत्रत्वेन तदुपपत्तिमाह संज्ञाधिकारोयमिति। तत्र शङ्कते। यद्येवमिति। उपलक्ष्यतइति। एवञ्चानयोरित्वमेव नेति भावः। आटजिति। यद्यपि प्रत्ययविधौ नास्य प्रवृत्तिः। षष्ठीत्यपकर्षणात्। अत एव टा, टिटन्, ऐकागारिकङित्यादौ नास्य प्रवृत्तिः। तथापि टुकः पर्यायेणाद्यन्तता स्यादिति दोष इति बोध्यम्। आटश्चेत्यादिभिस्तु टकारार्थादित्वोपलक्षितोकाराद्यनुवादेन वृद्ध्यादिविधानम्। भाष्ये (सङ्कीर्त्येते) प्रथमत उच्चार्येते। उदाह्रियेते। पश्चादुच्चार्येते इत्यर्थः। अन्तरतमइति। अर्थतः श्रुतितश्चेति भावः॥ ननु प्रथमातिक्रमे कारणाभावादनुदात्तत्वेनेष्टसिद्धिरत आह तच्चेति। भाष्ये (तत्र वाक्यएवेति)। त्रिपदे वाक्यएवेत्यर्थः। एवः प्रसिद्धौ। एवञ्च तत्समानार्थकप्रवृत्तावप्यकारविशेष

स्येति । यत्र तर्ह्यनुवृत्त्यैतद्भवति आङजादीनामिति । वक्ष्यत्येतत् । अजादीनामटा सिद्धमिति । अथवा यत्तावदयं सामान्येनोपदेष्टुं शक्नोति तत्तावदुपदिशति प्रकृतिं ततो वलाद्यार्द्धधातुकं ततः पश्चादिकारं तेनाऽयं विशेषेण शब्दान्तरं समुदायं प्रतिपद्यते । तद्यथा । खदिरबर्बुरयोः । खदिरबर्बुरौ गौरकाण्डौ सूक्ष्मपर्णौ । ततः पश्चादाह कङ्कटवान् खदिर इति । तेनाऽसौ विशेषेण द्रव्यान्तरं समुदायं प्रतिपद्यते । अथ वा एतयानूपूर्व्या ऽयं शब्दान्तरमुपादिशति । प्रकृतिं ततो वलाद्यार्धधातुकं ततः पश्चादिकारं यस्मिंस्तस्यागमबुद्धिर्भवति । टकितोराद्यन्तविधाने प्रत्ययप्रतिषेधः* । टकितोराद्यन्तविधाने प्रत्ययस्य प्रतिषेधो वक्तव्यः । प्रत्यय आदिरन्तो वा मा भूदिति । चरेष्टः । आतो ऽनुपसर्गे क इति । परवचनात्सिद्धम् * । परवचना-

---

मिति भावः । वक्ष्यत्येतदिति । सूत्रस्यैव प्रत्याख्यानाददोष इत्यर्थः । अथवेति । परिभाषापक्षे ऽपि न दोष इत्यर्थः । नहि व्यवस्थितस्य तव्यस्य पश्चादिकारो ऽवयव आगच्छति येनानित्यत्वं स्यात् । किं तर्हि । नित्यं पदमनेनोपायेनान्वाख्यायते । खदिरबर्बुरयोरिति निर्द्धारणे षष्ठी तयोः कङ्कटवान् खदिर इत्युक्ते द्रव्यान्तरं खदिरं प्रतिपद्यते न तत्र कङ्कटास्तदानीमारोप्यन्ते प्रतिपादनोपाय एवायमित्यर्थः । अथवेति । एतदाह अस्ति स्त एधीति तत्त्वतो रूपार्थान्वयाभावात्कल्पिताभ्यामेवान्वयव्यतिरेकाभ्यामर्थवत्तामाश्रित्याऽसत्यप्रकृतिप्रत्ययोपदेशेन सत्यस्य पदस्य व्युत्पादनं क्रियते रेखागवयेनेव सत्यगवयस्य । प्रत्ययप्रतिषेधइति । प्रत्ययपरत्वस्याप्ययमपवादः प्राप्नोतीति भावः । परवचनादिति । पुरस्तादपवादन्यायेन स्थानेयोगत्वमेवानेन बाध्यते न प्रत्ययपरत्वमिति भावः । नापवादत्वादिति । बाध्यमात्रापेक्षायां पुरस्तादपवादन्यायो नास्तीति

---

णत्वं सुलभमिति भावः । प्रत्याख्यानादिति । यासुड्विधायकं च यासुड्ङित्तः परस्मैपदेष्विति पाठमिति न दोषः ॥ आङजादीनामिति कुर्वतः सूत्रकृतो नायं पक्षस्तात्पर्यविषयीभूत इत्यतो घुसंज्ञासूत्रोपपादितमेव पक्षं सिद्धान्त्याह । भाष्ये ( अथवेति ) । परिभाषापक्षेऽपीति । परिभाषात्वेनागमत्वपक्षेऽपीत्यर्थः । भाष्ये ( तेनायं विशेषेणेति ) । ततः पश्चादिकारमित्यन्तेनेत्यर्थः । शब्दान्तरं तव्याद्यपेक्षया भिन्नसमुदायम् इतव्यादिरूपमित्यर्थः । प्रतिपद्यते तव्यबुद्धिनिवर्त्तनेनेत्यर्थः । नित्यं पदमिति । व्याकरणानिष्पाद्यमित्यर्थः । अन्वाख्यायत इति । क्रमेण सिद्धतत्तदवयवप्रतिपादनेन पूर्वपूर्वमिरवयवकबुद्धिविपरिणामद्वारा प्रत्याय्यत इति आदेशस्थल इवात्रापि बुद्धिविपरिणामान्न नित्यत्वहानिः ॥ तदेव दर्शयति न तत्र कङ्कटाइति । कङ्कटः सन्नाह उपरितनशुष्कत्वचः । भाष्ये ( खदिरबर्बुरयोरिति ) । सामान्यमुपदिशतीत्यध्याहृतसामान्यापेक्षया षष्ठी । सामान्यमेव दर्शयति खदिरबर्बुरौ गौरकाण्डाविति । द्रव्यान्तरम् । कङ्कटाद्भिन्नं तदवयवकम् । समुदायमिति । पतञ्जलिमते गुणसमुदायस्यैव द्रव्यत्वादिति भावः। तत्र यथा गौरकाण्डत्वादिना खदिरेऽपि प्रसक्तां बर्बुरबुद्धिं कङ्कटवानित्यनेन निवर्त्य खदिरबुद्धिः स्थाप्यते तथेहापि सामान्योपदेशात्सर्वत्र तव्यबुद्धौ प्रसक्तायां इड्बोधकविशेषेणागमत्वबोधनद्वारेव इतव्यबुद्धिः स्थाप्यत इत्यर्थः । निरूपितं चैतद् घुसंज्ञासूत्रे । अत्र पक्षे वाचकस्यैवानया प्रणाल्या व्युत्पादनम् । उत्तरपक्षे तु कल्पितस्यानेन साक्षाद्बोधनं तेन च बोधकस्याखण्डस्य बोधनमिति भेदः । रूपार्थान्वयाभावादिति । व्याकरणेन यस्य असितिरूपस्यार्थो दर्शितस्तेन रूपेण तस्यार्थस्य प्रयोगेष्वन्वयाभावः । स्त एधीत्यादौ व्यभिचारादित्यर्थः । असत्येति । शास्त्रप्रक्रियाकल्पिता असत्या इत्यर्थः । यद्यपि सत्यगवयो रेखागवयवत्सावयव एव । अत्र कल्पितावयवसदृशावयवानां तत्रान्वयात् तथापि सत्यं पदमखण्डमेव । एधीत्यादौ शास्त्रकृत्कल्पितावयवसदृशानामनुपलम्भादित्येतत्पक्षनिष्कर्षः । सत्यस्य पदस्येति । एवञ्च रेखागवयवत्कल्पितानित्यपदविषयकं शास्त्रं तत्रागमेष्वपि न क्षतिर्नच तल्लोके प्रयुज्यमानं किं तु तदवस्था-

प्रत्यय आदिरन्तो वा न भविष्यति । परवचनात् सिद्धमिति चेन्नापवादत्वात्*। परवचनात्सिद्धमिति चेन्न । किं कारणम् । अपवादत्वात् । अपवादोयं योगः । तद्यथा । मिदचोन्त्यात्पर इत्येष योगः स्थानेयोगत्वस्य प्रत्ययपरत्वस्य चापवादः । विषम उपन्यासः । युक्तं तत्र यदनवकाशं मित्करणं स्थानेयोगत्वं प्रत्ययपरत्वं च बाधते । इह तु पुनरुभयं सावकाशम् । को ऽवकाशः । टित्करणस्यावकाशः । टित इति ईकारो यथा स्यात् । कित्करणस्यावकाशः । कितीत्याकारलोपो यथा स्यात् । प्रयोजनं नाम तद्वक्तव्यं यन्नियोगतः स्यात् । यदि चायं नियोगतः परः स्यात् तत एतत्प्रयोजनं स्यात् । कुतो न खल्वेतत् । टित्करणादयं परो भविष्यति न पुनरादिरिति कित्करणाच्च परो भविष्यति न पुनरन्त इति । टितः खल्वप्येष परिहारः । यत्र नास्ति संभवः । यत्परश्च स्यादादिश्च । कितस्त्वपरिहारः । अस्ति हि संभवो यत्परश्च स्यादन्तश्च । तत्र को दोषः । उपसर्गे घोः किः । आध्योः । प्रध्योः नोङ् धात्वोरिति प्रतिषेधः प्रसज्येत । टितश्चाप्यपरिहारः । स्यादेव ह्ययं टित्करणादादिर्न पुनः परः । क्व तर्हि इदानीमिदं स्यात् टित ईकारो भवति । य उभयवान् गापोष्टगिति । सिद्धं तु षष्ठ्यधिकारे वच-

---

भावः । सर्वापवादबाधाह प्रयोजनमिति । सति परत्व प्रयोजनमेतत्स्यात् परत्वमेव त्वलभ्यमित्यर्थः । टित्करणादिति । ङीबर्थादित्यर्थः । मित्करणादिति । आकारलोपार्थात् । प्रयोजनमभ्युपेत्याह टित इति । कितस्त्विति । ननु परत्वावयवत्वयोर्विरोधात्कथमुच्यते परश्च स्यादन्तश्चेति । नैष दोषः । परस्य सतो ऽन्तवत्कार्यप्राप्त्या अन्तत्वमुच्यते । यथा समासान्तानाम् । टितश्चापीति । पूर्वोक्तमेव समर्थयते अधिकं वक्तुम् । गापोष्टगिति । अत्र कित्त्वात्परत्वादन्तत्वमिति टिदन्तमेतद्भवतीति ङीपा

---

द्यमेव पदं तथेति भावः । एतयेत्यादि भाष्यस्यायमर्थः । एतया वक्ष्यमाणयानुपूर्व्या अयं पाणिनिः शब्दान्तरं बोधकशब्दापेक्षया भिन्नं रेखागवयस्थानीयमुपदिशति प्रतिपादयति । तत्रागमबुद्धावपि न शब्दनित्यताहानिरिति । ननु टकितोराद्यन्तविधाने कस्यापि प्रत्ययस्याप्राप्तेः कस्य प्रतिषेधो वक्तव्य इत्यत आह प्रत्ययपरत्वस्यापीति । अपिना स्थानेयोगत्वस्य ॥ भाष्ये ( युक्तन्तत्रेति ) । नुमादीनां मित्त्वमनवकाशम् । उभयम् । प्रत्ययसंबन्धि टित्त्वं कित्त्वञ्च । एवञ्चागमटित्त्वयोरनवकाशत्वात्प्रत्ययसंबन्धिनश्च सावकाशत्वाद्येन नाप्राप्तन्यायेनेदं स्थानेयोगत्वस्यैवाऽपवाद इति भावः । सति परत्वे इति । टिदन्तात् ङीब्विधानात् किति परे आलोपविधानाच्चेति भावः । टित्परो भवतीति वचनाभावादाह ङीबर्थादिति । यद्यप्युभयथा टित्त्वस्य सावकाशत्वे परत्वात्परश्चेत्यस्य प्रवृत्त्या पर एव भविष्यति तथापि मिदचोन्त्यादिति साहचर्याद्भाष्यसामान्यचिन्तामेव न्याय्यां मन्यते ॥ अभ्युपगम्याऽपि परश्चेत्यस्य परत्वात् प्रवृत्तिमाह टितः खल्वपीति । एष परिहारो युक्तं तत्रेत्यादिनोक्तः टितो यथाकथंचिद्भवेदपीत्यर्थः । तत्राऽसम्भवरूपविरोधसद्भावात् । किति तु तदभावात्समावेशः स्यादिति भावः । तत्र दोषमाह नोङित्यादि । अवयवत्वेति । अन्तशब्दोऽवयववाचीति भावः । पूर्वोक्तम् । कुतो नु खल्वित्यादिनोक्तम् । अधिकम् । ङीपो ऽनवकाशत्वपूर्वपक्षसमाधानम् । भाष्ये ( स्यादेव हीति ) । भाष्यसामान्यचिन्तामेव न्याय्यां मन्यते । परत्वादिति । शब्दपरविप्रतिषेधात् । आद्यन्ताविति सूत्रे च

नात् * । सिद्धमेतत् । कथम् । षष्ठ्यधिकारे ऽयं योगः कर्तव्यः । आद्यन्तौ टकितौ षष्ठीनिर्दिष्टस्येति । आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावे ऽसंप्रत्ययः * । आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावे षष्ठ्या अभावे असंप्रत्ययः स्यात् । आदिरन्तो वा न भविष्यति । युक्तं पुनर्यच्छब्दनिमित्तको नामार्थः स्यात् । नार्थनिमित्तकेन नाम शब्देन भवितव्यम् । अर्थनिमित्तक एव शब्दः । तत्कथम् । आद्यन्तौ षष्ठ्यर्थौ । नैवात्र षष्ठीं पश्यामः । तेन मन्यामहे आद्यन्तावेवात्र न स्तस्तयोरभावे षष्ठ्यपि न भवतीति ॥

मिदचोन्त्यात्परः ॥४७॥ किमर्थमिदमुच्यते । मिदचोन्त्यात्परः स्थानपर-

ऽयमवकाशः । ततश्च चरेष्ट इत्ययमादिः स्यात् । षष्ठ्यधिकार इति । यत्र स्थानषष्ठी प्राप्ता तत्रोपस्थानमस्या न तु प्रत्ययपरत्वबाधनाय । आद्यन्तयोर्वेति । षष्ठ्याः प्रयोजकावाद्यन्तौ । षष्ठ्यभावाच्चाऽद्यन्ताभावावगतिरित्यर्थः । युक्तं पुनरिति । शब्दभावाभावाभ्यामर्थभावाभावयोः शब्दनिमित्तकत्वमर्थस्य प्राप्तं तच्च पुनर्न युक्तम् । ज्ञापको हि शब्दोऽर्थस्य न तु कारकः सर्वेण सर्वस्यार्थस्य क्रियाप्रसङ्गादिति भावः । अर्थनिमित्तक एवेति । अर्थ एव शब्दस्य प्रयोजकस्तत्प्रतिपादनाय शब्दप्रयोगः । अप्रयोगाच्चाऽनुमीयते नूनम् अर्थ एवात्र प्रयोजको नास्ति शब्दप्रयोगं यः प्रयुञ्जीतेत्यर्थः । चरेष्ट इत्यत्र परश्चेत्यधिकारात् पञ्चम्येव युक्ता गापोष्टग् व्रीहिशाल्योर्ढगित्यादावप्यानन्तर्यसंबन्धे षष्ठी न त्ववयवावयविसंबन्धे । प्रत्ययपरत्वेन प्रतियोगं संनिहितेनाकाङ्क्षाविच्छेदादनर्थित्वादस्या अनुपस्थानात् । पुरस्तादपवादन्यायस्तु यथोद्देशपक्षे संभवति न कार्यकालपक्षइति नाश्रितः ॥ ४६ ॥

मिदचो ऽन्त्यात्परः ॥ किमर्थमिति । किमनेन व्यावर्त्यत इति प्रश्नः । स्थानेति ।

क्विबन्त इत्यस्य परत्वादित्यर्थः । भाष्ये (गापोष्टगि) त्युपलक्षणम् । नदट्चोरडादीनाम् । बाध्यसामान्यचिन्ताश्रयणेपि दोषाभावमाह सिद्धन्त्विति । षष्ठ्यधिकारेइति । तत्रानुवर्त्यैव व्याख्येयम् । तत्रत्यषष्ठीपदं वाऽप्रापकष्टव्यमिति भावः। प्राप्तेति । एतदुपस्थितेः प्रागिति शेषः। नास्यति । प्रत्ययविधौ प्रसक्तस्थानषष्ठ्यभावादित्यर्थः । भाष्ये षष्ठीपदासंबन्धेपि समाधानमाह । ( आद्यन्तयोर्वेति ) अर्थशब्दः प्रयोजनवाची षष्ठ्यर्थयत्वाविति बहुव्रीहिरित्याह षष्ठ्याः प्रयोजकाविति । षष्ठ्यर्थस्य प्रयोजकावित्यर्थः । षष्ठ्यान्तार्थस्यावयवभूताद्यन्तनिरूपकत्वेन तत्प्रयोजकत्वमेतयोर्बोध्यम । यद्यवयवभूताद्यन्तरूपोर्थः स्यात्तदा तस्य निरूपकाकाङ्क्षत्वात् स्यादेव षष्ठ्यर्थस्तद्बोधनाय च षष्ठीप्रयोगः । न च सोस्ति तस्मादाद्यन्ताभावावगतिरिति भावः । भाष्ये ( षष्ठ्याअभावे ) इत्यस्य तदर्थाभाव इत्यर्थः । षष्ठीरूपशब्दाभावात्तदर्थाभावस्तदर्थाभावाच्चाद्यन्ताभाव इत्यर्थं मन्वानस्य शङ्का ( युक्तंपुनरिति ) । नार्थेत्यत्र काकुः । शब्दा भावेति । षष्ठीसत्त्वे तदर्थसत्त्वादाद्यन्तस्थितिः षष्ठ्यभावे तदर्थाभावादाद्यन्ताभाव इत्युक्तेरिति भावः । कारकत्वे बाधकमाह सर्वेण रत्नादिशब्देन । सर्वस्य रत्नादिरूपस्य ॥ भाष्ये समाधत्ते ( अर्थनिमित्तकएवेति । तद्व्याचष्टे । अर्थएवेति । अनुमीयते इति । कार्याभावेन कारणाभावोनुमीयते यथा नदीपुराभावेनोपरिदेशे वृष्ट्यभाव इति भावः । भाष्ये । ( आद्यन्तौ ) वर्थौ षष्ठ्यर्थद्वारा षष्ठीप्रयोजकावित्यर्थः । एवं कार्याभावात्कारणाभावानुमाने कारणाभावात्कार्यमपि नेति निगमयति । भाष्ये ( तयोरभावइति ) ननु प्रत्ययविधावपि क्वचित्षष्ठी दृष्टेत्यत आह चरेष्ट इत्यादि । नत्विति । एतत्सूत्रोपस्थानेनेति भावः । तत्र हेतुमाह प्रत्ययेति । आकाङ्क्षेति । देशांश इत्यर्थः। अनर्थित्वात् एतदाकाङ्क्षाभावात् । अत एव धातोः प्रातिपदिकादित्यधिकारानुग्रहो भवति । धात्वादिभ्यः परो णादिभ्योनन्तर इत्यर्थात् । न कार्यकालेति । एतत्तत्वमिको गुणवृद्धीत्यत्र निरूपितम् । वस्तुतस्त्वाश्रित एव परवचनात्सिद्धमित्यस्यैव सिद्धान्त्युक्तित्वात् नापवादत्वादित्यादेः पूर्वपक्ष्येकदेशिसिद्धान्त्येकदेशिनोरुक्तित्वादिति तत्त्वम् ॥ ४६ ॥

प्रत्ययस्यापवादः * । मिदचोन्त्यात्पर इत्युच्यते स्थानेयोगत्वस्य प्रत्ययपरत्वस्य चापवादः । स्थाने योगत्वस्य तावत् । कुण्डानि वनानि पयांसि यशांसि । प्रत्ययपरत्वस्य । भिनत्ति छिनत्ति । भवेदिदं युक्तमुदाहरणम् । कुण्डानि वनानि यत्र नास्ति संभवो यदयमचोऽन्त्यात्परश्च स्यात् स्थाने चेति । इदं त्वयुक्तम् । पयांसि यशांसीति । अस्ति हि संभवो यदयमचोन्त्यात्परश्च स्यात् स्थाने चेति । एतदपि युक्तम् । कथम् । नैवेश्वर आज्ञापयति नापि धर्मसूत्रकाराः पठन्ति अपवादैरुत्सर्गा बाध्यन्तामिति । किं तर्हि । लौकिकोयं दृष्टान्तः । लोके हि सत्यपि संभवे बाधनं भवति । तद्यथा । दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति । सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि संभवे अचामन्त्यात्परत्वं षष्ठीस्थानेयोगत्वं बाधिष्यते । अन्त्यात्पूर्वो मस्जेर्मिदनुषङ्गसंयोगादिलोपार्थम् * । अन्त्यात्पूर्वो मस्जेर्मिद्वक्तव्यः । किं प्रयोजनम् । अनुषङ्गसंयोगादिलोपार्थम् । अनुषङ्गलोपार्थं संयोगादिलोपार्थं च । अनुषङ्गलोपार्थं तावत् । मग्नः मग्नवान् । संयोगादिलोपार्थं, मङ्क्ता मङ्क्तुम् मङ्क्तव्यम् । भर्जिमर्च्योश्च * । भर्जिमर्च्योश्चान्त्यात्पूर्वो मिद्वक्तव्यः । भरूजा मरीचय इति । स तर्हि वक्तव्यः । न वक्तव्यः । निपातनात् सिद्धम् । किं निपातनम् । भरूजाशब्दो ऽङ्गुल्यादिषु पठ्यते मरीचशब्दो बाह्वादिषु । किं पुनरयं पूर्वान्तः, आहोस्वित् परादिः, आहोस्विदभक्तः । कथं

---

परस्य सतः प्रत्ययस्यापवादस्तेन सामर्थ्यादयमर्थः प्रत्ययपरत्वस्यापवाद इति । कुण्डानीति । नपुंसकस्य झलच इत्यत्र झलज्भ्यां नपुंसकस्य तदन्तविधिरिति अस्ति स्थानेयोगत्वस्य प्रसङ्गः । मित्त्वात्त्वस्मिन्नुपस्थिते नपुंसकस्याङ्गस्येत्यवयवषष्ठी संपद्यते । स्थाने चेति । ततश्च सकारस्य स्थाने नुम् भवन्विित्यर्थः । दृष्टान्त इति । निश्चय इत्यर्थः । तत्र वृद्धव्यवहारादीदृश्येव वाक्यार्थे व्युत्पत्तिर्यत्सामान्यविहितो विशेषविहितेन बाध्यते न समुच्चीयते नापि विकल्प्यते । भर्जिमर्च्योश्चेति । भृजी भर्जन इत्यस्यौणादिके ऽचि कृते गुणे परत्वे च जकारात्पूर्वं ऊमागमः । मर्च शब्दार्थ इत्यस्य चौरादि

---

मिदचो ॥ प्रयोजनप्रश्ने ऽपवादत्वाभिधानमसङ्गतमत आह किमिति । किं व्यावर्त्यत्वेन प्रयोजनमित्यर्थः । किं स्थानेयोगत्वमुत प्रत्ययपरत्वमपीति प्रश्न इति भावः । उभयापवादत्वे बीजन्तु तत्र तत्र मित्त्ववैयर्थ्यरूपं पूर्वसूत्र एवोक्तम् । ननु नपुंसकस्येति सूत्रे झलच इति पञ्चमीति क्व स्थानेयोगत्वप्रसक्तिरत आह नपुंसकस्येति । पञ्चम्यां हि तस्मादिति परिभाषोपस्थाने पयांसि ज्ञानानीत्युभयोरप्यसिद्धिरिति षष्ठ्यन्तैवेति भावः ॥ भाष्ये ( नैवेश्वरइति) ईश्वरो वेदः । धर्मसूत्रम् । धर्मशास्त्रम् । भाष्ये (ऽपवादे) रित्यस्यासंभवे इत्यादिः । क्वचित्तथैव पाठः । बाध्यन्तामिति लोट् । मग्ने मस्जेर्जात्पूर्वं नुमि अनिदितामिति लोपे सस्य संयोगादिलोपे कुत्वे निष्ठानत्वे रूपम् । अन्त्यादचः परे तु सति अविशेषेण संयोगत्वे संयोगादिलोपसिद्धावपि तस्यासिद्धत्वान्नस्योपधात्वाभावान्न लोपो न स्यादिति भावः । संयोगादिलोपस्तु बहूनां समवधाने बहूनामेव संयोगसंज्ञेति पक्षे फलत्वेन बोध्यः । मङ्क्तेत्यादि त्वनुषङ्गलोपाभावेपि उदाहरणमुक्तम् । भाष्ये ऊर्मीमावोणादिकौ ॥ नन्वन्त्यादचः परत्वं तस्य च वर्णान्तरावयवत्वमिति विरुद्धमत आह सङ्ख्येति । अन्त्यादित्यनेन समुदायाक्षेपेण समुदायस्योपस्थितत्वात् समुदायावयवसन्निधौ समुदायग्रहणस्य न्याय्यत्वाच्च

वायं पूर्वान्तः स्यात् कथं वा परादिः कथं वा ऽभक्तः। यद्यन्त इति वर्तते ततः पूर्वान्तः। अथादिरिति वर्तते ततः परादिः। अथोभयं निवृत्तं ततो ऽभक्तः। कश्चात्र विशेषः। अभक्ते दीर्घनलोपस्वरणत्वानुस्वारशीभावाः *। यद्यभक्तो दीर्घत्वं न प्राप्नोति। कुण्डानि वनानि। नोपधायाः सर्वनामस्थाने चासंबुद्धाविति दीर्घत्वं न प्राप्नोति। दीर्घ। नलोप, नलोपश्च न सिध्यति। अग्ने त्रीते वाजिना त्रीषधस्था ताताप पिण्डानाम्। नलोपः प्रातिपदिकान्तस्येति नलोपो न प्राप्नोति। नलोप। स्वर, स्वरश्च न सिध्यति। सर्वाणि ज्योतींषि। सर्वस्य सुपीत्याद्युदात्तत्वं न प्राप्नोति। स्वर। णत्व, णत्वं च न सिध्यति। माषवापाणि। व्रीहिवापाणि। पूर्वान्ते प्रातिपदिकान्तनकारस्येति सिद्धम्। परादौ विभक्तिनकारस्येति। अभक्ते नुमो ग्रहणं कर्तव्यम्। न कर्तव्यम्। क्रियते एतन्न्यास एव। प्रातिपदिकान्तनुम्विभक्तिषु चेति। णत्व। अनुस्वार, अनुस्वारश्च न सिध्यति। द्विषन्तपः। परन्तपः। मो ऽनुस्वारो हलीत्यनुस्वारो न प्राप्नोति। मा भूदेवम्। नश्चापदान्तस्य झलीत्येवं भविष्यति। यस्तर्हि न झल्परः। वहंलिहो गौः। अभ्रंलिहो वायुः। अनुस्वार। शीभाव, शीभावश्च न सिध्यति। त्रपुणी

---

कस्य णिच्यच इरिति इप्रत्यये णिलोपे चकागत् पूर्वं ईमागमः। पूर्वान्त इति। संघातस्य पूर्वस्य भक्तो न तदेकदेशस्य। अथादिरिति। नहि सम्भवोऽस्ति यदन्त्यात्परश्च स्यात् पूर्वस्य चादिरिति सामर्थ्यात्परादित्वं विज्ञायते। कुण्डानीति। नान्तमङ्गं न भवतीति दीर्घत्वाऽप्राप्तिः। ननु तदादिवचनं स्यादिनुमर्थमित्युक्तम्। एवं तर्हि तत् स्मर्तव्यं भवतीति गौरवापत्तिः। सर्वाणीति। नुमा सुपो व्यवधान त् स्वरो न सिध्यति। क्रियते एतन्न्यास एवेति। उत्तरपदस्य प्रातिपदिकस्यान्तस्तत्र नकारो गृह्यते गर्गाणां भगिनी गर्गभगिनीत्यत्र णत्वं मा भूदित्यवश्यं कर्तव्यं नुमो ग्रहणम्। स हि समुदायभक्तत्वादुत्तरपदस्यान्तो न भवतीति। द्विषन्तप इति। प्रसङ्गोच्चारितमेतत्। अत्र हि तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति मुमो द्विषद्ग्रहणेन ग्रहणमस्ति।

---

वर्णस्य वर्णावयवत्वासम्भवाच्चेत्याशयः। नन्वादिरित्यनुवृत्तौ पूर्वादित्वं कुतो नेत्यत आह नहीति। परादित्वमिति। वाचनिकमेव वर्णस्य वर्णावयवत्वं ङः सीति धुडादिरिवेति भावः। अभक्ते इति वार्तिकस्यैते न सिध्यन्तीति शेषः॥ नन्वभक्तत्वेपि नान्तमस्त्येवेत्यत आह नान्तमङ्गमिति। दीर्घविधावङ्गाधिकारादिति भावः। गौरवापत्तिरिति। प्रतिपत्तिगौरवापत्तिरित्यर्थः॥ त्रीते इति। शेश्छन्दसि बहुलमिति शेर्लोपः। त्रीणि वाजिनानि तानि तानीत्यर्थः। नुमेति। व्यञ्जनाविद्यमानवद्भावस्तु हल्स्वरप्राप्तौ स्वरोऽन्यस्यकविधिप्राप्तौ वा नान्यत्रेति भावः। सुपीति न तदन्तसप्तमीति अभिमानेनेदम्। उत्तरपदस्येति। एवञ्च सर्वपक्षेष्वपीदमावश्यकमिति भावः। भगशब्दादिनौ तन्नकारः प्रातिपदिकान्तो भवतीति भगिनीत्यत्रानुच्यमाने उत्तरपदस्येत्यस्मिन् णत्वप्रसङ्गः। भगिनीत्यत्र च ङ्यन्तमुत्तरपदं न नान्तम्। सूत्रन्तु माषवापिणाविन्यादौ चरितार्थमिति भावः। सहीति। नुम्विधावङ्गस्येत्यधिकारादित्यर्थः। एवञ्च माषवापाणीत्यादिसिद्ध्यर्थं नुमग्रहणमिति भावः। समासरूपप्रातिपदिकान्तस्येत्यर्थेन गर्गभगिनीत्यस्य व्यावृत्तौ माषवापाणीत्यस्य सिद्धौ च प्रहिण्वन्नित्याद्यर्थं नुमग्रहणमावश्यकमिति तत्त्वम्। द्विषन्तपाविति द्विषत्परयोस्तापेरिति खच्। खचि ह्रस्वः। अरुर्द्विषदिति मुम्। प्रसङ्गेति। द्विषद्ग्रहणेन मुम्विशिष्टस्य ग्रहणे तस्य पदत्वान्नकारस्य संयोगान्तलोपे एकदेशविकृतन्यायेन द्विषमित्यस्य मान्तस्य पदत्वात्सिद्धोऽनुस्वार इत्यर्थः। वस्तुतस्तस्य

जतुनी तुम्बुरुणी। नपुंसकादुत्तरस्यौङः शीभावो भवतीति शीभावो न प्राप्नोति। एवं तर्हि परादिः करिष्यते। परादौ गुणवृद्ध्यौत्त्वदीर्घनलोपाऽनुस्वारशीभावे नकारप्रतिषेधः * । यदि परादिः। गुणः प्रतिषेध्यः। त्रपुणे जतुने तुम्बुरुणे। घेर्ङितीति गुणः प्राप्नोतीति। गुण। वृद्धि, वृद्धिः प्रतिषेध्या। अतिसखीनि ब्राह्मणकुलानि। सख्युरसम्बुद्धाविति णित्त्वे अचो ञ्णितीति वृद्धिः प्राप्नोति। वृद्धि। औत्त्व, औत्त्वं च प्रतिषेध्यम्। त्रपुणि जतुनि तुम्बुरुणि। इदुद्भ्यामौदच्च घेरित्यौत्त्वं प्राप्नोति। औत्त्व। दीर्घ, दीर्घत्वं च न सिध्यति। कुण्डानि वनानि। नोपधायाः सर्वनामस्थाने चासंबुद्धौ इति दीर्घत्वं न प्राप्नोति। मा भूदेवम्। अतो दीर्घो यञि सुपि चेत्येवं भविष्यति। इह तर्हि अस्थीनि दधीनि प्रियसखीनि ब्राह्मणकुलानि। दीर्घ। नलोप। नलोपश्च न सिध्यति। अग्ने त्री ते वाजिना त्रीषधस्था ताता पिण्डानाम्, नलोपः प्रातिपदिकान्तस्येति नलोपो न प्राप्नोति। नलोप। अनुस्वार, अनुस्वारश्च न सिध्यति। द्विषन्तपः परन्तपः। मोऽनुस्वारो हलीत्यनुस्वारो न प्राप्नोति। मा भूदेवम्। नश्चाऽपदान्तस्य झलीत्येवं भविष्यति। यस्तर्हि न झल्परः। वहंलिहो गौः। अभ्रंलिहो वायुः। अनुस्वार। शीभावे नकारप्रतिषेधः * । शीभावे नकारप्रतिषेधो वक्तव्यः। त्रपुणी जतुनी तुम्बुरुणी। सनुम्कस्य शीभावः प्राप्नोति। नैष दोषः। निर्दिश्यमानस्यादेशा भवन्तीत्येवं न भविष्यति। यस्तर्हि निर्दिश्यते तस्य न प्राप्नोति। कस्मात्। नुमा व्यवहितत्वात्। एवं तर्हि पूर्वान्तः करिष्यते।

---

त्रपुणी इति। नित्यत्वात् परत्वाच्च नुमि कृते व्यवधानमिति भावः। अतिसखीनीति। बहुव्रीहिः। द्विषन्तप इति परादिपक्षे तकारस्य मकारो भक्तस्तकारश्च पदान्त इति मकारोऽपि तद्भक्तत्वात् पदान्त इति सिद्धोऽनुस्वार इत्याहुः। अन्ये तु तद्भक्तत्वात्तकारग्रहणेनाऽस्य ग्रहणं भवतु न तु पदान्तत्वम्। नहि द्वयोर्मकारतकारयोः पदान्तत्वमुपपद्यत इत्याहुः। शीभावे नकारप्रतिषेध इति। शीभावे विधीयमाने नकारस्य स्थानित्वप्रतिषेधो वक्तव्य इत्यर्थः। निर्दिश्यमानस्येति। यथा पादः पदिति पद्भावः पाच्छब्दस्यैव भवति न तदन्तस्य। यस्तर्हीति। यो निर्दिश्यते तस्य न प्राप्नोति श्रुतिसन्निपाति यद्रूपमौ इति तन्नकारेण भक्तेनाऽपि तत्त्वतो व्यवहितमि-

---

न्यायस्याद्याप्यज्ञानात्तदनाश्रयेणेदम्। बहिरङ्गासिद्धत्वं त्रिपाद्यां नेति तत्रोक्तम्। वहंलिहे वहाभ्रंलिह इति खश्। परादाविति वार्तिके शीभावे नकारप्रतिषेध इति पाठः शीभावे इत्यलुगार्षः। एते दोषस्थानानीति शेषः॥ टजभावाय नपुंसकत्वाय चाह बहुव्रीहिरिति। भाष्ये ( ऽग्नेत्रीतइति )। ननु परादिपक्षे नलोपः प्रातिपदिकान्तस्येत्यस्याप्राप्तावपि शेश्छन्दसि बहुलमित्यनेन लोपः सिद्ध इति चेन्न। निर्दिश्यमानपरिभाषया ऽलोन्त्यपरिभाषया च इकारस्यैव लोपापत्तेरित्याशयात्। तद्भक्तत्वात्पदान्त इति। यदागमाइत्यस्य तद्ग्राहकेण शब्देनागमस्य ग्रहणमित्यप्यर्थ इति भावः। नहि द्वयोरिति। ननु संयोगान्तलोपे उक्तरीत्या ऽस्त्येवमस्य पदान्तत्वमिति चेदुक्तमेवैतत्॥ न तदन्तस्येति। पदान्तस्यानुच्चारणादिति भावः। श्रुतिसंनि-

पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च * । यदि पूर्वान्तः क्रियते । नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च न सिध्यति । नपुंसकोपसर्जनह्रस्वत्वम् । आराशस्त्रिणी । धानाशष्कुलिनी । निष्कौशाम्बिनी । निर्वाराणसिनी । द्विगुस्वर । पञ्चारत्निनी । दशारत्निनी । नुमि कृते अनजन्तत्वादेते विधयो न प्राप्नुवन्ति । * वा बहिरङ्गलक्षणत्वात् * । न वा एष दोषः । किं कारणम् । बहिरङ्गलक्षणत्वात् । बहिरङ्गो नुम्, अन्तरङ्गा एते विधयः । असिद्धं बहिरङ्गमन्तरङ्गे । द्विगुस्वरे भूयान् परिहारः । संघातभक्तोऽसौ नोत्सहते अवयवस्येगन्ततां विहन्तुमिति कृत्वा द्विगुस्वरो भविष्यति । मिदचोऽन्त्यात्परः ॥

एच इग्घ्रस्वादेशे ॥ ४८ ॥ किमर्थमिदमुच्यते । एच इग्वचनं सवर्णाकारनिवृत्त्यर्थम् * । एच इग्भवतीत्युच्यते सवर्णनिवृत्त्यर्थमकारनिवृत्त्यर्थं च । सवर्णनिवृत्त्यर्थं तावत् । एङो ह्रस्वादेशशासनेषु अर्ध एकारोऽर्ध ओकारो वा मा भूदिति । अकारनिवृत्त्यर्थं च । इमावैचौ समाहारवर्णौ । मात्रावर्णस्य मात्रेवर्णोवर्णयोः । तयोर्ह्रस्वशासनेषु कदाचिदवर्णः स्यात्, कदाचिदिवर्णोवर्णौ, मा कदाचिदवर्णं भूदित्येवमर्थमिदमुच्यते । अस्ति प्रयोजनमेतत् । किं तर्हीति । दीर्घप्रसङ्गः । दीर्घास्त्विकः प्राप्नुवन्ति । किं कारणम् । स्थानेऽन्तर-

स्यर्थः । धानाशष्कुलिनी इति । नित्यत्वात्पूर्वं नुमं मन्यते तत्र कृतेऽनजन्तत्वाद् ह्रस्वाप्राप्तिः । निष्कौशाम्बिनी इति । नपुंसकह्रस्वत्वमुपसर्जनह्रस्वत्वेन परत्वाद्बाध्यते तदपि नुमि कृते तथैव न प्राप्नोति । नवेति । नित्यादप्यन्तरङ्गो बलीयानिति स्वरह्रस्वौ च विभक्तिनिरपेक्षत्वादन्तरङ्गौ तदत्र निर्दोषत्वात्पूर्वान्तपक्षः स्थितः ॥ ४७ ॥

एच ॥ किमर्थमिति । विनापि सूत्रेणेष्टसिद्धिरिति प्रश्नः । एङ इति । एङः प्रश्लिष्टावर्णत्वात् प्रश्लिष्टावर्णावर्धैकारौकारौ प्राप्नुतः । न तु विश्लिष्टावर्णयोरैचोरिति भावः । समाहारवर्णाविति । समाह्रियमाणावयवत्वात् । मात्रा वर्णस्येति । अष्टादशभेदभिन्नस्यावर्णस्य मात्राऽवयवभेदं इति भेदसद्भावात् षष्ठ्या निर्देशः । दीर्घास्त्विति । स्वत-

पातीति । उच्चारितमिति यावत् । धानाशष्कुलिनी इति । समाहारद्वन्द्वे तद्द्वित्वविवक्षायाम्द्विवचनं तत्र पूर्वं ह्रस्वः ततो नुमि नास्ति दोष इत्यत आह नित्यत्वादिति । इदञ्च पदस्य विभज्यान्वाख्यानपक्षे बोध्यम् । अनजन्तत्वादिति । अच इत्यनेन प्रातिपदिकस्य विशेषणादित्यर्थः ॥ परत्वादिति । यद्यपि कार्यैक्ययौगपद्यसम्भवेन विरोधाभावेन परत्वादित्यसङ्गतं तथापि नुमि कृते उभयोरप्यप्राप्त्योभयोः सम्भवसत्त्वे च न भाष्ये काचिदनुपपत्तिः । अत एव भाष्ये नपुंसकोपसर्जनह्रस्वत्वमिति संश्लिष्टमेवोक्तमिति बोध्यम् । तथैवेति । अनजन्तत्वादिति भावः । अन्तरङ्गो बलीयानिति । असिद्धं बहिरङ्गमित्येव समानकालप्राप्तिकबहिरङ्गासिद्धत्वबोधकं पूर्वजातबहिरङ्गासिद्धत्वबोधकं चेति भावः । अत एव भाष्येणाविरोधः । अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः । पञ्चारत्निशब्दे समाहारे द्विगुः प्रमाणे मात्रचो लुग्वा ॥ ४७ ॥

एचइग् ॥ विनापीति । वक्ष्यमाणसूत्रप्रत्याख्यानप्रकारेणेति भावः । एच इति वक्तव्ये एङइति अनुचितमत आह एङइति । प्रश्लिष्टेति । पांशूदकवदित्यर्थः । प्रश्लिष्टावर्णत्वाद्विनाप्यान्तरतम्यं गृह्यत इति भावः । ऐचोस्तदप्राप्तौ हेतुमाह नत्विति । ऐचौ स्वर्धौ न स्त एवेति भावः । सवर्णाकारनिवृत्त्यर्थमित्येतद्विषयभेदेन योज्यत इति बोध्यम् ॥ कर्मधारयसमाहारशब्दस्य वर्णशब्देन न बहुव्रीहिर्वर्णैकदेशत्वस्य वर्ण-

तमो भवतीति। ननु च ह्रस्वादेशो इत्युच्यते तेन दीर्घा न भविष्यन्ति। विषयार्थमेतत् स्यात्। एचां ह्रस्वप्रसङ्गे इग्भवतीति। दीर्घप्रसङ्गस्तु निवर्तकत्वात् *। दीर्घाणां त्विकामप्रसङ्गः। किं कारणम्। निवर्तकत्वात्। नानेनेको निर्वर्त्यन्ते। किं तर्हि। अनिको निवर्त्यन्ते। सिद्धा ह्यग् ह्रस्वा इकश्चानिकश्च। तत्रानेनानिको निवर्त्यन्ते। सवर्णनिवृत्त्यर्थेन तावन्नार्थः। सिद्धमेङः सस्थानत्वात् *। सिद्धमेतत्। कथम्। एङः सस्थानत्वाद् इकारोकारौ भविष्यतः। अर्ध एकारोऽर्द्ध ओकारो वा न भविष्यति। ननु च एङः सस्थानतरावर्धैकारार्द्धौकारौ। न तौ स्तः। यदि हि तौ स्यातां तावेवायमुपदिशेत्। ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारं चाधीयते। सुजाते ए अश्वसूनृते अध्वर्यो ओ अद्रिभिः सुतं शुक्रन्ते ए अन्यद्यजन्ते ए अन्यदिति। पार्षदकृतिरेषा तत्र भवताम्। नैव लोके नाऽन्यस्मिन् वेदे अर्ध एकारः अर्ध ओकारो वास्ति। अकारनिवृत्त्यर्थेनापि नार्थः। ऐचोश्चोत्तरभूयस्त्वात्। ऐचोश्चोत्तरभूयस्त्वादवर्णो न

---

न्त्रमिदं निर्वर्तकमिति भावः। भाव्यमानस्यापि सवर्णग्रहणं दृश्यते अमूभ्यामित्यादाविति दोषोपन्यासः। ननु चेति। अयं हि वाक्यार्थः॥ एचो ह्रस्वप्रसङ्गे इगेव ह्रस्व इति। विषयार्थमिति। यत्र ह्रस्वो विधीयते तत्रैवास्योपस्थानं यथा स्यात्। देवदत्तेति प्लुतादिविधावुपस्थानं मा भूद् अस्मिंश्चोपस्थिते वाक्यभेदेनैच इको विधीयमाना अन्तरतमा दीर्घा एव प्राप्नुवन्ति ह्रस्वस्य बाधितत्वाद्दीर्घेषु कृतेषु पुनर्ह्रस्वाप्रसङ्गः। निवर्तकत्वादिति। एकवाक्यभावेनैच इगेव ह्रस्वो भवति नान्य इत्येवमनिको व्यावर्त्यन्ते। यदि तर्ह्येकवाक्यता एज्व्यतिरेकेणान्यस्य ह्रस्वो न प्राप्नोति। नैष दोषः। पूर्वं ह्रस्वश्रुत्या ऽच उपस्थानाद् ह्रस्वत्वं क्रियते तत्रैचोऽप्यन्तर्भावाद् ह्रस्वे क्रियमाणे एच इगित्यस्योपस्थानम्। सिद्धमेङ इति। एकारस्य तालव्यस्य तालव्य इकार ओकारस्यौष्ठ्यस्योकार ओष्ठ्यो भविष्यतीत्यर्थः। ऐचोश्चेति। एकारः कण्ठ्य-

---

त्वाभावादत आह समाहृियमाणावयवेति। मध्यमपदलोपी समास इति भावः। ( मात्रावर्णस्येति ) भाष्यस्य मात्राकालवर्णादिसदृशऐचोरवयव इति तात्पर्यम्। मात्रावयवइति। तत्सदृशश्चैतयोरवयव इत्यर्थः॥ नन्वस्य नियमत्वेन ह्रस्वविध्येकवाक्यतया कथं दीर्घप्राप्तिरत आह स्वतन्त्रमिति। नियमत्वेऽनुवादादिदोषाद्विधित्वमेव व्याख्यातुमित्यभिमानः। भाव्यमानस्येति। सम्बन्धसामान्ये षष्ठी। देवेति। देवदत्तेत्येतद्विषयकगुरोऽनृत इत्येतत् प्लुतविधावित्यर्थः। आदिनोदात्तादिस्वरसङ्ग्रहः। नन्वनेन दीर्घे पुनस्तेन लक्षणेन ह्रस्वः स्यादत आह ह्रस्वस्येति। अपवादस्य प्रवृत्त्या तद्विषये उत्सर्गाप्रवृत्तेरिति भावः॥ एकवाक्यभावेनैच इति। एकवाक्यभावो नाम एच इगित्यस्य ह्रस्वे शेषभावः न तु परस्परवियोगाभावः। अन्वयस्तु वाक्यभेदेनैवेति। एतदजानानो नोदयति यदीति। उक्ताभिप्रायेणैवोत्तरयति पूर्वह्रस्वेति। एवं हि परिभाषाद्वयस्याप्यनुग्रहो भवति इति भावः। एकारस्येति। यत्तु कण्ठताल्वादिस्थानत्वेपि विप्रतिषेधेन पूर्वावयवो न स्थान्तरतमादेशप्रयोजकः किं तु परावयव एवेति न दोष इति। तन्न। लक्ष्यगतपरत्वमादाय विप्रतिषेधशास्त्राप्रवृत्तेः स्थानिवत्प्रकरणभाष्ये स्पष्टत्वात्। किन्त्वन्तरङ्गत्वेन पूर्वावयव एव तथेति बोध्यम्। भाष्ये ( अर्धएकारओकारोवा न भविष्यतीति )। तयोरसत्त्वादिति भावः॥ इतरस्तु सस्थानत्वाभावादिति हेतुरनेनोक्त इति मत्वा नोदयति। ( ननुचेति )। सस्थानतराविति। कण्ठतालुस्थानामिति पक्षेपि तालुस्थानसाम्यसत्त्वमिति बोधयितुं तरनिर्देशः। स्वाशयं प्रकटयति ( न तौ स्त इति ) तावेवेति। प्रत्याहारसूत्रे इति भावः। एतच्च एओ-

भविष्यति। भूयसी मात्रेवर्णोवर्णयोरल्पीयस्यवर्णस्य । भूयस एव ग्रहणानि भविष्यन्ति । तद्यथा । ब्राह्मणग्रामे आनीयतामित्युच्यते तत्र चावरतः पञ्चकारुकी भवति ॥

षष्ठी स्थानेयोगा ॥ ४९ ॥ किमिदं स्थानेयोगेति । स्थाने योगोऽस्याः सेयं स्थानेयोगा । सप्तम्यलोपो निपातनाद् तृतीयाया वा एत्वम् । स्थानेन योगोऽस्याः सेयं स्थानेयोगेति । किमर्थं पुनरिदमुच्यते । षष्ठी स्थानेयोगवचनं नियमार्थम् । नियमार्थोऽयमारम्भः । एकशतं षष्ठ्यर्था यावन्तो वा सन्ति ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्ति । इष्यते च व्याकरणे या षष्ठी सा स्थानेयोगैव

---

तालव्य ओकारः कण्ठ्योष्ठ्यः । न च तथाविधो ह्रस्वो ऽस्तीति अवयवान्तरतमेन भाव्यं भूयसा चाऽवयवेन व्यपदेशो भवति । तदात्मक इव हि समुदायो लक्ष्यत इतीवुतावेव भविष्यतः । ब्राह्मणग्राम इति । ब्राह्मणानां वास्तव्यत्वे उदाहरणं न तु स्वामित्वे ॥४८॥

षष्ठी ॥ किमिदमिति । समासे विभक्तिश्रवणाप्रसङ्गः । असमासेऽपि युक्तिरिति प्राप्नोति न तु योगेति प्रश्नः। स्थाने योगोऽस्या इति । स्थाननिमित्तसम्बन्धेत्यर्थः । तृतीयाया वेति । निपातनादिति योज्यम् । यथा देवदत्तस्य यज्ञदत्त इति पुत्रत्वादिद्वारकस्संबन्धो ऽवगम्यते । एवमस्तेर्भूरित्यत्रापि अस्यां परिभाषायां सत्यां स्थाननिमित्तः संबन्धोऽवसीयते । स्थानमर्थ इति केचिदाहुः । तिष्ठन्त्यस्मिन् शब्दा इति स्थानम् । अथ च शब्दास्तिष्ठन्ति तेनास्तेरर्थे भूरित्यर्थः । अन्ये त्वाहुः । भ्रस्जो रोपधयोरमन्यतरस्यामित्यादौ रोपधानामार्थक्याद्भवसाधनः प्रसङ्गवाची स्थानशब्द आश्रीयते । तेनास्तेः प्रसङ्गे अस्तेः प्राप्तौ भूः प्रयुज्यत इत्यर्थः संपद्यते । स्वाभाविकोऽस्तेरप्रयोग आर्धधातुके भूशब्दस्य च प्रयोगो ऽनेन प्रकारेणान्वाख्यायते । किमर्थमिति । विनापि सूत्रेणेष्टं सिध्यति आरब्धेऽप्यतिप्रसङ्ग इति प्रश्नः । एकशतमि-

---

त्सूत्रे निरूपितम । ( पार्षदेति )। तत्र भवतां या पर्षत्सभा तत्र भवेत्यर्थः । भाष्यप्रयोगादेव गमकत्वात्साधुत्वं बोध्यम । भूयस एवेति । भूयोंशस्यान्तरतम्यप्रतियोगितया ग्रहणमित्यर्थः । ब्राह्मणस्वामिकग्रामस्य भूयसा व्यपदेशो दृष्टान्तत्वासङ्गतेराह वास्तव्यत्वेइति । वास्तव्यः कर्त्तरि तव्यान्तः कुलालकर्मारवर्धकिनापितरजकाः पञ्च कारुकी ॥ ४८ ॥

षष्ठीस्या ॥ युक्तिरिति । षष्ठीति स्त्रीलिङ्गविशेषणत्वादिति भावः । निपातनादिति । तृतीयान्तस्य समासे तृतीयाया लुक्यस्यैत्वमित्यर्थः । तृतीयायाः स्थाने एतद्विधाने तु अन्तरङ्गबाधे मानाभावादिनादेशोऽन्यस्य स्याद् लुग्बाधे मानाभावाच्च वृध्यापत्तेश्च । अत एवेत्वं नोक्तमिति बोध्यम् । अत्र स्थानसामीप्यादयः षष्ठ्यर्थसम्बन्धानिरूपका न तु षष्ठ्यर्था इति न मतुप्सूत्रस्यभाष्यविरोधः । अत एवात्र भगवता सप्तम्यन्तेन तृतीयान्तेन वा समासो दर्शितः न तु समानाधिकरणबहुव्रीहिः । तद्ध्वनयतोक्तं स्थाननिमित्तसम्बन्धेत्यर्थइति । नन्वादेशविधौ स्थानशब्दाभावेन कथं स्थाननिमित्तः सम्बन्धो ऽत आह यथेति । तथा च देवदत्तस्य यज्ञदत्त इत्युक्ते किमित्याकाङ्क्षावशात्पुत्र इत्यध्याहारो यथा तथा प्रदेशेषु स्थानपदाध्याहारेण वाक्यैकदेशन्यायेन वा बोध इति भावः ॥ अर्थे चेति । वाचकत्वसम्बन्धेनेति भावः । अस्ते : प्रसङ्ग इत्यस्य व्याख्या अस्तेः प्राप्ताविति । प्रयोगइति । स्वाभाविक इत्यनुषज्यते शब्दनित्यत्वभङ्गापत्त्या स्थानशब्दो निवृत्तिवाची नोपपद्यते इति भावः । रम्विधौ रोपधघटितस्यार्थे रमूर्घाटतइत्यर्थे न क्षतिरित्यत्रारुचिः । आरब्धे चेति । तत्रातिप्रसङ्गवारणाय व्याख्यानत इत्यतदाश्रयेण तेनैव सिद्धौ परिभाषेयं व्यर्थेति भावः । षष्ठीदण्डकपाठो ऽन्यत्रशेषः भाष्ये (षष्ठ्यर्था इति) । षष्ठीप्रयोजनकास्तदर्थान्वयिनः शब्दाः शतमित्यर्थः । यद्वा । षष्ठ्यर्थानां

स्यादिति तच्चाऽन्तरेण यत्नं न सिध्यतीति षष्ठ्याः स्थानेयोगवचनं नियमार्थम् । एवमर्थमिदमुच्यते । अस्ति प्रयोजनमेतत् किं तर्हीति । अवयवषष्ठ्यादिष्वतिप्रसङ्गः शासो गोह इति * । अवयवषष्ठ्यादयस्तु न सिध्यन्ति । तत्र को दोषः । शास इदङ्हलोरिति । शासेश्चान्त्यस्य स्यादुपधामात्रस्य च ऊदुपधाया गोह इति गोहेश्चान्तस्य स्यादुपधामात्रस्य च अवयवषष्ठ्यादीनां चाऽप्राप्तिर्योगस्याऽसन्दिग्धत्वात् * । अवयवषष्ठ्यादीनां च नियमस्याप्राप्तिः । किं कारणम् । योगस्यासन्दिग्धत्वात् । संदेहे नियमः । न चावयवषष्ठ्यादिषु संदेहः । किं वक्तव्यमेतत् । नहि । कथमनुच्यमानं गंस्यते । लौकिको ऽयं दृष्टान्तः । तद्यथा । लोके कश्चित् कं चित् पृच्छति । ग्रामान्तरं गमिष्यामि पन्थानं मे भवानुपदिशत्विति । स तस्मायाचष्टे अमुष्मिन्नवकाशे हस्तदक्षिणो ग्रहीतव्यः अमुष्मिन्नवकाशे हस्तवाम इति । यस्तत्र तिर्यक्पथो भवति न तस्मिन् संदेह इति कृत्वा नासावुपदिश्यते । एवमिहापि संदेहे नियमः । न चाऽवयवषष्ठ्यादिषु संदेहः । अथ वा स्थाने अयोगा स्थानेयोगा । किमिदमयोगेति । अव्यक्तयोगा अयोगा । अथवा योगवती योगा । का पुनर्योगवती । यस्या बहवो योगाः । कुत एतत् । भूम्नि हि मतुब् भवति । विशिष्टा वा षष्ठी स्थानेयोगा । अथ वा किंचिल्लिङ्गमासज्य वक्ष्यामि इत्थंलिङ्गा षष्ठी स्थानेयोगा भवतीति न च तल्लिङ्गमवयवष-

---

ति । षष्ठीदण्डकपाठाश्रयेणैतदुक्तम् । यावन्तो वेति । शब्दे यावतां सम्भव इत्यर्थः । अवयवेति । नियमेन सबन्धान्तराणां निदर्शनादिति भावः । उपधामात्रस्य चेति । शासिना सम्बन्धाभावात् पचादिसम्बन्धिना ऽपीत्यर्थः । तत्र ह्यनिदितामित्यत उपधाया इत्यनुवर्तते । असन्दिग्धत्वादिति । अनियमप्रसङ्गे हि नियमः क्रियते न तु प्रागेवावस्थिते नियमे । हस्तदक्षिण इति । हस्तो दक्षिणो यस्येति बहुव्रीहिः । भाष्यकारवचनात्सर्वनाम्नो ऽपि परनिपातः । अयोगेति । योगमन्तरेण षष्ठ्या एवाऽभावाद्विशिष्टो योगो यस्या नास्तीति सामर्थ्यात्प्रतीयते । योगवतीति । षष्ठ्या अवश्यम्भावी योग इति भूम्नि सामर्थ्याद् मत्वर्थीयोऽकारः । किंचिल्लिङ्गमिति । ककारादिकम् । अधि-

---

शतमेव तेषां शतत्वमर्थसिद्धं बोध्यम् । एकशतमिति । निर्णयेनाभिधाय पुनः सन्दिग्धाभिधानमयुक्तमत आह वाशब्दइति । वाशब्दो वाक्यालङ्कारे । भाष्ये ( प्राप्नुवन्तीति ) तेषां सर्वेषां बोधः प्राप्नोतीत्यर्थः ॥ नियमेन प्रकृतसूत्रेण । शासिनेति । तस्य स्थानषष्ठीत्वेनोपधाविशेषणे सामर्थ्याभावादिति भावः । भाष्ये ( ऽवयवषष्ठ्यादीनामिति ) । अवयवषष्ठ्यादीनामिष्टानां सिद्धये नियमाप्राप्तिरिति वार्त्तिकार्थः । दक्षिणोयस्येति । दक्षिणो हस्तो यस्य सन्निहित इत्यर्थः । तिर्यक्पथः । अनृजुमार्ग इत्यर्थः । पूर्वपश्चिमान्यतरादिशि गच्छतो दक्षिणोत्तरमार्ग इति यावत् ॥ विशिष्टइति । निर्णयाविशिष्ट इत्यर्थः । अयमेव भाष्ये व्यक्तशब्दस्यार्थः । अत्र पक्षे योगशब्दः कर्मव्युत्पत्त्या सम्बन्धिपरः । योगवतीति पर्याय्यवमेव । स्थानरूपसम्बन्धिनियमार्थत्वादस्य । विशिष्टावेति वार्त्तिकं व्याचष्टे अथवा किंचिदिति ॥ भाष्ये ( कार्येणैकदेशस्यइति ) । इदञ्च यथोद्देशपक्षे स्पष्टमेव कार्यकालेपि स्वविषयसर्वशास्त्रैकवाक्यत्वादेवमुक्तिः । पठितदेशस्थेनैव तत्र तत्र तद्बुद्धिजननात् दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेतस्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकं न तु तत्पदेप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशे गमनमस्तीति बोध्यम् । पठितदेशस्थत्वमेव सर्वथा बोधयितुमेकदेशस्य इत्यु-

ष्ठ्यादिषु करिष्यते। यद्येवं शास इदङ्हलोः। शा हौ शासिग्रहणं कर्तव्यं स्थानेयोगार्थं लिङ्गमासङ्क्ष्यामीति। न कर्तव्यम्। यदेवाऽदः पुरस्तादवयवषष्ठ्यर्थं प्रकृतम्। एतदुत्तरत्राऽनुवृत्तं सत् स्थानेयोगार्थं भविष्यति। कथम्। अधिकारो नाम त्रिप्रकारः। कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति। यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माऽभिज्वलयति। अपरो ऽधिकारो यथा रज्ज्वा अयसा वा बद्धं काष्ठमनुकृष्यते तद्वदनुकृष्यते चकारेण। अपरो ऽधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योगे योगे उपतिष्ठते। तद्यदेष पक्षः अधिकारः प्रतियोगं तस्याऽनिर्देशार्थ इति। तदा हि यदेवाऽदः पुरस्तादवयवषष्ठ्यर्थम् एतदुत्तरत्राऽनुवृत्तं सत् स्थानेयोगार्थं भविष्यति। संप्रत्ययमात्रमेतद्भवति। नह्यनुच्चार्य शब्दं लिङ्गं शक्यमासङ्क्तुम्। एवं तर्ह्यादेशे तल्लिङ्गं करिष्यते यत्प्रकृतिमास्कन्त्स्यति। यदि नियमः करिष्यते। यत्रैका षष्ठी अनेकं च विशेष्यं तत्र न सिध्यति। अङ्गस्य हलः। अणः संप्रसारणस्येति। हलपि विशेष्यो ऽणापि विशेष्यः संप्रसारणमपि विशेष्यम्। असति पुनर्नियमे कामचारः। एकया षष्ठ्या अनेकं विशेषयितुम्। तद्यथा। देवदत्तस्य पुत्रः पाणिः कम्बल इति। तस्मान्नार्थो नियमेन। ननु चोक्तम् एकशतं षष्ठ्यर्थाः। यावन्तो वा सन्ति ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्तीति। नैष दोषः। यद्यपि लोके बहवो ऽभिसंबन्धा आर्था यौनाः मौखाः स्रौवाश्चेति। शब्दस्य तु शब्देन को ऽन्यो ऽभिसंबन्धो भवितुमर्हति अन्यदतः स्थानात्। शब्दस्यापि शब्देनानन्तरादयो ऽभिसंबन्धाः। अस्तेर्भूर्भव-

---

कारो नामेति। पारार्थ्यसाम्यात्परिभाषाऽप्यधिकार इत्युच्यते। कश्चिदिति। परिभाषारूप इत्यर्थः। चकारेणेति। यथा सहस्य स इत्यविशेषेण ग्रन्थान्ताऽधिके चेत्यादावनुकृष्यते। सम्प्रत्ययमात्रमिति। स्वरितत्वप्रतिज्ञानादुत्तरेषु योगेषु तस्य शब्दस्याऽनुमानं भवतु लिङ्गासङ्गस्त्वनुच्चारितस्य कथं स्यादित्यर्थः। एवं तर्हीति। आदेशे लिङ्गाऽसङ्गात्तस्य च षष्ठ्यभावात्तत्सम्बन्धिनः स्थानिनो लिङ्गकार्यं फलिष्यतीत्यर्थः। यदीति। अङ्गस्येति स्थानषष्ठीत्वाद्विशेषणविशेष्यभावो न प्रकल्प्यत इत्यर्थः। देवदत्त-

---

कम्। तस्यानिर्देशार्थ इति। अधिक्रियमाणस्यानुच्चारणार्थ इत्यर्थः। यदेवाद इति। षष्ठ्यधिकार आश्रयिष्यत इत्यर्थः॥ अनुमानमिति। उच्चारित एव प्रत्यायक इत्यणुदित्सूत्रस्थभाष्यविरुद्धमिदम्। तस्माच्छ्रोतुरनुमानपूर्वकमुच्चारणं तस्याचार्यस्येत्यर्थः। शास्त्रप्रणयनकालिकतत्कृतलिङ्गासङ्ग एवैतच्छास्त्रप्रवृत्त्युपयोगी नान्यकृतोऽतिप्रसङ्गात्। पाणिनिना त्वनुच्चारणाच्छास्त्रप्रणयनकाले लिङ्गासङ्गः कर्तुमशक्य इति भावः। भाष्ये (संप्रत्ययमात्रमिति)। स्वरितत्वबलात्स एवोत्तरत्रेति ज्ञानमात्रमाचार्यकृतमित्यर्थः। आसंक्तुमित्यस्याचार्येणेति शेषः॥ यदि नियम इति। स्थाननिमित्तसम्बन्धार्थकत्वनियम इत्यर्थः। अनेकं विशेष्यम्। प्रसङ्गरूपमवयवरूपञ्च। तत्रायं शाहावित्यादौ। अन्यत्तु भाष्ये एव वक्ष्यति। (तत्र न सिध्यतीति)। अवयवादिनिमित्तसंबन्धार्थकत्वं न सिध्यतीत्यर्थः। अणपीति। हल इति सूत्रे तृतीये दीर्घव्यावृत्त्यर्थमणग्रहणस्यापि सम्बन्धादिति भावः। तत्रालोन्त्यस्येत्येकवाक्यतयाङ्गावयवाद्धलः परं यदङ्गान्त्यावयवाणूरूपं सम्प्रसारणं तस्य दीर्घ इति सूत्रार्थः। तत्राङ्गस्येत्यस्य शाहावित्यादौ स्थानषष्ठीत्वं हलादिनिरूपितमवयवषष्ठीत्वं न

तीति संदेहः स्थाने अनन्तरे समीपे इति । संदेहमात्रमेतद्भवति । सर्वसंदेहेषु चेदमुपतिष्ठते । व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणमिति । स्थानइति व्याख्यास्यामः । न तर्हीदानीमयं योगो वक्तव्यः । वक्तव्यश्च । किं प्रयोजनम् । षष्ठ्यन्तं स्थानेन यथा युज्येत यतः षष्ठ्युच्चारिता । किं कृतं भवति । निर्दिश्यमानस्यादेशा भवन्तीत्येषा परिभाषा न कर्तव्या भवति । षष्ठी स्थानेयोगा ॥

**स्थानेऽन्तरतमः ॥ ५० ॥** किमुदाहरणम् । इको यणचि । दध्यत्र मध्वत्र । तालुस्थानस्य तालुस्थानः । ओष्ठस्थानस्य ओष्ठस्थानो यथा स्यादिति । नैतदस्ति । संख्यातानुदेशेनाप्येतत्सिद्धम् । इदं तर्हि तस्थस्थमिपां तांतंताम इति । एकार्थस्यैकार्थः । द्व्यर्थस्य द्व्यर्थः । बह्वर्थस्य बह्वर्थो यथा स्यादिति । ननु च

---

स्येति । सम्बन्धसामान्यमुपक्रस्यते पश्चात्पदान्तरसन्निधानाद्विशेषावसायः। स्थानइति । अन्तरङ्गत्वाल्लक्ष्योपलक्षणाद्वेति भावः । यतः षष्ठीति । तेन पादः पदित्यस्य ऽयमर्थः । पादन्तस्याङ्गस्य यो ऽवयवः पाच्छब्दः सूत्रे षष्ठ्या निर्दिष्टस्तस्य शब्दस्य पच्छब्द आदेशो भवति न तु प्रतीयमानस्य पदान्तस्य । अस्यैव सूत्रस्य निर्दिश्यमानस्यादेशा भवन्तीत्ययमर्थः । षष्ठीति षष्ठ्यन्तं गृह्यते तेन षष्ठ्यन्तमेव निर्दिश्यमानं स्थानेन युज्यते न तु प्रतीयमानमित्यर्थः । अलोन्त्यस्यादेः परस्येत्येतत्तु वचनसामर्थ्यान्न बाध्यते ॥ ४९ ॥

स्थाने ॥ किमुदाहरणमिति । क्वचिल्लक्षणान्तरेणेष्टं सिद्धमिति प्रश्नः । इको यणचि, दध्यत्रेति । अस्य सूत्रस्य लक्षणमप्युदाहरणं प्रयोगोऽपीत्युभयोपन्यासः । इको ह्रस्वादिभेदात् षट्षष्टिर्यणस्तु सप्तेति वैषम्यात्सङ्ख्याताऽनुदेशो न सिध्यतीत्यर्थः । नैतदस्तीति । प्रत्याहारपाठे शब्दतस्साम्यमस्तीति भावः । घस्लादेश इत्यादौ लकारोपि ऌकारस्यादेशो दृश्यत इति ऌकारस्य स्थानित्वाभावो नाशङ्कनीयः । एकार्थस्येति । सादृश्यहेतुधर्मोपलक्षणमेतत् । तेन प्रत्यक्त्वादयोपि धर्मा गृह्यन्ते ।

---

सिध्येदित्यर्थः । स्थानेति । तस्माद्धल इत्यादिना ऽवयववाचकेन विशेषणविशेष्यभावो न स्यादित्यर्थः ॥ विशेषावसायइति । तत्तदन्यव्यर्थकपदकल्पनयेति भावः । आर्थाः स्वस्वामित्वादयः । यौनाः, पितृत्वादयः । मौखा, गुरुशिष्यभावः । स्रौवाः ऋत्विक्त्वादयः ॥ स्थानेअनन्तरे इत्यादि । स्थानार्द्ररूपसम्बन्धिसन्देह इत्यर्थः । आनन्तर्यमव्यवधानम् सामीप्यं साधारणम् । अन्तरगत्वादिति । स्थानशब्दोऽर्थवाची प्रसंगवाची वोभयथाप्यन्तरङ्गत्वं स्थानिवदादेश इति ज्ञापकमप्यत्र बोध्यम् । निर्दिश्यमानामिनि । उच्चार्यमाणमित्यर्थः । निर्दिश्यमानं षष्ठ्यन्तमेवेत्यन्वयः । निर्दिश्यमानपदस्य चाध्याहार इति भावः । न बाध्यंत इति । किं तु स्वव्यवस्थापकत्वेनाश्रीयत इत्यर्थः । एवमनेकाल्सूत्रे सर्वाप्येतत्परिभाषाबोधित एव गृह्यते । पद्न्न इत्यादावपि आदेशः पाणिनिकृतस्थान्युच्चारणानुमानाद्व्यवस्थार्थत्वाद्वा न दोषः । यत्त्वलोन्त्यस्यादेः परस्येत्यम् एतद्बाधकाविति तत्तु उदस्था इति पादः पदिति सूत्रस्थभाष्यविरुद्धम् ॥ व्यवस्थापकत्वे सम्भवति बाधकत्वकल्पनानौचित्यमस्तञ्च ॥ ४९ ॥

स्थानेन्त ॥ इतिप्रश्नइति । एवञ्च परोक्तोदाहरणदूषणायायं प्रश्नो न तूदाहरणासम्भवकृत इति भावः । उदाहरणप्रश्ने इकोयणचीत्यस्योल्लेखो व्यर्थोत आह अस्य सूत्रस्येति । समान्यतो ज्ञातस्य विशेषाकारेण यत्र प्रतिपत्तिस्तदुदाहरणमिति भावः । षट्षष्टिरिति । ऌवर्णस्य दीर्घाभावात् दीर्घप्लुतऌकारस्य प्लुतऌकारस्य चानुनासिकस्यादर्शनादिदं चिन्त्यम् । सप्तेति । रेफस्य सानुनासिकस्याभावादिति भावः । इदम्

एतदपि संख्यातानुदेशेनैव सिद्धम्। इदं तर्ह्यकः सवर्णे दीर्घ इति। दण्डाग्रम्। क्षुपाग्रम्। दधीन्द्रो मधूष्णः। कण्ठस्थानयोः कण्ठस्थानस्तालुस्थानयोस्तालुस्थान ओष्ठस्थानयोरोष्ठस्थानो यथा स्यात्। अथ स्थानइति वर्तमाने पुनः स्थानग्रहणं किमर्थम्। यत्राऽनेकमान्तर्यं तत्र स्थानत एवान्तर्यं बलीयो यथा स्यात्। किं पुनस्तत्। चेता स्तोता। प्रमाणतो ऽकारो गुणः प्राप्नोति। स्थानत एकारौकारौ। पुनः स्थानग्रहणादेकारौकारौ भवतः। अथ तमग्रहणं किमर्थम्। झयो होऽन्यतरस्यामित्यत्र सोष्मणः सोष्माणः इति द्वितीयाः प्रसक्ताः। नादवतो नादवन्त इति तृतीयाः प्रसक्ताः। तमग्रहणाद्ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः। वाग्घसति त्रिष्टुब्भसति। किमर्थं पुनरिदमुच्यते। स्थानिन एकत्वनिर्देशादनेकादेशनिर्देशाच्च सर्वप्रसङ्गस्तस्मात् स्थानेऽन्तरतमवचनं नियमार्थम् *। स्थान्येकत्वेन निर्दिश्यते अक इति अनेकश्च पुनरादेशः प्रतिनिर्दिश्यते दीर्घ इति। स्थानिन एकत्वनिर्देशादनेकादेशनिर्देशाच्च सर्वप्रसङ्गः। सर्वे सर्वत्र प्राप्नुवन्ति इष्यन्ते चान्तरतमा एव स्युरिति तच्चान्तरेण यत्नं न सिध्यति तस्मात् स्थानेऽन्तरतमवचनं नियमार्थम्। एवमर्थमिदमुच्यते। अस्ति प्रयोजनमेतत्। किं तर्हीति। यथा पुनरियमन्तरतमनिर्वृत्तिः सा किं प्रकृतितो भवति स्थानिन्यन्तर-

---

यत्रानेकमिति। स्थानग्रहणेऽनुवर्तमाने वाक्यभेदः क्रियते। स्थाने ऽन्तरतमो भवति यत्र चाऽनेकमान्तर्यमस्ति तत्र स्थानकृतमेवान्तर्यमाश्रीयतइति। वाक्यभेदस्य च तमब्ग्रहणमेव लिङ्गम्। स्थानकृतएव हि सादृश्ये गृह्यमाणे सादृश्यान्तरपरित्यागात्तमग्रहणमनर्थकमेव स्यात्। सोष्मण इति। ऊष्मत्वगुणयुक्तस्येत्यर्थः। तमग्रह-

---

च्चिन्त्यम्। अणुदित्सूत्रेणग्रहणसामर्थ्येन यदंशे गुणभेदकत्वस्यैव न्याय्यत्वेन विधीयमानत्वेन च तेषामग्रहणात्। तत्प्रत्याख्यानेपि आरम्भप्रत्याख्यानयोः फलाभेदाय भेदकत्वस्यैवाश्रयणेन तेषामग्रहणम्। अत एव मतोरस्य नानुनासिको वकार इति। संख्यातानुदेशः क्रमेणान्वयः। शब्दतइति। अयं भावः। यथा स्यतासी लृलुटोरित्यत्रार्थवैषम्येपि बोधकशब्दसाम्याद्यथासंख्यं तथा इक्पदयण्पदाभ्यामनेकोपस्थितावपि बोधकशब्दतः साम्यमस्त्येवेति न दोष इति। न च ऋकारे लृकारस्य लृकारे रेफस्य चापत्तिः। ऋलिल्लादितोभेदेन निर्देशात्। सावर्ण्यानित्यत्वेनात्र ऋलृभ्यां न ऋकारलृकारयोर्ग्रहणमिति नोक्तदोष इति तदाशयात्। ननु लृकारोदाहरणाभावात्कथं यथासंख्यमत आह घस्लोति। वस्तुतः प्रतिपत्तिकालिकं संख्यासाम्यमेव यथासंख्यप्रवृत्तौ नियामकं न तु लक्ष्यसंस्कारकालिकमपीति प्रत्याहाराह्निके भाष्ये स्पष्टत्वान्नायं दोष इति बोध्यम्। अननुनासिकस्थाने सानुनासिकार्थमपि न तन्नैतदुपयोगः। विधेये ऽणि गुणभेदकपक्षस्यैव सत्वेन तत्र तदप्राप्तेः। आदेशानां तत्स्थानापन्नत्वेन न तदर्थत्वं किं तु स्वभावत एव शब्दार्थसम्बन्धानां नित्यत्वादित्याशयेन भाष्ये (एकार्थइति)। तावन्मात्रोक्तौ तसस्तमपि प्राप्नोति थसस्तामपीत्यत आह सादृश्येति। उत्तमे प्रत्यक्षरूपो ऽहङ्कारास्पदचेतनधर्मो मध्यमे अहङ्कारनास्पदचेतनधर्मः। परत्वं प्रथमे स्वनियतम्॥ भाष्ये (अनुवर्त्तमानेइति)। एकदेशे स्वरितत्वप्रतिज्ञानादिति भावः। वाक्यभेदइति। अनुवृत्तप्रसंगवाचिस्थानशब्देनैकं वाक्यं ताल्वादिवाचीहत्यस्थानशब्देनापरमत्र च स्थानेइति तृतीयार्थे सप्तमीति भावः। तमग्रहणमनर्थकमिति। प्रसङ्गे स्थानकृतान्तर्यवानित्यर्थेनैव सिद्धे स्थानेग्रहणं न वाक्यभेदे मानमितीदमुक्तम्॥ तथैकवाक्यतायान्तु स्थानकृतान्तर्याभावे तद्धसतीत्यादावव्यवस्थैव स्यात्। वाक्यभेदे तु सादृश्यान्तरमा-

तमे षष्ठीति आहोस्विदादेशतः स्थाने प्राप्यमाणानामन्तरतम आदेशो भवतीति। कुतः पुनरियं विचारणा। उभयथा हि तुल्या संहिता। स्थानेऽन्तरतम उरण् रपर इति। किं चातः। यदि प्रकृतितः। इको यणचीति यणां ये अन्तरतमा इकस्तत्र षष्ठी यत्र षष्ठी तत्रादेशा भवन्तीतीहैव स्यात्। दध्यत्र मध्वत्र। कुमार्यर्थं ब्रह्मबन्ध्वर्थमित्यत्र न स्यात्। आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवतीति। तथा इको गुणवृद्धी गुणवृद्ध्योर्ये अन्तरतमा इकस्तत्र षष्ठी यत्र षष्ठी तत्रादेशा भवन्तीतीहैव स्यात्। नेता लविता नायको लावकः। चेता स्तोता चायकः स्तावक इत्यत्र न स्यात्। आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी यत्र षष्ठी तत्रादेशा भवन्तीति

---

णादिति। ईषत्सदृशेऽपि लोके सदृशव्यवहारदर्शनादिह तमब्ग्रहणं कृतम्। किमर्थमिति। यदीदं नोच्येत तदा किं स्यादिति प्रश्नः। स्थानिन इति। यद्यपि अक इत्यनेन स्थानिनो बहव उपात्तास्तथापि प्रयोगे एकैकः स्थानी तस्य पर्यायेण बहवो दीर्घा आदेशाः प्राप्नुवन्तीत्यर्थः। यथा पुनरिति। येन प्रकारेण संहितापाठलक्षणेनेत्यर्थः। प्रतिसूत्रं तु विच्छिद्यपाठे संशयाभावः। पदप्रकृतिः संहितेति संहिताया एव नित्यत्वात्ततः पदापोद्धारे क्रियमाणे ऽन्तरतमशब्दः किं सप्तम्यन्तोऽपोद्ध्रियते अथ प्रथमान्त इति प्रश्नः। तत्र सप्तम्यन्तपक्षे षष्ठीति वर्तते अन्तरतमो य आदेशस्य स्थानी तत्रैव षष्ठी यत्रैव षष्ठी तत्रादेश इति प्रकृतिर्नियम्यते। प्रथमान्तपक्षे तु अन्तरतम आदेशो भवतीत्यादेशो नियम्यते। इहैवेति। यणामर्धमात्रिकाणां सदृशा इको मात्रिका न तु दूरविप्रकृष्टा दीर्घा इति भावः। आदेशनियमपक्षे चैतदुदाहरणात्वन दूषितं प्रकृतिनियमपक्षे तु भवत्येवैतदुदाहरणम्। चायकइति। अचोञ्णितीत्यत्रापि अयमेव दोष इत्युपन्यासः। ऋवर्णस्येति। ऋकारस्य ह्रस्वस्यैव गुणः स्याद्

---

दाय तम व्यवस्थेति भावः॥ उष्मत्वेति॥ सदृशब्दप्रयोगोपपत्तये धर्मपर ऊष्मशब्द इति भावः॥ नन्वनन्यथासिद्धोदाहरणरूपप्रयोजनोक्तेः पुनः प्रश्नानुपपत्तिरत आह यदीति। सूत्राभावे किमनिष्टमिति प्रश्नतात्पर्यमिति भावः। बहवइति। एवञ्चैकस्वनिर्देशादित्यनुपपन्नमिति भावः। प्रयोगइति। अक इत्येतद्बोध्यः स्थानी प्रयोगे एकत्वविशिष्ट उच्चार्यत इति भाष्याक्षरार्थः। यद्यपि पूर्वपरयोरित्युक्तेरेकः स्थानीत्ययुक्तं तथापि तत्समुदायाभिप्रायेणेदम्। युगपदेककर्तृकं सर्वोच्चारणमशक्यमत आह पर्यायेणेति। येन प्रकारेण संहितापाठलक्षणेनेतिपाठः। अनेन संहितापाठ एव पूर्वस्थित इत्युक्तम्। ननु अस्तु तर्हि विच्छिद्यपाठोऽत आह पदप्रकृतिरिति। षष्ठीतत्पुरुषः। बहुव्रीहिरित्यन्ये। तत्प्रकृतमन्याननुगुणम्। भाष्ये [ सा किं प्रकृतितइति ] सेतीयमित्यस्य प्रतिनिर्देशः। इदंशब्दोऽपि यच्छब्दार्थः क्वचित्। केचित्तु यथा पुनरिति येत्यर्थे ऽव्ययसमुदाय इत्याहुः। अन्तरतमशब्दार्थस्य विशेषणत्वेन या प्रतिपत्तिः सा किं सौत्रस्थानशब्दस्य तिष्ठन्त्यस्मिन्नादेशा इत्यधिकरणव्युत्पत्तया ऽन्तरतमे स्थानिनीत्यर्थात्। स्थानिनं प्रति उतादेशं प्रतीत्यर्थः। षष्ठीति वर्त्ततइति। अन्तरतमे ऽर्थादादेशस्य स्थानिनि षष्ठी उपसंहर्त्तव्येत्यर्थः। तत्रैव षष्ठीत्यादि तु पर्यवसितार्थकथनम्॥ ननु भाष्ये संख्यातानुदेशेनैतदुदाहरणस्य दूषितत्वात् पुनरुपन्यासोऽयुक्तोऽत आह आदेशेति। भवत्येवैतदिति। दीर्घव्यावृत्तये इत्यर्थः। भाष्ये [ इको गुणवृद्धी इति ] विद्ध्येकवाक्यतापन्नस्य खण्ड इति बोध्यम्। नन्विको गुणवृद्धीत्युक्त्वा चायक इत्युदाहरणमसङ्गतमत आह। अचइति। केचित्तु इको यत्र गुणवृद्धी इष्टे तत्रेति भाष्यार्थान्न दोष इत्याहुः। ननु ऋकारस्येग्घोरन्तर्भावात्पुनरुपन्यासो वृथेत्यत आह ऋकारस्येति। एवञ्च सप्तम्यन्तपक्षेऽपि लक्ष्यासिद्धिर्दुष्ट इति भावः॥ यावृद्धइति।

सर्वत्र सिद्धं भवतीति । तथा ऋवर्णस्य गुणवृद्धिप्रसङ्गे गुणवृद्ध्योर्यदन्तरतमभृवर्णं तत्र षष्ठी यत्र षष्ठी तत्रादेशा भवन्तीतीहैव स्यात् । कर्ता हर्ता । आस्तारकः । निपारक इति । आस्तरिता निपरिता कारको हारक इत्यत्र न स्यात् । आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवतीति । आदेशतोऽन्तरतमनिर्वृत्तौ सत्यामयं दोषः । वान्तो यि प्रत्यये । स्थानिनिर्देशः कर्तव्यः । ओकारौकारयोरिति वक्तव्यम् । एकारैकारयोर्मा भूदिति । प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यां वान्तादेशस्य एक्षु या अन्तरतमा प्रकृतिस्तत्र षष्ठी यत्र षष्ठी तत्रादेशा भवन्तीत्यन्तरेण स्थानिनिर्देशं सिद्धं भवति । आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः । कथम् । वान्तग्रहणं न करिष्यते । यि प्रत्यये एचोऽयादयो भवन्तीत्येव । यदि न क्रियते । चेयं जेयमित्यत्रापि प्राप्नोति । क्षय्यजय्यौ शक्यार्थे इत्येतन्नियमार्थं भविष्यति । क्षिज्योरेवैच इति । तयोस्तर्हि शक्यार्थादन्यत्रापि प्राप्नोति । क्षेयं पापं जेयो वृषलः । उभयतो नियमो विज्ञास्यते । क्षिज्योरेवैचस्तयोश्च शक्यार्थएवेति । इहापि तर्हि नियमान्न प्राप्नोति । लव्यं पव्यम् । अवश्यलाव्यम् । अवश्यपाव्यमिति । तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः । यथाजातीयकः क्षिज्योरेच् । कथंजातीयकः क्षिज्योरेच् । एकारः । एवमपि रायमिच्छति रैयतीत्यत्रापि प्राप्नोतीति । रायिच्छान्दसः । दृष्टानुविधि-

---

दीर्घस्यैव च वृद्धिरिति विशेषप्रदर्शनाय ऋवर्णस्य पृथगुपन्यासः । वान्तो यीति । एच इत्यनुवर्तनात् सर्वेषां वान्तादेशप्रसङ्गः । यदा त्वेवं व्याख्यायते यादृशो वान्त आदेशः पूर्वं दृष्टस्तादृशो यि प्रत्यये भवति । ओकारस्थानिको ऽवादेशो दृष्ट औकारस्थानिकश्चावादेश इति तदा न दोषः । उभयत इति । योगविभागेनेति भावः । इहापीति । सामान्येन नियम इति प्रश्नः । तुल्यजातीयस्येति । कण्ठ्यतालव्यसंयत्यर्थः । रायमिच्छतीति । एकारस्यैव नियमेन व्यावृत्तिः कृता नत्वैकारस्येति प्रश्नः । छान्दस इति । क्यजन्तस्य रैशब्दस्य भाषायां नास्ति प्रयोगः । अन्यत्र तु विद्यत एवेति व्याचक्षते । क्यच् त्वैकारान्तान्नास्ति गोसमानाक्षरनान्तादिति वचनात् । अन्ये

---

अचीत्यनुवृत्त्याचि परतो यस्य यो वान्तो दृष्टस्तस्य यि प्रत्यये स इति व्याख्येयमित्यर्थः । अन्ये तु वाच्यवृत्त्येवृशार्थस्यालाभात् यि प्रत्यये इति दृष्ट्वाऽचीत्यस्यासंबन्धाच्च भाष्योक्तं वचनमेव न्याय्य इत्याहुः । भाष्ये । ( क्षिज्योरेवेति ) ह्रस्वनिर्देशात् क्षी इति दीर्घान्तस्य इत्यस्य च नेदं निपातनमिति बोद्धव्यम् । योगविभागेनेति । विनिगमनाविरहादुभयभूयांस्यादाविवोभयतो नियम इत्यन्ये । भाष्ये ( तुल्यजातीयस्येति ) अन्यथा यि प्रत्यय इति विधिवैयर्थ्यं स्यादिति भावः । तत्त्वञ्च यद्येवं तर्हि ऐकारे आयादेशः स्यादत आह कण्ठ्येति । भाष्य एकारग्रहणमुपलक्षणमिति भावः । एतदनभिज्ञः शङ्कते । भाष्ये (रायमिच्छतीति । तदाह एकारस्यैवेति । एकारस्य तालव्यत्वमेवेति भाष्याशयः ॥ क्यजन्तेति । रा. रैशब्दो यि यकारादिप्रत्ययं इति भाष्यार्थ इति भावः । भाष्ये विसर्गरहित एव पाठः । एतेन रायिरित्युक्तम आस्यस्य दुर्लभत्वाद् रैशब्दशाब्दिक् दुर्लभ इत्यपास्तम् । नास्ति प्रयोग इति । अनभिधानादिति भावः । क्य च्छिस्यादिवचनादित्यन्तो ग्रन्थस्तत्संयकीयमतत्वात् । अत एव नः क्ये इति सूत्रे वाच्यतीति भाष्ये प्रयुक्तम् । अन्यास्त्विति ।

छन्दसि भवति । ऊदुपधाया गोहः । आदेशतोऽन्तरतमनिर्वृत्तौ सत्यामुपधाग्रहणं कर्तव्यम् । प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यामूकारस्य गोहो याऽन्तरतमा प्रकृतिस्तत्र षष्ठी यत्र षष्ठी तत्राऽऽदेशा भवन्तीत्यन्तरेणोपधाग्रहणं सिद्धं भवति । आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः । क्रियते एतन्न्यास एव । रदाभ्यां निष्ठातो नः पूर्वस्य च दः । आदेशतोऽन्तरतमनिर्वृत्तौ सत्यां तकारग्रहणं कर्तव्यम् । प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यां नकारस्य निष्ठायां या अन्तरतमा प्रकृतिस्तत्र षष्ठी यत्र षष्ठी तत्रादेशा भवन्तीत्यन्तरेणापि तकारग्रहणं सिद्धं भवति । आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः । क्रियत एतन्न्यास एव । किं पुनरिदं निर्वर्तकम् । अन्तरतमा अनेन निर्वर्त्यन्ते आहोस्वित् प्रतिपादकम् । अन्येन निर्वृत्तानामनेन प्रतिपत्तिः । कश्चात्र विशेषः । स्थानेऽन्तरतमनिर्वर्तके सर्वस्थानिनिवृत्तिः * । स्थानेऽन्तरतमनिर्वर्तके सर्वस्थानिनां निवृत्तिः प्राप्नोति ।

---

तु भाषायां रैशब्दस्य प्रयोग एव नास्तीत्याहुः । गोह इति । एतत्परिभाषोपस्थाने सति मोह इति षष्ठ्यन्तरतमे स्थानिन्युपसंह्रियते । न्यास एवेति । अन्यथा परत्वादलोऽन्त्यस्येत्यनेन गोह इति षष्ठ्यन्तेऽन्त्युपसंह्रियेतेति भावः । रदाभ्यामिति । चरितमित्यादौ व्यवधानान्न भवति । निष्ठाया इति । षष्ठ्यास्तकार एवोपसंहारात्तस्यैवानन्तर्येण नत्वविधानात् । क्रियत एतन्न्यास एवेति । अन्यथा हि भिन्नवद्भ्यामित्यत्र दकारस्य नत्वं स्यात् । स हि नकारस्य सुसदृशः । यथा तृतीयास्तथा पञ्चमा इति वचनात् । किं पुनरिति । किं स्वतन्त्रमिदं लक्षणम्, आहोस्विल्लक्षणान्तरेणाभिनिर्वृत्तानामनेन नियमः क्रियते, अथ लक्षणान्तरशेषभूतमिति प्रश्नः । स्थानिनिवृत्तिरिति । दधिशब्दस्य यदि दधिशब्द आदेशः क्रियेत तदा प्रयोजनाभावः । भिन्नरूपस्त्वादेशस्तदर्थस्याऽप्रत्यायक इति शब्दव्यवहारोत्साद एवेति भावः । अ-

---

अघाह्यचिवीजन्तु रायमिच्छतीति भाष्यप्रयोगविरोधः । न हि विग्रहश्छन्द इति बोध्यम् । भाष्ये ( धी-स्यस्य वैयर्थ्याच्च )। भाष्ये गोहः संबन्धिन ऊकारस्य यान्तरतमा प्रकृतिरित्यन्वयः । स्थानिन्युपसंह्रियत इति । एवञ्च गोह इति गोहावयवलाक्षणिकमूकारान्तरतमस्य गोहावयवस्योदित्यर्थ इति भावः ॥ ननूपधा-ग्रहणाकरणलाघवे दर्शिते क्रियते इत्युत्तरमसंगतमत आह अन्यथेति । परत्वादलोन्त्यस्येत्यस्यैतत्यैव व्यव-स्थापकं स्यादित्यर्थः । एवं च पक्षद्वयेऽप्यावश्यकं तदिति भावः । ननु तद्ग्रहणाभावे चरितमित्यादावपि रेफानन्तरा निष्ठेति नत्वं स्यादत आह चरितमिति । रदाभ्यामित्यस्य प्रधानविशेषणतया न्याय्यतया परिभाषासंस्कृते लक्ष्यसंस्कारके वाक्ये रेफदकाराभ्यां परस्य निष्ठासंबन्धिनो ऽन्तरतमस्य नकारादेश इत्य-र्थ इति भावः । आदेः परस्य स्थानेऽन्तरतम इत्याभ्यामादेरन्तरतमस्य वइत्यर्थे इकारस्यान्तरतमत्वाभावेन तकारस्य चादित्वाभावेनाप्राप्तिरिति परे ॥ पक्षान्तरेऽपि तुल्यत्वान्न गौरवमित्याह अन्यथेति । दकारस्य नत्वं स्यादिति । अनया परिभाषयेति भावः । वस्तुतस्तु आदेः परस्येत्यनेनान्त्यस्याप्राप्तिः । सूत्रन्तु उभयावि-रोधेन भिन्नमित्यादौ चरितार्थमित्यत्र प्रयोगे न स्यादेव नत्वमिति उभाभ्यामपि तद्ग्रहणं कर्त्तव्यमिति भा-ष्यतात्पर्यम् । एवञ्च प्रथमान्तश्छेदो निर्दोषः । सप्तम्यन्तच्छेदस्तु दुष्ट एव । अतएव न भूसुधियोरित्यादि चरितार्थम् । नृनरयोर्वृद्धिश्चेति शार्ङ्गरवाद्यन्तर्गणसूत्रं यद्यार्षं तदा नरः अ इतिव्याख्यानादाद्याकारस्यैव वृद्धि-रिति न तत्र दोषः । तत्र नृनरयोरित्यावर्त्तते एकत्र पञ्चम्यर्थे षष्ठी पृथगपि वा तौ गणे पठ्येते इति बोध्यम् ॥ अथेति । वाक्यभेदाभेदाभ्यां पक्षद्वयभेद इति बोध्यम् । तत्र तृतीयः सिद्धान्तो भविष्यति । भि-

अस्यापि प्राप्नोति। दधि मधु। अस्तु। न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते तत्रान्तर्यतो दधिशब्दस्य दधिशब्द एव मधुशब्दस्य मधुशब्द एवादेशो भविष्यति। यदि चैवं क्वचिद्वैरूप्यं तत्र दोषः स्यात्। बिसं मुसलमिति। इण्कोरादेशप्रत्यययोरिति षत्वं प्राप्नोति। अपि च इष्टा व्यवस्था न प्रकल्पते। तद्यथा। तप्ते भ्राष्ट्रे तिलाः प्रक्षिप्ता मुहूर्तमपि नावतिष्ठन्ते एवमिमे वर्णा मुहूर्तमपि नावतिष्ठेरन्। अस्तु तर्हि प्रतिपादकम्। अन्येन निर्वृत्तानामनेन प्रतिपत्तिः। निर्वृत्तप्रतिपत्तौ निर्वृत्तिः *। निर्वृत्तप्रतिपत्तौ निर्वृत्तिर्न सिध्यति। सर्वे सर्वत्र प्राप्नुवन्ति। किं तर्ह्युच्यते। निर्वृत्तिर्न सिध्यतीति। न साधीयो निर्वृत्तिः सिद्धा भवति। न ब्रूमो निर्वृत्तिर्न सिध्यतीति। किं तर्हि। इष्टा व्यवस्था न प्रकल्पते। न सर्वे सर्वत्रेष्यन्ते। इदमिदानीं किमर्थं स्यात्। अनर्थकं च *। अनर्थकमेतत्स्यात्। यो हि भुक्तवन्तं ब्रूयाद् मा भुक्था इति किं तेन कृतं स्यात्। उक्तं वा। किमुक्तम्।

---

ष्यतीति। वचनसामर्थ्याच्छब्दव्यवहारस्य चानादित्वादिति भावः। क्वचिद्वैरूप्यमिति। यदा बिसशब्दस्य बिसशब्द आदेशस्तदा षत्वं नास्ति न हि तदा सकार आदेशः। यदा तु सकारस्य सकार आदेशस्तदा षत्वप्रसङ्ग इति वैरूप्यप्राप्तिः। अस्तेर्भूरित्यादयस्तु विशेषविहितत्वादस्य बाधकाः। अपि चेति। पुनरन्येनान्येनाऽऽदेशेन भवितव्यमिति भावः। प्रयोजनमन्तरेण प्रवृत्तौ सत्यामसकृदपि प्रवृत्तिः स्यात् ततश्च सर्वस्य निवृत्त्यभिमुखत्वात्साधुत्वस्य व्यवस्था नोपपद्यते। अस्तु तर्हीति। निर्वृत्तेषु लक्षणाऽन्तरेणादेशेषु नियमोऽनेन क्रियते तत्रान्तरतमः साधुर्नान्य इत्यर्थः। निर्वृत्तिरिति। अभिमतस्य शब्दस्येत्यर्थः। इष्टा व्यवस्थेति। अकः सवर्णे दीर्घ इत्यनेन लक्षणेन यदा सर्वे दीर्घाः कृतास्तदा तेषां साधुत्वं विज्ञातं नचाऽनेन तेषामेवाऽसाधुत्वं शक्यं प्रतिपादयितुमिति भावः। उक्तं वेति। इको गुणवृद्धी

---

न्तरूपद्वाति॥ पर्यायो यद्यपि भिन्नरूपस्तदर्थप्रत्यायकश्च तथापि विनिगमकाभावादुभयोः स्थानित्वमादेशत्वञ्च वाच्यम्। तथा च सूत्रमनारम्भसमं स्यादिति भावः। शास्त्रप्रवृत्तौ हेतुर्वचनसामर्थ्यं, सदृशादेशे हेतुः शब्देति॥ भाष्ये (यदि चैवमिति)। स्थान्यपेक्षयाऽऽदेशे यत्र वैरूप्यं प्रसक्तं तत्रैष दोष इत्यर्थः। नाह तदेति। आदेशरूपसत्त्वे तेन षत्वविधानादिति भावः। यदा त्विति। तद् ध्वनयन् भाष्यकृद्वक्ष्यति। (इमे वर्णा इत्यादि)। नन्वस्य निवर्तकत्वे आर्धधातुकेष्वस्त्याद्यादेशाः स्युरिति कुतो नोक्तम्। किं चानेन सिद्धे तद्भूपर्थे चेत्यत आह अस्तेरिति। विध्यातिनिवृत्तिस्तत्फलमिति भावः। सदृशादेशविषयेऽपि दोषमाह। भाष्ये (अपि चेष्टेति)। ननु सदृशादेशे कथमिष्टव्यवस्थासिद्धिरत आह पुनरिति। ननु लक्ष्ये लक्षणस्येति न्यायविरोधोऽत आह प्रयोजनमिति। स प्रयोजनशास्त्रप्रवृत्तौ हि प्रथमप्रवृत्त्यैव प्रयोजननिवृत्तेर्न द्वितीयादिप्रवृत्तिरिति तद्बीजम्। नचैव प्रकृत इति भावः। भाष्ये (व्यवस्थे) स्थस्य सापेक्षत्वादाह साधुत्वस्येति। परिनिष्ठितस्वव्याप्यत्वात्साधुत्वस्येति भावः। एवञ्च दोषान्तमेव शास्त्रं स्यादिति तात्पर्यम्। निर्वृत्तेष्विति। अन्येन निर्वृत्तानां मध्येऽनेनान्तरतमस्यैव साधुत्वप्रतिपत्तिरिति भाष्यार्थ इति भावः। अभिमतस्येति। शास्त्रप्रामाण्यादुभयोरपि पाक्षिकसाधुत्वापत्तेरिति भावः। दीर्घादेरिष्टा व्यवस्था न भविष्यतीत्यत आह अक इति॥ एकप्रमाणबोधितस्य सामान्यविशेषभावाभावेन प्रमाणान्तरेण आत्यन्तिको निरासोऽशक्यः कर्तुमिति भावः। ननु शास्त्रप्रामाण्यादुभयोरपि साधुत्वे इदं व्यर्थं स्यादिति पृच्छति (इदमिदानीमिति)। उत्तरयति। (अनर्थकमिति)। भुक्था इति निरनुस्वारः पाठः। आनर्थक्यं परिहरति।

सिद्धं तु षष्ठ्यधिकारे वचनादिति । षष्ठ्यधिकारेऽयं योगः कर्तव्यः । स्थानेऽन्तरतमः षष्ठीनिर्दिष्टस्येति । प्रत्यात्मवचनं च * । प्रत्यात्ममिति च वक्तव्यम् । किं प्रयोजनम् । यो यस्यान्तरतमः स तस्य स्थाने यथा स्यात् । अन्यस्यान्तरतमोऽन्यस्य स्थाने मा भूदिति । प्रत्यात्मवचनमशिष्यं स्वभावसिद्धत्वात् * । प्रत्यात्मवचनमशिष्यम् । किं कारणम् । स्वभावसिद्धत्वात् । स्वभावत एतत्सिद्धम् । तद्यथा । समाजेषु समाशेषु समवायेषु चाऽऽस्यतामित्युक्ते नचोच्यते प्रत्यात्ममिति प्रत्यात्मं चासते (2) अन्तरतमवचनं च * । अन्तरतमवचनं चाशिष्यम् । योगश्चाप्ययमशिष्यः । कुतः । स्वभावसिद्धत्वादेव । तद्यथा । समाजेषु समाशेषु समवायेषु चास्यतामित्युक्ते नैव कृशाः कृशैः सहासते न पाण्डवः पाण्डुभिः येषामेव किंचिदर्थकृतमान्तर्यं तैरेव सहासते । तथा गावो दिवसं चरितवत्यो यो यस्याः प्रसवो भवति तेन सह शेरते । तथा यान्येतानि गोयुक्तकानि संघुष्टकानि भवन्ति तान्यन्योन्यमपश्यन्ति शब्दं कुर्वन्ति । एवं तावच्चेतनावत्सु । अचेतनेष्वपि । तद्यथा । लोष्ठः क्षिप्तो बहुवेगं गत्वा नैव तिर्यग्ग-

---

इत्यत्र यत्र षष्ठी तत्रेदमुपतिष्ठते तेनैकवाक्यताऽनेन सूत्रेण विधिवाक्यानामिति विधानकाल एवान्तरतम आदेशो विधीयते । प्रत्यात्ममिति । आत्मानमात्मानं प्रतीति समासः । स्थान्यात्मनोऽन्तरतम इत्यर्थः । स्वभावसिद्धत्वादिति । तुल्यन्यायतया सूत्रप्रत्याख्यानायैतदुक्तं न तु सम्बन्धिशब्दत्वादिति । समाजेष्विति । समाज उत्सवेषु संघातः । समाशः सहभोजनम् । समवायः कस्यां चित् क्रियायां मेलनम् । नैव कृशा इति । गुणप्रमाणकृतसादृश्यपरिहारेण विद्याद्यर्थकृतमान्तर्यं लोक आश्रीयत इत्यर्थः । एवमिहापि यदीयमर्थं यः शक्नोति वक्तुं तस्य स्थाने स एव भवति । गाव इति । तिरश्चामप्ययं व्यवहारः संकीर्णानामसंकरलक्षणः । एवं चोदनायां संकीर्णा अप्यादेशा असंकरेण प्रवर्त्स्यन्ति । तथा यानीति । यथा तत्र सादृश्याद्वर्गीभवनं विच्छिन्नसाहचर्याणामपि भवति तथा स्थान्यादेशानां स्थानादिना सादृश्येन वर्गीभवनमित्यर्थः । अचेतनेष्वपीति । न्यायस्य व्याप्तिप्रतिपादनमेतत् ।

---

उक्तं वेति । द्वितीयपक्षाङ्गेदमुपपादयति एकवाक्यतेति । एवञ्चेतरस्याविधानमेवेति इष्टव्यवस्थासिद्धिरिति भावः । परे तु उत्पन्नानामनेन निवृत्तिर्लुगादिनेवेति भावः । एतदाशयमजानान आह निवृत्तिर्न सिध्यतीति । तदभ्युपेत्य समाधत्ते उक्तं वेति ॥ भुक्तवतो भोजनफलस्यैव जातत्वान्निषेधस्य वैयर्थ्येपि शास्त्रे वृद्धिरादैच्-सूत्रभाष्योक्तशास्त्रप्रामाण्याल्लुगादिनेव जातनिवृत्तिरिति वाशब्देन सूचितमित्याहुः । आत्मानमिति ॥ अनश्चेति टच् ॥ स्थान्यात्मन इति । स्थानिरूपपदार्थस्येत्यर्थः । नन्वन्तरतमशब्दस्य सदृशार्थकत्वेन तुल्यास्यप्रयत्नमित्यत्रेव सम्बन्धिशब्दत्वादिति कुतो नोक्तमत आह तुल्येति ॥ प्रत्यात्मं चासत इति । स्वस्वसमाजेष्वेवासत इत्यर्थः । कस्याञ्चिदिति । धर्मनिर्णयादिक्रियायामित्यर्थः । अर्थकृतान्तर्ये सति तदेव प्रयोजनमित्याह गुणेत्यादि । पाण्डुत्वं गुणः, कृशत्वादि प्रमाणम् ॥ विद्यादीनि । आदिनोत्सवाशनाद्यर्थित्वब्राह्मणत्वादिजातिधनादिसंग्रहः । एवञ्च अन्तरतमो भवतीति यथानेकविधमिति च न्यायसिद्धमिति भावः । दृष्टान्ते विवक्षितार्थमाह सङ्कीर्णानामिति । भाष्ये [ प्रसवो ] वत्सः । [ तेनसह ] स्वस्वप्रसवेन सह । [ शेरतइति ] । शेतिः स्थितौ । एवञ्चोदनायामिति । अनर्थे रथ्या विधिशास्त्रेपीत्यर्थः ॥ युक्तशब्दोयुग्मे-

च्छति नोर्ध्वमारोहति पृथिवीविकारः पृथिवीमेव गच्छत्यान्तर्यतः। तथा या एता आन्तरिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूमः स धूम आकाशे निवाते नैव तिर्यग्गच्छति नाऽर्वागवरोहति। अब्विकारोऽप एव गच्छत्यान्तर्यतः। तथा ज्योतिषो विकारोऽर्चिराकाशदेशे निवाते सुप्रज्वलितं नैव तिर्यग्गच्छति नाऽर्वागवरोहति। ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः। व्यञ्जनस्वरव्यतिक्रमे च तत्कालप्रसङ्गः *। व्यञ्जनव्यतिक्रमे स्वरव्यतिक्रमे च तत्कालता प्राप्नोति। व्यञ्जनव्यतिक्रमे। इष्टम्। उप्तम्। आन्तर्यतोऽर्धमात्रिकस्य व्यञ्जनस्याऽर्धमात्रिक इक् प्राप्नोति। नैव लोके नैव वेदे अर्धमात्रिक इगस्ति। कस्तर्हि। मात्रिकः। योऽस्ति स भविष्यति। स्वरव्यतिक्रमे। दध्यत्र मध्वत्र कुमार्यर्थं ब्रह्मबन्ध्वर्थम्। आन्तर्यतो मात्रिकस्य द्विमात्रिकस्यैको मात्रिको द्विमात्रिको यण् प्राप्नोति। नैव लोके नैव वेदे मात्रिको द्विमात्रिको वा यणस्ति। कस्तर्हि। अर्धमात्रिकः। योऽस्ति स भविष्यति। अक्षु चानेकवर्णादेशेषु *। अक्षु चानेकवर्णादेशेषु तत्कालता प्राप्नोति। इदम इश्। आन्तर्यतोऽर्धतृतीयमात्रिकस्येदमः स्थानेऽर्धतृतीयमात्रमिवर्णं प्राप्नोति। नैष दोषः। भाव्यमानेन

---

अब्विकार इति। अन्तरिक्षे सूक्ष्मः समुद्रोऽस्तीति तद्विकारः सर्वा आप इति काष्ठादिस्थानामपामग्निसंयोगाद् धूमो विकारः। सूर्यविकारोऽर्चिः सूर्यमेव गच्छति। लोकव्यवहाराश्रयेण प्रत्याख्याते सूत्रे तदनाश्रयेण योगारम्भे दोषमाह व्यञ्जनेति। व्यतिक्रमः। स्थानित्वेन निवृत्तिः। इदमेव शास्त्रं निवर्तकमिति भावः। नैव लोक इति। नित्याः शब्दा अन्वाख्यायन्ते निर्वृत्तिपक्षेऽप्युच्चारणास्यांऽशक्यत्वादिति भावः। नैव लोकइति। कुक्कुटादिषु द्वे व्यञ्जने न त्वेकमात्रिकमिति भावः। अर्द्धतृतीयमात्रमिति। अस्यैकादेशयोः कृतयोरिश्भाव इति यदा प्रक्रियेति भावः। भाव्यमानेनेति। नैव लोक इत्ययं परिहारो नोक्तः। यदा विशेषविहितत्वादत्वमिश्भावेन बाध्यते इति न्यायस्तदा त्रिमात्रस्य त्रिमात्रसम्भवात्स्यादेव प्लुतः। प्लुताप्लुतप्रसङ्गे च प्लुतश्च विषये

---

वाची। संघुटकशब्दस्तत्तद्गुणवहनादिनात्यन्तपरिचितवाची। अनेनापि ग्रन्थेन यत्रानेकविधमित्यर्थः साधित इत्याहुः। सादृश्यादिति। तत्तद्गुणवहनाद्यत्र सादृश्यम्॥ अन्तरिक्षेइति। अन्तरिक्षे भवा आन्तरिक्ष्यः। अत एव निदाघे निशि निरावरणे शयानानां शैत्योपलम्भः। तस्यैव च रविकिरणसंपर्केण मेघरूपतया वायुयोगाद्वृष्टिः। अन्तरिक्षीणामपां परम्परया धूमो विकार इति दर्शयति तद्विकारः सर्वाइति॥ सूर्यविकारइति। अत एव दावाग्निमध्याह्नादौ सूर्यकरसंपर्कात् क्रौर्यातिशयो दृश्यते॥ तदनाश्रयेणेति। मन्दमध्यमबुद्ध्यर्थमित्यर्थः। ननु नाऽर्धमात्रिक इग् इत्यत आह इदमेवेति॥ कार्याः शब्दा इति दर्शने प्रमाणादिना तत्तदन्तरतमवर्णनिवर्त्तकमित्यर्थः। एवञ्च लोकवेदयोरभावेपि एतच्छास्त्रंसिद्ध एव स इति भावः॥ यदुक्तमिदमेवेति॥ तत्राह नित्या इति। निर्वृत्तिपक्षेपीति। शास्त्रकार्याः शब्दा इति दर्शनेपीत्यर्थः। उच्चारणस्येति। तस्य लोकाधीनत्वादिति भावः। इदमस्त्रिमात्रिकत्वेनार्धतृतीयमात्रिक इत्ययुक्तमत आह अस्येति। परत्वादत्वं ऽन्तरङ्गत्वादेकादेशो इति भावः॥ प्लुताप्लुतेति॥ तादृशस्थले हि सपादसप्ताध्यायीस्थेन प्लुतविधौ त्रिपादीस्थप्लुतस्यासिद्धत्वात्तद्विषयेऽप्यनेनैव प्लुतविधौ तदंशेऽनुवादत्वमन्यांशे विधित्वमिति शास्त्रस्य वैरूप्यापत्तिस्तद्बीजम्। शास्त्रं त्वप्लुतविधाने न चरितार्थमिति। प्लुतमात्रविधाने तु तद्विषयकलक्षणवैयर्थ्यापत्त्यांवे

सवर्णानां ग्रहणं नैवमेवं न भविष्यति। गुणवृद्ध्येज्भावेषु च *। गुणवृद्ध्योरेज्भावेषु च तत्कालता प्राप्नोति। खट्वा इन्द्रः। खट्वेन्द्रः। खट्वा उदकम्। खट्वोदकम्। खट्वा ईषा खट्वेषा। खट्वा ऊढा खट्वोढा। खट्वा एलका खट्वैलका। खट्वा ओदनः खट्वौदनः। खट्वा ऐतिकायनः खट्वैतिकायनः। खट्वा औपगवः खट्वौपगवः इति। आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा प्राप्नुवन्ति। नैष दोषः। तपरे गुणवृद्धी। ननु च तः परो यस्मात्सोऽयं तपरः। नेत्याह। तादपि परस्तपर इति। यदि तादपि परस्तपरः। ऋदोरविति इहैव स्यात्। यवः स्तवः। लवः पव इत्यत्र न स्यात्। नैष तकारः। कस्तर्हि। दकारः। किं दकारे प्रयोजनम्। अथ किं तकारे। यद्यसंदेहार्थस्तकारः। दकारोऽपि। अथ मुखसुखार्थस्तकारः। दकारोऽपि। एज्भावे। कुर्वाते कुर्वाथे। आन्तर्यतोऽर्धतृतीयमात्रस्य टिसंज्ञकस्याऽर्धतृतीयमात्र एव प्राप्नोति। नैव लोके नच वेदे अर्द्धतृतीयमात्र एजस्ति। ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गोऽविशेषात् *। ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गः। सर्वगुणवृद्धिप्रसङ्गः। सर्वे गुणवृद्धिसंज्ञका ऋवर्णस्थाने प्राप्नुवन्ति। किं कारणम्। अविशेषात्। नहि कश्चिद्विशेष उपादीयते एवंजातीयको गुणवृद्धिसंज्ञक ऋवर्णस्य स्थाने भवतीति। अनुपादीयमाने विशेषे सर्वप्रसङ्गः। नवा ऋवर्णस्य स्थाने रपरप्रसङ्गादवर्णस्यान्तर्यम् *। न वा एष दोषः। किं कारणम्। ऋवर्णस्य स्थाने रपरप्रसङ्गात्। उः स्थाने अण् प्रसज्यमान इव रपरो भवतीत्युच्यते तत्र ऋवर्णस्याऽन्तर्यतो रेफवतो रेफवानकार एवान्तरतमो भवति। सर्वा-

---

स्मृत इत्युच्यते। अत्र तु प्लुतस्यैव प्राप्तिः। खट्वेन्द्र इति। संज्ञयाऽत्र गुणवृद्ध्योर्भावनं संज्ञा च भिन्नकालानामपि स्यादिति भाव्यमानेनेति परिहारस्याऽत्रासम्भवः। एज्भाव इति। प्रत्याहारः पूतक्रतोरैच मनोरौ वेत्यादिसंग्रहार्थः। तत्र हि मात्रिक एवैकार औकारश्च स्यात्। ऋवर्णस्येति। अत्र ह्रस्वस्याऽकार एव गुणः स्यात्स चेष्यत एव दीर्घस्य त्वेङौ स्याताम्। तुल्यप्रमाणत्वात्। तथा ह्रस्वस्य च सर्वे वृद्धिसंज्ञकाः प्राप्नुवन्ति। समुदायापेक्षया तु सर्वप्रसङ्ग इत्युच्यते। नवेति। उरण् रपर इत्यनेन गुणवृद्धिशास्त्रस्यैकवाक्यतायां विधीयमान एवाण् रपरो भवतीति ऋश्रुतिस्थानेऽरारौ क्रियमाणौ गुणवृद्धी भवत इत्यर्थः। सर्वादेश इति। ऋवर्णस्य स्थानेऽरारौ क्रियमाणाव-

---

ऽनुवादत्वकल्पना सोढव्यैव। सामर्थ्येनान्तरतमपरिभाषाबाधकल्पनापेक्षया ऽनुवादत्वस्य युक्तत्वाच्चेति भावः। संज्ञा चेति॥ कार्यकालपक्षेपि यथा भाव्यमानत्वाभावस्तथोपपादितं वृद्धिसंज्ञासूत्रे॥ प्रत्याहारइति। वार्तिके गुणवृद्ध्येज्भावेषु, इति द्वन्द्वो न तु कर्मधारयो भाष्यविरोधादिति भावः॥ तत्र हीति॥ प्रमाणत आन्तर्यादिति भावः। नन्वेवं ह्रस्वे सर्वगुणाप्रसङ्गस्यानुपपादनादृवर्णमात्रे सर्वप्रसङ्ग इत्यनुपपन्नमत आह समुदायापेक्षयेति। ऋवर्णीयह्रस्वादिसमुदायापेक्षयेत्यर्थः। गुणवृद्धिशास्त्रस्येति॥ प्रतिलक्ष्यं लक्षणभेदादृवर्णविषयगुणादिशास्त्रस्येत्यर्थः। अङ्गान्त्यस्यैक ऋवर्णस्य रपरोऽण्रूपो गुणः इति वाक्यार्थ इति भावः। ऋश्रुते-

दशप्रसङ्गस्त्वनेकाल्त्वात् * । सर्वादेशस्तु गुणवृद्धिसंज्ञक ऋवर्णस्य प्राप्नोति । किं कारणम् । अनेकाल्त्वात् । अनेकाल् शित्सर्वस्येति । नवानेकाल्त्वस्य तदाश्रयत्वादृवर्णादेशस्याऽविघातः * । न वा एष दोषः । कि कारणम् । अनेकाल्त्वस्य तदाश्रयत्वात् । यदा ऽयमुः स्थाने ऽण् तदा ऽयमनेकाल् । अनेकाल्त्वस्य तदाश्रयत्वादृवर्णादेशस्य विघातो न भविष्यति । अथवा अनान्तर्यमेवैतयोरान्तर्यम् । एकस्याप्यन्तरतमा प्रकृतिर्नास्त्यपरस्यान्तरतम आदेशो नास्ति एतदेवैतयोरान्तर्यम् । संप्रयोगो वा नष्टाश्वदग्धरथवत् * । अथवा नष्टाश्वदग्धरथवत्सह संप्रयोगो भवति । तद्यथा । तवाश्वो नष्टो ममापि रथो दग्ध उभौ संप्रयुज्यावहा इति । एवमिहापि तवाप्यन्तरतमा प्रकृतिर्नास्ति ममाप्यन्तरतम आदेशो नास्ति अस्तु नौ संप्रयोग इति । विषम उपन्यासः । चेतनावत्स्वर्थात्प्रकरणाद्वा लोके संप्रयोगो भवति । वर्णाश्च पुनरचेतनाः । तत्र किंकृतः संप्रयोगः । यद्यपि वर्णा अचेतनाः यस्त्वसौ प्रयुङ्क्ते स चेतनावान् । एजवर्णयोरादेशे ऽवर्णं स्थानिनो ऽवर्णप्रधानत्वात् * । एजवर्णयोरादेशे अवर्णं प्राप्नोति । खट्वैलका मालौपगवः । किं कारणम् । स्थानिनो ऽवर्णप्रधानत्वात् । स्थानी ह्यत्रावर्णप्रधानः सिद्धन्तुभ-

---

लोऽन्त्यस्येत्येतद्बाधेनानेकाल्त्वात्सर्वादेशौ प्राप्नुतः । नवेति । अङ्गस्येति षष्ठी पूर्वमेवाऽन्त्यमिकमुपसंह्रियते ततश्च ऋवर्णस्य स्थानित्वे विज्ञाते रपरत्वमानुपूर्व्या सिद्धत्वात् पूर्वप्रवृत्तमलोऽन्त्यस्येत्यल्युपसंहारं न बाधत इत्यर्थः । अथवेति । निर्वृत्तस्याऽणो रपरत्वविधानेऽपि न दोष इत्यर्थः । अनान्तर्यमेवेति न हि स्थानार्थगुणप्रमाणकृतमेवान्तर्यं परिभाषितं रूपान्तरेणाऽपि सादृश्यसंभवात्परिग्रहाच्चेति भावः । ऋवर्णस्य मात्रिकोऽकारो गुणोऽन्तरतमोऽस्त्येवेति चेत् । तदर्थस्यं यत्नस्याकरणाददोष एव । दीर्घस्य तुल्यप्रमाणत्वादेकारौकारावन्तरतमौ स्त इति चेत् । भवेदेतद्यदा भेदापेक्षा क्रियते । ऋवर्णमात्रस्य ह्रस्वाद्यवान्तरभेदानपेक्षायां स्थानकृतमान्तर्यं न केन चिदस्तीत्यनान्तर्यमेवेत्याद्युक्तम् । सम्प्रयोगो वेति । यदा स्थानेऽन्तरतम इत्येतत्प्रत्याख्यातमित्यर्थः । अवर्णप्रधानत्वादिति । इममेव हि न्यायमाश्रित्योक्तमैचोश्चोत्तरभूयस्त्वादिति । उभया-

---

रित्यनेनैकदेशद्वारा स्थानत आन्तर्यमुक्तम् ॥ ऋवर्णस्येति ॥ ऋवर्णान्ताङ्गस्येत्यर्थः ॥ सर्वादेशाविति । तस्यापि समुदायान्तर्वर्तित्वादृवर्णस्य तदादेशत्वमपि खट्वश्य इत्यादाविव वक्तुं शक्यमिति भावः । पूर्वमेवेति । अन्यथा ऋवर्णस्थानिकत्वाभावात्परत्वमेव न स्यात् । न च समुदायान्तःपातिऋकाराश्रयेण रपरत्वम् । प्रत्यक्षे ऋवर्णस्थानित्वे चरितार्थस्यानुमानिके प्रवृत्त्ययोगात् । खट्वश्य इत्यादौ तु पूर्वपरयोरित्यधिकारात् प्रत्यक्षमेव स्थानित्वमिति भावः । पूर्वप्रवृत्तमिति । उपजीव्यत्वेनस्थापि बाध्यम् । न बाधत इत्यत्रानेकाल्शित्सर्वस्येति सूत्रं कर्तृ रेफवतो रेफस्यै वान्तरतम एवेति अर्थत्वस्युक्तमत आह निर्वृत्तस्येति । परिग्रहाच्चेनि पादवन्तस्यादौ स्थान्यादेशभावमते वर्णसाम्यकृतस्येति भावः । सदृशसम्बन्धभावकत्वमुभयोः साधारणधर्मरूपं सादृश्यमिति तात्पर्यम् । यत्नस्येति । परिहारान्तराभिधानरूपस्येत्यर्थः ॥ स्थानकृतमिति । अनान्तर्यमिति भाव्यस्य स्थानकृतान्तरतमाभाव इत्यर्थः । नष्टाश्वदग्धरथवदिति । बहुव्रीहिगर्भद्वन्द्वाद्वतिः । पूर्वोक्तेनाथवेत्यनेन पौनरुक्त्यं परिहरति यदेति । केचित्तु तत्प्रत्याख्यानेपि लोकन्यायेन सदृश एवादेश इत्यर्थः साधितो भगवतेति प्रत्याख्यानाप्रत्याख्यानयोः को विशेषस्तस्मादनान्तर्यस्याभावरूपस्य सादृश्यत्वानङ्गीकारेप्याह नष्टाश्वेति ॥ ऋवर्णस्य स्थानित्वेनाऽवर्णस्यादेशत्वेन ग्रहणसामर्थ्यादसादृश्येपि स्थान्यादेशभावः । यथा नष्टाश्वदग्धरथया-

यान्तर्यात् * । सिद्धमेतत् । कथम् । उभयोर्यो ऽन्तरतमस्तेन भवितव्यम् । नचावर्णमुभयोरन्तरतमम् ॥

उरण् रपरः ॥ ५१ ॥ किमिदमुरण् रपरवचनमन्यनिवृत्त्यर्थम् । उः स्थाने अणेव भवति रपरश्चेति । आहोस्विद्रपरत्वमात्रमनेन विधीयते । उः स्थाने अण् च अनण् च । अण् तु रपर इति । कश्चात्र विशेषः । उरण् रपरवचनमन्यनिवृत्त्यर्थमिति चेदुदात्तादिषु दोषः * । उरण् रपरवचनमन्यनिवृत्त्यर्थं चेदुदात्तादिषु दोषो भवति । के पुनरुदात्तादयः । उदात्तानुदात्तस्वरितानुनासिकाः । कृतिः । हृतिः । कृतं हृतं प्रकृतं प्रहृतं नॄः पाहि । अस्तु तर्ह्युः स्थाने अण् चानण् च । अण् तु रपर इति । य उः स्थाने ऽण् स रपर इति चेद् गुणवृद्ध्योरवर्णाप्रतिपत्तिः* । य उः स्थाने अण् स रपर इति चेद् गुणवृद्ध्योरवर्णस्याऽप्रतिपत्तिः । कर्त्ता हर्त्ता वार्षगण्यः । किं हि साधीयः । ऋवर्णस्याऽसवर्णे यदवर्ण रयान्न पुनरेङैचौ ।

---

न्तर्यादिति । ह्रस्वशासने ह्येचः समुदायान्तरतमाभावादेचोश्चेत्युक्तम् , इह तु सम्भवत्येव स्थानेन समुदायान्तरतम इत्यर्थः ॥ ५० ॥

उरण् ॥ किमिदमिति । षष्ठीप्रकरणाद्यत्र षष्ठी तत्रेदमुपतिष्ठते तत्र किमादेशान्तराणां बाधकमणं निर्वर्तयति तस्य च वाक्यभेदेन रपरत्वम् । आहोस्विद्रपरत्वमात्रमनेन क्रियते उः स्थाने लक्षणान्तरेण निष्पन्नोयो ऽण् स रपर इति प्रश्नः । तत्र केषाञ्चित्पाठोऽण् भवति रपरश्चेति तत्रापूर्वोऽण् विधीयमान आदेशान्तराणां बाधकः । अन्येषां तु पाठोऽणेव भवतीति । तत्र सामर्थ्याच्चान्यनिवृत्तिः । सैवैवकारेण प्रदर्श्यते । उदात्तादिष्विति । अन्तरतमस्य बाधकोऽण् प्रसज्यत इति भावः । स चोदात्तादिगुणो नवेति सर्वथा दोषः । नृः पाहीति । यद्यप्यस्मिन् पक्षे पूर्वसवर्ण ऋकारो न लभ्यते तथापि नॄन् प इति निपातनाद्भवति नकारस्य तु रुत्वे कृतेऽनुनासिको विधीयमानोऽणेव स्यान्न तु ऋकार इति दोषः । प्रतिपदविहितैरित्वोत्वादिभिरयं हि बाध्यतइति तेषां रपरत्वं न स्यात् । गुणवृध्योरिति । भूतस्य चेदणो रपरत्वं क्रियते तदा तु गुण-

---

रत्वयन्मभिन्नयोरपि असदृशयोरपि संप्रयोग इति तात्पर्यमित्याहुः । प्रधानत्वं भूयस्त्वेन । न्यायस्तर्हि क्वेत्यत आह ह्रस्वेति ॥ ५० ॥

उरण्र ॥ भाष्ये ( उरणूपरवचनमिति ) सूत्रस्थविसर्गप्राग्भागानुकरणेन षष्ठीसमासः । नन्वन्यशब्देन न स्थानी आदेशस्य स्थानिनिवर्त्तकत्वस्वभावत्वात् न स्थानिव्यतिरिक्त उरणित्यतावतः स्थानिव्यतिरिक्तनिवर्त्तने सामर्थ्याभावादत आह षष्ठीति । यत्र षष्ठ्या ऋवर्णस्यादेशप्रसक्तिस्तत्रेत्यर्थः । स्वातन्त्र्येणास्य विधायकत्वन्तु इको गुणवृद्धीत्यत्र भाष्ये एव निराकृतम् । तत्र यद्यन्यनिवृत्त्यर्थत्वं नियामकत्वेन तदाश्रमतमेतदिति वक्ष्यमाणस्य विशेषो न स्यादत आनुषङ्गिकं तदित्याह तत्रेति । अपूर्व इति । वाक्यभेदेन ञ्नित्यादिरुदात्तो भवति ऋवर्णस्य त्वण् भवति । स च रपर इत्यर्थ इति भावः । तत्र सामर्थ्यादिति ॥ विशेषविधेः सामान्यविधिबाधकत्वेनेत्यर्थः । न तु वाच्यवृत्त्याऽस्य नियमपरत्वामिति भावः ॥ स चोदात्तादिगुणइति । अत्र पक्षेऽनन्तरस्येति न्यायेनान्तरतमपरिभाषाया अनेन बाध इति भावः । नवेति । यत्रोपस्थितिस्तद्विधेयस्य बाध इत्यभिमानः ॥ भाष्ये कृतिर्नित्स्वरेणाद्युदात्तः । कृतमित्यत्र प्रत्ययस्वरेणान्तोदात्तत्वे शेषनिघातेन ऋकारोऽनुदात्तः । प्रकृते गतिरनन्तर इति पूर्वपदप्रकृतिस्वरे शेषनिघाते उदात्तादनुदात्तस्येति स्वरितत्वम् । उच्चैरुदात्त इत्यादिषु षष्ठ्यन्तमच इत्यनुवर्त्तत इति पक्षे ञ्नित्यादिरित्यादावच इत्युपस्थितेः षष्ठीसिद्धावादुरणित्यस्योपस्थानमिति द्रष्टव्यम् । नियमपक्षे वक्ष्यमाणदोषमत्राप्याकृष्य दर्शयति गतिपदेति ॥

पूर्वस्मिन्नपि पक्षे एष दोषः। किं हि साधीयः। तत्रापि ऋवर्णस्यासवर्णे यद्वर्णं स्यान्न पुनरिकारोकारौ। अथ मतमेतत्। उः स्थाने अणश्चाऽनणश्च प्रसङ्गे अणेव भवति रपरश्चेति सिद्धा पूर्वस्मिन् पक्षे ऽवर्णस्य प्रतिपत्तिः। यत्तु तदुक्तमुदात्तादिषु दोष इति। स इह दोषो जायते। न जायते। जायते स दोषः। कथम्। उदात्त इत्यनेनाणोऽपि प्रतिनिर्दिश्यन्ते अनणोऽपि। यद्यपि अणोऽपि प्रतिनिर्दिश्यन्ते न तु प्राप्नुवन्ति। किं कारणम्। स्थाने ऽन्तरतमो भवतीति। कुतो नु खल्वेतत्। द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः स्थाने ऽन्तरतम इति उरण् रपर इति च स्थाने ऽन्तरतम इत्यनया परिभाषया व्यवस्था भविष्यति न पुनरुरण् रपर इति। अतः किम्। अत एष दोषो जायते उदात्तादिषु दोष इति। ये चाऽप्येते ऋवर्णस्य स्थाने प्रतिपदमादेशा उच्यन्ते तेषु रपरत्वं न प्राप्नोति। ऋत इद्धातोरुदोष्ठ्यपूर्वस्येति। सिद्धं तु प्रसङ्गे रपरत्वात्*।

---

वृद्धिविधावणेव दुर्लभ इति दोषः। किं हि साधीय इति। किं साधुतरं कारणमित्यर्थः। न पुनरिति। ततश्चाऽवर्णस्यैव नियमेनाऽप्रतिप्राप्तिरिति व्याख्येयम्। अथ मतमिति। स एव पक्षान्तिपवाद्याह। नानेनान्येषां बाधकोऽपूर्वोणा् विधीयते। किन्त्वणानणोः प्रसङ्गे ऽणेव भवतीति नियमः क्रियते स च रपरः। न च गुणवृद्धिप्रसङ्गे इकारोकारयोः प्राप्तिः। यत्तु तदुक्तमिति। किं भवान्मन्यतइति विचारयति। स एव युक्तियुक्तं पक्षं गृह्णाति। जायत इति। कुतो नु खल्विति। अन्तरतमपरिभाषाया अवकाशः। अकः सवर्णे दीर्घः। झयो होऽन्यतरस्यामिति। उरण् रपर इत्यस्यावकाशः। कर्ता हर्तेति। इहोभयं प्राप्नोति। कृतिरिति। परत्वादियमेव प्राप्नोतीति दोषः। ये चाप्येतइति। यत्र ह्यनियमप्रसङ्गस्तत्रानेन नियमः क्रियते तत्र तच्छेषभूतं रपरत्वं भवति न त्वन्यत्र प्रतिपदविधाविति दोषः। सिद्धं त्विति। विधिवाक्यैरस्यैकवाक्यतायां विधानकालपक्षाणो रपर-

---

तेषामिति। प्रत्यासत्त्योरणित्यनेन विधीयमानस्याणो विधीयमानमिति शेषः। दुर्लभ इति। ह्रस्वस्य गुणाकारलाभेपि दीर्घस्याकारगुणालाभः। वृद्धिस्तु नियमेन अण् न लभ्यते इत्यर्थः। कर्तेत्याद्युदाहरण भाष्ये दीर्घान्तस्याप्युपलक्षणम्। किमित्यस्य विशेष्यमाह। (कारणमिति)। भाष्ये (असवर्णे)। सदृशाभाव इत्यर्थः। ननु नियामकाभावे कदाचिदवर्णस्यापि प्रतिपत्तौ कथमवर्णाप्रतिपत्तिरत आह ततश्चेति। दोषपरिहारायाक्षिपवाद्येवान्यनिवृत्त्यर्थमित्यस्य नियमपरतया व्याख्यानमाशङ्क्य दूषयति। भाष्ये (अथ मतमिति)॥ एतत् वक्ष्यमाणं नियमरूपत्वमन्यनिवृत्त्यर्थमिति वदतो मतं संमतं विवक्षितमित्यर्थः। सिद्धापूर्वस्मिन्निति। अन्यनिवृत्त्यर्थमिति पक्षे इत्यर्थः। स चेति। वाक्यभेदेनेत्यर्थः। नन्वेवमिकारोकारावपि स्यातामत आह न च गुणेति। भवानिति। नियमपक्षवादीत्यर्थः। स एवेति। विचारक एवेत्यर्थः। शङ्कते। भाष्ये (यद्यप्यणोपीति)। परिहरति। (कुतोन्विति)। तमब्ग्रहणसाहितस्याप्यवकाशप्रदर्शनाय झयोह इत्युक्तम्॥ उरण्रपरइत्यस्यावकाशइति। गुणविधौ स्थानेन्तरतमपरिभाषानुपस्थितिः। ऋवर्णसमुदायान्तरतमगुणाभावादिति भावः। यद्यपि भाष्याद्विनिगमनाभावो लभ्यते तथापि एष दोषो जायत इत्युक्तरन्यासक्तोर्विनिगमकं प्रदर्श्यान्तरतमपरिभाषाप्रवृत्तिमुपपादयति परत्वादिति। ननु प्रतिपदविहिता अप्यण एवेति कुतो रपरत्वाप्राप्तिरत आह यत्र हीति। ओ यङीति लत्वविधानादावृत्त्या तेषामपि रपरत्वमिति चेत्। ऋकारान्तर्गते रेफस्य लत्वार्थं तस्स्यादिति न दोषः। भाष्ये (ये चाप्येतइति)। बहुवचनेनाच्छप्यधामिति ईत्वसङ्ग्रहः। वाक्यैकवाक्यतावाविधीति॥ ऋवर्णस्थानिकाण्विधिवाक्यैरित्यर्थः। एकवाक्यतायामिति।

सिद्धमेतत्। कथम्। प्रसङ्गे रपरत्वात्। उः स्थाने अण् प्रसज्यमान एव रपरो भवति। किं वक्तव्यमेतत्। नहि। कथमनुच्यमानं गंस्यते। स्थान इति वर्तते। स्थानशब्दश्च प्रसङ्गवाची। यद्येवमादेशोऽविशेषितो भवति। आदेशश्च विशेषितः। कथम्। द्वितीयं स्थानग्रहणं प्रकृतमनुवर्तते। तत्रैवमभिसंबन्धः करिष्यते। उः स्थाने अण् स्थान इति। उः प्रसङ्गे अण् प्रसज्यमान एव रपरो भवति। अथाणग्रहणं किमर्थं न ऊः रपरो भवतीत्येवोच्येत। रपर इतीयत्युच्यमाने क इदानीं रपरः स्यात्। यः स्थाने भवति। कश्च स्थाने भवति। आदेशः। आदेशो रपर इति चेद्रीरिविधिषु रपरप्रतिषेधः *। आदेशो रपर इति चेद्रीरिविधिषु रपरत्वस्य प्रतिषेधो वक्तव्यः। के पुना रीरिविधयः। अकङ्लोपानङनङ्रीङ्रिङादेशाः। अकङ्, सौधातकिः। अकङ्। लोप, पैतृष्वसेयः। लोप।

---

त्वं क्रियत इत्यर्थः। यद्येवमिति। न ह्यनेनोः स्थानेऽण् विधीयते अपि तु लक्षणान्तरेण तत्र विध्यङ्गभूता षष्ठी स्थानेयोगेति परिभाषा नोपतिष्ठते तथा चोदीचामातः स्थाने इत्यत्र स्थानग्रहणं कृतम्। तत उः समीपे योऽण् तस्यापि रपरत्वप्रसङ्ग इति स्थानग्रहणानुवृत्त्या उः स्थाने य आदेशोऽणित्येतावल्लभ्यते न तु प्रसज्यमान इति। आदेश इति। प्रसज्यमानत्वेनेत्यर्थः। अथवा स्थानग्रहणाऽनुवृत्त्या प्रसज्यमान इत्येषोऽर्थो लभ्यते न तु स्थान इति। ततश्चाण आदेशरूपता नियमेन न लभ्यत इति सामीप्यलक्षणोऽपि सम्बन्धोऽवगम्येतेत्यर्थः। द्वितीयमिति। तच्चार्थात् प्रथमान्तं सम्पद्यते अथवा सप्तम्यन्त एव तस्मिन्नयमर्थो भवति प्रसङ्ग एवाऽत्राण् रपरो भवतीति। इदानीमुदात्तादिषु दोषो नास्ति स्थानेऽन्तरतम इत्यनया परिभाषया कृतिरित्यादावृकारस्य ऋकार एव प्रवर्तते इत्यणः प्रसङ्ग एव नास्ति। गुणवृद्धी च ऋकारस्य विधीयमाने अरारावेवान्तरतम्याद्भवत इत्यवर्णप्रतिपत्तिरप्यास्ति। रीरिविधिष्विति। बहुवचननिर्देशाद् रीरिशब्दावुपलक्षणमिति पृच्छति के पुनरिति। पैतृष्वसेय इति। लोपवचनं तु

---

मित्यर्थः॥ ननु उरिति षष्ठ्या स्थानेयोगत्वस्य लाभः स्यादत आह नहीति। एवञ्चायमनुवाद इति भावः। विध्यङ्गेति। विधेयेन साक्षाद्यत्र सम्बन्धस्तत्र सा परिभाषेत्यर्थः। उदात्तस्वरितयोर्यणो लः परस्मैपदमित्यादावनुवादेऽप्यस्या प्रवृत्तेर्यद्येवमित्यादिभाष्यमेकदेशिनोऽक्तिरिति बोध्यम्। उःसमीप इति। तथा च तृतीय इत्यादावप्यणो रपरत्वप्राप्तिरित्यर्थः। सामीप्ये च षष्ठीव्यवहितेऽपीति भावः। स्थाने य आदेशोऽणिति। अनुवर्तमानस्थानेग्रहणस्योरित्यस्य सम्बन्धिशब्दत्वात्तेनैव सम्बध्यतेत्यर्थः। नन्वेवमादेशः स्थानेन विशेषित एवेति आदेशोऽविशेषित इति भाष्यासंगतिरित्यत आह प्रसज्यमानत्वेनेति। अथवाऽस्यानेति। स्थानशब्दस्य प्राधान्याद् रपरइत्यनेन सम्बन्ध इति भावः। तत इति। अणः स्थाने पदार्थेनाविशेषणादित्यर्थः। एवञ्च नादेशान्तराणां बाधकोऽण्विधीयते नापि नियमः नापि विहितस्य रपरत्वं प्रसज्यमानत्वेन विशेषणात् किं तु तत्तद्विधिभिर्वाक्यैकवाक्यतैवास्येति बोध्यत इति बोध्यम्। अथवेति। स्थानपदेन प्रसङ्गकालो लक्ष्यत इति भावः। ऋकार एवेति। स्थानतः प्रमाणतः स्वरूपतश्च सादृश्यादिति भावः॥ ननु वार्त्तिकोक्तरीरिविध्योर्ज्ञातत्वात्तस्य चोपलक्षणत्वे प्रमाणाभावात् के पुनरिति प्रश्नानुपपत्तिरत आह बहुवचनेति। सौधातकौ सुधातुरकङ् चेति इञ् पैतृष्वसेये ढकि लोपस्तत एव ढक्च। ननु लोपस्य रपरत्वे तं विनापि यथादेशेन तत्साध्यरूपसिद्धिरत आह लोपेति। रपरत्वाभिधानमुखेन

आनङ्, होतापोतारौ । आनङ् । अनङ्, कर्ता हर्ता । अनङ् । रीङ्, मात्रीयति । पित्रीयति । रीङ् । रिङ्, क्रियते ह्रियते । रिङ् । उदात्तादिषु च * । उदात्तादिषु च किम् । रपरत्वस्य प्रतिषेधो वक्तव्यः । कृतिः । हृतिः । कृतं हृतम् । प्रकृतम् । प्रहृतम् । नॄं पाहि । तस्मादण्ग्रहणं कर्तव्यम् । एकादेशस्योपसंख्यानम् * । एकादेशस्योपसंख्यानं कर्तव्यम् । खट्वर्श्यः । मालर्श्यः । किं पुनः कारणं न सिध्यति । उः स्थाने अण् प्रसज्यमान एव रपरो भवतीत्युच्यते । न चायमुरेव स्थाने अण् शिष्यते । किं तर्हि । उश्चान्यस्य च । अवयवग्रहणात्सिद्धम् । यदत्र ऋवर्णं तत्तदाश्रयं रपरत्वं भविष्यति । तद्यथा । माषा न भोक्तव्या इत्युक्ते मिश्रा अपि न भुज्यन्ते । अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तप्रतिषेधः * । अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तस्य प्रतिषेधो वक्तव्यः । होतापोतारौ । यथैवोश्चान्यस्य च स्थानेऽण् रपरो भवतीति । एवं य उः स्थानेऽण् चानण् च सोऽपि रपरः स्यात् । यदि पुनर्ऋवर्णान्तस्य स्थानिनो रपरत्वमुच्यते । खट्वर्श्यः । मालर्श्यः । नैवं शक्यम् । इह न प्रसज्येत । कर्ता हर्ता किरति गिरति । ऋवर्णान्तस्येत्युच्यते नचैतदृवर्णान्तम् । ननु च

---

सर्वादेशाथ स्यात् । होतापोताराविति । रेफस्य संयोगान्तलोपे कृते तस्यासिद्धत्वान्नलोपो न स्यात् । एकादेशस्येति । पूर्वपरयोरिति समुदायस्य स्थानित्वेन चोदितत्वात्तस्य च ऋवर्णरूपत्वाभावादिति भावः । अवयवग्रहणादिति । पूर्वपरयोरित्यनेनोद्भूतावयवभेदः समुदायो निर्दिश्यते अवयवावेव चाऽपेक्षितपरस्परौ समुदाय इति भवत्ययमृवर्णस्य स्थान इति भावः । रान्तप्रतिषेध इति । आनङि विधीयमाने आकारस्याणोभावादित्यर्थः । तस्मादवयवग्रहणादित्यस्यातिव्यापकत्वाद्यत्र साक्षादृवर्णस्याण् विधीयते तत्रैवेदमुपतिष्ठत इत्येकादेशस्योपसंख्यानं कर्तव्यमेव । यदि पुनरिति । उरिति वर्णग्रहणाद्वर्णग्रहणेच सर्वत्र तदन्तविधिं प्रयोजयतीति न्यायादृवर्णान्तस्य ग्रहणं खट्वर्श्य इत्यत्र च समुदाय ऋवर्णान्तो भवतीति सिद्धं रपरत्वम् । कर्तेति । अङ्गस्येति

---

सर्वादेशत्वमेव लोपस्याभिधित्सितमिति भावः । यदि सर्वादेशो लोपस्तदा उः स्थानेनेति कथं रपरत्वमितीदं चिन्त्यम् । तस्माल्लोपविधिवैयर्थ्यापादनमेव दोष इति तत्त्वम् । आनङनङौ आनङ्कृतोङ्न्दे ऋदुशनेति विहितौ । रेफस्येति । झल्ग्रहणापकर्षाद्यणः प्रतिषेधारम्भाच्च चिन्त्यमिदम् । तस्माद्रेफश्रवणमेव दोषोऽत्रेति बोध्यम् । समुदायस्येति । द्वन्द्वस्य सत्त्वादिति भावः । उद्भूतेति । अत एव द्विवचननिर्देशः । तत्सामर्थ्यादेव प्रत्येकं स्थानित्वबुद्धिरिति भावः । नन्ववयवभेदस्योद्भूतत्वविवक्षा नाम तद्गतसंख्यायाः समुदाये आरोपः नैतावता प्रत्येकं स्थानित्वलाभोऽत आह अवयवावेवचेति । इतरेतरयोग इति शेषः । एवञ्च तत्रसमुदायस्यावयवाभेदेन बोधनाद्द्विवचनेन प्रत्येकं तयोः स्थानित्वलाभः । अयमेवचोद्भूतावयवभेदः समुदाय इत्यस्यार्थ इति भावः ॥ भाष्ये गृहीताभिप्रायः समुदायस्यातिरिक्तस्य स्थानित्वेपि तदन्तर्गतावयवस्यापि स्थानित्वमादाय ऋस्थानिकत्वमनेनोक्तमित्यभिप्रायवानाह ( अवयवग्रहणात्सिद्धमिति चेदिति )। रान्तस्येति । रान्तत्वस्येत्यर्थः ॥ ऋवर्णान्तेति । शब्दशास्त्रप्रस्तावात् । शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः । नन्विकाङ्क्षे विशेष्यमाणे तदन्तविधेर्ऋवर्णान्तस्य गुणेन भाव्यमत आह अङ्ग

एतदपि व्यपदेशिवद्भावेन ऋवर्णान्तम्। अर्थवता व्यपदेशिवद्भावः। न चैषोऽर्थवान्। तस्मान्नैवं शक्यम्। नचेदेवमुपसंख्यानं कर्तव्यम्। इह च रपरत्वस्य प्रतिषेधो वक्तव्यः। मातुः पितुरिति। उभयं न वक्तव्यम्। कथम्। यो द्वयोः षष्ठीनिर्दिष्टयोः प्रसङ्गे भवति। लभतेऽसावन्यतरतो व्यपदेशम्। तद्यथा। देवदत्तस्य पुत्रः। देवदत्तायाः पुत्र इति। कथं मातुः पितुरिति। अस्त्वत्र रपरत्वं, का रूपसिद्धिः। रात्सस्येति सकारस्य लोपः। रेफस्य विसर्जनीयः। नैवं शक्यम्। इह हि मातुः करोति पितुः करोतीति। अप्रत्ययविसर्जनीयस्येति षत्वं प्रसज्येत। अप्रत्ययविसर्जनीयस्येत्युच्यते प्रत्ययविसर्जनीयश्चायम्। लुप्यतेऽत्र

---

षष्ठी अन्त्यमलमुपसंहृतेति ऋवर्णस्य गुणेन भाव्यम्। न च ऋवर्णो ऋवर्णान्तो भवतीति दोषः। नचेह तदन्तविधिरस्ति उरणिति भूतानुवादात्। नच प्रदेशेषु तदन्तस्य कार्यम्। अन्त्यस्यैवानुसंहारेण स्थानित्वप्रतिपादनादिति भावः। अर्थवतेति। यथैवेयायेत्यत्रैकादेशाद्यर्थम्। अर्थस्य हि त्यागोपादानाभ्यां वर्णरूपता धातुरूपता च व्यवस्थाप्येत। इह चेति। उपसंख्यानस्यातिव्याप्त्येत्यर्थः। मातुरिति। रपरत्वे कृते विभक्तिसकारस्य रुत्वं पूर्वस्य रोरीति लोपः। ढ्रलोप इति दीर्घत्वम्। तत्र मातूरिति प्राप्नोतीति भावः। द्वयोरिति। अवयवावेवात्रापेक्षितपरस्परौ स्थानिनौ। अत एवैकग्रहणं स्थानिभेदादादेशभेदनिवृत्त्यर्थं कृतम्। अन्यतरत इति। तृतीयान्ताद्याद्यादित्वात्तसिः। तद्यथेति। एकः पुत्र उभाभ्यामपि यथा व्यपदिश्यते तथेहापि पूर्वपराभ्यां तत्स्थानिकत्वेनादेशस्य व्यपदेशः। अकङादेस्तु समुदायस्यादेशत्वं नाण इति रपरत्वाभावः। प्रत्ययेति। अस्ति त्वयं समुदायः प्रत्ययो न त्वकार इति तदादेशोऽप्यप्रत्यय इति भावः। प्रत्ययेति। प्रत्ययावयवत्वादकारोऽपि प्रत्ययः। अतस्तदादेशोऽपि प्रत्यय इति भावः। लुप्यत इति। सकारसन्निधिकालेऽकारेण नैव लब्धा प्रत्ययसंज्ञा समुदायसन्निवेशिनीत्वात् तस्या इति कुतस्तदादेशस्तां लप्स्यते। उत्वे च कृतेऽवशिष्टः सकार एव प्रत्ययसंज्ञः स च

---

स्येति। षष्ठीति। इगन्ताङ्गान्त्यस्य गुण इति वाक्यार्थ इति भावः। भाष्ये लक्ष्यासिद्धिदोष ऋवर्णान्तस्येत्यर्थे उक्तः स्वयं तदर्थासम्भवमप्याह न चेहेति। भूतानुवादादिति। एवञ्चानुवादे परिभाषाया इव संज्ञाया अप्यप्रवृत्तिः। यद्वा समानविभक्त्यन्तविशेष्यरहितभूतानुवादादित्यर्थः। यत्र हि साक्षादर्थाद्वा विशेषणसमानाधिकरणं विशेष्यमुपादीयते तत्रैव वर्णग्रहणे तदन्तविधिः। गमकं विना शब्दरूपं विशेष्यमादाय तु न तदन्तविधिरिति भावः। नच प्रदेशेष्विति। इह तदन्तविध्यभावेऽपि यदि प्रदेशेषु ऋवर्णान्तस्य षष्ठीनिर्देशेन स्थानित्वं स्यात्ततस्तदनुरोधेनानुवादेऽपि एकदेशद्वारा ऋवर्णान्तं ग्राह्यं तदपि नास्तीति भावः। इदं चिन्त्यम्। वृद्धिर्यस्येत्यादावीदूदेद्द्विवचनमित्यादौ चानुवादेऽपि संज्ञाप्रवृत्तेः। वर्णविधौ च सर्वत्रेति च शब्दरूपविशेष्यमादाय तदन्तविधौ गमकमतो भाष्योक्त एव दोषः। भाष्ये (ऽर्थवतेति)। इदमसहायत्वोपलक्षणमत एव कुरुते इत्यादावनर्थकेनापि सः। तत्र हि स टिसंज्ञोपयोगिसहायरहित एवेति दिक्। भाष्ये (इह चेति)। एकादेशस्योपसङ्ख्यानमित्योपसङ्ख्यानिकरपरत्वप्रतिषेधश्च वक्तव्य इत्यर्थः। मातुरित्यादौ तदुपसङ्ख्यानातिव्याप्तेरिति भावः। मातूरिति। ऊरपरइति पूर्वोक्तभाष्यप्रयोगविरोधादत उदिति तपरत्वान्मातूरित्यादौ न दीर्घ इत्यपास्तं वेदितव्यम्॥ उक्तेऽर्थे गमकमाह अत एवेति। पञ्चम्यन्तात्तसिलर्थासङ्गतेराह तृतीयान्तादिति। समुदायस्येति। प्रत्येकमादेशत्वे प्रमाणाभावादित्यर्थः। भाष्ये (रात्सस्येति)। सलोपे ऽस्वस्यासिद्धत्वादिति भावः। असित्ययमिति। प्रत्ययरूपविसर्गभिन्नस्येत्यर्थ इति भावः। अकारोऽपीति। सूत्रस्थप्रत्ययशब्दस्तदवयवे लाक्षणिक इति भावः॥ उत्वे च कृतइति। न चकारदेशस्य परा·

प्रसयो रात्सस्येति। एवं तर्हि भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तात् षत्वप्रतिषेधस्य। यदयं कस्कादिषु भ्रातुष्पुत्रशब्दं पठति तज्ज्ञापयत्याचार्यः। नैकादेशनिमित्तात् षत्वं भवतीति। किं पुनरयं पूर्वान्तः। आहोस्वित्परादिः। आहोस्विदभक्तः। कथं चाऽयं पूर्वान्तः स्यात्। कथं वा परादिः कथं वा अभक्तः। यद्यन्त इति वर्तते। ततः पूर्वान्तः। अथादिरिति वर्तते। ततः परादिः। अथोभयं निवृत्तम्। ततोऽभक्तः। कश्चात्र विशेषः। अभक्ते दीर्घलत्वयगभ्यस्तस्वरहलादिःशेषविसर्जनीयप्रतिषेधः प्रसयाव्यवस्था च *। यद्यभक्तः, दीर्घत्वं न प्राप्नोति। गीः पूः। रेफवकारान्तस्य धातोरिति दीर्घत्वं न प्राप्नोति। किं पुनः कारणं रेफवकाराभ्यां धातुर्विशेष्यते न पुनः पदं विशेष्यते। रेफवकारान्तस्य पदस्येति। नैवं शक्यम्। इहापि प्रसज्येत। अग्निर्वायुरिति। एवं तर्हि रेफवकाराभ्यां पदं विशेषयिष्यामो धातुनेकम्। रेफवकारान्तस्य पदस्येको धातोरिति। एवं प्रियं ग्रामणि कुलमस्य प्रियग्रामणिः प्रियसेनानिः। अत्रापि प्राप्नोति। तस्माद् धातुरेव विशेष्यते। धातौ च विशेष्यमाणे इह दीर्घत्वं न प्राप्नोति। गीः पूः। दीर्घ। लत्व, लत्वं च न सिध्यति। निजेगिल्यते। ग्रो यङीति लत्वं न प्राप्नोति। नैष दोषः। ग्र इत्यनन्तरयोगैषा षष्ठी। एवमपि स्वर्जेगिल्यत इत्यत्रापि प्राप्नोति। एवं तर्हि यङा आनन्तर्यं विशेषयिष्यामः। अथ वा ग्र इति पञ्चमी। लत्व। यक्स्वर, यक्स्वरश्च न सिध्यति। गीर्यते स्वयमेव पूर्यते स्वयमेव। अचः कर्तृयकीत्येष स्वरो

---

लुप्त इति भावः। एकादेशनिमित्तादिति। एकादेशशास्त्रं निमित्तं यस्य तस्मात्परस्येत्यर्थः। यद्यन्त इति। यद्यपि रपर इत्यत्राऽन्यपदार्थस्य प्राधान्यं तथापि रेफस्य विधेयतया प्राधान्यात्तस्यैवान्तत्वं विशेषणमिति भावः। यद्यपि प्रसज्यमान एवाण् रपरो विधीयते। तथाप्यानङ इव साक्षादत्राऽर् आर् इत्येवमविधानात्तात्पर्यालोचनन्यायेन

---

दिवस्वेनोर्सित्यस्य प्रत्ययतया लोपे एकदेशविकृतन्यायेनोरित्यस्य प्रत्ययतया विसर्गस्य प्रत्ययावयवत्वमस्त्येवेति वाच्यम्। त्रिपाद्या असिद्धत्वेन तदन्तादिवद्भावाप्रवृत्तेः। स्थानित्वेन तु न निर्वाहः। उपात्तस्य स्थानिनो ऽकारस्य प्रत्ययत्वाभावात्। सर्वे सर्वपदादेशा इत्यनेन तु भातृ असित्यस्य स्थानित्वेपि असित्यस्य स्थानित्वालाभात्। भाष्ये लुप्यतेऽत्र प्रत्ययविसर्जनीयइतिपाठे योऽत्र प्रत्ययस्थानिकत्वेन तवाभिमतो विसर्जनीयः स लुप्यते न दृश्यते स्थानिनः प्रत्ययस्यैव लोपादित्यर्थः। एवन्तर्हि भ्रातुष्पुत्रेति। त्रिपाद्यामप्यन्तादिवद्भावप्रवृत्तिज्ञापनद्वारेति गूढोऽभिसन्धिः। कर्मधारये निमित्तपदवैयर्थ्यमिति बहुव्रीहिमेकादेशपरे लक्षणाञ्च दर्शयति एकादेशशास्त्रमिति। यद्यपीति। तथा च तस्यैव विशेषणं स्यादिति भावः। प्राधान्यादिति॥ रपरशब्दस्तादर्थ्यविषयत्वादित्यर्थः। एवञ्च पूर्वान्तावयवभूतरेफपरो ऽणित्यर्थः। सूत्रे रपर इति समासश्च सौत्रत्वात्साधुः॥ नन्वरारादिरूपेण विधानात्कथमभक्तत्वादिशङ्क्यत आह यद्यपीति। अविधानादिति। अनुच्चारणादित्यर्थः। तात्पर्येति। प्राप्ताप्राप्तविवेकन्यायेनेत्यर्थः। केवलेति। रेफमात्रविधौ सूत्रतात्पर्यादिति भावः। यत्तु अयमपि विचारो भूतस्याणो रपरत्वमिति पक्षे नष्टाश्वदग्धरथन्यायेनानान्तर्यमेवान्तर्यमितिक्ककारस्याकाराकारावेव गुणवृद्धी भविष्यतः। अरादिरूपेण विधानमिति पक्षे तु आनङादौ नका-

न प्राप्नोति। रेफेण व्यवहितत्वात्। नैष दोषः। स्वरविधौ व्यञ्जनमविद्यमानवद्भवतीति नास्ति व्यवधानम्। यक्स्वर। अभ्यस्तस्वर, अभ्यस्तस्वरश्च न सिध्यति। मा हि स्म ते पिपरुः। मा हि स्म ते बिभरुः। अभ्यस्तानामादिरुदात्तो भवति अजादौ लसार्वधातुके इत्येष स्वरो न प्राप्नोति। रेफेण व्यवहितत्वात्। नैष दोषः। स्वरविधौ व्यञ्जनमविद्यमानवद्भवतीति नास्ति व्यवधानम्। अभ्यस्तस्वर। हलादिः शेष, हलादिः शेषश्च न सिध्यति। ववृते ववृधे। अभ्यासस्येति हलादिः शेषो न प्राप्नोति। हलादिः शेष। विसर्जनीय, विसर्जनीयस्य प्रतिषेधो वक्तव्यः। नार्कुटो नार्पत्यः। खरवसानयोर्विसर्जनीय इति विसर्जनीयः प्राप्नोति। विसर्जनीय। प्रत्ययाव्यवस्था च, प्रत्यये च व्यवस्था न प्रकल्पते। किरतः गिरतः। रेफो ऽव्यभक्तः प्रत्ययो ऽपि तत्र व्यवस्था न प्रकल्पते। एवं तर्हि पूर्वान्तः करिष्यते। पूर्वान्ते ऽवधारणं विसर्जनीयप्रतिषेधो यक्स्वरश्च * । यदि पूर्वान्तः रोरवधारणं कर्तव्यम्। रोः सुपि रोरेव सुपि नान्यस्य। सर्पिष्षु।

---

केवलावस्थानात्पक्षत्रयविमर्शः। लत्वं चेति। अ इत्यवयवषष्ठीति चोद्यम्। पिपरुरिति। पॄ लङ् झि शप् श्लुर्द्विर्वचनमर्तिपिपर्त्योश्चेतीत्वं सिजभ्यस्तेति जुस् जुसि चेति गुणः। ववृत इति। अभ्यासावयवस्थानादेर्हलो निवृत्त्या भाव्यमिति रेफस्य निवृत्त्यासिद्धिः। नार्कुट इति। यस्मात्सुप्तिङ्विधिस्तदादि सुबन्तं तिङन्तं चेति रेफान्तस्य पदत्वाद्विसर्जनीयप्रसङ्गः। किरत इति। एकवचने किरतीति नित्यत्वात् पूर्वं विकरणः। आङ्गं तु कार्यमनित्यम्। अकृते हि विकरणे गुणः प्राप्नोति कृते त्विरत्वमिति। द्विवचने तु द्वयोरपि नित्यत्वात्परत्वादित्वं तत्र रेफो ऽभक्तत्वान्न धात्ववयव इति विकरणो न स्यात्। स हि धातोः परो विधीयते अथ विकरणात्परो रेफस्तदा ऽप्ययणः परो न स्यादिति व्यवस्था द्वयोर्न प्रकल्पते। अथ व्यवहितेपि परशब्दस्य

---

रविषयो यथा न विचारस्तथात्रापीति तत्त्वमिति तत्तु प्रकृतसूत्रे तस्य पक्षस्यास्थितत्वादयुक्तम्। वार्त्तिके प्रतिषेधो ऽभावो निवर्त्तनञ्च। आद्ये स्यादिति शेषः। द्वितीये वक्तव्यइति। गृप्रोः क्विपि गीः पूः कृन इत् उदोष्ठ्यपूर्वस्येत्वे। भाष्ये ( पत्रमिति )। पत्रस्येत्यनुवर्त्तमानमित्यर्थः॥ अनन्तरयोगेति। अनन्तरशब्दोऽव्यवहितवाची। स्वरविधाविति। यद्यपि हल्स्वरप्राप्तौ स्वरोद्देश्यकविधौ चेदम्। अत एवाचः कर्तृइतिसूत्रेऽच इति चारितार्थम्। तथापि तदनाश्रयेणैकदेशयुक्तिर्भाष्यमिति तत्त्वम्। भाष्ये माङ्प्रयोगोऽडभावाय। तस्मिन् हि अट्स्वरः स्यात्। हिप्रयोगो हि चेतिनिघातनिषेधाय स्मशब्दो लङ्सिद्धये। अभ्यासावयवस्येति। गभवरनवयवस्यापि तद्ग्रहणेन ग्रहणं तन्मध्यपतितन्यायेन। नन्वेतावतावयवत्वमिति भ्रमितव्यमिति भावः। यद्वा ऋवर्णान्ताभ्यासस्येत्यर्थे पूर्वन्तकारस्य हलादिः शेषेण निवृत्तावुरदत्वं ततः पुनर्हलादिः शेषो न स्यात् अनवयवत्वादिति भावः। नचैवं लक्ष्ये लक्षणस्येति न्यायेन पुनर्हलादिः शेषानापत्तिरिति वाच्यम्। लक्ष्यभेदात्। नृकुटीशब्दात्तु भवादावण्। नृपतेर्दित्यदित्यादित्येति ण्यः। ननु रेफान्तान्न सुब्विधिरिति कथं तदन्तस्य प्रत्ययलक्षणेन पदत्वमत आह यस्मादिति। यस्माद्विधिस्तद्वृत्ति नृशब्दत्वं नाशब्दस्य स्थानिवद्भावेन तदादित्वञ्च रेफान्तस्य मुख्यं सुबन्तत्वञ्च प्रत्ययलक्षणेनेति भावः। एकवचनान्तानुदाहरणे बीजमाह एकेति। नित्यत्वादिति। विकरणविधौ सार्वधातुक इति विषयसप्तमी। अन्यथा ऽभक्तत्वे ऽनन्तरसार्वधातुकाभावेन विकरणाप्राप्तेर्नित्यत्वं व्याहतं स्यादिति भावः। नित्यत्वादिति। तयो ङित्वादित्वस्यैव प्रवृत्तेः।

धनुष्षु। इह मा भूत्। गीर्षु पूर्षु। परादावपि सत्ववधारणं कर्तव्यं चतुर्ष्विसेव-मर्थम्। विसर्जनीयप्रतिषेधः। विसर्जनीयस्य च प्रतिषेधो वक्तव्यः। नार्कुटः। नार्पत्यः। खरवसानयोर्विसर्जनीय इति विसर्जनीयः प्राप्नोति। परादावपि विसर्जनीयस्य प्रतिषेधो वक्तव्यः नार्कल्पिरिसेवमर्थम्। कल्पिपदसंघातभक्तो ऽसौ नोत्सहते ऽवयवस्य पदान्ततां विहन्तुमिति विसर्जनीयः प्राप्नोति। यक्स्वर, यक्स्वरश्च न सिध्यति। गीर्यते स्वयमेव स्तीर्यते स्वयमेव। अचः कर्तृयकीसेप स्वरो न प्राप्नोति। नैष दोषः। उपदेश इति वर्तते। अथ वा पुनरस्तु परादिः। परादावकारलोपौत्वपुक्प्रतिषेधश्चङ्युपधाह्रस्वत्वमिटो व्यवस्था ऽभ्यासलोपो ऽभ्यस्तादिस्वरो दीर्घत्वञ्च *। यदि परादिः। अकारलोपः प्रतिषेध्यः। कर्ता हर्ता। अतो लोप आर्द्धधातुकइसकारलोपः प्राप्नोति। नैष दोषः। उपदेशइति वर्तते। यद्युपदेशइति वर्तते। धिनुतः कृणुतः। अत्र लोपो न प्राप्नोति। नोपदे-शग्रहणेन प्रकृतिरभिसंबध्यते। किं तर्हि। आर्धधातुकमभिसंबध्यते आर्धधातुको-पदेशे यदकारान्तमिति। अकारलोप। औत्व, औत्वं च प्रतिषेध्यम्। चकार

प्रवृत्तिस्तथापि समीहिता व्यवस्था न प्रकल्पत इति प्रत्ययाव्यवस्थोक्ता। गीर्ष्विति। परादौ सुब्ग्रहणेन गृह्यत इति न पदान्तत्वमिति भावः। अभक्तपक्षेपि तदादिवचना-त्प्राप्तिरिति कर्तव्यमवधारणं कल्पिपदेपि नृकल्पशब्दादिञि वृद्धौ च रेफः प्रत्ययसमु-दायस्य कल्पिशब्दस्य भक्तत्वादवयवो न तु कल्पशब्दस्य। ततश्च नृशब्दस्य कल्प-शब्दे परतः पदसंज्ञा विधीयमाना तदादीत्यधिकाराद्रेफान्तस्य। भवतीति विसर्जनी-यप्रसङ्गः। पदशब्देन च पद्यते ऽनेनार्थ इति प्रत्यय उच्येत तेन प्रत्ययसमुदायभक्तो रेफः कल्पिशब्दे परतो व्यवस्थितो न कल्पशब्दस्यावयव इति तयोः पौर्वापर्यमस्त्ये-वेति अवयवस्यात्मन एव पदान्ततां विहन्तुं नोत्सहत इत्यर्थः। क्वचित्तु कल्पपदसं-घातभक्त इति पाठः। तत्रायमर्थः। कल्पशब्दस्य सम्बन्धि यत्पदं नार्कल्पिरिति तस्य पदस्य योऽवयवः प्रत्ययसंघातः कल्पिशब्दस्तद्भक्त इत्यर्थः। धिनुत इति। एकवचने असत्यप्यकारलोपे आद्गुणेन वा विकरणस्य वा गुणे पररूपेण धिनोतीति सिध्य-तीति द्विवचनं समुदाहृतम्। आर्धधातुकोपदेश इति। सन्नियोगेन चाकारस्य विधा-

न प्रकल्पत इति। नियमेन विकरणस्यैव व्यवहितपरत्वं न सिध्येदिति भावः॥ नृकल्पेति। नृशब्दात्कल्प-प्प्रत्ययः। पदसंज्ञेति। स्वादिष्विस्यनेन। यद्यसौ कल्पशब्दावयवः स्यात् तदा स्वावयवभूतरेफान्तस्य नारि-स्यस्य न स प्रत्ययः परः स्यादिति भावः। परादिरित्यत्र परशब्देन परत्वपर्याप्त्यधिकरणो यावान् स सर्वो ऽपि गृह्यते न तदवयवोऽपीति तात्पर्यम्। ननु प्रत्ययस्य कथं पदत्वमत आह पदशब्देनेति। कल्पिरूपः पदसङ्घातः प्रत्ययसमुदाय इति भाष्यार्थः। तस्मात्पक्षत्रयेपि विसर्जनीयप्रतिषेधस्य वक्तव्यतया नायं दोष इति भावः। वृद्धेर्बहिरङ्गासिद्धत्वन्तु नोक्तं त्रिपादीस्थेन्तरङ्गे तत्परिभाषाया अप्रवृत्तेः। भाष्ये ( उपदेशइति वर्त्त-तइति ) अचः कर्त्रित्यत्र तास्यनुदात्तेदित्यत इत्यर्थः॥ भाष्ये ( अथवा पुनरस्तु परादिरिति ) अवधारणविस-र्जनीयप्रतिषेधयोः कर्त्तव्यतायाः पूर्वान्तपरादिपक्षयोः समत्वात् परादिपक्षो वा वक्तव्यः पूर्वान्तो वेत्यत्र न विशेष इति चेत् कश्चिद् ब्रूयात् तत्राह वार्त्तिककारः परादावितीत्यर्थः। परादाविति वार्त्तिके पुगन्तलघूपधस्य प्रतिषेधपदेन षष्ठीतत्पुरुषो वक्तव्य इति शेषः। चङ्युपधाह्रस्वत्वं वक्तव्यमग्रे सर्वत्रायमेव शेषो बोध्यः।

जहार। आत औ णल इत्यौत्वं प्राप्नोति। नैष दोषः। निर्दिश्यमानस्यादेशा भवन्तीत्येव न भविष्यति। यस्तर्हि। निर्दिश्यते तस्य कस्मान्न भवति। रेफेण व्यवहितत्वात्। औत्व। पुक्प्रतिषेध, पुक् च प्रतिषेध्यः। कारयति हारयति। आतः पुगिति पुक्प्राप्नोति। पुक्प्रतिषेध। चङ्युपधाह्रस्वत्व, चङ्युपधाह्रस्वत्वं च न सिध्यति। अचीकरत् अजीहरत्। णौ चङ्युपधाया ह्रस्व इति ह्रस्वत्वं न प्राप्नोति। इटो व्यवस्था। इटश्च व्यवस्था न कल्पते। आस्तरिता निपरिता। इडपि परादौ रेफो ऽपि तत्र व्यवस्था न प्रकल्पते। अभ्यासलोप, अभ्यासलोपश्च वक्तव्यः। ववृते ववृधे। अभ्यासस्य हलादिश्शेषो न प्राप्नोति। अभ्यासलोप। अभ्यस्तस्वर, अभ्यस्तस्वरश्च न सिध्याति। मा हि स्म ते पिपरुः। मा हि स्म ते बिभरुः। अभ्यस्तानामादिरुदात्तो भवत्यजादौ लसार्वधातुकइत्येष स्वरो न प्राप्नोति। अभ्यस्तस्वर। तादिस्वर, तादिस्वरश्च न सिद्ध्यति। प्रकर्ता प्रकर्तुम्। तादौ च निति कृत्यतावित्येष स्वरो न प्राप्नोति। नैष दोषः। उक्तमेतत्। कृदुपदेशे वातादयर्थमिडर्थमिति। तादिस्वर। दीर्घ, दीर्घत्वं च न सिध्यति। गीः पूः। रेफवकारान्तस्य धातोरिति दीर्घत्वं न प्राप्नोति॥

---

नादार्धधातुकप्रतिपत्तिकालेकारान्तप्रतिपत्त्या सिद्धो लोपः। निर्दिश्यमानस्येति। नन्वादेः परस्येति रेफस्यौत्वेन भाव्यम्। नैष दोषः। णल इत्यनेन यत्प्रत्यायितं प्रयोगविषयमकारमात्रं तस्याकारान्तादङ्गादुत्तरस्यादेशः प्रवर्तते स रेफस्य त्वनुमीयमानत्वाददेशाभावः। प्रत्याय्यप्रत्यायकाभेदविवक्षया षष्ठीनिर्दिष्टस्यादेशा इत्युच्यते। रेफेणेति। यद्रूपं षष्ठीनिर्दिष्टमकारमात्रं तद्व्यवहितमित्यर्थः। यदि तु प्रत्ययस्येत्युच्यते लिट इति वा तदा व्यवधानाभावात् स्यादेवादेशः। आस्तारितेति। नित्यत्वाद् गुणे रपरत्वे च कृते नेड्वशि कृतीति प्रतिषेधादप्रवृत्तिलक्षणेटो ऽव्यवस्था। प्रवृत्तौ वा रेफात् पूर्वं इडिति अनिष्टा व्यवस्था प्राप्नोति। गीरिति। अन्तरङ्गत्वाद्विलोपे कृते इत्वे-

---

उपदेश इति वर्तत इति। अतो लोप इत्यत्रानुवृत्तोपदेशोऽस्यत इत्यर्थः। पररूपेण। अतो गुण इत्यनेन॥ नन्विति। आदेः परस्येति निर्दिश्यमानपरिभाषाबाधकामित्यभिमानः। तस्यैवायमनुसंहार इत्युत्तरम्। ननु सूत्रे उच्चारितस्य लणो नादेशः किं तु तत्प्रत्यायिताकारस्येति षष्ठीनिर्दिष्टस्यादेशा इत्ययुक्तं स्यादत आह प्रत्याय्येति। निर्दिश्यमानस्येत्यस्य प्रतिपादितस्येत्यर्थे तु पादन्तस्यापि पदादेशापत्तिरिति बोध्यम्। यदि त्विति। तथा तु वक्तुमशक्यम्। सर्वत्रादेशापत्तेरिति भावः॥ कथं तर्हीडपीत्यादिभाष्यमत आह प्रवृत्तौ वेति। नेड्वशीत्यत्रोपदेश इत्यपकृष्योपदेशे वशादेरेव निषेध इति भावः। भाष्ये ( ववृत इति )। ऋवर्णान्ताभ्यासस्यादित्यर्थे पूर्वन्तलोपे पश्चाद्रेफस्तस्य लोपे इति पक्षे इदम्। ववृत्रे इत्यप्युदाहार्यम्। प्रकर्तेति। तत्। एष स्वरः। पूर्वपदप्रकृतिस्वरः। कृदुपदेशकालिकतादिप्रत्ययप्रतीत्यर्थन्तादावितिं सूत्रे कृद्ग्रहणमिति भाष्याशयाहृतवार्त्तिकार्थः। तादावितिसूत्रेण गतेः स्वरो विधीयते। क्रियायोगे च गतित्वम्। क्रियावाची च धातुस्तत्र तिङन्ते पूर्वपदाभावेन कृदन्त एव सिद्धमिति कृद्ग्रहणमुक्तार्थम्। न च कृद्ग्रहणाभावे तादित्वमुत्तरपदस्य विशेषणं स्यात्। तथा च प्रतारितेत्यादावेव स्यादिति तस्य कृद्विशेषणत्वाय तदिति वाच्यम्। श्रुतानिमित्तयविशेषणताया एव न्याय्यत्वादिति दिक्॥ ननु रेफस्य परादित्वे ऽभक्तत्वाभावाद्विलोपो न प्राप्नोतीति

अलोऽन्त्यस्य ॥ ५२ ॥ किमिदमल्ग्रहणमन्त्यविशेषणम् आहोस्विद् आदेशविशेषणम्। किं चातः। यद्यन्त्यविशेषणम्। आदेशो ऽविशेषितो भवति। तत्र को दोषः। अनेकाल्प्यादेशो ऽन्त्यस्य प्रसज्येत। यदि पुनरलन्त्यस्येत्युच्यते तत्रायमप्यर्थः। अनेकाल् शित्सर्वस्येत्येतन्न वक्तव्यं भवति। इदं नियमार्थं भविष्यति। अलेवान्त्यस्य भवति नान्य इति। एवमप्यन्त्यो ऽविशेषितो भवति। तत्र को दोषः। वाक्यस्यापि पदस्याप्यन्त्यस्य प्रसज्येत। यदि खल्वप्येषो ऽभिप्रायस्तन्न क्रियेतेति अन्त्यविशेषणे ऽपि सति तन्न करिष्यते।

---

रपरत्वे च सुपो ऽयमादौ रेफ इति कल्पनायां रात्सस्येति सलोपे कृते दीर्घत्वं न स्यादिति पूर्वान्तपक्षो ऽत्र स्थितः ॥ ५१ ॥

अलो ऽन्त्यस्य ॥ किमिदमिति। षष्ठीप्रथमयोर्निर्देशस्य साम्यात् प्रश्नः। यदि पुनरिति। प्रथमाबहुवचनम् अल इति यदि व्याख्यायेतेत्यर्थः। अस्मिंश्च पक्षे रहारजानां लोपश्चेति लोपः सर्वादेशः प्राप्नोति। विरजीकरोतीति। इदं नियमार्थमिति। अन्त्यस्यादेशा भवन्तीत्यलो ऽप्यादेपादल्ग्रहणमनल्व्यावृत्त्यर्थमिति भावः। वाक्यस्यापीति। दोषपरत्वादेवमुक्तम्। न तु वाक्यं षष्ठीनिर्दिष्टमस्ति पदस्य तु परमानडुह्यमित्यत्रानडुच्छब्दस्यान्त्यस्य सर्वस्य दत्वं प्राप्नोति। यदि खल्वपीति।

---

कुतो नोक्तमत आह अन्तरङ्गत्वादिति। तदानीं सुपो ऽभावादाह कल्पनायामिति। पदस्य विभक्त्यान्वाख्यानामिति भावः॥ पूर्वान्तेति। नार्कुटादौ वचनेनैव निर्वाहो भाष्य उक्त इति बोध्यम्। एवञ्च रपर इति अवयववाचिपरशब्देन षष्ठ्यर्थे बहुव्रीहिरिति ध्वनितम्। अवयवत्वञ्चावयवसादृश्ये पर्यवस्यति न हि वर्णस्य वर्णान्तरमवयवो भवति। अत एव प्रसङ्गावस्थाया रपरत्वेऽपि गुणादिशब्देन विधानम्। यथासमा इति न्यायेन विशिष्टस्य गुणादित्वात्। एवं ऋवर्णादचि पूर्वपरयोरन्तरतमो रपरोण् भवतीत्यर्थ इति बोध्यम्। गुणादिशब्देनारारोर्ग्रहणाभावे तु ऋकारस्य गुणवृद्धी अरारावेवेति नियमो न स्यात् यतो गुणादिशब्देन आकारादे रेफः परो यस्मात्तादृशस्य विधानं गुणत्वादिकञ्चाकारादिनिष्ठमेव तेन च नान्तर्यम्। एतदेवाभिप्रेत्य रवाभ्यामिति सूत्रे भाष्ये गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्त्तत इति वक्ष्यति। अत एव यद्यन्त इति वर्त्तते ततः पूर्वान्त इत्युपक्रमस्थं भाष्यमेकदेशयुक्तिः। तथा हि सति यथा परादिपक्षे नार्कुटिरित्यादौ रेफस्य कल्पीति समुदायावयवत्वोपपत्तये परत्वपर्यालोच्याधिकरणादिरित्यर्थस्तथा पूर्वान्त इत्यस्य पूर्वत्वपर्यालोच्याधिकरणान्त इत्यर्थापत्तौ उक्तदोषो रषाभ्यामिति सूत्रस्थभाष्यविरोधश्चेत्याहुः ॥ ५१ ॥

अलोन्त्य ॥ भाष्ये ( प्रसज्येते ) त्यनन्तरं तन्निवृत्तये ऽनेकाल् सर्वस्येति वाच्यं स्यादिति शेषः। मन्त्वलन्त्यस्येत्युच्यमाने सूत्रभेदः स्यादत आह प्रथमेति। बहुत्वस्याविवक्षितत्वं दर्शयितुमेवमुक्तमिति भावः। प्राप्नोतीति। लोपस्याभावरूपत्वेनाल्रूपत्वाभावादिति भावः। एवञ्चायं पक्षो दुष्ट एव। वलस्यापीति लोपे प्रकृते लुग्वा दुहेति लुग्ग्रहणस्य प्रथमान्तपक्षेऽल्ग्रहणमनेकालभिन्नलक्षकमित्यर्थज्ञापकत्वामिति नायं दोष इति भाष्याशयं मन्ये ॥ भाष्ये ( इदं नियमार्थमिति ) इदमा सूत्रं तु न परामृश्यते। अप्राप्तान्यादेशविधायकत्वात्तस्य किन्त्वल्पदमिति तस्य नियमार्थत्वमुपपादयति अन्त्यस्येति। अलोपीति। अलास्मकादेशस्यापीत्यर्थः। आपिना ऽनेकालोपि। नन्विति। षष्ठीस्थाने इत्यनुवर्त्य स्थानषष्ठीबोधितान्त्यस्येति व्याख्यानादित्यर्थः। यत्तु यथा तथा यथापुरयोरिति सूत्रे न यथा तथा अयथा तथा ऽयथातथाभावो ऽयाथातथ्यमिति भाष्यदर्शनात्तत्प्रामाण्येन निपातसमुदायात् प्रत्ययो निपातसमुदायेन नञ्समास इत्यङ्गीकार्यम्। तथा यथातथाशब्दात् ष्यञि यस्येति लोपेऽवर्णान्ताङ्गस्य भसंज्ञकस्य जायमानस्तदन्तस्य यथातथेति पदसमुदायस्य स्यादिति। तन्न निर्दिश्यमानपरिभाषया सिद्धेः। तदनाश्रयेण वा तदुक्तिः। पदस्य दिशति। आधिकृतपदस्येत्यस्य वस्त्वादिभिर्विशेषणादित्यर्थः। यदि खल्विति। पराभिप्रायं वदता सूचितमभ्युपगतं स्वाभिप्रायं प्रका-

कथम् । ङिच्च अलो ऽन्त्यस्येत्येतन्नियमार्थं भविष्यति । ङिदेवानेकालन्त्यस्य भवति नान्य इति । किमर्थं पुनरिदमुच्यते । अलो ऽन्त्यस्येति स्थाने विज्ञातस्यानुसंहारः * । अलो ऽन्त्यस्येत्युच्यते स्थाने विज्ञातस्यानुसंहारः क्रियते । स्थाने प्रसक्तस्येति । इतरथा ह्यनिष्टप्रसङ्गः * । इतरथा ह्यनिष्टं प्रसज्येत । टित्किन्मितो ऽप्यन्त्यस्य स्युः । यदि पुनरयं योगशेषो विज्ञायेत । योगशेषे च * । किम् । अनिष्टं प्रसज्येत । टित्किन्मितो ऽप्यन्त्यस्य स्युः । तस्मात्सुष्ठूच्यते । अलो ऽन्त्यस्येति स्थाने विज्ञातस्यानुसंहार इतरथा ह्यनिष्टप्रसङ्ग इति ॥

---

अवश्यकर्तव्यो ऽसौ योगो ऽपवादविप्रतिषेधार्थः । अथ लाघवमात्रे आदरस्तत्राप्युच्यते । अन्त्यविशेषणे ऽपीति । स्थाने विज्ञातस्येति । षष्ठी स्थानेयोगेत्यनुवर्तते । तेन या षष्ठी स्थानेयोगत्वेन विज्ञाता सान्त्यमलमनुसंह्रियते । आदेशो वा यो निश्चितः सो ऽन्त्यस्याल्लः स्थाने इत्यनुसंह्रियते । इतरथेति । यदि षष्ठीमात्रमनुसंह्रियेतेत्यर्थः । तत्र लविलेति तृच अकारात्पूर्वमिट् प्राप्नोतीति दोषः । दापयतीति पुगाकारस्य स्यात् । ततश्च यदुक्तमर्थवतो ह्यागम इति तन्न युज्यते । यदि पुनरिति । षष्ठी स्थानेयोगेत्यनेनास्यैकवाक्यता । अत्र तु प्रकरणे करणं ङिच्चेत्यादेः सम्बन्धार्थं तत्रायमर्थो भवति । शास्त्रे या षष्ठी सा ऽन्त्ये ऽलि सा च स्थानेयोगैवेति न तु स्थाने विज्ञातस्य पश्चादनुसंहारः प्रतिपत्तिगौरवप्रसङ्गादिति भावः । अनिष्टमिति । आद्यन्तौ टकितौ मिदचो ऽन्त्यात्पर इत्येताभ्यां स्थानेयोगत्वमेव बाध्यते तुल्यजातीयत्वात्स-

---

स्यति अवश्येति । असौ योगः । अनेकाल्शिदिति योगः । अतो भिस इत्यादावादेः परस्येत्यादिबाधनार्थ इति भावः । नन्वस्यावश्यकत्वेऽन्त्यविशेषणेऽपीत्यादिग्रन्थो ऽसङ्गतो ऽत आह अथेति । आलिति प्रथमान्तं मण्डूकानुवृत्त्या ऽऽदेः परस्येत्यत्र सम्बध्यत इति एतादृशे न दोषः । तातङ्यपि ज्ञापकात् सर्वादेशत्वं भविष्यतीति भावः ॥ भाष्ये ( ङिदेवानेकालन्त्यस्येति ) अलूरूपाङिदित्यस्य फलाभावादनेकालिति लभ्यम । एवञ्चास्यानेकालादेशो ऽप्रवृत्तस्तत्साहचर्यादादेः परस्येत्यस्याप्यनेकालादेशे ऽप्रवृत्तिरिति दिक् । ( किमर्थं पुनरिति ) । किं स्थानषष्ठीनिर्देशविषयमुत षष्ठीमात्रविषयमिति प्रश्नः । स्थाने विज्ञातस्य कस्येत्यपेक्षायामाह षष्ठीति । स्थाननिरूपितसम्बन्धार्थकत्वेन ज्ञातस्य षष्ठीरूपप्रत्ययस्येत्यर्थः । नन्वेवं विज्ञाताया इति वक्तुं युक्तमत आह आदेशइति । स्थानषष्ठीसम्बन्धादादेशत्वेन यो विज्ञात इत्यर्थः । अन्ये तु अलोऽन्त्यस्येति यदुच्यते तेन स्थाने विज्ञातस्य समुदायस्थाने प्रसक्तस्यान्त्येऽल्यनुसंहारउपसंहारस्तत्स्थानिकत्वमात्रं क्रियत इति बोध्यत इति भाष्याक्षरार्थः । स्थाने विज्ञातस्येत्यस्य व्याख्या स्थानेप्रसक्तस्येति कैयटव्याख्याने एतद्ग्रन्थार्थ्ये भातीत्याहुः ॥ षष्ठीमात्रमिति । उपलक्षणमेतत् । षष्ठीमात्रोच्चारणेन विधीयमानं चेत्यपि बोध्यम् । ततो यदुक्तमिति । आकारावयवत्वे प्रतिपादयतीत्यादौ णत्वं न स्यादित्यर्थः । नचावयवावयवः समुदायावयव इति निर्वाहः । यस्यावयवस्तद्विशिष्टे यत्र तदवयववृत्तिधर्मबुद्धिस्तादृशस्यावयवावयवस्य समुदायावयवत्वबुद्धिर्हि लोकसिद्धा यथा भुजावयवाङ्गुल्यादिविशिष्टे भुजत्वबुद्धिसत्त्वात्तदवयवकशरीरावयवत्वबुद्धिरङ्गुल्यादेः न चैवमत्राकारावयवपकारादिविशिष्टे वर्णत्वादिबुद्धिः । अर्थवत आगमेन तु तद्विशिष्टे तदर्थवत्त्वबुद्ध्या तद्बुद्धिसत्त्वेन भवत्येव समुदायावयवत्वमिति भवितव्यादावङ्गावयवत्वं सम्भवतीतीटो गुणनिषेधचारितार्थ्यमपि । वर्णस्य वर्णावयवत्वन्तु वाचनिकं गौणं तत्र यावद्वचनं वाचनिकमिति न्यायेन समुदायावयवत्वे मानाभाव इत्याशयः । सम्बन्धार्थमिति । अन्त्यस्येत्यनेनेति भावः । शास्त्रे येति । या षष्ठी सा स्थानेयोगैव सा चान्त्येऽलीति तु नार्थः । स्थानेयोगेति पदवृत्त्यापत्तेः । इदमेव प्रतिपत्तिगौरवम् । तस्माच्छास्त्रे या षष्ठी सा स्थानेयोगैवान्त्य ऽल्येव चेति वाक्यार्थ इति भावः । सा चेति । सा षष्ठी स्थानेयोगैव चेत्यन्वयः ॥ स्थाने योगत्व-

ङिच्च ॥ ५३ ॥ तातङन्त्यस्य स्थाने कस्मान्न भवति ङिच्चालोन्त्यस्येति प्राप्नोति । तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेशः * । तातङि ङित्करणं सावकाशम् । को ऽवकाशः । गुणवृद्धिप्रतिषेधार्थो ङकारः । तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेशो भविष्यति । प्रयोजनं नाम तद् वक्तव्यं यन्नियोगतः स्यात् । यदि चायं नियोगतः सर्वादेशः स्यात् तत एतत्प्रयोजनं स्यात् । कुतो नु खल्वेतत् ङित्करणादयं सर्वादेशो भविष्यति न पुनरन्त्यस्य स्यादिति । एवन्तर्ह्येतदेव ज्ञापयति न तातङन्त्यस्य स्थाने भवतीति । यदेतं ङितं करोति । इतरथा हि लोट एरुप्रकरणएव ब्रूयात् तुह्योस्तादाशिष्यन्यतरस्यामिति ॥

---

स्वन्धस्य सम्बन्धान्तरेण बाधोपपत्त्या । षष्ठ्यास्तु यद्रूपं तदन्त्य एवाल्यन्व्यवस्थितमिति पूर्ववद्दोषप्रसङ्गः । अनुसंहारः पुनरनुसंहारान्तरेणादेः परस्यानेकाल् शित्सर्वस्येत्यनेन बाध्यते ॥ ५२ ॥

ङिच्च ॥ विप्रतिषेधादिति । नन्वयमपवादोनेकाल् शिदित्युत्सर्गः । उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः । नैतदस्ति । ङित्त्वस्यान्यार्थत्वसम्भवे सति दौर्बल्यात् सन्दिग्धोपस्थानोयं योग इत्यपवादत्वमेवात्र विषयेऽस्य नास्ति । प्रयोजनं नामेति । सति सर्वादेशत्वे ङित्करणं गुणवृद्धिप्रतिषेधार्थं स्यात् तदेव तु सर्वादेशत्वमलभ्यं ङित्वादन्त्यस्यैव प्रसङ्गादिति भावः । ङित्करणादिति । गुणवृद्धिप्रतिषेधार्था-

---

मेव बाध्यत इति । अत्र हेतुस्तुल्यत्वादिरुपपत्त्येत्यन्तः । सम्बन्धस्येत्यादि । संबन्धनिरूपकस्य संबन्धनिरूपकान्तरेणेत्यर्थः । सन्नियोगशिष्टन्यायस्तु न परिभाषाविषये । तस्मिन्नित्यादिरुत्तराङ्गविकलायास्तत्र तदोपस्थितिस्वीकारादित्याशयः इत्यनेन बाध्यतइति नत्वाद्यन्तौ टकितावित्यनेनेति भावः ॥ ५२ ॥

ङिच्च ॥ भाष्ये ( कस्मान्न भवतीति ) । येन नाप्राप्तिन्यायेनास्यानेकालित्यस्यापवादत्वादिति भावः । उत्तरस्य त्वयं भावः । नेदमपूर्वविधायकं किं तु तत्र तत्र ङित्करणसामर्थ्यसिद्धानेकाल्त्वस्यैतद्बाधानुवादकम् । अनुवादफलन्तु ङित्त्वसामर्थ्यादर्थान्तरकल्पनानिवृत्तिः । एवञ्च प्रकृतेनास्य प्रवृत्तिः । प्रवृत्तौ हि शास्त्रस्यापूर्वविधायकतापत्त्या गौरवापत्तिः । एवञ्च यत्र सर्वादेशे ङित्त्वस्य वैयर्थ्यं तत्र तद्बाधः । यत्र तु न, तत्र न तद्बाध इति भावः । विप्रतिषेधादिति । परिभाषात्वविरोधादित्यर्थः । यदि सावकाशङित्त्वेपि प्रवृत्तिः स्यात्तदा ऽनुवादत्वासम्भवेन परिभाषाप्रकरणविरोध इति भावः । यथा चैतत्तथाग्रेऽपष्टमेव स्पष्टीभविष्यति । विप्रतिषेधे परमिति शास्त्रपरत्वे तु ङित्त्वस्य सावकाशत्वोक्तिरसङ्गता स्यात्सूत्रसावकाशत्वमेव हि विप्रतिषेधे बीजं न त्वस्य सूत्रस्य सर्वादेशप्राप्तिविषये क्वचिच्चारितार्थ्यम् । अवश्यप्राप्तित्वं च बाध्यत्वे बीजं दृष्टम् । किंच विप्रतिषेधशास्त्रपरत्वार्थैकव्याख्यानपरभाष्ये शास्त्रद्वयावकाशप्रदर्शनशैली भाष्यकारस्य दृश्यते न चात्र तथोक्तं भगवता । यद्यप्यन्यत्रानुवादत्वं शास्त्रस्य दोष उक्तस्तथापि परिभाषायां नियमरूपत्वेन तद्गुण एव । तत्र हि प्राप्तानुवादादेवेतरानिवृत्तिरर्थात् । यथा व्रीहीनवहन्तीत्यादौ प्राप्तावघातानुवादेन नखविदलनादिनिवृत्तिः । यथा च तस्मिन्नित्यादौ प्राप्तपूर्वस्यैत्याद्यनुवादेन परादिनिवृत्तिः । किं च कप्, बप्, अबादिष्वनन्यार्थत्वेषु चरितार्थस्यानुवृत्तौ सुप्तिङावित्यस्य जित्वरीत्यादौ तुक्संपादनेन चरितार्थत्वेपि क्वचिदपि अन्तरङ्गेण प्रत्ययाद्युदात्तत्वेन बाधापत्तिस्तदाह दौर्बल्यादिति । परिभाषात्वभङ्गकृतं तदिति भावः ॥ सन्दिग्धेति । आपाततः सन्देहः । पर्यालोचने त्वनुपस्थितिरेवेति भावः । तदाहापवादत्वमेवेत्यादि । ङित्त्वसामर्थ्यकृतं हि तत्त्वमिति भावः । ननु ङित्त्वं सर्वादेशत्वद्वारा गुणबाधनार्थं यातान्यत्र लुप्तसर्वादेशत्वबाधकं वक्तुं शक्यते । भाष्ये ( प्रयोजनं नामेति ) । ( सति सर्वादेशत्वइति ) । अन्त्यादेशत्वे तु तत्संपादनेनैव-

**आदेः परस्य ॥ ५४ ॥** अलोऽन्त्यस्यादेः परस्यानेकाल् शित्सर्वस्येत्यपवादविप्रतिषेधात्सर्वादेशः * । अलोन्त्यस्येत्युत्सर्गः । तस्यादेः परस्यानेकाल् शित्सर्वस्येत्यपवादौ । अपवादविप्रतिषेधात् सर्वादेशो भविष्यति । आदेः परस्येत्यस्यावकाशः । द्व्यन्तरुपसर्गेभ्यो ऽप ईत् । द्वीपम् । अन्तरीपम् । अनेकाल् शित्सर्वस्येत्यस्याऽवकाशः । अस्तेर्भूः । भविता भवितुम् । इहोभयं प्राप्नोति । अतो भिस ऐस् । अनेकाल् शित्सर्वस्येत्येतद्भवति विप्रतिषेधेन । शित्सर्वस्येत्यस्यावकाशः । इदम इश् । इतः । इह । आदेः परस्येत्यस्याऽवकाशः स एव । इहोभयं प्राप्नोति । अष्टाभ्य औश् । शित्सर्वस्येत्येतद्भवति विप्रतिषेधेन ॥

**अनेकाल् शित्सर्वस्य ॥ ५५ ॥** शित्सर्वस्येति किमुदाहरणम् । इदम इश् । इतः इह । नैतदस्ति प्रयोजनम् । शित्करणादेवात्र सर्वादेशो भविष्यति । इदं तर्हि अष्टाभ्य औश् । ननु चात्रापि शित्करणादेव सर्वादेशो भविष्यति । इदं तर्हि । जसः शी । जश्शसोः शिः । ननु चात्रापि शित्करणादेव सर्वादेशो भविष्यति । अस्त्यन्यच्छित्करणे प्रयोजनम् । किम् । विशेषणार्थः शकारः । क्व विशेषणार्थेनार्थः । शि सर्वनामस्थानम् । विभाषा ङिश्योरिति । शित्सर्वस्येति शक्यमकर्तुम् । कथम् । अन्त्यस्याऽयं स्थाने भवन्न प्रत्ययः स्यात् । असत्यां प्रत्ययसंज्ञायामित्संज्ञा न स्यात् । असत्यामित्संज्ञायां लोपो न स्यात् । असति लोपे अनेकाल् । यदा अनेकाल् तदा सर्वादेशः । यदा सर्वादेशः तदा प्रत्ययः । यदा

---

दिति भावः । एवं तर्हीति । अन्तरेणापि ङित्त्वमेरुरित्यत्र प्रकरणे तातिं विधीयमानेऽन्त्यादेशत्वं सिद्धमिति ङित्त्वादेव गुणवृद्धिप्रतिषेधार्थं ङित्त्वमिति विज्ञायते ॥ ५३ ॥

अनेकाल् ॥ शित्करणादेवेति । सति शकारेऽनेकाल्त्वादिति भावः । अनेकाल्त्वसम्पादनेन च कृतार्थः शकार इतीत्संज्ञकत्वाल्लुप्यत एव । अष्टाभ्य औशिति । आदेः परस्येत्यादेः प्राप्त इति भावः । अन्त्यस्यायमिति । ननु सर्वनाम्नो नपुंसकादिति च पञ्चमीनिर्देशादादेः परस्येत्यादेर्भाव्यं तत्किमुच्यतेऽन्त्यस्यायं भवन्निति । एवं तर्हि सर्वनाम्न इति षष्ठीं मन्यते नपुंसकादिति च विहितविशेषणमिति ज्ञापकत्वमेवं शित्करणस्य । अथवा ऽसत्यपीह शिद्ग्रहणे अनेकाल्त्वादादेः परस्येति बाधित्वा सर्वादेशो

---

यथैव ङित्त्वस्य चारितार्थ्येन समुदायोपकारकत्वे मानाभावात् प्रत्ययस्य ङित्त्वाभावेन न गुणादिप्रतिषेधप्राप्तिरित्यर्थः । ङित्त्वादिति । गुणवृद्धिप्रतिषेधार्थत्वे सिद्धे सर्वादेशत्वं तस्मिंश्च तत्त्वमित्यन्योन्याश्रयेण सर्वादेशत्वालाभे ऽन्त्यस्यैव स्यादिति भावः ) अन्तरेणापीति । तथा च तत्सामर्थ्यात् सर्वादेशत्वद्वारा गुणवृद्धिबाधनार्थत्वमेवास्येति भावः ॥ ५३ ॥ ५४ ॥

अनेकाल्शित् ॥ ननु शित्पदाभावे कथं शित्करणादेवेति भाष्यमत आह सतीति । शकारोच्चारणसामर्थ्याद् भूतपूर्वानेकाल्त्वमादाय शास्त्रप्रवृत्तिरिति भावः । यत्त्वेतत्सामर्थ्यात् फलप्रत्यासत्तेश्च विधानोत्तरमेवेत्संज्ञादिशास्त्रप्रवृत्तिर्लक्ष्ये इति भाव इति । तन्न, अणुदित्सूत्रे इशि सवर्णग्रहणापत्तिपरभाष्येण सूत्रे एवेत्संज्ञालोपप्रवृत्तेः सूचनात् । नन्वेवं शकारादित्येव वक्तुं युक्तं किमित्पदेनेति चेत्, न फलान्तराभावेऽपि शकारोच्चारणस्य स प्रयोजनत्वाल्लोप एवेत्कार्यमिति शास्त्रेत्वं प्रवर्तत इति सूचयितुं तथोक्तेः । त-

प्रत्ययस्तदेत्संज्ञा तदा लोपः। एवं तर्हि सिद्धे सति यच्छित्सर्वस्येत्याह तज्ज्ञापयत्याचार्यः। अस्त्येषा परिभाषा नानुबन्धकृतमनेकाल्त्वं भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। तत्राऽसरूपसर्वादेशदाप्प्रतिषेधेषु पृथग् निर्देशो ऽनाकारान्तत्वादित्युक्तं तन्न वक्तव्यं भवति॥

इतिश्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य प्रथमे पादे सप्तममाह्निकम्॥ ७॥

स्थानिवदादेशो ऽनल्विधौ॥ ५६॥ वत्करणं किमर्थम्। स्थान्यादेशो ऽनल्विधावितीयत्युच्यमाने संज्ञाधिकारो ऽयं तत्र स्थानी आदेशस्य संज्ञा

---

भविष्यतीति किं शिद्ग्रहणेनेति पुनरपि ज्ञापकमेव शिद्ग्रहणम्। अनेकान्तेषु चानुबन्धेषु नास्त्येव नानुबन्धकृतमनेकाल्त्वमिति एकान्तेषु च तेषु ज्ञापकेन प्रयोजनम्॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे सप्तममाह्निकम्॥ ७॥

स्थानिवत्॥ वत्करणमिति। विनापि वतिना तदर्थलाभो यथा ङित्किदिति भावः। नच स्थान्यादेश इत्युच्यमाने स्थानिरूपमादेशः प्रतिपद्यते इति कल्पनाश्रयितुं युक्ता। अस्तेर्भूरित्यादेशविधानवैयर्थ्यप्रसङ्गात्। न च वचनद्वयप्रामाण्याद्विकल्पः। वा लिटीति विकल्पारम्भात्। संज्ञाधिकार इति। संज्ञाप्रस्ताव इत्यर्थः।

---

दाह अनेकाल्त्वानि। भाष्ये (ननु चाचापीति)। अपवादविप्रतिषेधादिति भावः। अस्त्यन्यादिति। एवञ्च तस्य सप्रयोजनत्वेन भूतपूर्वगत्याश्रयणे मानाभावेन नानेकाल्त्वात्सर्वादेशत्वमपि तु शित्त्वादेवेति शिद्ग्रहणं सूत्रे कार्यमिति भावः॥ सर्वादेशात्प्राक्प्रत्ययादित्वाभावेन नेत्त्वमिति प्रतिपादयितुं अन्त्यस्याथमित्यादि भाष्यं तदाक्षिपति। नन्विति। ततश्च सर्वादेशत्वं विनापि प्रत्ययादित्वाल्लभ्यत एवेत्त्वमिति भावः। षष्ठीमिति। सर्वनामसम्बन्धिनो जसः शी नपुंसकाद्विहितयोर्जश्शसोः शिरिति चार्थः। एवञ्च परशब्देन परस्य विधानाभावान्न तत्प्रवृत्तिरिति भावः। तयोःपरशब्दयोगे पञ्चमीत्वेऽप्याह अथवेति। असत्यपि सूत्रे शिद्ग्रहण इत्यर्थः। इयादयो यावन्नादेशास्तावन्नेत्संज्ञालोपौ। आदेशाश्च परत्वात्सर्वस्यैवेति भावः॥ नानुबन्धकृतमिति। एवं च शीप्रभृतीनामपि शित्त्वादेव सर्वादेशत्वं तस्याप्यनुबन्धत्वात्। नच विधानकाले उक्तरीत्या तस्य तत्त्वज्ञानाभावः। तद्योग्यतयैव तत्त्वात्। अन्यथा कप्रत्ययादीनां कादेर्वाक्यार्थबोधोत्तरं प्रत्ययत्वज्ञाने इत्संज्ञालोपाविति विधानकाले कस्यानुबन्धत्वज्ञानाभावेन नानुबन्धकृतमसारूप्यमित्यस्याप्राप्तौ विकल्पापत्तेः। शिदित्यस्यापीत्संज्ञायोग्यशकारवान्सर्वस्येत्यर्थ इति न दोष इति भाति। अस्त्येषा परिभाषेति। अनुबन्धानामल्व्यवहाराभावस्य ज्ञापनादिति भावः। अत एवानुबन्धकार्येष्वनल्विधाविति स्थानिवत्त्वनिषेधो न। अन्यथा त्वा ल्यपः कित्त्वं न स्यात्॥ नच पूर्वमनुबन्धलोपे तद्राहितस्यैव स्थानिवत्त्वात्तस्य न स्थान्यवयवत्वम्। सूत्रे स्थानिषष्ठ्या निर्दिष्टस्यैव स्थानिपदवाच्यतया तदवयवत्वस्य ककारे सत्त्वात्। अन्यथामहीवित्याशावट ईटीति दीर्घो न स्यादिति स्थानिवत्सूत्रे निरूपयिष्यामः। भाष्ये (तत्रासरूपेति) असरूपे कविषये ऽणप्राप्तिर्दोषः। सर्वादेशे शिवभोविति सर्वादेशः स्यादिति शेषः। प्रतिषेधे दैपो भेदेन निर्देशः कार्यः। तृतीये हेतुरनाकारान्तत्वादितीत्यर्थः। ज्ञापकमनावश्यकमित्याह अनेकान्तेष्विति। एकान्तेषु चेति। अयमेव सुखयः पच इति तस्य लोप इत्यत्र भाष्ये स्पष्टम्॥ ५५॥

इति श्रीनागोजीभट्टकृते भाष्यप्रदीपोद्योते सप्तममाह्निकम्॥ ७॥

स्थानिवदादेशः॥ स्थानिरूपमिति। नच सिद्धं धर्मिणमित्यादिन्यायेन पूर्वोच्चारितस्योद्देश्यत्वबोधकेन स्थान्यादेशपदं प्रतिपद्यत इत्यर्थो युक्त इति वाच्यम्। प्रसिद्धस्थानिनां प्रसिद्धादेशविधाने वैयर्थ्यापत्तेः। अन्यच विधाने तु स्थानेन्तरतम इति सूत्रोक्तन्यायेनाव्यवस्थापत्तेस्तस्य न्यायस्य सूत्रकृताप्यत्र त्यागाच्च। अत एव भाष्यकृता स्थानीसंज्ञेत्येवोक्तं नत्वादेशः संज्ञेतीति बोध्यम्॥ वा लिटीति। न च व्यधिकः समानिलतनानेन न सर्वेत्यभावादुक्ते पर्यायो विकल्पे सिद्धे लिट्येव वेति नियमार्थं स्यादिति

स्यात् । तत्र को दोषः । आङो यमहनः । आत्मनेपदं भवतीति वधेरेव स्यात् । हन्तेर्न स्यात् । वत्करणे पुनः क्रियमाणे न दोषो भवति स्थानिकार्यमादेश अतिदिश्यते गुरुवद् गुरुपुत्र इति यथा । अथादेशग्रहणं किमर्थम् । स्थानिवदनल्विधाविनतीयत्युच्यमाने क इदानीं स्थानिवत्स्यात् । यः स्थाने भवति । कश्च स्थाने भवति । आदेशः । इदं तर्हि प्रयोजनम् । आदेशमात्रं स्थानिवद्यथा स्यात् । एकदेशविकृतस्योपसंख्यानं चोदयिष्यति तन्न वक्तव्यं भवति । अथ विधिग्रहणं किमर्थम् । सर्वविभक्त्यन्तः समासो यथा विज्ञायेत । अलः परस्य विधिः

---

तत्र को दोष इति । आदेशे कार्यसिद्ध्यर्थोऽतिदेशः । तच्चादेशे कार्यं संज्ञासंज्ञिसम्बन्धेनापि सिद्ध्यतीति प्रश्नः । वधेरेवेति । संज्ञा हि प्रदेशेषु संज्ञिप्रत्यायनार्था संज्ञिनं प्रत्याय्य निवर्तते न तु स्वतः कार्यं प्रतिपद्यत इति भावः । बहुगणेत्यत्र तु संख्येत्यन्वर्थताश्रयणाल्लौकिकार्थग्रहणाद्विनापि वतिनातिदेशपक्ष उपन्यस्तः । वत्करणात्त्विहातिदेशेन स्थानिकार्याण्यादेशे क्रियन्ते न तु स्थानीनि निवर्त्यन्ते इत्यदोषः । ङिकिदिति तु संज्ञा न भवति न क्त्वा सेडिति प्रतिषेधात् । नहि क्त्वः कित्संज्ञा विहिता या प्रतिषिध्येत । क्ङिति लिङ्वेत्यत्र तु संज्ञाप्रकरणाभावात् तद्वदतिदेशः । स्थानिकार्यमित्यनेन कार्यातिदेशोऽयमिति प्रदर्शयति । शास्त्रातिदेशापेक्षया कार्यातिदेशस्य प्राधान्यादितरेषां कार्यार्थत्वादिति भावः । आदेशग्रहणमिति । स्थानिशब्दस्य संबन्धिशब्दत्वादादेशो लभ्यत एव यथा पितृवदधीत इत्युक्ते पुत्र इति भावः । क इदानीमिति । द्विविध आदेशः प्रत्यक्षश्चास्तेर्भूरित्यादिः । आनुमानिकश्चेरुरित्यादिः । अत्र हि इकारेणोकारान्तः स्थान्यनुमीयते । उकारेणोकारान्तश्चादेशः । ततस्तेस्तुरिति संपद्यते । तत्र प्रत्यक्षस्यैव ग्रहणं स्याद् नानुमानिकस्येति । आदेशमात्रमिति । प्रत्यक्षमनुमितं चेत्यर्थः । एरुरित्यत्र प्रत्यक्षमुकारस्यादेशत्वमिकारस्य च स्थानित्वम् । न च किंचिदिकारस्य कार्यमस्ति यदुकारेऽतिदिश्येत । तिशब्दका-

---

वाच्यम् । दोषदुष्टनियमापेक्षयैतत्सूत्रं एतदतिरिक्तार्थकस्वज्ञापकताया एवौचित्यात् । भाष्ये ( स्थानी आदेशस्येति ) । नवर्तीत्यत इति शब्दानुवृत्तः स्थानिशब्दार्थो हनादय आदेशपदार्थस्य वधादेः संज्ञेत्यर्थः । स्थानिशब्दस्यादेशशब्दसंज्ञात्वे वैयर्थ्यमिति भावः । ननु स्वरितलिङ्गकानुवृत्तिरूपाधिकारस्य संज्ञाविषयस्य शास्त्रेऽभावादाह प्रस्ताव इति । प्रस्तावः प्रकरणं बुद्धिसन्निधिरिति यावत् । पूर्वोत्तरत्र प्रायेण संज्ञाया दर्शनादिति भावः । परिभाषात्वं त्वनुक्तिसम्भवमस्तमिति तन्नोक्तम् । भाष्ये ( वधेरेवेति ) न चैवमाङो वधयम इत्येवाकारविवक्षणेन स्वतन्त्रवधिव्यावृत्तौ हन्ग्रहणं व्यर्थं स्यादिति वाच्यम् । आजघ्नेइत्यादिसकलहन्त्यादेशसंग्रहार्थं तस्य सत्त्वात् । हन्तेर्न स्यादिति । आहनिष्यत इत्यादौ । नन्वत्र पादे वतिं विनातिदेशानवगतौ कथं बहुगणेत्यत्रातिदेशपक्ष उक्तोऽतआह बह्विति । संख्येतीति । संख्यापदस्येत्यर्थः । लौकिकार्थग्रहणादिति । संख्यानकरणरूपेत्यर्थः । एवञ्च तद्बाधापत्त्या संज्ञात्वासंभवादतिदेश इति भावः । इदञ्च तत्रैव सूत्रे कैयटे स्पष्टम् । संज्ञायेति । उभयगतेरिह शास्त्रे सत्त्वेन संज्ञात्वेपि ङिदादिग्रहणेन चङादीनामपि ग्रहणम् । नहीति । अनुवृत्तकिद्ग्रहणस्य संज्ञापरत्वेन सैव प्रतिषेध्या नच सा क्त्वो विहितेत्यर्थः । किं च किदित्यादेः संज्ञात्वे क्ङिति चेत्यत्रास्य ग्रहणं न स्यात् । संज्ञास्वरूपानुच्चारणादिति बोध्यम् । तथा निष्ठाशीङित्यादिनिषेधोऽप्यसंबद्धः स्यात् । कित्साहचर्यात् ङिदित्यप्यतिदेशः । कार्यातिदेशोऽयमिति । एवञ्चानपेक्षितशास्त्रमनपेक्षितनिमित्तञ्च प्रत्ययस्थादिरूपं कार्यमनेनैव क्रियत इति भावः । भाष्ये ( यःस्थाने इति ) स्थानशब्दप्रयोगात् तदनुवृत्त्यादेशो लभ्यत इति भ्रमं व्युदस्यति स्थानीति । नन्वादेशलब्धौ क इति प्रश्नानुपपत्तिरित्यत आह द्विविध इति । क इत्यस्तु स्थानिशब्दस्य संबन्धिशब्दत्वमजानतः प्रश्नः । कइति । संबन्धिशब्दस्वाभिप्रायमुत्तरं यः स्थाने इति । समाधत्ते आदेशमात्रमिति । अस्याशयः कैयटोक्त एव । कैयटोक्तव्या-

अल्विधिः ? अलो विधिः अल्विधिः । अलि विधिः अल्विधिः । अला विधिरल्विधिरिति । नैतदस्ति प्रयोजनम् । प्रातिपदिकनिर्देशोऽयम् । प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति । न कांचित्प्राधान्येन विभक्तिमाश्रयन्ति । तत्र प्रातिपदिकार्थे निर्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते सा सा आश्रयितव्या। इदं तर्हि प्रयोजनम् । उत्तरपदलोपो यथा विज्ञायेत । अलमाश्रयते अलाश्रयः ।

---

यें तु तुशब्दस्यातिदिश्यत इति पदत्वसिद्धिः । सर्वविभक्त्यन्त इति । सर्वविभक्त्यन्तो ऽवयवो ऽस्यास्तीति मत्वर्थीयो ऽकारः । बहुत्वप्रतिपादनपरमेतत् । नह्यत्र सप्त विभक्तयः संभवन्ति तत्र संबन्धमात्रे षष्ठ्युपादाने ऽनेकविभक्त्यर्थान्तर्भावात् फलतः सर्वविभक्त्यन्तता संभवति । अथवा ऽल्विधिशब्दवाच्यो ऽल्विधिरिति विशिष्टप्रवृत्तिनिमित्तानाश्रयणात् सर्वविभक्त्यन्तत्वम् । सति च विधिशब्दे समासभावादेतद्वस्तुलाभः । केवलस्त्वल्शब्द उपादीयमानो यद्विभक्तिरुच्चार्येत तदर्थोपप्लव एव स्यात् । तत्रालः परस्य विधिः । द्यौः पन्थाः स इति । हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सुलोपो न भवति । अलि परतो विधिः । क इष्टः स इष्टः । हशि चेत्युत्वं न भवति । अलो विधिः । द्युकाम इति । लोपो व्योर्वलीति लोपो न भवतीति । उत्वं त्ववलि सावकाशं स्याद्दहर्विमलद्यु इति । अला विधिः । महोरस्केनेति । अयोगवाहानामट्सूपदेशात् णत्वं न भवतीति । प्रातिपदिकनिर्देशाश्चेति । अनलित्येतावदेवोच्यताम् । अत्र शब्दसंस्काराय केवलं प्रथमाविभक्तिरुपादीयते न तु तदर्थो विवक्ष्यते । यथा भाव इत्यत्र लिङ्गसंख्ये इति भावः । उत्तरपदलोप इति । अनलित्युच्यमाने यत्र कार्ये स्वातन्त्र्येणालाश्रीयते

---

स्थानेऽपि यः स्थाने इत्यादिभन्यस्याश्रयानभिज्ञवक्तृकत्वयैव योज्यमानस्यादित्याहुः । नन्वत्रापि प्रत्ययस्यैव स्थानिवत्त्वमास्त्वित्यत आह नचेति । पदस्येति । अत एव देवदत्तः पचतीत्यत्र पदस्येत्याधिकृत्य विधीयमानो निघातः सिध्यति । पचतु ते ओदनमित्यत्र पदादित्याधिकृत्य विधीयमानस्तेमयादिश्च सिद्ध्यति । भाष्ये ( विधिग्रहणं किमर्थमिति ) विधावित्यध्याहाराल्लप्स्यत इति प्रश्नः । ननु समासोत्तरं सप्तम्या एव श्रवणेन सर्वविभक्त्यन्तत्वं समासस्यानुपपन्नमत आह अवयव इति । पूर्वपदरूप इत्यर्थः । ननु विभक्तिचतुष्टयेनैव विग्रहस्यार्थप्रदर्शनेन सर्वेत्यनुपपन्नमत आह बहुत्वेति । द्वितीयाचतुर्थीप्रथमाभिः स्थान्यलः सूत्रे निर्देशादिति भावः । ननु सकृच्छ्रुते ऽल्विधिपदे कथमल्पदस्यानेकविभक्त्यन्ततेत्यत आह तत्रेति । विधिशब्दः कर्मसाधनः । तेनाल्सम्बन्धिकार्ये इत्यर्थः । प्रौढ्या पक्षान्तरमाह अथवेति । अल्शब्दात्परो विधिशब्दोऽल्विधिशब्दस्तेन च तद्वाच्योऽर्थो लक्ष्यत इति भावः । एवञ्च तद्वाच्यत्वेन रूपेण सर्वार्थाश्रयणात्सर्वविभक्त्यन्तत्वे यत्फलं तत्फलसिद्धिरिति तात्पर्यम् । समासभावादिति । उपदर्शितपक्षद्वयोक्तसमाससत्त्वादित्यर्थः । यद्विभक्तिरिति । षष्ठ्युपादानेऽपि स्थानसंबन्ध एव बुध्येतेति भावः । तदर्थोपप्लव एव स्यादिति । तदर्थमात्रान्वितार्थक एव स्यादित्यर्थः । इष्ट इति । यजेः क्तः । यद्यपि क इष्ट इति रूपसत्त्वेऽपि सिध्यति तथापि कयिष्ट इति पक्षे स्यात्कयिष्ट इति न स्यादिति बोध्यम् । स इष्ट इत्यत्र एतत्तदोरिति नित्यो लोपः स्यादिति च बोध्यम् । दिवि कामोऽस्य द्युकामः । दिव उत् । यद्यपि वल्त्वहल्त्वाद्यपेक्षयाविशेषधर्मस्तथापि एतद्वाक्योपप्लुतवकारवदुकार इति वाक्योपात्तधर्मापेक्षया न तत्त्वम् । सूत्रलक्षस्याग्यादेशभावमादायैव हि एतत् कृतवाक्योपप्लव इति दिक् । उपदेशादिति । सस्य स्थानिवत्त्वेन विसर्गत्वाद्विसर्गस्य चाट्सूपदेशेनाट्त्वादिति भावः ॥ केवलप्रकृतेः प्रयोगाभावादाह अत्रेति । विवक्ष्यतइति । तत्समभिव्याहारे प्रतीयमानो विधेयस्वरूपो ऽर्थो न विवक्ष्यत इत्यर्थोऽन्वयायोग्यत्वादिति भावः । लिङ्गेति । अत एव भूतिरित्यादिसिद्धिः । सप्तम्यर्थस्तु तत्र विवक्षित एवेति लिङ्गसंख्ये इत्येवोक्तम् । भाष्ये (अर्थतन्त्रा इति) । स्वार्थमात्रबोधकविभक्त्य-

अलाश्रयो विधिः अल्विधिरिति। यत्र प्राधान्येनालाश्रीयते। तत्रैव प्रतिषेधः स्यात्। यत्र विशेषणत्वेनाऽलाश्रीयते तत्र प्रतिषेधो न स्यात्। किं प्रयोजनम्। प्रदीव्य प्रसीव्येति। वलादिलक्षण इड् मा भूदिति। किमर्थं पुनरिदमुच्यते। स्थान्यादेशपृथक्त्वादादेशे स्थानिवदनुदेशो गुरुवद् गुरुपुत्रइति यथा। अन्यः स्थानी अन्य आदेशः। स्थान्यादेशपृथक्त्वादेतस्मात्कारणात् स्थानिकार्यमादेशे न प्राप्नोति। तत्र को दोषः। आङो यमहन इत्यात्मनेपदं भवतीति हन्तेरेव स्यात् वधेर्न स्यात् इष्यते च वधेरपि स्यादिति। तच्चान्तरेण यत्नं न सिद्ध्यतीति तस्मात्स्थानिवदनुदेशः। एवमर्थमिदमुच्यते गुरुवद् गुरुपुत्र इति यथा। तद्यथा। गुरुवद् गुरुपुत्रे वर्तितव्यमिति गुरौ यत्कार्यं तद् गुरुपुत्रे अतिदिश्यते। एवमिहापि स्थानिवत्कार्यमादेशे अतिदिश्यते। नैतदस्ति प्रयोजनम्। लोकत एतत् सिद्धम्। तद्यथा। लोके यो यस्य प्रसङ्गे भवति लभते ऽसौ तत्कृतानि कार्याणि। तद्यथा। उपाध्यायस्य शिष्यो याज्यकुलानि गत्वा अग्रासनादीनि लभते। यद्यपि तावल्लोक एष दृष्टान्तः। दृष्टान्तस्यापि तु पुरुषारम्भो निवर्तको

---

तत्रैव निषेधः स्यात्। क इष्टः स इष्ट इत्यादौ। प्रदीव्येत्यादौ इटः प्रतिषेधो न स्यात्। नहीड्विधौ वलः स्वातन्त्र्येणाश्रयणं बलादेरित्यन्यपदार्थस्य प्राधान्याद् गुणभावाद्वलः॥ उत्तरपदलोपे त्वलाश्रयत्वादिड्विधेः प्रतिषेधासिद्धिः। अलमाश्रयत इति। अर्थप्रदर्शनमेतत्। एवं ह्यलाश्राय इति स्यात्। तस्मादाश्रीयत इत्याश्रयः। परच्। अलाश्रयो यस्येति अलाश्रयो विधिरल्विधिः। अलाश्रयत्वाद्विधिरेवाल्वित्युच्यत इति गतार्थत्वादप्रयोग एव उत्तरपदस्य लोपः। किमर्थमिति। तत्स्थानापत्त्या तद्धर्मलाभात् स्थानिकार्याण्यादेशः प्राप्स्यन्तीति भावः। स्थान्यादेशपृथक्त्वादिति। स्थानिस्वरूपाश्रयं यत्कार्यं तद्भिन्नरूपत्वादादेशे न सिद्ध्यतीति भावः। लोकत इति। लोके हि वचनमन्तरेणापि तत्स्थानापत्त्या तद्धर्मलाभो दृष्टः। उपाध्यायस्येति। प्रसङ्गापे-

---

क्षीना इत्यर्थः। प्राधान्येन। विभक्तिं विशिष्य प्रकृतान्वययोग्यविभक्त्यर्थं नाश्रयन्ति। निर्दिष्टे। बोधिते। पश्चादन्वययोग्यविभक्त्यर्थाकाङ्क्षायां यद्यद्विभक्त्यर्थम् अन्वयित्वेनाश्रयितुं लक्ष्यानुसाराद्बुद्धिरुपजायते सा सा विभक्तिरध्याहार्या साधुत्वार्थमुत्वन्न विभक्तेस्तु लुगिति भावः। एतेन प्रत्ययाध्याहारो न क्वापि दृष्ट इत्यपास्तम्। माभैर्मा सम्विक्था इति पुरोडाशावदानमन्त्रस्य धानासमूहे मा भेष्ट मा संविग्ध्वमित्यादौ दर्शनाच्च तत्तद्विषयकलक्षणभेदात्तत्र तत्र सा आश्रयितव्येति तात्पर्यम्। न ल्यपीति प्रथमानिर्देशेन लात्मक आदेश इत्यर्थे ल्यपो नलात्मकत्वेन प्रपठ्येत्यादावपीट् स्यात्। उत्तमपुरुषैकवचने टेरेत्वस्य स्थानिवत्त्वाभावात्पदत्वं न स्यादिति चेन्न. अदो जग्धिरिति सूत्रे ल्यब्ग्रहणेनादेशविशेषणत्वाभावज्ञापनादित्यदोषः। स्वातन्त्र्येण। प्राधान्येन। सकलविधिपरिग्रहार्थविधिशब्देन प्रधानन्यायो बाध्यत इति भावः॥ एवं हीति। कर्मण्यणा पचाद्यचो बाधादिति भावः॥ शङ्कानिरस्यत्ववारणाय वार्त्तिकप्रत्याख्यानाय चाह अप्रयोग एवेति। भाष्ये (यत्र प्राधान्येन) इत्यस्य विधिग्रहणाभावे इत्यादिः। प्रतिषेधो न स्यादित्यस्य तदर्थं विधिग्रहणमिति शेषः। ननु पृथक्त्वमङ्गीकृत्यैव तत्स्थानापत्त्या तद्धर्मलाभेऽभिहिते स्थान्यादेशपृथक्त्वादिति हेतुरसङ्गत इत्यत आह स्थानिस्वरूपेति। स्वं रूपमित्युक्तेन तत्स्थानापत्त्या शास्त्रे तत्कार्यलाभ इति भावः। व्यभिचाराभावादिति। तत्स्थानापत्त्या तद्धर्मलाभे दृष्टान्तोऽसङ्गतः स्यादिति च बोध्यम्। यद्यप्युपनीय सर्ववेदाध्यापकरूपाचार्यशिष्यव्यावृत्तये उपाध्यायस्येति। तद्विशेषणमावश्यकम्। वेदैकदेशाध्यापको ह्युपाध्यायस्तथापि तद्व्यावृत्तौ

भवति । अस्ति चेह कश्चित्पुरुषारम्भः । अस्तीत्याह । कः । स्वरूपविधिर्नाम । हन्तेरात्मनेपदमुच्यमानं हन्तेरेव स्यात् वधेर्न स्यात् । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति स्थानिवदादेशो भवतीति । यदयं युष्मदस्मदोरनादेशइत्यादेशे प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् । युष्मदस्मदोर्विभक्तौ कार्यमुच्यमानं कः प्रसङ्गो यदादेशेऽपि स्यात् । पश्यति त्वाचार्यः स्थानिवदादेशो भवतीति अत आदेशे प्रतिषेधं शास्ति । इदं तर्हि प्रयोजनम् । अनल्विधाविति प्रतिषेधं वक्ष्यामीति । इह मा भूत् । द्यौः पन्था स इति । एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति । अल्विधौ स्थानिवद्भावो न भवतीति । यदयमदो जग्धिर्ल्यप्ति किती‌ति ति कितीत्येव सिद्धे ल्यब्ग्रहणं करोति । तस्मान्नार्थोऽनेन योगेन । आरभ्यमाणेऽप्येतस्मिन् योगे अल्विधौ प्रतिषेधे ऽविशेषणे ऽप्राप्तिस्तस्यादर्शनात् * । अल्विधौ प्रतिषेधे ऽसत्यपि विशेषणे समाश्रीयमाणे असति तस्मिन् विशेषणे अप्राप्तिर्विधेः । प्रदीव्य प्रसीव्य । किं कारणम् । तस्यादर्शनात् । वलादेरित्युच्यते न चात्र वलादिं पश्यामः । ननु चैवमर्थ एवायं यत्नः क्रियते । अन्यस्य कार्य-

---

त्वियं षष्ठी नतु शिष्यस्य विशेषणमेतद् व्यभिचाराभावात् । प्रतिषेधं वक्ष्यामीति । नह्यप्रदर्शितविषयः प्रतिषेधः शक्यो विधातुमिति भावः । एवं तावल्लिङ्गेनाभिमतोऽर्थः सिद्ध इति प्रदर्शितम् । इदानीं क्रियमाणेपि सूत्रे ऽनल्विधाविति न कर्तव्यमित्याह अल्विधौ प्रतिषेध इति । प्रदीव्येतीड् न भवति इड्विधौ वलादेरिति विशेषणमाश्रितम् । तच्च क्त्वो ल्यबिति वस्तुस्थित्या संनिहितमपि वलादित्वं स्थानिन्यविवक्षितत्वादनाश्रितम् । तथा हीडादिरपि क्त्वा भवत्येव क्त्वा केवलो ऽपि आकारान्तोपि स्नात्वीनीकारान्तोपि दत्त्वायेति च यगन्तोपि इष्ट्वीनमिति मान्तोपि तत्र क्त्वामात्रप्रतिबद्धं यत्कार्यं कृत्वप्रत्ययत्वाव्ययत्वादि तदादेशे ऽतिदिश्यतां न तु वलादित्वमिति ल्यपो न स्वतो नापि स्थानितो वलादित्वमितीडभावः सिद्ध एवेति

---

प्रयोजनाभाव इत्यभिप्रायेणेदमिति बोध्यम् । अत्र भाष्ये लोकत एतत्सिद्धमित्युक्त्वा स्वरूपमिति शास्त्रादेशे न स्यादिति सूत्रं कार्यमित्युक्तम् । तेन स्वरूपमिति शास्त्रविषये लोकन्यायेन सिद्धमिति सूचितम् । अनल्विधाविति निषेधोपि शास्त्रीयस्थानिवद्भाव एव । अतिप्रसङ्गस्तु लक्ष्यानुसारेण क्वचिल्लोकन्यायेन भवत्येवेति केचित् । अप्रदर्शितविषयः । अप्रदर्शितप्रतिषेध्यः । ननु युष्मदस्मदोरनादेश इत्यत्र विभक्तिनिमित्तस्यं रूपमित्यस्य लोकन्यायबाधकस्याप्राप्त्या तत्र लोकन्यायेन प्राप्ततद्धर्मलाभप्रयुक्तकार्यनिवारणार्थस्य अनादेशग्रहणस्य ज्ञापकत्वासम्भवाद् हनो वधेत्यादौ दोषवारणायैव सूत्रमावश्यकमिति चेन्न, स्वादिसूत्रे स्वं रूपमित्यस्य प्रवृत्त्या तत्स्वरूपाणामेव सुप्संज्ञकत्वेन तेषामेव विभक्तिसंज्ञकत्वेन तत्र तत्र तत्स्थानापन्ना तद्धर्मलाभ इति लौकिकन्यायाप्रवृत्तेरित्याशयात् । क्रियमाणेपीति । मन्दमत्यनुग्रहायेत्याशयः । नपदान्तेत्यत्र निषेध्यसमर्पणाय चावश्यकं तदिति बोध्यम् । अनल्विधाविति न कर्त्तव्यमित्यस्य विधिप्रदर्शितं न कर्त्तव्यमित्यर्थः । ( असत्यपीति ) भाष्ये च्छेदः । अल्विधौ प्रतिषेध इत्यस्य चैतद्विशेषणम् । अप्राधान्येनालाश्रयणेपि निषेधार्थं क्रियमाणे विधिग्रहणेऽसत्यपीत्यर्थः । वार्त्तिके विशेषणे इति च्छेदः । लक्ष्य विशेषणाभावे इति तदर्थस्तदाह विशेषणे समाश्रीयमाणइति । विधाविति शेषः ॥ प्रसीव्येति प्रयोग

सुच्यमानमन्यस्य यथा स्यादिति। सत्यमेवमर्थो न तु प्राप्नोति। किं कारणम्। सामान्यातिदेशे हि विशेषानतिदेशः *। सामान्ये ह्यतिदिश्यमाने विशेषो नातिदिष्टो भवति। तद्यथा। ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति सामान्यं यद् ब्राह्मणकार्यं तत् क्षत्रिये ऽतिदिश्यते। यद्विशिष्टं माठरे कौण्डिन्ये वा न तदतिदिश्यते। एवमिहापि यत्सामान्यं प्रत्ययकार्यं तदतिदिश्यते यद्विशिष्टं वलादेरिति न तदतिदिश्यते। यद्येवमग्रहीत् इट ईटीति सिचो लोपो न प्राप्नोति। अनल्विधाविति पुनरुच्यमाने इहापि प्रतिषेधो भविष्यति। प्रदीव्य प्रसीव्येति। विशिष्टं ह्येषो ऽल्माश्रयते वलं नाम। इह च प्रतिषेधो न भविष्यति अग्रहीदिति। विशिष्टं ह्येषो ऽनल्माश्रयते इटं नाम। यदि तर्हि सामान्यमप्यतिदिश्यते विशेषश्च।

---

भावः। ब्राह्मणवदिति। सामान्यशब्दोपादानेन यत्र कार्यमतिदिश्यते तत्र हि विशेषस्याशब्दार्थत्वाद्विशेषाश्रयकार्यानतिदेशः। यत्र तु विशेषशब्दोपादानेनातिदेशस्तत्र विशेषातिदेशो भवत्येव। अग्रहीदिति। ग्रहो ऽलिटि दीर्घ इति दीर्घे कृतइतिभावः। दीर्घविधौ ह्यच्परिभाषोपस्थानादच एव स्थानित्वम्। इट् त्वजन्तराणां व्यावर्तक इतीट्कार्यं विशेषकार्यत्वान्न प्राप्नोति। तथा प्रदीव्येति गुणप्रतिषेधो न प्राप्नोति। देवित्वेत्यादावकितो ऽपि क्त्वाप्रत्ययस्य संभवात् कित्त्वस्यापि वलादित्ववन्न स्यादतिदेशः। तस्माद्विशेषकार्यातिदेशज्ञापनार्थमनल्विधाविति कर्तव्यमिति भावः। अनुबन्धकार्येषु चानल्विधाविति प्रतिषेधो न प्रवर्तते स्थानिन्यनुबन्धस्यासन्निधानाद्-

---

इति शेषः। सामान्यातिदेशे विशेषानतिदेश इति हेतुं व्याचक्षाणो वलादित्वस्य विशेषत्वं दर्शयति तच्चेति। अविवक्षितत्वादिति। विवक्षाकारणयत्नविशेषविषयीकृतत्वाभावादित्यर्थः। उपात्तरूपव्याप्यरूपाविवक्षा हि यत्ने सत्येव भवति। अत एव सानिर्मास्यिच सः सीत्यत्रः सीत्यनुवर्तितम्। न च तथा कश्चिद्यत्नः प्रकृते। एवञ्च वलादेरादेशो वलादिवादित्येवं वाक्यकल्पनाच्च नेति भावः। तत्र वलादित्वस्य क्त्वाव्याप्यत्वं दर्शयितुमाह तथाहीति। आकारान्तोपीत्यादि दृष्टान्तार्थम्। यत्कार्यमिति। यो धर्म इत्यर्थः। क्त्वावत् ल्यबित्येव वाक्यकल्पनेति भावः। सामान्यातिदेशे इत्यादिवार्त्तिकखण्डमवतारयति ननु चेति। भाष्ये एवमर्थशब्दं व्याचष्टे (अन्यस्येति) अशब्दार्थत्वादिति। यद्यपि क्त्वावदित्युक्ते ऽशब्दार्थप्रत्ययत्वादेरप्यतिदेशो भवति तथापि व्याप्येन व्यापकानुमानात्तदुपस्थितिवद्व्याप्योपस्थितौ मानाभाव इति भावः। यत्र त्विति। गोतो णिदित्यादौ। अथ सिद्धान्ती विशेषानतिदेशे दूषणं वदन् तज्ज्ञापनार्थमेवानल्विधावित्यावश्यकमित्याह। भाष्ये (यद्येवमिति)। यदि विशेषानतिदेश इत्यर्थः। दीर्घे कृत इति। दीर्घदृष्टया सिज्लोपस्यासिद्धत्वादिति भावः। ननु दीर्घस्येट इति समुदायस्थानिकत्वेन तद्वृत्तीट्त्वाश्रयो लोपः स्थानिवत्त्वेन स्यादेव स्थानी चादेशविधावुपात्त एवेत्यत आह दीर्घेति। नन्वच एव स्थानित्वे ग्रहणमित्यादावपि दीर्घः स्यादत आह इट् त्विति॥ भाष्ये (लोपो न प्राप्नोतीत्यस्य) तस्मादनल्विधाविति वक्तव्यमिति शेषः। विशेषानतिदेशे दूषणान्तरमाह तथेति। अकितोपीति न क्त्वा सेडिति कित्त्वनिषेधादिति भावः॥ तस्मादिति। न च क इटो, ग्रुभ्यामित्यादिव्यावृत्त्या तस्य चारितार्थ्यात्कथं ज्ञापकत्वमिति वाच्यम्, अप्राधान्येनाप्यल्लाश्रयणे आर्धधातुकस्येडित्यादौ निषेधप्रवृत्तये क्रियमाणं विधिग्रहणं प्रकृतार्थज्ञापकम्। विशेषानतिदेशे तेषामवङ्ग्रहेण तद्वैयर्थ्यस्य स्पष्टत्वात्। वार्तिकेपि विधिपदघटिते प्रतिषेधे सत्यपीत्यर्थः। ज्ञापिते विशेषातिदेशेऽनल्विधावित्यस्य चारितार्थ्यं दर्शयति। भाष्ये (इहापि प्रतिषेधेत्यादि)। ननु कित्त्वस्याल्विधित्वेन क्ङिति चेति निषेधे स्थानिवत्त्वाभावात्प्रतिदीव्येत्यादौ गुणः स्यादत आह अनुबन्धेति। स्थानिनीति। स्थान्यलाश्रये विधौ स्थानिवत्त्वानिषेधादिति भावः। वल्यपीति लिङ्गमन्यत्र बोध्यम्।

सत्याश्रये ऽविधिरिष्टः *। सति च वलादित्वे इटा भवितव्यम्। अरुदिताम्। अरुदितम्। अरुदित। किमतो यत्सति भवितव्यम्। प्रतिषेधस्तु प्राप्नोति। किं कारणम्। अल्विधित्वात्। अल्विधिरयं भवति। तत्रानल्विधाविति प्रतिषेधः प्राप्नोति। न वानुदेशिकस्य प्रतिषेधादितरेण भावः *। न वा एष दोषः। किं कारणम्। आनुदेशिकस्य प्रतिषेधात्। अस्त्वत्राऽऽनुदेशिकस्य वलादित्वस्य प्रतिषेधः। स्वाश्रयमत्र वलादित्वं भविष्यति। नैतद्विवदामहे वलादिर्न वलादिरिति। किं तर्हि स्थानिवद्भावात् सार्वधातुकत्वमेषितव्यम्। तत्रानल्विधाविति प्रतिषेधः

---

सन्त एवानुबन्धाः कार्यस्य विशेषका इति सिद्धान्तव्यवस्थापनात्। विशिष्टं ह्यपो ऽनलमिति। इट ईटीति सलोपे समुदायरूपेणाश्रयणादू ग्रह्मे ऽलिटि दीर्घ इत्यत्रापि इट एव स्थानित्वं नाचः। अनियमप्रसङ्गान्नियमफलाया अच्परिभाषाया अनुपस्थानात्। सत्याश्रय इति। आश्रीयतइत्याश्रयः यथा वलादित्वमिड्विधौ। तत्रेडागमस्याल्विधित्वादनल्विधौ च स्थानिवद्भावविधानादरुदितामिति स्थानिकार्यमिडागमो न प्राप्नोति। न वेति। अतिदेश एवानुदेशः स प्रयोजनं यस्य तदानुदेशिकम्। तत्र स्वाश्रयं वलादित्वमाश्रित्य स्थान्याश्रयं च सार्वधातुकत्वमितीड् विधास्यते। तत्रानल्विधावितीति। इडागमार्थमत्र स्थानिवद्भावः प्रार्थ्यते इट् चाल्विधिरिति अनल्विधाविति प्रतिषेधात् सार्वधातुकत्वस्यापीडर्थत्वादिड् न प्राप्नोतीति। इदानीं यथात्र प्रतिषेधो

---

नन्वेवमप्यग्रहीदिति दीर्घस्थानिभूताजरूपेकाराश्रय एव क्सिज्लोपोऽनुबन्धस्तु उपदेश एव लुप्त इति तत्रापि स्थानिवत्त्वनिषेधः स्यादतो भाष्ये ( विशिष्टं ह्यपइति )। एवञ्च दीर्घ इड्यादित्येवातिदेशकल्पना। स्थानितावच्छेदकञ्च शास्त्रोपात्तरूपमेव तच्च नाल्रूपमिति इट इत्यादि न स्थान्यल्वृत्तिधर्माश्रयम्। एवञ्च यत्र शास्त्रे विशेष्यतया विशेषणतया वा आदेशस्थानिभूतो योल् तत्स्थानिसंबन्धी वा योल् तन्मात्रवृत्तिधर्माश्रयणान्तादृशे विधौ हि निषेधः। अत्र च शब्दतो विशिष्टमनलमाश्रयते। वलादेरित्यत्र च शब्दतो विशिष्टमलमिति भावः। सिद्धान्तव्यवस्थापनादिति। इदं निरनुबन्धकानुवादेनविहितादेशविषयम्। ऋतो ल्यादित्यादौ सानुबन्धकानुवादेनादेशविधौ तु यथा ऽनुबन्धकार्यस्याल्विधित्वाभावस्तथा ऽनेकाल्शिदित्यत्र निरूपितम्। अत्रापीट एव स्थानित्वमिति। अन्यथा स्थान्यल्वृत्तीद्त्वाश्रयस्य लोपस्याल्विधित्वात्तत्र तत्स्थानिवत्त्वानापत्तिर्विशेषातिदेशेपीति भावः। एवञ्च तदुदाहरणे विशेषातिदेशेपि न दोषः। एतदेवाभिप्रेत्य स्वयं मदीव्येति गुणापत्तिर्विशेषातिदेशे दूषणमुक्तम्। वस्तुतो भाष्योक्तदोषोपि दृढ एव। तथा हि अनल्विधावित्यस्याभावे प्रायोगिकस्थानिनमादायैव वाक्योपप्लव स्यात्। तद्बुद्धि निवर्त्यैवादेशबुद्धेर्जायमानत्वेन तस्यैव मुख्यस्थानित्वात्। वलादित्वस्य विशेषातिदेशमाश्रित्य विधिग्रहणाकरणे इत्यर्थः। एवञ्च दीर्घस्थान्यल्परस्य कार्ये लोप इति स्थानिवद्भावेन तदप्राप्तिरिति पूर्वपक्षः। विधावित्युक्तौ तु न दोषः। शास्त्रस्योपस्थित्या शास्त्रोपात्तस्थान्यांशभावस्य निमित्तस्य च ग्रहणामिति न दीर्घोल्विधिरित्युत्तरम्। तत्रैतदेषो ऽनलमित्यनेन दीर्घादिविधिरित्यर्थकेन ध्वनितमिति बोध्यम्। अत एव भोभगोअघो इति सूत्रे भाष्ये रुस्थानिकविसर्गस्य स्थान्यल्वृत्तिधर्मरुत्वाश्रयं कार्यं नाल्विधित्वादित्युक्तम्॥ भाष्ये (यदि तर्हि सामान्यमिति)। अनल्विधाविति ज्ञापकात्तज्ज्ञापनार्थं वानल्विधाविति यदि क्रियत इत्यर्थः। आश्रयशब्दस्य भावसाधनत्वे वलादिस्थ इति तद्विवरणमसङ्गतं स्यादत आह आश्रीयतइति। स्थानिकार्यमिति॥ सार्वधातुकत्वाभावादिति भावः॥ भाष्ये [ प्रतिषेधस्त्विति ]। आदेशः स्थानिवद् अलाश्रये विधौ तु नेति सूत्रार्थ इति भावः। समाधत्ते नवेति। सप्रयोजनं प्रयोजको यस्य वलादित्वस्येत्यर्थः। करणे ल्युट्। पदसंस्कारपक्षाश्रयेण तु अतिदेशः प्रयोजनमिति प्रयुक्तम्। शङ्कताऽऽह ( नैतद्विवदामहइति )॥ ननु सार्वधातुकत्वस्याल्धर्मत्वाभावात् कथं प्रतिषेधप्राप्तिरत आह इडागमेति। उक्तरीत्या-

प्राप्नोति । किं पुनरादेशिन्यल्याश्रीयमाणे प्रतिषेधो भवत्याहोस्विदविशेषेण आदेशे चादेशिनि च । कश्चात्र विशेषः । आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्धिप्रतिषेधः * । आदेशिन्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्ध्योः प्रतिषेधो वक्तव्यः । कुर्विसत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं च लघूपधत्वम् । तत्र लघूपधगुणः प्राप्नोति । वधक इसत्र स्थानिवद्भावादङ्गसंज्ञा स्वाश्रयं चादुपधत्वं तत्र वृद्धिः प्राप्नोति । पिबेसत्र स्थानिवद्भावादङ्गसंज्ञा स्वाश्रयं च लघुपधत्वं तत्र लघूपधगुणः प्राप्नोति । अस्तु तर्ह्यविशेषेण आदेशे आदेशिनि च । आदेश्यादेश इति चेत्सुप्तिङ्कृदतिदिष्टेषूपसंख्यानम् * । आदेश्यादेशइति चेत्सुप् तिङ् कृदतिदिष्टेषूपसंख्यानं कर्तव्यम् । सुप्, वृक्षाय प्लक्षाय । स्थानिवद्भावात्सुप्संज्ञा स्वाश्रयं च यञादित्वं तत्र प्रतिषेधः प्राप्नोति । सुप् । तिङ्, अरुदिताम् । अरुदितम् । अरुदित । स्थानिवद्भावात्सार्वधातुकसंज्ञा स्वाश्रयं च वलादित्वं तत्र प्रतिषेधः प्राप्नोति । तिङ् । कृदतिदिष्टम् । भुवनं सुवनं धुवनम् । स्थानिवद्भावात्प्रत्ययसंज्ञा स्वाश्रयं चाजादित्वं तत्र प्रतिषेधः प्राप्नोति । किं पुनरत्र ज्यायः । आदेशिन्यल्याश्रीयमाणे प्रतिषेध इसेतदेव ज्यायः । कुत एतत् । यथा ह्ययं विशिष्टं स्थानिकार्यमादेशे ऽतिदिशति गुरुवद् गुरुपुत्र इति

---

न प्रवर्तते तथा विचारपूर्वकं प्रतिपादयितुमाह किं पुनरिति । आदेशोस्यास्तीत्यादेशी स्थानी । किं स्थान्यलाश्रये कार्ये स्थानिवत्त्वनिषेधो ऽथाल्मात्राश्रय इति विचारः । किं प्रत्यासत्तिराश्रीयते ऽथ वा व्याप्तिरिति भावः । वधक इति । हन्तेर्ण्वुलि बहुलं संज्ञाछन्दसोरिति वक्तव्यमन्नवधगात्रविचक्षणाजिराद्यर्थमिति वधादेशः । स च हलन्त इति दोषोपन्यासः । अदन्तत्वे त्वल्लोपस्य स्थानिवद्भावाद् वृद्ध्यभावः । सुप्तिङ्कृदतिदिष्टेष्विति । आदिष्ट एवातिदिष्टो विवक्षितः । उपलक्षणं चैतत् । तद्धितादेशेष्वपि न प्राप्नोति लैगवायन इति । अत्र हि स्वाश्रयमजादित्वं स्थानिवद्भावात्तद्धितत्वम् । किं पुनरिति । न्यायापेक्षः प्रकर्षः । कः पक्षो न्यायोपपन्न इत्यर्थः । आदेशिनीति । प्रत्यासत्त्येति, भावः । यत्कार्यमादेशः स्वतो न प्रतिपद्यते तत्र

---

रिहत्य विचारान्तरारम्भोऽनुपपन्न इत्यत आह इदानीमिति । प्रतिपादयितुमिति । वादिमुखेनैव प्रतिपादयितुमित्यर्थः । आदेशस्येति । आदेशिनीत्यलीत्यनेन व्यधिकरण स्थानिसम्बन्ध्यलाश्रय इत्यर्थः । सम्बन्धिन एवाधिकरणत्वविवक्षया सप्तमी । अत एव स्थानित्वं तु व्यपदेशिवद्भावेन तत्त्वमिति बोध्यम् । सन्देहबीजं दर्शयति किमिति । स्थानिवद्भावादिति ॥ अचः परस्मिन्नित्यनेन । एवंचोपधात्वाभावो ञ्णित्परत्वाभावश्चेति भावः । अतिदेशोऽतिदिष्टश्चेत्ययं चेदर्थासङ्गतिरत आह आदिष्टएवेति । सुबादीनामादेशेष्वित्यर्थः ॥ तेषु वर्धित्वे इति उवङि च स्थानिवत्त्वप्रतिषेधः प्राप्नोति । तद्धितत्वमिति । अस्य तद्धिते ओर्गुणविधानादिति भावः । ननु पक्षद्वयेपि दोषोक्तेः कस्यापि प्रशस्यत्वाभावाद् आतिशयिकोऽनुपपन्न इत्यत आह न्याय्येति । युक्तरीत्येत्यर्थः । का युक्तिः प्रकृष्टेत्यत्र प्रश्नतात्पर्यमिति भावः । प्रत्यासत्त्येति । अत एव कष्टायेत्यादिनिर्देशाः सङ्गच्छन्ते । एवं च प्रसत्त्याश्रयणमेव न्याय्यमिति भावः । भाष्ये [विशिष्टं स्थानिकार्यमिति]। स्वरूपेणालभ्यमानमित्यर्थस्तदाह यत्कार्यमिति । तच्छेषो ऽतिदेशशेषः । तद्गुरुके अति देशद्वारके ।

यथा। तद्यथा। गुरुवदस्मिन् गुरुपुत्रे वर्तितव्यमन्यत्रोच्छिष्टभोजनात्पादोपसंग्रहणाच्चेति। यदि च गुरुपुत्रोऽपि गुरुर्भवति तदपि कर्तव्यं भवति। अस्तु तर्ह्यदिशिन्यल्याश्रीयमाणे प्रतिषेधः। ननु चोक्तमादेश्यल्विधिप्रतिषेधे कुरुवधपिवां गुणवृद्धिप्रतिषेध इति। नैष दोषः। करोतौ तपरनिर्देशात् सिद्धम्। पिबिरदन्तः। वधक इति नायं ण्वुल्। अन्योऽयमकशब्दः कृदौणादिकः। रुचक इति यथा। एकदेशविकृतस्योपसंख्यानम् *। एकदेशविकृतस्योपसंख्यानं कर्तव्यम्। किं प्रयोजनम्। पचतु पचन्तु इति। तिङ्ग्रहणेन ग्रहणं यथा स्यात्। एकदेशविकृतस्यानन्यत्वात्सिद्धम् *। एकदेशविकृतमनन्यवद्भवतीति तिङ्ग्रहणेन ग्रहणं भविष्यति। तद्यथा। श्वा कर्णे पुच्छे वा छिन्ने श्वैव भवति नाश्वो न गर्दभ इति। अनित्यविज्ञानं तु *। अनित्यविज्ञानं तु भवति। नित्याः शब्दाः। नित्येषु च नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः।

---

स्यादतिदेशाकाङ्क्षा। तच्छेषश्च प्रतिषेधस्तदुद्धारक एवाल् कार्ये युक्तः। अरुदितामित्यत्र त्वादेशस्य स्वतो वलादित्वान्न तत्रातिदेशाकाङ्क्षा। सार्वधातुकत्वं तस्य स्वतो नास्तीति तदेवातिदेशेन प्राप्यते। यथा गुरुपुत्रो गुरुत्वे सति नातिदेशमपेक्षते तथा वलादित्वं प्रत्यादेशस्य नास्त्यतिदेशापेक्षेत्यतावता दृष्टान्तः। सार्वधातुकत्वं प्रत्यस्त्येवातिदेशापेक्षा। करोताविति। अकारस्य ह्युकारो मात्रिक एव न्याय्य इति शास्त्रान्तरेणापि प्राप्तस्य भिन्नकालस्य निवृत्त्यर्थं तपरत्वमित्यर्थः। अन्योऽयमिति। हनो वध चेति क्वुन्प्रत्ययः। एकदेशविकृतस्येति। एकदेशेन विकृत इति तृतीयासमासः। तद्यथेति। छिन्नेऽपि पुच्छे शिष्टावयवसन्निवेशः श्वत्वजातेरभिव्यञ्जकः। एवं पचत्वित्यत्रेकारस्य विकारेऽपि तकारास्तिङ्त्वस्य व्यञ्जकः। तथा चेकारलोपेऽप्यपचादिति तकारमात्रस्य तिङ्त्वमर्थप्रतीतिहेतुत्वं चास्ति। नाश्व इति। अवयवापगमेऽपि न तस्य जात्यन्तरेण योगः किं तर्हि श्वत्वेनैव व्यवहारः। अनित्यविज्ञानमिति। अवस्थिते तकारे इकारस्य उकार इत्यनित्यत्वं शुन इव प्राप्नोतीति भावः। उपसंख्याने तु क्रियमाणे नास्त्यनित्यत्वम्। एरुरिति स्थान्यादेशाभ्यां तिशब्दतुशब्दयोरनुमीयमान-

---

थ्यंग्रति। एवंच यथा तत्रातिदेशप्राप्तोच्छिष्टभोजनस्यैव वर्जनं न तु स्वाश्रयगुरुत्वप्राप्तस्यैवमलंशो ऽतिदेशप्राप्त्याल्विधेरेव वर्जनमिति भावः। भाव्यमानस्य सवर्णग्राहकत्वस्वीकारेऽपि तपरत्वं व्यर्थमित्याह अकारस्येति। अन्तरतमत्वादिति भावः। ऋकारस्यानेकावयवविकारोऽत्रेति लक्ष्यभेदान्नोदवोढामितिवल्लक्षणेलक्षणस्येति न्यायेनात्र निर्वाह इत्याहुः। क्वुनौणादिकः। बहुव्रीहौ निष्ठान्तस्य पूर्वनिपातः स्यादत आह तृतीयेति। आनुमानिकोऽपि स्थानिवत्त्वप्रवृत्तिर्वक्तव्येत्येतद्वार्त्तिकतात्पर्यम्। लोकन्यायाश्रयेण तत्प्रत्याचष्टे। (अनन्यत्वात्सिद्धमिति) भाष्ये। नन्ववयवविगमे जात्यभिव्यञ्जकाभावात्कथं श्वेति व्यवहारोऽत आह छिन्नेऽपीति। तथा चेति। लोपस्य विकारत्वाभावेनैकदेशविकृतोपसंख्यानेऽपि तत्रोक्तरीतिरेवावश्यकीति भावः। अर्थेत्यादि दृष्टान्तार्थम्। अन्यथा शक्यतावच्छेदकानुपूर्व्यज्ञानाद्बोधो न स्यादेतदर्थञ्च तन्न्यायाङ्गीकार आवश्यक इति भावः। अवस्थिते इति। न च इप्रसङ्गे उरिति वाच्यमिति नानित्यत्वम्। अनर्थकत्वेनार्थबोधाय प्रसङ्गस्य वक्तुमशक्यत्वात्। अवयवपरत्वेन प्रसङ्गे स्ववयवान्तरप्रादुर्भावपूर्वावयवापगमाभ्यामनित्यत्वं स्यादित्यर्थः। स एवायमिति प्रत्यभिज्ञया भाष्ये नित्यत्वमुपलक्षितम्। अत एव विकृत इत्यनेन विरोधः। अनित्यत्वाभावे हेतुस्ते प्रसङ्गे इत्यादि। अस्य ह्यर्थवत्त्वात्तैः प्रसङ्गे इत्युक्तिर्नासमञ्जसेत्यर्थः

तत्र स एवायं विकृतश्चैतन्निमेषु शब्देषु नोपपद्यते । तस्मादुपसंख्यानं कर्तव्यम् । भारद्वाजीयाः पठन्ति । एकदेशविकृतेषूपसंख्यानं कर्तव्यम् । किं प्रयोजनम् । पचतु पचन्तु । तिङ्ग्रहणेन ग्रहणं यथा स्यात् । किं च कारणं न स्यात् । अनादेशत्वादादेशः स्थानिवदित्युच्यते । न चेमे आदेशाः । रूपान्यत्वाच्च । अन्यत्खल्वपि रूपं पचतीति अन्यत्पचत्विति । इमे ऽप्यादेशाः । कथम् । आदिश्यते यः स आदेशः । इमे चाप्यादिश्यन्ते । आदेशः स्थानिवदिति चेन्नानाश्रितत्वात्* । आदेशः स्थानिवदिति चेत् तन्न । किं कारणम् । अनाश्रितत्वात् । योत्रादेशो नासावाश्रीयते यश्चाश्रीयते नासावादेशः । नैतन्मन्तव्यं समुदाये आश्रीयमाणे ऽवयवो नाश्रीयते इति । अभ्यन्तरो हि समुदायस्यावयवः । तद्यथा । वृक्षः प्रचलन् सहावयवैः प्रचलति । आश्रय इति चेदल्विधिप्रसङ्गः । आश्रय इति चेदल्विधिरयं भवति । तत्रानल्विधाविति प्रतिषेधः प्राप्नोति । नैष दोषः । नैवं सति कश्चिदनल्विधिः स्यादुच्यते चेदमनल्विधाविति । तत्र प्रकर्षगति-

---

त्वात्तेः प्रसङ्गे तोर्विधानात् । तत्रादेशग्रहणादुपसंख्यानाद्वा आनुमानिकस्याप्यादेशस्य स्थानिवद्भावः सिद्धः । न चेमे इति । तुशब्दादयः । एरुरित्यत्र साक्षात्समुदायानुपादानात् । रूपान्यत्वाच्चेति । यद्ययमवयवादेशो रूपं न भिन्द्यात्स्यादेव प्रत्यभिज्ञानात्तिङ्त्वम् । यतस्तु भेदको रूपस्य तस्मान्नास्ति तिङ्त्वमिति भावः । योत्रादेश इति । इकारस्य उकारो नासावाश्रीयते पदसंज्ञायाम् । सा हि तिशब्दनिबन्धना नावयवनिबन्धना । यश्चेति । तुशब्दः साक्षादविधानान्नादेशः पदसंज्ञानिमित्तभावेन चाश्रीयत इत्यर्थः । तत्रोत्तरमाह नैतदिति । तिप् तस् झि इति तिप्सन्निवेशे इकारतकारावपि सन्निविष्टावितीकारस्य तिङ्त्वात्तदादेशस्याप्युकारस्य तिङ्त्वमिति सिद्धा पदसंज्ञा । अल्विधिप्रसङ्ग इति । इकारस्य पदसंज्ञानिमित्तत्वादल्विधिः पदसंज्ञा स्यादित्यर्थः । यत्र प्रा-

---

तदुपपादकम् एरुरित्यादि । एवञ्च कार्यशब्दवादे न्यायेन सिद्धं नित्यशब्दवादे तु नेति वचनारम्भवादितात्पर्यम् । वस्तुतो वचनारम्भेपि विकृतत्वबुद्धिमात्रेण तत्सङ्गतिरित्यवश्यं वाच्यमन्यथा विकृतस्येत्यसङ्गतं स्यात् तदा तथैव रीत्या लोकन्यायप्रवृत्तिरपि सूपपादेति । आनत्याविज्ञानं त्वित्याद्येकदेशयुक्तिः । कात्यायनीयाद्भारद्वाजीयपाठे हेत्वभिधानं बहुवचनञ्च विशेषः । एरुरित्यत्रेति । प्रत्यक्षादेशत्वञ्चेह निषेध्यमिति भावः । लोकन्यायेन सिद्धिखण्डनाय रूपान्यत्वाच्चेति । तद्व्याचष्टे यदीति । इत्रमो न इत्यादिवदिति भावः । अर्थस्यान्यथाभावेन जात्यभिव्यञ्जकाभाव इति तात्पर्यम् । एकदेशविकृतेष्विति बहुवचनेन लोपस्यापि संग्रहादप चादित्यादावपि स्थानिवत्त्वमिति बोध्यम् । भाष्ये वचनं खण्डयति ( इमेपीति ) । आनुमानिकादेशस्याप्यादेशपदसामर्थ्येन ग्रहणादिति भावः । इममाशयमजानानः पृच्छति कथमिति । उक्तेनैवाभिप्रायेणाह आदिश्यन्त इति । इमे चेति । तुशब्दादयः । आदेशपदसामर्थ्यमजानान आह आदेश इत्यादि । प्रत्यक्षादेशस्यैव ग्रहणं न्याय्यमित्यभिमानः । तदाह योत्रेति । ननु तामोदः पदसंज्ञायामनाश्रयणेपि यथास्थानिवत्त्वात्पदत्वमेवमुकारस्यापीत्यत आह सा हीति । तेन नायमादेश इति भावः । तिङ्त्वं समुदायपर्याप्तमिति तात्पर्यम् । स्थानिवत्त्वद्वारापि नायमुकारः पदत्वहेतुतयाश्रीयत इति भाष्यार्थः । आश्रीयत इत्यर्थ इति । आश्रयितुमिष्यत इत्यर्थः । तत्रोत्तरमाहेति । एकदेशीति शेषः । भाष्ये [ समुदाय इत्यादि ] सुप्तिङन्तमित्यादौ ति इति समुदाये निमित्तत्वेनाश्रितेऽवयवातिरि-

विज्ञास्यते साधीयो ऽल्विधिरिति। कश्च साधीयः। यत्र प्राधान्येनालाश्रीयते यत्र हि नान्तरीयको ऽलाश्रीयते नासावल्विधिरिति। अथ चोक्तमादेशग्रहणस्य प्रयोजनम्। आदेशमात्रं स्थानिवद्यथा स्यादिति। अनुपपन्नं स्थान्यादेशत्वं नित्यत्वात् *। स्थानी आदेश इत्येतन्नित्येषु शब्देषु नोपपद्यते। किं कारणम्। नित्यत्वात्। स्थानी हि नाम भूत्वा यो न भवति। आदेशो हि नाम यो ऽभूत्वा भवति। एतच्च नित्येषु शब्देषु नोपपद्यते। यत्सतो नाम विनाशः स्यात् असतो वा प्रादुर्भाव इति। सिद्धं तु यथा लौकिकवैदिकेष्वभूतपूर्वेपि स्थानशब्दप्रयोगात् *। सिद्धमेतत्। कथम्। यथा लौकिकवैदिकेषु कृतान्तेषु अभूतपूर्वेपि स्थानशब्दप्रयोगो वर्तते। लोके तावदुपाध्यायस्य स्थाने शिष्य इत्युच्यते नच तत्र उपाध्यायो भूतपूर्वो भवति। वेदेपि। सोमस्य स्थाने पूतीकतृणान्यभिषुणुयादित्युच्यते। न च तत्र सोमो भूतपूर्वो भवति। कार्यविपरिणामाद्वा सिद्धम् *। अथ वा कार्यविपरिणामात्सिद्धमेतत्। किमिदं कार्यविपरिणामादिति। कार्या बुद्धिः सा विपरिणम्यते। ननु च कार्याविपरिणामादिति भवितव्यम्। सन्ति चैवोत्तरपदिकानि ह्रस्वत्वानि। अपि च बुद्धिः संप्रत्यय इत्यनर्थान्तरम्। कार्या बुद्धिः कार्यः संप्रत्ययः कार्यस्य संप्रत्ययस्य विपरिणामः। कार्यविपरिणामादिति। परिहारान्तरमेवेदं मत्वा पठितं, कथं चेदं परिहारान्तरं

---

धान्येनेति। यत्र साक्षादल् निर्दिष्टः तत्र प्रतिषेधो नानुमीयमाने सम्भवमात्रेणालीत्यर्थः। प्राधान्यग्रहणं प्रत्यक्षोपलक्षणम्। आदेशमात्रमिति। आनुमानिकमपीत्यर्थः। अनुपपन्नमिति। एकदेशविकारेपि यत्र नित्यत्वहानिस्तत्र सर्वविकारे कुतो नित्यत्वम्। यत्रान्वयोपि कस्य चिन्नास्तीत्यर्थः। सोमस्येति। सोमस्तृणविशेषः। तदसन्निधौ पूतीकतृणानि प्रतिनिधीयन्ते। कार्या बुद्धिरिति। अन्यस्यात्र विपरिणामासम्भवात्सामर्थ्यात्कार्यत्वेन बुद्धिर्गृह्यते न तु कार्यशब्दो बुद्धिपर्यायः। सन्तीति। ङ्या-

---

क्तसमुदायाभावात् तकारेकारान्तं पदमित्यर्थः। एवङ्चकारस्योकारादेशे स्थानिवद्भावेनेकारबुद्धौ निमित्तभूतसमुदायसत्त्वात्पदत्वं सिद्धमिति भावः। तिङ्त्वात्। तदवच्छिन्नावयवत्वात्॥ तिङ्त्वम्। तदनवच्छिन्नावयवेकारत्वमित्यर्थः। यथा श्रुते हि पचतीत्यादौ तान्तस्यापि पदत्वापत्तौ जश्त्वापत्तिरिति बोध्यम्। ननु प्राधान्येनेत्युक्तौ प्रतीक्ष्येति न सिध्येदत आह यत्रेति। प्रत्यक्षेति। अनान्तरीयकेत्यर्थः। इदानीं सिद्धान्ती एकदेश्युक्तमनुमन्यमान इव पक्षान्तरत्वेन स्वाशयं प्रकाशयति। भाष्ये [ ऽथवेति ]। सर्वविकार इति। अस्तेर्भूरित्यादौ। [ यो भूत्वेत्यादि ] भाष्यस्य प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं नित्यत्वमिति तात्पर्यम्। स्थानशब्दः प्रसङ्गवाचीत्युत्तरम्। तदसंनिधाविति। नित्यस्यावश्यकर्त्तव्यत्वादारब्धस्य चावश्यसमापनीयत्वादिति भावः। संज्ञाछन्दसत्वयोरभावादाह बहुलेति। भूतपूर्वे स्थानशब्दप्रयोगमभ्युपेत्येदं परिहारान्तरम्। अन्यथाऽऽनर्थक्यप्रसङ्गात्। नच तत्र स्थानशब्दो दृश्यते सोमस्थाने इत्यादावभूतपूर्वे एव प्रयोगदर्शनादिति यदि भूतपूर्वेस्यात् भाष्यतात्पर्यम्। नचेति। भूतपूर्वे हि स्थानशब्दो निवृत्तिवचनः

स्यात् यदि भूतपूर्वे स्थानशब्दो वर्तते । भूतपूर्वे चापि स्थानशब्दो वर्तते । कथम् । बुद्ध्या । तद्यथा । कश्चित्कं चिदुपदिशति । प्राचीनं ग्रामादाम्रा इति । तस्य सर्वत्राम्रबुद्धिः प्रसक्ता । ततः पश्चादाह । ये क्षीरिणोऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधा इति । स तत्राम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते । स ततः पश्यति बुद्ध्या आम्रांश्चापकृष्यमाणान् न्यग्रोधांश्चाधीयमानान्नित्या एव च स्वस्मिन् विषये आम्रा नित्याश्च न्यग्रोधाः । बुद्धिस्त्वस्य विपरिणम्यते । एवमिहाप्यस्तिरस्मायविशेषेणोपदिष्टस्तस्य सर्वत्रास्तिबुद्धिः प्रसक्ता सोऽस्तेर्भूरित्यनेनास्तिबुद्ध्या भवतिबुद्धिं प्रतिपद्यते । स ततः पश्यतिबुद्ध्या अस्तिं चापकृष्यमाणं भवतिं चोपादीयमानं, नित्य एव च स्वस्मिन् विषये ऽस्तिर्नित्यो भवतिश्च । बुद्धिस्त्वस्य विपरिणम्यते । अपवादप्रसङ्गस्तु स्थानिवत्त्वात् * । अपवादे उत्सर्गकृतं च प्राप्नोति । कर्मण्यण्, आतोऽनुपसर्गे क इति । केऽपि अणि कृते प्राप्नोति । किं कारणम् । स्थानिवत्त्वात् । उक्तं वा *। किमुक्तम् । विषयेण तु नानालिङ्गकरणात् सिद्धमिति । अथ वा सिद्धं तु षष्ठीनिर्दिष्टस्य स्थानि-

---

पोरित्यत्र बहुलग्रहणात् । भूतपूर्वे चापीति । न च नित्यत्वविरोधः । बुद्धिधर्माः केवलमर्थेषु प्रतिपत्तृवशादारोप्यन्ते न तु तद्वशादर्थानां तथावस्थानम् । प्राचीनमिति । प्राचि देशे प्राक् । ततो विभाषाञ्चेरदिक् स्त्रियामिति स्वार्थे खः । तत्र सप्तम्यर्थस्याभिहितत्वादन्तर्भूतत्वाच्च प्रथमैव कृता । आम्रबुद्ध्या इति । तस्या अनन्तरमित्यर्थः । अपवादप्रसङ्गस्त्विति । बुद्धिविपरिणाममात्रं यदि स्थान्यादेशभाव इति भावः। कर्मण्यणिति । अणीति सर्वत्राणो बुद्धिः प्रसक्ता आतोऽनुपसर्गे क इति कबुद्ध्या निवर्त्यत इति केऽप्यण्कृतप्रसङ्गः । विषयेण त्विति । तुशब्दः पुनरर्थे, यदयं गापोष्ट-

---

स्यादिति भावः । तत्पक्षे नित्यत्वं कथमिति पृच्छति भाष्ये ( कथमिति ) । उत्तरमाह । ( बुद्ध्येति ) । प्रतिपत्तृवशादिति । प्रतिपत्तृशब्देन तदीयाप्रतिपत्तिर्लक्ष्यते तद्वशात् । प्रतिपत्तॄणां तथा ज्ञानव्यवहाराभ्यां बुद्धिधर्मारोपस्तत्रानुमीयते स्वतस्तत्त्वस्य तत्र बाधादिति भावः । क्वचित्तु प्रतिपत्तिवशादिति पाठः । तदाह नत्विति । आरोपितभूतपूर्वत्वव्यवहारान्न नित्यत्वहानिरिति भावः । ननु प्राचीनमित्यस्यात्राधिकरणप्रतिपादकत्वात् सप्तमी स्यादत आह प्राचीति । सप्तम्यन्तादुत्पन्नास्तातेरञ्चेर्लुगिति लुक् । भाष्ये ( तस्य सर्वत्रेति ) । प्राग्देशवृक्षत्वावच्छिन्ने इत्यर्थः । स तत्र न्यग्रोधेषु । नन्वाम्रबुद्ध्या इति न तृतीयार्थासङ्गतेः । नापि षष्ठी संबन्धिनोऽनुपस्थितेरत आह तस्या अनन्तरमिति । अनन्तरपदाध्याहारेण षष्ठीति भावः । केचित्तु आम्रबुद्ध्या इत्यस्य तां विहायेत्यर्थ इत्याहुः । भाष्ये ( अपकृष्यमाणानिति ) । तत्र यथा बुद्धेरेवापकर्ष उपधानञ्चाम्रेषु न्यग्रोधेषु चारोप्यते तथात्रापि बुद्धिगतोत्पादविनाशयोः स्थान्यादेशभावस्य च शब्देष्वारोप इति भावः । आधानमुत्पत्तिः । ननु उत्सर्गापवादयोः स्थान्यादेशाभावात् कथं स्थानिवत्त्वमत आह बुद्धीति । अण्कृतेति । ङीप इत्यर्थः । भाष्ये उक्तं वेति वार्त्तिकस्थमुक्तमित्यंशं व्याचष्टे ( विषयेण त्वित्यादि ) । अइउण्सूत्रे एकोकार इति पक्षेऽनुबन्धसङ्करः प्राप्नोति केऽप्यण्कृतं प्राप्नोतीति पूर्वपक्षे विषयेण तु नानालिङ्गकरणात्सिद्धमित्युक्तम् । विषयेणकादौ भिन्नलिङ्गकरणात् । इह मुण्डो भव इह जटी भवति लोकव्यवहारे यथा यद्गुणको यत्रोच्यते तत्र तद्गुण एव भवति । तथा यल्लिङ्गो यत्रोच्यते तत्र तल्लिङ्गकार्यमेव नान्यानुबन्धकार्यमिति तदर्थश्चोक्तः । एवञ्च सामान्यापेक्षत्वान्नियमस्य स्थानिवत्त्वप्रयुक्तस्यापि व्यावृत्तिरिति भावः । वार्त्तिकेऽधिकरणस्यैव करणत्वविवक्षया तृतीया । कैयटोक्तव्याख्यानं तु अथवा यदयं

वद्वचनात् *। सिद्धमेतत्। कथम्। षष्ठीनिर्दिष्टस्यादेशः स्थानिवदिति वक्तव्यम्। तत्तर्हि षष्ठीनिर्दिष्टग्रहणं कर्तव्यम्। न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्। षष्ठी स्थानेयोगेति। अथ वा आचार्यप्रवृत्तिर्ज्ञापयति नोपवादे उत्सर्गकृतं भवतीति। यदयं श्यन्नादीन् कांश्चिच्छितः करोति श्यन् श्नम् श्ना शः श्नुरिति। तस्य दोषस्तयादेशउभयप्रतिषेधः *। तस्यैतस्य लक्षणस्य दोषः। तयादेशउभयप्रतिषेधो वक्तव्यः। उभये देवमनुष्याः। तयपो ग्रहणेन ग्रहणाद् जसि विभाषा प्राप्नोति। नैष दोषः। अयच् प्रत्ययान्तरम्। यदि प्रत्ययान्तरम् उभयीति ईकारो न प्राप्नोति। मा भूदेवम्। मात्रच इत्येवं भविष्यति। कथम्। मात्रजिति नेदं प्रत्ययग्रहणम्। किं तर्हि। प्रत्याहारग्रहणम्। क्व सन्निविष्टानां प्रत्याहारः। मात्रशब्दात्प्रभृति आ अयचश्चकारात्। यदि प्रत्याहारग्रहणं, कति तिष्ठन्ति अत्रापि प्राप्नोति। अत इति वर्तते। एवमपि तैलमात्रा घृतमात्रा अत्रापि प्राप्नोति।

---

गिति कापवादस्य टकः कित्त्वं शास्ति तज्ज्ञापयति नोत्सर्गकृतमपवादे भवतीति। षष्ठीनिर्दिष्टस्येति। न चाऽपवादः षष्ठीनिर्दिष्टस्य स्थाने विधीयते नाभि नभं चेत्यादौ षष्ठ्याः स्थाने प्रथमाया विधानादस्ति षष्ठी। विश्रवणरवणेति तु शब्दान्तरं प्रत्ययविषये विज्ञेयम्। यथोक्तं, वालवापो विदूरं च प्रकृत्यन्तरमेव वेति। विश्रवःशब्दात्त्वनभिधानात् प्रत्ययाभावः। यदयमिति। नच पित्त्वनिवृत्त्यर्थं नियमार्थं शित्त्वम्। श्यनो नित्त्वात् ज्ञापकात् पित्त्वनिवृत्तेः सिद्धत्वात्। नह्यत्र पित्त्वस्य नित्त्वस्य वा विशेषो ऽस्तीति केचिदाहुः। तदयुक्तम्। ताच्छील्यादौ विषये चानाश श्यनो नित्त्वं प्रकृतेराद्युदात्तार्थं स्यात्। तस्मादिष्टसिद्धये सामान्यं ज्ञापकं शित्त्वमाश्रीयते अपवादे उत्सर्गकृतं न भवतीति। कति तिष्ठन्तीति। परिहारान्तरसद्भावान्न षट्स्वस्रादिभ्य इति प्रतिषेधो ऽत्र नोक्तः। तैलमात्रेति। चकारस्य प्रत्याहा-

---

श्यनादीनिति वक्ष्यमाणपक्षे एतत्पक्षाद्वैलक्षण्यं दुर्लभम्। शब्दमर्यादया वार्त्तिकात्तदर्थालाभश्च तुग्रहणस्य पुनरर्थत्वेपि नानापदानन्वयस्तदवस्थश्च। किं च कैयटोक्तार्थकं विषयेण तु पुनर्लिङ्गकरणात्सिद्धमिति भाष्ये तत्र पठितं न नत्वेवमिति दिक्। तत्रत्यं वेत्यंशं व्याचष्टे अथवा सिद्धं त्विति। अनुवर्त्तमानं षष्ठीतिपदं षष्ठीनिर्दिष्टलाक्षणिकं षष्ठ्यां विपरिणम्यत इत्याशयेनाह षष्ठीनिर्दिष्टस्येति। नन्वेवं नाभिनभमित्यादौ षष्ठीनिर्देशाभावात्स्थानिवत्त्वाभावेन यत्प्रत्ययसंनियुक्तनभस्य भत्वाङ्गत्वयोरभावाद्यस्येति लोपो न स्यादत आह नाभीति। विधानात् करणात्। यत्र तर्हि स्थान्यनुमानं तत्र कथमत आह विश्रवणेति। प्रत्ययविषयम्। शिवाद्यण्विषयम्। वालेति। वैदूर्यस्य विदुरान्न प्रभवः किं तु वालवापादिति विदुराद् ञ्य इत्यस्यासंगतौ इदं वार्त्तिकम्। वालवापो विदूरमापद्यते ऽथास्मात्प्रत्ययः। यद्वा वालवापार्थवाचको विदूरो ऽन्य एव ञ्यप्रत्ययविषय इति तदर्थः। ननु विश्रवणादेरनादेशत्वे विश्रवःशब्दादपि प्रत्ययः स्यादत आह विश्रवइति। विशेषोस्तीति। नित्त्वं हि प्रत्ययाद्युदात्तत्वबाधनाद्युदात्तत्वाय। स्थानिवत्त्वात्पित्त्वेनानुदात्तत्वे तु लसार्वधातु-कस्याप्युदुपदेशादित्यनुदात्तत्वे धातोरुदात्तत्वं सिद्धमेवेति भावः। आद्युदात्तार्थमिति। इष्टमपि पित्त्वप्रयुक्तानुदात्तत्वं बाधिष्यतेत्यर्थः। अन्यत्र विकरणेभ्य इत्यपि नित्त्वसामर्थ्याद्बाध्यत इति भावः। किं च वावृतु इत्यस्यानेकाच्त्वे दिवादौ सत्त्वेन तत्रापि नित्त्वपित्त्वयोर्विशेषः। कैयटस्वरसस्तु तस्य धातोर्दिवादावभाव एवेति बोध्यम्। इष्टसिद्धये इति। वैयर्थ्यान्नियमस्य वा ज्ञापकस्य वेत्यत्र विनिगमकाभावान्नित्त्वसामर्थ्यादन्यत्र शित्करणं च

सदृशस्याप्यसंनिविष्टस्य न भवति प्रत्याहारग्रहणेन ग्रहणम् । जात्याख्यायां बहुवचनातिदेशे स्थानिवद्भावप्रतिषेधः * । जात्याख्यायां बहुवचनातिदेशे स्थानिवद्भावस्य प्रतिषेधो वक्तव्यः । ब्रीदिभ्य आगत इत्यत्र घेर्ङितीति गुणः प्राप्नोति । नैष दोषः । उक्तमेतत् । अर्थातिदेशात्सिद्धमिति । ङ्याब्ग्रहणे ऽदीर्घः* । ङ्याब्ग्रहणे ऽदीर्घ आदेशो न स्थानिवदिति वक्तव्यम् । किं प्रयोजनम् । निष्कौशाम्बिः । अतिखट्वः । ङ्याब्ग्रहणेन ग्रहणात्सुलोपो मा भूदिति । ननु च दीर्घादित्युच्यते । तन्न वक्तव्यं भवति । किं पुनरत्र ज्यायः । स्थानिवद्भावप्रतिषेध एव ज्यायान् । इदमपि सिद्धं भवति । अतिखट्वाय अतिमालाय । याडाप इति याड् न भवति । अथेदानीमसत्यपि स्थानिवद्भावे दीर्घत्वे कृते पिच्चासौ भूतपूर्व इति कृत्वा याट् कस्मान्न भवति । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । ननु चेदानीं सत्यपि स्थानिवद्भावे एतया परिभाषया शक्यमिहोपस्थानम् । नेत्याह । न तर्हीदानीं क्व चिदपि स्थानिवद्भावः स्यात् । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । प्रश्लिष्टनिर्देशात् सिद्धम् । प्रश्लिष्टनिर्देशो

---

रार्थस्योपादानात्तस्य विशेषकत्वाद् मात्रशब्दमात्रग्रहणाप्रसङ्गः । सदृशस्येति । प्रत्ययानुकरणं मात्रशब्द इति प्रातिपदिकस्याऽग्रहणमित्यर्थः । जात्याख्यायामिति । एकस्मि-

---

इत्युपदेशबाधकल्पनापेक्षास्थानवदित्यतिदेशबाधकल्पनस्यैवौचित्याच्चेति भावः । सामान्येनेति । न विकरणविषयमेव नापि पित्त्वविषयमेवेत्यर्थः । भाष्ये [ श्यनादीनिति ] उत्सर्गसजातीयानुबन्धवदपवादानामुपलक्षणम् । प्रत्ययानुकरणमिति । टिड्ढाणञ्सूत्रे साहचर्यादिति भावः । नन्वेकस्मिन् बहुवचनमित्युक्त्या षष्ठ्यभावात्कथमादेशत्वमत आह एकस्मिन्निति । भाष्ये [ अर्थातीति ] । बहुवचनशब्दो न प्रत्ययपरः किं स्वयंपर इति भावः । [ ङ्याब्ग्रहणे ऽदीर्घ इति ] भाष्ये । ननु गङ्गाया ईर्गङ्गी गङ्गीयतेः क्विपि गङ्गीरित्यादौ स्थानिवत्त्वनिषेधो न स्यात् । न च तत्र स्थानिवत्त्वे इष्टापत्तिरस्तु । सुलोपश्चास्त्विति वाच्यम्, आकारेकारप्रश्लेषमादाय तत्प्रत्याख्यानपरभाष्यविरोधात् । सूत्रमते ऽपि नात्र लोपः । प्रत्यासत्त्या ङ्याप्पदोपस्थित ईकाराकारयोरेव दीर्घग्रहणेन ग्रहणादिति चेन्न, तेषामनभिधानात् । न चैवं विशेषणं व्यर्थम् । खट्वा इत्यादौ सवर्णदीर्घे परत्वेन परादिवद्भावप्राप्त्या स्थानिवत्त्वस्यैवाभावादिति वाच्यम् । न स्थानिवदित्यस्य स्थानिकार्यं न लभते इत्यर्थे येन केनापि प्राप्तस्य स्थानिकार्यस्य निषेध इति दीर्घव्याप्त्यप्रयुक्तकार्याभावशङ्कावारणार्थं तत् । ह्रस्व इति नोक्तम् । चित्रायां जातश्चित्र इत्यादौ जातार्थलुकि टापो लुक्यपि प्रत्ययलक्षणेन हल्ङ्यादिलोपापत्तेः । मम तु लुक्यपि दीर्घभिन्नत्वात्तत्रापि न स्थानिप्रयुक्तकार्यातिदेश इति दिक् । अतिखट्व इति । नचात्र ह्रस्व आकारस्येति तद्गतमात्वमल्विधिरिति वाच्यम्, गोस्त्रियोरित्यस्य स्त्रीप्रत्ययान्तान्तप्रातिपदिकान्त्यस्य ह्रस्व इत्यर्थः । अचश्चेति तु नोपतिष्ठते । अनियमाप्रसक्तेः । स्त्रीप्रत्ययत्वं च टाङ्कांश्याद्विशिष्टनिष्ठमिति न दोषः । सूत्रोपात्तस्यैव स्थानितावच्छेदकत्वमित्युक्तम् । अत एव गोटाङ्ग्रहणं कर्त्तव्यमिति वार्तिककृतोक्तम् । स्वरितत्वबलात् स्त्रियामिति प्रकृत्य ये विहितास्तेषां ग्रहणमिति भाष्यकृतोक्तम् । विधानञ्चानुबन्धविशिष्टस्यैवेति स्पष्टमेवेति दिक् । अतिखट्वायेति । न चाबन्तादङ्गात्परस्य याडिति तदर्थः । उपसर्जनस्त्रीप्रत्यये च तदादिनियमाद् नैतदङ्गमाबन्तमिति स्थानिवत्त्वेपि न याट्प्रवृत्तिरिति वाच्यम्, प्रत्ययग्रहणपरिभाषया ऽऽबन्तग्रहणे तेन चाङ्गविशेषणे आबन्तान्तं यदङ्गमित्यर्थान्न दोषः । अत एवार्द्धखट्वायामित्यादौ याट्सिद्धिरिति भावः । नन्वेवमपि दीर्घे कृते स्थानिवद्भावनाप्त्वं स्यादेवायं निषेधस्तु न दीर्घत्वादत आह मम चेति । एवं च स्थानिवद्भावेन तल्लाभस्तस्या-

ऽयम् । ङी ई ईकारान्तात् । आ आप् आकारान्तादिति । आहिभुवोरीट्प्रतिषेधः * । आहिभुवोरीट् प्रतिषेधो वक्तव्यः । आत्थ अभूत् । अस्ति ब्रूग्रहणेन ग्रहणादीट् प्राप्नोति । आहेस्तावन्न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति नाहेरीड् भवतीति । यदयमाहस्थ इति झलादिप्रकरणे थत्वं शास्ति । नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् । भूतपूर्वगतिर्यथा विज्ञायेत । झलादिर्यो भूतपूर्व इति । यद्येवं थवचनमनर्थकं स्यात् । आथिमेवायमुच्चारयेत् । ब्रुवः पञ्चानामादित आथो ब्रुव इति । भवतेश्चापि न वक्तव्यः । अस्तिसिचो ऽपृक्त इति द्विसकारको निर्देशः । अस्तेः सकारान्तादिति । वध्यादेशे वृद्धितत्वप्रतिषेधः * । वध्यादेशे वृद्धितत्वयोः प्रतिषेधो वक्तव्यः । वधकं पुष्करमिति । स्थानिवद्भावाद् वृद्धितत्वे प्राप्नुतः । नैष दोषः । उक्तमेतत् । नायं एवुल् अन्यो ऽयमकशब्दः क्रिदौणादिको रुचक इति यथेति । इट्

---

नू यत् प्राप्तमेकवचनं तस्य प्रसङ्गे बहुवचनमादेश इति कल्पनाऽऽश्रयेण दोषोपन्यासः । भूतपूर्व इति । अनुबन्धकार्ये सर्वत्र भूतपूर्वगत्याश्रयणाद्वा इति च रूपसद्भावात् । लक्षणेति । अत्र चान्तरा ह्रस्वे कृते स एवायमिति बुद्धेर्विच्छेदः । झलादिरिति । णलादिषु थलेव भूतपूर्वो झलादिरिति भावः । आथिमिति । तिबादयो हि सर्वे झ-

---

नित्यसत्त्वादिति भावः । भाष्ये [ ननु चेदानीमिति । ] वार्त्तिकाकरणे इत्यर्थः । सत्यपीति । निष्कौशाम्बिरित्यादौ । प्रश्लिष्टनिर्देशादिति । अतिखट्वायेत्यादौ आकारस्य लाक्षणिकत्वादेव न दोषः । खट्वायै इत्यादौ तु न दोषो यतो लक्षणप्रवृत्तिं विना यद्रूपासंभवस्तदेव लाक्षणिकं परिभाषाया निषेधविषयः । न चेह तथा । एकादेशतः प्रागपि तद्रूपसत्त्वादित्याहुः । अयं च प्रश्लेषो आडाप, आङ्चाप, औङ् आप, हलन्ताच्चाप्, हल्ङ्याब्भ्य इत्येतेषु । ह्रस्वनद्याप इत्यत्र तु प्रश्लेषे न मानमिति दिक् । ननु भाष्यमते सूत्रमते च अतिखट्वस्य अः अतिखट्वा इत्यत्र सुलोपो भवति वार्त्तिकमते तु न, अतिखट्वत्वं आवन्तत्वस्य विच्छेदादपि प्रत्यासंभवादिति चेन्न । अनभिधानेनैषां प्रयोगाणामभावात् । यद्वा स्थानिवद्भावस्य कार्यार्थत्वेनातिखट्वशब्दे आकारप्रश्लेषे फलाभावात्तदप्रवृत्तौ स्थानिन्यापत्वबुद्धेरभावात्तदुद्देशे तदादेः सूत्रमते भाष्यमते च दुर्लभः । परम्परया कार्यमादायाप्यस्थानिवत्त्वप्रवृत्तौ मानाभावात् । यत्तु वार्त्तिकमते लोपाप्राप्त्या भाष्यनिमतेऽपि ईकारादिप्रश्लेषान्तरेण लोपाभाव एव वाच्यः । एकप्रश्लेषेणवातिखट्वव्यावृत्तौ सिद्धायां दीर्घग्रहणं सूत्रमते । भाष्यमते तत्प्रत्याख्यानाय कृतप्रश्लेषान्तरञ्च नियमार्थं न कदाचिद् रूपान्तरं प्राप्तौ यौ ङ्यापाविति एवञ्च न दोष इति । तन्न । मानाभावात् । अतिखट्वायेत्येव वार्त्तिकप्रयोजनं प्रदर्श्याकारप्रश्लेषेण हि तत्प्रत्याख्यातम् । भाष्ये ( आहिभुवोरिति ] । ब्रुवईट्, अस्ति सिचोऽपृक्त इत्याभ्यां प्राप्तिः । द्विसकारको निर्देश इति । अस्तिस्सिचइति सूत्रपाठ इति भावः । प्रकारान्तरे तु आदेशैरपहारात्सद्वयोच्चारणाभावेन निर्देश इति भाष्यस्वारस्यम् । अत एव वार्त्तिककृता सिज्लुकः स्थानिवत्त्वस्य प्रत्ययलक्षणस्य वा प्रतिषेधो नारब्धः सकारस्य सिज्विशेषणत्वमित्याशयेन तद्विशेषणसामर्थ्यात् श्रूयमाणसान्तपरमिति प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वेऽपि न दोषः । भाष्यकृता तु मध्यमणिन्यायेनोभयसंबन्धमङ्गीकृत्य भुवः स्थानिवत्त्वप्रतिषेधोऽपि प्रत्याख्यात इति बोध्यम् । नायं ण्वुलिति । यद्यपि वृद्धिर्वधस्यादन्तत्वेनापि वारयितुं शक्या तथापि तत्त्वांशप्रत्याख्यानायेदमावश्यकमिति भावः । इड्विधिश्चेति । यथेडविधिः सिध्यति तथा तन्निषेधे स्थानिवत्त्वप्रतिषेधो वक्तव्य इत्यर्थः । इडविधेय इत्यस्य तन्निषेधे स्थानिवत्त्वप्रतिषेधद्वारेति शेषः । आवधिषीष्टेति । आङो यमहन इत्यात्मनेपदम् । प्रतिषेधः प्राप्नोतीति । तत्र वधे स्थानिवत्त्वेनाङ्गतया निषेधः प्राप्त इड्निषेधरूपे कार्ये स्थानिवत्त्वप्रतिषेधेनाङ्गत्वाभावादित्यर्थः । वधेरपि सूत्रे स्थान्यनुरूपानुदात्तस्यैवोच्चारणेन अनुदात्तत्वं बोध्यम् । प्रकृतिस्वरत्व । प्रकृतितः स्थान्यनुरूपतया

विधिश्च * । इड्विधेयः । आवधिषीष्ट । एकाच उपदेशेनुदात्तादितीट्प्रतिषेधः प्राप्नोति । नैष दोषः । आद्युदात्तनिपातनं करिष्यते । स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति । एवमप्युपदेशिवद्भावो वक्तव्यः । यथैव हि निपातनस्वरः प्रकृतिस्वरं बाधते एवं प्रत्ययस्वरमपि बाधेत । आवधिषीष्टेति । नैष दोषः । आर्धधातुकीयाः सामान्येन भवन्ति अनवस्थितेषु प्रत्ययेषु । तत्रार्धधातुकसामान्ये वधिभावे कृते सति शिष्टत्वात् प्रत्ययस्वरो भविष्यति । आकारान्तान्नुक्पुक्प्रतिषेधः * । आकारान्तान्नुक्पुकोः प्रतिषेधो वक्तव्यः । विलापयति । भापयते । लीभीग्रहणेन ग्रहणान्नुक्पुकौ प्राप्नुतः । लीभियोः प्रश्लिष्टनिर्देशात्सिद्धम् । लीभियोः प्रश्लिष्टनिर्देशोऽयम् । ली ई ईकारान्तस्येति । भी ई ईकारान्तस्येति । लोडादेशे शाभावजभावधित्वहिलोपैत्वप्रतिषेधः * । एषां लोडादेशे प्रतिषेधो वक्तव्यः । शिष्टात् । हतात् । भिन्तात् । कुरुतात् । स्तात् । लोडादेशे कृते शाभावो जभावो धित्वं हिलोप एत्वमित्येते विधयः प्राप्नुवन्ति । नैष दोषः । इदमिह संप्रधार्यम् । लोडादेशः क्रियताम् एते विधय इति । किमत्र कर्तव्यम् । परत्वाल्लोडादेशः । अथेदानीं लोडादेशे कृते पुनः प्रसङ्गविज्ञानात् कस्मादेते विधयो न भवन्ति । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति कृत्वा । त्रयादेशे स्रन्तप्रतिषेधः * । त्रयादेशे स्रन्तस्य प्रतिषेधो वक्तव्यः । तिसृभावे कृते त्रेस्त्रय इति त्रयादेशः प्राप्नोति । नैष दोषः । इदमिह संप्रधार्यं तिसृभावः क्रियतामाहोस्वित् त्रेस्त्रय इति । किमत्र कर्तव्यम् । परत्वात्तिसृभावः । अथेदानीं तिसृभावे कृते पुनः प्रसङ्गविज्ञानाद् त्रयादेशः कस्मान्न भवति । सकृद्गतौ विप्रति-

---

लादय इति णलादयो भूतपूर्वा झलादय इति भावः । आवधिषीष्टेति । यदा यच्छब्दप्रयोगः यदावधिषीष्टेति तदा तिङ्ङतिङ इति निघातः प्राप्तो निपातैर्यद्यदीति प्रति-

---

प्राप्तस्यानुदात्तत्वस्य । प्रत्ययस्वरम् । तत्प्रयुक्तानिघातम् । नन्वत्रोदाहरणे तिङ्ङतिङ इति निघातेन भाव्यमत आह यदा यादीति । यदेत्यस्य तदेतदुदाहरणमित्यनेनान्वयः । मध्ये भवति तदेत्यपाठः । भाष्ये ( आर्धधातुकसामान्ये इति ) । आर्द्धधातुकइतिवल्लिङीत्याद्यपि विषयसप्तम्येवेति भावः । एवञ्चाद्युदात्तनिपातनं उपदेशिवद्भावारम्भगौरवाभावेन उपदेशत्वावच्छेदेनानुदात्तत्वाभावात् स्थानिवद्भावेनाकृत्वे सत्यपि निषेधाप्राप्त्या तन्निषेधो न कार्य इति तात्पर्यम् । आकारान्तादिति । विभाषा लीयतेः । बिभेतेर्हेतुभये इत्यात्वं लीलोर्नुग्लुकाविति, भियो हेतुभये इति च नुक्पुकौ । प्रश्लिष्टनिर्देशादिति । यद्यपि भिय इत्यत्र प्रश्लेषे एकादेशस्य कृर्षातङ्सूत्रभाष्योक्तरीत्या पूर्वधर्मावच्छिन्नोद्देश्यके इयङ्विधौ अचः परस्मिन्निति स्थानिवत्त्वेनयङ्दुर्लभस्तथापि सौत्रत्वात्स इति बोध्यम् । क्षियो निष्ठायामिति दीर्घविधावेवेति दिक् । शाभावेत्यादि । शा हौ, हन्तेर्जः, हुझल्भ्यो हेर्धिः उतश्च प्रत्ययाद्, ध्वसोरेद्धावित्येतैः । परत्वादिति । युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यभावरूपासंभवस्य सत्वात् तादृशासंभव एव च विप्रतिषेधशास्त्रप्रवृत्त्युपयोगी स्थानिवद्भावस्तु कार्यप्रवृत्त्युत्तरं न प्रवृत्तिकाले इति युगपदसंभवः स्पष्ट एवेति भावः । एवमग्रेपि । परत्वात्तिसृभाव इति । न च तिसृविशेषविभक्तिसंज्ञापेक्षातिसृपेक्षया

षेधे यद्बाधितं तद्बाधितमेवेति । आम्विधौ च * । आम्विधौ सून्तस्य प्रतिषेधो वक्तव्यः । चतस्रस्तिष्ठन्ति । चतसृभावे कृते चतुरनडुहोरामुदात्त इत्याम् प्राप्नोति । नैष दोषः । इदमिह संप्रधार्यं चतसृभावः क्रियताम् आहोस्विच्चतुरनडुहोरामुदात्त इत्यामिति । किमत्र कर्तव्यम् परत्वाच्चतसृभावः । अथेदानीं चतसृभावे कृते पुनः प्रसङ्गविज्ञानाद् आम् कस्मान्न भवति । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति । स्वरे वस्वादेशे * । स्वरे वस्वादेशे प्रतिषेधो वक्तव्यः । विदुषः पश्य । शतुरनुमो नद्यजादी अन्तोदात्तादिसेष स्वरः प्राप्नोति । नैष दोषः । अनुम इति प्रतिषेधो भविष्यति । अनुम इत्युच्यते न चात्र नुमं पश्यामः । अनुम इति नेदमागमग्रहणम् । किं तर्हि । प्रत्याहारग्रहणम् । क्व सन्निविष्टानां प्रत्याहारः । उकारात्प्रभृत्यानुमो मकाराद् यदि प्रत्याहारग्रहणं लुनता पुनता अत्रापि प्राप्नोति । नानुम्ग्रहणेन शत्रन्तं विशेष्यते । किं तर्हि शतैव विशेष्यते शता यो ऽनुम्क इति । अवश्यं चैतदेवं विज्ञेयम् । आगमग्रहणे हि सतीह प्रसज्येत । मुञ्चता मुञ्चत इति । गोः पूर्वणित्त्वात्वस्वरेषु * । गोः पूर्वणित्त्वात्वस्वरेषु प्रतिषेधो वक्तव्यः । चित्रग्वग्रं शबलग्वग्रम् । सर्वत्र विभाषा गोरिति विभाषा पूर्वत्वं प्राप्नोति । नैष दोषः । एङ इति वर्तते तत्रानल्विधाविति प्रतिषेधो भविष्यति । एवमपि हे चित्रगो अग्रम् इत्यत्र प्राप्नोति । णित्त्वम् । चित्रगुः । चित्रगू । चित्रगवः । गोतो णिदिति णित्त्वं प्राप्नोति । आत्वम् । चित्रगुं पश्य शबलगुं पश्य । आ ओतो इत्यात्वं प्राप्नोति । नैष दोषः । तपरक-

---

षिद्धस्तदेतदुदाहरणम् । क्वचित्तु यदावधिषष्ठीति पाठः । उकारात् प्रभृतीति । तनादिकृञ्भ्य उरित्यतस्तत्र च वसुरन्तर्भूतः । यदीति । श्नाप्रत्ययस्य प्रत्याहारान्तर्भावात् । शता य इति । न चात्र श्ना शतुः कृत इत्यनुमेव—शता । मुञ्चतेति । शत्रन्तस्य सनुम्कत्वादिति भावः । तस्मादागमग्रहणे ऽपि शतैव विशेषणीय इति

---

प्रत्ययविशेषापेक्षस्याप्यन्तरङ्गत्वान्नुयादेशापत्तिः । किं च स्वरूपेणोपादाने विशेषापेक्षत्वकृतबहिरङ्गत्वं नेत्यर्थस्य पादः पदिति सूत्रे भाष्ये ध्वनितत्वेन सर्वथा नयादेशस्यान्तरङ्गत्वमिति वाच्यम्, अर्थसंज्ञाकृतबाहिरङ्गत्वस्य शास्त्रे ऽनाश्रयणादेतेन चतसृ इत्यपि व्याख्यातमिति दिक् । विदुष इत्यत्र विदेः शतुर्वसुरिति शत्रादेशो वसुः । शतुरनुम इत्यादि । अनुम् यः शता तदन्तात्परा नदी अजादिश्च शसादिविभक्तिरुदात्तेत्यर्थः । यदि प्रत्याहारेति । नुम्रहितशत्रन्तेत्यर्थ इत्यभिमानः । अनुम्क इति वसोरपि व्यपदेशिवद्भावेनोमत्त्वम् । आगमग्रहणे हीति । हिरप्यर्थे । तद्ग्रहणेपीत्यर्थः । कैयटे ऽनुमेव शतेति । यद्यपि शतापि प्रत्याहारान्तर्गतस्तथापि सामर्थ्याच्छ्नस्यैव प्रत्याहारान्तर्गतस्य ग्रहणमिति भावः । व्यापकत्वात्प्राथम्याच्च तनादीत्युकारेण प्रत्याहार इति तात्पर्यम् । भाष्ये ( विभाषापूर्वत्वं प्राप्नोतीति )। अत्र वार्त्तिके भाष्ये च पूर्वशब्देन तदपवादो लक्ष्यते । भाष्ये (सर्वत्रेति) चावङिति सूत्रस्याप्युपलक्षणम् । ध्वनितञ्चेदमवङ्सूत्र भाष्ये इति षष्ठे निरूपयिष्यामः । अनन्तरस्येति न्यायेन तदपवादोपि परत्वादाणमपि बाधित्वा स्यादित्याशयः । यत्तु कैयटेन तस्मादङ्इत्यादिप्रसङ्ग उक्त इत्यन्तमुक्तम् । तत्तु चिन्त्यमेव । एङः पदान्तादिति सूत्रे एङ्पदोच्चारणसत्त्वेन शङ्काया असम्भवदुक्तिकत्वात् । भाष्योक्तं तु एङ्पदाभावानुवृत्तिमजानतः शङ्कत्युक्तिसम्भवं तु । भाष्ये ( एवमपीति )। लाक्षणिकत्वादस्य गोशब्दस्य स्वतः प्रकृ-

रणात्सिद्धम् । तपरकरणसामर्थ्याद् णित्त्वात्वे न भविष्यतः । स्वर । बहुगुमान् । न गोश्वन्साववर्णेति प्रतिषेधः प्राप्नोति । करोतिपिबत्योः प्रतिषेधः * । करोतिपिबत्योः प्रतिषेधो वक्तव्यः । कुरु पिबेति । स्थानिवद्भावाल्लघूपधगुणः प्राप्नोति । उक्तं वा । किमुक्तम् । करोतौ तपरकरणनिर्देशात्सिद्धं पिबिरदन्त इति॥

अचः परस्मिन् पूर्वविधौ ॥ ५७॥ अच इति किमर्थम् । प्रश्नो विश्नः । द्यूत्वा । स्यूत्वा । आक्राष्टाम् । आगत्य । प्रश्नो विश्न इत्यत्र छकारस्य शकारः परनिमित्तकस्तस्य स्थानिवद्भावाच्छे चेति तुक् प्राप्नोति । अच इति वचनान्न भवति । नैतदस्ति प्रयोजनम् । क्रियमाणे ऽपि अज्ग्रहणे अवश्यमत्र तुगभावे यत्नः कर्तव्यः । अन्तरङ्गत्वाद्धि तुक् प्राप्नोति । इदं तर्हि प्रयोजनम् । द्यूत्वा

---

प्रत्याहारग्रहणे ऽपि स एव विशेष्यत इत्यदोषः । सर्वत्रेति । प्रकृतिभावो ऽनेन विधीयते न तु पूर्वत्वं तस्मादेङः पदान्तादतीति पूर्वत्वं प्राप्नोतीति वाच्यम् । यदा ऽत्र प्रकृतिभावस्तदायं प्रसङ्ग उक्तः । उत्तरं त्वल्विधित्वात्स्थानिवत्त्वाभावः ॥

अचः परस्मिन् ॥ अल्विध्यर्थमिदम् । तथा हि। वव्रश्चेति उरदत्वे कृते न सम्प्रसारणइति वकारस्य सम्प्रसारणनिषेधः स्थान्यलाश्रयः।एवमचितीकः सुचितीकः वहुचितीक इति चितेः कपीति दीर्घे कृते ह्रस्वान्ते ऽन्त्यात्पूर्वमिति स्थान्यलाश्रयः स्वरो ऽस्माद्वचनाद्भवति । वार्त्तानि प्रत्युदाहरणानि कानिचिच्छक्यप्रतिविधानानीति प्रश्नः । अच इति किमिति । अन्तरङ्गत्वादिति । अत एव युगपत्प्राप्त्यभावाद्वार्णादाङ्गं बलीय इत्येतदत्र नास्ति । यत्र हि युगपदाङ्गवार्णयोः प्राप्तिर्यथा कारकमिति वृद्धियणादेशयोः यथा च किरतः किरन्तीति यणित्त्वयोस्तत्रैतदुपतिष्ठते । तत्रायं यत्नः । च्छ्वोः शूडिति तकारच्छकारयोः समुदायनिर्देशात्सतुक्शकारः स्थानी समुदायनिर्देशसामर्थ्याच्चालो ऽन्त्यस्येत्यस्यानुपस्थानमनर्थकत्वात् । एवं न चङो ङित्करणं

---

तिभावाप्राप्तावपि स्थानिवत्त्वेन प्राप्नोतीति तत्प्रतिषेधो वक्तव्य इत्यर्थः । यदि तु ओत्सूत्रभाष्योक्तरीत्या वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषा प्रवर्त्तते तदेदं वचनं न कार्यम् । एङो लाक्षणिकत्वात् । तदंशे स्थानिवत्त्वानपेक्षणातिदेशविषये तदप्रवृत्तिरित्यपि नेत्याहुः । भाष्ये ( तपरकरणसामर्थ्यादिति ) । एवञ्च गस्याविवक्षितत्वेनाल्विधित्वात् स्थानिवत्त्वाभाव इति भावः ॥ ५६ ॥

अचः पर ॥ पूर्वेणैव सिद्धे इदं किमर्थमत आह अलिति । उरदत्वे इति । अङ्गाक्षिप्तप्रत्ययपरत्वनिमित्तके इति शेषः । लिट्यभ्यासस्येत्युभयेषां ग्रहणाद् हलादिः शेषात्प्राक् सम्प्रसारणे वस्य सम्प्रसारणात्तन्निषेधाच्च प्राङ् नित्यत्वात्परत्वाच्चोरदत्वमिति भावः । एवमचितीनि । उत्तरपदस्याधिकृतस्य ह्रस्वेन विशेषणात्तदन्तग्रहणे लब्धे ह्रस्वान्त इत्यत्रान्तग्रहणेन भूतपूर्वगतेराश्रयणेनेदं साधयितुं शक्यमिति कश्चित् तन्न । तदभावे ह्रस्वादावित्यर्थापत्तेः । ह्रस्वान्ते इत्यत्र नञ्सुभ्यामित्यनुवृत्तावपि बहोर्नञ्वदिति वचनाद्बहुचितीक इत्युदाहृतम् । प्रत्युदाहरणविचिन्ता वृत्तिकाराणामुचिता न तु भाष्यकृतोत आह वार्त्तानीति । वृत्त्युदाहृतानि । भाष्ये ( शकारः । ) । च्छ्वोः शूडिति विहितः । अत एवेति । प्रत्ययानपेक्षत्वान्तरङ्गत्वेन तुकः शादेशात् प्राक् प्रवर्त्तनादेवेत्यर्थः । अत्रान्तरङ्गत्वं प्रथमप्रवृत्तिकत्वरूपम् । युगपदिति । बलाबलविचारस्य प्रतियोगिसापेक्षत्वेन तत्रैव सम्भवादिति भावः । यथेति । कारकः किरतीत्यादौ । अन्तरङ्गत्वात्पूर्वमकादेशविकरणादेरिति भावः । सतुगिति । यद्यप्यकृतव्यूहपरिभाषया तुग्व्यावृत्तिः कर्त्तुं शक्या तथापि तदभावस्यापि तुङ्निर्देशो ज्ञापकः । न च वाञ्छतेः क्विपि वाञ्छादित्यादौ शाभावाय सतुक्कनिर्देश इति वाच्यम्, शादेशयोग्यप्रत्ययपरस्य वाञ्छतेः प्रयोगाभावात् । अत एव सतुकनिर्देशसामर्थ्यात्

स्यूत्वा। वकारस्य ऊठ् परनिमित्तकः। तस्य स्थानिवद्भावादचीति यणादेशो न प्राप्नोति। अच इति वचनाद्भवति। नैतदप्यस्ति प्रयोजनम्। स्वाश्रयमत्राच्त्वं भविष्यति। अथवा यो ऽत्रादेशो नासावाश्रीयते यश्चाश्रीयते नासावादेशः। इदं तर्हि प्रयोजनम्। आक्राष्टाम्। सिचो लोपः परनिमित्तकस्तस्य स्थानिद्भावात् षढोः कस्सीति कत्वं प्राप्नोति। अच इति वचनान्न भवति। एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत् पूर्वत्रासिद्धे न स्थानिवदिति। इदं तर्हि प्रयोजनम्। आगत्य। अभिगत्य। अनुनासिकलोपः परनिमित्तकस्तस्य स्थानिवद्भावाद्ध्रस्वस्येति तुङ् न प्राप्नोति। अच इति वचनाद्भवति। अथ परस्मिन्निति किमर्थम्। युवजानिः। वधूजानिः। द्विपादिका। वैयाघ्रपद्यः। आदीध्ये। युवजानिः वधूजानिरिति जायाया निङ् अपरनिमित्तकः। तस्य स्थानिवद्भावाद्वलीति यलोपो न प्राप्नोति। परस्मिन्निति वचनाद्भवति। नैतदस्ति प्रयोज-

---

विश्न इत्यत्र गुणनिषेधार्थमर्थवद्भवति। स्वाश्रयमिति। नह्यतिदेशेन स्वाश्रया धर्मा निवर्त्यन्ते। यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति क्षत्रियस्य क्षत्रियधर्माः। वाय्वोरित्यादौ तु सत्यपि स्वाश्रये वल्त्वे बहिरङ्गत्वाद्यणो ऽसिद्धत्वाद्वलिलोपाभावः। द्यूत्वेत्यत्र तु नाजानन्तर्य इति असिद्धत्वनिषेधाद् यण् प्रवर्तते। ऊठः स्थानिवत्त्वाद्यलोपः कथं नाशङ्कित इति चेत्, या नादिष्टादच इत्येवमर्थस्याऽज्ग्रहणस्य स्थापयिष्यमाणत्वात्। यो ऽत्रादेश इति। समुदायरूप ऊठ्। यश्चाश्रीयतइति। यण्विधावच्। नासावादेश इति। समुदायस्यादेशत्वात्। न चादेशस्यावयव आदेशो गृह्यते। मुख्यसम्भवे गौणग्रहणस्यायुक्तत्वात्। ख्याआदीनां तर्ह्यनुबन्धवियुक्तानां धातुसंज्ञा आदेशावयवत्वान्न प्राप्नोति। घस्लादेशस्य लृदित्त्वादङ्योज् ज्ञापकाद्धातुकार्याणि भविष्यन्तीत्यदोषः। युवजानिरिति। अव्युत्पन्नत्वादुणादीनां जाशब्दस्याकारलोपो न भवति। अन्यथा ऽऽकारस्य निङि कृते यलोपे च निङः स्थानि-

---

सर्वादेशः श इति षाष्ठभाष्योक्तं सङ्गच्छते। ननु सतुङ्निर्देशेऽपि तनाङ्गविशेषणात्तदन्तविधौ अलोन्त्यस्येत्यस्यैव स्यादत आह समुदायेति। अनर्थकत्वादिति। नानर्थक इति निषधादिति भावः। सतुक्कनिर्देशे लिङ्गमाह एवञ्चेति। नहीति। अयोगवाहेषु हल्त्वाच्त्वयोः समावेशदर्शनेन तयोरविरोध इति भावः। ननु स्वाश्रयानिवृत्तौ वाय्वोरित्यत्र दोषो ऽत आह वाय्वोरितीति। असिद्धत्वनिषेधादिति। ऊठ इति शेषः। बहिरङ्गपरिभाषाऽनित्यत्वादित्यन्ये। योऽनादिष्टादच इति। अज्ग्रहणं सिद्धान्तरीत्या स्थान्यपेक्षया पूर्वत्वमाश्रीयत इत्यत्र तात्पर्यम्। स्थापयिष्यमाणत्वादिति। व्याख्यास्यमानत्वादित्यर्थः। अत्र स्वाश्रयकार्याभावातिदेशस्यापि सिद्धान्तयिष्यमाणत्वाद्भाष्ये परिहारान्तरम्। (अथवा योऽत्रेति)। अयं भावः। अभावातिदेशोपि स्थानिप्रयुक्तं भवत्यादेशप्रयुक्तं नेत्यर्थ इति तदाह समुदायेति। यथा सूत्रे सानुबन्धकग्रहणे तस्यानल्विधित्वं स्थानित्वञ्च नालः तथा आदेशत्वमपि सूत्रोपात्तस्यैवेति भावः। एवञ्च यण् नादेशप्रयुक्तः किं तु तदवयवप्रयुक्त इति नासौ वार्यत इति तात्पर्यम्। आदेशो गृह्यत इति। आदेशे इति गृह्यते इत्यर्थः। प्राप्नोतीति। स्थानित्वेनेति शेषः। भाष्ये (आगत्येति) मलोपस्यापि ह्रस्वस्य पित्कृत्प्रत्ययपरत्वसंपादकतया तुग्विधावाश्रयणमित्यर्थः। अभावातिदेशे चैतत्फलम्। अतएवभावातिदेशे पटयतीत्यादौ वृद्धिर्नेत्यग्रेभाष्यसंगच्छते। ननु स्वाश्रयवल्त्वादिना यलोपसिद्धावपि आलोपः स्थानिवत्त्वेन स्यादिति तद्वारणाय परग्रहणमाश्यकमेवेत्यत आह अव्युत्पन्नत्वादिति। आकारलोपइति। आतो लोप इत्यनेन। जनरौणादिके यकि ये

नम् । स्वाश्रयमत्र वत्त्वं भविष्यति । अथवा योऽत्रादेशो नासावाश्रीयते यश्चा-श्रीयते नासावादेशः । इदं तर्हि प्रयोजनम् । द्विपदिका त्रिपादकी । पादस्य लोपो ऽपरनिमित्तकस्तस्य स्थानिवद्भावात्पद्भावो न प्राप्नोति । परस्मिन्निति वचनाद्भवति । एतदपि नास्ति प्रयोजनम् । पुनर्लोपवचनसामर्थ्यात् स्थानिवद्भावो न भविष्यति । इदं तर्हि प्रयोजनम् । वैयाघ्रपद्यः । ननु चात्रापि पुनर्वचनसामर्थ्यादेव भविष्यति । अस्ति ह्यन्यत्पुनर्लोपवचने प्रयोजनम् । किम् । यत्र भसंज्ञा न, व्याघ्रपात् श्येनपादिति । इदं चाप्युदाहरणम् । आदीध्ये आवेव्ये । इकारस्यैकारो न परनिमित्तकः । तस्य स्थानिवद्भावाद् यीवर्णयोर्दीधीवेव्योरिति लोपः प्राप्नोति । परस्मिन्निति वचनान्न भवति ॥ अथ पूर्वविधाविति किमर्थम् । हे गौः । बाभ्रवीयाः । नैधेयः । हे गौरित्यौकारः परनिमित्तकस्तस्य स्थानिवद्भावादेङ्ह्रस्वात्संबुद्धेरिति लोपः प्राप्नोति । पूर्वविधाविति वचनान्न भवति । नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति न सम्बुद्धिलोपे स्थानिवद्भावो भवतीति । यदयमेङ्ह्रस्वात्संबुद्धेरित्येङ्ग्रहणं करोति । नैतदस्ति ज्ञाप-

---

वद्भावात्प्रत्ययत्वादाकारलोपः स्यात् । न चासिद्धवदत्राभादित्याकारलोपे कर्तव्ये ऽसिद्धत्वमात्वस्य । व्याश्रयत्वात् । पुनरिति । यस्येतिलोपे सिद्धे पादशतस्येत्यत्र पुनर्लोपवचनं स्थानिवत्त्वनिषेधार्थम् । पुनर्लोपवचने सति लुप्यत एवाकारः कार्ये नाऽऽश्रीयते इत्यर्थः । ननु चाऽत्रापीति । यस्येति लोपे सिद्धे पादस्य लोप इति पुनर्लोपवचनादित्यर्थः । आदीध्य इति । इट एत्वे कृते लोपः प्राप्नोति विकरणश्च तत्र नित्यत्वाद्विकरणस्तस्य लुक् तस्य स्थानिवद्भावेन एरनेकाच इति यण् न प्रवर्तते । क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेष्विति स्थानिवत्त्वनिषेधात् । यदयमिति । अग्ने वायो इति स्थानिवत्त्वात् ह्रस्वादित्येव लोपः सिद्धः । खट्वे माले इत्यादौ हल्ङ्याब्भ्य

---

विभाषेत्यात्वे दापि तेनैकदेशे तस्य पूर्वान्तवद्भावादार्धधातुकत्वेन युवतिशब्देन बहुव्रीहौ निङादेशे यलोपे ऽवशिष्टस्य स्थानिवत्त्वेनार्धधातुकत्वादिसत्वात् यातिरितिवदिति भावः । ननु आभीयत्वेनात्वस्यासिद्धत्वाल्लोपो नेत्यत आह नचेति । व्याश्रयत्वादिति । ये आत्वम् आस्थानिके निङि लोप इत्यात्वनिमित्तापेक्षया न्यूननिमित्तकत्वात् व्याश्रयता । भाष्ये (द्विपदिकेति) । द्वौ द्वौ पादौ ददातीति तद्धितार्थेति समासे पादशतस्येति वुन्लोपौ । परस्मिन्नितीति । सहविधाने परनिमित्तकत्वव्यवहाराभावादित्यर्थः । पुनर्लोपवचनेन यथा स्थानिवत्त्वाभावस्तथाऽभिनयति पुनर्लोपेति । भाष्ये वैयाघ्रपद्ये व्याघ्रस्येव पादावस्येति बहुव्रीहौ पादस्य लोप इति लोपे गर्गादित्वाद्यञि पादः पदिति पद्भावे नव्याभ्यामित्यैच् । ननु स्थानिवत्त्वादित्ययुक्तन्तेन विनापि टित एत्वात् प्राग्यीवर्णयोरित्यस्य परत्वात्प्राप्तेरत आह इट इति । अन्तरङ्गत्वादिति भावः । नित्यत्वादिति । लोपस्तु विकरणे कृते तेन व्यवधानान्न प्राप्नोतीति भावः । यद्यपि लुकि इलोपप्राप्तेः सोऽपि नित्यः तथापि विकरणसंप्रसारणमात्राभिप्रायणेदम् । ननु परस्मिन्नित्यस्याभावे शब्लुकः स्थानिवत्त्वेन एरनेकाच इति यण् स्यात्तत्र च कृते यलोपे स्थानिवत्त्वनिषेधेन इकारपरत्वाभावान्नलोपप्राप्तिर्यलोपे लोपरूपाजादेश एव नेति नियमस्तु अनिमित्तभूताजादेशविषय एवास्तु परस्मिन्निति च न कार्यमत आह एरनेकाच इति । एतेन शब्लुकः स्थानिवत्त्वेन व्यवधानात् यीवर्णयोरित्यस्य न प्राप्तिरित्यपास्तम् । ह्रस्वा

कम्। गोऽर्थमेतत् स्यात्। यत्तर्हि प्रत्याहारग्रहणं करोति इतरथा ह्यो ह्रस्वादित्येव ब्रूयात्। इदं तर्हि प्रयोजनम्। बाभ्रवीयाः। माधवीयाः। वान्तादेशः परनिमित्तकस्तस्य स्थानिवद्भावाद्धलस्तद्धितस्येति यलोपो न प्राप्नोति पूर्वविधाविति वचनाद्भवति। एतदपि नास्ति प्रयोजनम्। स्वाश्रयमत्र हल्त्वं भविष्यति। अथवा योऽत्रादेशो नासावाश्रीयते यश्चाऽऽश्रीयते नाऽसावादेशः। इदं तर्हि प्रयोजनम्। नैधेयः आकारलोपः परनिमित्तकस्तस्य स्थानिवद्भावाद् द्व्यज्लक्षणो ढग् न प्राप्नोति पूर्वविधाविति वचनाद्भवति। अथ विधिग्रहणं किमर्थम्। सर्वविभक्त्यन्तस्समासो यथा विज्ञायेत। पूर्वस्य विधिः पूर्वविधिः। पूर्वस्माद्विधिः पूर्वविधिरिति। कानि पुनः पूर्वस्माद्विधौ स्थानिवद्भावस्य प्रयोजनानि। बेभि-

---

इति। नयत्यादीनां विजन्तानां विचि गुणे ने लो इति कथं संबुद्धिलोप इति चेन्नैतेभ्यो विच् दृश्यते। बाभ्रवीया इति। सन्निपातपरिभाषाया अनित्यत्वाद्यशब्दसन्निपातनिमित्तो वान्तादेशो यलोपनिमित्ततां प्रतिपद्यते। यो ऽत्रादेश इति। वान्तः समुदायः। यश्चेति। लोपं प्रति निमित्तत्वेन वकारः। नैधेय इति। स्थानिवद्भावाद् ऽज्वत्वव्यपदेशे सति विरोधात् स्वाश्रयं द्व्यच्त्वं न लभ्यते। यदविरुद्धं स्वाश्रयं तदतिदेशेन न बाध्यते विरुद्धं तु बाध्यत एव। संख्याकृतस्तु व्यपदेशः परस्परपरिहारेण लोके स्थितः। नहि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते। अथेति। अत्रः परस्मिन् पूर्वस्येत्येवं षष्ठ्या विद्ध्यर्थं आत्तप्तः पूर्वस्य कार्ये कर्तव्य इति, कार्यश्च विधिरिति प्रश्नः। बेभिदितेति। बेभिद्यशब्दात्तृच्। नित्यत्वादल्लोपयलोपौ। तत एकाच इतीट्प्रतिषेधः प्राप्नोति। उपदेशग्रहणं द्वयोरपि विशेषणम्। उपदेश एकाच उपदेशेऽनुदात्तादिति। द्विः प्रयोगश्च द्विर्वचनम्। अल्लोपस्य तु स्थानिवत्त्वे व्यवधानाद-

---

दित्येवेति। सेस्मतोशब्दादावप्येवम्। यत्र स्थानिवत्त्वेऽपि न ह्रस्वान्तता तत्राह खट्व इति। लोपः सिद्ध इत्यनुषज्यते। स्थानिवत्त्वादेवैकाराकारप्रश्लेषेऽपि न दोषः। नैतेभ्य इति। एवं दीर्घैकारान्तप्रकृतिकसे इत्यादीनामेकाच्चरकोशबोधितस्य रा इत्यस्य च संबुद्धावभिधानाभावो बोध्यः। अत्रेदं चिन्त्यम्। ओग्रहणस्य भाष्ये कृतत्वेन दीर्घौकारान्तप्रकृतिकओकारान्तानभिधाने मानाभावः। गोर्थमिति भाष्यन्तु ओशब्दस्य सर्वसंमततया ओकारान्तोपलक्षणतया व्याख्येयमेव सर्वैः। किं च संबुद्धावनभिधानेनोपपत्तौ सर्वथा विजभावकल्पना कुत इति। अपरे तु पूर्वविधावित्यस्य भावे ऽयं विचारः। तत्र दीर्घान्तप्रकृतिक एकारान्ते स्थानिवत्त्वेनेङो ऽभावात् विनातिदेशबाधं प्रत्याहारग्रहणचारितार्थ्यस्य वक्तुमशक्यत्वादनभिधानकल्पने न मानम्। नचेदं भाष्यमभावातिदेशानङ्गीकारेणैव प्रवृत्तमिति वाच्यम्। अथवा योऽत्रादेश इति भाष्येण तदाश्रयणात्। आगत्य वैयाघ्रपद्य इत्यादेः प्रत्युदाहरणेन तदाश्रयणाच्चेत्याहुः। भाष्ये (गोर्थमेतास्तीति) अनिष्टलोपसिद्ध्यर्थमेव तत्। स्थानिवद्भावेनैङ्त्वाद्विति भावः। बाभ्रवीयाइति। मधुबभ्रोरिति। यञि वृद्धावोर्गुणे विवृद्धाच्छे यस्येति लोपे हलस्तद्धितस्येति सूत्राद्धल इत्यनुवर्त्तमाने आपत्यस्येति सूत्रेण यलोपः। ननु तत्र सिद्धान्तेऽपि यनिमित्तो वान्तादेशः कथं यलोपनिमित्तं स्यादत आह संनिपातेति। नैधेय इति। निपूर्वाद्धाञः किप्रत्यये आतो लोपे गतिसमासे द्व्यचश्च इतश्चानिञ इति ढक्। ननु च बेभिदितेत्यत्राल्लोपयलोपाभ्यां प्रागेव परत्वादिट्। न च तदा प्रतिषेधप्राप्तिरत आह नित्यत्वादिति। तत इत्यनेनेटो ऽनित्यत्वमुक्तम्। ननु कृतद्विर्वचनं नैकाजत आह उपदेशेति। ननु भिदूभिद् इति द्विर्वचनरूपादेशस्य न भिद्उपदेश उपदेश इति कथमुपदेशे एकाच्त्वमत आह द्विःप्रयोगश्चेति। यलोपेवशिष्टस्य बेभिदित्यस्य उपदेश इति भावः। परे तु एकाचोपदेशे इत्यत्र एकाचो द्वे इतिसूत्रस्थभाष्यरीत्या विहितविशेषणाश्रयणादङ्गसंज्ञायामल्लोपस्य स्थानिवत्त्वेन सूत्राद्विनिरूपिताङ्गत्वस्य बेभिदित समुदायेऽभावाच्च पञ्चमीसमासं

दिता चेच्छिदिता । माथितिकः । अपीपचन् । वेभिदिता चेच्छिदितेति अकारलोपे कृते एकाज्लक्षण इट्प्रतिषेधः प्राप्नोति । स्थानिवद्भावान्न भवति । माथितिक इसकारलोपे कृते तान्तात्क इति कादेशः प्राप्नोति । स्थानिवद्भावान्न भवति । अपीपचन्नित्येकादेशे कृते अभ्यस्ताज्झेर्जुस् भवतीति जुस्भावः प्राप्नोति स्थानिवद्भावान्न भवति । नैतानि सन्ति प्रयोजनानि । प्रातिपदिकनिर्देशोऽयं प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति न कां चित्प्राधान्येन विभक्तिमाश्रयन्ति । तत्र प्रातिपादिकार्थे निर्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते सा सा आश्रयितव्या । इदं तर्हि प्रयोजनम् । विधिमात्रे स्थानिवद्भावो यथा स्यात् । अनाश्रीयमाणायामपि प्रकृतौ वाय्वोरध्वर्य्वोः, लोपो व्योर्वलीति यलोपो मा भूदिति । अस्ति प्रयोजनमेतत् । किं तर्हीति ।। अपरविधाविति तु वक्तव्यम् । किं प्रयोज-

ट्प्रतिषेधाभावः । माथितिक इति । यदा ठस्येक इति सघातग्रहणं तदा स्थानिवद्भावादिकस्य कादेशः प्राप्नोति वर्णनिर्देशे त्वाल्विधित्वात् कादेशस्याऽप्रसङ्गः सान्निपातपरिभाषां चानाश्रित्यैतदुक्तम् । अपीपचन्निति । झेरितश्चेतीकारलोपे कृते एकदेशविकृतमनन्यवद्भवतीति झिरेवाऽयम् । तवान्तादेशे कृते चङकारस्य च पररूपे कृते तस्यादिवद्भावाज्जुस् प्राप्नोति । स्थानिवद्भावे तु णिलोपस्य पररूपस्य च व्यवधानात् न भवति । ननु पूर्वस्मादपि विधौ स्थानिवद्भावे कथं हे गौरित्यादि सिध्यति । उच्यते । अचो यः पूर्वस्तस्मान्निमित्तत्वेनाऽऽश्रितादित्याश्रयणात् । तथाहि । गोशब्दे ओकारात् पूर्वो गकारो न च तस्माद्विधिरस्ति । विधिमात्र इति । अचः परस्मिन् पूर्वस्येत्यनेन स्थानिवद्भावे विहिते पुनर्विधाविति वचनं नियमार्थं स्थानिवदेव यथा स्यात् मा भूत् स्वाश्रयमित्यर्थः । अनाश्रीयमाणायामिति । कार्ये निमित्तत्वेने-

विनाऽपि न तत्रानुपपत्तिरित्याहुः । वर्णनिर्देशे त्विति । स्थानिन्यकारो न विवक्षित इति वर्ण एव तत्र स्थानी ठगादिप्रत्ययेष्वप्यकारस्तथैव आदेशे च विवक्षित इति ठस्याभावात्प्राप्तिरेव नेति भावः । संनिपातेति । इदञ्च ठक्छसोश्चेति वार्त्तिकभाष्ये स्पष्टम् । न भवतीति । नचापीपचन्नित्यत्र न पदान्तेति निषधात् स्थानिवद्भावो दुर्लभ इति वाच्यम् । पदचरमावयवे कर्त्तव्ये आदेशस्य पदान्तरस्थस्यैव ग्रहणादत्र तदप्राप्तेः । पदे ऽन्त इत्यर्थस्य भाष्ये वक्ष्यमाणत्वेनैतदर्थलाभः । केचित्तु पूर्वोत्तरसाहचर्येणाभ्यस्तस्य भावरूपादेशानपहृतविकरणकस्य ग्रहणादत्र प्रत्यैषिषन्नित्यादौ च न दोष इत्याहुः । वस्तुत ईदृशसाहचर्याश्रयणापेक्षया पञ्चमीसमासाश्रयणे गौरवाभाव इत्यपीपचन्निति तदुदाहरणमेव बोध्यम् । नच तस्मादिति । निमित्तत्वेनाश्रितादिति शेषः । वस्तुतो निमित्तत्वेनाश्रितादित्यव्यवधानोपलक्षणम् । नच तस्मादिति । ओकारेण व्यवधानादित्यर्थः । तदंशे निर्दिष्टपरिभाषाबाधे मानाभावादिदमेव युक्तम् । निमित्तत्वेनेत्यादेः शब्दमर्यादयाऽलाभाच्च । अतएव । तथाहि गोशब्देत्यादिसार्थकमन्यथोक्तार्थस्योपपादनानपेक्षत्वेन तद्वैयर्थ्यं निमित्तत्वेनाश्रितादित्येतद्ग्रहितस्य युक्तत्वञ्चेत्यलं । ननु विधिग्रहणे कृतेऽपि कथं स्थानिवत्त्वेन स्वाश्रयनिवृत्तिरत आह अच इति । अचः परस्मिन्पूर्वस्येको योगः । पूर्वेति लुप्तविभक्तिकम् । विधाविति द्वितीयः । तेन स्थानिवदेवेति नियमाश्रयणमिति भावः । भाष्ये ( विधिमात्रे ) इत्यस्य विवरणमनाश्रीयमाणायामपि प्रकृताविति स्थानिनीत्यर्थः । वाय्वोरिति । अत्र न बहिरङ्गासिद्धत्वम् । उभयोर्वर्णनिमित्तत्वेन समत्वात् । पूर्वं पूर्वमन्तरङ्गमित्यपि युगपत्प्राप्तौ पूर्वमन्तरङ्गप्राप्तिनियामकं न तु जातस्यासिद्धत्वे इति भावः । भाष्ये स्वशब्देन स्थान्यादेशश्चोच्यते । अपरविधाविति तु वक्तव्यमित्यारभ्य कथं यत्र स्वविधौ स्थानिवद्भावस्य प्रयो-

नम् । स्वविधावपि स्थानिवद्भावो यथा स्यात् । कानि पुनः स्वविधौ स्थानिवद्भावस्य प्रयोजनानि । आयन् आसन् धिन्वन्ति कृण्वन्ति । दध्यत्र । मध्वत्र । चक्रतुः चक्रुः । इह तावदायन्नासन्निति । इणस्त्योर्यण्लोपयोः कृतयोरनजादित्वादाडजादीनामिति आड् न प्राप्नोति स्थानिवद्भावाद्भवति । धिन्वन्ति कृण्वन्ति । यणादेशे कृते वलादिलक्षण इट् प्राप्नोति स्थानिवद्भावान्न भवति । दध्यत्र मध्वत्र । यणादेशे कृते संयोगान्तस्य लोपः प्राप्नोति स्थानिवद्भावान्न भवति । चक्रतुः चक्रुः । यणादेशे कृते अनच्कत्वाद् द्विर्वचनं न प्राप्नोति स्थानिवद्भावाद्भवति । यदि तर्हि स्वविधावपि स्थानिवद्भावो भवति, द्राभ्यां देयं लवनम् । अत्रापि प्राप्नोति । द्राभ्यामित्यत्रात्वस्य स्थानिवद्भावाद् दीर्घत्वं न प्राप्नोति । देयमिति ईत्वस्य स्थानिवद्भावाद् गुणो न प्राप्नोति । लवनमित्यत्र गुणस्य

---

त्यर्थः । आयन्निति । अजादेरेवाड्विधानात्स्वविधिरा‍ट् । दध्यत्रेति । पूर्वत्रासिद्धे न स्थानिवादित्येतदत्र नास्ति । तस्य दोषः संयोगादिलोपलत्वणत्वेष्वित्यत्र संयोगादिलोपस्य संयोगोपलक्षितलोपोपलक्षणार्थत्वात् । पदान्तविधिं प्रति नेत्ययमपि प्रतिषेधोऽत्र नास्ति । पदान्ते विधातव्ये स प्रतिषेधो न च लोपोऽभावात्प्रकृत्वात्पदान्तः । चक्रतुरिति । अत्र साच्कस्य द्विर्वचनमिति स्वविधिर्भवति । ततश्च द्विर्वचनेऽचीत्येतन्न वक्तव्यं भवति । नन्वपरविधावित्युच्यमाने कथं वेभिदितेत्यादयः संगृह्यन्ते । उच्यते । निमित्तापेक्षापरत्वावज्ञानात् । तथाहि । वेभिदितेत्यत्राकारलोपस्य निमित्तमार्द्धधातुकं न च तस्मात्परस्य विधिः किं तर्हि तस्यैवेति सिद्धः स्थानिवद्भावः । एवं माथितिकः । अपापचन्नित्यत्र बोद्धव्यम् । हे गौरित्यत्र तु स्थानिवद्भावः प्राप्त एङिति प्रत्याहारग्रहणान्न भवति । वाभ्रवीया इत्यत्र योऽत्रादेशो नासावाश्रीयते इति परिहारः । नैधेय इत्यत्र तु निमित्तात्परस्य ढको विधिरिति स्थानिवत्त्वाभावः ।

---

जनानीत्यन्ता एकदेशयुक्तिः । आयन्नासन्नित्यनयोरसिद्धवत्सूत्रेण सिद्धः । धिन्वन्तीत्यावावुकारशब्दस्यार्धधातुकत्वस्याल्धर्मत्वेन तस्य दुर्लभत्वादिटोऽप्राप्तेः । सिद्धान्तिनापि भावसाधनविधिशब्दस्याप्युपादानमत्रेति सिद्धान्तं बोधयितुं तन्नोक्तम । भाष्ये । ( धिन्वन्तीत्यादि ) । यद्यप्यङ्गात्परस्य वलादेराडित्यर्थात्पूर्वविधावित्युक्तावपि पञ्चमीसमासेनेदं सिध्यति तथापि अङ्गसंज्ञानिमित्तस्येत्यर्थ इत्यभिप्रायेणदमित्याहुः । उपलक्षणार्थस्यादिति । इदमचस्यमन्यप्रयोजनमात्रं नत्वयं सिद्धान्त इति बोध्यम् । अत एवादिपदं चरितार्थं यणः प्रतिषेधो वाच्य इति वार्त्तिकमनाश्रित्येदमिति तत्त्वम । पदान्तं विधातव्यइति । पदचरमावयवे कर्त्तव्ये इत्यर्थः । ततश्चेति । एवञ्च तत्सूत्राकरणलाघवानुरोधेनापरविधावित्येव वक्तव्यमिति भावः । निन्यतुरित्यादिसिद्धये तस्यावश्यकत्वाच्चिन्त्यमिदम् । भाष्ये तु संभवमात्रेणेदमुदाहृतम । उदरस्त्वमपि स्थानिवद्भावेनैव सुलभं लक्ष्यविशेषे लक्ष्यानुरोधादयमपि रूपातिदेश इति वा कैयटाशयः । स्थान्यादेशयोरन्यतरापेक्षया परत्वमाश्रित्य शङ्कते नान्वति । निमित्तेति । निमित्तञ्च यस्य स्थानिवत्त्वन्तदीयं ग्राह्यम् । किन्त्विदमयुक्तम् । एतन्न्यासखण्डनायाग्रे भगवता निमित्तस्यावधितया वक्ष्यमाणतया तदनाश्रयेणैवेत तु भाष्यप्रवृत्तेः । अपरविधाविति न्यासेपि पञ्चमीसमासस्य वक्तुं शक्यत्वेन तत्सङ्ग्रह इत्युचितम । वार्त्तिकं तु स्वविधिसङ्ग्रहार्थमिति स्पष्टमेव । न चात्र पञ्चमीसमासे हेगौरित्यत्र स्वस्मात्परस्य विधावपि स्थानिवत्त्वं स्यादिति वाच्यम् । पञ्चमीसमासानित्यत्वेनादोषात् । प्रत्याहारग्रहणादिति । संस्मृतो इत्यादीनामनभिधानाश्रयेणैतदुक्तम् । नहि वाभ्रवीया इत्यत्रापत्यस्येति लोपेऽत्रादेशस्य स्थानिवत्त्वं स्यात् । अथा-

स्थानिवद्भावादवादेशो न प्राप्नोति। नैष दोषः। स्वाश्रया अत्रैते विधयो भविष्यन्ति। तर्त्ताहि वक्तव्यमपरविधाविति। न वक्तव्यम्। पूर्वविधावित्येवं सिद्धम्। कथम्। न पूर्वग्रहणेनादेशो ऽभिसम्बध्यते। अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद्भवति कुतः पूर्वस्यादेशादिति। किन्तर्हि निमित्तमभिसम्बध्यते। अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद्भवति कुतः पूर्वस्य निमित्तादिति। अथ निमित्ते ऽभिसम्बध्यमाने यत्तदस्य योगस्य मूर्द्धाभिषिक्तमुदाहरणं तदपि संगृहीतं भवति। किं पुनस्तत्। पट्व्या मृद्व्येति। बाढं संगृहीतम्। ननु च ईकारयणा व्यवहितत्वान्नाऽसौ निमित्तात् पूर्वो भवति। व्यवहिते ऽपि पूर्वशब्दो वर्तते। तद्यथा। पूर्वं मथुरायाः पाटलिपुत्रमिति। अथवा पुनरस्त्वादेश एवाभिसम्बध्यते। कथं यानि स्वविधौ स्थानिवद्भावस्य प्रयोजनानि। नैतानि सन्ति। इह तावदायन् आसन्। धिन्वन्ति कृण्वन्तीति। अयं विधिशब्दो ऽस्त्येव कर्मसाधनो विधीयते विधिरिति। अस्ति भावसाधनः। विधानं विधिरिति। तत्र कर्मसाधनस्य विधिशब्दस्योपादाने न सर्वमिष्टं संगृहीतमिति कृत्वा भावसाधनस्य विधिशब्दस्योपादानं विज्ञास्यते। पूर्वस्य विधानं प्रति पूर्वस्य भावं प्रति पूर्वः स्यादिति स्थानिवद्भवतीति। एवमाद्भविष्यति। इट् च न भविष्यति। दध्यत्र मध्वत्र चक्रतुश्चक्रुरिति परिहारं वक्ष्यति। कानि पुनरस्य योगस्य प्रयोजनानि। स्तोष्या-

---

स्वाश्रया इति। विधिग्रहणं स्वाश्रयनिवृत्त्यर्थं व्याख्यातमिति स्वाश्रय इत्यन्यथा व्याख्यायते शब्दानां स्वं लक्षणं तेन ज्ञापकाश्रया इत्यर्थः। द्वयोरेकस्य डतरच् देयमृणो किरतौ लवनइत्यादि ज्ञापकमादेशाश्रयकार्यभावस्य। निमित्तमिति। आयन्नित्यादिषु च निमित्तात् पूर्वस्य विधिरिति सिद्धः स्थानिवद्भावः। मूर्द्धाभिषिक्तमिति। सर्ववृत्तिपूदाहृतत्वात्। पटु ई आ इति स्थिते परयणादेशनाऽऽकारस्य व्यवधानात्प्रश्नः। नन्विति। व्यवहिते ऽपीति। पूर्वशब्दस्य साक्षान्निर्देशात्तस्मिन्निति निर्दिष्टइत्यस्यानुपस्थनादिति भाव। भावसाधनस्येति। भावसाधन एव विधिशब्दो व्यापकत्वादाश्रीयते पूर्वस्येति च षष्ठी सम्बन्धसामान्ये विज्ञायते। इट् च नेति। विधि-

---

देशनिमित्तयादिप्रत्ययसंबन्धिन एव विधेः सत्वात्। न च नपदान्तेति निषेधः। स्वरदीर्घयलोपेषु लोपाजादेशस्यैव स्थानिवत्त्वनिषेधादत आह बाभ्रवीया इति। ढको विधिरिति। विधिशब्दो भावसाधनः संबन्धसामान्यषष्ठ्या समास इति भावः। द्वयोरेकस्येत्यादिनिर्देशात् स्वविधौ स्थानिवत्त्वमनित्यमिति बाभ्रवीयैनेधयोर्न दोष इति परे। भाष्ये ऽथेत्यादिना सङ्गृहीतमित्यन्तेन काक्वा प्रश्नः। तदेवाह व्यवधानात्प्रश्न इति। साक्षादिति। एवञ्च उत्तरस्येत्यस्यानुपस्थाने तदङ्गं निर्दिष्टग्रहणमपि नोपतिष्ठत इति भावः। तस्मिन्निति। तस्मादिति सूत्रे तस्मिन्नित्यतोऽनुवर्त्तमानस्य निर्दिष्टस्येत्यर्थः। वेरग्रहणाच्च लिङ्गादच्च सूत्रे तदनुपस्थितिर्बोध्या। संबन्धसामान्ये इति। न तु कर्मणीत्यर्थः। तेन सर्वलक्ष्यसिद्धिरिति भावः। भाष्ये (पूर्वः स्यादिति) पूर्वो न स्यादित्यस्याप्युपलक्षणम्। तदाह स्वाश्रयनिवारणार्थमिति एवञ्च प्रकृतसूत्रे उभयोरपि ग्रहणं बोध्यम्। कैयटे भावसाधन एवेति। एवकारोऽप्यर्थ इति केचित्।

म्यहं पादिकमौदवाहिं ततः श्वोभूते शातनीं पातनीं च। नेताराबाऽऽगच्छतं धारणिं रावणिं च ततः पश्चात्स्रंस्यते ध्वंस्यते च ॥ १ ॥ इह तावत् पादिकमौदवाहिं शातनीं पातनीं धारणिं रावणिमिति। अकारलोपे कृते पद्भाव, ऊठ्, अल्लोपः, टिलोप इत्येते विधयः प्राप्नुवन्ति। स्थानिवद्भावान्न भवन्ति। स्रंस्यते ध्वंस्यते णिलोपे कृते अनिदितां हल उपधायाः क्ङितीति नलोपः प्राप्नोति। स्थानिवद्भावान्न भवतीति। नैतानि सन्ति प्रयोजनानि। असिद्धवदत्राभादित्यनेनाप्येतानि सिद्धानि। इदं तर्हि प्रयोजनम्। याज्यते वाप्यते। णिलोपे कृते यजादीनां कितीति सम्प्रसारणं प्राप्नोति स्थानिवद्भावान्न भवतीति। एतदपि नास्ति प्रयोजनम्। यजादिभिरत्र कितं विशेषयिष्यामः। यजादीनां यः किदिति। कश्च यजादीनां कित्। यजादिभ्यो यो विहित इति। न चायं यजादिभ्यो विहित इति। इदं तर्हि प्रयोजनम्। पटव्या मृद्व्येति। परस्य यणादेशे कृते पूर्वस्य न प्राप्नोति। ईकारयणा व्यवहितत्वात्। स्थानिवद्भावाद्भवति। किं पुनः कारणं परस्य तावद्भवति न पुनः पूर्वस्य नित्यत्वात्। नित्यः परयणादेशः कृते ऽपि पूर्वयणादेशे प्राप्नोत्यकृते ऽपि प्राप्नोति। नित्यत्वात्परस्य यणादेशे कृते पूर्वस्य न प्राप्नोति। स्थानिवद्भावाद्भवति। एतदपि नास्ति प्रयोजनम्। असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इत्यसिद्धत्वाद् बहिरङ्गलक्षणस्य परयणादेशस्यान्तरङ्गलक्षणः पूर्वयणादेशो भविष्यति। अवश्यं चैषा परिभाषा आश्रयितव्या स्वरार्थम्। कर्त्र्यौ हर्त्र्यौ इति। उदात्तयणो हल्पूर्वादित्येष स्वरो यथा स्याद्। अनेनाऽपि सिद्धः स्वरः। कथम्। आरभ्यमाणे नित्यो ऽसौ। आर-

---

ग्रहणं स्वाश्रयनिवारणार्थमितीडभावः। स्तोष्यामीति। कथयिष्यामित्यर्थः। पादिकमिति। पादोऽस्यास्तीति ठन्। दीव्यत्यादिषु वार्थेषु ठक्। चरत्यर्थे तु पादिकइत्येव भवति पर्पादित्वात्। पद्भावे इके चरतावुपसंख्यानमिति पद्भावः। उदकं वहतीत्यण् संज्ञायामुदभावः। अपत्ये इञ्। श्वोभूतिर्नाम शिष्यः। तस्यामन्त्रणम्। शातनपातनशब्दाभ्यां गौरादित्वान्ङीष्। नेताराविति। शिष्ययोरामन्त्रणम्। नेयते गुरुमुखात् शास्त्रार्थमिति नेतारौ। धारणरावणशब्दाभ्यामिञ्। असिद्धं बहिरङ्गेति। नित्यादप्यन्तरङ्गं बलीय इति न्यायात् प्रथमं पूर्वस्य यण् इति भावः। अवश्यं चेति। स्थानिवद्भावाश्रयणेपीत्यर्थः। कर्त्र्यौति। कर्तृ ई औ इति स्थिते यदि

---

न पदान्तसूत्रे एतत्स्फुटं वक्ष्यते। भाष्ये (परिहारं वक्ष्यतीति) वक्ष्यत्रेत्यत्र यणः प्रतिषेधारम्भं चक्रतुरित्यादौ द्विर्वचनेचीति। चरत्यर्थे इति। पद्भावे इके चरतावित्युपसङ्ख्यानादिति भावः। गौरादित्वादिति। शार्ङ्गरवाद्यञो ङीनिति भावः। टित्वान्ङीबिति। सप्तमे आकारः शातनीमित्यादावल्लोपोऽन इत्यल्लोपप्राप्तिः। धारणिमित्यादौ धृरुभ्यां ण्यन्ताभ्यां ल्युटि णस्वस्यासिद्धत्वान्नस्तद्धित इत्यस्य प्राप्तिः। भाष्ये (यजादिभ्यो विहित इति)। एवञ्च वच्यादिभ्यो ण्यन्तेभ्यः क्विपि संप्रसारणं न भवत्येव। क्विबभाव एवेत्यन्ये। नित्यादपीति। नाजानन्तर्ये इति निषेधस्तु अनित्यो नास्त्येव वेति भाष्याशयः। पूर्वनिमित्तकार्यस्यमन्तरङ्गत्वं विवक्षितम्।

भ्यमाणे स्वस्मिन् योगे नित्यः पूर्वयणादेशः । कृते ऽपि परयणादेशे प्राप्नोत्यकृते ऽपि । परयणादेशो ऽपि नित्यः कृते ऽपि पूर्वयणादेशे प्राप्नोति अकृते ऽपि । परश्चासौ व्यवस्थया । व्यवस्थया चा ऽसौ परः । युगपत्संभवो नास्ति । न चास्ति यौगपद्येन संभवः । कथं च सिध्यति । बहिरङ्गेण सिध्यति । असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इत्यनेन सिध्यति । एवं तर्हि यो ऽत्रोदात्तयण् तदाश्रयः स्वरो भविष्यति । ईकारयणा व्यवहितत्वान्न प्राप्नोति । स्वरविधौ व्यञ्जनमविद्यमानवद्भवतीति नास्ति व्यवधानम् । सा तर्हि एषा परिभाषा कर्तव्या । ननु चेयमपि कर्तव्या असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इति । बहुप्रयोजनैषा परिभाषा। अवश्यमेवैषा कर्त्तव्या । सा चाऽप्येषा लोकतः सिद्धा । कथम् । प्रत्यङ्गवर्त्ती लोको लक्ष्यते । तद्यथा । पुरुषो ऽयं प्रातरुत्थाय यान्यस्य प्रतिशरीरं कार्याणि तानि तावत्करोति ततः सुहृदां ततः सम्बन्धिनाम् । प्रातिपदिकं चा-

---

नित्यत्वात् पूर्वं परयणादेशः स्यात्तस्य स्थानिवद्भावात् पूर्वस्य यण् । तत उदात्तयणोनन्तर आकारो न भवतीत्युदात्तत्वं न स्याद् यदा त्वन्तरङ्गत्वात् पूर्वं पूर्वस्य यणादेशस्तदा ङीप् उदात्तयण इति उदात्तत्वं तस्यापि यणि कृते आकारस्योदात्तत्वमिति सिद्धमिष्टम् । अनेनापीति । सति स्थानिवत्त्वे पूर्वयणादेशस्यापि नित्यत्वादित्यर्थः । इतर आह परयणादेशोपीति । स एवाह परश्चासाविति । शब्दपरविप्रतिषेधात् स एव प्राप्नोति । एकमपि यणलक्षणं पूर्वपरविषयभेदाद्भिद्यते । एकस्य च कार्यित्वनिमित्तत्वयोर्विरोधात् परत्वेन व्यवस्था । प्रत्यङ्गवर्तीति । प्रत्यासन्नवाची प्रत्यङ्गशब्दः । अङ्गशब्देन प्रत्यासत्तिर्लक्ष्यते अङ्गानां प्रत्यासन्नत्वात् । अङ्गमङ्गं प्रति प्रत्यङ्गमित्यव्ययीभावः । प्रतिशरीरमिति । शरीरस्य भोगायतनत्वात् । ततः सुहृ-

---

उदाहरणस्ववादी आह भाष्ये (अनेनापीति) । सति स्थानिवत्त्व इति। एवञ्च द्वयोरपि नित्यत्वेनोच्चारणक्रमे प्राथम्यात्पूर्वं पूर्वयणादेश एवेति भावः । इतरः उदाहरणस्वखण्डनवादी।शब्दपरेति।उच्चारणक्रमेपि प्राथम्यस्य शास्त्रेण बाध इति भावः।तत्सूत्रे व्याप्तिन्यायेन सूत्रपाठतः शब्दतश्चोभयविधमपि परत्वं गृह्यत इति तात्पर्यम्। नन्वेवं परं कार्यमित्युच्यते तत्कथमभेदे स्यादत आह एकमपीति । व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणभेदादिति भावः । विषयगतं पौर्वापर्यन्तद्वाच्छिन्ने लक्षणे आरोप्यत इत्यत्र तात्पर्यम् । विप्रतिषेधशास्त्रप्रवृत्तियोग्यं न चास्ति यौगपद्येनेति भाष्यबोधितं विरोधमुपपादयति एकस्य चेति । प्रसक्ते आदेशविधानादादेशसमये स्थानिनोऽसत्त्वं निमित्तन्त्वञ्च सत्त्वे सत्त्वासत्त्वे चैकत्र युगपद्विरुद्धे । एवञ्च द्वयोर्यणोर्यौगपद्यासम्भव इति भावः । भाष्ये ( बहिरङ्गेण सिध्यतीति ) । तेनैव कत्र्येति सिध्यति न सूत्रेणेत्यर्थः । एवंच शब्दतः परत्वमादाय विप्रतिषेधसूत्रस्य नैव प्रवृत्तिरिति तात्पर्यम् । उदाहरणवादी अन्तरङ्गपरिभाषाश्रयणं विनापि स्वरं साधयति । भाष्ये ( एवं तर्हीति ) । स्वरविधाविति । अस्य स्वरोद्देश्यकविधित्वादिति भावः । अवश्यमेवेति । एव च तयैव सिद्धत्वान्नेतस्या उदाहरणमिति भावः । स चाप्येषेति । प्रकृतोदाहरणविषयपूर्वनिमित्तकमन्तरङ्गमित्यंशो न्यायसिद्ध इति तदनाश्रयणमशक्यमिति भावः । ननु प्रत्यवयववर्त्ती लोकरूपो ऽवयवी लक्ष्यत इति नार्थः प्रकृतानुपयोगादित्यत आह प्रत्यासन्नेति । अङ्गानामिति । अङ्गिनं प्रतीति शेषः । अङ्गमङ्गमिति । प्रत्यासन्नवर्त्ती तत्कार्यमभिनिविष्टो लोको दृश्यत इति भावः । प्रत्यासन्नत्वं च प्रथमोपस्थितत्वरूपम् । भाष्ये ( शरीरं प्रतीत्यन्वयः ) प्रतियोगे द्वितीया । भोगः सुखादिसाक्षात्कारः ।

प्युपदिष्टं सामान्यभूते ऽर्थे वर्तते । सामान्ये वर्त्तमानस्य व्यक्तिरुपजायते व्यक्तस्य सतो लिङ्गसंख्याभ्यामन्वितस्य बाह्येनार्थेन योगो भवति । यथैव चाऽऽनुपूर्व्या ऽर्थानां प्रादुर्भावस्तथैव शब्दानामपि तद्वत्कार्यैरपि भवितव्यम् । इमानि तर्हि प्रयोजनानि । पटयति लघयति अवधीत् बहुखट्वकः । पटयति लघयतीति णिचि टिलोपे कृते अत उपधाया इति वृद्धिः प्राप्नोति स्थानिवद्भावान्न भवति । अवधीदित्सकारलोपे कृते अतो हलादेर्लघोरिति विभाषा वृद्धिः प्राप्नोति । स्थानिवद्भावान्न भवति । बहुखट्वक इति आपो ऽन्यतरस्यामिति ह्रस्वे कृते ह्रस्वान्ते ऽन्त्यात्पूर्वमिसेष स्वरः प्राप्नोति स्थानिवद्भावान्न भवति । इह वैयाकरणः सौवश्व इति य्वोः स्थानिवद्भावादायावौ प्राप्नुतस्तयोः प्रतिषेधो वक्तव्यः । अचः पूर्वविज्ञानादैचोस्सिद्धम् * । यो ऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः । आदिष्टाच्चैषो ऽचः पूर्वः । किं वक्तव्यमेतत् । नहि । कथमनुच्यमानं गंस्यते । अच इति पञ्चमी । अचः पूर्वस्य । यद्येवमादेशो

---

दामिति । सौहार्दस्यासत्तिहेतुत्वात् । ततः सम्बन्धिनामिति । अवश्यकर्तव्यत्वात् । सामान्यभूत इति । नित्येपि शब्दार्थसम्बन्धे अक्रमे ऽप्यर्थप्रतिपादने उपायभावेनासत्यमपि क्रमं प्रकृत्याद्यर्थं चाश्रित्योपेयव्यवस्थापनात् । तत्र नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यतइत्यादौ सामान्यमभिधीयते ततस्तदनुरक्तद्रव्ये प्रतीतिः। लिङ्गसंख्याशक्तीनां चाश्रयो द्रव्यमिति तत्पूर्वमभिधातव्यम् । ततः संख्यापेक्षया लिङ्गं समासन्नमिति तदभिधीयते । द्व्यादिसंख्या हि वस्त्वन्तरापेक्षोपजायते । एकत्वसंख्यापि वस्त्वन्तरापेक्षद्वित्वादिव्यवच्छेदं करोतीति वहिरङ्गा । सा ऽपि सजातीयपदार्थापेक्षत्वादन्तरङ्गा कर्मादीनि तु विजातीयक्रियापेक्षणाद्बहिरङ्गाणीति न्यायप्राप्तक्रमः । बाह्येनेति । कर्मत्वादिना । तद्धि क्रियापेक्षणात् बाह्यम् । यो ऽनादिष्टादिति । अकृतएवादेशे अचो यः पूर्व इत्यर्थः । अजपेक्षस्य पूर्वत्वस्येहाश्रयणात् । आदेशानमादिष्टं

---

आसत्तिः प्रथमोपस्थितिः । युगपदुपस्थितावितदम् । क्रमेणोपस्थितावपि आसत्तिवशादेव पूर्वं सुहृदामुपस्थितिरिति बोध्यम् । ननु अन्वितस्य बाह्यार्थेन योगो भवतीत्ययुक्तं शब्दार्थसम्बन्धस्य नित्यत्वात् शब्दस्य विरम्य व्यापाराभावाद् युगपदेव सकलार्थप्रतीतेः क्रमाभिधानमप्यसंगतमित्यत आह नित्येपीति । असन्तमपीति । असत्यमपीति पाठान्तरम् । शब्दजन्यबोधे वस्तुगत्यासत्त्वादित्यर्थः । किं तु शास्त्रवासनाकल्पितोऽयं प्रक्रियादशायां क्रमः । अर्थवदुद्देश्यकप्रातिपदिकसंज्ञोद्देश्यकङ्याबाद्युद्देशेन शास्त्रे स्वादिविधानादिति बोध्यम् । वस्तुतः प्रकृतितदर्थाद्व्यसत्यमेव कुतस्तत्क्रमस्य सत्यतेत्यत आह प्रकृत्याद्यर्थमिति । असत्यमपीत्यनुकृष्यते । भाष्ये ( सामान्यभूतेऽर्थे वर्तत इति ) । वर्त्तनं नाम सामान्याभिधानम् । विशेष्ये । विशेषणविशिष्टे । तदैव विशेष्यत्वात् । विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वादिति भावः । तदनुरक्तेति । सामान्यस्य कार्यानर्हत्वाद्व्यक्तिस्तदाश्रयतया शब्दार्थत्वेन कल्प्यत इति भावः । भाष्ये ( उपजायत ) इत्यस्य स्वबोधविषयो भवतीत्यर्थः । व्यक्तस्येति । द्रव्यस्य सतो बुध्यारूढस्येत्यर्थः । तत्पूर्वमिति । आश्रयप्रतीत्युत्तरमेव तदाकाङ्क्षणादिति भावः । वस्त्वन्तरेति । स्वसमवायिकारणनानावस्त्वपेक्षेत्यर्थः । एकत्वस्य तस्याभावादाह एकत्वेति। एवं च प्रयोजनापेक्षया सापि बहिरङ्गेत्यर्थः। सजातीयेति। द्रव्यत्वेन स्वाश्रयत्वेन वा सजातीयत्वम्। ननु लिङ्गादिभिरेकार्थसमवायाविशेषात्कथं शक्तेर्बाह्यत्वमत आह कर्मादीनि त्विति। न्यायप्राप्तः क्रमइति। शास्त्रकृत्कल्पितन्यायप्राप्तः प्रक्रियादशायामित्यर्थः। अनेन विशिष्टबुद्धौ विशेषणज्ञानकारणत्वाद्यपि

ऽविशेषितो भवति । आदेशश्च विशेषितः । कथम् । न ब्रूमो यत् षष्ठीनिर्दिष्टम-ज्ग्रहणं तत्पञ्चमीनिर्दिष्टं कर्तव्यमिति । किं तर्हि । अन्यत्कर्तव्यम् । अन्यच्च न कर्तव्यम् । यदेवादः षष्ठीनिर्दिष्टमज्ग्रहणं तस्य दिक्शब्दैर्योगे पञ्चमी भविष्यति । अजादेशः परनिमित्तकः पूर्वविधिं प्रति स्थानिवद्भवति । कुतः पूर्वस्य अच इति । तद्यथा । आदेशः प्रथमानिर्दिष्टः । तस्य दिक्छब्दयोगे पञ्चमी भवति । अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद्भवति कुतः पूर्वस्य आदेशादिति । तत्रादेशलक्षणप्रतिषेधः । तत्रादेशलक्षणं कार्यं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः । वाय्वोः । अध्वर्य्वोः । लोपो व्योर्वलीति लोपः प्राप्नोति । असिद्धवचनात्सिद्धम् । अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रत्यसिद्धो भवतीति वक्तव्यम् । असिद्धवचनात्सिद्धमिति चेदुत्सर्गलक्षणानामनुदेशः* असिद्धवचनात्सिद्धमिति चे-

---

तद्‌यस्य नास्ति सो ऽनादिष्टः । आदेश इति । ततश्च हलादेशो ऽपि स्थानिवत् स्यात् । यदेवाद इति । साहश्यादेवमुक्तं शब्दान्तरमेव तु पञ्चम्यन्तमपेक्षते । तद्यथेति । यथादेशापेक्षया पूर्वत्वे आश्रीयमाणे विभक्तिविपरिणामस्तथा स्थान्यपेक्षयापीत्यर्थः । धिन्वन्तीत्यत्रोकारात् पूर्वं यदङ्गं तस्मान्निमित्तत्वेनाश्रिताद्विधिरिति सिद्धः स्थानिवद्भावः । वैयाकरण इत्यत्र तु तन्न भवति । नहीकारात् पूर्वो यो वकारः स क्वचिन्निमित्तत्वेनाश्रितः । तत्रेति । अतिदेशेन पराश्रयं कार्यं प्राप्यते न तु स्वाश्रयं निवर्त्यते । भाष्यकारेण तु विधिग्रहणात् स्वाश्रयकार्याभावः साधितः । उत्सर्गेति । उत्सर्गः स्थानी स ह्यादेशेनापवादेनेव निवर्त्यते । नन्वीकारयणो ऽसिद्धत्वाद्

---

त्तान्त्रिककल्पितमितिसूचितम् । भाष्ये ( यथैवेति ) । अर्थानां लिङ्गसंख्याकारकाणाम् । प्रादुर्भावो ज्ञानम् । शब्दानामपि । तद्बोधकस्त्रीप्रत्ययविभक्तीनामपि । अस्य प्रादुर्भावइति शेषः । तद्वत्कार्यैरपीत्यस्य तथैवानुपूर्व्येत्यर्थः । येन क्रमेण शब्दोपस्थितिस्तेनैव क्रमेण कार्यमिति पूर्वमीकारनिमित्तको यणिति भावः । तत्र पदस्यैव विभज्यान्वाख्याने सर्वेषां युगपत्प्राप्तावनया व्यवस्था । क्रमेणान्वाख्याने तु पूर्वप्रवृत्तिकत्वरूपमन्तरङ्गत्वं पूर्वयणादेशस्य बोध्यम् । परयणादेशस्य बहिरङ्गत्वन्तु निमित्ताभावादप्राप्तत्वरूपं बोध्यम् । अत एव वाय्वोरित्यत्र नासिद्धत्वम् । एवंविधान्तरङ्गत्वस्य दृष्टान्तादिबलेन युगपत्प्राप्तिविषयत्वात् । स्पष्टं चेदं वाह ऊठ्सूत्रे कैयटे । यत्त्वनया रीत्या पूर्वस्थानिकमप्यन्तरङ्गमिति । तदयुक्तम् । अन्तरङ्गशब्दार्थाभावात् । अङ्गशब्दस्य तत्र निमित्तपरत्वात् । अवधीदिति । यद्यप्यतो लोप इत्यत्रार्द्धधातुक इति विषयसप्तमीत्यचो यदिति सूत्रस्थभाष्यात्प्रतीयत इत्यपरनिमित्तकत्वात् कथं स्थानिवत्त्वं तथापि, विषयसप्तमीत्वेपि परबुद्धिनिमित्तकत्वेन परनिमित्तकत्वमस्त्येवेत्याशयः । स्वतन्त्रवधधातुस्तु नास्त्येव अदन्तत्वे जनिवध्योश्चेति वधिग्रहणमपि न कर्त्तव्यमेवेति बोध्यम् । ( बहुखट्वक इति) भाष्ये । बहोर्नञ्वदुत्तरपद भूम्नीत्युक्तेरिति भावः । नन्वादेशस्य सत्त्वादनादिष्टादित्यनुचितमत आह अकृत एवेति । उपलक्षणमेतदिति भावः । ननु सूत्रे ऽनादिष्टादित्येतदनुपादानात्कथमेतल्लाभो ऽत आह अजपेक्षयेति । लक्ष्यानुरोधादिति भावः । कर्मणि क्ते अनादिश्यमानादित्यर्थः स्यादत आह आदेशनमिति । बहुव्रीहौ निष्ठेति पूर्वनिपातस्तु न । तत्प्रकरणानित्यत्वात् । नन्वचः पूर्वस्य विज्ञाने आदेशेन पूर्वत्वस्याविशेषणात्तद्यथेत्ययुक्तमत आह यथेति । परमतेन दृष्टान्त इति भावः । पूर्वविध्यभावादाह धिन्वन्तीति । अन्यथेडापत्तिरिति भावः । अत्र यद्वक्तव्यं तदुक्तम् । पञ्चमीसमासाश्रयेण वैयाकरणे दोषमाशङ्क्याह वैयाकरणेति । ऐज्विधानसामर्थ्यात्तत्र न भवति स्थानिवत्त्वमिति परे । विधिग्रहणं स्वाश्रयनिवृत्त्यर्थमित्युक्तत्वात्तत्रादेशलक्षणेत्यसङ्गतमत आह भाष्यकारेणेति । इदं वार्त्तिकमिति न विरोध इति भावः । निवर्त्यते इति । उत्सृज्यतेऽनिवर्त्यते इत्युत्सर्ग इति भावः । नन्वान-

दुत्सर्गलक्षणानामनुदेशः कर्त्तव्यः। पट्व्या मृद्व्येति। ननु चैतदप्यसिद्धवचनात्सिद्धम्। असिद्धवचनात्सिद्धमिति चेन्नान्यस्यासिद्धवचनादन्यस्य भावः। असिद्धवचनात्सिद्धमिति चेत्तन्न। किं कारणम्। नान्यस्यासिद्धवचनादन्यस्य भावः। नह्यन्यस्यासिद्धत्वादन्यस्य प्रादुर्भावो भवति। तद्यथा। नहि देवदत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवति। तस्मात्स्थानिवद्वचनमसिद्धत्वं च। तस्मात्स्थानिवद्भावो वक्तव्यः। असिद्धत्वं च। पट्व्या मृद्व्येति स्थानिवद्भावः। वाय्वोरध्वर्य्वोरित्यत्रासिद्धत्वम्। उक्तं वा। किमुक्तम्। स्थानिवद्वचनानर्थक्यं शास्त्राऽसिद्धत्वादिति। विषम उपन्यासः। युक्तं तत्र यदेकादेशशास्त्रं तुक्छास्त्रे असिद्धं स्याद् अन्यदन्यस्मिन्। इह पुनरयुक्तम्। कथं हि तदेव नाम तस्मिन्नसिद्धं स्यात् तदेव चापि तस्मिन्नसिद्धं भवति। वक्ष्यति ह्याचार्यः। चिणो लुकि तग्रहणानर्थक्यं संघातस्याप्रत्ययत्वात्तलोपस्य चासिद्धत्वादिति। चिणो लुक् चिणो लुक्येवासिद्धो भवति। काममतिदिश्यतां वा सच्चासच्चापि नेह भारो ऽस्ति। कल्प्यो हि वाक्यशेषो वाक्यं वक्त्रधीनं हि। अथवा वतिनिर्देशो ऽयं कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम्। तद्यथा। उशीनरवन्मद्रेषु यवाः। सन्ति न सन्तीति। मातृवदस्याः कलाः। सन्ति न सन्तीति। एवमिहापि स्थानिवद्भवति स्थानिवन्न भवतीति वाक्यशेषं समर्थयिष्यामहे। इह तावत्पट्व्या मृद्व्येति यथा स्थानिनि यणादेशो भवति एवमादेशे ऽपि भवति। इहेदानीं वाय्वोरध्वर्य्वोरिति यथा स्थानिनि यलोपो न भवति एवमादेशे ऽपि न भवतीति। किं पुनरनन्तरस्य विधिं प्रति

---

विभक्तावेव यण् भविष्यति। नैतदस्ति। पूर्वविधावसिद्धत्वमुच्यते नत्वानन्तर्ये लौकिके यथा प्रयोग इति नास्ति विभक्तेरानन्तर्यम्। अनुदेश इति। अतिदेश इत्यर्थः। ननु चैतदपीति। शास्त्रासिद्धत्वाश्रयणात्। नान्यस्येति। कार्यासिद्धत्वाश्रयमेतत्। उक्तं वेति। शास्त्रासिद्धत्वमाश्रयणीयमित्यर्थः। तदेवेति। सकृत्पाठापेक्षयैतदुच्यते। विषयभेदात्तु भेदाश्रयणादसिद्धत्वमाश्रीयते। नेह भारोस्तीति। नह्यभावातिदेशे ऽधिकं सूत्रं पठनीयं विधिशब्दं चान्तरेण सिध्यति। अधीनमिति। अध्युत्तरपदात् खविधानादव्युत्पन्न आयत्तार्थवृत्तिरधीनशब्दः। तद्यथेति। येनोपमाने

---

न्तर्ये इति पूर्वविधावित्युक्तेः शास्त्रीये कार्येतिदेशप्रवृत्तिरिति भावः। प्रयोग इति। उच्चारणे इत्यर्थः। भाष्ये (नहि देवदत्तस्येति)। हतेपि न जीवनं चेत् किं वक्तव्यं तदापि इत्यर्थः। उक्तं वेति। यस्त्वतुक्तो रित्यत्र वचनद्वयकरणापेक्षो विकल्पः। तदेव नामेति। इको यणचीत्यस्मिन्नित्यर्थः। चिणो लुकि तग्रहणाभावे किं ततरांशब्दस्य लुगुच्यते उत तेषां क्रमेण। नाद्यः, सङ्घातस्याप्रत्ययत्वात्। नान्त्ये इत्याह। भाष्ये। (तलोपस्य चेति।)। एवमसिद्धवचनमात्रेण निर्वाहमुक्त्वा सूत्रकृतं स्थानिवत्त्वं समर्थयति काममिति। नह्यभावेति। इहेत्यस्य सूत्रे इत्यर्थ इति भावः। ननु पूर्वमस्यार्थस्य विधिशब्देन साधितत्वात् कथं तत्करणरूपो न भार इत्यत आह विधिशब्दञ्चेति। अध्याहारमात्रेणेति भावः। भाष्ये (एवमादेशेऽपि न भवतीति) आदेशनिमित्तकोपीत्यर्थः। यद्यपि व्यवहितेपि पूर्वशब्दो वर्त्तते इति भाष्यकृता पूर्वम-

स्थानिवद्भाव आहोस्वित्पूर्वमात्रस्य । कश्चात्र विशेषः । अनन्तरस्य चेदेकाननुदात्तद्विगुस्वरगतिनिघातेषूपसंख्यानम्॥ अनन्तरस्येति चेदेकाननुदात्तद्विगुस्वरगतिनिघातेषूपसंख्यानं कर्तव्यम् । एकाननुदात्त । लुनीह्यत्र पुनीह्यत्र । अनुदात्तं पदमेकवर्जमित्येष स्वरो न प्राप्नोति । द्विगुस्वर । पञ्चारत्न्यः दशारत्न्यः । इगन्तकालेत्येष स्वरो न प्राप्नोति । गतिनिघात । यत्प्रलुनीह्यत्र । यत्प्रपुनीह्यत्र । तिङि चोदात्तवतीत्येष स्वरो न प्राप्नोति । अस्तु तर्हि पूर्वमात्रस्य । पूर्वमात्रस्येति चेदुपधाह्रस्वत्वम् । पूर्वमात्रस्येति चेदुपधाह्रस्वत्वं वक्तव्यम् । वादितवन्तं प्रयोजितवान् । अवीवदद्वीणां परिवादकेन । किं पुनः कारणं न सिध्यति । योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावाद् ह्रस्वत्वं न प्राप्नोति । गुरुसंज्ञा च । गुरुसंज्ञा च न सिध्यति । श्लेष्म ३ घ्न पित्त ३ घ्न द ३ ध्यश्व म ३ ध्वश्व । हलो ऽनन्तराः संयोग इति संयोगसंज्ञा संयोगे गुर्विति गुरुसंज्ञा गुरोरिति प्लुतो न प्राप्नोति । ननु च यस्याप्यनन्तरस्य विधिं प्रति स्थानिवद्भावस्तस्याप्यन-

---

यवानां सत्ता ऽवगता स सन्तीति वाक्यशेषं प्रकल्पयति । असत्तावगतौ न सन्तीति । एवमस्यापि लक्षणस्य प्रतिलक्ष्यं भेदात् । क्वचिद्भावो ऽतिदिश्यते क्व चिदभावः । किं पुनरिति । अमीषां ब्राह्मणानामन्त्यात्पूर्वमानयेत्यत्रानन्तरे पूर्वशब्दो दृष्टः । मथुरायाः पूर्वं पाटलिपुत्रमिति व्यवहित इति प्रश्नः । तत्र यदा विषयभेदाल्लक्षणं भिद्यते तदा यादृशं यत्र पूर्वत्वं संभवति तादृशं तत्राश्रीयते इति व्यवहितस्यापि ग्रहणम् । यदा त्वेकमेव लक्षणं तदा किमित्यव्यवहितसंभवे व्यवहितमाश्रीयत इति अनन्तरस्यैव ग्रहणेन भाव्यम् । लुनीह्यत्रेति हेरपित्त्वादुदात्तत्वम् । तत्र यणादेशे कृते उदात्तस्याभावाद्वर्ज्यमानस्वरो न स्यात् । स्थानिवद्भावात्तु यथा स्थानिनि स्वरो भवति एवमादेशे ऽपि सिद्धः स्वरः । पञ्चारत्न्य इति । जसादिषु छन्दो वावचनं प्राङ् णौ चङ्युपधाया इति जसि चेति गुणश्छन्दसि विकल्पितत्वान्न भवतीति यणि कृते इगन्तत्वाभावात् पूर्वपदप्रकृतिस्वराऽप्रसङ्गः । यत्प्रलुनीह्यत्रेति । यच्छब्दप्रयोगो निघातप्रतिषेधार्थः । तत्र यणि कृते उदात्तत्वाभावाद्गतिनिघाताप्रसङ्गः । एतच्च सर्वमनाश्रित्यान्तरङ्गबहिरङ्गभावमुक्तम् । श्लेष्म ३ घ्न इति । कार्यार्थत्वात्संयोगसंज्ञाया व्यवहितस्यात्र प्लुतविधिरिति पूर्वपक्षः । ननु चेति । यथोद्देशपक्षे प्रत्ये-

---

योक्तं तथापि तदर्थप्रतिपादकवार्त्तिकमवतारयितुं पृच्छति भाष्ये ( किं पुनरिति ) । अव्यवहितसंभवे इति । छन्दसि परेपि व्यवहिताश्चेत्यनेन पूर्वपरशब्दयोरव्यवहितार्थे मुख्यत्वबोधनादिति भावः । तस्मिन्निति सूत्रे निर्दिष्टग्रहणाद्व्यवहिताव्यवहितसाधारणे पूर्वशब्दस्य शक्तिः । अन्त्यात्पूर्वमानयेत्यादौ तु तात्पर्यानुपपत्त्या विशेषे लक्षणा । छन्दसि परेपीत्यादौ तु पराङ्गविकल्पायास्तस्मादिति परिभाषाया उपस्थितेरव्यवधानांशलाभः इह तु वरेग्रहणाल्लिङ्गात्तदनुपस्थितेरिति तत्त्वम् । भाष्ये एकाननुदात्तशब्देन तत्प्रयुक्तः शेषनिघातः । उदात्तत्वामिति । प्रत्ययस्वरेण । निघातप्रतिषेधेति । निपातैर्यद्यदीत्यनेनेति भावः । अनाश्रित्येति । पदसंस्कारे वाक्यसंस्कारे वा यणो वर्णाश्रयत्वेनान्तरङ्गत्वमित्यन्ये । श्लेष्मघ्नादाविति । अमनुष्यकर्तृके चेति टक् । ननु संयोगत्वस्य समुदायगतत्वेन पूर्वविधित्वाभावात् कथं स्थानिवत्त्वं किं च न संयोगसंज्ञा व्यवहितस्य विधिरव्यवहितस्य सत्त्वादत आह कार्यार्थत्वादिति । ततश्च प्लुतद्वारा व्यवहितपूर्वविधित्वं संज्ञाया

न्तरलक्षणोऽविधिः संयोगसंज्ञा विधेया । न वा संयोगस्यापूर्वविधित्वात् । नवा एष दोषः । किं कारणम् । संयोगस्यापूर्वविधित्वात् । न पूर्वविधिः संयोगः । किं तर्हि । पूर्वपरविधिः संयोगः ॥ एकादेशस्योपसंख्यानम् । एकादेशस्योपसंख्यानं कर्तव्यम् । आयसौ गौमतौ चातुरौ आनडुहौ पादे उदवाहे । एकादेशे कृते नुमामौ पद्भाव ऊडिसेते विधयः प्राप्नुवन्ति । किं पुनः कारणं न सिध्यन्ति । उभयनिमित्तत्वात् । अजादेशः परनिमित्तक इत्युच्यते । उभयनिमित्तश्चायम् । उभयादेशत्वाच्च । अच आदेश इत्युच्यते अचोश्चायमादेशः । नैष दोषः । यत्तावदुच्यते । उभयनिमितत्वादिति । इह यस्य ग्रामे नगरे वा अनेकं कार्यं भवति शक्नोत्यसौ ततो ऽन्यतरतो व्यपदेष्टुम् । तद्यथा । गुरुनिमित्तं वसाम इति अध्ययननिमित्तं वसाम इति । यदप्युच्यते । उभयादेशत्वाच्चेति । इह यो

---

कं च संयोगसंज्ञेति पक्षे आनन्तर्याश्रये ऽपि दोष इत्यर्थः । न वेति समुदायः संज्ञीति भावः । पूर्वमात्रस्येति पक्षो ऽत्र स्थितः । अवीवददिति तु चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधो वक्ष्यते । एकादेशस्येति । परस्मिन्नित्येतदवधारणार्थमुपात्तं तथा ह्यनुपादीयमाने ऽपि परस्मिन्नित्यस्मिन् परनिमित्तकस्य स्थानिवद्भावो लभ्यत एव । तत्रानेन यथा अपरनिमित्तकस्य स्थानिवद्भावो निवार्यते वैयाघ्रपद्यः आदीध्य इति एवं परस्मिन्नेव य आदेश इत्यवधारणादुभयनिमित्तस्याप्राप्तिरिति भावः । आयसादिभ्यो ऽणन्तेभ्य औप्रत्यये कृते एकादेशे च तस्यादिवद्भावान्नुमामौ प्राप्नुतः । पादे उदवाहे इत्यत्र ङ्यावेकादेशे कृते आदिवत्त्वात् भसंज्ञायां सत्यां पद्भाव ऊठ् च प्राप्नुतः । अचोश्चेति । अच इति गुणत्वादेकत्वसंख्यायाः पशुना यजेतेतिवद्विवक्षितत्वात् । इह यस्येति । अन्वयव्यतिरेकाभ्यां निमित्तत्वावधारणाद्भवत्येव परस्य निमित्तता । अयोगव्यव-

---

इति भावः । ननु च उक्तहेतुना व्यवहितपूर्वविधित्वात्कथमनन्तरग्रहणे संयोगसंज्ञाया विधेयत्वमत आह यथोद्देशेति । तदा कार्यपर्यालोचनं विनापि भविष्यति । किं चिदित्यभिसन्धिमात्रात्तत्प्रवृत्तेरित्यर्थः । ननु एवमपि पूर्वपरविधित्वान्न स्थानिवत्त्वप्राप्तिरत आह प्रत्येकं चेति । समुदाय इति । एवञ्चानन्तर्याश्रयणे यथोद्देशपक्षेपि न दोष इति भावः । एवञ्च पूर्वमात्रग्रहणेपि श्लेष्मघ्ने न दोषः । यथोद्देशाश्रयणादेव कार्यकालपक्षेपि यत्प्रतिबन्धद्वारा स्थानिवत्त्वस्य संज्ञाकार्यप्रतिबन्धकत्वं तस्य पूर्वमात्राप्रवृत्तित्वे एव स्थानिवत्त्वमिति गूढतात्पर्यम् । भाष्ये (किं तर्हि पूर्वपरविधिरिति) । पूर्वपरविधौ स्थानिवत्त्वाभावादेव च आरतुरित्यादौ ऋच्छत्यृतामिति गुणस्य सवर्णदीर्घे न स्थानिवत्त्वमिति बोध्यम् । विधिग्रहणसामर्थ्याच्चैतदर्थलाभ इत्याहुः । पूर्वमात्रेति । दीर्घादिग्रहणाल्लिङ्गादिति भावः । ननूभयनिमित्तत्वेपि परनिमित्तत्वमस्त्येवेत्यत आह परस्मिन्नितीति । अवधारणार्थमिति । पूर्वविधिशब्दे पूर्वशब्दस्येवास्यापि विशेषणस्यान्ययोगव्यवच्छेदफलकत्वादिति भावः । लभ्यत एवेति । अविशेषात्सर्वत्र प्रवृत्त्येति भावः । आयसावित्यत्र इविकारादीत्यपेक्ष्यात्वम् । तस्यादिवद्भावादिति । ननु आदिवद्भावेनौ इत्यस्य सर्वनामस्थानत्वेपि आयसित्यस्याङ्गत्वाभावात्कथं नुम् । औ इत्यस्य सान्तादविहितत्वात् आयसित्यस्य षष्ठीनिर्दिष्टावयवत्वाभावान्न स्थानिवत्त्वेन तस्याङ्गत्वमिति चेन्न । भूयोवयवसाम्यात् लोकन्यायात् छिन्नपुच्छे श्ववद् एकदेशविकृतानन्यत्वेनाङ्गत्वप्रतीत्यव्याघातात् । भाष्ये ( न सिध्यन्तीति ) । निषिद्धस्यानाश्रयणे बीजाभावात् । सूत्रमपि वस्तुसाफल्यमावश्यकमिति दिक् । भाष्ये ( न सिध्यन्तीति ) । निषेधस्यानाश्रयणे बीजाभावात् । सूत्रमपि वस्त्वसार्थमावश्यकमिति दिक् । नन्वच इत्यस्य विशेषणस्यान्ययोगव्यवच्छेदकत्वेपि हलां व्यावृत्तिः स्यान्नाजन्तरस्येत्यत स्वस्वेनेत्यर्थः ।

द्वयोः षष्ठीनिर्दिष्टयोः प्रसङ्गे भवति लभते ऽसावन्यतरतो व्यपदेशम् ॰। तद्यथा। देवदत्तस्य पुत्रः देवदत्तायाः पुत्र इति । अथ हलचोरादेशः स्थानिवद् भवति उताहो न । कश्चात्र विशेषः । हलचोरादेशः स्थानिवदिति चेद्विंशतेस्तिलोप एकादेशः। हलचोरादेशः स्थानिवदिति चेद्विंशतेस्तिलोपे एकादेशो वक्तव्यः। विंशकं विंशं शतं विंशः। स्थूलादीनां यणादिलोपे ऽवादेशः। स्थूलादीनां यणादिलोपे कृते अवादेशो वक्तव्यः। स्थवीयान् दवीयान्। केकयमित्रय्वोरियादेश एत्वं न सिध्यति। कैकेयः। मैत्रेयः। अचीयत्वं न सिध्यति । उत्तरपदलोपे च। उत्तरपदलोपे च दोषो भवति। दध्युपसिक्ताः सक्तवो दधिसक्तवः। अचीति यणादेशः प्राप्नोति। यङ्लोपे यणियङुवङः। यङ्लोपे यणियङुवङो न सिध्यन्ति। चेच्यः। नेन्यः। चेत्तियः। चेक्रियः। लोलुवः। पोपुवः।

---

च्छेदेन परस्मिन् य आदेश इति विशेषणात्। द्वयोरिति। वर्णनिर्देशे तावज्जातिग्रहणान्नास्ति संख्याविवक्षा भवतु वा तथापि न दोष इति भावः। अथ हलचोरिति। उभयथा शास्त्रे व्यवहारदर्शनात्प्रश्नः। उरण् रपर इत्यत्राऽणनणसमुदायोऽ कङादिरादेशो रपरो न भवति। नाग्लोपीत्यत्र त्वत्यराजदिति हलचोर्लोपे अग्लोपित्वाश्रयणादुपधाह्रस्वत्वनिषेधो भवति। अस्ति ह्यत्राको दर्शनमिति। विंशकमिति। विंशतित्रिंशद्भ्यामिति ड्वुन्। विंशमिति। शदन्तविंशतेश्चेति डः। विंश इति। तस्यं पूरणे डट्। स्थवीयानिति। गुणलोपयोस्तुल्यकालत्वाद् गुणस्य कथमनादिष्टादचः पूर्वत्वमिति चेत्। स्थानिना ऽनादिष्टादचः पूर्वत्वात् तद्द्वारेण गुणस्यापि भविष्यतीत्यदोषः। तत्र स्थानिवद्भावे सति लशब्देन व्यवधानादवादेशाप्रसङ्गः। कैकेय इति। नन्वमात्रेण गुणो विधीयते न त्वजादौ तेन योऽत्राश्रीयते नासावादेशः। यश्चादेशः समुदायो नासावाश्रीयते इति न्यायान्नास्ति दोषः। नैतदस्ति। स्थानिवन्न भवतीत्यभावातिदेशाश्रयणपक्षे दोषः स्यादेव। परिहारान्तरस्याभिधास्यमानत्वाद्वैतन्नाश्रितम्। दधिसक्तव इति। समानाधिकरणाधिकारोक्तस्तृतीयापूर्वपद उत्तरपदलोपश्चेति लोपस्य परनिमित्तता। यद्यप्यत्र पदान्तविधौ नेति सिध्यति। तथापि परिहारान्तरस्याभिधास्यमानत्वादेतन्नोक्तम्। चेच्यः नेन्य इति। उतोचीत्येतदनाश्रयणादुपन्यासः। अस्तु तर्हीति। अच

---

आह गुणस्वादिति। आदेशविशेषणत्वेनेति शेषः। वस्तुतो ऽचोरादेशस्याच्त्वपर्याप्त्यधिकरणादेशत्वाभाव इति भाष्याशयः। उभयनिमित्तत्वे किं परनिमित्तत्वमेव नास्तीत्युच्यते उत परमेव निमित्तं नेति। नाद्य इत्याह अन्वयेति। नान्त्य इत्याह अयोगेति। विशेष्यसङ्गत एवायोगव्यवच्छेदबोध इति नियमे न मानमिति भावः। भाष्ये (ऽथ हलचोरिति) अच इत्यपि परस्मिन्नितिवदयोगव्यवच्छेदमुतान्ययोगव्यवच्छेदकमिति प्रश्नः। अत्यरराजदिति। राजानमतिक्रान्तवानित्यर्थः। प्रातिपदिकाद्धात्वर्थ इति णिजिष्ठवद्भावाट्टिलोपश्चेति बोध्यम्। पूर्वस्य विधाविस्यनाश्रित्येदम्। भाष्ये। (एकादेश इति)। अतो गुण इति पररूपमित्यर्थः। यस्येति चेति तु न। तिलोपस्याभीयत्वेनासिद्धत्वादिति भावः। विंशं शतमित्यस्य विंशतिरधिकास्मिन्नित्यर्थः। विंश इति तु प्रक्षिप्तम् शतसहस्रयोरेव डस्येष्टत्वात्। स्थानिनोऽनादिष्टादिति। अत्र यद्वक्तव्यं तन्नधात्वितिसूत्रे चोक्तम्। कैकेयादौ स्थानिवत्सूत्रे केकयमित्रय्विस्यादिना इयादेशे आद्गुणः। अत्रापि पक्षे स एवार्थ इत्यत आह परिहारान्तरस्येति। पक्षान्तरस्येत्यर्थः। एतत् पूर्वोक्तम्। लोपस्येति। समानाधिकरणेन सुपस्त्यधिकारात् परसन्निधाने जायमानत्वेन परनिमित्तत्वमित्यभिमानः। वस्तुत एतावता

अचीति यणियङुवङो न सिध्यन्ति । अस्तु तर्हि न स्थानिवत् । अस्थानिवत्त्वे यङ्लोपे गुणवृद्धिप्रतिषेधः * । अस्थानिवत्त्वे यङ्लोपे गुणवृद्ध्योः प्रतिषेधो वक्तव्यः । लोलुवः पोपुवः सरीसृपो मरीमृज इति । नैष दोषः । न धातुलोप आर्धधातुक इति प्रतिषेधो भविष्यति । किं पुनराश्रीयमाणायां प्रकृतौ स्थानिवद्भवति आहोस्विदविशेषेण । कश्चात्र विशेषः । अविशेषेण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिः * । अविशेषेण स्थानिवदिति चेल्लोपयणादेशयोर्गुरुविधिर्न सिध्यति । श्लेष्मघ्नं पित्तघ्न दध्यत्र मध्वत्र । हलोऽनन्तराः संयोग इति संयोगसंज्ञा संयोगे गुर्विति गुरुसंज्ञा गुरोरिति प्लुतो न प्राप्नोति । द्विर्वचनादयश्च प्रतिषेधे * । द्विर्वचनादयश्च प्रतिषेधे वक्तव्याः । द्विर्वचनवरेयलोपे इति । क्सलोपे लुग्वचनम् * । क्सलोपे लुग्वक्तव्यः । अदुग्ध अदुग्धाः । लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये इति । हन्तेर्घत्वम् * । हन्तेर्घत्वं वक्तव्यम् । घ्नन्ति घ्नन्तु अघ्नन् । अस्तु तर्ह्याश्रीयमाणायां प्रकृता-

---

इत्युपादानात् साक्षादेव यस्याच् स्थानित्वेनोपात्तस्तस्यैव स्थानिवद्भावो न तु हलजादेशस्येत्यर्थः । किं पुनरिति । यत्र कार्ये स्थान्याश्रितः किं तत्रैव स्थानिवद्भाव उत यत्राप्यनाश्रित इति प्रश्नः । गुणविधिरिति । कार्यार्थत्वात् संयोगसंज्ञाया गुरुविधिरित्युच्यते । लोपयणादेशयोः स्थानी संयोगसंज्ञायां नाश्रीयते । द्विर्वचनादयश्चेति । द्विर्वचनादावपि स्थानी नाश्रीयते । अनचीति पर्युदासाश्रयणात्तत्सदृशस्य हलो द्विर्वचनादावाश्रयणं न त्वचः । एवं यलोपेऽपि । वरे त्वाकारलोपे विधीयमाने प्रकृतिराश्रितैवाचि क्ङितीति । भाष्ये तु वरेशब्दोऽपि पठितस्तत्रायं भावः । यङ एव समुदायस्य प्रत्ययत्वं न तदवयवस्याकारस्येत्यजादौ प्रत्यय आकारलोपविधानादत्राप्रसङ्ग एवेति । अदुग्धेति । क्सस्य अलोऽन्त्यस्येति लोपे कृते तस्य स्थानिवद्भावाद् झलो झलीति लोपो न स्यादिति लुग्वचनम् । अदुग्धहीत्येवमर्थस्त्ववश्यं वक्तव्यो वकारस्याझल्त्वात् । घ्नन्तीति । अल्लोप-

---

परनिमित्तत्वे पादयतस्येति लोपस्य परसन्नियोगेन विधीयमानस्य परनिमित्तत्वापत्तिरितीदमपि चिन्त्यम । परिहारान्तस्येत्स्येवात्रापि समाधिरिति तत्त्वम । उपादानादिति । यद्यप्यागस्येत्स्येतद्वारणार्थमावश्यकं तत्तत्र हि केवलहलो लोपस्तथापि व्याख्यानाच्च एवादेश इत्यन्ययोगव्यवच्छेदलाभ इति बोध्यम । साक्षादेवेति । अचो यत्र स्थानषष्ठीनिर्दिष्टत्वमित्यर्थः । एवं हि णिलोपस्य स्थानिवत्त्वं न स्यात्तस्माच्च एवादेशः प्रयोगे येत्स्यर्थेन तद्वारणमुचितम । किं पुनरिति । आश्रितस्थानिककार्यमेव स्थानिवद्भावेन प्राप्यते उत अनाश्रितस्थानिकं प्रतिबध्यते ऽपीति प्रश्नः । यद्यप्ययं विचारः प्राक् कृत एव भावाभावातिदेश इति सिद्धान्तश्च कृतस्तथापि अन्यवार्त्तिककारकृतवार्त्तिकव्याख्यानमिदमिति बोध्यम् । ननु संयोगसंज्ञेति वक्तव्ये किमुच्यते गुरुविधिरिति अत आह कार्येति । नन्वचि नेत्यर्थाद् द्विर्वचननिषेधे ऽस्यैव स्थान्याश्रयणमत आह पर्युदासेति । चिन्त्यमेतत् । वाक्वाक्क् इत्यादावसाने द्वित्वानापत्तेः । हलीत्येव वक्तुं युक्तत्वाच्चेत्याहुः । तस्मादज्भिन्नस्याश्रयणं नत्वच इति वक्तुं युक्तम् । वागित्यादावज्भिन्नो वर्णाभाव एवेति न दोषः । यङ एवेति । एवं सति पचद्वयेऽपि वरेग्रहणं न कार्यमित्यत्र तत्करणकथनं चिन्त्यमेव स्यात् । किं च तार्किकप्रत्ययस्वभावायापि प्रवृत्तिज्ञापनाय तदावश्यकमिति चिन्त्यम् । वरेयलोपेत्यत्रैकमेव निमित्तमित्यभिमानेन भाष्यमित्यन्ये । क्सस्येति । क्सस्याचीति क्सलोपे कृतेपि लुग्वक्तव्य इति वार्त्तिकार्थः । पक्षान्तरे तु क्स-

त्विति। ग्रहणेषु स्थानिवदिति चेज्जग्ध्यादिष्वादेशप्रतिषेधः *। ग्रहणेषु स्थानिवदिति चेज्जग्ध्यादिषु आदेशस्य प्रतिषेधो वक्तव्यः। निराद्य समाद्य। अदो जग्धिर्ल्यप् ति कितीति अदो जग्धिभावः प्राप्नोति। यणादेशे युलोपे त्वानुनासिकात्प्रतिषेधः *। यणादेशे युलोपे त्वानुनासिकात्वानां प्रतिषेधो वक्तव्यः। यलोप। वाय्वोरध्वर्य्वो। लोपो व्योर्वलीति यलोपः प्राप्नोति। उलोपः। अकुर्वि आशाम् अकुर्व्याशाम्। नित्यं करोतेः ये चेत्युकारलोपः प्राप्नोति। ईत्वम्। अलुनि आशाम् अलुन्याशाम् ई हल्यघोरितीत्वं प्राप्नोति। अनुनासिकात्व। अजज्ञि आशाम् अजज्ञ्याशाम्। ये विभाषेत्यनुनासिकात्वं प्राप्नोति। रायात्वप्रतिषेधश्च *। रायात्वस्य च प्रतिषेधो वक्तव्यः। रायि आशाम्। राय्याशाम्। रायो हलीत्यात्वं प्राप्नोति। दीर्घे यलोपप्रतिषेधः *। दीर्घे यलोपस्य प्रतिषेधो वक्तव्यः। सौर्ये नाम हिमवतः शृङ्गे यद्वान् सौर्यी हिमवानिति सौ इन्नाश्रये दीर्घत्वे कृते सूर्यतिष्येति यलोपः प्राप्नोति। अतो दीर्घे यलोपवचनम् *। अतो दीर्घे यलोपो वक्तव्यः। गार्गीभ्यां वात्साभ्याम्। दीर्घे कृते आपत्यस्य च तद्धिते ऽनातीति प्रतिषेधः प्राप्नोति। नैष दोषः। आश्रीयते तत्र प्रकृतिस्तद्धित इति। सर्वेषामेष परिहारः। उक्तं विधिग्रहणस्य प्रयोजनम्। विधिमात्रे

---

स्य स्थानिवत्त्वादनन्तरो नकारो न भवतीति घत्वाप्रसङ्गः। वचनसामर्थ्यात् व्यवधानाश्रयणे तु हननादिष्वतिप्रसङ्गः। निराद्येति। आदयतेर्णिलोपे कृते एकदेशविकृतस्यानन्यत्वादादेरेवायमिति जग्धिः प्राप्नोति। न च जग्धौ णिराश्रितः। आदिग्रहणाद् घात्यादिति वधादेशप्रसङ्गः। यणादेश इति। बहिरङ्गपरिभाषाऽनाश्रयणेनैतदुच्यते। अजज्ञीति। जन जनन इत्यस्माद् व्यत्ययेनाऽऽत्मनेपदम्। जनी प्रादुर्भाव इत्यस्माद्वा श्यन्। छान्दसत्वात् श्लुः। सौर्यीति। तेनैकदिगित्यण् ततो मत्वर्थीय इति। सौर्ये इत्यत्र तु यलोपो न प्राप्नोति यस्येत्यादौ श्यां प्रतिषेध इति वचनात्। सूर्यमत्स्ययोर्ङ्याम् इति परिगणनानाश्रयेणैतदुच्यते। गार्गीभ्यामिति। गोत्रस्त्रिया इति णः सङ्घाङ्कलक्षणेष्वित्यण् वा। अनातीति प्रसज्यप्रतिषेधाऽऽश्रयेण चोद्यं पर्युदासाश्रयेण तु सदृशतद्धिताश्रयेण परिहारः। सर्वेषामिति। आश्रीयमाणायां प्रकृतावित्यस्मिन्नेव पक्षे आश्रीयमाणे विधिग्रहणादधिकाद् यत्नात्स्वाश्रयनिवृत्त्यर्थात्तु सिध्यन्तीति भावः।

---

लोपेनैव सिद्धमित्यभिमानः। तत्राप्यवश्यं लुग्वक्तव्य इत्याह अदुहन्नहीति। भाष्ये। हनस्तोऽस्यादि। गमहनेत्यनेनाल्लोपः। घत्वं होहन्तेरित्यनेन। भाष्ये [ जग्ध्यादिष्वादेशस्येति ]। जग्ध्यादिषु विषयेषु आदेशस्यार्थात्तद्रूपस्येत्यर्थः। एकदेशविकृतस्येति। अन्तरङ्गत्वाद्वृद्धौ कृतायां णिलोप इति आदित्यस्यानादिष्टा- वचः पूर्वत्वमस्त्येव ण्यल्लोपाविति तु णिच्च स्थानिकवृद्ध्यादेर्बाधकम्। उक्तरीत्या वा तस्य तत्त्वम्। वार्त्तिके युलोपेति। यकारोकारयोर्लोप इत्यर्थः। अकुर्व्याशामित्यादौ वाक्यसंस्कारपक्षे परस्य यणादेशे तत्तत्कार्यप्राप्तिरिति बोध्यम्। बहिरङ्गेति। वाय्वोरित्यत्र यथा ऽस्य न प्राप्तिस्तथोक्तमेवमन्यत्रापि बोध्यम्। आत्मनेपदमिति। इडिति शेषः॥ नन्वणन्तं सौर्ये इत्येवोदाहियतामत आह सौर्ये इत्यत्रेति। यस्येति चेत्याशाविति। आदिना सूर्यतिष्येति यलोपः। श्याम् ङीप्रत्यये। अल्लोपस्यासिद्धत्वन्तु न व्याश्रयत्वात्। गार्गीभ्यामित्यत्र गार्ग्य आ भ्यामिति स्थिते पूर्वं सुपि चेति दीर्घे यलोपाप्राप्तिरिति बोध्यम्। पर्युदासाश्र-

स्थानिवद्यथा स्यादनाश्रीयमाणायां प्रकृताविति । अथवा पुनरस्त्वविशेषेण स्थानिवदिति। ननु चोक्तम् अविशेषेण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिः। द्विर्वचनादयश्च। क्सलोपे लुग्वचनम्। हन्तेर्घत्वमिति। नैष दोषः। यत्तावदुच्यते। अविशेषेण स्थानिवादिति चेल्लोपयणादेशे गुरुविधिरिति। उक्तमेतत्। न वा संयोगस्यापूर्वविधित्वादिति। यदप्युच्यते द्विर्वचनादयश्च प्रतिषेधे वक्तव्या इति। उच्यन्ते न्यासएव। क्सलोपे लुग्वचनमिति। क्रियते न्यास एव। हन्तेर्घत्वमिति सप्तमे परिहारं वक्ष्यति ॥

न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ५८

पदान्तविधिं प्रति न स्थानिवदित्युच्यते। तत्र वेतस्वानिति रुः प्राप्नोति। नैष दोषः। भसंज्ञा ऽत्र बाधिका भविष्यति। तसौ मत्वर्थइति। अकारान्तमेतद्भसंज्ञां प्रति तु सकारान्तम्। ननु चैवं विज्ञायते यस्संप्रति पदान्त इति। कर्मसाधनस्य

---

अत एव पक्षान्तरोपन्यासः। अथ वेति। न वा संयोगस्येति। संयोगसंज्ञायाः समुदायाश्रयत्वादपूर्वविधित्वम्। उच्यन्तइति। अत एव लिङ्गादविशेषेण स्थानिवद्भावः। क्रियत इति। अबुद्ध्यर्थमवश्यकर्तव्यमेवेति भावः। सप्तम इति। श्रुतिकृतमानन्तर्यमाश्रीयते स्थानिवद्भावकृतं तु व्यवधानं वचनसामर्थ्यादविघातकम् ॥ ५७ ॥

न पदान्त ॥ वेतस्वानिति। भावसाधनविधिशब्दाश्रयेणोच्यते वेतसशब्दात् कुमुदनडवेतसेभ्यो ड्मतुमिति ड्मतुपि टिलोपे कृते स्वादौ पूर्वं पदमिति पदसंज्ञायां सकारः पदान्तत्वं प्रतिपद्यत इति पदान्तताया विधीयमानत्वात् स्थानिवत्त्वनिषेधाद्रुत्वप्रसङ्गः। तसौ मत्वर्थ इति। तदस्मिन्नस्तीत्यत्रैवार्थे ड्मतुप् न निर्वृत्तादिषु अनभियणे त्विति। आङ्गिनत्वेन प्रकृत्याश्रयणात्स्थानिवत्त्वप्रवृत्त्या आङ्गिनत्वसत्त्वेन यलोप इति भावः। संयोगसंज्ञाया इति। अस्याशय उक्तः। वस्तुतः प्लुतस्य त्रैपादिकत्वात् पूर्वत्रासिद्धे न स्थानिवदित्यनेनापि इदं सुसाधम्। अत एव लिङ्गादिति। न च पुत्रमात्समन्तादत्तुं शीलं यस्याः पुत्रादिनीत्यादौ स्थानिवत्त्वान्नादिनीत्यस्याप्रवृत्तौ द्वित्वं प्राप्नोति तद्वारणाय द्विर्वचनग्रहणं कयमभावानिर्देशो ज्ञापकमिति वाच्यम्। एतद्भाष्यप्रामाण्येन तस्यानभिधानात्। शीघ्रोपस्थितिकत्वेनाङ्ग्रहितादिनीशब्दस्यैव तत्र ग्रहणाच्चेति दिक् ॥ ५७ ॥

नपदान्तद्वि ॥ ननु स्थानिवत्त्वनिषेधं विना सस्य पदान्तत्वेनासिद्धेस्तस्य रुत्वसम्पादके पदत्वे स्थानिवत्त्वस्य दुर्वारत्वात् सान्तस्य पदत्वाभावेन कथमत्र रुत्वप्राप्तिरत आह भावेति। पदान्तेति च भावप्रधानो निर्देश इत्यपि बोध्यम्। इदं चिन्त्यम्। द्विर्वचनादिसाहचर्येण पदान्तपदार्थस्य शास्त्रीयस्यैव ग्रहणौचित्यात्। भाष्यं त्वेवं व्याख्येयम्। रुत्वस्य पदचरमावयवत्वेन तत्र कर्तव्ये भावसाधनविधिशब्दाश्रयणे टिलोपस्य स्थानिवत्त्वनिषेधाद्रुत्वं प्राप्नोतीत्यर्थः। यद्यपि पदसंज्ञा न पदचरमावयवो नापि पदान्तस्थाने विधिस्तथापि तस्याः कार्यत्वात् कार्यस्य च रुत्वस्य तत्त्वान्न दोषः। पदचरमावयवसाधकस्यापि तत्त्वेन ग्रहणमित्याशयः। सिद्धान्त्येकदेश्याह ( भसंज्ञात्रेति )। भत्वे प्राप्तस्थानिवद्भावस्यापि सान्तनिष्ठपदत्वाप्रतिबन्धद्वारा रुत्वसम्पादकत्वेन भत्वस्यापि पदान्तग्रहणेन ग्रहणात्तत्रापि स्थानिवत्त्वनिषेध इति सान्तनिष्ठभत्वेन तन्निष्ठपदत्वबाध इति भावः। न पदान्तसूत्रदृष्ट्या त्रिपादी तु नासिद्धा। जशादिग्रहणात्। कैयटोक्तरीत्या पूर्वपक्षयोजने ऽस्यायं भावः। भत्वे स्थानिवद्भावस्य सकारनिष्ठपदान्तत्वसम्पादकतया परम्परया भसंज्ञाया अपि पदान्तत्वसम्पादकत्वेन पदान्तत्वमिति तस्यापि निषेध इति समानावधिकत्वाद्भत्वेन पदत्वबाध इति। एवं परम्परया पदान्तत्वसम्पादकस्यापि पदान्तविधिशब्देन ग्रहणे मदुक्तरीत्यैव पूर्वपक्षयोजना ऽप्युचिता। ननु ड्मतुपोर्थान्तरेऽपि विधानात्कथं सर्वत्र भत्वमत आह अनभिधानादिति। मतु-

विधिशब्दस्योपादाने एतदेवं स्यात्। अयं च विधिशब्दो ऽस्त्येव कर्मसाधनः। विधीयत इति विधिरिति। अस्ति च भावसाधनो विधानं विधिरिति। तत्र भावसाधनस्य विधिशब्दस्योपादाने एष दोषो भवति। इदं च ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै धकारस्य जश्त्वं प्राप्नोति। अस्ति पुनः किं चिद्भावसाधनस्य विधिशब्दस्योपादाने सतीष्टं संगृहीतम्। आहोस्विद्दोषान्तमेवेति। अस्तीत्याह। इह कानि सन्ति यानि सन्ति कौ स्तः यौ स्त इति। यो ऽसौ पदान्तो यकारो व-

---

धानादित्येतदाश्रित्यैतदुच्यते। अकारान्तमिति। भसंज्ञां प्रति स्थानिवत्त्वनिषेधाऽभावात् सकारान्तत्वाभावान्नास्ति भसंज्ञा पदान्तत्वे तु विधीयमाने स्थानिवत्त्वनिषेधात् सकारान्तस्य पदत्वाद्रुत्वप्रसङ्गः। ननु चेति। स्थानिवत्त्वनिषेधाद्विना यः सिद्धः पदान्तस्तस्य विधौ स्थानिवत्त्वनिषेधः। यथा कौ स्तः कानि सन्तीति। इह तु सकारः स्थानिवत्त्वनिषेधाद्विना पदान्तत्वेनाऽसिद्ध इति भवत्येव स्थानिवद्भाव इत्यपदान्तत्वात्सकारस्य रुत्वाऽभावः। ब्रह्मबन्ध्वेति। ब्रह्मबन्धुशब्दादूङ् उ ऊ [illegible]रेकादेश आदिवद्भावादूङ्ग्रहणेन गृह्यत इति तस्मिन् स्वादिष्विति पदसंज्ञायां [illegible]कारस्य पदान्तता विधेयेति स्थानिवत्त्वनिषेधाज्जश्त्वं स्यात्। भसंज्ञां तु प्रत्येकादेशस्य स्थानिवत्त्वादूकारान्तमेतदिति भिन्नावधिकत्वाद्भपदसंज्ञयोर्नास्ति बाध्यबाधकभावः। यथादेशोच्चारणं चातन्त्रम्। एकादेशस्यैवोदाहरणत्वात्। कानि सन्तीति। पक्षद्वयसाधारणमिदं प्रयोजनम्। भावसाधनपक्षेपि सिध्यत्येवेति तूपन्यस्तम्। यकार इति। यकारवकारौ विधीयमानावेव पदान्तौ भवत इत्यस्ति पदान्ततया विधानम्। इदानीमसाधारणं

---

शब्देन प्रसिद्धत्वाद् मतुप एव ग्रहणमिति भावः। तत्र पूर्वपक्ष्याह। (अकारान्तमेतदिति)। साक्षात्परम्परया वा पदान्तकार्यप्रतिबन्धकस्य प्रापकस्य वा निषेधे परम्परा पदान्तपदे उपस्थिते पदत्वद्वारिकैव नान्यद्वारिकेति भत्वेन निषेधे इति सान्तत्वाभावात्तत्प्राप्तिरिति भावः॥ सिद्धान्त्येकदेश्याह। (ननु चेति)। अत्र पदस्योद्देश्यतयैतत्साध्यपदत्ववत्समुदायान्त्यकार्ये नायं निषेध इति पदत्वेपि स्थानिवत्त्वात् सान्तस्य पदत्वाभावेन रुत्वाभावः सिद्ध इति भावः। तत्र किमपेक्षया सम्प्रतीत्यत आह स्थानिवत्त्वनिषेधादिति। एतत्साध्यपदत्ववतो ऽप्रोद्देश्यत्वासम्भवः। भावसाधनेपि विधेयस्य पदचरमावयवत्वं स्थानिद्वारैव वाच्यमिति स्थानिनः स्थानिवद्भावेन तत्त्वाभावे विधेयस्य सुतरान्तदभाव इति भावः। स्थानिवत्त्वनिषेधं विना यः पदत्वेन सिद्धस्तस्य चरमावयवे कर्त्तव्य इत्यक्षरार्थः। सम्प्रतिपदशब्देन समस्तनान्तशब्दस्य षष्ठीतत्पुरुष इति बोध्यम्। यद्यपि तस्य भाव इत्यादौ तत्साध्यत्वप्रत्ययान्तादेरप्युद्देश्यता तथाप्यत्र लक्ष्यानुरोधादेवमर्थकत्वमिति तात्पर्यम्। पूर्वपक्षी उक्तमाशयमजानानः (सम्प्रतीति) पदान्तस्य विशेषणं मन्यमान आह। भाष्ये (कर्मसाधनस्येति) सम्प्रति पदान्तस्य स्थाने विधाविति हि तदर्थः। तत्र भावसाधनस्येति। कर्मसाधनत्वे हि द्विर्वचनादिभिः सामानाधिकरण्यं पदान्तेन वैयधिकरण्यञ्च स्यात्। भावसाधने पदचरमावयवद्विर्वचनादिकर्मकविधाने इत्यर्थः। तत्र हि पदचरमावयवत्वेन सिद्धकर्मके विधाने इति वक्तुमशक्यं सिद्धत्वे विधानवैयर्थ्यात्। एवञ्चाकारान्तमेतदिति प्रतीकोक्तयुक्त्या पदत्व एव स्थानिवत्त्वनिषेधात्सान्तमेव पदत्वं प्रतिभत्वं तु निषेधाभावाद् अकारान्तं भत्वं प्रतीति स्यादेव रुत्वमिति भावः। जश्त्वं प्राप्नोतीति। झलाञ्जशोन्त इत्यस्य पदचरमावयवविधायकत्वात्। जश्ग्रहणन्तु झलाञ्जशीति जश्त्वं तन्निषेधार्थम्। एकादेशस्यैवेति। अत एवोभयत आश्रये नेत्यनेन वक्ष्यमाणं समाधानं सङ्गच्छते। सिद्धान्त्येकदेश्याह। (अस्ति पुनरिति) पूर्वपक्ष्याह (इह कानीति)। इह पदान्त एव यकारादिर्विधेय इति भावसाधनेपि सिध्यतीति

कारो वा श्रूयते स न श्रूयते । षडिकश्चाऽपि सिद्धो भवति । वाचिकस्तु न सिध्यति । अस्तु तर्हि कर्मसाधनः । यदि कर्मसाधनः, षडिको न सिध्यति । अस्तु तर्हि भावसाधनः । वाचिको न सिध्यति । वाचिकषडिकौ न संवदेते । कर्तव्यो ऽत्र यत्नः । कथं ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै । उभयत आश्रयणे ना-

---

प्रयोजनमाह षडिक इति । षडङ्गुलिशब्दाद् बह्वचो मनुष्यनाम्नष्ठज्वेति ठचि कृते ठाजादावूर्ध्वमिति ङ्गुलिशब्दस्य लोपे यस्येति लोपे षषित्ययं शब्दोन्तर्वर्तिन्या विभक्त्या सिद्धः पदत्वेनेति पदान्ततया अविधानान्नास्ति स्थानिवत्त्वनिषेध इत्यकारलोपस्य स्थानिवद्भावादकारान्तस्य भसंज्ञा । पदसंज्ञा त्वन्तर्वर्तिविभक्त्याश्रयेण । षकारान्तस्येति सिद्धं जश्त्वम् । कर्मसाधने तु षषः षकारः पदान्तत्वेन सिद्ध इति स्थानिवत्त्वनिषेधात् षकारान्तस्यैव भसंज्ञेति तुल्यावधिकया भसंज्ञया पदसंज्ञाया एकसंज्ञाधिकाराद् बाधनाज्जश्त्वासिद्धिः । वाचिकस्त्विति । चकारस्य पदान्तत्वात्कुत्वप्रसङ्गात् । कथं पुनः षडिकस्य सिद्धिः । यावताऽयं योसौ पदान्तो षकार इति तद्वदिहापि डकारस्य पदान्तस्य विधेयत्वात् पदान्तताया विधिरिति स्थानिवत्त्वनिषेधप्रसङ्गः । नैष दोषः । पूर्वमेव जश्त्वेन डकारस्य निष्पन्नत्वान्नेदानीं विधिरिति भावसाधने षडिकसिद्धिः । कर्मसाधने तु डकारस्य पदान्तत्वेन प्रसिद्धस्य भत्वात्पदत्वनिवृत्तौ षकाररूपापत्तिर्विधेयेति स्थानिवत्त्वनिषेधात् तुल्यावधिकया भसंज्ञया पदसंज्ञाया बाधनाज्जश्त्वनिवृत्तौ षडिकासिद्धिः । न च भावसाधने षकारापत्तिर्भाव्येति शक्यते वक्तुं तस्या अपदान्तरूपत्वात् पदान्तत्वे हि जश्त्वं स्यात् । न च जश्त्वविधिनिमित्तस्थानिवत्त्वनिषेधः । यत्र स्थानिवत्त्वनिषेधाज्जश्त्वं विधीयते सन्धिर्बभ्वामिति सोऽस्य विषयः । इह तु पूर्वमेव जश्त्वं कृतं स्थानिवत्त्वनिषेधात्तु तन्निवृत्तिराशङ्क्यते पूर्वत्रासिद्धे न स्थानिवदित्यस्याप्ययमविषयः । नह्यत्र पूर्वत्रासिद्धीयं किंचित्कार्यं विधेयम् । कर्तव्योत्र यत्न इति । एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्य इति वाचिकः सिद्धः । षडिकस्तु षषष्ठाजादाविति लोपे यस्येति लोपे च सिद्धः । उभयत इति ।

---

भावः । असाधारणमिति । भावसाधनपक्षमाश्रसाध्यमित्यर्थः । भाष्ये ( षडिकश्चापीति ) अचैकादेशाल्लोपान्तसपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया ऽसिद्धत्वेन जश्त्वाप्रवृत्तिस्तदनन्तरन्त्यल्लोपस्य स्थानिवत्त्वप्रसक्तिस्तत्र कर्मसाधने यस्येति लोपे इकिनिमित्तकत्वेन समासान्तर्वर्तिविभक्तिनिमित्तकपदत्वस्यापि निवृत्तेः षडिकासिद्धिः । न च भत्वे स्थानिवत्त्वमल्लोपस्येति न समानावधिकत्वं भत्वपदत्वयोरिति वाच्यम्, साक्षात्परम्परया वा पदान्तस्थानिकाविधिप्रापकप्रतिबन्धकस्थानिवत्त्वस्य निषेधेन भत्वेपि तन्निषेधात् । पदान्तत्वेन सिद्धस्य विधावित्यर्थे पदत्वस्य सिद्धत्वेन तद्द्वारकपरम्परया वक्तुमशक्यत्वेनान्यद्वारिकाया अपि ग्रहणात् । भावसाधनत्वे तूपस्थितपदत्वद्वारिकैव परम्परा गृह्यते इति भत्वे निषेधाभावेन स्थानिवत्त्वादकारान्ते भत्वेपि षान्ते पदत्वस्याव्याघातेन न दोष इत्याशयः । कैयटे पदान्ततायाः अविधानादिति । पदत्वस्याविधानेन धर्मविशिष्टत्वेनापि पदान्तस्याविधानादिति भावः । सिद्धइति । जश्त्वे कार्ये इति शेषः । सिद्धान्त्येकदेश्याह वाचिकस्त्विति ) । चकारस्येति । वाचिकेपि वागाशीर्दत्तशब्दात् ठचि ठाजादाविति शीर्दत्तशब्दलोपे यस्येति लोपे पूर्वोदाहरणे डत्ववदत्रापि कुत्वापत्तिरिति भावः । एवं मदुक्तरीत्या भाष्यस्य सामञ्जस्ये कथं पुनरित्यादिर्नह्यत्र पूर्वत्रासिद्धीयं किञ्चित्कार्यं विधेयमित्यन्तः कैयटग्रन्थः । स्फुटार्थत्वाच्च न व्याख्यातः । तथाहि । पूर्वमेव डस्य निष्पन्नत्वादित्यसङ्गतं सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया तदप्राप्तेः किं च षकाररूपापत्तिर्न शास्त्रीया । पदचरमावयवस्य शास्त्रीयस्यैव

स्तादिवदिति। कथं वेतस्वान्। नैवं विज्ञायते पदस्यान्तः पदान्तः पदान्तस्य विधिः पदान्तविधिः। पदान्तविधिं प्रतीति। कथं तर्हि पदे अन्तः पदान्तः पदान्तस्य विधिः पदान्तविधिः पदान्तविधिं प्रतीति। अथवा यथैवान्यान्यपि पदकार्याण्युपप्लवन्ते रुत्वं जश्त्वं च एवमिदमपि पदकार्यमुपप्लोष्यते। किम्। भसंज्ञा नाम। वरे यलोपविधिं प्रति न स्थानिवद्भवतीत्युच्यते तत्र ते ऽप्सु यायावरः प्रवपेत पिण्डान् अवर्णलोपविधिं प्रति स्थानिवत्स्यात्। नैष दोषः। नैवं विज्ञायते वरे यलोपविधिं प्रति न स्थानिवदिति। कथं तर्हि। वरे अयलोपविधिं प्रतीति। किमिदमयलोपविधिं प्रतीति अवर्णलोपविधिं प्रति यलोपविधिं च प्रतीति। अथवा योगविभागः करिष्यते वरे लुप्तं न स्थानिवत्। ततो यलोपविधिं प्रति न स्थानिवदिति। यलोपे किमुदाहरणम्। कण्डूयतेरप्रत्ययः कण्डूरिति। नैतदस्ति क्वौ लुप्तं न स्थानिवत्। इदं तर्हि प्रयोजनम्। सौरी बलाका। नैतदस्ति

---

यस्मात् स्वादिविधिस्तस्यादौ पदमिति पूर्वपरोभयाश्रयणम्। पदेन्त इति। न च इमतुप्प्रत्ययः पदम्। एवं षडिके इकप्रत्ययो न पदमिति नास्ति स्थानिवत्त्वनिषेधः। यथैवेति। यचि भमित्यत्र तसौ मत्वर्थ इत्यत्र च पदमिति वर्तते तेन पदं सन्नं भवतीति लब्धे पदत्वे तन्निबन्धनरुत्वप्रतिबन्धार्थो भसंज्ञा तद्विषयत्वात् पदान्तविधिरिति स्थानिवत्त्वनिषेध इति मत्वाद्रुत्वाभावः सिद्धः। कण्डूयतेरिति। क्यजन्तात् क्विप् यगन्तात्तु क्विब्न भवति। उक्तं हि भाष्ये नैतेभ्यः क्विब् दृश्यत इति। सौरीति। एको ण्यकारलोपो द्वितीय ईकारे तयोः स्थानिवत्त्वाद्यकारस्योपधात्वं न स्यात्। स्थानिवत्त्वनिषेधे द्वितीयलोपस्य समानाश्रयत्वादसिद्धत्वादाभ

---

प्रतीत्युदाहृतत्वादित्याशयः। सिद्धान्त्याह (कर्तव्योत्रेति)। पञ्चमे वक्ष्यमाणं यत्नं दर्शयति एकेति। तथा चाज्झलादेशत्वाद्भाविके भत्वेपि न स्थानिवत्त्वमिति भावः। एवञ्च भावसाधनपक्षोप स्थितः। पूर्वपक्ष्याह (कथं ब्रह्मबन्ध्वेति)। सिद्धान्त्येकदेशी उक्तमपि यः संप्रति पदान्त इत्येवं रूपं सिद्धान्तं परेण गृहीतत्वात्पक्षानुरूपबलिन्यायेनाह। [उभयत इति] तद्व्याचष्टे यस्मात्स्वादिविधिरिति। अत एवात्र नेकदेशविकृतन्यायेन धान्तस्य पदत्वसम्भावना। उकारान्तादूङ्विधानेनाक्तपरिमाणसंज्ञात्वेन दुर्लभत्वात्। उभयत आश्रयणे इत्यस्यैकदेशिमतत्वाच्च। एतच्चान्तादिवत्सूत्रे वक्ष्यते। पूर्वपक्ष्याह (कथं वेतस्वानिति)। अथ वेतस्वानित्येवंजातीयकानामेतदनुदाहरणत्वमेवेति बोधयितुं वास्तवं सिद्धान्तमाह नैवमिति। तद्व्याचष्टे न च इमतुबिति। एवं ब्रह्मबन्धूशब्दे ऊकारो न पदमिति बोध्यम्। नन्विदमयुक्तं गतिकारकोपपदानां सुबुत्पत्तेः पूर्वं समासे ऽसुबन्तत्वेन सुबन्तेन समासे उत्तरपदत्वं चेति प्रत्ययलक्षणनिषेधेन चोत्तरस्यापदत्वाद् गोचेत्यादावल्लोपस्य स्थानिवत्त्वेनावङापत्तेरिति चेन्न उत्तरपदस्य कार्यित्वे एव प्रत्ययस्य तन्निषेधप्रवृत्तेः। अत्र चेदं भाष्यमपि मानम्। सुबुत्पत्तेः पूर्वं समासस्य चैतद्विषये ऽनिष्टत्वान्न प्रवृत्तिरिति भावः। एवञ्च विग्रहद्वयप्रदर्शनेन पदचरमावयवे कर्तव्ये परपदस्याजादेश एव न स्थानिवदिति भाष्ये ध्वनितं कानि सन्तीत्याद्येवोदाहरणम्। एवञ्च पूर्वसूत्रे पराविधाविति प्रयद्वक्रस्यकैयटमन्थो भोभगोइति सूत्रस्थकैयटग्रन्थश्च चिन्त्य एव। एवं षडिक इत्यादिरपि चिन्त्यम्। इकस्य पदत्वाभावेपि कृपालिशब्दाकारयोर्लोपं तस्य स्थानिवद्भावेन पदत्वात्तस्मिन्नन्तस्य विधिसत्त्वेन दोषादिति दिक्। भाष्ये (पदस्यान्त) इति पूर्वपक्षे पूर्वपक्ष्यभिमते एकपदस्याजादेशस्य स्थानिवत्त्वनिषेधेपि न दोष इति प्रौढया प्रतिपादयितुं भसंज्ञात्र बाधिका भविष्यतीति स्वोक्तेरेकदेश्याशयमाह। (अथवेति)। यः संप्रति पदान्त

उपधात्वविधिं प्रति न स्थानिवत्। इदं तर्हि प्रयोजनम्। आदित्यः। नैतदस्ति पूर्वत्रासिद्धे न स्थानिवत्। इदं तर्हि कण्डूतिर्वल्गूतिः। नैतदस्ति प्रयोजनम्। कण्डूया वल्गूया इति भवितव्यम्। इदं तर्हि कण्डूयतेः क्तिच्। ब्राह्मणकण्डूतिः। क्षत्रियकण्डूतिः। प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत् *। प्रतिषेधे स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवादिति वक्तव्यम्। स्वर, आकर्षिकः। चिकीर्षकः। जिहीर्षकः। यो ह्यन्य आदेशः स्थानिवदेवासौ

---

लोपस्य व्याश्रयत्वात्सिद्धत्वाद् यकारस्य उपधात्वाल्लोपः सिध्यति। आदित्य इति। अदितेः सास्य देवतेत्यत्रार्थे ण्यस्ततो भवादावर्थे द्वितीयो ण्यः। हलो यमां यमीति लोप इष्यते स च स्थानिवत्त्वनिषेधात् सिध्यति। ब्राह्मणकण्डूतिरिति। षष्ठीसमासः कर्मधारये कण्डूतिशब्दस्य पूर्वनिपातप्रसङ्गः। आकर्षिक इति। चरत्यर्थे आकर्षात् ष्ठलिति ष्ठल्। यस्येति लोपस्य स्थानिवत्त्वात् ककाराकारस्योदात्तत्वं न स्यात्। कारक इत्यादौ च स्वरविधौ व्यञ्जनमविद्यमानवदिति व्यञ्जनस्याविद्यमानवत्त्वादनन्तरस्य

---

इत्येतत्तु न शब्दमर्यादालभ्यमिति भावः। अस्य पक्षस्य कैयटोक्तव्याख्या चिन्त्या। तावतापि भसंज्ञाबाधः पदान्तविधित्वानुपपादनात्। किं च यथा कारकाधिकारे कारकं सत् कर्मेति व्याख्यानेन तयोः समावेश उक्तस्तथात्रापि स्यात्। न हि भत्वपदत्वयोः समावेश इष्टः। तस्मादेवं व्याख्येयम्। यथा कुत्वजश्त्वादीनां साक्षात्प्रापकः प्रतिबन्धको वा स्थानिवद्भावः प्रतिबध्यते तथा भसंज्ञाविषयातिदेशस्यापि परम्परया तत्त्वाद् निषेध इति। यथैवान्यानि पदकार्याणि पदचरमावयवकार्याणि कुत्वजश्त्वादीनि तज्ज्ञापकपदसंज्ञारूपं चात्र सूत्रे उपलक्ष्यन्ते पदान्तविधिशब्देन गृह्यन्ते। पदचरमावयवप्रापकाण्यपि तत्त्वेन गृह्यते। एवमिदमपि भसंज्ञारूपमपि पदकार्ये परम्परया पदचरमावयवप्रापकं प्रतिबन्धकं वा पदचरमावयवत्वेन गृह्यते इत्यर्थः। अयं भावः। यथा पदान्तपदे उपस्थितत्वात्पदत्वद्वारिका परम्परा गृह्यते तथा पदत्वबाधकतया भत्वस्यापि प्रत्यासन्नत्वेन तद्द्वाराणि पदचरमावयवविषयस्यातिदेशस्य प्रतिषेध इति। षड्क्षि तु षषष्ठाजादिवचनात्सिद्धमिति द्वितीयादचकारूर्ध्वं लोपविधायकवचनप्रामाण्यात्तद्विषये न भत्वद्वारा पदचरमावयवसंपादकस्थानिवत्त्वप्रतिषेध इति न दोषः। धांचक्रे त्वेवं न दोषः। उत्तरपदलोपविधानात्। पञ्चमे चैतदुपपादयिष्यते। एवञ्चामलकी, मटी सारसीत्यादौ अशस्त्वादिप्रसक्तरेव नेति बोध्यम्। यद्यपि पूर्वत्रासिद्धे न स्थानिवदिति निषेधोऽप्राप्नोति तथापि विधिशब्दो भावसाधनोऽन्तशब्दश्चरमावयववाचीत्यादि सिद्धान्तान् बोधयितुं पूर्वत्रासिद्धे इत्यादावपि साक्षात्परम्परया प्रापकप्रतिबन्धकस्य निषेध इत्यादि बोधयितुं पदेऽन्त इति सप्तमीसमासेन चैतस्यानित्यत्वो न प्राप्नोति निषेधवारणेन पूर्वत्रासिद्धे नेत्यत्र पदचरमावयवविधायकानिरुक्तस्यैव ग्रहणमेवं ज्ञापयेनेति बोधयितुमुपन्यास इति बोध्यम्। भाष्ये (अवर्णलोपविधिमिति)। आतो लोप इटि चेत्येतं प्रतीत्यर्थः। एवञ्च वेत्यलोपग्रहणे कृतेपि यायावर इत्यस्यासिद्धिरिति शङ्का। यातिरित्यस्यात्रासिद्धेः सिद्धान्तमाह (पृथग्वेति) यलोपे किमिति। यायावरे यलोपस्य वरे इत्यनेनैव सिद्धत्वात्प्रश्नः। क्वौ लुप्तमिति। यद्यप्यप्रत्ययशब्देन विजप्युच्यते तथापि तस्य क्वाचित्कत्वान्न दोषः। क्विग्रहणं विचोऽप्युपलक्षणमित्यन्ये। कैयटे उक्तं हीति। कण्ड्वादिभ्यो यगित्यत्र भाष्ये। उपधात्वविधिं प्रतीति। प्रत्ययविधावित्यनाश्रित्येदम्। तत इति। आदित्यशब्दादित्यर्थः। अदितेरपत्यण्यान्तादेवतार्थे ण्य इति तु नोक्तम्। अपत्यस्येत्यस्य प्राप्त्या पूर्वत्रासिद्धे इत्युत्तरग्रन्थासङ्गतेः। तस्मादेतत्खण्डनेनैतज्ज्ञानेनैवेति बोध्यम्। कण्डूतिशब्दस्येति। विशेषणत्वादित्यर्थः। न चाचाल्लोपस्य स्थानिवत्त्वादुवङ् एव स्यादिति वाच्यम्। जाते तन्नोठा सिद्धेः। ऊठि तु न स्थानिवत्त्वमनादिष्टादचः पूर्वत्वाभावात्। अस्मादेव भाष्यप्रयोगात्स्थानिद्वारकं तदाश्रयणं क्वाचित्कमित्याहुः। ननु लितीति वचनसामर्थ्यात्स्यादेवेत्यत आह कारकइतीति। अत्र वचनं सावकाशमिति भावः। स्वरविधौ

भवति पञ्चारत्न्यो दशारत्न्यः। स्वर। दीर्घ, प्रतिदीव्ना प्रतिदीव्ने। यो ह्यन्य आदेशः स्थानिवदेवासौ भवति। कियोः। गियोः। दीर्घ। यलोप, ब्राह्मणकण्डूतिः। क्षत्रियकण्डूतिः। यो ह्यन्य आदेशः स्थानिवदेवासौ भवति। वाय्वोरध्वर्य्वोरिति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। इह हि लोपो ऽपि प्रकृत आदेशो ऽपि विधिग्रहणमपि प्रकृतमनुवर्तते दीर्घादयो ऽपि निर्दिश्यन्ते। केवलं तत्राभिसम्बन्धमात्रं कर्तव्यम्। स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवदिति। आनुपूर्व्येण सन्निविष्टानां यथेष्टमभिसंबन्धः शक्यते कर्तुम्। न चैतान्यानुपूर्व्येण संनिविष्टानि। अनानुपूर्व्येणापि संनिविष्टानां यथेष्टमभिसंबन्धो भवति।

---

स्वरभाजः संभवादन्यव्यवधाने न स्यात् यत्र तु व्यवहितेपि पूर्वशब्दो वर्तते तत्राप्यव्यवधिमतोरानन्तर्यासंभवादन्तरालस्थान् सतोप्यर्थाननादृत्य व्यवहारः। यत्र त्वानन्तर्यसंभवस्तत्र व्यवहितं नैवाश्रीयते। ह्रलो लित्कारणाद् व्यवधानेपि भविष्यतीति चेत् आकारस्यापि पक्षे स्यादिति स्थानिवत्त्वनिषेधः। प्रतिदीव्नेति रेफवकारान्तस्य भस्य न मकुर्छुरामिति दीर्घत्वनिषेध इत्यत्र न प्रवर्तते। इह हि लोपोपीति। प्रकृतः। प्रस्तुतः। आनुपूर्व्येणेति। तत्र पदार्थानां समन्वयावगमात्। इह तु लोपो यशब्देन संबद्धः। सकृच्च श्रुतो द्विधा चास्योपयोग इष्यते स्वरदीर्घलोपाश्च विक्षिप्ताः कथं समुच्चीयन्तामिति भावः। अनानुपूर्व्येणापीति। लोपशब्द आवर्तते। तत्र लोपाजादेश इति ज्ञायते। तत्र द्विर्वचनविधौ लोपाजादेशस्यासंभवात्लवणादिविधौ तु तस्यैव सम्भवाच्च तत्रादेशस्य लोपो विशेषणम्। पदान्ते तु यद्यपि सम्भवव्यभिचारौ स्तस्तानि सन्ति कानि सन्तीति तथापि नपदान्तेति योगविभागात् तद्विधौ लोपो न विशेषणमिति पारिशेष्यात् स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति विज्ञायते। स्मृतिशास्त्रत्वाच्चास्य एतावन्तोर्थाः संनिहिता इत्येतावत्प्रतीयते। ग्रहणकवाक्यास्तु

---

विति। इत्स्वरप्राप्तेः सत्त्वादिति भावः। अन्यव्यवधाने इति। अव्यवधाने इत्यर्थः। अव् व्यवेति वा पाठः। श्रुततया तदनुच्चार्ययेन तदाश्रयन्यापादयितुमशक्यस्वात्तस्य स्यादिति नापादितं स्वरविधौ स्थानिवत्त्वाभावाच्च। ननु लितोत्यत्र प्रत्ययात्पूर्वमित्यनुवृत्ते पूर्वग्रहणस्य सत्त्वान्निर्दिष्टपरिभाषानुपस्थितिः पूर्वशब्दश्च व्यवहितेपीति न दोषो ऽत आह यत्र त्विति। तत्राप्यव्यवधानारोपेणैव प्रयोगः पूर्वादीनां चाव्यवहिते एव शक्तिरिति भावः।यत्र त्विति। मुख्ये संभवति। आरोपितग्रहणे मानाभाव इति भावः। परन्त्विदं चिन्त्यम्। तस्मिन्निति सूत्रे निर्दिष्टग्रहणात्। तस्मादुत्तरांशविकलपरिभाषोपस्थितेः प्रत्ययः परश्चेत्यादौ दृष्टत्वादत्राप्युपस्थितिरिति तत्त्वम्। पक्षे स्यादिति। अनुदात्तं पदमिति वचनात्पक्षे इत्युक्तम्।चिकीर्षक इत्याद्यर्थमावश्यकेन निषेधेनैव सिद्धेर्लित्स्वसामर्थ्यमेव कथमिति चिन्त्यम्। भाष्ये (पञ्चारत्न्य इति)। अन्तरङ्गत्वेनापीदं सिद्धम्। बहुखट्वक इत्युदाहरणम्।अत्र कपि आपोन्यतरस्यामिति ह्रस्वत्वे तस्य स्थानिवत्त्वाद् ह्रस्वान्तेन्त्यात्पूर्वमिति स्वरो न भवति। प्रतिदीव्नेत्यत्र बहिरङ्गत्वेनासिद्धत्वमल्लोपस्येति न शङ्क्यम। त्रिपाद्यां तदप्रवृत्तेः। वाय्वोरित्यत्रापि यथा न सा तथोक्तम। रेफेति। अत्र तु नान्तं भमिति भावः। न सूत्रान्तरवृत्तित्वं प्रकृतत्वमित्याह प्रस्तुत इति। पदान्तरेणाव्यवधानरूपासत्तिरानुपूर्व्यम्। विक्षिप्ताः विभिन्नदेशस्थाः। भाष्ये (यथेष्टं संबन्धः) इष्टवाक्यार्थबोधजनकस्वरूपः। असम्भवादिति। चख्नतुः, जग्मतुरित्यादौ संभवाच्चिन्त्यमिदम्। पारिशेष्यादिति। व्याख्यानाच्चेत्यपि बोध्यम्। एतावीदिति। पूर्वोक्तो नियमोपीत्यर्थः।

तद्यथा। अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीरिति। तस्य यथेष्टमभिसंबन्धो भवति उदहारि भगिनि या त्वं कुम्भं हरसि शिरसा अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति। क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम् *। क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानं कर्तव्यम्। क्वौ किमुदाहरणम्। कण्डूयतेरप्रत्ययः कण्डूरिति। नैतदस्ति। यलोपविधिं प्रति न स्थानिवत्। इदं तर्हि पिपठिषतेरप्रत्ययः। पिपठीः। नैतदस्ति। दीर्घविधिं प्रति न स्थानिवत्। इदं तर्हि लावयतेर्लौः। पावयतेः पौः। नैतदस्ति। अकृत्वा वृद्ध्यावादेशौ णिलोपः। प्रत्ययलक्षणेन वृद्धिर्भविष्यति। इदं तर्हि लवमाचष्टे लवयति लवयतेरप्रत्यये लौः। स्थानिवद्भावाण्णरुण्न प्राप्नोति। क्वौ लुप्तं न स्थानिवदिति भवति। एवमपि न सिध्यति।

---

लक्ष्यसंस्कारकं प्रक्रियावाक्यम् उपप्लवत इति सिद्धमिष्टम्। अनड्वाहमिति पाठक्रमादार्थक्रमो बलीयानिति यथेष्टमत्राभिसम्बन्धः। लौरिति। णिलोपस्य स्थानिवत्त्वादूण्न स्यात्। अकृत्वेति। ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्धमिति णिलोपस्ततो वृद्धिरावादेशस्तु वर्णाश्रयत्वात् प्रत्ययलक्षणेन न भवति यथा गोहितमित्यवादेशः। एतच्चान्तरङ्गत्वमनाश्रित्योक्तम्। तत्र त्वाश्रितेऽन्तरङ्गबहिरङ्गयोर्विप्रतिषेधाभावः। लवमाचष्ट इति। क्वौ विधिं प्रति न स्थानिवदित्यस्यार्थस्य प्रदर्शनायेदमुदाहृतम्। इदं तु क्वौ लुप्तस्योदाहरणं देवयतेर्द्यूरिति। बिम्बमिति। बिम्बवद-

---

ननु सूत्रस्यैकस्य तावन्मात्राविषये तादृशो वाक्यार्थो दुर्वच इत्यत आह ग्रहणकवाक्यादिति। पाठक्रमादिति। आर्थक्रमो नाम राजपुरप्रवेशन्यायेन स्वस्याकाङ्क्षितार्थान्वयक्रमः। एवञ्च कल्पितासन्नवाक्याद्योधविषये तात्पर्यं नियामकमिति भावः। भाष्यात्तु आसत्त्यभावेऽपि पदार्थोपस्थितौ आकाङ्क्षावशाद्व्युत्पत्त्यनुसारेणान्वयबोध इति लभ्यते। साचीनमित्यस्य तिर्यग्गच्छन्तमित्यर्थः। क्विलुगिति वार्तिके क्वावित्यत्र विधावित्येतदध्याह्रियते तेन क्विनिमित्तविधावित्यर्थः। आवृत्त्या क्वावित्यादेशेनापि संबध्यते। क्विनिमित्तादेश इत्यर्थस्तेनैतदर्थतः पठ्यते। क्वौ लुप्तमिति। इदञ्च क्वाचित्कमिति वक्ष्यते। एवं लुग्रूपे आदेशे उपधात्वप्रयुक्ते कार्ये चङ्परह्रस्वे कुत्वे च स्थानिवत्त्वं नेत्यर्थः। भाष्ये [क्वावित्यस्य] क्वौ लुप्तमित्यर्थे उदाहरणं कण्डूरिति। कण्ड्वन्तात् क्विप्। अत्र यण् न यलोपश्च भवतीति भावः। तत्रान्त्यं खण्डयति यलोपेति। पिपठीरिति। अलोपस्य स्थानिवत्त्वेन रेफान्तस्यापदत्वाद्दीर्घो न स्यादिति भावः। अत्र रुत्वमप्येतदधीनमेव। लावयतेरिति। ण्यन्तलूधातोरित्यर्थः। ऊण् नेति। क्वौ वान्तस्यानङ्गत्वादिति भावः। ऊठ् एत्येधतीति वृद्धिः। वर्णाश्रयत्वादिति। अतः परस्मिन्निति स्थानिवत्त्वन्तु न वृद्धेरनादिष्टादचः पूर्वत्वाभावात्। तत्र त्विति। कारक इत्यादौ णिस्थानिकवृद्धिविषये स चरितार्थस्तथैव चातोलोप इति सूत्रे भाष्ये स व्याख्यात इति भावः। परे तु षत्वतुकोरिति ज्ञापकादनित्यत्वेनान्तरङ्गत्वमनाश्रित्य क्वौ लुप्तमिति न कार्यं नित्यत्वाच्च पूर्वं णिलोपः। वृद्धिस्त्वकृते णिलोपे उपदेशेन कृते त्वतिदेश नित्यानित्येति पूर्वपक्ष्याशयमाहुः। देवयतेरिति। ण्यन्ताद्यणः स्थानिवत्त्वादिति वाच्यम्। ऊठ् आदिष्टादचः पूर्वत्वादिति नेदमसाधारणमुदाहरणमिति चेन्न। सख्यीयतेः सख्युरिति चयस्यात् सूत्रभाष्योक्तं, ण्यन्तपदेः पाद् पद इति येन विधिरिति सूत्रभाष्योक्तं कण्डूतिः पिपठीरित्यादौ यणभावरुत्वयोः सिद्धिश्च तस्यासाधारणमुदाहरणं स्थानिद्वारकं नादिष्टादचः पूर्वत्वं तु इदमप्युदाहरणमिति बोध्यम्। नैवं विज्ञायते क्वौ लुप्तमिति। नैवमेव विज्ञायते किं त्विदमपि क्वाचित्कं लक्ष्यसिद्धये आश्रयणीयामिति

कथम्। क्वौ णिलोपो णावकारलोपस्तस्य स्थानिवद्भावादूठ् न प्राप्नोति। नैष दोषः। नैवं विज्ञायते क्वौ लुप्तं न स्थानिवदिति। कथं तर्हि क्वौ विधिं प्रति न स्थानिवदिति। लुकि किमुदाहरणम्। बिम्बं बदरम्। नैतदस्ति। पुंवद्भावेनाप्येतत्सिद्धम्। इदं तर्हि आमलकम्। नैतदस्ति। वक्ष्यत्येतत् फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वादिति। इदं तर्हि पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुर्दशपटुरिति। ननु च तदपि पुंवद्भावेनैव सिद्धम्। कथं पुंवद्भावः। भस्याढे तद्धिते पुंवद्भवतीति। भस्येत्युच्यते यजादौ च संज्ञा भवति। न चात्र यजादिं पश्यामः। प्रत्ययलक्षणेन यजादिः। वर्णाश्रये नास्ति प्रत्ययलक्षणम्। एवं तर्हि ठक्छसोश्चेत्येवं भविष्यति। ठक्छसोश्चेत्युच्यते। न चात्र ठक्छसौ पश्यामः प्रत्ययलक्षणेन। न लुमता तस्मिन्निति प्रत्ययलक्षणस्य प्रतिषेधः। न खल्वप्यवश्यं ठगेव क्रीतप्रत्ययः क्रीताद्यर्था एव वा तद्धिताः। किं तर्ह्यन्येऽपि तद्धिता ये लुकं प्रयोज-

---

रीशब्दाभ्यां ङीपन्ताभ्यामनुदात्तादेश्चेत्यञ्। तस्य फले लुक्। लुक् तद्धितलुकीति ङीषो लुकि तस्य स्थानिवद्भावाद्यस्येति लोपः प्राप्नोतीति प्रतिषेध उच्यते तद्धितस्य स्थानिनः परत्वाल्लुकोऽपि परत्वाऽऽश्रयणात् परनिमित्तकत्वं स्त्रीप्रत्ययलुक आश्रीयते. अन्यथा अभावेन पौर्वापर्याभावात् कुतः परनिमित्तकत्वम्। अथ वा बुद्धिपरिकल्पितगर्भावेनापि पौर्वापर्यं भवति। पुंवद्भावेनेति। भस्याढे तद्धित इति पुंवद्भावः। अत्र च भाषितपुंस्कत्वं नाश्रीयते इत्येवमुक्तम्। तदाश्रये तु नास्ति पुंवद्भावः। आमलकमिति। वृद्धत्वाद् मयटो विधानाद्भत्वाभावः। प्रकृत्यन्तरत्वादिति। बिम्बबदरामलकादयो न यौगिकाः शब्दाः किं तर्हि विशिष्टफलजातिवाचिन इत्यर्थः। पञ्चभिरिति। आर्हादिति ठक् तस्याध्यर्द्धपूर्वेति लुक् तद्धितलुकीति ङीषो लुक्। अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इति यणादेशः पूर्वं न प्रवर्तते। कृते तु लुकि तस्य स्थानिवत्त्वाद्यणः प्रसङ्ग इति स्थानिवत्त्वनिषेध उच्यते। अव्याविकन्यायेन पटुशब्दान्तादेव ठग् भविष्यति न तु पट्वीशब्दान्तादिति चेत्प्रतिपत्तिगौरवप्रसङ्गः। वर्णाश्रय इति। यद्यपि पुंवद्भावे सिद्धश्च प्रत्ययविधावित्यस्ति तथापि यत्र भावि भत्वं तत्र पुंवद्भावः। इह तु लुकि भत्वाभावात् कुतः पुंवद्भावः। किंतर्ह्यन्येऽपीति। यत्र पुंवद्भावो

---

भावः। तदाश्रये इति। वृक्षजातिः स्त्रियामिति लिङ्गानुशासनाद् वृक्षे स्त्रीलिङ्गत्वं फले च नपुंसकत्वमिति भावः। वस्तुत आम्र इत्यादौ लिङ्गानुशासनस्य व्यभिचारात्तद्भाष्यप्रामाण्याच्च बिम्बबदरामलका वृक्षेपि त्रिलिङ्गा इत्याहुः। किं तर्हीति। यौगिकत्वे हि वृक्षसंबन्धात् फलेन पुनः फलसम्बन्धाद्वृक्षे इत्यत्र विनिगमनासम्भवादिति भावः। विशिष्टेति। विजातीयेत्यर्थः। अन्तरङ्गानपीति। अस्य न्यायस्यान्तरङ्गनिमित्तविनाशकलुक एव तदन्तरङ्गबाधकताबोधकत्वे तु तत्परिभाषाप्रवृत्त्यभावसम्पादकस्थानिवत्त्वनिषेधार्थंशमिति बोध्यम्। अव्याविकेति। वोतो गुणेति ङीषो वैकल्पिकत्वादिति भावः। प्रतिपत्तिगौरवेति। ज्ञानगौरवेत्यर्थः। ननु भसंज्ञकस्य न पुंवत्त्वं येन वर्णाश्रयतया भत्वाभावेन पुंवत्त्वं न स्यात् किं तु तत्प्रत्ययविषये पूर्वमेव पुंवत्त्वप्रतिपादनरत आह यद्यपीति। इह तु लुकीति। अनेन न लुमतेति निषेधान्न प्रत्ययलक्षणम्। किं च ढभिन्नतद्धितविषयाभावादपि न तत्प्रवृत्तिरित्यपि ध्वनितम्। किं चान्तरङ्गानपीति न्यायेनैकादेशात्पूर्वमेव लुकि

यन्ति। पञ्चेन्द्राण्यो देवता अस्येति पञ्चेन्द्रः। दशेन्द्रः। पञ्चाग्निः। दशाग्निः। उपधात्वे किमुदाहरणम्। पिपठिपतेरप्रत्ययः पिपठीरिति। नैतदस्ति। दीर्घविधिं प्रति न स्थानिवत्। इदं तर्हि पारिखीयः। चङ्परनिर्ह्रासे चोपसंख्यानं कर्तव्यम्। वादितवन्तं प्रयोजितवान्। अवीवदद्वीणां परिवादकेन। किं पुनः कारणं न सिध्यति। योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावाद्ध्रस्वत्वं न प्राप्नोति। ननु चैतदप्युपधात्वविधिं प्रति न स्थानिवदित्येवं सिद्धम्। विशेषत एव तद्वक्तव्यम्। क्व। प्रत्ययविधाविति। इह मा भूत् पटयति लघयति। कुत्वं चोपसंख्यानं कर्तव्यम्। अर्चयतेरर्कः। मर्चयतेर्मर्कः। नैतद् घञन्तम्। औणादिक एव कप्रत्ययस्तस्मिन्नाष्टमिकं कुत्वम्। एतदपि णिचा व्यवहितत्वान्न प्राप्नोति। पूर्वत्रासिद्धे च *। पूर्वत्रासिद्धे च न स्थानिवदिति वक्तव्यम्। किं प्रयोजनम्। क्सलोपे सलोपे। क्सलोपः सलोपे प्रयोजनम्। अदुग्ध अदुग्धाः। लुग्वा दुहदिहलिहगुहामात्मने पदे दन्त्य इति लुग्ग्रहणं न कर्तव्यं भवति। दध आकार-

---

नास्ति पञ्चेन्द्र इति। साऽस्य देवतेत्यण् तस्य द्विगोर्लुगनपत्य इति लुक् ततो ङीषो लुक् तस्य स्थानिवत्त्वाद् ङीष्संनियुक्त आनुक् श्रूयते यथेन्द्राणीति तथा पञ्चाग्नाय्यो देवता अस्य पञ्चाग्निरिति ऐकारः श्रूयेत समानायामाकृतौ भाषितपुंस्कत्वाभावाद्वर्णाश्रयत्वाद्धत्वाभावाच्च पुंवद्भावो नास्ति। अथ वा यस्येतिलोपप्रसङ्गः। लुकि च स्थानिवत्त्वनिषेधादादीध्य इति परस्मिन्नित्यस्य पूर्वसूत्रे प्रत्युदाहरणमुपपद्यते। शप्लुकि कृते टेरेत्वस्य स्थानिवद्भावाद्व्यवधानाच्च लोपप्रसङ्गात्। पारिखीय इति। परिखाशब्दाच्चातुरर्थिके ऽणि कृते अकारलोपस्य स्थानिवत्त्वात् पारिखे भव इति वृद्धाच्छेकान्तखोपधादिति छो न स्यात्। क्सलोप इति। अदुहद्यर्थं लुग्वचनं कर्तव्य-

---

प्रत्ययलक्षणसत्त्वेपि यजादित्वाभावान्न भत्वम्। न च वर्णप्राधान्याभावात्कथं वर्णाश्रये नास्तीत्युक्तिर्भगवत इति वाच्यम्। प्रत्ययलक्षणसूत्रस्य नियमार्थत्वमिति पक्षेऽदोषात्। न लुमताङ्गस्येति यथा श्रुतेऽभ्युपेत्यापि ठक्छसोश्चेति पुंवत्त्वं भाष्ये आह [ न खल्वपीति ] नन्वानुङ् न ङीषीत्युच्यते येन स्थानिवत्त्वेन तत्प्राप्तिरत आह सन्नियुक्त इति। एवञ्च संनियोगशिष्टपरिभाषाप्राप्तानुग्निवृत्तिप्रतिबन्धद्वारा आनुग्ग्रहणमेव पूर्वविधिरिति भावः। अत एवैनेय इत्यादौ यस्येति लोपे नस्य श्रवणम्। अत एवाचः परस्मिन्निति सूत्रे विधिशब्दस्य भावसाधनत्वं पूर्वस्य विधानं प्रति पूर्वस्य भावं प्रति पूर्वः स्यादिति स्थानिवदित्यर्थ उक्तः। पूर्वः स्यादित्यस्य पूर्वः स्थितः स्यादित्यप्यर्थो बोध्यः। एवञ्च पूर्वसूत्रे तन्त्रेणोभयसाधनविधिशब्दघटितग्रहणम्। यत्तु कैयटादिभिः संनियोगशिष्टपरिभाषाऽनित्यत्वेनेदं साधितं तद्वृथैव। नन्वत्रापि भस्याढ इति पुंवत्त्वं स्यादत आह समानायामिति। पुंसि इन्द्रत्वादि प्रवृत्तिनिमित्तं स्त्रियान्तु तत्संबन्ध इति भावः। नन्वेवमग्नायी देवता अस्याग्नेयं हविरिति उदाहरणासिद्धिस्तस्मादारोपितेन्द्रत्वाद्येव स्त्रियामपि प्रवृत्तिनिमित्तमिष्यत आह वर्णाश्रयत्वादिति। अपो लुकि न लुमतेति निषेधाद् उभिन्नलक्षितविषयाभावाच्चेत्यपि बोध्यम्। अथवेति। ङीलुकः स्थानिवत्त्वेन भत्वादीकारपरत्वाच्चेति भावः। शप्लुकीति। अन्यथा शप्लुकः स्थानिवत्त्वेन व्यवधानादप्राप्तिरेव नेति भावः। वस्तुतः शप्लुकः परनिमित्तत्वाभावादेव न स्थानिवत्त्वप्रसक्तिः। अत एव जुहुत इत्यादौ श्लोःस्थानिवत्त्वान्न गुणः। भाष्ये [ योसौ णावीति ]। णेरिणच्युपसंख्यानमिति सिद्धमेतत्। वस्तुभेदान्न दोष इति तत्त्वम्। अत एव ज्ञापकात्प्रायोगिकमध्यानिकादेशस्यैवाचः परस्मिन्नित्येतत्प्रवृत्त्युपयोगीति बोध्यम्। प्रत्ययविधावीति। अत एव चङ्परसूत्रे निषेधः सार्थकः

लोप आदिचतुर्थत्वे प्रयोजनं धत्से धद्ध्वे धद्ध्वमिति । दधस्तथोश्चेति चकारो न कर्तव्यो भवति । हलो यमां यमि लोपे प्रयोजनम् । आदित्यः । हलो यमां यमि लोपः सिद्धो भवति । अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु प्रयोजनम् । पापच्यतेः पापक्तिः । यायज्यतेर्यायष्टिः पाचयतेः पाक्तिः । याजयतेर्याष्टिः । द्विर्वचनादीनि च प्रयोजनानि न पठितव्यानि भवन्ति पूर्वत्रासिद्धेनैव सिद्धानि भवन्ति । किमविशेषेण । नेत्याह । वरे यलोपस्वरवर्जम् * वरे यलोपं स्वरं च वर्जयित्वा । तस्य दोषः संयोगादिलोपलत्वणत्वेषु * । तस्यैतस्य लक्षणस्य दोषः संयोगादिलोपलत्वणत्वेषु । संयोगादिलोपे । काक्यर्थं वास्यर्थम् । स्कोः संयोगाद्योरिति लोपः प्राप्नोति । लत्वम् । निगार्यते । निगाल्यते । आचि वि-

---

मेव । तदर्थं लुग्ग्रहणं नेति च्छेदं कुर्वन्ति । कर्तव्यं भवतीत्युत्तरम् । अवश्यकार्यमित्यर्थः । चकारो न कर्तव्य इति । झषन्तत्वात् पूर्वेणैव सिद्धत्वात् । पापक्तिरिति । किच् । संयोगान्तलोपादयः पदान्तविधौ स्थानिवत्त्वनिषेधात्सिद्धा इति भाष्ये नोदाहृताः । स्कन्दयतेः स्कन् काष्ठं तक्षयतीति काष्ठतक् । संयोगादिलोपलत्वणत्वेष्विति वचनात्संयोगादिलोपे स्थानिवत्त्वात्तदभावात्तत्र संयोगान्तलोपः । दाहयतेर्धोक् । लेहयते-

---

त्परत्वांशे च तस्य दुर्वारत्वेन न पटयतीत्यादौ वृद्धिर्नापि ह्रस्वनिषेधो व्यर्थ इति चेन्न । प्रत्ययस्याङ्गांश उपस्थिताकाङ्क्षत्वेन ञ्णिति णान्नित्यादेरङ्गविशेषणत्वस्यैवौचित्यात् । उपधात्वप्रयुक्तकार्ये एव तन्निषेधेन णित्परत्वाद्यंशेऽपि स्थानिवत्त्वनिषेधाच्च । मर्क इति । कर्माणि घञ्चजोरिति कुत्वमिति भावः । नैतद् घञ-न्तमिति । एरच्प्रसङ्गादित्यर्थः । एतदपीति । एवञ्च कुत्वे इत्यावश्यकमिति भावः । वस्तुतस्तदनावश्यक-मित्याह पूर्वत्रासिद्धे इति । अचः परस्मिन्नित्यं तदृष्टया त्रिपाद्या असिद्धत्वेन न्यायसिद्धानुवादोऽयं तत्फ-लन्त्वतिदेशान्तराणां वतिघटितानामन्तादिवदित्यादीनां त्रिपाद्यां प्रवृत्तिबाधनम् । तेनामी क्षीरपेणेत्यादौ तत्सिद्धिरिति दिक् । अदुग्धेति । क्सस्यान्तलोपे झलो झलीति सलोपे तदीयाऽल्लोपस्य स्थानिवत्त्वं न । चतुर्थत्व इति । भष्भावे इत्यर्थः । चकार इति । स्कोरित्यनुकर्षणार्थ इत्यर्थः । पूर्वेण वेति । एकाचो बश इत्यनेनेत्यर्थः । ननु संयोगान्तलोपप्रभृतिषु इत्युक्त्वा तं विहाय कुत्वाद्युदाहरणदाने बीजाभावोऽत आह संयोगान्तेति । पदान्तेति । चिन्त्यमेतत् । पदचरमावयव एव तन्निषेधात् परवदंस्थाजादेशस्यैव तेन स्थानि-वत्त्वनिषेधाच्चेति । तदुदाहरणानि दर्शयति स्कन्दयतेरित्यादिना । काष्ठतगिति । नच काष्ठतगेव नास्ति कुतः, काष्ठतक् स्यादिति परेष्विति सूत्रस्थभाष्याद् एषामनभिधानामिति वाच्यम् । अत्र संयोगादिलोपप्रस-क्तिस्तद्विषयत्वेनानभिधानस्यादोषात् । नन्वत्र संयोगादिलोपः प्राप्नोति न च तत्र पदान्तविधित्वमिति न तेन सिद्धिरत आह संयोगादिलोपेति । केचित्तु एतद्भाष्यप्रामाण्यादेषां प्रयोगाणामनभिधानमेवेत्याहुः । भाष्ये ( वरेयलोपस्वरवर्जमिति ) । सवर्णानुस्वारदीर्घादयः साहचर्यान्नैपादिका एव गृह्यन्ते इति भावः । नन्वे-वं यङन्तात्ण्यन्तप्रकृतिकण्यन्ताच्चिणि अशाशामि अशामीत्यादौ दीर्घो न स्यात् । णिलोपाल्लोपयोः स्थानिवत्त्वादिति चेन्न । णेर्णिच्युपसङ्ख्यानादशामीत्यस्य सिद्धेः । अशाशामीति तु यङ्लुगन्तात्णिचि भवि-ष्यति । न हि यङ्यङ्लुकोः स्वरे रूपे वा विशेषः । माह्वितमित्यादौ विहितविशेषणाश्रवणान्न दीर्घ इति दिक् । अन्येतु तृतीयषष्ठाध्यायस्थभाष्यप्रामाण्यादत्र दीर्घमप्युपलक्षयन्ति । एतच्च तत्रैव निरूपयिष्यामः । भाष्ये ( काक्यर्थमिति ) । न च स्कोरिति सूत्रे झल्ग्रहणापकर्षेण झलन्तसंयोगस्यैव ग्रहणात् प्रकृते न दोष इति वाच्यम् । झलो लोपः संयोगान्तलोपः इत्याष्टमिकभाष्येण संयोगादिलोपे तदसंबन्धबोधनात् । त्रिपाद्यां बहिरङ्गासिद्धत्वाप्रवृत्तेश्चेति भाष्याभिप्रायः । निगाल्यत इति । नन्वत्रान्तरङ्गत्वादेव लत्वं सिध्यति इति वाच्यम् । सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया तदप्रवृत्तेः । त्रिपाद्यां तत्परिभाषाऽप्रवृत्तेश्च । न च प्रत्ययलक्षणम् । अल्विधित्वात् । प्रत्ययलक्षणसूत्रस्य नियमार्थताया एव भाष्यसंमतत्वात् । ननु स्थानिव-

माषेति लत्वं न प्राप्नोति । णत्वम् । माषवपनी । व्रीहिवपनी । प्रातिपदिकान्तस्येति णत्वं प्राप्नोति । न पदान्तद्विर्वचन ॥

द्विर्वचनेऽचि ॥ ॥ ५९ ॥ आदेशे स्थानिवदनुदेशात्तद्वतो द्विर्वचनम् * । आदेशे स्थानिवदनुदेशात्तद्वतः । किंवतः । आदेशवतो द्विर्वचनं प्राप्नोति । तत्र को दोषः । तत्राभ्यासरूपम् * । तत्राभ्यासरूपं न सिध्यति । चक्रतुश्चक्रुरिति । अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्य * । यदयमज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो रूपं स्थानिवद्भवतीति । कथं कृत्वा ज्ञापकम् । अज्ग्रहणस्यैतत्प्रयोजनम् । इह मा भूत् । जेघ्नीयते । देध्मीयते । यदि च रूपं स्थानिवद्भवतीति ततो ऽज्ग्रहणमर्थवद्भवति अथ हि कार्यं नार्थो ऽज्ग्रहणेन भवत्येवाऽत्र द्विर्वचनम् । तत्र गाङ्प्रतिषेधः * । तत्र गाङः प्रतिषेधो वक्तव्यः ।

---

लॅट् । उणादीनामव्युत्पन्नत्वात् किर्योर्गिर्योरित्यत्र दीर्घाभावः । माषवपनीति । समासान्तस्य नकारस्य णत्वं विधीयमानमल्लोपस्य स्थानिवत्त्वनिषेधाद् ङीबुत्पतेः प्राक् समासविधानात् प्राप्नोति ॥ ५८ ॥

द्विर्वचने ॥ अचः परस्मिन्नित्यत्र यो ऽनादिष्टादचः पूर्व इति स्थितम् । साच्कस्य च द्विर्वचनमिति पूर्वावधित्वाभावादप्राप्तं स्थानिवत्त्वं विधीयते । अथाऽपि निमित्तात् पूर्वमित्यस्मिन् पक्षे प्राप्तिः स्यात् । तथापि न पदान्तद्विर्वचनेति प्रतिषेधप्रसङ्गादिदं वचनम् । आदेश इति । कार्यातिदेश इति पूर्वः पक्षः । चक्रतुरित्यत्र यणादेशे कृते एकाचो विधीयमानं द्विर्वचनमनच्कत्वादप्राप्तमिति स्थानिवत्त्वाद् यण्युक्तस्यैव प्राप्नोति । अथ हीति । कार्याऽतिदेशे हि घ्नीध्मीति भाव्यमेव द्विर्वचनेनेति किमज्ग्रहणेन । नन्वज्ग्रहणस्य प्रयोजनं भसेः क्वसौ घसिभसोर्हलीत्युपधालोपे कृते द्विर्वचनं मा भूदिति । नैतदस्ति । सत्यसति वा द्विर्वचने प्सानिति श्रुतौ विशेषाऽभावात् । छन्दसश्चैवोपधालोपः छन्दसि च दृष्टाऽनुविधिः रूपस्थानिवत्त्वे च निन्यतुरि-

---

त्वानिषेधेऽपि माषशब्दस्य वपनीशब्देन समासे समासान्तो नकारो नेति णत्वं न स्यादत आह ङीबुत्पत्तेरिति । गतिकारकोपपदानां कृद्भिरिति वचनादिति भावः । न च बहिरङ्गासिद्धत्वेनेदं सिद्धम् त्रिपाद्यां तदप्रवृत्तेरिति दिक् ॥ ५८ ॥

द्विर्वचनेऽचि ॥ अथापीति । प्रौढिवादोऽयम् । तत्पक्षस्यास्थितत्वात् । नपदान्तसूत्रे प्राथमिकद्वित्वस्यैव ग्रहणाच्च । यण्युक्तस्यैवेति । यद्यपि स्थानिवत्त्वे द्विर्वचनं नित्यं तथापि यद्यपि नित्य इति परत्वात्स स्यादिति भावः । इदमेवाभिप्रेत्य भाष्ये ऽभ्यासरूपं न सिध्यतीत्येतावदेवोक्तं न तु निन्यतुरित्यादावियङ उत्तरखण्डे श्रवणं स्यादित्यापादितं तस्यानित्यत्वेन ततः पूर्वं द्वित्वस्यैव प्रवृत्तेरिति । दुर्लक्ष्योऽपि विशेषः सूक्ष्मदृशं प्रति दुर्वारोत आह छान्दसश्चेति । एवञ्च शास्त्रिप्रयाणीति-वद्द्वित्वाभाव इति भावः । अत्रोपधालोपस्य छान्दसत्वं वदता क्वसोर्लौकिकत्वमभ्युपेतम् । ननु सिद्धान्ते द्वित्वनिमित्तेऽचीत्यर्थस्तदाऽचीति किमर्थम् । मारिरिषतीत्यादिसिद्धये कार्यमनुभवतः कार्यिणो निमित्तत्वानाश्रयणेनात्रापि नटभार्याद्व्यञ्जनानि इति षाष्ठभाष्यरीत्या द्वितीयाजवधिकस्य रीष् इत्यस्यैव द्वित्वप्राप्त्या यङः कार्यित्वेन द्वित्वनिमित्तत्वाभावात् कथं तन्निमित्तादेशे स्थानिवत्त्वप्रसक्तिरिति चेन्न । द्वितीयहल्पर्यन्तस्यैव द्वित्वमिति मते तत्सत्वात् । अत एव प्रातिशाख्ये उक्तम् स्वरान्तरे व्यञ्जनान्युत्तरस्येति । मारिरिषती-

अधिजगे । इवर्णाभ्यासता प्राप्नोति । न वक्तव्यः । गाङ्लिटीति द्विलकारको निर्देशः लिटि लकारादाविति । कृस्येजन्तादिवादिनामधातुष्वभ्यासरूपम् * । कृस्येजन्तदिवादिनामधातुष्वभ्यासरूपं न सिध्यति । कृति । अचिकीर्तत् । एजन्त । जग्ले मम्ले । दिवादि । दुद्यूषति । सुस्यूषति । नामधातु । भवनमिच्छति भवनीयति भवनीयतेस्सन् बिभवनीयिषति । एवं तर्हि प्रत्ययइति वक्ष्यामि । प्रत्ययइति चेत् कृस्येजन्तनामधातुष्वभ्यासरूपम् * । प्रत्ययइति चेत् कृस्येजन्तनामधातुष्वभ्यासरूपं न सिध्यति । दिवादय एके परिहृताः । एवं तर्हि द्विर्वचननिमित्ते अच्यजादेशः स्थानिवदिति वक्ष्यामि । स तर्हि निमित्तशब्द उपादेयः । नह्यन्तरेण निमित्तशब्दं निमित्तार्थो गम्यते । अन्तरेणापि निमित्तशब्दं निमित्तार्थो गम्यते । तद्यथा । दधि त्रपुसं प्रत्यक्षो ज्वरः । ज्वरनिमित्तमिति गम्यते । नड्वलोदकं पादरोगः । पादरोगनिमित्तमिति गम्यते । आयु-

---

स्यत्र पूर्वमियङादेशे कृते स्थानिरूपातिदेशाद् नीनीति द्विर्वचने एरनेकाच इति यणा बाधितत्वात्पुनरियङ् न प्रवर्तते । अधिजगइति । कृते एशादेशे गाङिति प्रक्रियाश्रयेण चोद्यम् । ङकारस्यानुबन्धत्वादिकारस्य गाङ्भवत्यजादेशः । कृत्येजन्तेति । अचि यो ऽजादेशः स द्विर्वचने कर्तव्ये स्थानिवदिति सूत्रार्थमाश्रित्यैतदुच्यते । जग्लइति । शित्स-दृशे आत्वमित्यत्र पक्षेयं दोषः । द्विर्वचननिमित्त इति । अस्मिन् पक्षे जग्लइत्यपरिहृतम् । उत्तरत्र तु परिहरिष्यते । दधित्रपुसमिति । समाहारद्वन्द्वः कर्मधारयो वा दध्येव विशिष्टावस्थायुक्तं त्रपुसमुच्यते तत्र द्विर्वचननिमित्तत्वात्तद्रूपाऽऽरोपेणाजेव द्विर्वचनमुच्यते । अथ वा अधिकरणे ल्युट् । द्विरुच्यते ऽस्मिन्निति द्विर्वचनम् । एतदप्रतिपद्यमा-

---

स्यादौ रित्यस्य द्वित्वेपि इकारस्य सनवयवतया सनो द्वित्वानुभवेन तन्निमित्तत्वाभावादिति दिक् । बाष्टभाष्यरीत्या त्वधिजगे इति व्यावर्त्यं बोध्यम् । ननु लिटि विधीयमानस्य गाङः कथमच्यादेशत्वमत आह कृते इति । ङकारस्येति । प्रकृतसूत्रे प्रयोगे निवर्त्यस्यैव स्थानिवत्त्वेन ग्रहणमचः परस्मिन्निति वदिति भावः । ( द्विलकारक इति ) भाष्ये । एवञ्चाचि नायमिति भावः । एवञ्च इदमज्ग्रहणव्यावर्त्यमिति स्पष्टमेवोक्तमिति बोध्यम् । न च सिद्धान्ते आर्द्धधातुके लिटीत्यादीनां तत्र विषयसप्तमीत्वेनानैमित्तिकत्वान्न तत्र दोष इति वाच्यम्, विषयसप्तमीत्वेपि बुद्धिकृतनिमित्तत्वस्य दुर्वारत्वेन सनैमित्तकत्वमस्त्येवेति भाष्याशयात् । अत्र पञ्च पक्षाः । अचि यो जादेशः स द्वित्वे कार्ये स्थानिवदित्येकः । आजादौ प्रत्यये योऽजादेशः स द्वित्वे स्थानिवदिति द्वितीयः । द्विर्वचनशब्दस्याधिकरणल्युडन्तत्वादेशभाधजन्तत्वाद्वा द्वित्वनिमित्तेची स्यादीति तृतीयः । द्वित्वनिमित्तेचि आदेशनिषेध इति चतुर्थः । द्वित्वनिमित्तेचि योजादेशः स स्थानिवत् न भवति द्वित्वे कार्ये इति पञ्चमः । तत्राद्ये दोषोद्भावनमित्याह अचीति । कृतेरुपधायाश्चेतीत्वं तस्य च णिनिमित्ततया ऽच्यादेशता । अङ्गाक्षिप्ते प्रत्यये तद्विधानात् । ननु आत्वं कथमच्यादेशो ऽनैमित्तिकत्वादत आह शित्सदृशइति । शितीति तत्पुरुषः । इत्संज्ञकशकारादिप्रत्ययाभिन्नप्रत्यय इत्यर्थः । अन्तरङ्गत्वात्त्विवादिषु एचि च कृते आत्वमिति भावः । दिवेः सनि सनीवन्तेतीडभावपक्षे हलन्ताच्चेति कित्वे छ्वोरित्यूठि यणि सन्यङोरिति द्वित्वे रूपम् । द्वितीयं निराकरोति भाष्ये (प्रत्यय इति चेदिति ) त्रपुसमिति । तृपसामिति-पाठान्तरं तृपुसमिति च । कर्मधारयमुपपादयति दध्येवेति । विशिष्टावस्थेति । रूपरसगन्धान्तरयुक्तमित्यर्थः । आद्ये त्रपुसं फलविशेषः । द्वितीये समासाभावेपि न क्षतिरिति बोध्यम् । तद्रूपारोपेणेति । दृष्टान्तबलेन तथै-

घृतम् । आयुषो निमित्तमिति गम्यते । अथ वा अकारो मत्वर्थीयः । द्विर्वचनमस्मिन्नस्ति । सोऽयं द्विर्वचनः द्विर्वचने इति । एवमपि न ज्ञायते कियन्तमसौ कालं स्थानिवद्भवतीति । यः पुनराह द्विर्वचने कर्तव्यइति । कृते तस्य द्विर्वचने स्थानिवन्न भविष्यति । एवं तर्हि प्रतिषेधः प्रकृतः सोऽनुवर्तिष्यते । क्व प्रकृतः । न पदान्तद्विर्वचनेति । द्विर्वचननिमित्ते अचि अजादेशो न भवतीति । एवमपि न ज्ञायते कियन्तमसौ कालमजादेशो न भवतीति । यः पुनराह द्विर्वचने कर्तव्य-इति कृते तस्य द्विर्वचने अजादेशो भविष्यति । एवं तर्हि उभयमनेन क्रियते । प्रत्ययश्च विशेष्यते द्विर्वचनं च । कथं पुनरेकेन यत्नेनोभयं लभ्यम् । लभ्यमित्याह । कथम् । एकशेषनिर्देशात् । एकशेषनिर्देशो ऽयं द्विर्वचनं च द्विर्वचनश्च द्विर्वचने । द्विर्वचने कर्तव्ये द्विर्वचने ऽचि प्रत्यय इति । द्विर्वचननिमित्ते ऽचि स्थानिवदिति चेण्णौ स्थानिवद्वचनम् * । द्विर्वचननिमित्ते ऽचि स्थानिवादिति चेण्णौ स्थानिवद्भावो वक्तव्यः । अवनुनावयिषति अवचुक्षावयिषति । न वक्तव्यः । ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य * । यदयमोः पुयण्ज्यपर

---

नं प्रति परिहारान्तरमाह अथ वा अकार इति । एवमपीति । एकत्वाद् द्विर्वचनशब्दस्य चाज्विशेषणे उपयुक्तत्वात् कालावधारणाभावः । एवं तर्हीति । स्थानिवदिति नानुवर्तते इति भावः । प्रत्ययश्चेति । द्विर्वचनेन प्रत्ययस्याक्षिप्तत्वात्तद्विशेषणं द्विर्वचनम् अचीत्येतच्च तस्य तदादिविधिर्भवत्यजादाविति । कथं पुनरिति । विरुद्धत्वादनयोरर्थयोरेकेन द्विर्वचनइत्यनेन पदेनानुपादानादिति भावः । एकशेषनिर्देश इति । सहविवक्षाभावोऽपि सरूपाणामित्येकशेषः संज्ञापरिभाषावल्लक्षणाङ्गत्वात्तस्येति प्रागेवोक्तम् । विभक्त्यन्तयोश्चैकशेषविधानादप्रातिपदिकत्वाच्च द्विवचनाभावः । अथ वैकशेषेण समानफलत्वात्तन्त्रमावृत्तिर्वा लक्ष्यते । ओः पुयण्जिष्विति । नहि णौ कृत-

---

व लाभात् । ननु दृष्टान्ते लक्षणाया अव्यभिचारेण कार्यजननप्रतीतिः प्रयोजनं प्रकृते च न किंचित्तथेति लक्षणा दुरुपपादेत्यत आह अथवेति । कालेति । द्विर्वचनविधानसमय एवेत्यवधारणाभाव इत्यर्थः । एवञ्च चक्रतुरित्याद्यसिद्धिः पुनर्यणादेशानापत्तेरिति भावः । प्रत्ययश्च विशेष्यते द्विर्वचनं चेत्यस्य विवक्षितत्वेन निर्दिश्यत इति शेषः । तत्राश्रुतस्य प्रत्ययस्य कथं विशेष्यत्वमत आह द्विर्वचनेनेति । अचीत्युपादानात्प्राप्तमिह द्विर्वचनं तच्च प्रत्यये इति तेन तद्वाचकप्रत्ययपदाक्षेप इत्यर्थः । तद्भावभावितामात्रेण निमित्ततायाः आश्रयणात्सन्यङन्तस्य द्वित्वेपि तत्राक्षेपः । स चाचीत्यस्य श्रवणात्सप्तम्यन्तस्यैवेति भावः । अचीत्येतच्च तस्येति । विशेषणमित्याकृष्यते । तदादिविधिरित्यस्य तेनेत्यादिः । तदयमर्थः । द्वित्वनिमित्ताजादिप्रत्ययानिमित्तोजादेशः स्थानिवद् द्वित्वे कर्त्तव्ये इति । विरुद्धत्वादिति । एवञ्च सह विवक्षाभावान्नैकशेषो वक्तुं शक्य इति भावः । प्रागेव । सर्वादीनीत्यत्र । नन्वेकशेषे द्विर्वचनापत्तिरत आह विभक्त्यन्तयोरिति । परिभाषावच्छास्त्रमात्रोपयोगित्वादिति भावः । प्रातिपदिकानामेवैकशेषे ध्याह अथवेति । नीलोत्पलस्पर्धिनी नेत्रे तनुर्वेति, वादिति भावः । क्रमेण बोधात्तत्रावृत्तिर्बोद्धारं प्रति उच्चारयितुस्तन्त्रम् । इह निमित्तशब्देन साक्षात्परम्परासाधारणं प्रयोजकं न तु साक्षादेवेत्याग्रहः । तद्भावभावितामात्रेण निमित्तस्यंहाङ्गीकारात् । अत एव चक्रतुरित्युदाहरणसङ्गतिः । स्वोक्तसर्वोत्वित्यस्य पुयण्जिष्विति

इत्याह तज्ज्ञापयत्याचार्यो भवति णौ स्थानिवद्भाव इति। यद्येतज्ज्ञाप्यते। आचिकीर्तद् अत्रापि प्राप्नोति। तुल्यजातीयस्य ज्ञापकम्। कश्च तुल्यजातीयः। यथाजातीयकाः पुयण्जयः। कथंजातीयकाश्चैते। अवर्णपराः। कथं जग्ले मम्ले। अनैमित्तिकमात्वं शिति तु प्रतिषेधः। कानि पुनरस्य योगस्य प्रयोजनानि। पपतुः पपुः। तस्थतुस्तस्थुः। जग्मतुर्जग्मुः। आटिटत् आशिशत्। चक्रतुश्चक्रुरिति। आल्लोपोपधालोपणिलोपयणादेशेषु कृतेष्वनच्कत्वाद् द्विर्वचनं न प्राप्नोति।

---

स्य स्थानिवद्भावमन्तरेण पुयण्जिषु सर्वेष्ववर्णपरेषु उवर्णान्तो ऽभ्यासः संभवति। पिपविषते यियविषते यियविषतीत्यत्रैवाऽनेन स्थानिवद्भावात्तत्र पु इति पवर्गग्रहणाद् यणिति प्रत्याहारग्रहणाज्जग्रहणाच्च ज्ञापकाण्णौ कृतस्य स्थानिवद्भावो ऽनुमीयते। ननु तत्र णाविति नास्ति तत्कथं तत्रैव स्थानिवत्त्वानुमानं न तु बिभवनीयिषति दिद्यवनीयिषतीत्यादावपि। नैतदस्ति। येन नाव्यवधानमित्येकेनैव प्रत्ययेन तत्र व्यवधानाश्रयणाण्णेरेव केवलस्य व्यवधायकस्य संभवात्। कानि पुनरिति। अन्यथा सिद्धत्वात्प्रश्नः। पूर्वविप्रतिषेधेनापीति। अपूर्वो वाचनिकः पूर्वविप्रतिषेधः। नहि नित्यानामाल्लोपादीनामनित्येन द्विर्वचनेन च न्याय्यो विप्रतिषेधः। अथ निन्यतुरिति कथं

---

भाष्ये निर्धारणसप्तमीनिर्देशस्य च कृत्यमाह पिपविषत इति। अनेन द्विर्वचनेचीत्यनेन। न चात्रोत्तरखण्डे जातियोरचोरचः परस्मिन्निति स्थानिवत्त्वेनावर्णपरत्वाभावात्कथमंगः पुयाणित्यस्य प्राप्तिरिति वाच्यम्। एतत्सूत्रारम्भसामर्थ्येनैव तत्प्रवृत्तेः। सनीवन्तेति स्मिपूङिति चोभयत्रेट्। नन्ववर्णपरपुयण्जयो णौ प्रत्ययान्तरे च सम्भवन्ति तत्कथं णावित्युक्तमित्याशङ्क्ते नन्विति। येन नेति। प्रकृतसूत्रे परस्मिन्नितिवर्त्तते तेन द्वित्वनिमित्ते ऽजादौ प्रत्यये प्रत्ययान्तरेणाव्यवहिते परे सति योऽजादेशः स स्थानिवदिति सूत्रार्थः सम्पन्नेन ज्ञापकेन व्यवाये प्रवृत्तिर्ज्ञाप्यते तत्र प्रत्ययव्यवधानं विना वर्गादीनामुदाहरणासम्भवेन येन नाव्यवधानन्यायेनैकव्यवधाने एव प्रवृत्तिः स च णिरेव सम्भवतीति भावः। न चोरु. ऋजु. अम्बुशब्दादिभ्य आचारक्विपि सनि इटि द्वित्वे गुणाद्यभावे उरुरविषतीत्यादावित्यार्थं वर्गादिग्रहणं चरितार्थम्। किं च भ्वादिभ्यो विजन्तेभ्य आचारे क्विपि सनि बिभाविषतीत्यादौ चरितार्थमिति कथं ज्ञापकत्वमिति वाच्यम्, सनिग्रहस्यचोपदेशाधिकाराभावात्य एकाच उपदेश इति सूत्रे भाष्ये ध्वनितत्वेनोक्तप्रयोगेषु तेन निषेधेनेटो दुर्लभत्वाद्विषामनभिधानाच्च विचो ऽसार्वत्रिकत्वाच्च। एतेन दवादिभ्य आचारक्विपि सनि दिदाविषतीत्यादावेकव्यवधानस्यैव सत्त्वेन दोष इत्यपास्तम्। भाष्ये[णौ स्थानिवदिति]। अत्र णाविति प्रत्ययग्रहणेन यस्मा द्विहितस्तदादेरित्यस्योपस्थित्या तस्याचो णिनिमित्तकादेश इत्यर्थः। यदि त्वानियमप्रसक्त्यभावेन नियमफलायास्तस्य नोपस्थितिरत एव ह्रस्वस्य पितीत्यादौ न तदुपस्थितिरित्युच्यते तर्हि मास्तु। णौ पर इत्यर्थे रेफेण व्यवधानात्पुस्फारयिषतीत्याद्यसिद्धिरिति बोध्यम्। ज्ञापनफलं तुतावयिषतीत्यादि। तुल्यजातीयस्येति। प्वादिघटितधात्ववच्तुल्यस्याच आदेश इत्यर्थः। षष्ठ्यन्तस्य षष्ठ्यन्ताच इत्यनेनैवान्वययोग्यत्वादिति बोध्यम्। अचत्वेन तुल्यत्वं कृतेरपीति पृच्छति कश्चेति। उत्तरयति यथाजातीयका इति। प्वादिघटितधात्वच इत्यर्थः। प्वादिभिरचस्तुल्यत्वासम्भवात्। अवर्णपरा इति। अवर्णपरत्वसंपादकादेशस्थानिन इत्यर्थः। एवञ्चावर्णपरत्वसंपादकादेशस्थानिवत्त्वेन तुल्यत्वमिति भावः।एवञ्चौनमद औजढदित्यादि चिन्त्यमेव। किं च यत्र द्विरुक्तौ परभागस्याद्यो ऽजवर्णस्तत्रैवामीति द्विर्वचनेचीत्यादौ भाष्यकैयटयोः स्थितमिति माधवोक्तं कथं भाष्यारूढमित्यपि चिन्त्यमेवेत्याहुः। अनैमित्तिकमात्वमिति। अत एव ह्वामश्चेति ह्वः कबाधनार्थं पुनरण्विधान चरितार्थमिति पर्युदासपक्षे ऽप्यदोषमाविच इत्यत्र भाष्यकारो वक्ष्यति। अनच्कत्वादिति। आटिटदित्यत्र णिलोपे धातोर्द्वितीयस्याज्व्यहितत्वादित्यर्थो बोध्यः। पूर्वविप्रतिषेधेनाप्येतानीति। द्विर्वचनेचीति सूत्रसाध्यानि णौ स्थानिवदिति ज्ञापकसाध्यानि चेत्यर्थः। नहि नित्यानामिति। आल्लोपादीनामित्यर्थः।

स्थानिवद्भावाद्भवति। नैतानि सन्ति प्रयोजनानि। पूर्वविप्रतिषेधेनाप्येतानि सिद्धानि। कथम्। वक्ष्यति ह्याचार्यः। द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्य इति। स पूर्वविप्रतिषेधो न पठितव्यो भवति। किं पुनरत्र ज्यायः। स्थानिवद्भाव एव ज्यायान् पूर्वविप्रतिषेधे हीदं वक्तव्यं स्यात्। ओदौदादेशस्य उद्भवति चुट्टुतुशरादेरभ्यासस्येति। ननु च त्वयापीत्वं वक्तव्यम्। परार्थं मम

---

नह्यत्रेयङ् परिगणितः। एवं तर्हि प्रकल्प्य चापवादविषयमिति न्यायाद् यत्राऽत्र भवितव्यमितीयङ् न प्रवर्तत इति द्विर्वचने कृते परत्वेनैकाच इति यथा सिद्धम्। ओदौदादेशस्येति ओदौतोरादेशो यस्मिन्नङ्गे तस्य योऽभ्यासश्चुट्टुतुशरादिस्तस्य यो ऽकारस्तस्योकारादेशो भवतीत्यर्थः। यथा चुच्चावयिषति ऊर्णुनावयिषति नुनावयिषति तुतावयिषति शुश्रावयिषति। पुस्फारयिषति। अत्र चिस्फुरोर्णावित्योकारस्यात्वम्। अत्र च यद्यपि खयः शेषे कृते अभ्यासस्य शरादित्वं नास्ति तथाप्यभ्याससंज्ञाप्रवृत्तिसमये ऽस्ति एवेष्वन्तरङ्गत्वात्प्रागेव द्विर्वचनाद्वृद्ध्यावादेशयोः प्रवर्तनादिवर्णान्ततायामभ्यासस्य प्राप्तायामुत्वं विधीयते। ननु च त्वयापीति। ओः पुयण्ज्यपरे इति ज्ञापनार्थमवश्यं वाच्यमित्यर्थः। उत्ववादी तु ओः पुयण्जीति न पठति सन्यत इतीत्वस्य सिद्धत्वात्। परार्थमि-

---

द्विर्वचनेचीत्यादेरभावे द्विर्वचनमनित्यम्। भाष्ये [ वक्ष्यति हीति ]। गाम्भान्साहानीति सूत्रे। यणाच भाव्यमिति। यदीयङ् न स्यात् तर्हि स स्यादिति तत्संभावनासत्त्वशाइत्यर्थः। जग्लावित्याद्यर्थं वृद्धिपाठोऽप्यत्र बोध्यः। वस्तुतो ऽत्र यणादिग्रहणं अचस्थानिकस्य द्विर्वचनात्परस्य विधेरुपलक्षणं बोध्यम्। सूत्रारम्भवादी आह। ( स पूर्वविप्रतिषेध इति )। उभयोः समतया तृतीयः पृच्छति ( किं पुनरिति। स्थानिवद्भाव एव ज्यायानिति )। अयं भावः। अयं पूर्वविप्रतिषेधो ऽन्तरङ्गाणां बाधको न वा। नाद्यः, बिभवनीयिषतीत्याद्यसिद्ध्यापत्तेः। किं चेष्टानिष्टाविवेकस्य लक्षणैकचक्षुष्कैर्दुर्ज्ञेयत्वेन सर्वत्रैव पूर्वविप्रतिषेधवचनस्यावश्यकत्वेनेह नित्यान्तरङ्गबाधाय सुतरां वचनावश्यकत्वेन क्व सूत्रमतापेक्षया लाघवमिति। अन्ये दूषणमाह ओदौदादेशस्येति। अत्र समानाधिकरणबहुव्रीह्यङ्गीकारे चुक्षावयिषतीत्यादौ दोषः स्यात् निवर्त्यनन्त्वल्विधित्वान्नेत्यत आह ओदौतोरादेशो यस्मिन्निति। इदमेव ज्ञापकमन्तरङ्गाणामिदमबाधकमिति न बिभवनीयिषतीत्यादौ दोषः। अत्र सनीत्यंशोऽपि पूरणीयः। अन्यथा दिवनीयिषतीत्यादौ अनेनोत्वापत्तिः। तत्र कृते तु निर्दिष्टपरिभाषया ऽनेकव्यवधानान्न तत्र दोषः। एकाणिव्यवधानन्तु येन नाव्यवधानन्यायेन सह्यत एव। नन्विदं वचनं ओः सोन्नात् णिचि चङि सनि वाजीजवद् जिजावयिषतीत्यादौ अतिव्याप्तम्। न च चकार एव पाठ्यः। शुद्धुशुद्भ्यां णाचि चङि सनि वाजूगवदित्यादौ दोषापत्तेरिति चेन्न। जोर्नेत्यस्याप्यपि वाच्यत्वात्। ओदौतोः किम्। चिखादयिषति। चित्रस्यादि किम्। बिभावयिषतीत्यादि। यद्यपि चछोश्छत्वे चिच्छासति इत्यत्रैवातिप्रसक्तं तथापि औसाहचर्यादोकारोऽपि लाक्षणिक एव गृह्यते तदादेशो वा औत्वसाहचर्याद् अत्रैव गृह्यत इति न दोषः। ऊर्णुनावयिषतीति। यद्यपि पूर्वत्रासिद्धीयमद्विर्वचने इत्यस्यानित्यतया नुशब्दस्यत्र द्वित्वेनाभ्याससंज्ञाप्रवृत्तिकाले शरादित्वाभावस्तथा ऽपि द्वित्वे कृते ऽपि द्वित्वनिष्पन्नस्य कार्ये कर्तव्ये पूर्वत्रासिद्धत्वाभावबोधनात्तत्रानित्यत्वकल्पने मानाभावाच्चैतत् प्रवृत्तिकाले शरादित्वमस्त्येवेति बोध्यम्। अभ्याससंज्ञाप्रवृत्तिसमये इति। एवञ्चाभ्याससंज्ञाप्रवृत्तिसमये परिनिष्ठितरूपे वा यत्र चुट्टुतुशरादित्वं तत्रास्य प्रवृत्तिरिति भावः। तत्रान्त्योदाहरणं चुक्षावयिषतीत्यादि। न हि तत्राद्यकाले तस्य क्षु इति कवर्गादित्वाद् इत्याद्युः। ननु णेर्द्वित्वनिमित्तत्वाभावेन स्थानिवत्त्वाभावाद्बिभावयिषतीत्यादिसिद्धमिति त्वयापीत्यनुक्तमतओः

भविष्यति सन्यत इद्भवतीति । ममापि तर्ह्युत्त्वं परार्थं भविष्यति उत्परस्यातस्तिचेति । इत्त्वमपि त्वया वक्तव्यम् । यत्समानाश्रयं तदर्थम् । उत्पिपाविषते संयियविषतीत्येवमर्थम् । तस्मात्स्थानिवदित्येष एव पक्षो ज्यायान् । द्विर्वचनेऽचि ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
प्रथमस्याध्यायस्य प्रथमे पादेऽष्टममाह्निकम् ॥ ८ ॥

---

मिति । इत्त्वार्थं प्रसङ्गात्तु ज्ञापकं त्वया त्वपूर्वमुत्त्वं वक्तव्यमित्यर्थः । ममापीति । उत्त्वमप्यन्यार्थं वक्तव्यं तदेवाधिकविषये उपजीव्यत इत्यर्थः । तत्रायं न्यासः । उत्परस्यातः ति च ओदौदादेशस्य चुट्टुतुशरादेरिति अभ्यासस्येति वर्तते । इत्वमपीति । यत्रान्तरङ्गत्वं नास्ति समानाश्रयत्वात् । पवतेर्यौतेश्च सनि स्मिपूङ्रञ्ज्वशां सनि सनीवन्तर्धेति चेटि कृते परत्वाद् गुणः पूर्वविप्रतिषेधादवादेशात् पूर्वं द्विर्वचनमितीत्वं वक्तव्यम् । तथा जिजावयिषतीत्यत्रेत्वविधानार्थं वक्तव्यम् । तस्मादिति । नन्वसत्यस्मिन् सूत्रे आः पुयण्जीति ज्ञापकमेवं समर्थयिष्यते अन्तरङ्गो नित्यश्च विधिर्द्विर्वचनेन प्रतिषिध्यत इति तत्र द्विर्वचने कृते यथाप्राप्तं भविष्यति । तदयुक्तम् । यदि सामान्येन ज्ञापकमाश्रीयते अचिकीर्तदित्यत्रापि पूर्वं द्विर्वचनप्रङ्गादनिष्टरूपप्राप्तिः।अथ तुल्यजातीयापेक्षं ज्ञापकं व्याख्यायते यथोक्तं भाष्यकारेण तथा सति चक्रुरित्यादि न सिध्यतीति सूत्रमेव कर्तव्यं यत्तु तेन न सिध्यति तदर्थं ज्ञापकमाश्रयणीयं तुल्यजातीयापेक्षमिति सर्वेष्टलक्ष्यसिद्धिः ॥ ५९ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे
प्रथमाध्यायस्य प्रथमपादेऽष्टममाह्निकम् ॥ ८ ॥

---

ष्विति ।चुक्षावयिषतीत्यादिसिद्ध्यर्थमित्यर्थः।परार्थमित्यत्र परशब्देन ज्ञापकापेक्षया परमित्वं विवक्षितमित्याह इत्वार्थमिति।द्विर्वचनेचीति स्थानिवत्वात् पिपविषते यियविषतीत्याद्यर्थमित्यर्थः । प्रसङ्गादिति । वर्णप्रत्याहारजमहादित्यथः।सन्यत इद्भवतीति विहितमित्वमिहानुवर्तमानं परार्थम्भविष्यतीति भाष्येऽन्वयः। तत्र सन्यत इत्यभिधानं स्वरूपेणत्वमपूर्वं न भवतीति प्रदर्शनार्थं तद् ध्वनयन्नाह अपूर्वमुत्वमिति।अपूर्वत्वं तदभावमात्रेण वैषम्यमस्याभिप्रेतमिति मन्वानस्तद्विघटयितुमाह परः । ममापि तर्ह्युत्वमिति । तद्व्याचष्टे उत्वमपीति । नापूर्वत्वं तदभावमात्रेण वैषम्यमभिप्रेतं किन्तु गौरवतदभावाभ्यामिति दर्शयितुं भाष्ये ( इत्वमपीति ] । तदुपपादयति यत्रेति । गुणावादेशयोरिति शेषः । वक्तव्यमिति । ज्ञानेति वक्तव्यमित्यर्थः । नन्वसतीति । असत्यपीत्यर्थः । यदीति । लघुपरत्वाभावेन सन्वत्त्वाभावा ऽचिकीर्त्तदित्यत्र दोषः,दिद्रवनीयिषतीत्यादावपि दोषो बोध्यः। अथ तुल्येति । अवर्णपरत्वं यत्राभ्यासोत्तरखण्डाद्यवर्णस्य अभ्याससंज्ञाप्रवृत्तिसमयं परिनिष्ठितरूपे वा तत्र द्विर्वचनेनान्तरङ्गनित्ये बाध्येते इत्यर्थः । चक्रतुरिति । दिद्रवनीयिषतीत्याद्यसिद्धिरित्यपि बोध्यम् ॥ ५९ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते
प्रथमस्याध्यायस्य प्रथमे पादेऽष्टममाह्निकम् ॥ ८ ॥

अदर्शनं लोपः ॥ ६० ॥ अर्थस्य संज्ञा कर्तव्या शब्दस्य मा भूदिति। इतरेतराश्रयं च भवति। का इतरेतराश्रयता। सतोऽदर्शनस्य संज्ञया भवितव्यम्। संज्ञया चादर्शनं भाव्यते। तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च कार्याणि न प्रकल्प्यन्ते। लोपसंज्ञायामर्थसतोरुक्तम् *। किमुक्तम्। अर्थस्य तावदुक्तम् इतिकरणोऽर्थनिर्देशार्थ इति। सतोऽप्युक्तं सिद्धं तु नित्यशब्दत्वादिति। नित्याः शब्दाः नित्येषु शब्देषु च सतोऽदर्शनस्य क्रियते न संज्ञयाऽदर्शनं भाव्यते। सर्वप्रसङ्गस्तु सर्वस्यान्यत्रादृष्टत्वात् *। सर्वप्रसङ्गस्तु भवति सर्वस्यादर्शनस्य लोपसंज्ञा प्राप्नोति। किं कारणम्। सर्वस्यान्यत्रादृष्टत्वात्। सर्वो हि शब्दो यो यस्य प्रयोगविषयः स ततोऽन्यत्र न दृश्यते। त्रपु जतु इत्यत्राणोऽदर्शनं तत्रादर्शनं लोप इति लोपसंज्ञा प्राप्नोति। तत्र को दोषः। तत्र प्रत्ययलक्षणप्रतिषेधः *। तत्र प्रत्ययलक्षणं कार्यं प्राप्नोति। तस्य प्रतिषेधो वक्तव्यः। अचो ञ्णितीति वृद्धिः प्राप्नोति। नैष दोषः। ञ्णित्यङ्गस्याचो वृद्धिरुच्यते। यस्मात्प्रत्ययविधिस्तदादि प्रत्यये ऽङ्गं भवति। यस्माच्च प्रत्ययविधिर्न तद् प्रत्यये परतः। यच्च प्रत्यये परतः न तस्मात्प्रत्ययविधिः। क्विपस्तर्ह्यदर्शनम्। तत्रादर्शनं लोप इति लोपसंज्ञा प्राप्नोति। तत्र को दोषः। तत्र प्रत्ययलक्षणप्रति-

---

अदर्शनं लोपः ॥ अर्थस्येति। स्वं रूपमिति वचनाच्छब्दस्यैव संज्ञा प्राप्नोतीति भावः। इतरेतराश्रयमिति। विधिप्रदेशेष्वेतच्चोद्यं नानुवादे चादिलोपे विभाषेत्यादौ। इतिकरण इति। इहापि स एवानुवर्तते लोप इत्यन्वर्थसंज्ञाविज्ञानाद्वार्थस्य संज्ञा न शब्दस्य। सर्वप्रसङ्गस्त्विति। यदि स्वभावतोऽप्रयुक्तस्यान्वाख्यान मात्रं क्रियते तदा सर्वस्य स्वाविषयादन्यत्राप्रयोगादस्त्यदर्शनमिति लोपसंज्ञाप्रसङ्गः। ञ्णित्यङ्गस्येति। अङ्गसंज्ञा च विधानप्रतिबद्धा न चात्र प्रत्ययस्य णितो विधानम्। यस्माच्चेति। त्रपुशब्दात्सोर्विधानम्। न तत्प्रत्यय इति। ञ्णिति वृद्धिनिमित्त इत्यर्थः। यच्चेति। सुशब्दे। न तस्मादिति। तस्मात्त्रपुशब्दात्सोरन्यस्याणो विधानं नास्तीत्यर्थः। अनाङ्गं

---

अदर्शनं लोपः ॥ नन्वप्रत्याख्येदर्थपरो दर्शनशब्द इति सिद्धैवाऽर्थस्य संज्ञेत्यत आह स्वरूपमिति। नानुवादे इति। तत्र हि न संज्ञाकृतो भाव इत्यर्थः। भाष्ये ( उक्तमिति )। नवेति विभाषेत्यत्रेत्यर्थः। असंबद्धपदव्यवायान्नानुवृत्तिरत आह लोप इतीति। तदर्थान्वययोग्यताया अर्थे एव सत्त्वाद् अदर्शनशब्दस्य तादृशान्वर्थसंज्ञाकरणे फलाभाव इति भावः। प्रसक्तादर्शनस्येत्यर्थलाभार्थस्थाने परस्यैवास्याप्यनुवृत्तिः सुलभा। लुप्लृच्छेदने इति धात्वर्थानुसारेणान्वर्थस्यासंभवादिति तु भाष्यतात्पर्यम्। अभावो लोप इत्यवसानसंज्ञासूत्रभाष्योक्तेरदर्शनशब्देन तत्समनियतो वर्णाभाव एवात्रेति बोध्यम्। स्वं रूपमित्यस्य प्रत्याख्यानं तदनुवृत्तिं विनापि सिद्धिरिति बोध्यम्। नित्यशब्दाश्रयणे इतरेतराश्रयपरिहारेऽप्ययं दोष इत्याह सर्वेति। अत्र प्रत्ययो नाणित्याह सोरिति। ञ्णिति वृद्धिनिमित्ते इति। अङ्गसंज्ञासूत्र प्रत्यासत्त्या प्रत्ययपदार्थयोरैक्याश्रयणाद् वृद्धिविधौ ञ्णित्प्रत्ययानिरूपिताङ्गग्रहणाच्चेति भावः। चादिलोप इति सङ्ग्रहायाह अर्थाद्वेति। एकवचनमुत्सर्गत इत्यादिशास्त्रमर्थनिरपेक्षं विभक्तिप्रसञ्जकम्। अर्थोऽप्येकत्वादिर्विवक्षित एकवचनादिप्रसञ्जक इति बोध्यम्। ननु कथं प्रसक्तस्येति लभ्यतेऽत

षेधः। तत्र प्रत्ययलक्षणं कार्यं प्राप्नोति। तस्य प्रतिषेधो वक्तव्यः। ह्रस्वस्य पिति कृति तुगिति तुक् प्राप्नोति। सिद्धं तु प्रसक्तादर्शनस्य लोपसंज्ञत्वात्। सिद्धमेतत्। कथम्। प्रसक्तादर्शनं लोपसंज्ञं भवतीति वक्तव्यम्। यदि प्रसक्तादर्शनं लोपसंज्ञं भवतीत्युच्यते। ग्रामणीः सेनानीः। अत्र वृद्धिः प्राप्नोति। प्रसक्ताऽदर्शनं लोपसंज्ञं भवति षष्ठीनिर्दिष्टस्य। षष्ठीनिर्दिष्टस्येत्युच्यते। चादिलोप एवेत्यवधारणम्। चादिलोपे विभाषा। अत्र लोपसंज्ञा न प्राप्नोति। अथ प्रसक्ताऽदर्शनं लोपसंज्ञं भवतीत्युच्यमाने कथमेवैतत् सिध्यति। को हि शब्दस्य प्रसङ्गः। यत्र गम्यते चाऽर्थो न च प्रयुज्यते। अस्तु तर्हि प्रसक्ताऽदर्शनं लोपसंज्ञं भवतीत्येव। कथं, ग्रामणीः सेनानीः। योऽत्राणः प्रसङ्गः क्विपाऽसौ बाध्येत॥

प्रत्ययस्य लुक्श्लुलुपः॥ ६१॥ प्रत्ययग्रहणं किमर्थम्। लुमति प्रत्ययग्रहणमप्रत्ययसंज्ञाप्रतिषेधार्थम् ॥। लुमति प्रत्ययग्रहणं क्रियते। अप्रत्ययस्यैताः

---

कार्यं चोदयति क्विप इति। त्रपु इत्यत्र क्विपो ऽदर्शनमस्ति स च कृदिति तुक्प्रसङ्गः। सिद्धं त्विति। शास्त्रादर्थाद्वा प्रसक्तस्य यददर्शनं तल्लोपसंज्ञं भवति। स्थानेग्रहणमिहाप्यनुवर्तते। स्थानं च प्रसङ्गः। तेन प्रसङ्गे यददर्शनमिति लभ्यते। ग्रामणीरिति। अर्थोपपदधातुसंनिधानादर्थाच्छास्त्राच्चाणः प्रसङ्गोऽस्तीति भावः। षष्ठीनिर्दिष्टस्येति। षष्ठीग्रहणमप्यनुवर्तते। चादिलोप इति। ततश्च शुक्ला व्रीहयो भवन्ति श्वेता गा आज्याय दुहन्तीति निघातविकल्पो न स्यात्। अथेति। अत्राऽपि चादीनां शास्त्रान्नास्ति प्रसङ्गः। क्विपा ऽसौ बाध्यत इति। सत्सूद्विषेति क्विपो विधानादणो ऽत्र प्रसङ्गाभावः॥ ६०॥

प्रत्ययस्य॥ प्रत्ययग्रहणमिति। लुगादिविधौ क्व चित्प्रत्ययः साक्षान्निर्दिश्यते क्वचिदनुवर्तते क्वचित्सामर्थ्यात्प्रतीयते इति प्रश्नः। अप्रत्ययस्येति। अविद्यमानः

---

आह स्थाने इति। न च पित्कृता प्रकृत्याक्षेपेणापि तुग्वारयितुं शक्यः। आक्षेपे आक्षिप्तस्य शाब्दे ऽन्वये च मानाभावात्। अत्र चेदमेव भाष्यं मानम्। किं चानुपपद्यमानेन स्वोपपादकमाक्षिप्यते यथा पीनत्वेन रात्रिभोजनं नचैवं प्रकृते। न हि तत्सूत्रे आक्षेपं विना पित्कृत्त्वस्यानुपपत्तिरस्ति। नापि तदाक्षेपेण तदुपपत्तिर्नापि प्रत्ययग्रहणे यस्मात्सविहितस्तदादेरित्युपस्थितिः। अनियमप्रसक्त्यभावेनानियमफलायास्तस्या अनुपस्थितेरित्याविदितम्। किं चात्रैव प्रकृतिं विना प्रत्ययज्ञानसत्त्वेन व्यभिचारात्तदाक्षेपासम्भव इति दिक्। यत्तु ग्रामाधिकरणिका स्थितिरित्यर्थके ग्रामे तिष्ठतीति वाक्ये ल्यब्लोप इति पञ्चम्यापत्तिवारणाय प्रसक्तस्येत्यावश्यकमिति। तन्न। तेन प्रत्यासत्त्या ल्यबन्तार्थकर्माधिकरणयोरेव पञ्चमीविधानेनाप्राप्तेः। तत्त्वे त्विष्टापत्तिः पञ्चम्या इत्यलम्। अर्थादिति। कर्तृलक्षणादित्यर्थः। शास्त्रात्कर्मण्यणित्यतः अणः प्रसङ्ग इति। यस्मात्प्रत्ययविधिरित्यत्र विधिः प्रसङ्ग एव निविष्ट इत्यङ्गत्वमस्तीत्यभिमानः। षष्ठीग्रहणमिति। तच्च षष्ठ्यन्तं वैयधिकरण्येनादर्शनान्वयीति बोध्यम्। अत्रापीति। शास्त्रतः प्रसक्तिरेवाभिमतेति बोध्यमिति भावः। अर्थतोपि प्रसक्तिर्गृह्यते इत्युत्तरम्। अणोऽत्रेति। परिहृत्य चापवादविषयमिति न्यायेन प्रसङ्ग एव नास्तीति भावः॥ ६०॥

प्रत्ययस्य॥ ननु लुगादिविधौ प्रत्ययादर्शनविधिर्यया स्यादित्यर्थं प्रत्ययस्येतीत्यत आह लुगादीति। साक्षादिति। लुगणिञोरित्यादौ। क्वचिदिति। यथा लुग्वादुहेत्यादौ क्सस्येति। क्वचिदिति। वक्ष्यमाणसूत्रेषु वक्ष्यमाणयुक्तिभिरित्यर्थः। नन्वदर्शनस्येमाः संज्ञा इति अप्रत्ययस्येना इत्यनुपपन्नमत आह अविद्य-

संज्ञा मा भूदिति । किं प्रयोजनम् । प्रयोजनं तद्धितलुकि कंसीयपरशव्ययोर्लुकि च गोप्रकृतिनिवृत्त्यर्थम् । तद्धितलुकि गोनिवृत्त्यर्थम् । कंसीयपरशव्ययोश्च लुकि प्रकृतिनिवृत्त्यर्थम् । लुक्तद्धितलुकीति गोरपि लुक् प्राप्नोति । प्रत्ययग्रहणान्न भवति । कंसीयपरशव्ययोर्यञञौ लुक् चेति प्रकृतेरपि लुक् प्राप्नोति प्रत्ययग्रहणान्न भवति । गोनिवृत्त्यर्थेन तावन्नार्थः । योगविभागात् सिद्धम् * । योगविभागः करिष्यते । गोरुपसर्जनस्य । गोन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति । ततः स्त्रियाः । स्त्रीप्रत्ययान्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति । ततो लुक्तद्धितलुकीति स्त्रिया इति वर्तते गोरिति निवृत्तम् । कंसीयपरशव्ययोर्विशिष्टनिर्देशात् सिद्धम् * । कंसीयपरशव्ययोर्विशिष्टनिर्देशः कर्तव्यः । कंसीयपरशव्ययोर्यञञौ भवतश्छयतोश्च लुग्भवतीति । स चावश्यं विशिष्टनिर्देशः कर्तव्यः । क्रियमाणे ऽपि वै प्रत्ययग्रहणे उकारसकारयोर्मा भूदिति । कमेः सः कंसः । परान् शृणातीति परशुरिति । नैष दोषः । उणादयो ऽव्युत्पन्नानि

---

प्रत्ययो ऽस्मिन्नदर्शने इति तदप्रत्ययम् । गोरपीति । पञ्चेन्द्र इत्यादौ तु निर्दिश्यमानस्यादेशा भवन्तीति वचनात् स्त्रीप्रत्ययस्यैव लुग् भविष्यति न तदन्तस्य । गोस्तद्धितलुकीत्यत्र गोर्लुकि कृते पञ्चगुरित्यादौ गोशब्दान्तत्वाऽभावात्समासान्ताऽप्राप्तावतद्धितलुकीति प्रतिषेधो ऽनर्थकः स्यादिति चेत् । कृते समासान्ते लुक् स्यादित्यर्थवानेव प्रतिषेधः । ननु स्वभावतो ऽप्रवृत्तस्याऽदर्शनं लुक्संज्ञं न च तत्र गोशब्दस्य स्वभावतो ऽप्रवृत्तिः । नैष दोषः । शास्त्राऽनुसारिभिरस्यार्थस्य दुर्ज्ञानत्वात् । प्रकृतेरपीति । समुदायस्य षष्ठीनिर्देशात् । योगविभागादिति । एकयोगनिर्दिष्टानामप्येकदेशाऽनुवृत्तिरित्येतत् प्रकारान्तरेण प्रतिपाद्यते । विशिष्टनिर्देशादिति । छयतावेवाऽत्र निर्देष्टव्याविस्यर्थः । उणादय इति । अतः कृकमिकंसशब्दस्य भेदेनोपादानात् क्व चिदुणादयो व्युत्पत्तिकार्यं न लभन्तइत्यर्थः । यञञोस्तु विधानसामर्थ्याल्लुगभावः । स एषो ऽन-

---

मान इति । प्रतियोगिविशेषणस्येनेति शेषः । वस्तुतो ऽवसानसंज्ञावत् वक्ष्यमाणरीत्या प्रत्ययाभावस्यैवेमाः संज्ञा इति भाष्याभिप्रायः । भाष्ये ( गोरपीति ) गोस्त्रियोरिति समुदायानुवृत्तेरिति भावः । ननु गोस्त्रियोरित्यत्र स्त्रीति स्वरितगुणयुक्तमिति स्त्रियामित्यधिकारविहितप्रत्ययग्रहणेन तदन्तग्रहणात् प्रत्ययान्तस्य लुक् स्यादिति तद्धितलुकि तन्निवृत्त्यर्थत्वमपि कुतो नोक्तमत आह पञ्चेन्द्र इति । गोनिवृत्तिः प्रत्ययग्रहणं विनापि सिध्यतीति शङ्कते गोरिति । पञ्चगुरित्यत्र क्रीतार्थठञो ऽध्यर्धेतिलुक् । कृते इति । परत्वादिति भावः । अन्तरङ्गानपीति न्यायस्तु अन्तरङ्गनिमित्तविनाशकप्रत्ययलुग्विषये इति तात्पर्यम् । न च समासान्ते तेन व्यवधानात्कथं लुक् । गोरित्यनुवृत्तिसामर्थ्येन लुक्प्राप्तेरिति बोध्यम् । नित्यशब्दान्वाख्यानाभिप्रायेणा शङ्कते नन्विति । समुदायस्येति । यस्येति चेत्यकारलोपे सिद्धे लुग्विधानसामर्थ्येन सर्वादेशः स्यादित्यर्थः । ननु योगविभागे सूत्रभेदः कृतः स्यादत आह एकयोगेति । प्रकारान्तरम् । योगविभागरूपम् ॥ छयताविति । कंसात् प्राक्क्रीताच्छः । परशोरुगवादिभ्यो यत् । कंसे कमः सः । परशौ आङ्परयोः खनिशृभ्यां डिच्चेत्युप्रत्ययः । अतः कृइति । धातौ सप्तमीनिर्दिष्टे तदादिग्रहणात् कामग्रहणे कमिग्रहणेनैव सिद्धे इति शेषः । कमस्तु कंस इति न रूपम् । अनभिधानादिति भावः । अत एवेह कमेः सः कंस इति भाष्ये उक्तम् । नन्वेमपि विशिष्टनिर्देशाभावे यञञोरपि लुक् स्यादत आह यञञोरिति । विकारावयवार्थ-

प्रातिपदिकानि । स एषो ऽनन्यार्थो विशिष्टनिर्देशः कर्तव्यः, प्रत्ययग्रहणं वा कर्तव्यम् । उक्तं वा । किमुक्तम् । ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थं यच्छ-योश्च लुगर्थमिति । षष्ठीनिर्देशार्थं तु * । षष्ठीनिर्देशार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम् । षष्ठीनिर्देशो यथा प्रकल्पेत । अनिर्देशे हि षष्ठ्यर्थाप्रसिद्धिः * । अक्रियमाणे हि प्रत्ययग्रहणे षष्ठ्यर्थस्याप्रसिद्धिः स्यात् । कस्य । स्थानेयोगत्वस्य । क पुनरिह षष्ठीनिर्देशेनार्थः प्रत्ययग्रहणेन यावता सर्वत्रैव षष्ठ्युच्चार्यते अणिञो-स्तद्राजस्य यञञोः शप इति । इह न का चित् षष्ठी जनपदे लुबिति अत्रापि प्रकृतं प्रत्ययग्रहणमनुवर्तते । क्व प्रकृतम् । प्रत्ययः परश्चेति । तद्वै प्रथमानिर्दि-ष्टम् । षष्ठीनिर्दिष्टेन चेहार्थः । ङ्याप्प्रातिपदिकादित्येषा पञ्चमी प्रत्यय इति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति । प्रत्ययविधिरयं न च प्रत्यय-विधौ पञ्चम्यः प्रकल्पिका भवन्ति । नायं प्रत्ययविधिः । विहितः प्रत्ययः प्रकृ-तश्चानुवर्तते । सर्वादेशार्थं वा वचनप्रामाण्यात् * । सर्वादेशार्थं तर्हि प्रत्ययग्रहणं

---

न्यार्थ इति । प्रकृतिनिवृत्त्यर्थ एव नतु प्रत्ययान्तरानिवृत्त्यर्थो ऽपीत्यर्थः । षष्ठीनिर्देशार्थे त्विति । विशिष्टस्य षष्ठ्यर्थस्य स्थानेयोगत्वस्य निर्देशार्थमित्यर्थः । असति प्रत्ययस्ये-त्येतस्मिन् यः कश्चिदानन्तर्यादिः संबन्धः स्यात् ततश्च जनपदे लुबिति पञ्चालाः शोभना इत्यादौ जनपदवाचिनोऽनन्तरस्य शोभनादेरपि लुप् स्यात् । सर्वादेशार्थं वेति । षष्ठीनिर्देशार्थत्वं तु स्थितमेवेति वार्तिककारेण विकल्पार्थो वाशब्दः प्रयुक्तः । आगस्त्य कौण्डिन्ययोरित्यत्र हि यदि लुगनुवर्तते तदैकैकस्य त्रय आदेशाः स्युः । अथ नानुवर्त्त-ते द्वावेवादेशौ विधीयेते तदागस्त्यादेशेन सर्वत्र भाव्यमिति आगस्तीयाश्छात्रा इति न सिध्यति अवृद्धत्वात् प्रकृतेः । प्रत्ययस्येति तूच्यमाने गोत्रे ऽलुगचीति लुकि प्रति-षिद्धे संनियोगशिष्टत्वात् लुगभावादगस्त्यादेशाभावादागस्तीया इति सिध्यतीति । भाष्यकारस्तु तदर्थे वाशब्दं व्याचक्षाणः षष्ठीनिर्देशार्थत्वं नेच्छति । स ह्येवं मन्यते आगस्त्यकौण्डिन्ययोरित्यत्र यस्कादिभ्यो गोत्रग्रहणमनुवर्तते लुगिति च तेनागस्त्यकौ-

---

प्रतीतेय औत्सर्गिकाण एव लुकं विरुध्यात् । नच यञ्लुक्यां सामर्थ्याद्विकल्पोऽस्तु वेत्यनुक्तिस्तु यञञ्-लुक्ते औत्सर्गिकाणः प्रवृत्त्याभावायेति वाच्यम् । यञञ्लुकामेककालप्रतीतानामुद्देश्यविधेयभावासंभवा-द्युट्युलौ तुट् चेत्यादौ तु अनद्यतन इत्यादिनिर्देशाद्वाक्यभेदाङ्गीकारः किं च कंसीयपरशव्योरिति [illegible] वेशादपि न यञयोर्लुक् । अन्यथा पञ्चम्यैव निर्दिशेदिति भावः । प्रकृतीति । प्रकृतिव्यतिरिक्तप्रत्ययान्तर-वाची अन्यशब्दः । तेन नञा समासे प्रकृतिरुच्यत इत्याशयः । भाष्ये ( ङ्याबिति ) । प्रातिपदिकात्परस्य लुगित्यर्थे यञयोर्विधानसामर्थ्याल्लुगभावे उभयोः प्रातिपदिकात्परत्वाभावेन परिशेषात् कंसीयात्परयव-प्रातिपदिकात्परयोः छयतोरेव लुगित्यर्थः। विशिष्टेति। जनपदार्थकप्रत्ययसंबन्धिन इत्यर्थः। भाष्ये(प्रकृतमिति)। अत एव लवणाल्लुगित्यत्र प्रकृतठक एव लुगिति बोध्यम् । शोभनाः पञ्चाला इत्यादौ इति पाठ उचितः । अनन्तरस्येति । अव्यवहितस्येत्यर्थः । जनपदार्थवाचके शब्दे सति तदन्तरस्य लुबित्यर्थ इति भावः । वार्त्ति-कक्रदभिमतषष्ठीनिर्देशार्थत्वमुपपादयति आगस्त्येति। त्रय इति । एवञ्च वैषम्यादयथासङ्ख्याप्राप्तेरग-स्तयोऽपि कुण्डिनाः कुण्डिनाश्चागस्तयः स्युः । लुकश्च ज्ञापकात्सर्वादेश इति विभक्तिमात्रं श्रूयेतेति भावः । द्वावेति । तेन नोक्तापत्तिरिति भावः । सर्वत्रेति । प्रजादिप्राग्दीव्यतीयविषये।इति भावः । अवृद्धत्वादिति ।

कर्तव्यम् ।*लुक्श्लुलुपः सर्वादेशा यथा स्युः । अथ क्रियमाणे ऽपि प्रत्ययग्रहणे कथमिव लुक्श्लुलुपः सर्वादेशा लभ्याः । वचनप्रामाण्यात् । प्रत्ययग्रहणसामर्थ्यात् । एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति लुक्श्लुलुपः सर्वादेशा भवन्तीति । यदयं लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्य इति लोपे प्रकृते लुकं शास्ति । उत्तरार्थं तु * । उत्तरार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम् । क्रियते तत्रैव प्रत्ययलोपे प्रत्ययलक्षणमिति । द्वितीयं कर्तव्यम् । कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यात् । एकदेशलोपे मा भूदिति । आघ्नीत संरायस्पोषेण ग्मीयेति ॥

प्रत्ययलोपे प्रत्ययलक्षणम् ॥ ६२ ॥ प्रत्ययग्रहणं किमर्थम् । लोपे

---

ण्डिन्ययोर्यो गोत्रे विहितस्तस्य लुक् परिशिष्टस्य तु प्रकृतिभागस्य यथासंख्यमगस्तिकुण्डिनचावादेशाविति सूत्रार्थः । अथ क्रियमाणेपीति। अलोन्त्यस्येति वचनात् प्रत्ययस्य योन्त्यस्तस्यैव प्राप्नुवन्तीति भावः । वचनप्रामाण्यादिति । प्रत्ययस्येति वचनसामर्थ्यादलोन्त्यस्येति बाध्यते । वचनप्रमाण्यादिति ब्रुवतो वार्तिककारस्या ऽपि षष्ठीनिर्देशार्थत्वमनभिप्रेतमेव षष्ठीनिर्देशार्थत्वे हि प्रत्ययस्येत्यस्य चरितार्थत्वात्कथमलोन्त्यविधिर्बाध्येतेति । यदयमिति । विपर्ययस्तु न कल्प्यते अनुपसंजातविरोधित्वात् लोपस्तावदन्त्यादेशः स्थितस्ततो लुगारभ्यमाणो यद्यन्त्यस्य स्याल्लोपानुवृत्त्यैव सिद्धत्वाल्लुकं न विदध्यात् । विहितस्तु सर्वादेशत्वस्य ज्ञापकः संपद्यते । द्वितीयमिति । लोपविशेषणापेक्षया द्वितीयं पाठापेक्षया तु तृतीयं भवति । एकदेशलोप इति । अवयवक्रिया समुदायेपि व्यपदिश्यते । यथा पटो दग्ध इति अवयवे हि पटाख्योवयवी समवेत इति तस्याप्यसौ दाहः । न त्वयं गौणव्यपदेशः । गौणत्वे हि सति मुख्यस्यैव संप्रत्ययान्न कर्तव्यमेव प्रत्ययग्रहणं स्यात् । आघ्नीतेति । परत्वादुपधालोपे कृते पुनः प्रसङ्गविज्ञानादनुनासिकलोपः स्यात् ॥ ६१ ॥

प्रत्य ॥ प्रत्ययग्रहणमिति। प्रत्ययनिमित्तं कार्यं लोपे भवतीत्युक्ते प्रत्यासत्त्या प्रत्यये-

---

यद्यपि स्थानिवद्भावेन वृद्धत्वाच्छः सिध्यति तथाप्यवृद्धत्वात्प्रकृतेश्छस्य वृद्ध्यनिमित्तत्वाच्च आकारश्रवणं न स्यादिति भावः । सांनियोगशिष्टत्वादगस्त्यादेशाभावे प्रतिषेधप्रयुक्तलुगभावो हेतुः । गोत्रे विहित इति । नन्वागस्त्यस्य गोत्रप्रत्ययान्तस्यैव ग्रहणं नत्वनन्तरापत्यप्रत्ययान्तस्येत्येतदर्थं तदनुवृत्तिः स्यात् । शिवादिभ्य इत्यत्रैव गोत्र इति निवृत्तर्ष्यण्साधारणः अगस्त्यप्रकृतिकऋष्यणन्त एवागस्त्यः नत्वगस्तिप्रकृतिकगर्गादियञन्तः यञञोश्चेति लुकासिद्धत्वादिति चेन्न । कौण्डिन्यसाहचर्येणागस्त्यापि गोत्रप्रत्ययान्तस्यैव ग्रहणात् । भाष्यमते गोत्रसंज्ञा सूत्रपर्यन्तं गोत्राधिकारेण ऋष्यणन्तस्यापि तत्त्वाच्च । वस्तुतो वार्तिककारस्यापीत्थमेव सम्मतमित्याह प्रत्ययस्येति । वचनेति । सामर्थ्याल्लोपस्यैव सर्वादेशत्वं कुतो न कल्प्यत इत्यत आह विपर्यय इति । न उपसंजातो विरोधो वैयर्थ्यशङ्कारूपो यस्य तत्त्वादित्यर्थः । नत्वयमिति ॥ अयम् अवयवदाहादौ समुदायदाहादिव्यपदेशो गौणो न किं तु मुख्य एव अवयवलोपे समुदायस्यापि लोपादित्यर्थः । अनुनासिकेति । अनुदात्तोपदेशेत्यनेन । आघ्नीतेत्यत्र आङो यमहन इत्यात्मनेपदैकवचनम् । सग्मीयेति । गमेर्विधिलिङि समो गम्यृच्छीत्यात्मनेपद इति शेषो बहुलं छन्दसीति लुकि लिङः सलोपे इटो ऽत इति उपधालोपे रूपम् । तत्र प्रत्ययलक्षणेन झलादिङित्परत्वादनुनासिकलोपः स्यात् । इदञ्च प्रयोजनम् अप्राधान्येनालाश्रयणे विध्यर्थं प्रत्ययलक्षणसूत्रमिति वार्तिकमते बोध्यम् ॥ ६१ ॥

प्रत्ययलक्षणमितीयत्युच्यमाने सौरथी वैहतीति गुरूपोत्तमलक्षणः ष्यङ् प्रसज्येत । नैष दोषः । नैवं विज्ञायते लोपे प्रत्ययलक्षणं भवति प्रत्ययस्य प्रादुर्भाव इति । कथं तर्हि । प्रत्ययो लक्षणं यस्य कार्यस्य तल्लुप्ते ऽपि भवति । इदं तर्हि प्रयोजनम् । सति प्रत्यये यत्प्राप्नोति तत्प्रत्ययलक्षणं यथा स्यात् । लोपोत्तरकालं यत्प्राप्नोति तत्प्रत्ययलक्षणं मा भूदिति । किं प्रयोजनम् । ग्रामणिकुलं सेनानिकुलमित्यत्रौत्तरपदिके ह्रस्वत्वे कृते ह्रस्वस्य पिति कृति तुगिति तुक् प्राप्नोति स मा भूदिति । यदि तर्हि यत्सति प्रत्यये प्राप्नोति तत्प्रत्ययलक्षणेन भवति लोपोत्तरकालं यत् प्राप्नोति तन्न भवति । जगत् जनदित्यत्र तु न प्राप्नोति ।

---

ऽस्यैव लोप इति विज्ञास्यत इति भावः । सौरथीति । प्रत्ययस्य लक्षणं दर्शने प्रादुर्भाव इत्यर्थं परिकल्प्यैतदुच्यते । सुरथस्य विहतस्य चापत्यं गोत्रं स्त्रीति इञि कृते मकारनकारयोर्भावे यथा गुरूपोत्तमत्वात् ष्यङ् भवति एवं लोपेऽपि स्यात् । प्रत्ययग्रहणे तु सति विरुद्धत्वान्नायमर्थो भवति प्रत्ययस्य लोपे कृते तस्यैव पुनः प्रादुर्भाव इति । एवं हि लोपविधानमनर्थकं स्यात् । तस्मात् प्रत्ययनिमित्तं कार्यं प्रत्ययलोपे भवतीति वाक्यार्थ आश्रीयते । नैवमिति । संदेहे ऽपि व्याख्यानात्करणसाधनो लक्षणशब्द आश्रयिष्यते अन्यथा क्रियमाणे ऽपि प्रत्ययग्रहणे भावसाधनाशङ्का न निवर्तते प्रत्ययलोपे प्रत्ययान्तरस्य प्रादुर्भाव इति । यथा ग्रामणीरिति क्विपो लोपे स्वाद्युत्पत्तिः । ततश्चाघोगित्यत्र पदसंज्ञा न स्यादिति करणसाधनत्वे व्याख्यानमेव शरणमिति भावः । लक्षणशब्दोपादानसामर्थ्याद्वा करणसाधनो लक्षणशब्दः । अन्यथा लोपे प्रत्यय इत्येव वक्तव्यं स्यात् । सति प्रत्यय इति । प्रत्ययशब्दो ऽत्र लुप्तसप्तमीको निर्दिश्यते तेन प्रत्यये सति यत्कार्यं दृष्टं तल्लोपे सति भवति न च ग्रामणीरित्यत्र क्विपि सति तुग् दृष्टः । ह्रस्वाभावात् । कृते क्विलोपे ह्रस्वत्वे च तुक्प्राप्तिः । जगदिति । द्युतिगमिजुहोत्यादीनां द्वे चेति गमेः क्विप् । अत्रान्तरङ्गत्वात्पूर्वं विलोपः । गमः क्वावित्ययं हि लोपो ऽङ्गवि-

---

प्रत्ययलोपे ॥ लक्षणशब्दार्थमाह निमित्तमिति । कार्यमिति । बहुव्रीहिलभ्यम् । प्रत्यासत्त्येति । क्रियमाणेऽपि प्रत्ययग्रहणे ऽन्यप्रत्ययलोपे ऽन्यप्रत्ययनिमित्तकार्यवारणाय प्रत्यासत्तिराश्रयणीयेति भावः । ननु प्रत्ययलक्षणमित्यस्य बहुव्रीहितया ऽनेन स्थान्यभावे ऽप्राप्तकार्यप्रापणार्थातिदेश इति अत्र प्रत्ययस्य सत्त्वेन किं तन्निमित्तकार्यातिदेशो नात आह प्रत्ययस्य लक्षणमिति । यस्य लोपस्तस्मिन् सति यः प्रत्ययो भवति तस्य लोपेऽपि प्रादुर्भाव इत्यर्थः । लाघवात्षष्ठीतत्पुरुष एव स्यादिति तात्पर्यम् । रमेः क्यनि हन्तेश्च क्त अनुदात्तेत्यनुनासिकलोपेऽपि गुरूपोत्तमत्वादप्राप्तः ष्यङतिदेशतः स्यादित्यर्थः । एवं हि लोपेति । ननु णेरनिटीत्यादिसामर्थ्यात् ना भूत्तत्र प्रवृत्तिः । यस्तु सामान्येन लोपो णाविष्टवदिति सोऽप्रत्ययविषये चरितार्थ इति भिक्षुमाचष्टे भिक्षयतीत्यत्र पुनः प्रादुर्भावार्थमिदं स्यादिति चेन्न । एवं हि तत्रैव प्रत्ययस्य न लोप इति वदेत् । एवञ्च गुरुतरन्यासो ज्ञापक इति बोध्यम् । अन्यथा व्याख्यानस्य शरणत्वाभावे । पदसंज्ञा न स्यादिति । तिङन्तत्वाभावादिति भावः । लोपे प्रत्यय इति । अस्य प्रादुर्भवतीति शेषः । ननु प्रत्ययलोप इत्युक्ते कथं सति प्रत्यय इति लभ्यते ऽत आह प्रत्यय इति । यत्कार्यमिति । प्रत्ययलक्षणं यत्कार्यं दृष्टमित्यर्थः । ननु जगदित्यादौ विलोपात्परत्वात्पूर्वं गमः क्वावित्यनुनासिकलोपे क्विपि सत्यपि तुकः प्राप्तिराह अत्रेति । भिन्नविषयत्वादिति । वार्तिकमते एतत् । अचिरादेशे तुडपवादत्वपरभाष्यरीत्या विषयभेदेऽपि तत्त्वे तुलोपेनानुत्पत्तेरेवान्वाख्यानेनापवादत्वं नेति बोध्यम् । वैयात्यान्न्यायाङ्गीकारे दोषमाह सति त्विति । एकमे-

लोपोत्तरकालं ह्यत्र तुगागमः। तस्मान्नार्थ एवमर्थेन प्रत्ययग्रहणेन। कस्मान्न भवति ग्रामणिकुलं सेनानिकुलम्। बहिरङ्गं ह्रस्वत्वम्। अन्तरङ्गस्तुक्। असिद्धं बहिरङ्गमन्तरङ्गे। इदं तर्हि प्रयोजनम्। कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यादेकदेशलोपे मा भूदिति। आघ्नीत संरायस्पोषेण ग्मीय। पूर्वस्मिन्नपि योगे प्रत्ययग्रहणस्यैतत्प्रयोजनमुक्तम्। अन्यतरच्छक्यमकर्तुम्। अथ द्वितीयं प्रत्ययग्रहणं किमर्थम्। प्रत्ययलक्षणं यथा स्यात्। वर्णलक्षणं मा भूदिति। गवे हितं गोहितम्। रायः कुलं रैकुलमिति। किमर्थं पुनरिदमुच्यते। प्रत्ययलोपे प्रत्ययलक्षणवचनं सदन्वाख्यानाच्छास्त्रस्य *। प्रत्ययलोपे प्रत्ययलक्षणमित्युच्यते सदन्वाख्यानाच्छास्त्रस्य। सच्छास्त्रेणान्वाख्यायते सतो वा शास्त्रमन्वाख्यायकं

---

शेषापेक्षत्वाद्बहिरङ्गः। भिन्नविषयत्वाच्च येन नाऽप्राप्तिन्यायो न भवति सति त्वस्मिन्न्यायेनैव विलोपः स्यात्। तस्मात्सति क्विपि नाऽत्र तुकः प्राप्तिः, अपि तु विलोपे कृते। अन्यतरदिति। एकमेव प्रत्ययग्रहणं सामर्थ्यात् कृत्स्नप्रत्ययलोपप्रतिपादने समर्थम्। वर्णलक्षणमिति। प्रत्ययलोपे तल्लक्षणमित्युच्यमाने प्रत्ययस्य यत्र कार्ये निमित्तभावः प्रत्ययरूपाऽऽश्रयेण वर्णरूपताऽऽश्रयेण वा तत्सर्वं स्यात्। सर्वनाम्नो वस्तुमात्रपरामर्शित्वात्। प्रत्ययग्रहणे सति प्रत्ययनिमित्तमेव कार्यं प्रत्ययलोपे भवति न वर्णरूपतानिमित्तम्। रैकुलमिति। अवयवद्वारेणाऽत्र प्रत्ययस्यात्र्यादेशं प्रति निमित्तत्वमस्त्येव प्रत्ययाश्रयस्त्वायादेशो न भवतीति न प्रवर्तते। अनेन न्यायेन न धातुलोप आर्धधातुक इत्यत्र धिन्विकृण्व्योर्विचि लोपो व्योर्वलीति वलोपस्य वलिनिमित्तत्वादार्धधातुकनिमित्तत्वाभावाद्गुणप्रतिषेधो न भवति। तेन सुधे सुकारिति भवति न तु सुधीसुकीरिति। किमर्थमिति। स्थानिवद्भावेन सिद्धमिति भावः। सदन्वाख्यानादिति। शास्त्रं०

---

वेति। अवयवस्य प्रत्ययत्वपर्याप्त्यधिकरणत्वाभावादिति भावः। एवञ्चानयोः फलान्तराभिनिवेशो भाष्यविरुद्ध इति बोध्यम्। ननु द्वितीयप्रत्ययग्रहणाभावे बहुव्रीह्यलाभात्तल्लभ्यकार्यातिदेशो न सिध्येदत आह तल्लक्षणमिति। वस्तुमात्रेति। प्रत्ययमात्रेत्यर्थः। प्रत्ययनिमित्तमेवेति प्रत्ययत्वेन प्रत्ययनिमित्तमित्यर्थः। न वर्णेति। प्राधान्येन वर्णनिमित्तमित्यर्थः। ननु रैकुलमित्यत्रायादेशो न प्रत्ययाश्रयः किं तु तदवयवाश्रयोऽत आह अवयवद्वारेणेति। केचित्तु प्रत्ययग्रहणमित्यस्य द्वितीयप्रत्ययपदघटितं प्रत्ययलक्षणग्रहणमित्यर्थः। प्रत्ययलोपेपीत्येव सूत्रं कार्यम्। अस्य तद्भवति यत्प्रत्यये सतीति शेषः। स्थानिवदित्यनुवृत्तिर्वा। प्रत्ययलक्षणमिति। प्रत्ययत्वतद्व्याप्यान्यतरधर्मावच्छिन्नलक्षणमित्यर्थः। वर्णलक्षणं वर्णत्वव्याप्यधर्मावच्छिन्ननिमित्तम्। प्रत्यये सति वर्णनिमित्तं भवतीति तल्लोपेपि स्यादिति भावः। कैयटव्याख्या तु चिन्त्या। प्रकृते तच्छब्दप्रत्ययशब्दयोः पर्यायत्वेन तद्विचारस्यायुक्तत्वापत्तेरित्याहुः। अनेनैवेति। अत्र प्रत्ययग्रहणसामर्थ्याद्यथार्थलाभेपि तत्र तादृशार्थग्रहणं न मानम्। आर्धधातुक इत्यस्य कैयटरीत्या तोतांर्तीत्यादिव्यावृत्त्या चरितार्थत्वात्। पूर्वसूत्रे आर्धधातुकग्रहणमनवकाशमिति क्ङिति चेति सूत्रस्थभाष्यविरोधाच्चावृत्त्यादिना तथार्थकल्पने तु न मानम्। किं च तथार्थकल्पने यङ् यक्क्यवलोपे इति वार्तिकं तदुदाहरणपरं जीव्रानुरिति भाष्यं चासङ्गतं स्यादिति चिन्त्यमेतत्। सुधेइत्यादिधिन्विकृण्व्योरुमि विचि वलोपे ऽपृक्तलोपे गुणे सुना समासे सौ हल्ङ्यादिलोपनलोपयोरिमे रूपे। गुणनिषेधे तु सुधिन्शब्दे इन्हन्निति दीर्घः सुकृणः सर्वनामस्थाने चेति दीर्घ उपधायाश्चेतीत्वे रपरत्वे सुनलोपयोर्वोरिति दीर्घः स्यादिति भावः। स्थानिवद्भावेनेति। वर्णाश्रयस्य तत्राप्यनिष्टत्वादित्यर्थः। ननु शास्त्रस्य कर्तृत्वे सतः कर्मत्वेनोभयथा-

भवति । सदन्वाख्यानाच्छास्त्रस्य । उगिदचां सर्वनामस्थाने धातोरिति इहैव स्यात्, गोमन्तौ यवमन्तौ गोमान् यवमानित्यत्र न स्यात्। इष्यते च स्यादिति। तच्चान्तरेण यत्नं न सिद्ध्यतीत्यतः प्रत्ययलोपे प्रत्ययलक्षणवचनमित्येवमर्थमिदमुच्यते। अस्ति प्रयोजनमेतत्। किं तर्हीति। लुक्युपसंख्यानम् *। लुक्युपसंख्यानं कर्तव्यम्। पञ्च सप्त। किं पुनः कारणं न सिध्यति। लोपे हि विधानम् *। लोपे हि प्रत्ययलक्षणं विधीयते तेन लुकि न प्राप्नोति । न वाऽदर्शनस्य लोपसंज्ञित्वात् * । नवा कर्तव्यम् । किं कारणम्। अदर्शनस्य लोपसंज्ञित्वात्। अदर्शनं लोपसंज्ञं भवतीत्युच्यते। लुमत्संज्ञाश्चाप्यदर्शनस्य क्रियन्ते। तेन लुक्यपि भविष्यति। यद्येवम्। प्रत्ययादर्शनं तु लुमत्संज्ञम् *। प्रत्ययादर्शनं तु लुमत्संज्ञमपि प्राप्नोति । तत्र को दोषः । तत्र लुकि श्लुविधिः प्रतिषेध्यः *। तत्र लुकि श्लुविधिः प्राप्नोति स प्रतिषेध्यः । अत्ति हन्ति । श्लाविति द्विर्वचनं प्राप्नोति । न वा पृथक्संज्ञाकरणात् *। न वा एष दोषः । किं कारणम् । पृथक्संज्ञाकरणात् पृथक्संज्ञाकरणसामर्थ्याल्लुकि श्लुविधिर्न भविष्यति। तस्मा-

---

कर्तृ करणं वा शेषत्वेन विवक्षितमिति षष्ठी कृता। सच्छास्त्रेणेति। शास्त्रेण करणेनाचार्यः स्मर्त्ता साध्यमानं वस्तु निमित्तत्वेनान्वाचष्टे। सतो वेति। शास्त्रस्यैवाच्छेदेन प्रवर्तमानस्य स्वतन्त्रत्वमन्वाख्यान इति पूर्वस्माद्व्याख्यानादस्य विशेषः। न च स्थानिवद्भावेन सिध्यति। अतृणेडित्यादावाल्वधित्वात्। लुक्युपसंख्यानमिति। तक्रकौण्डिन्यन्यायेन लोपसंज्ञाया लुगादिसंज्ञया बाधनादिति भावः। लुग्ग्रहणस्योपलक्षणार्थत्वात् श्लुलुपावपि गृह्यते। न वाऽदर्शनस्येति। अदर्शनमात्रस्य लोपसंज्ञा विधीयमाना लुगादिसंज्ञाविषयमप्यवगाहते। न च संज्ञानां बाध्यबाधकभावः समावेशदर्शनात्तासामिति कडारसूत्रे वक्ष्यते। लोपस्य संज्ञि लोपसंज्ञि तस्य भावो लोपसंज्ञित्वं तस्मादित्यर्थः। प्रत्ययादर्शनं त्विति । लुक्श्लुलुप्संज्ञानां संकरः प्राप्नोतीत्यर्थः। तत्र लुकि श्लुविधिरिति। उपलक्षणं चैतत्। तेन श्लावपि लुग्विधिः प्राप्नोति। जुहोतीति उतो

---

वृद्धाविति नियमाच्छास्त्रस्येति षष्ठ्यनुपपन्ना कर्मणि चेति समासनिषेधापत्तिश्च। करणत्वे तु षष्ठ्युपपन्नेत्यत आह शास्त्रमिति। शेषत्वेनोभयप्राप्तावित्यस्याप्राप्तिः षष्ठीसमासौ नानुपपन्नौ इति भावः। आचार्यः स्मर्त्तेति। फलितार्थकथनं स्मर्त्राचार्येणेति स्वन्वाख्यायत इत्यन्वययोग्यम्। स्वतन्त्रत्वमिति। करणस्य कर्तृत्वविवक्षेति भावः। अल्विधित्वादिति। इमादेरिति शेषः। वर्णाश्रयेति तु वर्णप्राधान्यविषयकम्। एवञ्चाप्राधान्येनालाश्रयणे विध्यर्थं सूत्रमिति भावः। भाष्ये(ऽस्ति प्रयोजनमेतदिति)उक्तप्रयोजनविशिष्टं सूत्रं निर्दोषं वेति काक्वा प्रश्न इति बोध्यम्। किं तर्हीति। मम तु निर्दोषमेव तव कश्चिद्दोषप्रतिभासोऽस्ति चेद्वदेति प्रश्नगर्भमुत्तरम्। बाधनादिति। एवञ्च पञ्चेत्यादौ पदत्वं न स्यादिति भावः। उपलक्षणार्थत्वादिति। तयोरपि पूर्वपक्षबीजस्य समत्वादिति भावः। तत्र श्लुलुपोः प्रत्ययलक्षणस्य फलं चिन्त्यम्। लुकि तु पञ्चेत्यादौ पदत्वं फलमस्ति। समावेशदर्शनादिति। कृत्कृत्याविष्वाविति भावः। लोपः संज्ञा यस्येति बहुव्रीहौ मत्वर्थीयानुपपत्तिः त्वान्तेन षष्ठीसमासेऽर्थासङ्गतिरत इन्नन्तेन षष्ठीसमास इत्याह लोपस्येति । सङ्कर इति । परस्परं लोपशब्दभावितप्रत्ययादर्शनविषये लोपसंज्ञया चेत्यर्थः। प्रत्ययादर्शनमात्रं सकललुमत्संज्ञं प्राप्नोतीति भाष्याक्षरार्थः। उतो वृद्धिरिति।

दर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञा अवगाहते। यथैव तर्हि अदर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञा अवगाहते। एवं लुमत्संज्ञा अपि लोपसंज्ञामवगाहेरन्। तत्र को दोषः। अगोमती गोमती सम्पन्ना गोमतीभूतेति लुक् तद्धितलुकीति ङीपो लुक् प्रसज्येत। ननु चात्रापि नवा पृथक् संज्ञाकरणादित्येव सिद्धम्। यथैव तर्हि पृथक्संज्ञाकरणसामर्थ्यादत्र लुमत्संज्ञा लोपसंज्ञां नावगाहन्ते एवं लोपसंज्ञापि लुमत्संज्ञां नावगाहेत। तत्र स एव दोषो लुक्युपसंख्यानमिति। अस्त्यन्यल्लोपसंज्ञायाः पृथक्करणे प्रयोजनम्। किम्। लुमत्संज्ञासु यदुच्यते तल्लोपमात्रे मा भूदिति। लुमति प्रतिषेधाद्वा *। अथ वा यदयं न लुमताङ्गस्येति प्रत्ययलक्षण-

---

वृद्धिर्लुकि हलीति लुप्यति लुग्विधिप्रसङ्गः। हरीतकीति। लुक् तद्धितलुकीति। तथा लुकि लुग्विधि। लवणः सूप इति। युक्तवद्भावः स्यात्। न वा पृथगिति। एकयैव संज्ञायाः प्रदेशवाक्येषु संज्ञिप्रत्यायने सिद्धेऽनेकसंज्ञाविधानसामर्थ्यात्तद्भावितग्रहणं विज्ञायते। तत्राश्रितस्वरूपव्यापारास्ते लुगादय आश्रीयन्ते आवृत्तिर्वा लुगादिशब्दानामाश्रीयत इति तद्भावितग्रहणं सिध्यति। विधिप्रदेशेषु चेतरेतराश्रयदोषानवतारो नित्यशब्दाश्रयणाद्भाविसंज्ञाविज्ञानाद्वा। यथैवेति। तिसृणां विधानसामर्थ्यात्परस्परविषयावगाहनं तासां मा भूत्। लोपसंज्ञाविषये तु ताः प्रवर्तेरन्। गोमतीति। च्विलोपे कृते लुक्संज्ञायां सत्यां लुक् तद्धितलुकीति लुक् प्राप्नोति पुंवद्भावस्त्वत्र न भवति वैयधिकरण्यात्। महद्भूता ब्राह्मणीत्यत्र तु भवति सामानाधिकरण्यादनित्यत्वाद्धि शब्दानां क्वचिद्विकारस्य जनिकर्तृत्वं क्वचित्प्रकृतः। ननु चात्रापीति। लुगादिसंज्ञानां भेदेनोपादानात्तद्भावितग्रहणमित्यर्थः। अस्त्यन्यदिति। प्रत्ययाप्रत्ययादर्शनस्य लोपसंज्ञं यथा स्यादिति। लोपमात्र मा भूदिति। यथा गोमतीभूतेति च्वेर्लोपे कृते लुक्तद्धितलुकीति न भवति तस्माल्लोपसंज्ञायां नास्ति तद्भावितग्रहणम्। सतो निमि-

---

न च तत्र नाभ्यस्तस्येति वर्त्तनाददोषः। अत्र पक्षे व्यभिचाराभावात्तदनुवृत्तेर्वक्तुमशक्यत्वात्। हरीतकीति। नन्वत्र सत्यपि ङीपो लुकि युक्तवद्भावात् पुनर्ङीष् स्यादिति चेन्न। लक्ष्ये लक्षणस्येति न्यायादित्याहुः। हरीतक्यां हरीतक्यादिभ्यश्चेत्यणो लुप्। यद्वा हरीतकीवेयं प्रतिकृतिरिति कनो लुप्। लवण इत्यत्र लवणाल्लुक्। तद्भावितग्रहणं युक्तिमाह तत्राश्रितेति। आश्रितः स्वरूपस्य व्यापारो ऽदर्शनविषयो यैस्ते तथोक्ता इत्यर्थः। अदर्शनबोधका लुगादिशब्दाः प्रत्ययादर्शनस्य संज्ञेत्युक्ते प्रत्यासत्त्या यया संज्ञया यददर्शनं भाव्यते तस्य सा संज्ञेति लभ्यते इति भावः। प्रत्यासत्तिः सर्वैर्दुर्ज्ञेयेत्यत आह आवृत्तिर्वेति। तेन लुगादिशब्दभावितमदर्शनं क्रमेण तत्तत्संज्ञमित्यर्थः। अदर्शनस्य नित्यत्वेपि तद्भावितत्वस्य शास्त्रायत्तत्वादितरेतराश्रयत्वं तदवस्थमेवेत्यत आह भाविसंज्ञेति। तद्भावितग्रहणपक्षे यथैवेत्यादिग्रन्थो ऽनुपपन्न इत्यत आह तिसृणामिति। इतरेतराश्रयपरिहाराय भाविसंज्ञाविज्ञाने गौरवापत्त्या सामर्थ्यात्तिसृणामसङ्करः प्रतिपादितो न तु तद्भावितपक्षाश्रयेणेत्यभिमानः। वैयधिकरण्यादिति। भवनक्रियायां प्रकृतेः कर्तृत्वादिति भावः। क्वचिद्विकारस्येति। वस्तुतो वृत्तौ तद्वाक्ये च सर्वत्र प्रकृतेरेव कर्तृत्वं विकृतिशब्दस्यापि गौण्या प्रकृतिवृत्तित्वात्सामानाधिकरण्यम्। अत एव गौणत्वान्महच्छब्दे आत्वाभावो गोमतीशब्दे तु गोमती नदीभिन्ना गोमतीनदीभूतेत्यर्थेनाभाषितपुंस्कत्वात् पुंवत्त्वाभाव इति बोध्यम्। भाष्ये(एवं लोपेति)। एवं लोपसंज्ञायामपि तद्भावितग्रहणं मन्वानस्य चोद्यमेतत्। अत्र सामर्थ्यात्तद्भावितग्रहणेपि लोपसंज्ञायां तद्ग्रहणे मानाभावः। न च लुगादिभ्यो लोपसंज्ञायाः पृथक् करणे मानं तस्याः प्रयोजनान्तरसत्त्वादित्याह अस्त्यन्यदिति। तद्दर्शयति भाष्ये तल्लोपमात्र इति। स्वयं प्रयोजनान्तरमप्याह। (प्रत्ययाप्रत्ययेति) भाष्ये (लुमति प्रतिषेधाद्वेति) भवतु लोपसंज्ञ

प्रतिषेधे शास्ति तज्ज्ञापयत्याचार्यो भवति लुकि प्रत्ययलक्षणमिति । इतो निमित्ताभावात्पदसंज्ञाभावः * । सन् प्रत्ययो येषां कार्याणामनिमित्तं राज्ञः पुरुष इति स लुप्तो ऽप्यनिमित्तं स्याद् राजपुरुष इति । अस्तु तस्या अनिमित्तं या स्वादौ पदमिति पदसंज्ञा या तु सुबन्तं पदमिति पदसंज्ञा सा भविष्यति । सत्येतत् प्रत्ययआसीत अनया भविष्यत्यनया न भविष्यति । लुप्त इदानीं प्रत्ययः यावत एवावधेः स्वादौ पदमिति पदसंज्ञा तावत एव सुबन्तं पदमिति । अस्ति च प्रत्ययलक्षणेन यजादिपरतेति कृत्वा भसंज्ञा प्राप्नोति । तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात् परिवीरिति * । तुग्दीर्घत्वयोश्च विप्रतिषेधो नोपपद्यते । क्व । परिवीरिति । किं कारणम् । एकयोगलक्षणत्वात् । एकयोगलक्षणे हि तुग्दीर्घत्वे । इह लुप्ते प्रत्यये सर्वाणि प्रत्ययाश्रयाणि कार्याणि पर्यवपन्नापि भवन्ति तान्येतेन प्रत्युत्थाप्यन्ते । अनेनैव तुग् अनेनैव च दीर्घत्वमिति । तदेकयोगलक्षणं भवति । एकयोगलक्षणानि च न प्रकल्पन्ते । सिद्धं तु स्थानि-

---

त्ताभावादिति । निमित्तशब्देन निमित्तत्वमुच्यते तेन यस्य सतः कार्यं प्रति निमित्तत्वं नाभूत्स लुप्तो ऽप्यनिमित्तं स्यादित्यर्थः । राज्ञ इति । सति ङसि भसंज्ञायां स्वादिष्विति पदसंज्ञा बाधितेति नलोपो मा भूदल्लोपश्चाभूदिति लुप्तेति तस्मिन्नलोपो न स्यादल्लोपश्च स्यात् । अस्तु तस्या इति । द्वे चात्र पदसंज्ञे । एका स्वादिष्वित्यवयवस्य सा च भसंज्ञया बाधिता । द्वितीया सुबन्तत्वेन समुदायस्य सा च लुप्तेपि स्थितैव । अल्लोपस्तु न लुमताङ्गस्येति प्रतिषेधान्न भवति । सत्येतदिति । कालविप्रकर्षप्रतिपादनायानद्यतनप्रत्ययप्रयोगः । राज्ञ इत्यत्रावधिभेदाङ्गसंज्ञयावयवस्यैव पदसंज्ञा बाध्यते न समुदायस्य सुबन्तत्वनिमित्ता । लुप्ते प्रत्ययेवधिभेदाभावात्प्रत्ययलक्षणेन प्राप्तया भसंज्ञया द्वे अपि पदसंज्ञे बाधितव्ये । एकापवादत्वेन द्वितीया परत्वेनेति भावः । अनयेति । पदसंज्ञाद्वयमनेन दर्शितम् । भसंज्ञा प्रत्ययलक्षणेन वर्णाश्रयापि भवति । यथा अतृणेडितीमागमः । तुग्दीर्घत्वयोश्चेति । अनेनैव प्रत्ययनिमित्तानि कार्याणि लुप्तेपि प्रत्यये विधीयन्ते इति क्रमाभावात्पौर्वापर्यं न प्रकल्पते कार्यस्य प्राधान्यान्नानेन शास्त्रव्यपदेशौ विधीयेते । सिद्धं त्विति । अन्यो भावोन्यद्वस्तु । स्थान्यपे-

---

यामपि तद्भावितग्रहणं न लुमतेति निषेधेन तत्र लोपस्यानिमित्तकार्यवृत्तिर्ज्ञाप्यते इत्यदोष इति भावः । लुक्युपसङ्ख्यानमित्ति दोषे परिहृते दोषान्तरमाशङ्कते सतो निमित्तेति । वार्त्तिकतद्व्याख्यानयोर्विरोधं परिहरति निमित्तशब्देनेति । नन्वेवं पदत्वेपि भत्वस्यापि सत्त्वादल्लोपः स्यादत आह अल्लोपस्त्विति । कालविप्रकर्षेति । अस्य चोत्तरस्य नायमवसर इत्यर्थः । भाष्ये ( एतत् ) वक्ष्यमाणवाक्यार्थरूपम् । पदसंज्ञाद्वयमिति । अनया पदसंज्ञया नलोपो भविष्यतीत्यादिभाष्यार्थः । यथेति । वर्णप्राधान्यविषय एव स निषेध इति भावः । भाष्ये ( पर्यवपन्नानि ) । मृतानि । अप्राप्तानीति यावत् । नन्वेतत्कार्यातिदेशे स्यात्स एव कुतः शास्त्रनिमित्तातिदेशयोरपि संभवादत आह कार्यस्येति । व्यपदेशो निमित्तम् । विधीयेते इति । इत्यभिमान इति शेषः । वस्तुतः कार्यशास्त्रातिदेशयोरभेद एवेत्युक्तम् भाष्ये ( एकयोगलक्षणानि चेति ) । तादृशानि विप्रतिषेधविषयत्वेन न प्रकल्पन्त इत्यर्थः । नन्वन्यभाव इति षष्ठीतत्पुरुषः कर्मधारयो वोभयथापि व्यत्रनुपपन्नो भावस्य भावान्तरेणायोगात् । समाससंज्ञाया गुणवचनसंज्ञाया बाधाच्चार्यासङ्गतेश्चेत्यत आह अन्योभाव

संज्ञानुदेशादन्यभाव्यस्य * । सिद्धमेतत् । कथम् । स्थानिसंज्ञाऽन्यभूतस्य भवतीति वक्तव्यम् । किं कृतं भवति । सत्तामात्रमनेन क्रियते । यथा प्राप्ते तुग्दीर्घत्वे भविष्यतः । तद्वक्तव्यं भवति । यद्यप्येतदुच्यते । अथ वैतर्हि स्थानिवद्भावो नारभ्यते । स्थानिसंज्ञाऽन्यभूतस्यानल्विधाविति वक्ष्यामि । यद्येवमाङो यमहन आत्मनेपदं भवतीति हन्तरेव स्यात् वधेर्न स्यात् । नहि काचिद्धन्तेः संज्ञास्ति या वधेरतिदिश्येत । हन्तेरपि संज्ञास्ति । का हन्तिरेव । कथम् । स्वं रूपं शब्दस्याशब्दसंज्ञेति वचनात्स्वं रूपं शब्दस्य संज्ञा भवतीति हन्तेरपि हन्तिः संज्ञा भविष्यति । भसंज्ञाङीप्ष्फगोरात्विषु च सिद्धम् * । भसंज्ञाङीप्ष्फगोरात्विषु च सिद्धं भवति । भसंज्ञा । राज्ञः पुरुषः राजपुरुषः । प्रत्ययलक्षणेन यचीति भसंज्ञा प्राप्नोति । स्थानिसंज्ञान्यभूतस्यानल्विधाविति वचनान्न भवति । ङीप् । चित्रायां जाता चित्रा । प्रत्ययलक्षणेनाणन्तादितीकारः प्राप्नोति । स्थानिसंज्ञान्यभूतस्यानल्विधाविति वचनान्न भविष्यति । ष्फ । वतण्डी । प्रत्ययलक्षणेन यञन्तादिति ष्फः प्राप्नोति स्थानिसंज्ञान्यभूतस्यानल्विधाविति वचनान्न

---

क्षयादेशः । अन्यभाव एवान्यभाव्यमिति । स्वार्थे ष्यञ् । तत्र पेरिवीरिति स्थानिनः क्विपो या संज्ञा यो व्यपदेशः पित्कृत्प्रत्यय इत्यादिः स लोपस्थानेन विधीयते तत-स्तन्निबन्धनं शास्त्रं प्रवर्तेत इति सिद्धो विप्रतिषेधः । सत्तामात्रमिति । कृदादिव्यपदे-शस्येत्यर्थः । यद्येवमिति । हन्ति स्वरूपेणोपादायात्मनेपदं विधीयते न तु कां चित्सं-ज्ञामाश्रित्येति भावः । नहीति । यद्यपि धातुसंज्ञा ऽस्ति तथापि न तदुपादानेनात्मनेपदं विधीयते । हन्तेरपीति । आङो यमहन इति सूत्रोपात्तो हन्तिः संज्ञा प्रयोगस्थस्तु संज्ञीति वधेरपि हन्तिसंज्ञा ऽतिदिश्यते । चित्रायां जातेति । चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानमित्यणो लुक् । टिड्ढाणञित्यत्रात इत्यधिकारात् ङीपोऽल्विधि-त्वम् । वतण्डीति । यथा आवट्यायनीति चापं बाधित्वा सर्वत्रग्रहणापकर्षात् ष्फो भवत्येवं शार्ङ्गरवादिपाठात् प्राप्तं ङीनं बाधित्वा प्राचां ष्फः स्यात् । अत इत्यधिकारादल्वि-

---

धिः । भाष्ये ऽन्यरूपं प्राप्तस्येत्यर्थकमन्यभूतस्येत्येतच्च फलितार्थो बोध्यः । स्वार्थे इति चातुर्वर्ण्यादित्वात् । ननु सत्ता स्थानिनश्चेद्विरुद्धमतिदेशसहस्रेण सत्ताया अशक्यत्वात्तदाह कृदादिव्यपदेशस्येति । एत-दर्थमेव स्थानिसंज्ञानुदेशादित्युक्तं न तु स्थान्यनुदेशादिति । तथा सति स्थानिकार्यातिदेश एव स्यादिति बोध्यम् । भाष्ये शङ्कितार । ( तद्वक्तव्यमिति ) वचनान्तरेण सूत्राक्षेपपरिहारो न युक्त इति भावः । परि-हरति । ( यद्यपीति ) । अथवैतर्हीति । तथापीत्यर्थः । एवञ्च लघुतरत्वाद्वचनान्तरेणापि परिहारो युक्त इति भावः । संज्ञामिति । निमित्तभूतव्यपदेशमित्यर्थः । ननु संज्ञासंज्ञिनोर्भेदाद्धन्तेर्हन्तिः संज्ञेत्ययुक्तमत आह सूत्रोपात्त इति । फलान्तरमपि वचनान्तरारम्भे दर्शयति । भाष्ये । ( भेत्यादि ) । सिद्धमिति । इष्टमिति शेषः । वक्ष्यमाणान्यल्विधित्वाद्व्यात्क्रमतेनातिदेशेन भविष्यन्ति । सूत्रारम्भे तु वर्णाश्रये इत्यस्य वर्णप्राधान्यविषयत्वादतिदेशेन स्युरेवेति भावः । चित्रेति । नक्षत्रेण युक्त इत्यणो लुबविशेष इति लुप् । युक्तवद्भावात्स्त्रीत्वं ततो जातेर्थे सन्धिवेलादीत्यणो वार्त्तिकेन लुग् इति भावः । नचाणो लुकि लुक्तद्धितेति टापो लुकि पुनष्टाब् दुर्लभो लक्ष्ये लक्षणस्येति न्यायाद् इति वाच्यम्, जातिगतस्त्रीत्वबोधनरूपफलस्यासि-द्धतया प्रवृत्तेः । अत इत्यधीति । अकारान्तादण् इत्यर्थः । ननु वतण्डात् स्त्र्यपत्ये यञो लुक्स्त्रियामिति

भवति। गोरात्वम्। गामिच्छति गव्याति। प्रत्ययलक्षणेनामि औतो ऽम्शसो- रित्यात्वं प्राप्नोति। स्थानिसंज्ञान्यभूतस्यानल्विधाविति वचनान्न भवति। तस्य दोषो ङौ नकारलोपत्वेम्विधय: *। तस्यैतस्य लक्षणस्य दोषः। ङौ नकार- लोपः। आर्द्रे चर्मन् लोहिते चर्मन्। प्रत्ययलक्षणेन यचीति भसंज्ञा सिद्धा भवति। स्थानिसंज्ञाऽन्यभूतस्यानल्विधाविति वचनान्न प्राप्नोति। इत्वम्। आशीः। प्रत्ययल- क्षणेन हलीतीत्वं सिद्धं भवति। स्थानिसंज्ञान्यभूतस्यानल्विधाविति वचनान्न प्राप्नोति। इम्। अतृणेट्। प्रत्ययलक्षणेन हलीति इम् सिद्धो भवति। स्थानिसंज्ञान्यभूतस्यान- ल्विधाविति वचनान्न भविष्यति। सूत्रं च भिद्यते। यथान्यासमेवास्तु। ननु चोक्तं सतो निमित्ताभावात्पदसंज्ञाभावस्तुग्दीर्घत्वोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्ष- णत्वात्परिवीरिति। नैष दोषः। वक्ष्यत्यत्र परिहारम्। इहापि परिवीरिति। शास्त्रपरविप्रतिषेधेन परत्वाद्दीर्घत्वं भविष्यति। कानि पुनरस्य प्रयोजनानि। प्रयोजनमपृक्तशिलोपे नुमम्आमौ गुणवृद्धी दीर्घत्वेमडाट्श्नम्विधयः *। अपृक्त- लोपे शिलोपे च कृते नुम् अमामौ गुणवृद्धी दीर्घत्वमिम् अडाटौ श्नम्विधिरिति प्रयोजनानि। नुम्। अग्ने त्रीते वाजिना त्रीषधस्था ताताषिण्डानाम्। अमामौ। हे अनड्वन् अनड्वान्। गुणः। अधोक् अलेट्। वृद्धिः। न्यमार्ट्। दीर्घत्वम्।

---

धिः ष्फः। गव्यतीति। औतो ऽम्शसोरित्यत्राचीत्यनुवर्तनादल्विधिरात्वम्। चर्मन्निति। सुपां सुलुगिति ङेर्लुकि अत्र भसंज्ञाया अभावान्नलोपः प्राप्नोतीति न ङिसंबुद्ध्योरिति वक्तव्यं जायते। परत्वाद्दीर्घत्वमिति। सति प्रत्यये यत्कार्यं दृष्टं तल्लुप्ते ऽपि भवतीति सूत्रार्थः। परिवीयेत्यादौ च सति प्रत्यये दीर्घो दृष्टो न तुगिति परिवीरित्यत्रापि दीर्घ एव भवति। प्रयोजनमिति। यद्यप्यल्विध्यर्थमिदमतृणेडित्यादौ तथापि विशेषविहित- त्वान्नुमादयो ऽप्यस्यैवोदाहरणानीति भावः। अनड्वन्निति। पूर्वं संबुद्धिलोपमाश्रित्यै-

---

लुकि प्रत्ययलक्षणेन प्राचामिति प्राप्तष्फं बाधित्वा परत्वात् ङीन् स्यात् शार्ङ्गरवादिपाठादत आह यथेति। तत्र हि सूत्रे यञ इति वर्त्तते। सर्वग्रहणादिति। तद्धि पूर्वसूत्रेऽपकृष्यते। औतोमिति। एका- देशविधायकं हि तत्। अचीति। अजाद्योरित्यर्थः। अत एव तद्धितशसो निवृत्तिः। भाष्ये सूत्रारम्भ- वादी वचनान्तरवादिनं प्रति दूषणमाह। ( तस्य दोष इति )। स्थानिसंज्ञानुदेशादित्यस्येत्यर्थः। इत्वम्। शास इदङ्हलोरिति। इम्। तृणह इमित्यनेन। भाष्ये। (वक्ष्यत्यत्रेति)। नङीति ङौ नलोपप्रतिषेधाज्ज्ञाप- कात्प्रत्ययलक्षणेन भसंज्ञा नेत्येवं रूपम्। अनुपदमेतत् सूत्र एवेत्यर्थः। शास्त्रपरेति। उपदेशशास्त्रपरेत्यर्थः। अतिदिश्यमानकार्याणामुत्पत्तिदेश एव विप्रतिषेधशास्त्रोपयोगीति भावस्तत्राह सति प्रत्यये इति। इदं सूत्रं तत्तच्छास्त्रनिमित्तसंपादनद्वारा तत्तच्छास्त्रप्रवृत्तिसंपादकमिति भावः। अत एव पूर्वं तान्यनेन प्रत्युत्थाप्यन्ते इत्युक्तम्। तानि तत्कार्यबोधकानि शास्त्राणीति तदर्थं उचितः न तु कार्याणि क्रियन्त इत्यर्थः। क्रियन्ते इत्यस्यैव वक्तुमुचितत्वात्। अत एव टित आत्मनेपदानामिति सूत्रे पर्यवपादो रूपान्त- रापत्तिरित्युक्तं कैयटेन विद्यमानस्य हि रूपान्तरापत्तिर्भवति शास्त्रमेव च, विद्यमानं न तु कार्यं तस्य च रूपान्तरमेतद्विषये कार्यान्तरप्रवर्त्तकत्वम्। एवञ्च पर्यवपन्नत्वमपि शास्त्रस्येत्यन्ये। भाष्ये। ( कानि पुन- रिति ) पूर्वमेतत्सूत्रकरणे का युक्तिरिति युक्तिप्रश्नः। इदानीं तु प्रयोजनप्रश्न इति न पौनरुक्त्यम्। अत

अग्ने त्रीते वाजिना त्रीषधस्था तातापिण्डानाम् । इम् । अतृणेट् । अडाटौ । अधोक् । अलेट् । ऐयः । औनः । अम्विधिः । अभिनोऽत्र । अच्छिनोऽत्र । अपृक्तशिलोपयोः कृतयोरेते विधयो न प्राप्नुवन्ति । प्रत्ययलक्षणेन भवन्ति । नैतानि सन्ति प्रयोजनानि । स्थानिवद्भावेनाप्येतानि सिद्धानि । न सिध्यन्ति । आदेशः स्थानिवदित्युच्यते न च लोप आदेशः । लोपो ऽप्यादेशः । कथम् । आदिश्यते यः स आदेशः । लोपो ऽप्यादिश्यते । दोषः खल्वपि स्याद् यदि लोपो नादेशः स्यात् । इहाचः परस्मिन् पूर्वविधावित्येतस्य भूयिष्ठानि लोपउदाहरणानि तानि न स्युः । यत्र तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः । क्व च स्थानिवद्भावो नास्ति यो ऽल्विधिः । किं प्रयोजनम् । प्रयोजनम् ङौ नकारलोपेत्वेम्विधयः । भसंज्ञाङीपुष्फगोरात्वेषु च दोषः * । भसंज्ञाङीपुष्फगोरात्वेषु च दोषो भवति । भसंज्ञा तावन्न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति न प्रत्ययलक्षणेन भसंज्ञा भवतीति यदयं न ङिसंबुद्ध्योरिति ङौ प्रतिषेधं शास्ति । ङीप्यपि नैवं विज्ञायते अण्णन्तादकारान्तादिति । कथं तर्हि अण्यो ऽकार इति ष्फे ऽपि नैवं विज्ञायते । यञन्तादकारान्तादिति । कथं तर्हि । यञ् यो ऽकार इति ।

---

तदुक्तम् । यदि तु विशेषावहितत्वादम् संबुद्धाविति पूर्वमम प्रवर्तते तदा संबुद्धिलोपो न स्यात् । ऐयरिति । इयर्तेर्लङ् तिप्शपः श्लुर्द्विर्वचनमर्तिपिपर्त्योश्चेतीत्वमभ्यासस्यासवर्ण इतीयङ् । औन इति । उन्देर्लङ् सिप् श्नम् श्नान्नलोपो दश्चेति रुत्वम् । न च लोप इति । दिशिरुच्चारणक्रियो न च लोप उच्चार्यते अभावरूपत्वात् । लोपो ऽपीति । प्रतिपादनक्रियो ऽत्र दिशिरिति भावः । अण्यो ऽकार इति । अकारेणाणन्तं न विशेष्यते किं तर्ह्यणेवासर्वश्चाण् अकार एवेति विशेषणसामर्थ्यात्श्रूयमाणाकाररूपादण इति विज्ञायते अथवा ऽण्यो ऽकार इति अणा ऽकारो विशेष्यते इति वर्णनिमित्तो ङीप् न तु प्रत्य-

---

एव सदन्वाख्यानादिति प्रागुक्तरितम् । यद्यप्यल्विध्यर्थमिति । इदमिति शेषः । विशेषविहितत्वादिति । प्रत्ययविषये शीघ्रांपस्थितिकत्वादित्यर्थः । चीने इत्यादौ शेषछन्दसीति लोपः । तृम्फलन्तु दीर्घः । आश्रियेति । अपवादबाधकशाचनिकपूर्वविप्रतिषेधाश्रयणेनेति भावः । न्यायेन पूर्वं लोपप्राप्तेरत्यल्पविषयत्वात् । विशेषविहितत्वादिति । येन नाप्राप्तिन्यायेनापवादत्वादित्यर्थः । तत्रेति । अपवादविषयं परित्यज्योत्सर्ग इतिन्यायेनापवादविषये उत्सर्गाप्रवृत्तेरिति भावः । यदीत्यनेन विषयभेदादपवादत्वमेव नास्तीति सूचितम् । यदि तु तुड्विषये रप्रतिषेधो वक्तव्य इत्यादिसाप्तमिकभाष्येण विषयभेदेऽप्यपवादत्व तर्हि प्रत्ययलोपस्थले ऽनुत्पत्तिरेवान्वाख्यायते इति सरूपसूत्रस्थभाष्ये उक्तत्वेनापवादत्वसभावनैव नेत्याहुः । इतीयङिति । ततो गुणे ऽपृक्तलोपे ऽडाटाविति भावः । अडागमे रूपान्तरेण तगच्छास्त्रनिमित्तविघातात् । केनापि कार्येणानयोर्न यौगपद्यमिति भावः । लावस्थायामडिति पक्षेऽपि बहुलं छन्दस्यमाङ्योगेपीति बाहुलकादत्रैवमेव प्रक्रिया बोध्या । अभिनोऽत्रेत्यत्रापीकारलोपाभ्यां श्नमो यौगपद्यासम्भवेन परत्वात्लोपे तस्य प्रवृत्तिरिति बोध्यम् । भाष्ये प्रयोजन ( ङाविति ) सूत्रारम्भवादी । प्रत्याख्यानवाद्याह ( भसंज्ञेत्यादि ) सूत्रारम्भवाद्याह ( भसंज्ञायान्तावदिति ) । ( यदयं नङीति ) । अङ्गाधिकारप्रतिनिर्देशपक्षे ऽयं ज्ञापकोपन्यासः । अकारेणाणन्तमिति । तद्धि जातेरस्त्रीत्यादेराखुरित्यादौ व्यावृत्तये आवश्यकम् । ननु प्रत्ययग्रहणसामर्थ्येन प्रधानतया प्रत्ययत्वेन प्रत्ययस्य यत्र निमित्तता तत्रैवाल्विध्यर्थमिदमेवंचाकाररूपो योणित्यर्थेऽपि प्रत्ययलक्षणं दुर्वारमत आह विशेषणेति । वस्तुतोऽकार एव विशेष्य इत्याह

गोरावे ऽपि नैवं विज्ञायते अमि अचीति । कथं तर्हि । अच्यमीति । प्रयोजनान्यापि तर्हि नैतानि सन्ति । यत्तावदुच्यते ङौ नकारलोप इति । क्रियते एतन्न्यास एव न ङिसंबुद्ध्योरिति । इत्त्वमपि वक्ष्यत्येतत् । शास इत्वे अशासः क्वाविति । इम्विधिरपि हलीति निवृत्तम् । यदि हलीति निवृत्तं तृणह्यानि अत्रापि प्राप्नोति । एवं तर्हि अचि नेरनुवर्तिष्यते । न तर्हीदानीमयं योगो वक्तव्यः । वक्तव्यश्च । किं प्रयोजनम् । प्रत्ययं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन यथा स्यात् शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन मा भूदिति । किं प्रयोजनम् । शोभना दृषदो ऽस्य ब्राह्मणस्य सुदृषद् ब्राह्मणः । सौमनसी अलोमोषसी इत्येष स्वरो मा भूत् ॥

---

यनिमित्तइतिप्रत्ययलक्षणाभावः।यञ् योकार इति।अकाराद्यवयव इत्यर्थः।अथवा यञवयवे यञ्शब्दोत्र वर्तते यञवयवो योकार इत्यर्थः। पूर्ववदेतद् व्याख्येयम् । अच्यमीति । अच् प्रधानं तद्विशेषणममीति तदादिविध्यभावः । तत्र वर्णनिमित्तमात्वं न प्रत्ययनिमित्तमिति दोषाभावः। क्रियते एतदिति । त्वयापि ज्ञापनार्थमवश्यं वक्तव्यमिति भावः। शास इत्वे इति। कृतेप्यस्मिन् सूत्रे नियमार्थमेतद्वक्तव्यमाशास्ते इत्यादौ मा भूत् । अकृते तु विध्यर्थम् । आशास्त इत्यादौ तु न भवति शासु अनुशिष्टावित्यस्यैव तत्र ग्रहणात् । प्रत्ययं गृहीत्वेति । स्थानिवद्भावेन सिद्धे सत्ययं योगो नियमार्थः । प्रत्यय एव यस्य लक्षणं तत्प्रत्ययस्यालोपे यथा स्यात् । सौमनसी इत्यत्र त्वानिनस्मन्ग्रहणानि चेति वचनादसूप्रत्ययश्चाप्रत्ययश्च गृह्यते इति सुदृषदित्यत्र स्थानिवद्भावादुत्तरपदाद्युदात्तत्वाभावे नञ्सुभ्यामित्यन्तोदात्तत्वं भवति । तत्र चोत्तरपदादिरित्यधिकारादसन्तमुत्तरपदं गृह्यते इति सुदृषदित्यत्रापि स्थानिवद्भावादसन्तत्वमुत्तरपदस्य स्यात् ॥ ६२ ॥

---

अयोति । न तु प्रत्ययनिमित्त इति प्राधान्येन प्रत्ययनिमित्त इत्यर्थः । अज्झलात्मकयञोकारेण सामानाधिकरण्यासंभवादाह अकारावयवेति । बहुव्रीहिः । अस्य विशेषणत्वे इदम् । गुणे त्वन्याय्यकल्पनेति न्यायादिति भावः । नन्वेवं सति मत्यादिष्वतिप्रसङ्गवारणायाजाद्यत इत्यत्र मुख्यार्थस्योत्तरलक्षणायां वैरूप्यं स्यादतो व्याख्यानान्तरमाह अथवेति । तद्विशेषणमिति । अमोवयवे ऽचीत्यर्थ इति भावः । एवं प्रत्याख्यानवाद्युक्तदोषेषु परिहृतेषु प्रत्याख्यानवाद्याह प्रयोजनान्यपीत्यादि । ज्ञापनार्थमिति । प्रत्ययलक्षणेन भत्वं नेत्यस्येति शेषः । न लुमता तस्मिन्नित्यनाश्रित्येदम् । अकृते त्विति । परस्मैपदविहिताङ्साहचर्यात् शासुधातोरेव ग्रहणं तत्रेति पक्षे विध्यर्थम् । नन्वेवमप्यार्यसोरित्याद्यसिद्धिरिति चेत् । अत्राहुः । शास इति सामान्यसूत्रम् । ततोऽङि । अजादौ चेदङ्यवेति नियमार्थमिदम् । एवञ्च सूत्रे हल्ग्रहणं मास्त्विति मित्रशीरित्यादिसिद्धिः । आशासः क्वाविति तु अत्र शासेरेव ग्रहणे विध्यर्थं अन्यथा नियमार्थमिति आशास्ते इत्यादौ न दोष इति । अथ वार्त्तिकोक्तविध्यर्थत्वे दूषिते भाष्यकृन्नियमार्थं सूत्रमिति प्रश्नपूर्वकमाह न तर्हीत्यादि । प्रत्ययं गृहीत्वेति । प्रत्ययत्वतद्व्याप्यधर्मपुरस्कारेण यदुच्यते इत्यर्थः । शब्दं गृहीत्वेति । उक्तधर्मातिरिक्तपुरस्कारेण यदुच्यत इत्यर्थः । ननु शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन मा भूत् स्थानिवत्त्वे न तु स्यादत आह स्थानिवदिति । प्रत्यय एवेति । उक्तोर्थः । एतदर्थमेव द्वितीयं प्रत्ययपदम् । नचालोमोषसीति पर्युदासेन श्रूयमाणासन्तस्यैव ग्रहणमिति नियमोपि व्यर्थ इति वाच्यम् । पर्युदासेन प्रत्ययासन्तस्यैव ग्रहणापत्तौ सुव इत्यादौ स्वरानापत्तेरिति भाष्याशयात् । ननु स्थानिनिमित्तं यदन्यस्य कार्यं तत्स्थानिवत्त्वेन लोपेपि नतु तस्यैव हि असतो वचनान्तेनापि कार्यित्वाप्रतिपादनादिह चासत एव कार्यित्वमत आह तत्र चेति । सौमनसीति सूत्रे इत्यर्थः ॥ ६२ ॥

न लुमताऽङ्गस्य ॥ ६३ ॥ लुमति प्रतिषेधएकपदस्वरस्योपसंख्यानम् *। लुमति प्रतिषेधएकपदस्वरस्योपसंख्यानं कर्तव्यम्। एकपदस्वरे च लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम्। किमविशेषेण। नेत्याह। सर्वामन्त्रितसिज्लुक्स्वरवर्जनम् *। सर्वस्वरमामन्त्रितस्वरं सिज्लुक्स्वरं च वर्जयित्वा। सर्वस्वर, सर्वस्तोमः सर्वपृष्ठः। सर्वस्य सुपीत्याद्युदात्तत्वं यथा स्यात्। आमन्त्रितस्वर, सर्पिरागच्छ सप्ताऽऽगच्छत। आमन्त्रितस्य चेत्याद्युदात्तत्वं यथा स्यात्। सिज्लुक्स्वर, मा हि दातां मा हि धाताम्। आदिः सिचोऽन्यतरस्यामित्येष स्वरो यथा स्यात्। किं प्रयोजनम्। प्रयोजनं ञ्निकिल्लुकि-

---

न लुमताऽङ्गस्य ॥ लुमतीति। लुमत्संज्ञया प्रतिपादितमदर्शनं लुमत् तत्र यः प्रतिषेधस्तस्मिन्नित्यर्थः। एकपदस्वरस्येति। एकपदाश्रयो यः स्वरस्तस्येत्यर्थः। यस्तु पदस्य पदादिति पदद्वयाश्रयः स्वरस्तत्र प्रत्ययलक्षणं भवत्येव। दधि तिष्ठति तिङ्ङ तिङ इति निघातः। अङ्गस्येत्यङ्गाधिकारनिर्देशात् ञ्नितिकित्स्वरस्य चानाङ्गत्वात्प्रतिषेधस्याप्राप्तिरिति भावः। सर्वस्तोम इति। सर्वस्य सुपीति यदाद्युदात्तत्वं तदेव बहुव्रीहौ प्रकृत्येति विधीयत इत्येकपदस्वरो भवत्येव। सर्पिरिति। सर्पिःशब्दोऽन्तोदात्तः प्रत्ययस्वरेण घृतादित्वाद्वा सप्तन्शब्दोऽपि घृतादित्वादन्तोदात्तः। नित्स्वरेण त्वाद्युदात्तत्वे विशेषो न स्यात्। मा हि दातामिति। गातिस्थाघ्विति लेर्लुकि विधातव्ये सिचो लुग्विधानं प्रत्ययलक्षणार्थम्। ञ्निकिल्लुकीति। इकार उच्चारणार्थः। ञ्नित्कितां प्रत्ययानां

---

न लुमता ॥ लोपक्रियानिरूपिता करणे तृतीया। यद्यपि लुशब्दयोगात्संज्ञा लुमद्वाच्या न च तत्रायं प्रतिषेधः किन्तु तत्प्रतिपादितादर्शने। एवञ्च लुमति प्रतिषेध इत्यनुपपन्नं तथापि वाचकधर्मस्य वाच्य उपचार इत्याह लुमदिति। ननु सर्वोऽपि स्वरः कार्यित्वेनैकमेव पदं गृह्णातीत्यत आह एकेति। सर्वामन्त्रिते सर्वामन्त्रितपदेनाष्टमिकमपि ग्रहीतुं शक्यमिति पदस्य पदादित्यधिकारे ऽनन्तरमप्यामन्त्रितस्येत्युल्लङ्घ्य व्यवहितमुदाहरति दधीति। अङ्गस्येत्यधिकारेति। वस्तुतस्तदनिर्देशेऽप्यावश्यकमेतत्। तथाहि। सौवरीणां सप्तमीनां भीह्रीभृवेति सूत्रे प्रत्ययात्पूर्वमिति पूर्वग्रहणेन तदन्तसप्तमीत्वस्य षाष्ठभाष्ये तत्सूत्रे एवोक्तत्वेन स्वराणां प्रत्यये परतः पूर्वकार्यत्वाभावात्। कित्स्वरे षष्ठ्या एव सत्त्वाच्च। ननु संज्ञायामुपमानमिति उपमानशब्दः संज्ञायामाद्युदात्त इत्यर्थकं कनो लुपि चञ्चेव चञ्चत्यादावाद्युदात्तसाधकं ञ्नित्यादिरित्येव सिद्धे व्यर्थं सदनुबन्धलक्षणे स्वरे प्रत्ययलक्षणाभावज्ञापकमिति तत्सूत्रे भाष्ये स्पष्टन्तेनैवं विरुद्ध्यतेति चेन्न। प्रकृतसूत्रे वार्त्तिकव्याख्यानमात्रं षष्ठे तु प्रत्याख्यातानीमानीत्यविरोधात्। अत एव तत्र भाष्ये पांथमथिस्वरार्थं वचनं कर्त्तव्यमित्युक्तम्। एवञ्च तदर्थस्यास्यवचनस्य कर्त्तव्यत्वं वदता ऽन्येषामकर्त्तव्यत्वमर्थादुक्तमेव। एतेन भीह्रीति ज्ञापकं विशेषोपत्तं सप्तम्यर्थग्रहणे तदन्तग्रहणे च नात्र फलभेदस्तद्विषयम्। एवञ्चोपोत्तमं रितीत्यादावेव तत्प्रवृत्तिरिति कैयटाशय इति परास्तम्। संज्ञायामुपमानमिति सूत्रस्यभाष्याविरोधात्। तस्माद् ज्ञापकस्य सामान्यापेक्षत्वमेवोचितम्। तत्र सप्तम्या यथा श्रुतत्वे हि न लुमतेति निषेधात्तदप्राप्तौ ञ्नितीति प्रयोजनमिति भाष्यासङ्गतिः स्पष्टैव। न चाङ्गाधिकारप्रतिनिर्देशपक्षे तद्भाष्यं सिद्धान्तपक्षे योजयितुं शक्यत्वादिति दिक्। षष्ठीसमासादेः परत्वात्सति शिष्टत्वाच्च समासान्तोदात्तत्वस्यैव प्राप्तेर्भाष्ये सर्वस्तोम इति बहुव्रीहिरुदाहृतः। तत्र बहुव्रीहिस्वरस्य द्विपदाश्रयत्वात्प्रतिषेधस्यैवाप्राप्तेः कथं तदपवाद इदमुदाहरणमत आह सर्वस्येति। विधीयत इति। अपवादनिवर्त्तनेन व्यवस्थाप्यत इत्यर्थः। प्रत्ययस्वरेणेति। इसिप्रत्ययान्तत्वादिति भावः। नब्विषयस्येत्यस्य तु न प्राप्तिः। अनिसन्तस्येति पर्युदासात्। घृतादित्वकल्पनन्तु किमर्थमिति चिन्त्यम्। नित्स्वरेणेति। सप्तन्शब्दो हि

स्वराः *। ञ्नित्कित्स्वरा लुकि प्रयोजयन्ति। गर्गा वत्सा विदा उर्वाः। उष्ट्रग्रीवा वामरज्जुः। ञ्नितीत्याद्युदात्तत्वं मा भूदिति। इह चात्रयः। कित इत्यन्तोदात्तत्वं मा भूदिति। पथिमथोः सर्वनामस्थाने लुकि *। पथिमथोः सर्वनामस्थाने लुकि प्रयोजनम्। पथिमथोः सर्वनामस्थाने लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम्। पथिप्रियो मथिप्रियः। पथिमथोः सर्वनामस्थानइत्येष स्वरो मा भूदिति। अह्नो रविधौ *। अह्नो रविधाने लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम्। अहर्ददाति अहर्भुङ्क्ते। रो ऽसुपीति प्रत्ययलक्षणेन प्रतिषेधो मा भूदिति। उत्तरपदत्वे चापदादिविधौ *। उत्तरपदत्वे चापदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम्। परमवाचा परमवाचे। पर-

---

लुकि कृते स्वरानिवर्त्यमानतया प्रयोजनमिति पदानां संवन्धः। भाष्यकारस्तु वस्त्वर्थं व्याचष्टे ञ्नित्कित्स्वरा इति। प्रतिषेधमित्यध्याहारः। उष्ट्रग्रीवा वामरज्जुरिति। देवपथादित्वात्कनो लुप्। असंज्ञायां चेदमुदाहरणं संज्ञायां तु संज्ञायामुपमानमिति भवितव्यमाद्युदात्तत्वेन। अत्रय इति। राशदिभ्यां त्रिप् अदेस्त्रिनिश्चेति त्रिवन्तो ऽत्त्रिशब्द आद्युदात्तः। पथिप्रियो मथिप्रिय इति। पूर्वपदकृतिस्वरेणान्तोदात्तौ पथिमथिशब्दौ भवतः। अहर्ददातीति। असुपीति प्रसज्यप्रतिषेधः पर्युदासे तु दीर्घाहा निदाघ इत्यत्रापि सुप्सदृशे निदाघशब्दे परतो रत्वं स्यात् रुत्वं चेष्यते। लोपशब्देन सोर्लुप्तत्वात्प्रत्ययलक्षणेन सुपि नेति रत्वप्रतिषेधाद्रुत्वे यत्वे तस्य च लोपे दीर्घाहा निदाघ इति सिध्यति। लुकि तु प्रत्ययलक्षणप्रतिषेधाद्रुत्वे सत्युत्वाभावादहर्ददातीत्यादि सिध्यति। उत्तरपदत्वे चेति। उत्तरपदम् उत्तरशब्देनोच्यते पदैकदेशलोपात् तेनोत्तरपदस्य पदत्वे पदव्यपदे-

---

सप्यशूभ्यान्तुट्चेति कनिनन्तः। नूः संख्याया इत्याद्युदात्तत्वं प्राप्नोतीति द्रष्टव्यम्। माहिशानामिस्यत्राद्युप्रतिषेधाय माङ्। हि शब्दो हि चेति निघातप्रतिषेधार्थः। सिज्लुक् स्वरवर्जनं न कार्यमित्याहलेरिति। गातिस्थेनेन च्लेरेव लुकि मन्त्रेघसेत्यत्र पुनर्लिङ्ग्रहणं न कार्यम्। जुस्विधावात इत्येतच्च विध्यर्थं स्यादिति लाघवमिति भावः। प्रत्ययलक्षणार्थमिति। प्रत्ययलक्षणेन सिज्निमित्तकार्यार्थमित्यर्थः। ननु ञ्नित्कित्स्वरा इति भाष्यदर्शनाद् ञ्नित्कितां स्वरविशेषणत्वेन लुका समासो ऽनुपपन्न इत्यत आह ञ्नित्किंतामिति। प्रयोजयन्तीत्यस्य कर्माकाङ्क्षायामाह प्रतिषेधमिति। लुकीति। वार्त्तिके लुकीत्युपलक्षणमिति भावः। भाष्ये [ आद्युदात्तत्वं मा भूदिति ] एवञ्च प्रातिपदिकस्वरेणान्तोदात्तत्वमेवेति भावः। अत्रिशब्दादितश्चानिञ इति ढको ऽत्रिभृग्वति लुक्। नन्वत्राय इत्यत्र कित्त्वप्रयुक्तान्तोदात्तत्वाभावेपि प्रातिपदिकस्वरेण तत्त्वं दुर्वारमत आह शदादीति। त्रिवन्त इति। नान्तस्त्वन्तोदात्त इति भावः। इदं प्रयोजनं कित्तद्धितान्तस्यान्त उदात्त इत्यर्थे बोध्यम्। कितः प्रत्ययस्यैवान्तोदात्तत्वे तु प्रत्ययलक्षणेन कार्यित्वा ऽसंपादनान्न दोषः। अत एव नखनिर्भिन्न। इत्यैस्नेत्याहुः। पथिमथिशब्दौ इन्प्रत्ययान्ततया प्रत्ययस्वरेण फिषोन्त इति वान्तोदात्तौ। तयोः सर्वनामस्थाननिमित्तमाद्युदात्तत्वमत्रापि स्यादित्यर्थः। भाष्ये प्रतिषेधो मा भूदिति। तेनापर्युदासत्वं सूचितं तदुपपादयति पर्युदासेतु इति। प्रत्ययत्वेन सुप्सादृश्ये तु अहर्ददातीत्यत्रापि रत्वं न स्यादित्यर्थः। नन्विष्यमाणमपि रुत्वं न प्राप्नोति। प्रत्ययलक्षणनिषेधेन ह्रस्वस्यैव प्राप्तेरत आह लोपशब्देनेति। हल्ङ्यादिसूत्रेणेति भावः। लुमता लुप्त एव स निषेध इति तात्पर्यम्। न लुमता तस्मिन्निति पक्षे तु नेदमावश्यकम्। उत्तरपदत्वे चेति सर्वथा कार्यम्। ननु सामान्यत उत्तरस्य पदस्य इत्यर्थे परमं चर्मेत्यत्रापि निषेधापत्तौ नलोपो न स्यादत आह उत्तरपदमिति। अत एव बहुच्पूर्वस्य नेति

मगोदुहा ॰परमगोदुहे परमश्वलिहा परमश्वालिहे । पदस्येति प्रत्ययलक्षणेन कुत्वादीनि मा भूवन्निति । अपदादिविधाविति किमर्थम् । दधिसेचौ दधिसेचः । सात्पदाद्योरिति प्रतिषेधो यथा स्यात् । यद्यपदादिविधावित्युच्यते उत्तरपदाधिकारो न प्रकल्पेत । तत्र को दोषः । कर्णोवर्णलक्षणादित्येवमादिविधिर्न सिध्यति । यदि पुनर्नलोपादिविधौ प्लुसन्ते लुमता लुप्ते प्रत्ययलक्षणं न भवतीत्युच्येत । नैवं शक्यम् । इह राजकुमार्यौ राजकुमार्य इति शाकलं प्रसज्येत । नैष दोषः । यदेतत् सिति शाकलं नेति । एतत्प्रत्यये शाकलं नेति वक्ष्यामि । यदि प्रत्यये शाकलं नेत्युच्यते दधि अधुना मधु अधुना अत्राऽपि न प्राप्नोति । प्रत्यये न शाकलं भवति कतरस्मिन् यस्माद्यः प्रत्ययो विहित इति । इह तर्हि परमदिवा परमदिवे । दिव उदित्युत्त्वं प्राप्नोति । अस्तु तर्ह्यविशेषेण । ननु

---

ये कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थः । परमवाचेति । समासार्था या विभक्तिः कृता तां प्रत्ययलक्षणेनाश्रित्य पदत्वनिबन्धनानि कुत्वादीनि प्राप्नुवन्ति भसंज्ञा तु यस्माद् यजादिविधिरिति समुदायस्यैव न त्ववयवस्य । दधिसेचाविति । दध्नः सेचाविति षष्ठीसमासः । उपपदसमासे तु प्राक्सुबुत्पत्तेः समासविधानात्सेच्शब्दस्य पदसंज्ञाया अभावात्पदादित्वं सकारस्य न स्यात् । अनभिधानाच्च सोपपदाद्विजभावाद्दधिषेचावित्यादिप्रयोगाभावात् । कर्णो वर्णलक्षणादिति । नन्वपदादिविधावित्युच्यते स्वरश्चाऽर्थं पदादिविधिः । ककारोऽन्नादिर्न त्वकार इत्यदोषः । स्वरविधौ व्यञ्जनमविद्यमानवच्च त्वादिव्यपदेशः । सूत्रं चासमासार्थं स्यात् । कर्णशब्दादर्शआदित्वादचि कृते शुक्लः कर्ण इत्याद्युदात्तत्वं यथा स्यात् । यदि पुनरिति । तेन पूर्वस्मिन् परत्र च भवत्येव प्रत्ययलक्षणम् । राजकुमार्याविति । इकोऽसवर्णइत्यत्रैङः पदान्तादतीत्यतः पदग्रहणमनुवर्तते तत्र प्रत्ययलक्षणेन पदान्तत्वाच्छाकलप्रसङ्गः । दधि अधुनेति । अधुना प्रत्यय इदमो विधीयते तत इदम इश् यस्येति लोपः । यस्माद्य इति । प्रत्यासत्त्येति भावः । राजकुमार्यावित्यत्र यद्यपि समुदायाद्विहितस्तथाप्यवयवादप्यसौ विहित इति बुद्धिर्भवत्येव । समुदायद्विर्वचने ऽवयवद्विर्वचनबुद्धिवत् । उत्त्वमिति । उत्त्वविधावङः पदान्ता-

---

वचनमर्थवदिति भावः । उत्तरपदशब्दश्च समासचरमावयवे रूढ इत्यसमासे नातिप्रसङ्ग इति बोध्यम् । समासार्थेति । तत्र सुप्सुपेत्यधिकारादिति भावः । ताम् । सुपोधातुरितिलुप्ताम् । कुत्वादीनि । कुत्वघत्वढत्वादीनि । ननु भत्वेन पदत्वबाधोऽतआह यस्मादिति । तथा च भिन्नावधित्वान्न बाध्यबाधकभाव इति भावः । भाष्ये [ पदस्येनीति ] । पदस्येत्यधिकृत्य यानि विहितानीत्यर्थः । ननु सोपपदात्सिचेर्क्विपि दधिषेचाविति स्यादेव । न चेष्टापत्तिः । पदादाविरिति पक्षे दुर्लभत्वाद् अत आह अनभिधानादिति । तस्य च्छान्दसत्वादिति भावः । भाष्ये (यद्यपदादीति) । एकदेशेन संपूर्णं वार्त्तिकमुपलक्ष्यते यतः प्रतिषेधस्यासिद्ध्याप्तिर्न प्रतिषेधापवादस्येति बोध्यम । स्वरश्चेति । उत्तरपदादिरित्यधिकारादिति भावः । नन्वसमासे स्वाङ्गाशिटामिति कर्णस्याद्युदात्तत्वं सिद्धमेवेत्यत आह कर्णशब्दादिति । एवमादिविधिर्न सिध्यतीति भाष्यादुत्तरपदादिरित्यधिकारस्यसूत्राणां वैयर्थ्यस्यैव दूषणत्वेन प्रतीतिरित्येके । प्रत्यासत्त्येति । प्रत्ययग्रहणे यस्मात् स विहितस्तदादेरित्यस्येति भावः । तथापीति । वस्तुतो राजकुमार्यावित्यत्रापि दोषः । समुदायादसौ विहितो नावयवात् । अन्यथा कौरुचरेय इत्यादौ चकाराकारस्यापि वृद्धिः स्यात् । इह तर्हीत्यादिभाष्यन्तु अभ्युपेत्यवादेन । प्लुतेरन्न तु नोत्तरपक्षे चस्यस्य प्रवृत्तिः । अत एव पूर्वत्रैव दोषोऽयं दूषितं

चोक्तम्। उत्तरपदाधिकारो न प्रकल्पेतेति। वचनादुत्तरपदाधिकारो भविष्यति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। अनुवृत्तिः करिष्यते। इदमस्ति यस्मात्प्रत्ययविधिस्तदादि प्रत्यये ऽङ्गम्। सुप्तिङन्तं पदम्। यस्मात्सुप्तिङ्विधिस्तदादि सुबन्तं तिङन्तं च। नः क्ये। नान्तं क्ये पदसंज्ञं भवतीति यस्मात् क्यविधिस्तदादि सुबन्तं च। सिति च पूर्वं पदसंज्ञं भवति यस्मात्सिद्विधिस्तदादि सुबन्तं च। स्वादिष्वसर्वनामस्थाने। स्वादिष्वसर्वनामस्थाने पूर्वं पदसंज्ञं भवति। यस्मात्स्वादिविधिस्तदादि सुबन्तं च। यचि भम्। यजादिप्रत्यये पूर्वं भं भवति। यस्माद्यजादिविधिस्तदादि सुबन्तं च। इदं तर्हि परमवाक्। असर्वनामस्थानइति प्रतिषेधः प्राप्नोति। अस्तु तस्याः प्रतिषेधः। या स्वादौ पदमिति पदसंज्ञा, या तु सुबन्तं पदमिति पदसंज्ञा सा भविष्यति। सत्येतस्मिन् प्रत्यये आसीत्। अनया भविष्यत्यनया न भविष्यतीति। लुप्तइदानीं प्रत्यये यावत एवावधेः स्वादौ पदमिति पदसंज्ञा तावत एवावधेः सुबन्तं पदमिति। अस्ति च प्रत्ययलक्षणेन

---

र्देदिति पदाधिकारः। वचनादिति। समासे ह्युत्तरपदं भवति न च कर्णशब्दो ऽच्प्रत्ययान्तोऽस्ति अर्शआदिषु हि स्वाङ्गाद्धीनादिति पठ्यते तेन खञ्जादिभ्य एव हीनस्वाङ्गवाचिभ्यो ऽच्प्रत्ययो भवति न च कर्णशब्दो हीनस्वाङ्गवाची। तत्तर्हीति। उत्तरपदत्वे चापदादिविधावित्येतत्। यचि भमिति। ततश्च परमवाचेत्यत्र वाक्शब्दस्य भत्वात्पदत्वाभावः। इदं तर्हीति। असर्वनामस्थानइति प्रसज्यप्रतिषेधं मन्यते ततश्च सर्वनामस्थाने परतो यस्मात् स्वादिविधिस्तदादि सुबन्तं च पदसंज्ञं न भवतीति प्रत्ययलक्षणेन सर्वनामस्थानपरत्वात् पदत्वप्रतिषेधात् कुत्वाप्राप्तिः। सत्येतदिति। अवधि-

---

र्भगवतेति बोध्यम्। ङमो ह्रस्वादिति सूत्रस्थभाष्यन्त्वेकदेश्युक्तिरिति न दोष इति तत्रैव निरूपयिष्यामः। समासचरमावयवे उत्तरपदशब्दो रूढ इत्यभिप्रेत्याह समासे हीति। न तु पदत्वमपि तद्व्यवहारे प्रयोजकमित्यर्थः। केवलरूढत्वे मानमुक्तं तुष्यतु दुर्जनन्यायेन केवलयोगेप्याह न च कर्णेति। राजवाचकर्णशब्दस्य तु अभिव्यक्तपदार्था ये इति न्यायान्न तत्र ग्रहणमिति भावः। काश्यपिनावित्यादौ छन्दोब्राह्मणानीति तद्विषयता। बाधकशास्त्रबलात् सुबुत्पत्तेः प्रागेव तद्धित इति न दोषः। भाष्ये ( नः क्ये इत्यादितदादि सुबन्तं चेति )। यस्मात्प्रत्ययविधिरिति। अवश्यमुत्तरत्रानुवर्त्यं परैश्चतुर्भिरित्यादौ परमघाटितसमुदायस्य पदत्ववारणाय। तत्त्वे हि ञ्ल्युपोत्तममिति परमैरित्यस्यापि निघातापत्तिः। एवञ्च तस्य नः क्ये इत्यत्रापि सम्बन्धे यस्मात् क्यविधिस्तदादि यदि क्ये तन्निमित्तान्तर्वर्त्तिसुपा पदन्तदा नान्तमेवेति नियमः स्यात् तथा च परमवाच्यतीत्यादावयववाक्शब्दस्य पदत्वेन कुत्वं स्यात् सूत्रन्तु समिध्यतीत्येतद्व्यावृत्त्यर्थं स्यादिति सुबन्तमित्यपि सम्बध्यत इति भावः। तस्य च मध्ये चेत् सुबन्तं तदा तदपि नान्तमेव पदमित्यर्थः। अन्वाचयशिष्टं च सुबन्तमिति सर्वत्र संनियोगशिष्टत्वे षड्भ्य इत्याद्यसिद्धिः। सिति चेत्यत्र यद्यपि नास्त्युपयोगो ऽवयवसुबन्ताप्रसिद्धेस्तथापि उत्तरत्रानुवृत्तिं दर्शयितुं तत्रापि तत्सम्बन्धो दर्शितः। व्यपदेशिवद्भावेन कथंचिदन्वयः संपाद्यः। एवं स्वादिष्विति सूत्रेपि तदनुवृत्तिकरणमुत्तरार्थमेव। यचि भमित्यत्रापि पदसंज्ञया तुल्यावधिकत्वसिद्ध्यर्थं यस्मादित्याद्यनुवर्त्यमिति बोध्यम्। संज्ञिनां भेदादिति। सिति सौ तदन्तस्य सुबन्तमिति पदत्वं न तत्प्राग्भागस्य स्वादिष्वितीति भङ्गः। ननु अपरनिमित्तकत्वेनान्तरङ्गतया सुबन्तमिति पदत्वं स्यादत आह भाष्ये [ प्रतिषेधाश्चेति ]। द्विः उन्मूलनम्। प्राप्तस्य विधेर्निवर्त्तनम्। एवञ्चापवादन्यायेनात्रान्तरङ्गासंभव इति भावः। अत्रानुवर्त्तमानं सुबन्तमित्यपि स्वादिष्विति सूत्रस्थ

सर्वनामस्थानपरेति कृत्वा प्रतिषेधाश्च बलीयांसो भवन्तीति प्रतिषेधः प्राप्नोति। नाप्रतिषेधात्। नायं प्रसज्यप्रतिषेधः सर्वनामस्थाने नेति। किं तर्हि पर्युदासो ऽयं यदन्यत्सर्वनामस्थानादिति सर्वनामस्थाने ऽव्यापारः। यदि केन चित्प्राप्नोति तेन भविष्यति। पूर्वेण च प्राप्नोति। अप्राप्तेर्वा। अथ वा अनन्तरा या प्राप्तिः सा प्रतिषिध्यते। कुत एतत्। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति। पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति। ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधेत। नोत्सहते प्रतिषिद्धा सती बाधितुम्। यद्येवं परमवाचौ परमवाच इति सुप्तिङन्तं पदमिति पदसंज्ञा प्राप्नोति। एवं तर्हि योगविभागः करिष्यते। स्वादिषु पूर्वं पदसंज्ञं भवति। ततः सर्वनामस्थाने ऽयचि। पूर्वं पदसंज्ञं भवति। ततो भम्। भसंज्ञं भवति यजादावसर्वनामस्थानइति। यदि तर्हि सावपि पदं भवति एचः प्लुतविकारे पदान्तग्रहणं चोदयिष्यति। इह मा भूत्। भद्रं करोषि गौरिति तस्मिन् क्रियमाणे ऽपि प्राप्नोति। वाक्यपदयोरन्त्यस्येत्येवं तत्।

---

संज्ञिनां भेदात् : बलीयांस इति। विध्युन्मूलनरूपत्वात्।एवं तर्हीति। योगविभागे सति सर्वा प्राप्तिः प्रतिषिध्यतइति दोषाभावः। असर्वनामस्थानइति। नञः क्रियापदेन सम्बन्धादुत्तरपदेनासम्बन्धो यचीत्येतच्च सर्वनामस्थानविशेषणं तेनायमर्थो भवति यजादौ सर्वनामस्थाने परतः पदसंज्ञा न भवतीति। हलादौ तु सुशब्दे भवत्येव। भाष्ये तु वस्तुमात्रमुपन्यस्तम्। सर्वनामस्थाने ऽयचीति। यजादौ सर्वनामस्थाने पदसंज्ञानिषेधात्सामर्थ्यादयमर्थः संपद्यते अयजादौ सर्वनामस्थाने पदसंज्ञा भवतीति। वाक्यपदयोरिति। गौरित्यौकारो वाक्यान्तो न भवतीत्यप्लुतौ न भवतः।

---

तदनुवृत्त्या मध्यस्य सुबन्तस्य यत्प्राप्तं तन्निषेधकं नतु सुबन्तमिति सूत्रप्राप्तस्येति बोध्यम्। भाष्ये (नोत्सहतइति)। स्वयमप्रवर्त्तमाना कथमन्यं बाधेतेति भावः। ननु सर्वनामस्थाने ऽयचीति न्यासस्य पदत्वनिषेधकत्वे ऽनन्तरस्येति न्यायेन स्वादिष्विल्यस्यैव निषेधे परमवाचावित्यादौ सुबन्तमिति पदत्वं स्यादत आह योगविभाग इति। एवञ्च तत्सामर्थ्यादनन्तरस्येति न्यायबाध इति भावः। यचीत्यस्य पुरस्तादपकर्षे फलमाह हलादाविति। वस्तुमात्रम्। अर्थसिद्धोर्थः। तत्फलं नञः सर्वनामस्थानपदेनासम्बन्धप्रदर्शनम्। भाष्ये (प्लुतविकारेइति)। प्लुतसहितविकारे इत्यर्थः। एचो प्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतावित्यत्रेति भावः। भाष्ये (इह तर्हीति)। वार्त्तिकारम्भे स्वपदादिविधावित्युक्तेर्न दोषः। प्रत्याख्याने तु दोषः। कुत्वाभावाय पदत्वनिषेधप्रवृत्तेरावश्यकत्वात्। एतेन योगविभागसिद्धस्य क्वाचित्कत्वान्न दोष इत्यपास्तमिति भावः। पञ्चमीतियोगविभागादिति। पदादित्यस्य परशब्दान्वयेनासामर्थ्यादत्र समासप्राप्त्यभावः सौत्रः समास इति वक्तुमुचितम्। भाष्ये (न तेभ्यः प्रतिषेधइति) तेभ्यः परस्य सुबन्तं पदमिति पदत्वमाश्रित्यापि न प्रतिषेध इत्यर्थः। अत एव परमवाक्षु इत्यादावपि न दोषः। भाष्ये (पदादावेवेत्युच्यमानेपीति)। षष्ठीतत्पुरुषे ऽपि न सिध्यति कुत्वाभावाय पदत्वाभावस्यावश्यकत्वादित्यपेरर्थः। अयं बहुत्रेषि दोषो वार्त्तिकारम्भेपि उत्तरपदस्य भावेन निषेधाप्राप्त्या पदत्वसत्त्वेन षष्ठीतत्पुरुषेण षत्वनिषेधसामाञ्जस्येपि कुत्वप्राप्तेः। इदानीं प्रत्याख्यानप्रकारस्य गौरवदुर्ज्ञेयत्वाभ्यामयुक्तत्वं मनसि निधाय लाघवाय नञ्राहित्यपचनपाठमाह एवन्तर्हीति। नपदान्तविधाविति। पदान्तस्यानिमित्ते विधावित्यर्थः। नञ्पठितवार्त्तिकस्या-

इह तर्हि दधिसेचः सात्पदाद्योरिति पदादिलक्षणः षत्वप्रतिषेधो न प्राप्नोति । मा भूदेवं पदस्यादिः पदादिः पदादेर्नेति । कथं तर्हि । पदादादिः पदादिः पदादेर्नेत्येवं भविष्यति । नैवं शक्यम् । इहापि प्रसज्येत ऋक्षु वाक्षु कुमारीषु किशोरीष्विति । सात्प्रतिषेधो ज्ञापकः स्वादिषु पदत्वेन तेषां पदसंज्ञा न तेभ्यः प्रतिषेधो भवतीति । इह तर्हि बहुसेचौ बहुसेचः । बहुजयं प्रसयः । अत्र पदादादिः पदादिः पदादेर्नेत्युच्यमाने अपि न सिध्यति । एवं तर्हि उत्तरपदत्वे च पदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं भवतीति वक्ष्यामि । तन्नियमार्थं भविष्यति पदादिविधावेव न पदान्तविधाविति । कथं बहुसेचौ बहुसेचः । बहुच्पूर्वस्य च पदादिविधावेव न पदान्तविधाविति । द्वन्द्वे ऽन्त्यस्य * । द्वन्द्वे ऽन्त्यस्य लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् । वाक्स्रुक्त्वचम् । इहाभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति । सिचि जुसोऽप्रसङ्ग आकारप्रकरणात् * । सिचि जुसो ऽप्रसङ्गः । किं कारणम् । आकारप्रकरणात् । आत इति वर्तते तन्नियमार्थं भविष्यति । आत एव सिज्लुगन्तान्नान्यस्मात्सिज्लुगन्तादिति । इह च इति युष्मत्पुत्रो ददाति इत्यस्मत्पुत्रो ददातीत्यत्र प्रत्ययलक्षणेन युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावाविति वान्नावादयः प्राप्नुवन्ति । युष्मदस्मदोः स्थग्रहणात् * । स्थग्रहणं तत्र क्रियते तच्छ्रूयमाणविभक्तिविशेषणं विज्ञास्यते । अ-

---

पदादादिरिति । पञ्चमीतियोगविभागात्समासः । कथं बहुसेचाविति । समासाभावात्तोत्तरपदत्वे नापि पूर्वपदत्वम् । द्वन्द्वेन्त्यस्येति । उत्तरपदत्वे चेत्यनेनैव सिद्धे नियमार्थमिदमन्त्यस्यैवेति मध्यमपदस्यापि पूर्वपक्षापेक्षयोत्तरपदत्वसम्भवात्प्रत्ययलक्षणप्रतिषेधप्रसङ्गात् । मुख्ये तूत्तरपदे सम्भवति कथं मध्यमपदस्य ग्रहणं स्यादिति चिन्त्यमेतत् । आकारप्रकरणादिति । आकारस्य नियमार्थत्वेन प्रस्तावादित्यर्थः । अथ वाकारे प्रकरणदात इत्यत्र सिचः प्रकृतत्वादित्यर्थः । इति युष्मत्पुत्र इति । पदादुत्तरयोर्युष्मदस्मदोरादेशविधानादितिशब्दप्रयोगः । श्रूयमाणविभक्तिविशेषणमिति । षष्ठीचतुर्थीद्वितीयास्वित्येव सिद्धे स्थग्रहणे सत्ययमर्थो भवति तासु ये त्ववस्थिते युष्मदस्मदी इति श्रूयमाणासु चावस्थानं भवति न तु लुप्तासु लुप्तस्याभा-

---

व्यत्वेव प्रवृत्तिर्व्याख्यानादेतदेकफलत्वायेति बोध्यम् । एतावतापि बहुसेचावित्यस्यासिद्धिरिति शङ्कते कथं बहुसेचाविति । तदुपपादयति समासेति । एवञ्च नियमाप्राप्तौ प्रत्ययलक्षणेन पदत्वात् षत्वनिषेधवत् चोः कुः पदान्तस्येति कुत्वं स्यादिति भावः । पञ्चमीसमासेपि षत्वापत्तिरित्याह नापि पूर्वस्येति । भाष्ये ( बहुच्पूर्वस्य चेति ) । आद्यवार्त्तिकारम्भे तत्प्रत्याख्याने च सात्पदाद्योरित्यत्रेदं कार्यमिति गूढ आशयः । नपदान्तविधाविति प्रतिनिर्देशादुत्तरपदत्वे चेत्यस्य वार्त्तिकस्य ङ्मुडादिविधौ णत्वादिविधौ चाप्रवृत्तिरिति बोध्यम् । ङ्मुट्सूत्रस्थभाष्यन्स्वेतद्विरोधादुञ्ञ च पद इति सूत्रस्थभाष्यविरोधाच्च न लोपाविप्लुत्यस्व इति वार्त्तिकस्यभाष्यविरोधाच्चैकदेशयुक्तिरिति बोध्यम् । एवञ्च प्रत्याख्यानुकारेपि योगविभागस्य क्वाचित्कत्वेन ङ्मुडादिविषये न । इदमेव ध्वनयितुं प्रत्याख्यातमपि वार्त्तिकं पुनरक्षरान्तरेरुपात्तमित्याहुः । मुख्ये त्विति । उत्तरपदशब्दस्य समासचरमावयवे रूढेरिति भावः । रूढस्यैव ग्रहणमित्यतत्व्याख्यायकं

स्यान्यत्स्थग्रहणस्य प्रयोजनम् । किम् । सविभक्तिकस्य वान्नावादयो यथा स्युरिति । नैतदस्ति प्रयोजनम् । पदस्येति वर्तते । विभक्त्यन्तं च पदं तत्राऽन्तरेणापि स्थग्रहणं सविभक्तिकस्यैव भविष्यन्ति । भवेत्सिद्धं यत्र विभक्त्यन्तं पदं यत्र तु खलु विभक्तौ पदं तत्र न सिध्यति । ग्रामो वां दीयते ग्रामो नौ दीयते । सर्वग्रहणमपि प्रकृतमनुवर्तते तेन सविभक्तिकस्यैव भविष्यति । इह चक्षुष्कामं याजयाञ्चकारेति तिङ्ङतिङ इति तस्य च निघातस्तस्माच्चानिघातः प्राप्नोति । आमि लिलोपात्तस्य चानिघातस्तस्माच्च निघातः सिद्धो भविष्यति । अङ्गाधिकारे इटो विधिप्रतिषेधौ* । अङ्गाधिकारे इटो विधिप्रतिषेधौ न सिध्यतः । जिगमिष संविवृत्स । अङ्गस्येतीटो विधिप्रतिषेधौ न प्राप्नुतः । क्रमेर्दीर्घत्वं च * । किं च । इटश्च विधिप्रतिषेधौ । नेत्याह । अदेशे ऽयं च पठितः । क्रमेश्च दीर्घत्वम् । उत्क्राम संक्रामेति । इह

---

त्त्वासम्भवात् । अस्त्यन्यदिति । तिष्ठतिरहानावपि वर्तते यथा तपसि स्थितः तपो न जहातीत्यर्थः । तथा समये तिष्ठ सुग्रीवेति समयं मा हासीरित्यर्थः । तेन सति स्थग्रहणे तत्सहितयोः कार्यं विज्ञायते । अथ वा यथा रथस्थ आनीयतामिति सरथ आनीयते तथा षष्ठ्यादिसहितयोर्युष्मदस्मदोः कार्यं भवतीति विज्ञायते । पदस्येति वर्तत इति । केवलयोः पदत्वाभावात्तदवयवं पदं गृह्यत इति भावः । यत्र त्विति । अत्र हि ते एव पदे इति तयोरेवादेशप्रसङ्गः । सर्वग्रहणमपीति । अनेकाल्त्वात्सर्वादेशत्वे लब्धे सर्वग्रहणमनुवृत्तं षष्ठ्यन्तं विपरिणम्यमानं सर्वस्य पदस्य विभक्तिसहितस्य स्थानित्वमवगमयतीत्यर्थः । याजयाञ्चकारेति । परत्वात्तिबादिषु कृतेषु आम इति लुकि प्रत्ययलक्षणेन याजयामित्यस्य तिङन्तत्वमिति पूर्वः पक्षः । आमि लिलोपादिति । नाप्राप्तेषु तिबादिषु लुगारभ्यमाणस्तेषां बाधकः । अङ्गाधिकार इति । अङ्गस्येति स्वर्यते तेनाङ्गाधिकारविहितं यत्कार्यं तल्लुमता लुप्ते प्रत्यये न भवतीति सूत्रार्थे दोषोपन्यासः । जिगमिषेति । अतो हेरिति लुकि कृते गमेरिट् परस्मैपदेष्वितीड् न प्राप्नोति । संविवृत्सेति । न वृद्भ्यश्चतुर्भ्य इतीट्प्रतिषेधः । क्रमेरिति । कार्यसमीपे श्रूयमाणश्चकारः कार्यमेव समुच्चिनुयादित्यभिप्रायेण ।

---

वृत्तौ चेतीति तत्त्वम् । प्रत्याख्यानेपि न मध्यमस्य प्राप्तिः । मध्यसुबन्तस्यापि स्वादिपरत्वेन विशेषणाद् इति बोध्यम् । प्रस्तावादिति । आत इत्यस्यारम्भादित्यर्थः । सिच इति । अनेन विधित्वासंभवो दर्शितः । भाष्ये ( श्रूयमाणेति ) । श्रूयमाणस्वार्थकं विभक्तिविशेषणमित्यर्थः । तल्लाभोपायं दर्शयति षष्ठीत्यादि । अथवा यथारथेति । स्थशब्दः साहित्यवाचीति भावः । तदवयवमिति । बहुव्रीहिः युष्मदस्मदोरिति तद्घटितसमुदायं लाक्षणिकमिति भावः । मुख्यार्थे एवं पदसामानाधिकरण्ये संभवति किं लक्षणयेत्याह अत्र हीति । यद्यपि द्वितीयायां षष्ठ्याञ्च तयोः पदत्वासंभवेन तत्र लक्षणाया आवश्यकत्वेनान्यत्राप्येकरूपत्वाय लक्षणा युक्ता तथापि पदस्येत्यस्य मादुपधाया इत्यादावव्यवषष्ठीत्वस्य क्लृप्ततया पदावयवयोरित्यर्थ एवं स्यात्तत ईदृशलक्षणालाभः सर्वग्रहणसाध्य एवेत्याह सर्वग्रहणमिति । अनुदात्तं सर्वमित्यतः । ननु लावस्थायामेव अन्तरङ्गानपीतिं न्यायेन लुकि प्रत्ययलक्षणेनापि न तिङन्तत्वमत आह परत्वादिति । नाप्राप्तेष्विति । अन्तरङ्गानपीतिं न्यायादित्यपि बोध्यम् । इट्प्रतिषेध इत्यत्र न प्राप्नोतीत्यनुषङ्गः । दीर्घत्वम् । क्रमः परस्मैपदेष्विति । समुच्चिनुयादिति । तच्चासंभवतीति शेषः । इत्यभिप्रायेणेति । प्रश्न इत्यर्थः । भाष्ये तटस्थो ऽभिप्रायानभिज्ञ उत्तरयति । (इटश्चेति) । आचार्य आह नेत्याहेति । गमेरिड्विधिर्वृतस्तत्प्रतिषेधः क्रमेश्च दीर्घत्वं न सिध्यतीत्यर्थ इति भावः । अनन्तरोक्तातिव्याप्तेरुपक्रमोक्ताव्याप्तेश्चाङ्गाधिकारपर

किं चिदङ्गाधिकारे लुमता लुप्ते प्रत्ययलक्षणेन भवति किं चिच्चान्यत्र न भवति। यदि पुनर्न लुमता तस्मिन्नित्युच्यते। अथ नलुमता तस्मिन्नित्युच्यमाने किं सिद्धमेतद्भवति। इटो विधिप्रतिषेधौ क्रमेर्दीर्घत्वं च। बाढं सिद्धम्। न इटो विधिप्रतिषेधौ परस्मैपदेष्वित्युच्यते। कथं तर्हि। सकारादाविति तद्विशेषणं परस्मैपदग्रहणम्। न खल्वपि क्रमेर्दीर्घत्वं परस्मैपदेष्वित्युच्यते। कथं तर्हि। शितीति तद्विशेषणं परस्मैपदग्रहणम्। न लुमता तस्मिन्निति चेद्धनिणिङादेशास्तलोपे*। न लुमता तस्मिन्निति चेद्धनिणिङादेशास्तलोपे न सिध्यन्ति। अवधि भवता दस्युः। अगायि भवता ग्रामः। अध्यगायि भवता ऽनुवाकः। तलोपे कृते लुङीति हनिणिङादेशा न प्राप्नुवन्ति। नैष दोषः। न लुङीति हनिणिङादेशा उच्यन्ते। किं तर्हि। आर्धधातुकइति तद्विशेषणं लुङ्ग्रहणम्। इह च सर्वस्तोमः सर्वपृष्ठः सर्वस्य सुपीत्याद्युदात्तत्वं न प्राप्नोति। तच्चापि वक्तव्यम्। न वक्तव्यम्। न लुमताङ्गस्येत्येव सिद्धम्। कथम्। न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते। किं तर्हि। यो ऽसौ लुमता लुप्यते तस्मिन् यदङ्गं तस्य यत्कार्यं तन्न भवति। एवमपि सर्वस्वरो न सिध्यति। कर्तव्यो ऽत्र यत्नः॥

---

किं चेति। आदेश इति। कार्यस्य समुच्चेतव्यस्याभावात्सामर्थ्यात्प्रकृतिसमुच्चय इत्यर्थः। किंचिच्चेति। किञ्चित्कित्स्वराःन लुमता तस्मिन्निति। लुमता यो लुप्तः प्रत्ययस्तस्मिन् यत्कार्यमाङ्गमनाङ्गं वा तन्न भवतीत्यर्थः। अत्रय इत्यत्र स्वरो न भवति तद्धितस्यैव कितो ऽन्तोदात्तत्वविधानाल्लुकि कृते कार्यिणो ऽसत्वात्। प्रत्ययलक्षणं हि यदन्यस्य कार्यं तत्प्रत्ययलोपे ऽपि भवति न तु यत्प्रत्ययस्यैव कार्यं तदपि नहि वचनेनासतः कार्यं शक्यते प्रतिपादयितुम्। तद्विशेषणमिति। विशेषणत्वेनोपक्षीणत्वात्कार्यं प्रति निमित्तभावो नास्तीत्यर्थः। हनिणिङादेशा इति। लुका लुङो विषयत्वापहाराद्विषयसप्तम्याश्रयणे ऽप्यसिद्धिः। तद्विशेषणं लुङ्ग्रहणमिति। तेन लुङ्परेऽर्धधातुके आदेशविधानम्। न लुमतेति। अङ्गस्येत्यस्य स्वरितत्वाप्रतिज्ञानात्तत्र लुमता लुप्ते

---

त्वं न युज्यत इत्युपसंहरति। भाष्ये (इहेति)। ञ्नित्किस्वरा इति। इदमुपलक्षणम् अहर्दशातीत्यत्राप्सुपीति प्रतिषेधस्यापि। वस्तुतः किंचिच्चेत्यत्र किंचिन्पदेन रो ऽसुपीत्येव ञ्नित्स्वरविषये सौवरीणां सप्तमीनान्तवन्तसप्तमीत्वेन न लुमता तस्मिन्निति न्यासेपि वचनस्यावश्यकत्वादिति बोध्यम्। तस्मिन् यत्कार्यमिति। तस्मिन् परस्तन्निमित्तकं तत्प्रकृतिभूतस्य यत्कार्यमित्यर्थः। कित इत्युदाहरणभूतात्रय इत्यस्योभयपक्षे ऽप्यसिद्धेस्तत् परिहरति अत्रयइत्यत्रेति। यदन्यस्येति। प्रत्ययज्ञमित्येव सिद्धे लक्षणग्रहणसामर्थ्येन प्रत्ययनिमित्तकमेव न तु प्रत्ययस्यानिकमित्यर्थादिति भावः। युक्त्यन्तरमप्याह नहीति। षष्ठ्यर्थयोच्चारणरूपप्रसङ्गस्य वक्तुमशक्यत्वादिति भावः। अत एव नखनिर्भिन्न इत्यादावैसादृकं न। एवमसतः सत्तापि न वचनेन शक्येति बोध्यम। परस्मैपदपरसार्वधातुकत्वनिमित्तस्येड् इत्याद्यर्थे न दोष इत्याह विशेषण एवेति। एवञ्च लुप्तप्रत्ययनिमित्तकं तत्प्रकृतेस्तन्न कार्यमिति भावः। नन्वार्धधातुक इत्यादीनां विषयसप्तमीत्वात्पूर्वमेव तेषां प्रवृत्तेर्न प्रत्ययलक्षणापेक्षेत्यत आह लुकेति। एवञ्च विषयत्वज्ञानायावश्यं प्रत्ययलक्षणमाश्रयणीयन्तच्च न लुमता तस्मिन्निति न्यासे न प्राप्नोतीति भावः। लुङ्परे चिणीति। लुङ्परार्धधातुकविषये इत्यर्थ इति भावः। भाष्ये(तच्चापीति)न लुमता तस्मिन्निर्त्यतादित्यर्थः। लुप्ते प्रत्यये यदङ्गमिति।

अलोऽन्त्यात्पूर्व उपधा ॥ ६५ ॥ किमिदमल्ग्रहणमन्त्यविशेषणम् । एवं भवितुमर्हति । उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्संघातप्रतिषेधः * । उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्संघातस्य प्रतिषेधो वक्तव्यः । संघातस्योपधा संज्ञा प्राप्नोति । तत्र को दोषः। शासइदङ्हलोः। शिष्टात् शिष्टाम्। संघातस्येत्त्वं प्राप्नोति । यदि पुनरलन्त्यादित्युच्यते । एवमप्यन्त्यो ऽविशेषितो भवति । तत्र को दोषः । संघातादपि पूर्वस्योपधासंज्ञा प्रसज्येत । तत्र को दोषः । शास इद्ङ्हलोः। शिष्टः शिष्टवान्। शकारस्येत्त्वं प्रसज्येत । सूत्रं च भिद्यते। यथान्यासमेवास्तु । ननु चोक्तमुपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत् संघातप्रतिषेध इति । नैष दोषः । अन्त्यविज्ञानात्सिद्धम् । सिद्धमेतत् । कथम् । अलो ऽन्त्यस्य विधयो भवन्तीत्यस्य भविष्यति । अन्त्यविज्ञानात् सिद्धमिति चेन्नानर्थके ऽलोऽन्त्यविधिरनभ्यासविकारे *। अन्त्यविज्ञानात् सिद्धमिति चेत्तन्न। किं कारणम्। नानर्थके ऽलोन्त्यविधिरनभ्यासविकारे । अनर्थके ऽलोन्त्यस्य विधिर्नेत्येषा परिभाषा कर्त-

---

प्रत्यये यदङ्गं तस्य यत्कार्यं प्रत्ययाश्रयमाङ्गमनाङ्गं वा तन्न भवतीत्यर्थः । कर्तव्यो ऽत्र यत्न इति । सर्वशब्दार्थं वचनं कर्तव्यम् ॥ ६३ ॥ ६४ ॥

अलोऽन्त्यात् ॥ किमिदमिति । प्रथमा पञ्चमी वेति सन्देहात्प्रश्नः । एवमिति । प्रथमायामभिप्रेतायामसन्देहार्थमलित्येकवचनम् वक्तव्यं स्याद् अन्त्यादिति पञ्चमीसाहचर्याच्चाल इत्यपि पञ्चम्यन्तमिति भावः । अल्ग्रहणमिति । निर्दिश्यतेभिधीयते ऽनेनेति निर्देशः । यद्यन्त्य. प्रत्याय्यतइत्यर्थः । सङ्घातप्रतिषेध इति । पूर्वस्याविशेषितत्वात् समुदायावयवसन्निधौ च समुदायस्यैव कार्यित्वादेकाज्झिर्वचनं इवेति भावः। अन्त्यविशेषणत्वे वर्णनिर्देशे जातिग्रहणेप्यल इत्युपादानसामर्थ्यात् सङ्ख्या विवक्ष्यते । यदि पुनरिति । अत्राप्यल्ग्रहणसामर्थ्यात् सङ्ख्या विवक्ष्यते पिबेरदन्तत्वप्रतिज्ञानाच्च लिङ्गादल्समुदायस्य संज्ञित्वे गुणस्य प्राप्तिरेव नास्ति किमदन्तत्वप्रतिज्ञानेन । सूत्रं चेति । अलन्त्यादिति पठ्यमान इत्यर्थः । अन्त्यविज्ञानादिति । उपधाया इति पठ्यन्त्यमलन्नीयते इत्यर्थः। अनभ्यासविकारइति । अभ्यासोनर्थकः शब्दस्य ह्या-

---

लुप्तप्रत्ययनिरूपिताङ्गसंज्ञकस्य यत्कार्यमित्यर्थः । उत्क्रामेत्यादौ तु परस्मैपदनिमित्ताङ्गसंज्ञकस्य न कार्यं किं तु शिदादिनिमित्ताङ्गसंज्ञकस्येति न दोषः । किं च परस्मैपदग्रहणस्य तङानाभावोपलक्षणत्वादपि न दोषः । आगात्रीत्यादौ तु न दोषः । लुङ्निमित्ताङ्गस्यवर्तमानत्वान्तस्य कार्याभावादिति बोध्यम् । भाष्ये एवमपीति । अङ्गाधिकारप्रतिनिर्देशाभावेपीत्यर्थः । वचनं कर्त्तव्यमिति सौत्रयः सप्तम्यस्तदन्तसप्तम्य इत्येनत् ॥ ६३॥ ६४ ॥

अलोन्त्यात् ॥ असन्देहार्थमिति । अन्त्यात्पूर्वोऽलित्येव वदेदिति भावः । अल्ग्रहणमन्त्यनिर्देश इत्यनयोः सामानाधिकरण्यमनुपपन्नमत आह अभिधीयतेऽनेनेति । अल्ग्रहणमन्त्यप्रत्यायकमित्यर्थः । घञजपः पुंसीति निर्देशशब्दस्य पुंस्त्वम् । प्राप्तिपूर्वकत्वात्प्रतिषेधस्य प्राप्तिमाह पूर्वस्येति । एकाजिति । यद्यप्यत्र समुदायसंज्ञया नावयवानामनुग्रहस्तथापि कदाचिदविशेषात्संघातस्यापि स्यादित्यनिष्टमात्रापादने भाष्यतात्पर्यमिति बोध्यम् । ननु संज्ञिवदवधिरपि कस्मात् जातिग्रहणप्राप्तः समुदायो न निषिध्यते ऽत आह अन्त्येति । संख्या विवक्ष्यत इति । ज्ञापकसिद्धस्यासार्वत्रिकत्वादत्रानेका व्यक्तिर्न गृह्यत इति बोध्यम् । संख्याविवक्षा तु उद्देश्यगतत्वादयुक्ता । पिबेरदन्तत्वेति । अल्समुदायस्य लघुत्वाभावादिति भावः। सूत्रन्तु उत्खादौ चरितार्थम् । कस्याचिदिकारस्याप्युपधात्वेन चिन्त्यमिदम् । शब्दस्य हीति । एकाज्धातुविषयमिदम् । अनेकाचु प्रथमस्यैकाचो

त्वा । किमविशेषेण । नेत्याह । अनभ्यासविकारे । अभ्यासविकारान् वर्जयित्वा । भृशामित् । अर्तिपिपर्त्योश्चेति । कान्येतस्याः परिभाषायाः प्रयोजनानि । प्रयोजनमव्यक्तानुकरणस्यात इतौ * । अव्यक्तानुकरणस्यात इताविसन्त्यस्य प्राप्नोति । अनर्थके ऽलोन्त्यविधिर्न भवतीति न दोषो भवति । नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति । नान्त्यस्य पररूपं भवतीति । यदयं नाम्रेडितस्यान्त्यस्य तु वेत्याह । घ्वसोरेद्धावभ्यासलोपश्च । घ्वसोरेद्धावभ्यासलोपश्चेत्यन्त्यस्य प्राप्नोति । अनर्थकेऽलो ऽन्त्यविधिर्नेति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । पुनर्लोपवचनसामर्थ्यात्सर्वस्य भविष्यति । अथ वा शिल्लोपः करिष्यते सशित्सर्वस्येति सर्वादेशो भविष्यति । स तर्हि शकारः कर्तव्यः । न कर्तव्यः । क्रियते न्यास एव । द्विशकारको निर्देशः घ्वसोरेद्धावभ्यासलोपश्चेति । अपि लोपो ऽको ऽनचि । तिष्ठति सूत्रम् । अन्यथा व्याख्यायते । अपि हलि

---

वृत्तिर्नार्थस्य । अव्यक्तानुकरणस्येति । अव्यक्तानुकरणस्य योच्छब्दस्तस्येतौ पररूपमिति सूत्रार्थः । यदयमिति । आम्रेडितस्य वेत्येव वक्तव्यं स्यात् । घ्वसोरिति । अनभ्यासविकारइति प्रतिषेधो रूपवत्यादेशे लोपस्तु नीरूपः । तथा च पस्पशायां लोपागमवर्णविकारज्ञ इति लोपविकारौ भेदेन निर्दिष्टौ । पुनर्लोपेति । लोपो यीत्यतो लोपग्रहण ऽनुवर्तमानइति भावः । तत्र घ्वसोरेद्धावभ्यासस्य चेति वक्तव्यं तत्र व्याख्यानादभ्यासस्य लोप एव भविष्यति न त्वेत्त्वं योगविभागो वा करिष्यते घ्वसोरेद्धौ । ततो ऽभ्यासस्येति तत्र च लोपो ऽनुवर्तिष्यते तत्र पुनर्लोपवचनात् सर्वापहारार्थादलोन्त्यस्येति बाध्यते । द्विशकारको निर्देश इति । लोपशब्दात् कृदन्तात्सञ्ज्ञिनार्थेनार्थवत्त्वाद्विभक्तौ कृतायां शकारः प्रतिनिर्दिश्यते तस्य चेत्संज्ञायां सत्यां सर्वादेशो लोपो भवति इत्संज्ञोपदेश एव प्रवर्तते तत्कार्ये तु प्रयोगइत्येष सिद्धान्तः । तिष्ठति सूत्रमिति । लक्ष्यलक्षणभावस्याविवक्षितत्वात्तिष्ठत् सूत्रमिति न कृतम् ।

---

ख्यत्वेनार्थवत्त्वशङ्कैव नेति बोध्यम् । एवञ्चोत्तरखण्ड एवार्थवानिति भावः । अव्यक्तानुकरणस्येति । अच्छब्दान्तस्याव्यक्तानुकरणस्येत्यर्थे संपूर्णस्याच्छब्दस्य पररूपानापत्तिरित्यतो वैयधिकरण्यमुक्तम् । अव्यक्तानुकरणं योच्छब्द इति तु नार्थः । एकाचो नेति निषेधारम्भादित्यलम् । ननु विकल्पार्थं तदावश्यकमत आह नाम्रेडितस्येति । अन्त्यस्य पूर्वेण नित्ये पररूपे प्राप्ते इति शेषः । भेदेन निर्दिष्टाविति । यद्यप्येकदेशविकृतस्येत्यादौ लोपोपि विकारपदेनोच्यते तथापि व्याख्यानादेवात्रेदृशार्थावगतिरिति बोध्यम् । ननु लोपग्रहणाभावे घ्वसोरेद्धावभ्यासस्येत्युक्ते चकाराभावादन्यवचनाच्च प्रकृतासंबन्धे एत्वमेव स्यादत आह तत्र घ्वसोरित्यादि । ननु चेनानुवृत्तावपि लोपोऽभ्यासस्यैवेत्यत्र नियामकाभावात्पर्यायेण त्रयाणामप्येत्वलोपौ स्यातामत आह तत्र व्याख्यानादिति । आगन्तूनामन्ते निवेशेनाभ्यासस्य लोपसंनिहितत्वादिति भावः । नन्वभ्यासपदोत्तरश्चकारस्यान्यन्तरमेव समुच्चिनुयाद् न विधेयान्तरमिति एत्वमभ्यासस्यापि स्यादतः परिहारान्तरमाह योगविभागो वेति । तत्रेति । नत्वेत्त्वमित्यर्थः । योगविभागसामर्थ्यादिति भावः । सर्वापहारेति । लोप एव नावशेषः कस्य चिदित्यर्थादिति भावः । ननु लोपशब्दस्य संज्ञात्वेनानर्थक्यात्सुरेव न स्याद् उत्पत्तौ वा हल्ङ्यादिलोपाद् द्विशकारक इत्यनुपपन्नमत आह लोपशब्दादिति । पदस्य संयोगान्तभावादसन्देहाय च झलाञ्जशित्यत्र जश्त्ववत्संयोगान्तलोपसंयोगादिलोपौ नेति बोध्यम् । इत्संज्ञेति । धातुप्रातिपदिकप्रत्ययनिपातागमादेशानां हलन्त्यमितीत्संज्ञायामपि न दोषः । शस्य स्वरूपेणार्थवत्तया

लोप इत्यन्त्यस्य प्राप्नोति । अनर्थके ऽलोन्त्यविधिर्नेति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । अत एव लोपं वक्ष्यामि । तदनो ग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । अनाप्यक इति । तच्च प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । हलीत्येषा सप्तमी अनिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति । तस्मिन्निति निर्दिष्टे पूर्वस्येति । अत्र लोपो ऽभ्यासस्य । अन्त्यस्य प्राप्नोति । नानर्थके अलो ऽन्त्यविधिरिति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । अत्र ग्रहणसामर्थ्यात्सर्वस्य भविष्यति । अस्त्यन्यदत्रग्रहणस्य प्रयोजनम् । किम् । सन्नधिकारो ऽपेक्ष्यते । इह मा भूत् । दधौ ददौ । अन्तरेणाप्यत्रग्रहणं सन्नधिकारमपेक्षिष्यामहे । सस्तर्हि सकारादिरपेक्ष्यते सनि सकारादाविति । इह मा भूत् । जिज्ञपयिषतीति । अन्तरेणाप्यत्रग्रहणं सनं सकारादिमपेक्षिष्यामहे । प्रकृतयस्तर्ह्यपेक्ष्यन्ते एतासां प्रकृतीनां लोपो यथा स्यात् । इह मा भूत् । पिपक्षति यियक्षति । अन्तरेणाप्यत्रग्रहणमेताः प्रकृतीरपेक्षिष्यामहे । विषयस्तर्ह्यपेक्ष्यते । मुचो ऽकर्मकस्य गुणो वेति । इह मा भूत् । मुमुक्षति गामिति । अन्तरेणाप्यत्रग्रहणमेतं विषयमपेक्षिष्यामहे । कथम् । अकर्मकस्येत्युच्यते तत्र यत्रैवायं मुचिरकर्मकस्तत्रैव भविष्यति । तस्मान्नार्थो ऽनया परिभाषया नानर्थके ऽलोन्त्यविधिरिति । अलो ऽन्त्यात् पूर्वो ऽलुपधेति वा । अथवा व्यक्तमेव पठितव्यम् । अलो ऽन्त्यात्पूर्वो ऽलुपधासंज्ञो भवतीति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । अवचनाल्लोकविज्ञानात् सिद्धम् ॥ । अन्तरेणापि वचनं लोकविज्ञानात् सिद्धमे-

---

तत्रायमर्थस्तिष्ठति सूत्रं न प्रत्याख्यायते तत्तु अन्यथा व्याख्यायते । तत्रानचीत्यनेन हलीत्यस्यार्थो व्याख्यातः । आप्यक इत्यनुवृत्तिर्दर्शिता । अन एवेति । अनाप्यक इति सामान्येनाऽऽदेशं विधाय हलादौ तु तस्यैव लोपो विधीयत इत्यर्थः । येन नाव्यवधानमिति त्यदाद्यत्वेन व्यवधानमाश्रीयते । अत्रग्रहणसामर्थ्यादिति । मीमादीनामधिकारादेव सिद्धेरत्रग्रहणादयमर्थ आश्रीयते यो ऽभ्यासत्वेन निर्ज्ञातस्तस्य समग्रस्य लोपो

---

प्रातिपदिकत्वात् कुण्डिनच्च इव । उपदेश इति तु तत्र नानुवर्त्तत इति तत्र भाष्ये स्पष्टम् । उपदेश एवेति । अन्तरङ्गत्वादिति भावः । एतेन लोपविधानकाले शित्त्वाभावात्कथं सर्वादेश इत्यपास्तम् । कार्ये त्विति । अनेकाल्शिदित्यादौ । समीपेप्यवयवत्वारोपेण न दोष इति भावः । एकान्ता अनुबन्धा इति मुख्यपक्षे तु आद्यमेव समाधानमिति बोध्यम् । भाष्ये ( अन्यथाख्यायत इति ) । न तु तत्प्रत्याख्याय तत्स्थाने वचनान्तरं पठितमिति भूमितव्यमिति भावः । इत्यन्त्यस्येति । एवञ्च तेन हलोपे आभ्यामित्यासिद्धिरिति भावः । ननु मस्यानिकत्यदाद्यत्वेन व्यवधानान्नानो हलादिविभक्तिपरतेत्यत आह येन नेति । आप्परत्वेनेदमो विशेषणाच्चेत्यपि बोध्यम् । इदमिदो लोप इत्यर्थेप्यावश्यकम् । एवं च नलोपे द्वयोरकारयोः पररूपे सुपि चेति दीर्घे सिद्धमाभ्यामिति । अत्रग्रहणादिति । अत्र शब्देन पुनः सनः परामर्शात् सनि योऽभ्यासस्तदाक्रान्तस्य सर्वस्य लोप इत्यर्थ इति भावः । भाष्ये [ विषयमपेक्षिष्यामहे ] इति । यत्र मुचोऽकर्मकस्य गुणस्तत्राभ्यासस्य लोप इत्यर्थः । अकर्मकग्रहणमात्रानुवृत्तौ तु मुमुक्षते वत्सः स्वयमेवेत्यत्रापि स्यादिति भावः । विभाषा भवदिति वार्त्तिकेऽपि वस्येत्येव सिद्धे ऽवस्येति उच्चारणसामर्थ्यादलोन्त्यस्येति न प्रवर्त्तते

तव् । तद्यथा । लोके अमीषां ब्राह्मणानामन्त्यात्पूर्व आनीयतामित्युक्ते यथाजातीयको ऽन्त्यस्तथाजातीयको ऽन्त्यात्पूर्व आनीयते ॥

तस्मिन्निति निर्दिष्टे पूर्वस्य ॥ ६६ ॥ तस्मादित्युत्तरस्य ॥ ६७ ॥

किमुदाहरणम् । इह तावत् तस्मिन्निति निर्दिष्टे पूर्वस्येति इको यणचि । दध्यत्र । मध्वत्र । इह तस्मादित्युत्तरस्येति द्व्यन्तरुपसर्गेभ्यो ऽप ईत् । द्वीपम् अन्तरीपं समीपम् । अन्यथाजातीयकेन शब्देन निर्देशः क्रियते अन्यथाजातीयक उदाह्रियते । किं तर्ह्युदाहरणम् । इह तावत् तस्मिन्निति निर्दिष्टे पूर्वस्येति, तस्मिन्नणि च युष्माकास्माकाविति, तस्मादित्युत्तरस्येति, तस्माच्छसो नः पुंसीति । इदं चाप्युदाह-

न त्वलो ऽन्त्यस्येति । यथाजातीयकोऽन्त्य इति । एतच्च ब्रुवता पञ्चमीपक्ष एवाश्रितः । षष्ठीप्रथमयोरपि न दोषः । षष्ठीपक्षे निर्धारणे षष्ठी निर्धारणं च तुल्यजातीयस्य भवतीति अलां मध्ये यो ऽन्त्यो ऽल्तस्मात् पूर्व उपधासंज्ञ इत्यलेवोक्तान्न्यायात्प्रतीयते । प्रथमाबहुवचनपक्षे ऽप्ययमर्थः । अन्त्यात् पूर्वो ऽलुपधासंज्ञ इति । अल इति जातौ बहुवचनम् । अवधिमत्तुल्यजातीयश्चावधिरिति अलोन्त्यादिति विज्ञायते ॥ ६५ ॥

तस्मिन्निति ॥ किमुदाहरणमिति । इतिकरणस्य गौरित्ययमाहेत्यादौ स्वरूपपदार्थकत्वेन व्यवस्थापकत्वदर्शनात्प्रश्नः । दध्यत्रेति । यदि तस्मिन्नणि चेति तस्माच्छस इति चात्रैवैते परिभाषे उपस्थास्येतां तदा तत्रैव पूर्वग्रहणमुत्तरग्रहणं चाकरिष्येतामिति भावः । अत्र व्यवच्छेद्यमस्ति यौष्माकीणः अस्मभ्यं देहि आस्माकीन युष्मभ्यं दीयतामिति खञः परयोर्युष्मदस्मदोरादेशौ न भवतः । वृत्रानित्यत्र च पूर्वसवर्णदीर्घभूताच्छसः पूर्वस्य षकारस्य नत्वं न भवति । अथ शस इति स्थानषष्ठीति व्याख्यानात् षकारस्य न भवतीत्युच्यते एवमप्युच्चरत आनुपलभत इत्यादौ पूर्वसवर्णदीर्घात्पूर्वस्य शसो नत्वं व्यवच्छेद्यमेव । अन्यथाजातीयकेनेति । इतिकरणात् स्वरूपग्रहणेनैव भाव्यमिति भावः । थाला प्रकारमात्रमभिधीयते इति तद्वतो ऽभिधानाय जाती-

इति प्रत्याख्याता परिभाषा । एवञ्च अन्त्यविज्ञानात्सिद्धमित्यस्य स्थितत्वाद्वार्त्तिके वाशब्दप्रयोगस्तदाह अथवा व्यक्तमेवेति । एतच्चेति । अवधिनावधिमतो निर्णयं ब्रुवतेत्यर्थः । संयोगोपधेत्यादिव्यवहारास्तु गौणा इति भावः । षष्ठीप्रथमयोरपीति । दृष्टान्ते ऽमीषां ब्राह्मणानामित्युपाददता भगवता सूचितमिदम् । उक्तान्न्यायादिति । भाष्योक्तादित्यर्थः । जातौ बहुवचनमिति । भाष्यकृता जात्याख्यायामिति सूत्रप्रत्याख्यानादिदं चिन्त्यम् ॥ ६५ ॥

तस्मिन्निति ॥ स्वरूपपदार्थकत्वेनेति स्वरूपस्य तत्र विशेष्यत्वादिति । भावः । प्रश्न इति । तस्मिन्नणि चेत्यत्रैव वोतान्यत्रापीति प्रश्न इति भावः । तत्रैव पूर्वेति । ननु तस्मान्नुडचि, तस्मान्नुड्द्विहलः, तस्माच्छस इति सूत्रत्रये उत्तरग्रहणे विपरीतं गौरवमिति चेन्न । यतो द्विहलो नुड्विधायक नास्योपयोगः । तत्राङ्गाधिकारेण लिण्निमित्ताङ्गसंबन्धिदीर्घात्पूर्वस्य प्रत्यासत्त्या तदङ्गसंबन्धिनो ऽसंभवेन फलाभावात् । एवं तस्मान्नुडचीत्यत्रापि न दोषः । उत्तरपदाधिकारेण प्रत्यासत्त्या नञ्रूपपूर्वपदनिरूपितोत्तरपदस्यैव तेन नुड्विधानादिति भावः । तस्मिन्निति । परामृष्टस्याव्यवधानाय संबुध्यन्तमुदाहरति यौष्माकीणेति । षकारस्येति । तस्मादित्येतत्साहचर्याच्छस इति पञ्चमी शसा च सामानाधिकरण्यं शसवयवे लक्षणयेति भावः । मुख्यार्थे सामानाधिकरण्यासम्भवात् स्थान्याकाङ्क्षासत्त्वाच्च अवयवषष्ठीत्याशङ्कते अथेति । शस इति । स्थानषष्ठीत्यपाठ इति षष्ठीत्येव पाठः । आनित्यशब्दस्य शसि रूपम् । इति करणादिति । लोके कथं प्रधानस्य पदार्थविपर्यासकेतिना शब्दप्रधानत्वदर्शनादिति भावः । नन्वेकार्थं प्रत्ययद्वयोपादानं

रणम्। इको यणचि, द्व्यन्तरुपसर्गेभ्यो ऽप ईदिति। कथम्। सर्वनाम्नायं निर्देशः क्रियते। सर्वनाम च सामान्यवाची तत्र सामान्ये निर्दिष्टे विशेषा अप्युदाहरणानि भवन्ति। किं पुनः सामान्यं को विशेषः। गौः सामान्यं कृष्णो विशेषः। न तर्हीदानीं कृष्णः सामान्यं गौर्विशेषो भवति। भवति च। यदि तर्हि सामान्यमपि विशेषो विशेषोऽपि सामान्यं सामान्यविशेषौ न प्रकल्पेते। प्रकल्पेते च। कथम्। विवक्षातः। यदा ऽस्य गौः सामान्येन विवक्षितो भवति कृष्णो विशेषत्वेन तदा गौः सामान्यं कृष्णो विशेषः। यदा ऽस्य कृष्णः सामान्येन विवक्षितो भवति गौर्विशेषत्वेन तदा कृष्णः सामान्यम्। गौर्विशेषः। अपर आह। प्रकल्पेते च। कथम्। पितापुत्रवत्। तद्यथा। स एव कं चित्प्रति पिता भवति कं चित्प्रति

---

यट् प्रत्ययः कृतः। लौकिके प्रयोगे लाघवानादरप्रदर्शनाय प्रत्ययद्वयप्रयोगः। केवलेनापि जातीयरा प्रकारवान् गम्यत एव। इदं चाऽपीति सिद्धान्तवादी। इतिकरणोऽत्रार्थनिर्देशार्थ एव स्वं रूपमिति वचनात्स्वरूपग्रहणे प्राप्ते। सर्वनाम्ना ऽयमिति। सूत्रान्तरोपात्तस्य तस्मिन्नित्यस्य तस्मादित्यस्य च नैतदनुकरणं किं तर्हि सर्वनाम्ना निर्देश इत्यर्थः। एतेन यत्र सप्तम्यर्थनिर्देशः पञ्चम्यन्तनिर्देशश्च। तत्रोभयोरुपस्थानम्। विशेषा अपीति। अपिः संभावनायां न समुच्चये नहि विशेषपरित्यागे नेह शास्त्रे सामान्यमस्ति यदुदाहरणं स्यात् तस्मात्सर्वे विशेषा इहोदाहरणमित्यर्थः। सामान्यस्य सर्वविशेषेषु भावात्। किं पुनरिति। सामान्यविशेषभावस्याऽनवस्थानात्प्रश्नः। कदाचिद्दूराद्गोत्वमात्रग्रहणं पश्चात् कृष्णादिविशेषावगम. कदा चित्तु पूर्वं कृष्णादेर्ग्रहणं पश्चाद्गोत्वादेः। गौः सामान्यमिति। यद्विशेष्यं प्रधानं तत्सामान्यम्। यत्तु विशेषणत्वेन परोपकारितया निर्दिश्यते स विशेष इति तात्पर्यम्। इहापि तस्मिन्नित्यनेन सप्तम्यर्थसामान्यं निर्दिष्टमचि हलीत्यादयस्तु विशेषाः। पितापुत्रवदिति। जन्यजनकशक्ति-

---

व्यर्थमत आह थालेति। एवञ्च शब्देनेत्यनेन सामानाधिकरण्यानुपपत्तिर्जातीयस्तु तद्वति स्वभावादिति भावः। नन्वेवं जातीय एव प्रयुज्यतां किं थालेत्यत आह लौकिके इति। उभयोः प्रकारवद्वृत्तित्वेप्येवं वक्तुं शक्यमिति उक्तयत्नो वृथा। अत एव कस्य प्रयोग इति चिन्त्यम्। ननु दूषितस्यैव कथमुदाहरणत्वेन दानमत आह सिद्धान्तीति। अर्थनिर्देशार्थ एवेति। अन्यथा तस्मिन्निति शब्दे व्यवहिते इत्यर्थः स्यादिति भावः। नैतदनुकरणमिति। प्रागुक्तयुक्तेरिति भावः। सर्वनाम्नेति। सप्तम्यन्तार्थकसर्वनाम्नेत्यर्थः। सप्तमीत्वस्य सप्तम्यन्तार्थकत्वबोधनायानुवादिकेति भावः। इतिशब्दलभ्यमर्थमाह यत्र सप्तम्यर्थेति सप्तम्यर्थबोध इत्याद्यर्थः। अत एव तस्मान्नुडचीत्यादौ न प्रवृत्तिः। अचि इत्यस्य षष्ठ्यर्थत्वादिति भावः। सप्तमीपञ्चम्यर्थावधिकरणावधी। अयं पदोपस्थितिपक्षे ऽर्थो दर्शितः। पक्षान्तरेपि सप्तम्यन्तार्थे ऽव्यवहिते सतीत्यर्थो बोध्यः। भाष्ये (सामान्यवाचीति) बुद्धिस्थत्वेनैव तदादीनां बोधकतेति भावः। सामान्यम् अनिर्द्धारितविशेषम्। तस्मिन्नणि चेत्यादेरपि सप्तमीपञ्चमीविशेषत्वादित्याशयः। सामान्यस्य उक्तबुद्धिस्थत्वस्य। सर्वविशेषेषु भावात्। सत्त्वादित्यर्थः। उक्तमर्थमजानानस्य श्रोतृमित्यभिप्रायेणाह सामान्येति। तस्मिन्निनीत्यस्य तस्मिन्नणि चेत्यादिः कथं विशेषः तस्यापि स्वज्ञाविनिरूपितसामान्यत्वादिति अचीत्यस्याप्यकाराद्यपेक्षया सामान्यत्वादिति च प्रश्न इत्यपि बोध्यम्। ननु कथमनवस्थितिः पूर्वावगतं सामान्यं पश्चादवगतो विशेष इति व्यवस्थासंभवादत आह कदाचिदिति। परिच्छेद्यपरिच्छेदकभावो ऽनियत इत्यर्थः। एवं प्रकृतेप्यच्त्वादीनां बुद्धिस्थत्वेन परिच्छेदाद् बुद्धिस्थस्यापि तैः परिच्छेदादनिर्णय इति भावः। विशेष्यं प्रधानमिति। परिच्छेद्यमित्यर्थः। परोपकारितया परिच्छेदकत्वेन। एवं प्रकृतेपि तस्मिन्नित्यर्थस्य परिच्छेद्यत्वेन विवक्षणात्सामान्यत्वमचीत्यादीनां परिच्छेदकत्वविवक्षणाद्विशेषत्वमिति भावः। तदाह इहापीति। अयं भावः

पुत्रो भवति। एवमिहापि स एव कं चित्प्रति सामान्यं कं चित्प्रति विशेषः। एते खल्वपि नैर्देशिकानां वार्त्ततरका भवन्ति ये सर्वनाम्ना निर्देशाः क्रियन्ते। एतैर्हि बहुतरकं व्याप्यते। अथ किमर्थमुपसर्गनिर्देशः क्रियते। शब्दे सप्तम्या निर्दिष्टे पूर्वस्य कार्यं यथा स्यात् अर्थे मा भूत्। जनपदे अतिशायन इति। किं गतमेतदुपसर्गेण आहोस्विच्छब्दाधिक्यादर्थाधिक्यम्। गतमित्याह। कथम्। निरयं बहिर्भावे वर्तते। तद्यथा। निष्क्रान्तो देशाद् निर्देशो बहिर्देश इति गम्यते। शब्दश्च शब्दाद्बहिर्भूतः। अर्थो ऽबहिर्भूतः। अथ निर्दिष्टग्रहणं किमर्थम्।

---

द्वययोगवदेकस्यैव विशेषणविशेष्यशक्तिद्वययोगात्कदाचित्काचिच्छक्तिराश्रीयते सप्तमीनिर्दिष्टे पूर्वस्येत्येव कस्मान्नोच्यत इत्याह एते खल्वपीति नैर्देशिकानां निर्देशप्रयोजनानां मध्ये वार्त्ततरका युक्ततरका इत्यर्थः। भाष्यकारवचनप्रामाण्यादत्र तरप् प्रत्यय.। तमपा ह्यत्र भाव्यम्। एतैर्हीति। यदि हि सप्तमीनिर्दिष्ट इत्युच्यते तदा सप्तमीशब्देन यो निर्दिष्ट इति प्रतीयेतेति भावः। किमर्थमिति। किमर्थमुपसर्गयुक्तस्य धातोर्निर्देशः क्रियते तस्मिन्निति पूर्वस्येति कस्मान्नोच्यत इति भावः। न पुनर्दिष्ट इत्येवोच्यतामिति प्रश्नः केवलस्य दिशेर्दानार्थत्वादिहानुपयोगात्। शब्द इति। अन्तरेणाऽपि निर्दिष्टग्रहणं तस्मिन्निति पूर्वस्येत्येव निर्दिष्टत्वे लब्धे पुनर्निर्दिष्टशब्द उपादीयमानो बाह्यभावं गमयति शब्दाच्च बहिर्भूतः शब्द एव भवतीति। जनपद इति। तत्रायमर्थः स्याद् जनपदवाचिनि शब्दे परतश्चातुरर्थिकस्य लुब् भवतीति। अर्थेति। ननु प्रयोजनस्योक्तत्वात् पुनः प्रश्नानुपपत्तिः। अयं भावः। जनपदे लुबित्यत्रार्थेन पौर्वापर्याभावाज्जनपदे यः प्रत्यय उत्पन्नस्तस्य लुब् इति तथातिशायने वर्तमानात्तमबादय इत्यर्थनि-

---

सप्तम्यन्तार्थे इत्युक्ते कस्मिन्नित्याकाङ्क्षोदयाद् अचीत्याद्यर्थस्य परिच्छेदकत्वाद्विशेषत्वमेवेति। तदेवं पर्यायेण सामान्यविशेषभावमुपपाद्य द्वितीयविधया कृतप्रश्नं समाधातुं यौगपद्येनापि तमुपपादयितुमाह भाष्ये (पितेत्यादि) यथा पराशरात्मज वन्दे शुकतातं तपोनिधिमित्यत्र तथा राजपुरुषोऽश्व इत्यत्र पुरुषो राजापेक्षया विशेष्यः। अश्वापेक्षया विशेषणम्। एवं प्रकृते घञ्विनिरूपितसामान्यस्यापि तस्मिन्नणिषस्थस्य तस्मिन्नित्येतत्प्रति विशेषत्वमिति भावः। इत्याहेति। इत्यत आहेत्यर्थः। निर्देशप्रयोजनानामिति। बोधप्रयोजनकानां शब्दानां मध्ये इत्यर्थः। द्विवचनविभज्योपपदत्वाभावादाह भाष्यकारेति। परे तु नैर्देशिकानां मध्ये ऽन्येभ्यः शब्देभ्य इत्यध्याहृत्य विभज्योपपदे तरप्। अत एव नखल्वपि बहूनां प्रकर्षे तरपा भवितव्यमिति तरप्सूत्रस्थभाष्यस्याविरोध इत्याहुः। सप्तमीशब्देनेति। तथा च सप्तम्यां जनेर्ड इत्यादावेवेदमुपतिष्ठतेति भावः। किं च यत्र सप्तम्यन्तनिर्देश इत्यर्थे नेङ् वशि कृतीति सप्तमीनिर्देशसत्वात् परन्तु षष्ठ्यर्थे से इति भावः। सप्तमीनिर्दिष्ट इति सूत्रकरणेपि तदर्थरूपाविनिर्देश इत्यर्थे स एव दोषः। यथाश्रुतमेव कस्मान्न गृह्यत इत्यत आह न पुनारिति। अत एव किमर्थमुपसर्गनिर्देशो न दिष्ट इत्येवोच्येतेति नोक्तम्। अन्तरेणापीति। साकाङ्क्षतयोच्चारित इति पदाध्याहारादिति भावः। पुनर्निर्दिष्टेति। एवञ्च सप्तम्यन्तार्थे बहिर्भूते उपश्लिष्टस्य पूर्वस्येत्यर्थः। बहिर्भावस्य चावध्यपेक्षत्वादवधेश्च सूत्रोपात्तस्यैव ग्रहीतुमुचितत्वेन तस्य च शब्दात्मकत्वादवधिमानपि शब्द एवेति शब्दे सप्तमीनिर्दिष्टे पूर्वस्येति लभ्यत इति भावः। ननु प्रत्ययस्यार्थेन पौर्वापर्यासम्भवात् कथं जनपद इत्यत्रास्योपस्थानमत आह तत्रायमर्थः स्यादिति। लक्षणा स्यादिति भावः। निर्दिष्टग्रहणे तु यत्र मुख्यया वृत्या शब्दतात्पर्यको निर्देशस्तत्रास्योपस्थानमिति न दोष इति तात्पर्यकम्। अर्थेन पौर्वेति। तद्वाचकशब्दलक्षणायाञ्च न मानमिति भावः। अत्रार्थनिर्देशे च व्याख्यानमेव शरणम्। एवञ्चाथ किमर्थमित्यादिपूर्वपक्षसिद्धान्तावेकदेशिनाविति बोध्यम्। किञ्चार्थनिर्देशे जनपदे यः

निर्दिष्टग्रहणमानन्तर्यार्थम् * । निर्दिष्टग्रहणं क्रियते । आनन्तर्यार्थम् । आनन्तर्यमात्रे कार्यं यथा स्यात् । इको यणचि । दध्यत्र । इह मा भूत् । समिधौ । समिधः । दृषदौ । दृषदः । किमर्थं पुनरिदमुच्यते । तस्मिंस्तस्मादिति पूर्वोत्तरयोर्योगयोरविशेषान्नियमार्थं वचनं दध्युदकं पचत्योदनम् । तस्मिंस्तस्मादिति पूर्वोत्तरयोर्योगयोरविशेषान्नियमार्थो ऽयमारम्भः । ग्रामाद् देवदत्तः पूर्वः पर इति संदेहः । एवमिहापि दध्युदकं पचत्योदनम् । उभाविकौ उभावचौ । अचि पूर्वस्य अचि परस्येति संदेहः । तिङ्ङतिङ इति । अतिङः पूर्वस्य अतिङः परस्येति संदेहः । इष्यते चाचि पूर्वस्य स्यात् । अतिङश्च परस्येति । तच्चान्तरेण वचनं

---

देशेषूपस्थानं न भविष्यति । यदि चैतत्प्रयोजनं तदा तस्मिन्निति शब्दे पूर्वस्येति वक्तव्यम् । निर्दिष्टग्रहणमिति । पूर्वोक्तप्रयोजनाभावादिति भावः । निःशब्दश्च नैरन्तर्ये वर्तते दिशिश्चोच्चारणक्रियः तेन निरन्तरोच्चारिते कार्यं लभ्यते । समिधाविति । ननु संहितायामित्युच्यते न च व्यवहितमुपश्लिष्टं भवति । नैष दोषः । वर्णानां परः संनिकर्षः संहिता सा चात्रास्ति अचीति सत्सप्तमी विज्ञायते व्यवहिते ऽपि पूर्वशब्दो वर्तते इति यत्र विषये यथाभूत इक् संभवति अन्तरो व्यवहितो वा तथाभूतस्यैव यणादेशः स्यात् । किमर्थमिति । किं नियमार्थमथ षष्ठीप्रक्लृप्त्यर्थमिति प्रश्नः । पूर्वोत्तरयोरिति । कर्मणि षष्ठी योगः संबन्धः । तदयमर्थः । अच्युपश्लिष्टस्येको यणा भाव्यम् । यथा च परस्मिन् पूर्वं उपश्लिष्ट एवं पूर्वस्मिन्नपि पर । तिङ्ङतिङ इत्यत्रापि यथा तिङन्तात्परं तिङन्तं भवत्येवं पूर्वमपि तत्र षष्ठीप्रक्लृप्तिपक्षे षष्ठ्यनुवर्तयितव्येति गौरवप्रसङ्गान्नियमार्थमित्युक्तम् । योगयोरिति । युज्येते इति योगौ कर्मणि घञ् । अचीति सत्सप्तमीपक्षे ऽप्यनियमप्रसङ्गः । अचि पूर्वस्येति । उपपदविभक्तेः

---

प्रत्यय इत्यन्वये नियमप्रसङ्गाभावान्नियमफला परिभाषा नोपतिष्ठते इत्यपि । भाष्ये ( आनन्तर्यमात्रे इति ) न तु व्यवधाने इत्यर्थः । ननु संहितायामिति । निमित्तस्थानिनोरन्येनाव्यवधानं संहितेति भावः । उपश्लिष्ट इति । उप समीपे श्लिष्टोऽत्यन्तसमीप इति हि तदर्थः । नैष दोष इति । वर्णशून्यकालाभावः संहितेति भावः । एवञ्च सत्सप्तमीति । औपश्लेषिकाधिकरणत्वस्य व्यवहिते बाधात्सत्ता तु व्यवहितेपीति भावः । एवञ्च निर्दिष्टग्रहणमौपश्लेषिकाधिकरणसप्तम्यां तात्पर्यग्राहकमिति तात्पर्यम् । वस्तुत उपश्लेषोऽप्यल्पव्यवहितेऽस्त्येव । किंचिद् दूरस्थितेपि वृक्षमूले तिष्ठतीति कटव्यवधानेपि भूमौ शेते इति च व्यवहारात् । ननु व्यवहिते इको ऽचः पूर्वत्वाभावेन प्राप्त्यभावान्निर्दिष्टग्रहणं व्यर्थमत आह व्यवहितेपीति । मथुरायाः पूर्वं पाटलिपुत्रमित्यादिव्यवहारादिति भावः । यत्र विषय इति । लक्ष्यभेदेन लक्षणभेद इति भावः । वस्तुतः संहिताधिकारो न कर्त्तव्य इत्यभिप्रायकमिदं भाष्यं संहिताधिकारप्रत्याख्यानञ्च तत्सूत्रे भाष्ये स्पष्टम् । किमुदाहरणमित्यादिना सूत्रप्रयोजनस्योक्तत्वात्प्रश्नानुपपत्तिरत आह किं नियमार्थमित्यादि । ननु पूर्वोत्तरयोर्योगयोरिति भाष्यदर्शनेन पूर्वोत्तरयोरित्यस्य योगसमानाधिकरणत्वात्सापेक्षस्यासमर्थत्वेन योगाविशेष इति समासो न स्यादत आह कर्मणि षष्ठीति । क्रियांशः कारकांशे नित्यसापेक्षत्वेनाविरुद्धः समास इति भावः । पूर्वोत्तरयोर्योगयोरिति तु फलितार्थकथनम् । अच्युपश्लिष्टस्येति । औपश्लेषिके ऽधिकरणे सप्तमीति भावः । आद्यसूत्रोदाहरणं दध्युदकेति, द्वितीयसूत्रोदाहरणं पचत्योदनेति । ननु नियमपक्षात्षष्ठीप्रक्लृप्तिपक्षः प्रशस्तो ऽनुवाददोषाभावादत आह तत्र षष्ठीति । भाष्ये योगयोरिति द्विवचनोपपत्तये आह ( कर्मणीति ) युज्यमानयोः पूर्वपरयोरविशेषात् सम्बन्धाविशेषादित्यर्थः । वस्तुतस्तु व्यधिकरणे षष्ठ्यौ प्रतियोगिद्वित्वेन संबन्धद्वित्वाच्च द्विवचननिर्देश इति बोध्यम् । सत्सप्तमीपक्षेपीति । यस्य च भावेनेति सप्तमीति भावः । इदं चिन्त्यमित्याह उपपदविभक्तेरिति । कारकविभक्तिश्च कारकाधिकारपठितसंज्ञानिमित्तकविभक्तित्वम् ।

न सिध्यतीति नियमार्थं वचनम्। एवमर्थमिदमुच्यते। अस्ति प्रयोजनमेतत्। किं तर्हीति। अथ यत्रोभयं निर्दिश्यते किं तत्र पूर्वस्य कार्यं भवति आहो स्वित् परस्येति। उभयनिर्देशे विप्रतिषेधात्पञ्चमीनिर्देशः *। उभयनिर्देशे विप्रतिषेधात्पञ्चमीनिर्देशो भविष्यति। किं प्रयोजनम्। प्रयोजनमतो लसार्वधातुकानुदात्तत्वे *। वक्ष्यति तास्यादिभ्यो ऽनुदात्तत्वे सप्तमीनिर्देशो ऽभ्यस्तसिजर्थ इति। तस्मिन् क्रियमाणे तास्यादिभ्यः परस्य लसार्वधातुकस्य लसार्वधातुके परतस्तास्यादीनामिति सन्देहः। तास्यादिभ्यः परस्य लसार्वधातुकस्य। बहोरिष्ठादिनामादिलोपे *। बहोरुत्तरेषामिष्ठेमेयसामिष्ठेमेयःसु परतो बहोरिति सन्देहः। बहोरुत्तरेषामिष्ठेमेयशाम्। गोतो णित् *। गोतः परस्य सर्वनामस्थानस्य सर्वनामस्थाने परतो गोत इति संदेहः। गोतः परस्य सर्वनामस्थानस्य। रुदादिभ्यः सार्वधातुके *। रुदादिभ्यः परस्य सार्वधातुकस्य सार्वधातुके परतो रुदादीनामिति सन्देहः। रुदादिभ्यः परस्य सार्वधातुकस्य। आने मुगीदासः *। आस उत्तरस्यानस्याने परत आस इति संदेहः। आस उत्तरस्यानस्य। आमि सर्वनाम्नः सुट् *। सर्वनाम्न उत्तरस्याम आमि परतः सर्वनाम्न इति संदेहः,

---

कारकविभक्तिर्बलीयसीति न्यायादधिकरणसप्तमी कृता न तु दिग्योगलक्षणा पञ्चमी तत्र दध्युदकमित्यादौ पर्यायप्रसङ्गः। नहि युगपदेकस्य स्थानित्वं निमित्तत्वं चोपपद्यत इति नियमार्थं वचनं पूर्वस्यैवाऽनन्तरस्यैव भवतीति द्वयं स्थानेन क्रियते परनिवृत्तिर्व्यवहितनिवृत्तिश्च संदेहस्तूपक्रममात्रतयोपन्यस्तः। नहि संदेहादलक्षणमिति न्यायात् पर्यायप्रसङ्गात्। अथ यत्रेति। यथा बहोर्लोप इत्यत्र युगपदेकस्य कार्यित्वनिमित्तत्वासंभवात् प्रश्नः। विप्रतिषेधादिति। सूत्रपाठापेक्षया परस्य व्यवस्थापकत्वमित्यर्थः। किं प्रयोजनमिति। विभक्तिविशेषनिर्देशस्यानवकाशत्वाद्वक्ष्यमाणो ऽभिप्राय.। संदेह इति। संदेहाच्च पर्यायप्रसङ्गः। इष्ठेमेयःस्विति। तदा च बहुशब्दस्य लोपभूभावौ पर्यायेण स्याताम्। गोतो णिदिति। यदि गोशब्दस्य णित्त्वं स्यात्तदा तिष्ठति गौरि-

---

एतच्च सत्र च वीयत इति सूत्रे कैयटे स्पष्टम्। ननु दिग्योगेति। सत्सप्तम्या अप्युपलक्षणमिदम्। एतच्च श्नान्नलोप इत्यत्र .निरूपयिष्यामः। पर्यायस्यैवोपपादने बीजमाह नहि युगपादिति। स्थानित्वेन कार्यित्वेन प्राधान्यं विवक्ष्यत्वञ्च निमित्तत्वे च पारार्थ्येन गुणत्वं सत्त्वञ्च। तच्चोभयमेकदा एकस्य विरुद्धमिति भावः। ननु सन्देह इति भाष्योक्त्या शास्त्रस्य मूकत्वमित्याभातीत्यत आह संदेहस्त्विति। ननु कार्यकालत्वात्परिभाषयोः पौर्वापर्याभावात्कथं विप्रतिषेधात आह सूत्रपाठेति। अत एवाग्ने ङमोह्रस्वादिति त्रैपादिकमुदाहरणं सङ्गच्छते। तत्र हि कार्यकालपक्षाश्रयेणैव परिभाषाप्रवृत्तिरिति बोध्यम। विभक्तिविशेषनिर्देशस्यानवकाशत्वादिति। इदमुदाहरिष्यमाणोदाहरणविशेषापेक्षम्। अत एव ङसि घुडित्यत्र द्वयोरनवकाशत्वेपि न क्षतिः। भाष्ये ( वक्ष्यति तास्यादिभ्य इति ) तास्यनुदात्तेदिति सूत्रे अभ्यस्तसिजर्थ इति अभ्यस्तानामादिः आदिः ञ्णिच इति सूत्रयोर्लसार्वधातुक इति सप्तम्यन्तानुवृत्तिसिद्धये इत्यर्थः। ननु भाष्ये सर्वनामस्थानस्य गोत इति षष्ठीदर्शनात् णिदित्यनेना-

सर्वनाम्न उत्तरस्यामः । घेर्ङिताण् नद्याः * । नद्या उत्तरेषां ङितां ङित्सु परतो नद्या इति सन्देहः, । नद्या उत्तरेषां ङिताम् । याडापः * । आप उत्तरस्य ङितो ङिति परत आप इति संदेहः, आप उत्तरस्य ङिति । ङमो ह्रस्वादचि ङमुण् नित्यम् * । ङम उत्तरस्याऽचो ऽचि परतो ङम इति सन्देहः ङम उत्तरस्याचः । विभक्तिविशेषनिर्देशानवकाशत्वादविप्रतिषेधः * । विभक्तिविशेषनिर्देशस्यानवकाशत्वाद्युक्तो विप्रतिषेधः । सर्वत्रैवात्र कृतसामर्थ्या सप्तमी अकृतसामर्थ्या पञ्चमीति कृत्वा पञ्चमीनिर्देशो भविष्यति । यथार्थं वा षष्ठीनिर्देशः* । यथार्थं वा षष्ठीनिर्देशः कर्तव्यः । यत्र पूर्वस्य कार्यमिष्यते तत्र पूर्वस्य षष्ठी कर्तव्या । यत्र परस्य कार्यमिष्यते तत्र परस्य षष्ठी कर्तव्या । स तर्हि तथा निर्देशः कर्तव्यः । न कर्तव्यः । अनेनैव प्रक्लृप्तिर्भविष्यति । तस्मिन्निति निर्दिष्टे पूर्वस्य षष्ठी तस्मादित्युत्तरस्य षष्ठीति । तत्तर्हि षष्ठीग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । षष्ठी स्थानेयोगेति । प्रकल्पकमिति चेन्नियमाभावः * । प्रकल्पकमिति चेन्नियमस्याभावः । उक्तं चैतन्नियमार्थो ऽयमारम्भ इति । प्रत्ययविधौ खल्वपि पञ्चम्यः प्रकल्पिकाः स्युः । तत्र को दोषः । गुप्ति-

---

त्यत्र वचनसामर्थ्यादनङ्गस्यापि वृद्धिः स्यात् । ङमो ह्रस्वादिति । ङमो ङमुडागमे सति कुर्वन्नास्ते इत्यत्र णत्वप्रसङ्गः । पदस्य चैको नकारो ऽन्तो न तु द्वाविति णत्वनिषेधो नास्ति । विभक्तीति । पूर्वोपात्तेषु सूत्रेषु सप्तमीनिर्देशस्य क्वचित् पूर्वार्थत्वात् क्वचिदुत्तरार्थत्वात् सावकाशत्वम् । पञ्चमी तु निरवकाशेति परस्य कार्यित्वं बोधयिष्यतीति भावः । यथार्थं वेति । यथाविषयमित्यर्थः । प्रदेशेषु कार्यिणः षष्ठ्यैव निर्देष्टव्याः । प्रकल्पकमिति चेदिति । यत्र षष्ठी नास्ति तत्र तस्याः प्रक्लृप्तिः क्रियते यत्र षष्ठ्यस्ति इको यणचीत्यादौ तत्रानेन नियमो न क्रियते नहि व्यापारद्वयमुपपद्यते
यत्र षष्ठ्यस्ति इको यणचीत्यादौ तत्रानेन नियमो न क्रियते नहि व्यापारद्वयमुपपद्यते

---

न्वयो न स्यादत आह णित्वमिति । भावप्रधानो निर्देश इति भावः । गोतो णिदयेको दोषस्तत्राह तिष्ठनीत्यादि । पदस्य चैक इति । व्यक्तिपक्षइदं व्यक्तिपक्षेप्येवंविधप्रयोगसाधनार्थेवं व्याख्यानामिति भावः । यद्वा ऽन्तशब्दस्यावयववाचित्वेनेदृशे विषये जातिग्रहणासम्भव एवत्याहुः । ङसि धुडित्यादावुभयोरप्यनवकाशत्वादाह पूर्वोपात्तेष्विति । बहोरिति पञ्चमी अचरितार्था अत एवेत्रग्रादिषु षष्ठी । अत एव भूच बहोरिति पृथङ्निर्देशश्चरितार्थः । गोत इत्यादौ सर्वनामस्थाने इति सप्तमी पूर्वत्र चरितार्था गोशब्दस्य णित्ववैयर्थ्यञ्च । तिष्ठति गौरित्यत्र गोशब्दं प्रति तिष्ठतेरनङ्गत्वान्न दोषः । रुदादिभ्यः सार्वधातुक इति लिङः सलोप इत्यादौ चरितार्थम् । तत्र हि सार्वधातुके विद्यमानस्य सस्य लोप इत्यर्थः । आमि सर्वनाम्न इत्यामीति चेत्तत्र इत्यत्र सावकाशम् । ङम इति सूत्रे ऽचीति मय उञ इति सूत्रे चरितार्थम् । भाष्ये [ पञ्चमीनिर्देशो भविष्यती ]त्यस्य बलवान्स्वार्थे एव भविष्यतीत्यर्थः । सप्तमी तु षष्ठ्यर्थे इति भावः । भाष्ये एकदेशी प्रौढयाह । [ यथार्थं वेति । तत्र अर्थशब्दो न प्रयोजनादिवाचीत्याह यथा विषयमिति । प्रदेशेष्विति । प्रागुक्तेष्वित्यर्थः । भाष्ये [ पूर्वस्य षष्ठीति ] । पूर्वबोधकपदस्य षष्ठ्यन्तस्योच्चारणं कार्यमित्यर्थः । एवंचोभयोच्चारणे गौरवमित्येकदेश्युक्तिरियम् । तत्र तत्र सप्तम्यन्तपञ्चम्यन्तयोर्द्वयोः सपाठगौरवे मन्वेतर एकदेशी आह स तर्हीति । स एकदेशी प्रौढ्यैवाह । [ न कर्तव्यः ] । अनेनैवेति ।

ञ्किद्भ्यः सन् । गुप्तिञ्किद्भ्य इत्येषा पञ्चमी सन्निति प्रथमायाः षष्ठीं प्रकल्पयेव । तस्मादित्युत्तरस्येति । अस्तु । कश्चिदन्य आदेशः प्रतिनिर्दिश्यते । तत्राऽऽन्तर्यतः सनः सन्नेव भविष्यति । नैवं शक्यम् । इत्संज्ञा न प्रकल्पेत । उपदेशइतीत्संज्ञोच्यते। प्रकृतिविकाराऽव्यवस्था च*। प्रकृतिविकारयोश्च व्यवस्था न प्रकल्पते इको यणचि अचीत्येषा सप्तमी यणिति प्रथमायाः षष्ठीं प्रकल्पयेत् तस्मिन्निति निर्दिष्टे पूर्वस्येति। सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्गः*। सप्तमीपञ्चम्योश्च भावादुभयत्रैव षष्ठी प्राप्नोति । तास्यादिभ्य इत्येषा पञ्चमी लसार्वधातुकइत्यस्याः सप्तम्याः षष्ठीं प्रकल्पयेत् । तस्मादित्युत्तरस्येति । तथा लसार्वधातुकइत्येषा सप्तमी तास्यादिभ्य इति पञ्चम्याः षष्ठीं प्रकल्पयेत् तस्मिन्निति निर्दिष्टे पूर्वस्येति । तत्र को दोषः । तत्रोभयकार्यप्रसङ्गः । तत्र उभयोः कार्यं प्राप्नोति । नैष दोषः । यत्तावदुच्यते । प्रकल्पमिति चेन्नियमाभाव इति । मा भून्नियमः । सप्तमीनिर्दिष्टे पूर्वस्य षष्ठी प्रकल्प्यते पञ्चमीनिर्दिष्टे परस्य । यावता सप्तमीनिर्दिष्टे पूर्वस्य षष्ठी प्रकल्प्यते पञ्चमीनिर्दिष्टे परस्य नोत्सहते सप्तमीनिर्दिष्टे परस्य कार्यं भवितुं नापि पञ्चमीनिर्दिष्टे पूर्वस्य । यदप्युच्यते प्रत्ययविधौ पञ्चम्यः प्रकल्पिकाः स्युरिति । सन्तु प्रकल्पिकाः । ननु चोक्तं गुप्तिञ्किद्भ्यः सनित्येषा पञ्चमी सन्निति प्रथमायाः षष्ठीं प्रकल्पयेत् तस्मादित्युत्तरस्येति । परिहृतमेतत् । न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते तत्रान्तर्यतः सनः सन्नेव भविष्यति । ननु चोक्तं नैवं शक्यमित्संज्ञा न प्रकल्पेत उपदेशइति इत्संज्ञोच्यते । स्यादेष दोषो

---

येन षष्ठीप्रक्लृप्तिस्तस्या नियमश्चेति भावः । इत्संज्ञेति । आदेशस्योपदेशाभावात्तस्येत्संज्ञा न सिध्यतीत्यर्थः । स्थानी चोत्पत्तिकालएवं विवृत्त्यभिमुखतया प्रतिपन्न इति स्थानिन्यपीत्संज्ञा नास्ति । यणिति प्रथमाया इति । ततश्चैकः स्थाने यण् न लभ्यते इको ऽप्यन्ये आदेशः स्याद्यणो ऽप्यन्य इत्यभिमता स्थान्यादेशभावव्यवस्था न स्यात् । उभयकार्यप्रसङ्ग इति । विरोधाभावाद्यौगपद्येनोभयोः कार्यं प्राप्नोति । मा भून्नियम इति । षष्ठीप्रक्लृप्त्यैव तत्फलस्य लब्धत्वादिति भावः । यत्र षष्ठी नास्ति तत्रासौ प्रकल्प्यते । यत्र त्वस्ति इको यणचीति तत्रापि पूर्वस्यैव षष्ठी न परस्येति प्रकल्प्यते । कृता-

---

षष्ठीपक्षानुवृत्तिगौरवादयमेकदेशी । उभयोः प्रकल्पकत्ववारणाय परस्यानवकाशत्वे चावश्यके इति च । निर्दिष्टे पूर्वस्य षष्ठीति । पूर्वस्य कार्यित्वप्रतिपादनयोग्या षष्ठी तद्बोधकपदे भवतीत्यर्थः । एवमुत्तरस्येति । नहीति । आवृत्तिप्रसङ्गादिति भावः । इतर एकदेशी उपदेश इति हलन्त्यमित्यत्रानुवर्तत इति मत्वाह इत्संज्ञेति । तद्व्याचष्ट उपदेशाभावादीति । स्थानेन्तरतमपरिभाषया ऽनुमीयमानत्वेनादेशस्योच्चारणाभावादित्यर्थः । ननु स्थानिन्येव तस्याः प्रवृत्तेरनुमीयमानादेशो निरनुबन्धक एवेत्यत आह स्थानी चेति । यदा धातोः प्रत्ययस्तदानीमेवादेशो भवेदिति नेत्संज्ञापि प्रतीक्षते । यत्र कार्यं तत्रेत्संज्ञेति प्रयोग एवेत्संज्ञेत्यभिमानः । एकदेशयुक्तित्वादत्र नात्यन्तं निर्भरः कार्य इति बोध्यम् । ततश्चेति । पूर्वस्य विधीयमानो यणपि पूर्व एवेति तत्रापि षष्ठीकल्पनमिति भावः । विरोधाभावादीति । स्थानिभेदादित्यर्थः । अत एव विप्रतिषेधाप्रवृत्तिः । यद्यपि कार्यित्वनिमित्तत्वे युगपद्विरुद्धे तथाप्येकदेशयुक्तित्वान्नात्यन्तं निर्भरः कार्य इति बोध्यम् । यत्र त्वस्तीति । तस्मिन्नितिसूत्रस्य बहुविषयत्वलाभाय विषयभेदेन भेदात् क्वचित्पूर्वस्य

यदीत्संज्ञा आदेशं प्रतीक्षेत । तत्र खलु कृतायामित्सञ्ज्ञायां लोपे च कृते आदेशो भविष्यति । उपदेश इति हीत्संज्ञोच्यते । अथ वा नानुत्पन्ने सनि प्रक्लृप्त्या भवितव्यं यदा चोत्पन्नः सन् तदा कृतसामर्थ्या पञ्चमीति कृत्वा प्रक्लृप्तिर्न भाविष्यति । यदप्युच्यते प्रकृतिविकाराव्यवस्था चेति । अत्राऽपि प्रकृतौ षष्ठी इक इति विकृतौ प्रथमा यणिति । यत्र च नाम सौत्री षष्ठी नास्ति तत्र प्रक्लृप्त्या भवितव्यम् । अथ वाऽस्तु तावदिको यणिति यत्र नाम सौत्री षष्ठी । यदि चेदानीमचीत्येषा सप्तमी यणिति प्रथमायाः षष्ठीं प्रकल्पयेत् तस्मिन्निति निर्दिष्टे पूर्वस्येति । अस्तु । न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते । तत्राऽऽन्तर्यतो यणो यणेव भविष्यति । यदप्युच्यत सप्तमी पञ्चम्योश्च भावादुभयत्र षष्ठीप्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्ग इति । नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति नोभे युगपत्प्रकल्पिके भवत इति । यदयमेकः पूर्वपरयोरिति पूर्वपरग्रहणं करोति। तस्मिन्निति निर्दिष्टे पूर्वस्य ॥ तस्मादित्युत्तरस्य ॥

---

यामित्संज्ञायामिति । सूत्रएवोच्चारितस्य इत्संज्ञेति प्रयोगे सशब्द एव सन्नित्कार्यं लभत इत्यर्थः । अथवेति । परत्वविशिष्टस्य सन उत्पादने उपक्षयात् प्रवृत्त्यन्तराभावान्नास्ति पञ्चम्याः प्रकल्पकत्वमित्यर्थः । प्रकृतौ षष्ठीति । इको यणचीति श्रुतयोरेव स्थान्यादेशभावोपपादनान्नास्ति षष्ठीप्रकल्पनम् । अपेक्षाया अभावादित्यर्थः । यदयमिति । यद्युभयनिर्देशात्परस्परषष्ठीप्रकल्पने सति ग्रहणकवाक्याद्वाक्यान्तरमनुमीयते तास्यादिभ्यो लसार्वधातुकस्य लसार्वधातुके तास्यादीनामनुदात्तत्वं भवतीति तदादूगुण इत्यादावपि तथैव प्रक्लृप्तिर्भविष्यतीति किं पूर्वपरयोरित्यनेनेत्यर्थः । तत्र परत्वानवकाशत्वाभ्यां नियमपक्षवत् षष्ठीप्रकल्पनपक्षे व्यवस्था । दीर्घाच्छे तुग् भवतीत्यत्र षष्ठीस्थाने व्यत्ययेन पञ्चमीति व्याख्यानात् सुराच्छायेत्यादौ ज्ञापकाद्दीर्घस्यैव तुग् भवति न तु च्छस्य ॥ ६६।६७ ॥

---

षष्ठीतिविधिपरं क्वचिन्नियमपरमित्यर्थः । सूत्रएवेति । षष्ठीप्रक्लृप्तेः प्रागेव परत्वादन्तरङ्गत्वाच्च उपदेशोत्तरकाले सूत्र एवेत्संज्ञा । कार्यन्तु प्रयोग एवेति भावः । एवं च निरनुबन्धस्यैव प्रत्ययस्येन विधानात्तत्रादेशस्य कुतः सानुबन्धकतेति तात्पर्यम् । भाष्ये [ उपदेश इति हीत्सञ्ज्ञोच्यतइति ]। एवं च त्वदुक्तिर्व्याहतेति भावः । हलन्त्यसूत्रे उपदेशपदासम्बन्ध एवेति यत्सूत्रे वक्ष्यमाणपक्षेण्याह अथवेति । परत्वविशिष्टस्येति । अनुत्पत्तौ धातोः परस्येति वक्तुमशक्यत्वादिति भावः । उपक्षयादिति । पञ्चम्या इति शेषः । प्रवृत्त्यन्तराभावादिति । पुनः प्रवृत्तौ मानाभावादिति भावः । अपेक्षाया इति श्रुतयोः संबन्धाभावे हि तस्मिन्नित्यनेन षष्ठीप्रक्लृप्त्यपेक्षा न च प्रकृते तथा लिङ्गाच्छ्रुतेर्बलीयस्त्वादित्यर्थः । भाष्ये ( ऽथवाऽस्तु तावदिति ) । प्रथमाषष्ठीनिर्देशसामर्थ्यात् प्रथमत इग्यणः स्थान्यादेशभावोस्तु तत एतत्सूत्रबलाद्यणः स्थानित्वेपि न क्षतिरित्यर्थः । भाष्ये यत्र नाम सौत्री षष्ठी यदि चेदानीमिति। यत्र सौत्री षष्ठ्यस्ति तत्रापीदानीं यदि प्रकल्पयेत्तर्ह्यस्तु प्रकल्पयत्वित्यर्थः । परन्त्विदं प्रौढ्या । अथवा नानुत्पन्ने सनीति प्रागुक्तन्यायाद् गाङ्कुटादिभ्य इत्यादौ षष्ठीप्रक्लृप्तावपि न दोषः । ङित्पदस्य धर्मपरत्वादिति बोध्यम् । यद्यपि युगपत् प्रक्लृप्तिर्विरोधान्न संभवति तथाप्येकदेशित्वादेव ज्ञापकेन परिहरति नोभे इत्यादिना । तथैव प्रक्लृप्तिरिति । अवर्णादचि अवर्णस्याचश्चैको गुणो भवतीत्यथ इति भावः । ननूभयोः

स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ ६८ ॥ रूपग्रहणं किमर्थं न स्वं शब्दस्याशब्दसंज्ञा भवतीत्येव रूपं शब्दस्य संज्ञा भविष्यति नह्यन्यत्स्वं शब्दस्यास्त्यन्यदतो रूपात् । एवं तर्हि सिद्धे सति यद्रूपग्रहणं करोति तज्ज्ञापयत्याचार्यः । अस्त्यन्यद्रूपात्स्वं शब्दस्येति । किं पुनस्तत् । अर्थः । किमेतस्य ज्ञापने प्रयोजनम् । अर्थवद्ग्रहणे नानर्थकस्येत्येषा परिभाषा न कर्तव्या भवति । किमर्थं पुनरि-

स्वं रूपं शब्द ॥ स्वरूपस्य पर्यायाणां तद्विशेषाणां च ग्रहणे प्राप्ते नियमार्था परिभाषेयमिति केचिदाहुः । अन्ये तु लिङ्गाभावाद्विध्यन्तरशेषभावाभावाच्च नेयं परिभाषा अपि तु संज्ञासूत्रमिदमिति प्रतिपन्नाः । देवदत्तादयश्च संज्ञाशब्दा नियमार्था इति सिद्धान्तः । सर्वार्थप्रत्यायनशक्तियुक्तो हि शब्दः सर्वशब्दप्रत्याय्यशक्तियुक्त पदार्थ इति व्यवहाराय नियमः क्रियते । रूपशब्देन चेहाग्निशब्दत्वादिकं शुकसारिकापुरुषोदीरितभिन्नशब्दव्यक्तिसमवेतं सामान्यमभिधीयते तत्र व्यक्तेः सामान्यं संज्ञा सामान्यस्य वा व्यक्तिरिति व्याख्याने कामचारः । व्यक्तिः कार्यं प्रतिपद्यमाना सामान्यप्रतिबद्धैव प्रतिपद्यते सामान्यमपि कार्यं प्रतिपद्यमानं व्यक्तिद्वारेणैव प्रतिपद्यत इति फले न कश्चिद्भेदः । रूपग्रहणमिति । प्रतीतावुपदेशानपेक्षत्वादन्तरङ्गत्वादहेय-

प्रकल्पकत्वाभावेपि एकस्य कस्य प्रकल्पकत्वमत आह तत्र परत्वेति । ङः सि धुडित्यादौ परत्वमुक्तेष्वनवकाशत्वमिति भावः । ननु दीर्घादिति सूत्रे पञ्चम्या अनवकाशत्वेन परत्वेन च षष्ठीप्रकल्पनं स्यादत आह दीर्घाच्छ इति । सुराच्छायेति । पदान्ते तुको वैकल्पिकत्वाच्चिन्त्यमिदम् । तुक्सहितं पाणिनिपाठमभिप्रेत्य तु ज्ञापकोपन्यासः युक्तश्च तथा पाठः । वैकल्पिकेषु भावानुष्ठानस्य धर्माधिक्यफलकत्वात् ॥ ६६ ॥ ६७ ॥

स्वं रूपम् ॥ स्वरूपस्येति । शब्देनार्थप्रतीतावर्थे केषांचित्कार्याणामसंभवात्तद्वाचकशब्दमात्रग्रहणादिति भावः । अन्ये त्विति । शब्दस्य स्वरूपमिह ग्राह्यत्वेन विधित्सितमिति नेह प्रदेशविशेषसमर्पकं लिङ्गमस्तीति भावः । ननु शब्दस्येत्येव लिङ्गं यत्र शब्दग्रहणं तत्र स्वरूपमेव ग्राह्यं नतु पर्यायादीत्यर्थः । तेन जनपदे अपत्यमित्यादौ नास्याः प्रवृत्तिरत आह विध्यन्तरेति । न हि स्वं रूपमित्यस्याग्नेर्ढगित्यादौ पञ्चम्यन्तेन सामानाधिकरण्येन वैयधिकरण्येन वा संबन्धः संभवतीति भावः । भाष्यकारोप्याह रूपं शब्दस्य संज्ञेतीत्ययमेव पक्षो युक्तः । ननु संज्ञापक्षे उभयगतिन्यायाद् एकस्यानेकार्थसंभवाच्चार्थस्यापि प्रतीतौ तत्र कार्यासंभवे ढगादयः पर्यायादिभ्योपि दुर्वारा इत्यत आह देवदत्तादयश्चेति । नियमार्थत्वमुपपादयति सर्वार्थेति । एकस्य सकलशब्दार्थात्मकस्फोटस्यैव सर्वबोधकत्वादिति भावः । शक्तियुक्त इति । शक्त्याश्रय इत्यर्थः । सर्वशब्दप्रत्याय्यशक्तिरिति । प्रत्याय्यत्वशक्तियुक्त इत्यर्थः । अनेन नियमद्वयं दर्शितम् । अनेन शब्देनायमेवार्थो ग्राह्यः । अयमर्थोऽनेनैव शब्देन बोधनीय इति चेति । वस्तुतस्तु सर्वेषां सर्वार्थवाचकत्वेपि तन्नास्मदादिज्ञानविषयः । सर्वार्थशब्दानामस्माकं विशिष्याज्ञानात् किं तु योगिनामेव तज्ज्ञानम् । एवञ्च शास्त्राधिकारिणोस्मदादीन्प्रति नियमार्थत्वं शास्त्रस्यासंभव्येव । इयं कथा तु सर्वस्य ब्रह्मरूपत्वकथावन्न व्यवहारोपयोगिनी । तस्मात्प्रकरणादस्यैवार्थस्य शास्त्रे उपस्थितौ अर्थान्नियमः फलित इति बोध्यम् । तत्र द्वितीयो नियमश्चिन्त्यः । आकारादीनां वृद्धिशब्दातिरिक्तैराकारादिशब्दैर्व्यवहारानापत्तेरिति केचित् । ननु रूपरूपिणोरत्र भेदाभावाच्छब्दस्येति षष्ठ्यनुपपन्ना संज्ञासंज्ञिसंबन्धश्चानुपपन्न इत्यत आह रूपेति । सामान्यलक्षणघटकानेकसमवेतत्वसिद्धये आह शुकेति । न च तत्रोच्चारणक्रियैव भिद्यते न शब्द इति वाच्यम् । ताल्वादिव्यापाररूपस्योच्चारणस्याश्रोतत्वेन शब्दश्रवणानन्तरं ज्ञायमानवक्तृविशेषानुमानानापत्तेः । उदात्तत्वादिविरुद्धधर्माध्यासाच्च भेदसिद्धेः । वर्णनिष्ठतया प्रतीयमामानां ध्वनिनिष्ठत्वकल्पने मानाभावाद् इति भावः । ननु प्रायेण सामानाधिकरण्यं संज्ञासंज्ञिनोर्दृष्टं न चेह तदित्यत आह तत्रेति । स्वं शब्दो व्यक्तिबोधक आत्मीयत्वेन । एवञ्च शब्दस्य तत्तज्जातिविशिष्टस्य स्वं व्यक्तिः रूपसामान्यसंज्ञकमित्यादिः पक्षः । शब्दस्य स्वं रूपमित्युद्दिश्य स्वमित्यनेन व्यक्तिसंज्ञकत्वं विधीयत इति द्विती-

दमुच्यते । शब्देनार्थगतेरर्थे कार्यस्यासंभवात् तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वरूपवचनम् । शब्देनोच्चारितेनार्थो गम्यते गामानय दध्यशानेति अर्थ आनीयते अर्थश्च भुज्यते । अर्थे कार्यस्यासम्भवादिह च व्याकरणे अर्थे कार्यस्यासंभवः । अग्नेर्ढगिति न शक्यते ऽङ्गारेभ्यः परो ढक् कर्तुम् । शब्देनार्थगतेरर्थे कार्यस्यासंभवाद् यावन्तस्तद्वाचिनः शब्दास्तावद्भ्यः सर्वेभ्य उत्पत्तिः प्राप्नोति । इष्यते च तस्मादेव स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति तद्वाचिनः संज्ञाप्रतिषे-

---

त्वादसाधारणत्वाच्च रूपमेव ग्रहीष्यते अर्थो हि सम्बन्धग्रहणमपेक्ष्यते अनुकरणशब्देषु नाऽर्थः प्रतीयते साधारणश्च पर्यायैरपि प्रत्यायनाद् न चार्थः संज्ञा शक्यते वक्तुं संज्ञित्वे चार्थस्य सूत्रमनर्थकमिति प्रश्नः । एवं तर्हीति । यत एवेह रूपग्रहणस्य व्यावर्त्यं नास्ति तत एव ज्ञापकं सति तु व्यावर्त्ये तत्रैवोपक्षयान्न ज्ञापकं स्यात् । अर्थवद्ग्रहण इति । अर्थयुक्तं रूपं गृह्यत इत्यर्थः । तेन काशे कुशे इत्यत्र शे इति प्रगृह्यसंज्ञा न भवति यत्र चार्थवता रूपेण शब्दो नाश्रीयते तत्रेदं नोपतिष्ठते यथा वर्णग्रहणेषु टेरेत्त्वे चेति पचेते इत्यत्रानर्थकस्यापि टेरेत्त्वं भवति । किमर्थमिति । वक्ष्यमाणो ऽभिप्रायः । शब्देनार्थगतेरिति । कात्यायनवचनप्रामाण्यादस्त्रियामिति प्रतिषेधस्यानित्यत्वाद्विभाषा गुणे ऽस्त्रियामिति पञ्चमी । इह योग्यतालक्षणेन संबन्धेन शब्दो ऽर्थं लोके प्रत्याययति व्याकरणे ऽपि पशुरपत्यं देवता प्राञ्च उदञ्चो भरता इत्यर्थ एव गृह्यते । अग्नेर्ढगित्यादौ त्वर्थस्य प्रत्ययेन पौर्वापर्यासंभवात् साहचर्यात्

---

यत्पक्षसंभवः । सामानाधिकरण्यस्य चोपपत्तिः । न चानयोः पक्षयोः फलं कश्चिद्विशेष इत्याह व्यक्तिरिति । व्यक्तिद्वारेणेति । सामान्यस्य ढगादिभिः साक्षात्पौर्वापर्यासंभवादिति भावः । रूपग्रहणं किमर्थमिति भाष्यस्य स्वशब्देनैव जातिग्राह्या व्यक्तिर्वा शब्दस्य स्वं स्वीया जातिर्व्यक्तिर्वा बोध्येत्यर्थो भविष्यति । सामानाधिकरण्यमेव संज्ञासंज्ञिनोरिति तु न नियमः । उञ इत्यादौ व्यभिचारादित्याशयः । शब्दस्य सूत्रोच्चारितस्य स्वं स्वीयं रूपं प्रयोगस्थं संज्ञीत्यर्थ इति केचित् । भाष्ये ( रूपशब्दस्य संज्ञेति ) अत्र संज्ञाशब्दो बोध्यपरः कर्मव्युत्पत्तेः । अन्यथा स्वशब्देनार्थग्रहणाय रूपग्रहणमित्युत्तरभाष्यासङ्गतेः । नह्यर्थः शब्दस्य संज्ञा किं तु बोध्य एवेति बोध्यम् । तत्रात्मीयवाचिना स्वशब्देन रूपस्यैव कथं परिग्रह इत्यत आह प्रतीताविति । उपदेशः संबन्धग्रहणम् । अन्तरङ्गत्वं प्रथमतः श्रोत्रेणोपस्थित्या । अहेयत्वमुपपादयति अनुकरणेति । शब्दमात्रतात्पर्यकोच्चारणस्यैवानुकरणत्वात् । अर्थस्य रूपतुल्यत्वमभ्युपेत्याप्याह न चार्थ इति । शब्दात्मिकानामेवावर्त्तिनीत्वेन संज्ञात्वात् तादृशसंज्ञया व्यवहाराच्चेति भावः । ननु स्वशब्दस्याभिधेयमित्येवार्थोऽस्त्वित्यत आह संज्ञित्वे चेति । लोकत एव सिद्धेरिति भावः । ज्ञापकमिति । स्वशब्देन बहिरङ्गस्याप्यर्थस्य ग्रहण इत्यर्थः । नन्वन्यस्य स्वीयस्य सत्त्वे तद्व्यावृत्त्यर्थं रूपग्रहणमिति अर्थो भाष्याल्लभ्यते एवञ्च शास्त्रे ऽर्थस्याग्रहणे कथमर्थवत्परिभाषासिद्धिरिति चेन्न । अन्यत् स्वीयमस्ति यतो ऽतस्तस्यापि शब्दबोध्यत्वबोधनार्थमुभयोपादानमिति भाष्याशयात् । एवञ्चाधिकसङ्ग्रहार्थं रूपग्रहणं रूपग्रहणेन चान्तरङ्गत्वादिन्यायबाधपूर्वकं स्वशब्देनार्थस्य बोध्यत्वं बोध्यत इति तात्पर्यम् । तत्रोभयानुग्रहाय सति सम्भवेऽर्थवतो रूपस्य ग्रहणम् असति तु केवलार्थस्य शुद्धस्य वा रूपस्य ग्रहणं तदाह यत्र चार्थवतेत्यादि । अर्थोपस्थापकेन रूपेणेत्यर्थः । अत एव भिन्नविभक्तिनिर्देशश्चारितार्थः । इह योग्यतेति । योग्यता बोधजनकतारूपा तया लक्ष्यते कल्प्यत इति योग्यता लक्षणः शक्तिः तस्या उभयाश्रयकत्वेन उभयाधीनत्वं लक्षणगुणयोगाद् गौण्या वृत्त्या वा सम्बन्धपदव्यवहार्यत्वमिति बोध्यम् । इत्यर्थएवेति । अर्थे कार्यस्य सम्भवादिति भावः । ननु संज्ञाविधायकस्य

धार्थं स्वरूपवचनम् । एवमर्थमिदमुच्यते ॥ न वा शब्दपूर्वको ह्यर्थे संप्रत्ययस्तस्मादर्थनिवृत्तिः * । न वा एतत्प्रयोजनमस्ति । किं कारणम् । शब्दपूर्वको ह्यर्थे संप्रत्ययः । अतश्च शब्दपूर्वकः । यो ऽपि ह्यसावाहूयते नाम्ना । नाम च यदानेन नोपलब्धं भवति तदा पृच्छति किं भवानाहेति । शब्दपूर्वकश्चार्थस्य संप्रत्ययः । इह च व्याकरणे शब्दे कार्यस्य संभवः। अर्थे ऽसंभवस्तस्मात्तदर्थनिवृत्तिर्भविष्यति । इदं तर्हि प्रयोजनम् । अशब्दसंज्ञेति वक्ष्यामीति । इह मा भूत् दा धा घ्वदाप् तरप्तमपौ घ इति । शब्दसंज्ञाप्रतिषेधानर्थक्यं वचनप्रामाण्यात् * । शब्दसंज्ञायाः प्रतिषेधो ऽनर्थकः शब्दसंज्ञायां स्वरूपविधिः कस्मान्न भवति । वचनप्रामाण्यात् । शब्दसंज्ञावचनसामर्थ्यात् । ननु च वचनप्रामाण्यात् संज्ञिनां संप्रत्ययः

---

सर्वस्य तद्वाचिनः संप्रत्ययः स्यादिति सूत्रारम्भः । संज्ञाप्रतिषेधार्थमिति । संज्ञाप्रत्यय उच्यते । नवेति । शब्द उपलब्धो ऽर्थं प्रत्याययति सत्तामात्रेण । चक्षुरादीनि तु सत्तामात्रेण विषयमवगमयन्ति अर्थस्य शास्त्रीये कार्ये क्वचिदयोग्यत्वात् प्रत्यासत्त्या स एवोपात्तः शब्दो ग्रहीष्यते न तु विप्रकृष्टं शब्दान्तरमिति भावः । शब्दपूर्वक इति । अस्योपलब्धुः शब्दपूर्वक इत्यर्थः । अशब्दसंज्ञेति । न्यायात् स्वरूपग्रहणे सिद्धे शब्दसंज्ञायां स्वरूपग्रहणं मा भूदित्येवमर्थमिदमित्यर्थः । अन्यथोपसर्गे घोः किरिति किप्रत्ययो घोर्धातोः शब्दार्थात् स्यान्न तु दाधाभ्यः । कुमारीघ इत्यत्र घरूपेति ह्रस्वः प्रसज्येत । ई हल्यघोरित्यत्र तु घशब्दस्याकारान्तत्वाभावाद्दाधामेव ग्रहणं सिध्यति । वचनप्रामाण्यादिति । प्रदेशेषु संज्ञिप्रत्यायनार्थं संज्ञाकरणमिति सामर्थ्यात् स्वरूपग्रहणं न भविष्यति । ननु चेति । उभयगतिरिह शास्त्रे दृष्टा सङ्ख्याकर्मकरणादिष्विति

---

तत्प्रतिषेधार्थकत्वमयुक्तमत आह संप्रत्ययइति । भावे ऽङिति भावः । नन्वर्थप्रत्ययस्य शब्दपूर्वकत्वेपि कथं स्वरूपस्यैव ग्रहणमत आह शब्दइति । तथा च प्रथमप्रतीतस्वरूपकारणादुच्चारितशब्दस्यैव ग्रहणं युक्तमिति भावः । शब्दपूर्वक इत्यस्य शब्दज्ञानपूर्वक इत्यर्थः । प्रत्यासत्त्येति । अर्थबोधानुकूलत्वेन ज्ञाते प्रथमप्रतीते शब्द एवार्थे ऽसम्भवं कार्यं न तु तत्पर्यायान्तरेष्विति भावः । अर्थे कार्यसम्भवे तु तस्यैव । एवञ्चोपस्थितस्यार्थस्य सर्वथा त्यागे मानाभावाद् अर्थवत्परिभाषापि सूत्रं विना सिद्धेति तात्पर्यम् । एवञ्चैतन्न्यायानुवादकमिदं सूत्रं मन्दमत्यनुग्रहार्थमिति बोध्यम् । ननु अर्थज्ञानोत्तरं परं प्रति तद्बोधनाय शब्दप्रयोग इति कथं शब्दपूर्वकत्वमर्थप्रतीतेरत आह अस्योपलब्धुरिति । श्रोतुरित्यर्थः । भाष्ये ( शब्दपूर्वको हीति ) । हिः प्रसिद्ध्यर्थः । श्रोतुः शब्दज्ञानपूर्वकोर्थप्रत्यय इति लोके प्रसिद्धमित्यर्थः । युक्त्यन्तरमप्याह अतश्चेति । एवञ्च शब्दस्यार्थप्रतीतौ कारणत्वादर्थे कार्यासम्भवे तद्बोधकारणत्वेनोपस्थिते शब्दे कार्यमिति भावः । इदानीं तत्तच्छब्दजन्यार्थबोधे प्रकारतया भासमानशब्द एव कार्यमर्थेऽसम्भवे इत्याह शब्दपूर्वकश्चेति । शब्दविशेषणकार्थविशेष्यकः प्रत्यय इत्यर्थः । न सोस्ति प्रत्ययो लोके यः शब्दानुगमादृते इति भावः । चकारेण चास्य युक्त्यन्तरत्वं सूचितम् । भाष्ये ( तस्मादर्थनिवृत्तिरिति ) । अर्थबोधकशब्दान्तरनिवृत्तिरित्यर्थः । फलान्तरं शङ्कते इदन्तर्हीति । एवमर्थमिति । निषेधप्रतियोगिज्ञानार्थं न्यायसिद्धस्यापि विध्यंशस्यानुवाद इत्यर्थः । किप्रत्ययइति । नचैवं पेषंवासवाहनाधिषु चेति धिग्रहणं व्यर्थं स्याद् न हि धाधातोः कि विना उदकस्य ध्युत्तरपदत्वं सम्भवति । तत्र हि कर्मण्यधिकरणे चेति तदुत्तरसूत्रेण किरिति वाच्यम्, उपलक्षणमिदं सानि मीमाघु, नेर्गदेत्यादौ घुधातोर्ग्रहणं स्यादिति बोध्यम् । कुमारीघइति । ननु अयं षष्ठीतत्पुरुषः कर्मधारयो वोभयथापि नात्र प्राप्तिः तत्र स्त्रियां समानाधिकरण इत्यनुवृत्तेरिति चेन्न । घोस्त्यस्याः सा घा कुमारी घा अस्य इति बहुव्रीहौ कुमारीघ इत्यादौ घादिषु

स्यात् स्वरूपग्रहणाच्च संज्ञायाः । एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति शब्दसंज्ञायां न स्वरूपविधिर्भवतीति । यदयं ष्णान्ता षडिति षकारान्तायाः संख्यायाः षट्संज्ञां शास्ति । इतरथा हि वचनप्रामाण्याच्च नकारान्तायाः संख्यायाः संप्रत्ययः स्यात् स्वरूपग्रहणाच्च षकारान्तायाः । नैतदस्ति ज्ञापकम् । नहि षकारान्ता संज्ञा । का तर्हि । डकारान्ता । असिद्धं जश्त्वं तस्यासिद्धत्वात् षकारान्ता । मन्त्राद्यर्थं तर्हीदं वक्तव्यम् । मन्त्र ऋचि यजुषीति यदुच्यते तन्मन्त्रशब्द ऋक्शब्दे यजुःशब्दे च मा भूत् । मन्त्राद्यर्थमिति चेच्छास्त्रसामर्थ्यादर्थगतेः सिद्धम् * । मन्त्राद्यर्थमिति चेत्तन्न । किं कारणम् । शास्त्रस्य सामर्थ्यादर्थस्य गतिर्भविष्यति । मन्त्रे ऋचि यजुषीति यदुच्यते मन्त्रशब्दे ऋक्शब्दे यजुश्शब्दे च तस्य कार्यस्य संभवो नास्तीति कृत्वा मन्त्रादिसहचरितो यो ऽर्थस्तस्य गतिर्भविष्यति साहचर्यात् । सित्तद्विशेषाणां वृक्षाद्यर्थम् * । सिन्निर्देशः कर्तव्यः । ततो वक्तव्यं तद्विशेषाणां ग्रहणं भवतीति । किं प्रयोजनम् । वृक्षाद्यर्थम् । विभाषा वृक्षमृगेति । प्लक्षन्यग्रोधं प्लक्षन्यग्रोधाः ।

---

इहापि स्वरूपस्य संज्ञिनश्च प्रदेशेषु ग्रहणं स्यात् । नहीति । षड्भ्यो लुगित्यादावुच्चारितेति भावः । का तर्हीति । तत्र डकारान्तः शब्द उच्चारितो जश्शसोश्च षकारान्ताल्लुक् कर्तव्यः । षण्णामिति च नुट् । असिद्धमिति । डकारान्तः श्रूयमाणोऽपि डत्वस्यासिद्धत्वात् षकारान्तस्य स्वरूपस्य ग्राहको भविष्यतीत्यर्थः । मन्त्राद्यर्थमिति । मन्त्रादयः शब्दस्य संज्ञा । शास्त्रसामर्थ्यादिति । देवसुम्नयोरित्यादौ क्यजादीनां निमित्तत्वेनोपादानाद्यजुषि ऋचि मन्त्र इति च स्वरूपं न ग्रहीष्यते न च तथाविधं लक्ष्यमस्तीति भावः । मन्त्रादिसहचरित इति । साहचर्यं च शब्दानुविद्धस्यैवार्थस्यावगमात् । सित्तद्विशेषाणामिति । वृक्षस् मृगस् इत्येवं निर्देशः कर्तव्यः । एतदपि न्यायसिद्धं तुल्यजातीयानां द्वन्द्व एकवद्भवतीति वक्ष्यते पर्यायाणां च युगपत्प्रयोगाभावात् सामान्यविशेषाणां चार्थाभावात् सामान्यशब्देन सर्वविशेषाणामाक्षेपाद्धववृक्षमिति द्वन्द्वा

---

ह्रस्वत्वं पुम्वद्भावाद्विप्रतिषेधेनेत्युक्तेः पुम्वत्वं बाधित्वा ह्रस्वप्राप्तिरत्याशयात् । घुसंज्ञाविधानस्य तर्हि कोऽवकाश इत्यत आह ईहलीति । घसंज्ञापि क्रिमेत्तिडव्ययघादित्यादौ चरितार्था तत्र हि तडन्तात्पराव्ययान्तप्रातिपदिकासम्भवादिति बोध्यम् । प्रदेशेष्विति । सर्वप्रदेशेष्वित्यर्थः । संज्ञावचनसामर्थ्यगम्यप्रकरणात् । प्रत्यासत्तिन्यायो बाध्यत इत्यभिप्रायः । न चेहल्यघां क्रिमेत्तिडव्ययघेऽत्र तयोश्चारितार्थ्यम् । तावन्मात्रफलकत्वे तत्रैव दाधाग्रहणं तरप्तमब्ग्रहणञ्च कुर्यादिति बोध्यम् । उभयगतिरिति । संज्ञावचनस्य प्रत्यासत्तेश्चानुग्रहायोभयगतिरिति भावः । सूत्रारम्भमभ्युपेत्येदम् । षड्भ्य इति । भाष्ये ( संज्ञाशब्दो ) बोधकः परः । न हि षकारान्तो बोधकशब्दस्तत्रोच्चारित इत्यर्थ इति भावः । षकारान्तादिति । जश्शसोर्लुक्ः प्राग् जश्त्वाभावात् । एवञ्च तदर्थं षट्संज्ञा विधीयत इति न ज्ञापकत्वमिति भावः । डकारान्त इति । षष उत्तरयोर्जश्शसोरिति स्वरूपग्रहणेन लुकि कार्ये जश्त्वमसिद्धमिति भावः । तथापि संज्ञासूत्रे डान्तोच्चारणात्षड्भ्य इत्यादौ डत्वासिद्धत्वेनैव निर्वाहः । संहितापाठेन डान्तस्य संज्ञात्वे षट्चतुर्भ्य इत्यत्र षत्वासिद्धत्वमावश्यकमिति तात्पर्यम् । ष्णान्तेत्यादिज्ञापकं शास्त्रीयशब्दसंज्ञायां न स्वरूपग्रहणमित्यर्थं बोधयितुं न तु शब्दपदार्थक इत्याशयेनाह । भाष्ये ( मन्त्राद्यर्थमिति ) । शब्दानुविद्धस्यैवेति । न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते, इति हर्युक्तेरिति भावः । तद्बोध्यत्वेन सहचरितत्वमित्यन्ये । चार्थाभावमुपपादयति

पित्पर्यायवचनस्य च स्वाद्यर्थम् *। पिन्निर्देशः कर्तव्यः। ततो वक्तव्यम्। पर्यायवचनस्य च तद्विशेषाणां च ग्रहणं भवति स्वस्य च रूपस्येति। किं प्रयोजनम्। स्वाद्यर्थम्। स्वे पुषः। स्वपोषं पुष्यति। रैपोषम्। धनपोषम्। अश्वपोषम्। गोपोषम्। जित्पर्यायवचनस्यैव राजाद्यर्थम् *। जिन्निर्देशः कर्तव्यः। ततो वक्तव्यम्। पर्यायवचनस्यैव ग्रहणं भवति। किं प्रयोजनम्। राजाद्यर्थम्। सभा राजामनुष्यपूर्वा। इनसभम्। ईश्वरसभम्। तस्यैव न भवति। राजसभा। तद्विशेषाणां च न भवति। पुष्पमित्रसभा चन्द्रगुप्तसभा। झित्तस्य च तद्विशेषाणां च मत्स्याद्यर्थम् *। झिन्निर्देशः कर्तव्यः। ततो वक्तव्यम्। तस्य च ग्रहणं भवति तद्विशेषाणां चेति। किं प्रयोजनम्। मत्स्याद्यर्थम्। पक्षिमत्स्यमृगान् हन्ति। मात्सिकः। तद्विशेषाणाम्। शाफरिकः। शाकुलिकः। पर्यायवचनानां न भवति। अजिह्मान् हन्ति अनिमिषान् हन्तीति। अस्यैकस्य पर्यायवचनस्येष्यते। मीनान् हन्ति मैनिकः। स्वरूपं शब्दस्याशब्दसंज्ञा॥

अणुदित्सवर्णस्य चाप्रत्ययः॥ ६६॥ अप्रत्यय इति किमर्थम्। सनाशंसभिक्ष उः। असान्प्रतिके। अत्यल्पमिदमुच्यते अप्रत्यय इति। अप्रत्ययादेशटित्किन्मित इति वक्तव्यम्। प्रत्यये उदाहृतम्। आदेशे इदम इश्। इतः। इह। टिति लविता लवितुम्। किति बभूव। मिति हे अनड्वन्। टितः परिहारः। आचार्यप्रवृत्तिर्ज्ञापयति न टिता सवर्णानां ग्रहणं भवतीति। यदयं गृहो ऽलिटि

भावाद्विशेषाणामेव प्लक्षन्यग्रोधादीनां ग्रहणं सिद्धम्। पित्पर्यायवचनस्य चेति। चशब्दात् स्वरूपस्य विशेषाणां च ग्रहणम्। इदं वाचनिकमेव। जित्पर्यायेति। इदं न्यायसिद्धमित्याहुः। अराजेति पर्युदास आश्रीयते तेन राजसदृशानां तत्पर्यायाणामेव ग्रहणं सिध्यति। झित्तस्य चेति। इदं वाचनिकमेव। मत्स्याद्यर्थमिति। मृगपक्षिणोस्तु पिन्निर्देशस्तत्फललाभार्थः कर्तव्यः। अस्यैकस्येति। इयमिष्टिरेव॥ ६८॥

अणुदित्॥ अप्रत्यय इति किमर्थमिति। किं यस्य प्रत्ययसंज्ञा विहिता तस्य प्रतिषेध उत यः प्रतीयते विधीयते इति यौगिकः प्रत्ययस्तस्यापीति प्रश्नः। इत इति। विशेषविहितत्वात् त्यदाद्यत्वं बाधित्वा त्रिमात्र आदेशः प्राप्नोति। बभूवेति। अनुना-

सामान्यशब्देनेति। एवञ्च पदार्थभेदाभावात्साहित्यरूपचार्थासम्भव इति भावः। पर्युदास इति। कश्चित्तु अराजेति च्छेदाभावात् किं च राजशब्दः शब्दपरः मनुष्यशब्दश्चार्थपर इति दुर्लभं स्यात् किं च एवम् अमनुष्यशब्देनापि मनुष्यपर्यायाणामेव ग्रहणं स्यादितीदं वाचनिकमेवेत्याह आद्यन्तौ विहाय मध्योपादाने ऽभिप्रायमाह मृगेति। एवञ्च मत्स्याद्यर्थमित्यादिशब्दप्रयोजनं चिन्त्यम्॥ ६८॥

अणुदित्॥ किं यस्येति नाक्षेपोयं किन्तु विशेषजिज्ञासार्थः उत यौगिक इत्यन्वयः। किमर्थमित्यत्रार्थशब्दोऽभिधेयपर इति तात्पर्यम्। नन्विदमः परत्वात् त्यदाद्यत्वे ऽन्तरङ्गत्वाच्च पररूपे ऽर्द्धतृतीयमात्रस्य सवर्णग्रहणेऽपि नान्तरतम आदेशः सम्भवतीति श्रुत एव भविष्यति। न च श्रुतापेक्षया दीर्घप्लुतयोरन्तरतमत्वात्ते एव भविष्यतः। ह्रस्वोच्चारणन्तु लाघवार्थं स्याद् इति वाच्यम्। एवन्तर्हि परत्वाद्धलि लोपे मात्रिकत्वान्मात्रिक एव भविष्यति तत्र नापीति वर्त्तते फलाभावादत आह विशेषेति। येन नामा-

दीर्घत्वं शास्ति । नैतदस्ति ज्ञापकम् । नियमार्थमेतत् स्यात् । ग्रहो ऽलिटि दीर्घ एवेति । यत्तर्हि वृतो वेति विभाषां शास्ति । सर्वेषामेव परिहारः । भाव्यमानेन सवर्णानां ग्रहणं नेत्येवं न भविष्यति । प्रत्यये भूयान् परिहारः । अनभिधानात्प्रत्ययः सवर्णान् न ग्रहीष्यति । यान् हि प्रत्ययः सवर्णान् गृह्णीयाद् न तैरर्थस्याभिधानं स्यात् । अनभिधानान्न भविष्यति । इदं तर्हि प्रयोजनम् । इह केचित्प्रतीयन्ते केचित्प्रत्याय्यन्ते । ह्रस्वाः प्रतीयन्ते । दीर्घाः प्रत्याय्यन्ते । यावच्च ब्रूते प्रत्याय्यमानेन सवर्णानां ग्रहणं नेति तावदप्रत्यय इति । कः पुनर्दीर्घः सवर्णग्रहणेन गृह्णीयात् । ह्रस्वम् । यत्नाधिक्यान्न भविष्यति । प्लुतं तर्हि गृह्णीयात् । अनण्त्वान्न गृही-

---

सिकः प्राप्नोति । अनड्वन्निति । आमपि पक्षे प्राप्नोति । यदयमिति । ग्रहेरेव दीर्घो नान्येभ्य इति नियमाभावादिति भावः । नियमार्थमिति । ग्रहेर्दीर्घ एव न ह्रस्व इत्येवमर्थं स्यादित्यर्थः । वृतो वेति । ननु ववरिथेति लिटि दीर्घो मा भूदित्येवमर्थमेतत् स्यादिति कथं ज्ञापकम् । एवं तर्हि वॄ इत्यत्रापि अलिटीत्यनुवर्तनाल्लिटि दीर्घनिषेधादन्यत्र उभयस्मिन् सिद्धे वाग्रहणं ज्ञापकमीट इटा ग्रहणाभावस्य । प्रत्यये भूयानिति । साधारणो ऽसाधारणश्चेत्यर्थः । प्रत्यय इत्यन्वर्था संज्ञा कृता येनार्थं प्रतियन्ति स प्रत्ययः । न च दीर्घप्लुतयोरर्थस्याभिधानमस्ति । ह्रस्वा इति । प्रतीयन्ते श्रूयन्ते उच्चार्यन्ते अणादिचोदनास्वित्यर्थः । दीर्घा इति ह्रस्वैर्गृहीतैरण्त्वाद्दीर्घाणां ग्रहणात् । तत्राष्टन आ विभक्तावित्यत्राकारो ग्राहको मा भूदित्यर्थः । यथैव हि अण्त्वादाकारो रपरत्वादिकार्यं प्रतिपद्यते तथा ग्राहकत्वमपि प्रतिपद्येतेति भावः । कथं पुनरप्रत्यय इत्यस्याप्रत्याय्यमान इत्यर्थः । अन्तर्भावितण्यर्थादेतेः कर्मण्यज्विधानात् । यत्नाधिक्यादिति ।

---

ष्ठिन्यायादिति भावः । शादीनाञ्चापदेशे एवत्संज्ञालोपयोरण्त्वेन सवर्णग्रहणप्रसक्तिः । अनुनासिक इति । पक्षे इति शेषः । नियमार्थं तत् स्यादत आह ग्रहेरेवेति । वृतो वेत्यनेन विरोधादिति भाव इति केचित् । वस्तुतस्तु यथा दिक्संख्ये इति नियमादप्राप्तसमासविधायकं तद्धितार्थेति एवं ग्रहेरेवेति नियमादप्राप्तदीर्घविध्यर्थं वृतो वेति स्यादिति चिन्त्यैषा व्याख्या । तस्माद्विधेयसङ्कोचस्यान्याय्यत्वात् तथा नियम इति भावः । ववरिथेति । ववर्थेति छन्दसि इडभावनिपातनाद् भाषायां क्रसृभृस्त्विति इट्प्रतिषेधो न । अलिट्येव वृतो वेत्यर्थाद् लिटि ह्रस्व एवेति भावः । वाग्रहणमिति । अत एव भाष्ये ( यद्विभाषां शास्ती )त्युक्तम् । भाष्ये ( भाव्यमानेनेति ) । इयञ्च जातिग्रहणप्राप्तं गुणाभेदकत्वप्राप्तं चाण्साधारण्येन प्राप्तं सवर्णग्रहणं वारयितुमावश्यकमिति भावः । साधारणश्चेति । भूयानित्युक्तिः नापूर्वा ऽनेकसमाधानाभिप्राया किन्तु सूत्रोक्ता प्रत्ययग्रहणमपेक्ष्येति भूयानिति प्रतिज्ञायैकपरिहारोपन्यासेपि न विरोध इति भावः । नन्वस्य च्वावित्यादावविवार्थाभिधानासमर्थस्यापि सवर्णस्य ग्रहणं स्यादत आह प्रत्ययइतीति । प्रत्ययविधौ सवर्णग्रहणे हि तेषामपि प्रत्ययत्वमेष्टव्यं तच्चान्वर्थत्वादसम्भवीति न तत्र सवर्णग्रहणमिति भावः । उच्चार्यन्त इति । उच्चारणं चात्र साक्षाच्छब्देन बोधनं विवक्षितम् अतो ऽणादिशब्दप्रतीयमानैकारादिभिः सवर्णानां ग्रहणं सिद्धम् । ह्रस्वैर्गृहीतैरिति० । प्रकृतसूत्रस्याणुपदेनेति शेषः । ननु प्रत्याहारसूत्रोपदिष्टा एवाण इति कथमाकारो ग्राहक इत्यत आह यथैवेति । न चाक्षरसमाम्नायिकाविषयकः प्रतिषेधः प्रत्याय्यमानविषयन्तु सवर्णग्रहणमिति वैपरीत्यं किन्न स्यादिति वाच्यम्, तथा सत्यकौ विधीयमानस्य पूर्वसवर्णदीर्घस्य कुमार्यावित्यादावप्राप्ते दीर्घाज्जसि चेति प्रतिषेधो ऽनर्थकः स्यादिति भावः । एवञ्च वर्णसमाम्नायपठितानामेव ग्राहकत्वबोधनार्थमप्रत्ययपदमिति तात्पर्यम् । उभयार्थम् । ह्रस्वदीर्घोभयविध्यर्थम् । एवं च

ष्यति। एवं तर्हि सिद्धे सति यदप्रत्यय इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा भाव्यमानेन सवर्णानां ग्रहणं नेति। किमर्थं पुनरिदमुच्यते। अण् सवर्णस्येति स्वराऽऽनुनासिक्यकालभेदात् *। अण् सवर्णस्येत्युच्यते। स्वरभेदादानुनासिक्यभेदात् कालभेदाच्चाण् सवर्णान्न गृह्णीयाद् इष्यते च ग्रहणं स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थमिदमुच्यते। अस्ति प्रयोजनमेतत्। किं तर्हीति। तत्र प्रत्याहारग्रहणे सवर्णाग्रहणमनुपदेशात् *। तत्र प्रत्याहारग्रहणे सवर्णानां ग्रहणं न प्राप्नोति अकस्सवर्णे दीर्घ इति। किं कारणम्। अनुपदेशात् यथाजातीयकानां संज्ञा कृता तथाजातीयकानां संप्रत्यायिका स्यात् ह्रस्वानां च क्रियते ह्रस्वानामेव संप्रत्यायिका स्याद् दीर्घाणां न स्यात्।

---

ननु च ह्रस्वोच्चारणे अर्धमात्रिकस्य मात्रिक एव स्यादिति दीर्घोच्चारणमुभयार्थं स्यात्। एतत्तु न निरूपितं न्याय्य एवात्र परिहारो विधास्यते। अनण्त्वादिति। अत्र हि सूत्रे प्रत्याहारसन्निविष्टा एव गृह्यन्ते स्वात्मनि क्रियाविरोधादनिष्पादाद् ग्रहणकशास्त्रान्तराभावाच्च अत्र सूत्रे अकारादिभिराकारादीनां ग्रहणासम्भवो ऽन्येषु प्रदेशेषु अनेन सूत्रेणाकारादिभिराकारादयो गृह्यमाणा अणादिकार्याणि लभन्ते। भाव्यमानेनेति। प्रतीयते विधीयतइति यौगिकस्यात्र प्रत्ययस्य ग्रहणमिति भावः। किमर्थं पुनरिति। आकृतिनिर्देशात् सिद्धमिति प्रश्नः। अण् सवर्णस्येति। उदिद्ग्रहणस्य विचारयिष्यमाणत्वादेवमुक्तम्। व्यक्तिनिर्देशे कालादिभिन्नस्य ग्रहणं न प्राप्नोतीति भावः। प्रत्याहारग्रहण इति। अकोचीति यत्र संज्ञया प्रत्यायनमिकारादीनां तत्र तैरन्येषां ग्रहणं न स्याद् यत्र स्वरूपेणोच्चार्यन्ते अस्य च्वौ यस्येति चेति च तत्रैवेषां ग्राहकत्वं स्यात्। अनुपदेशादिति। अनुच्चारणादित्यर्थः। नहि प्रत्याहारे दीर्घा उच्चारिता यतो ऽगादिचोदनाभिर्गृह्येरन्। अथ वा अकोचीत्यादावनुच्चारिता इकारादयो दीर्घाणां

---

यत्नाधिक्यमेवासिद्धमिति भावः। न्याय्य एवेति। अनण्त्वादित्ययमित्यर्थः। यदुक्तं नैषेवेति तत्राह अत्र हीति। स्वात्मनि क्रिया स्वस्मिन् प्रवृत्तिः। विरोधे हेतुमाह अनिष्पादादीति। अर्थाबोधादित्यर्थः। नन्वल्पविषयेणाप्रत्यय इत्यनेन कथं बहुविषये परिभाषार्थः शक्यते प्रतिपादयितुमत आह प्रतीयत इति। भाष्ये ज्ञापयतीत्यस्य योगेन बोधयतीत्यर्थः। अप्रत्यय इति च वाक्यभेदेन निषेधार्थमणित्यस्य चकनात्र संबन्धः। तेनोक्तसकलार्थलाभ इति भावः। वस्तुत एकदेशानुमतिद्वारा तां परिभाषां ज्ञापयतीति भाष्याक्षरार्थः। विधीयत इत्यर्थे प्रतीयत इत्यस्य प्रयोगादृष्ट्या कैयटोक्तं चिन्त्यम्। आकृतीति। प्रत्याहारसूत्रेष्वस्य च्वावित्यादिषु चेत्यर्थः। नैयमुदिद्विषया शङ्का चुत्वादिजातौ मानाभावेन तस्यावश्यकत्वादित्याशयेनाह उदिदिति। कालादिभिन्नस्येति। एको वर्णउदात्तत्वादिकं ध्वनिगतमिति पक्षेपि उपाधिभेदभिन्नत्वाद् ग्रहणं न सिध्यतीति भावः। अनन्ता अवर्णव्यक्तय इति पक्षे तु अग्रहणं स्पष्टमेवेति बोध्यम्। नन्वेतत्प्रयोजनमस्य च्वावित्यादौ वा अगादिप्रत्याहारेषु वा तत्राद्यं तत्रानुवृत्तिनिर्देश इत्यादिना दूषयिष्यति नान्त्य इत्याह प्रत्याहारग्रहणइत्यादि। प्रत्याहारग्रहणे सवर्णाग्रहणमिति वार्त्तिकस्य द्वेधार्थः। अक इत्यादावीकारादीनामगादिसंज्ञाभिर्ग्रहणं न प्राप्नोति अनुपदेशादक्षरसमाम्नाये तेषामनुच्चारणादित्यर्थः। तदाह यत्र संज्ञयेति। एकस्यैव युगपत्प्रत्याय्यप्रत्यायकत्वयोर्विरोधादित्यर्थः। यत्र स्वरूपेणेति। इदं चिन्त्यम्। व्यक्त्यानन्त्ये तस्याण्त्वाभावात्। तस्माद्यःस्वरूपेणोच्चार्यते अक इत्यादावकारादिस्तस्यैव ग्राहकत्वं स्यादिति वक्तुमुचितम्। प्रत्याहारे अइउणित्यादौ। भाष्ये [ यथाजातीयकानामिति ]। वर्णसमाम्नायपाठितानामित्यर्थः। संज्ञेति। आदिरन्त्यनेति कृताणादिसंज्ञेत्यर्थः। यद्वाऽणादि-

ननु च ह्रस्वाः प्रतीयमाना दीर्घान् संप्रत्याययिष्यन्ति, ह्रस्वसंप्रत्ययादिति चेदुच्चार्यमाणशब्दसंप्रत्यायकत्वाच्छब्दस्यावचनम् * । ह्रस्वसंप्रत्ययादिति चेदुच्चार्यमाणश्शब्दस्संप्रत्यायको भवति न संप्रतीयमानः । तद्यथा । ऋगित्युक्ते संपाठमात्रं गम्यते । एवं तर्हि वर्णपाठ एवोपदेशः करिष्यते । वर्णपाठ उपदेश इति चेदवरकालत्वात् परिभाषाया अनुपदेशः * । वर्णपाठक्रम उपदेश इति चेदवरकालत्वात् परिभाषाया अनुपदेशः । किं परा सूत्रात् क्रियत इत्यतो ऽवरकाला । नेत्याह । सर्वथा ऽवरकालैव । वर्णानामुपदेशस्तावत् । उपदेशोत्तरकालेत्संज्ञा । इत्संज्ञोत्तरकाल आदिरन्त्येन सहेतेति प्रत्याहारः । प्रत्याहारोत्तरकाला सवर्णसंज्ञा । सवर्णसंज्ञोत्तरकालमणुदित्सवर्णस्य चाप्रत्यय इति । सैषा ऽवरकाला

---

प्रत्यायका न स्युरित्यर्थः । ननु चेति । उच्चार्यमाणैरेव प्रत्यायकैर्भवितव्यमिति नास्ति । सन्निहितास्तु प्रत्यायकास्तच्च सन्निधानं यथायोगमस्त्येवेत्यर्थः । उच्चार्यमाणेति । प्रतीयमाना हि प्रधानं सत्कथमन्यप्रत्यायनं ऽङ्गभावं तदेव गच्छेदित्यर्थः । शब्दस्यावचनमिति । प्रतीयमानशब्देनान्यस्याप्रत्यायनमित्यर्थः । ऋगित्युक्त इति । यद्यपि प्रकरणवशाद्विशिष्टसन्निवेशापि ऋक्छब्देन ऋक् प्रत्याय्यते तथापि सा स्वार्थं न प्रत्याययतीत्यर्थः । एवं तर्हीति । अइउणिति प्रत्याहारपवाकारादिभिराकारादीनां ग्रहणात् तेषामप्यगादिसंज्ञाभिर्ग्रहणं भविष्यतीत्यर्थः । उपदेश इति । प्रत्यायनमित्यर्थः । करिष्यत इति । व्याख्यास्यते । अवरकालत्वादिति । निष्पन्नेष्वङ्गेष्वनयान्यत्रास्य च्वावित्यादौ सवर्णानां ग्रहणं भवति नाङ्गेषु नापि स्वात्मनि अनिष्पन्नत्वादिति

---

[विकारादिभिर्ह्रस्वैर्दीर्घाणामग्रहणं कुतो ऽनुपदेशादिकार्थीत्यावाविकारादानीमनुच्चारणादित्यर्थस्तत्राह अर्थेवेति । भाष्यस्वारस्यं स्वाद्यव्याख्यायामेव । उच्चार्यमाणैरेवेति । पुस्तकदर्शनादौ व्यभिचारादित्यर्थः । सन्निहिता इति । बुद्धिसंनिहिता इत्यर्थः । अय भावः, शब्दा उपस्थिता बोधं जनयन्ति उपस्थितिस्तु स्मृतिरूपा प्रत्यक्षरूपा च न त्वन्त्यैवेति नियमः । लिपिस्मारितपदैर्बोधानापत्तेरिति । सांनिधानमिति । प्रतीतिरित्यर्थः । यथायोगमुच्चारणेन संज्ञाया वेत्यर्थः । प्रतीयमाना हीति । यद्यप्युच्चारणे प्रधानमपि अर्थप्रतीतावङ्गभावं प्रतिपद्यते तथा प्युच्चारणकृतायास्तत्तत्प्रतीतिबिम्बविशिष्टस्फोटाभिव्यक्तेश्चिरस्थायितयोपपद्यते । शब्दज्ञानमात्रस्य तु न तदभिव्यञ्जकत्वं वक्ष्यमाणहेतोरिति भावः । अन्यस्येति । दीर्घादिरूपशब्दस्येत्यर्थः । भाष्ये ( ह्रस्वसंप्रत्ययादिति ) तृतीयातत्पुरुषः । ऋगित्युक्ते संपाठमात्रं गम्यते इति । एतेनोच्चारितानामेव प्रत्यायकत्वे रहसि पुस्तकमीक्षमाणस्य बोधानापत्तेर्वाचकज्ञानसामान्यस्यैव बोधे तन्त्रत्वेनेदमयुक्तमित्यपास्तम् । मानसजपस्थल इव तत्रापि स्वीयसूक्ष्मोच्चारणाद्बोधेनाक्षतेः । जपे हि मन्त्राणां चेस्वर्यानयनेन तत्तत्स्थानेषु उच्चावदिशोपलभ्यमानस्वरूपोदात्तत्वादेर्मात्राकालिकत्वादिरूपह्रस्वत्वादेश्च विनोच्चारणमनभिव्यक्तेः । यद्वा । लिपेरेव चेष्टादिवत्सङ्केतेन बोधकत्वम् अत एव लिपौ शब्दत्वभ्रमो बालानाम् । यद्वा । लिपावनादेः शब्दतादात्म्याध्यासाद्बोधकत्वम् । लिपौ शब्दत्वबाधज्ञानवतां पण्डितानामपि अन्तःकरणादावात्मत्वप्रत्यये भ्रमत्वं जानतामनादिसिद्धारोपेणैव व्यवहारवद्बोधोपि । ननु ऋगित्युक्ते तद्विशेषाप्रतीतेरर्थप्रतीतिसंभावनाया अप्यभावः । ऋक्त्वस्य वेदत्वस्य चार्थप्रतीतिजनकतानवच्छेदकत्वादत आह यद्यपीति । ऋक्शब्देन विशिष्टसन्निवेशापि ऋक प्रत्याय्यत इत्यन्वयः । यत्र सङ्केतादिवशाद् ऋगित्युक्ते ऽग्निमीलेपुरोहितमित्याद्यानुपूर्वीप्रकारेण बोधस्तत्रापि सा स्वार्थबोधनादिक्रियाकर्मत्वेन न प्रत्याययतीति भावः । प्रत्यायनमिति । तच्चैतत्सूत्रेणैवेति बोध्यम् । अनेन तत्प्रत्यायनमशक्यमित्याह । भाष्ये ( ऽवरकालत्वादिति ) परा सूत्रादिति । सूत्रात्प्रत्याहारसूत्रात्परा परकाला क्रियत इत्यर्थः । तेषामनादित्वादेषां पाणिनिकृतत्वादिति भावः । अवरकालैवेति । वाक्या-

उपदेशोत्तरकाला वर्णानामुत्पत्तौ निमित्तत्वाय कल्पयिष्यत इत्येतन्न । तस्मादुपदेशः कर्तव्यः । तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात् * । तत्रानुवृत्तिनिर्देशे सवर्णानां ग्रहणं न प्राप्नोति । अस्य च्वौ यस्येति च । किं कारणम् । अनण्त्वात्। नह्येते ऽणो ये ऽनुवृत्तिनिर्देशे । के तर्हि । ये ऽक्षरसमाम्नायमुपदिश्यन्ते । एवं तर्ह्यनण्त्वादनुवृत्तौ न अनुपदेशाच्च प्रत्याहारे न । उच्यते चेदमण् सवर्णान् गृह्णातीति तत्र वचनाद्भविष्यति । वचनाद्यत्र तन्नास्ति । नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किम्। ये एते प्रत्याहाराणामादितो वर्णास्तैः सवर्णानां ग्रहणं यथा स्यात् । एवं तर्हि सवर्णे ऽग्रहणमपरिभाष्यमाकृतिग्रहणात् *। सवर्णे ऽग्रहणमपरिभाष्यम् । कुतः, आकृतिग्रहणात् । अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति । तथेवर्णाकृतिस्तथोवर्णाकृतिः । ननु चान्या आकृतिकारस्यान्या ऽऽकारस्य च । अनन्यत्वाच्च * । अनन्याकृतिकारकारस्याकारस्य च । अने-

---

भावः । सर्वथेति । आर्थक्रमेणापि न शाब्दक्रमेण वेत्यर्थः । वर्णानामुत्पत्ताविति । अइउणित्यत्र इयमव वर्णानाकारादीनुत्पादयतीत्येतन्नास्ति । तस्मादिति । प्रत्याहारएव दीर्घप्लुता अपि पठनीया इत्यर्थः । तत्रानुवृत्तीति । व्यक्तिपक्षे सत्यपि सूत्रारम्भे स्वान्तरभेदसम्भवाद् ग्रहणं न सिध्यतीत्यर्थः । वचनादिति । अणसवृशोणिति ग्रहीष्यतइत्यर्थः । यत्रेति । अनन्तरोक्तमुभयं यत्र नास्ति अको ऽचोत्यादौ । अत्र ह्यनुबन्धेन चिह्नेन प्रत्याहारस्थ एव निर्दिष्ट इत्यण्त्वमुच्चारणं चास्ति । तत्राकार उच्चारित आदिरन्त्येन सहेतेति मध्यपातिनां स्वरूपस्य च ग्राहको ऽस्माच्च वचनात्सवर्णानामपीत्यर्थः । एवं व्यक्तिपक्षे सत्यपि सूत्रारम्भे नास्तीष्टसिद्धिराकृतिपक्षे तु सूत्रं न कर्तव्यमित्याह सवर्ण इति । प्रत्याहारे अनुवृत्तिनिर्देशे च सर्वत्र जातिरुपादिश्यते नान्तरीयकं व्यक्त्युच्चारणम् । अत्वं च ह्रस्वदीर्घप्लुतेषु विद्यते यथा गोत्वं कृशे गोपिण्डे स्थूले शुक्ले कृष्णे चेति भावः । ननु चान्येति । श्रुतिभेदाद्भेद इति मन्यमान-

---

र्थज्ञाने पदार्थज्ञानस्य कारणत्वादिति भावः । शाब्दक्रमोऽष्टाध्यायीक्रमः । प्रत्याहारोत्तरकाला सवर्णसंज्ञेति । नाज्झलावित्येतद्विषयनिर्णयोत्तरं तत्परिहारेण सवर्णपदशक्तिग्रहस्यैव व्यवहारोपयोगित्वादिति भावः । वर्णानामुत्पत्ताविति । प्रतीतावित्यर्थः । अक इत्यादावाद्यवर्णेष्वस्या एव प्रत्यायकत्वादध्याहारेण व्याचष्टे अइउणिति । उत्पादयतीति । प्रत्याहारे । अइउणित्यादौ । न च प्रत्याहारेषु तद्वाच्यवाच्ये लक्षणाङ्गीकारान्न दोषः । उक्तभाष्यरीत्या तद्वाच्यानां प्रत्यायकत्वाभावेन तेषामशक्तत्वेन लक्ष्यतावच्छेदकलक्ष्यामूलसंबन्धज्ञानयोर्दुरुपपादत्वात् । एवं प्रत्याहारेषु सूत्रप्रयोजनाभावमुक्त्वा अस्य च्वावित्यादावपि तमाह तत्रानुवृत्तिनिर्देशइति । भाष्ये वृत्तिवर्णसमाम्नायमनुगतस्तत्सदृशो ऽनुवृत्तिरकारादिस्तस्य निर्देशः स्वरूपेणोच्चारणमित्यर्थः । तत्र सवर्णग्रहणे हेतुमाह व्यक्तीति । अनन्ता व्यक्तय इति पक्षे इत्यर्थः । तदाह अवान्तरभेदेति । जात्यैकत्वेपि व्यक्तीनां परस्परं भेदसंभवादित्यर्थः । एका अवर्णव्यक्तिरिति पक्षे तु यद्यपि सिध्यति तथापि सोऽसङ्गतः । उदात्तादिविरुद्धधर्माध्यासात् । यदि तु ध्वनिनिष्ठास्ते तदा कत्वधत्वादिकमपि तन्निष्ठमस्तु । किं वर्णैर्नचेदनन्ता एवेति भावः । अनणो वचनादपि कथं ग्राहकत्वमत आह अण्सदृशइति । उभयम् । अनण्त्वमनुच्चारणञ्च । मध्यपातिनामिति । दृष्टान्तार्थम् । नास्तीष्टेति । यदि त्वइउणित्यादावत्वादिजातिनिर्देशादेषामण्त्वं प्रत्याहारग्रहणेषु च न दोषः स्वाद्यइत्यादिनिर्देशाच्चात्रैवार्थे लिङ्गमित्युच्यते तदा सूत्रमेव व्यर्थमित्याह आकृतीति । प्रत्याहारे अइउणित्यादिसूत्रे । अनुवृत्तिनिर्देशे । अस्य च्वावित्यादौ । उपदिश्यते उच्चार्यते प्रत्याय्यते वा । नान्त-

कान्तो ह्यनन्यत्वकरः * । यो ह्यनेकान्तेन भेदो नासावन्यत्वं करोति । तद्यथा । न यो गोश्च गोश्च भेदः सो ऽन्यत्वं करोति । यस्तु खलु गोश्चाश्वस्य च भेदः सोऽन्यत्वं करोति । अपर आह । सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणादनन्यत्वम् । सवर्णे ऽण्ग्रहणमपरिभाष्यम् । आकृतिग्रहणादनन्यत्वं भविष्यति । अनन्याकृतिरकारस्याकारस्य च । अनेकान्तो ह्यनन्यत्वकारः । यो ह्यनेकान्तेन भेदो नासावन्यत्वं करोति । तद्यथा । न यो गोश्च गोश्च भेदः सोन्यत्वं करोति यस्तु खलु गोश्चाश्वस्य च भेदः सोऽन्यत्वं करोति । तद्वच्च हल्ग्रहणेषु * । एवं च कृत्वा हल्ग्रहणेषु सिद्धं भवति । झलो झलि । अत्रा-

---

स्य प्रश्नः । अनन्यत्वाच्चेति । सत्यपि श्रुतिभेदे एकाकृतियोगो ऽस्त्येव यथा कृशे स्थूले ऽपि च गोपिण्डे गोत्वयोगः । यो हीति । अभेदस्यापि प्रत्यभिज्ञानात्सद्भाव इत्यर्थः । यस्त्विति । अत्रापि यदा प्राणी न हन्तव्य इति प्राणित्वेनाश्रयणं तदा अभेद एव गवाश्वरूपाश्रये तु भेद इति भावः । अष्टन आ विभक्तावित्यत्र तु यत्नाधिक्याद्दीर्घव्यक्तिसमवेतं सामान्यं गृह्यते । यथा पूर्ववया ब्राह्मणः प्रत्युत्थेय इति विशिष्टव्यक्तिस्थं ब्राह्मण्यमाश्रीयते । अपर आहेति । व्यक्तिरेव शब्दार्थः । जातिस्त्वशब्दार्थो ऽप्यभेदप्रत्ययहेतुरस्तीति सर्वथा व्यक्तीनामभेदाश्रयणादेकव्यक्तिनिर्देशे ऽपि सर्वव्यक्तीनां ग्रहणं सिध्यतीत्यर्थः । अत्र पक्षे आकृतिग्रहणमाकृतेरेकाकारप्रत्ययनिमित्तत्वेन प्रतिपत्तिरुच्यते । तद्वच्चेति । यथा ऽऽकृतिग्रहणादण्सु कार्यं सिध्यति तथा हल्ष्वपि आकृ-

---

तीयकमिति । जातः साक्षादुच्चारणासंभवात्तदुच्चारणम् । किं च जातौ कार्यान्वयस्य व्यक्तिं विनासाक्षादसंभवात्तदुच्चारणं तद्बोधनमित्यर्थः । तत्र दीर्घादिव्यक्त्याक्षेपे बीजमाह अस्त्वं चेति । प्रमाणक्रमेण दृष्टान्तमभिधाय गुणकृतभेदेप्याह शुक्लइति । श्रुतिः श्रवणोपलब्धिः । भेदाद्वेद इति । जातेरिति शेषः । सत्यपीति । श्रुतिभेदो हि व्यक्तिभेदसाधको नाकृतिभेदसाधक इति भावः । अत एव ह्रस्वोयमकारो दीर्घोयमकार इति प्रत्वेन सामानाधिकरण्यानुभवः । इकारादिष्वत्वमननुभवान्न । अत एवादात्तादयो न जात्यन्तरप्रयोजका इति तात्पर्यम् । न च आकारो ऽयं न अकार इति प्रतीत्यनापत्तिः । तस्या व्यक्तिभेदविषयकत्वात् । भाष्ये ( ऽनेकान्तेनेति ) अनियमेनेत्यर्थः । अभेदेन सामानाधिकरण्य इति भावः । तत्राह अभेदस्यापीति । प्रत्यभिज्ञानादिति । स एवायमिति प्रत्यभिज्ञानादित्यर्थः । अकारोकार इत्येकाकारप्रत्ययाश्रयस्यापि बोध्यम् । नासावन्यत्वमिति । भेदप्रतीतिमेवेत्यर्थः । प्राणीति । यद्यपि प्राणित्वं न जातिस्तथापि साधारणधर्मत्वाभिप्रायेणोक्तम् । गवाश्वरूपेति । गोत्वाश्वत्वरूपेत्यर्थः । परे तु ह्रस्वषड्भेदवृत्त्येवात्वं दीर्घषड्भेदवृत्त्येव आत्वमित्यादिर्नतु चेति भाष्याशयः । सकलव्यापकमत्वमप्यस्तीत्युत्तरम् । ननु व्यापकजात्यैक्येपि व्याप्यजात्या भेदोप्यस्तीत्यत आह अनेकान्तो हीति । व्यापकधर्मेण समानाधिकरणव्याप्यधर्मकृतो भेदः केवलभेदबुद्धिं न करोतीत्यर्थ इत्याहुः । ननु जातिनिर्देशे ऽष्टन आ इत्यादावपि तन्निर्देशाद् अकारादयः स्युः यत्नाधिक्यं तूभयार्थं स्यात् । ह्रस्वोच्चारणे तु अर्धमात्रिकेन तस्यान्तरतम्याद् ह्रस्व एव स्यादत आह अष्टन इति । दीर्घव्यक्तीति । व्यक्तेरुपलक्षणत्वे आन्तरतम्याद्ध्रस्व एव स्यादिति यत्नाधिक्यानर्थक्यं तदवश्यमिति विशेषणत्वमेव तस्या इति भावः । अस्वार्तिरिक्तमात्वादि नास्त्येवेति तात्पर्यम् । केचित्तु दीर्घषड्भेदवृत्त्यात्वव्याप्त्या यात्तत्र निर्देश इति वदन्ति । अशब्दार्थ इति । शब्दजन्यप्रतीतिविशेष्यत्वाभाववानित्यर्थः । यद्वा शक्यतावच्छेदकत्वेप्यशक्य इत्यर्थः । सर्वव्यक्तीनामिति । जातिवैशिष्ट्येन प्रत्यक्वृत्तिपरस्परभेदत्यागपूर्वकमभेदेनैकरूपेणाश्रयणाज्जात्याक्रान्तसर्वव्यक्तीनां ग्रहणं सिध्यतीत्यर्थः ॥ पूर्ववार्तिकेऽण्ग्रहणाकरणे आकृतिग्रहणं हेतुः । आकृतेरपि भेदशङ्कायामनन्यत्वाच्चेति वार्त्तिकखण्डः । अपरमते ऽण्ग्रहणाकरणे सर्वव्यक्तीनामनन्यत्वं हेतुरनन्यत्वे आकृतिग्रहणम् । आकृतेग्रहणं विशेषणत्वेनाश्रयणम् । रूपसामान्यादित्ययमाकृ

त्ताम् । अवात्तम् । अवात्त । यत्रैतन्नास्ति अण् सवर्णान् गृह्णातीति । अनेकान्तो ह्यनन्यत्वकर इत्युक्तार्थम् । द्रुतविलम्बितयोश्चानुपदेशान्मन्यामहे आकृतिग्रहणात् सिद्धमिति । यदयं कस्यां चिद् वृत्तौ वर्णानुपादिश्य सर्वत्र कृती भवति । अस्ति प्रयोजनमेतत् । किं तर्हीति । वृत्तिपृथक्त्वं तु नोपपद्यते । वृत्तेः पृथक्त्वं नोपपद्यते तस्मात्तपरनिर्देशात्सिद्धम् । तस्मात्तत्र तपरनिर्देशः कर्तव्यः । न कर्तव्यः । क्रियते न्यास एव । अतो भिस ऐसिति । अणुदित्सवर्णस्य चाप्रत्ययः ॥

---

तिग्रहणादेव सिध्यति । व्यक्तिनिर्देशपक्षे तु एकैव तकारव्यक्तिर्झल्व्यपदेशमासादयेत् पूर्वा परा वेत्यवात्तामिति झलोपो न स्यात् । अबुद्धेत्य दावेव तु स्यात् । धातुप्रत्ययावयवयोस्तकारयोर्भेद एवेति चेत् नत्राह । अनेकान्त इति । द्रुतेति । हल्ग्रहणेष्वेवेदमुच्यते । यत्रैतन्नास्ति अण् सवर्णान् गृह्णातीति । अणसु तु व्यक्तिनिर्देशे ऽपि ग्रहणकशास्त्रेण स्यादेव वृत्तिभिन्नस्य ग्रहणम् । वृत्तिपृथक्त्वामिति । ह्रस्वदीर्घादिप्रमाणलक्षणापि वृत्तिर्न भेदिका स्यादिति खट्वाभिरित्यत्रैस्प्रसज्येतेति भावः । क्रियतइति । अवश्यकर्तव्यतां दर्शयति । व्यक्तिपक्षे ऽण् सवर्णान् गृह्णातीति प्रसङ्गः । सूत्रप्रत्याख्याने त्वाकृतिग्रहणात् । उदिद्ग्रहणं कर्तव्यमेव नहि वर्ग्याणामेकाकृतियोगो ऽस्ति कृते तु सूत्रे कुहोश्चुरित्यादौ भाव्यमानस्य उदित्त्वसामर्थ्यादप्रत्यय इति निषेधो नावतरतीत्यणस्वेवायं निषेधः । प्रत्याख्यानपक्षे भाव्यमानेषु यथाश्रुतं रूपमृच्छत्वित्याकृतिग्रहणे ऽपि भिन्नकालानां ग्रहणं न भवति यथा पशुना यजेत पशुमालभेतेत्युत्पत्तिवाक्यत्वात् संख्या विवक्ष्यते । उदात्तादयस्त्वभेदका इत्युक्तम् । अनुवादे तु नान्तरीयकत्वादेकव्य-

---

तिग्रहणादित्यस्यार्थो परमत इत्यके । जात्याश्रयणमावश्यकमित्याह तद्वच्चेति । पूर्वा परा वेति । उभयोरपि झल्त्वं न स्यात् । अन्यतरस्य प्रत्याहारसूत्रोपात्तादन्यत्वादिति भावः । अवात्तामिति । वसेर्लुङि तसस्तामि वृद्धौ सःसीति तत्वे झलो जलीति । सिज्लोपे रूपम् । ननु झल इति सूत्र क्व चरितार्थमत आह अबुद्धेति । बुधेर्लुङि रूपम् । भेदएवेति । व्यक्त्योः परस्परं भेद एवेति भावः ॥ भाष्ये ( नेकान्त इति ) । उपात्ताभेदकधर्मसमानाधिकरणो भेदकधर्म इत्यर्थः । प्रकृते भेदकधर्मस्तत्त्वम् । प्रयोगार्थे तु मध्यमेत्युक्तं द्रुतविलम्बितयोरित्युक्तम् । ह्रस्वदीर्घादीति । वृत्त्या कालप्रमाणेन पृथक् कृतामिति तृतीयासमास इति भावः । भाष्ये तु शेषत्वविवक्षया षष्ठी हेतौ पञ्चमी वा । आकृतिग्रहणादिति । तदुक्तमङण्सूत्रे भाष्ये तद्वच्च तपरकरणं एवञ्च कृत्वा तपराः क्रियन्ते आकृतिग्रहणेनातिप्रसक्तमिति कृत्वेति । एकाकृतियोग इति । तन्मात्रनिष्ठत्यादि । उदिदीति च । कुचुटुतुपूनां प्राचां संज्ञा तयेहापि व्यवहारः । ननु सर्वत्रसंज्ञा प्राप्नोति अनुवादे तत्प्राप्तेरिति बोध्यम् । नन्वणुग्रहणप्रत्याख्याने ऽनुवादेष्विव विधावपि जातिनिर्देशात्सर्वग्रहणप्रसङ्ग इत्यत आह भाव्यमानेष्विति । यथा श्रुतमिति । जातिविशेषावच्छिन्नव्यक्तिविशेषरूपमित्यर्थः । उत्पत्तिवाक्यत्वादिति । विधिवाक्यत्वादित्यर्थः । विधौ हि प्रमित्सितत्वाद्विशिष्टोपादानेन वाक्यार्थभेदो ऽनुवादे त्वेतस्य सिद्धत्वे नाप्रमित्सितत्वात्तद्विशेषणोपादानं न वाक्यभेदमन्तरेण भवति स चान्याय्य इति भावः । यत्तु क्वचिद्विधावपि व्यक्त्यन्तरस्योपादानं तदुदिदित्यादौ तपरत्वाल्लिङ्गादिति द्रष्टव्यमित्याहुः । नान्तरीयकत्वादिति । अनेन नान्तरीयकविशेषणविषय एव विवक्षाऽविवक्षाविचारं प्रति ध्वनयति । अत एव श्रेयांसं न प्रबोधयेदित्यादौ अनुवाद्यविशेषणश्रेयस्त्वाविवक्षायामपि न दोषः । वस्तुतोऽत्र व्याख्यानमेव शरणम् । नान्तरीयकसंख्यालिङ्गविषयन्यायस्य प्रधानव्यक्तिविषयकत्वानौचित्यात् । उपेयिवानित्यादौ उपेत्यविवक्षाया नञो विवक्षायाश्च दर्शनात् । ऋकारेण लृग्रहणाय तु लृवर्णस्य ऌवर्णवद्भावो वाच्य इति तात्पर्यम् । परे तु जातिपक्षेऽपि तपरसूत्रस्य जातिग्रहणप्राप्तसवर्णग्रहणानियमार्थत्वात्तत्प्रयुक्तसवर्णग्रहणनिषेधायाप्रत्यय इति पृथक्कार्यमेव । ध्वनितञ्चेदं

तपरस्तत्कालस्य ॥ ७० ॥ अयुक्तो ऽयं निर्देशस्तत्कालस्येति । तदित्यनेन कालः प्रतिनिर्दिश्यते, तदित्ययं च वर्णः । तत्रायुक्तं वर्णस्य कालेन सह सामानाधिकरण्यम् । कथं तर्हि निर्देशः कर्तव्यः । तत्कालकालस्येति । किमिदं तत्कालकालस्येति । तस्य कालस्तत्कालः । तत्कालः कालो यस्येति सो ऽयं तत्कालकालस्तत्कालकालस्येति । स तर्हि तथा निर्देशः कर्तव्यः । न कर्तव्यः । उत्तरपदलोपो ऽत्र द्रष्टव्यः । तद्यथा । उष्ट्रमुखमिव मुखमस्य सो ऽयमुष्ट्रमुखः

---

क्त्युच्चारणे ऽपि सकलव्यक्तिग्रहणम् । यथा ग्रहं संमार्ष्टीति सर्वेषां ग्रहाणां प्राजापत्या नवग्रहा इत्यादिभ्यो ज्ञातानां संमार्जनम् ॥ ६९ ॥

तपरः ॥ अयुक्त इति । न्यायेनासंबद्ध इत्यर्थः । न्यायशब्दस्य प्रयोगः प्रसिद्धत्वान्न कृतः । कदा चित्प्रसिद्धार्थस्याऽपि प्रयोगो दृश्यते न्यायेनायुक्तमिति । धात्वर्थे ऽन्तर्भूतस्य प्रयोगाभावः । नहि भवति जीवति प्राणानिति । तदित्यनेनेति । स कालो यस्येति कालसामानाधिकरण्येन तच्छब्दोपादानात् । तदित्ययं च वर्ण इति । परामृष्ट इत्यर्थः । तपरशब्दवाच्यस्याऽर्थस्य तच्छब्देन परामर्शात् । वर्णस्येति । वर्णवाचिनस्तच्छब्दस्येत्यर्थः । कालेनेति । कालवाचिनेत्यर्थः । कालो हि प्रसिद्धपरिमाणा क्रिया ऽप्रसिद्धपरिमाणस्य क्रियान्तरस्य परिच्छेदिका यथा दिवसमधीतइति दिवसशब्देनोदयादिरस्तमयान्त आदित्यगतिप्रबन्ध उच्यते स चाध्ययनस्य परिच्छेदकत्वात्कालः । वर्णस्तु क्रियात्मको न भवति । तस्य काल इति । येन एकस्य वर्णस्य परिच्छेदिका क्रिया निमेषादिः सैव यस्य परस्य स तत्कालकालः । उष्ट्रमुख इति गम्यमानार्थत्वाद् द्वितीयमुखशब्दाप्रयोगः । उष्ट्रो मुखमस्योष्ट्रमुखः । न च प्राणी प्राण्यन्तरस्य मुखमिति सामर्थ्यात्सादृश्यप्रतीतिः । समग्रेण चोष्ट्रेण मुखस्य सादृश्याभावादुष्ट्रशब्दोवयवे वर्तते मुखेनैव मुखस्य सादृश्यं प्रसिद्धमिति सामर्थ्यादुष्ट्रमुखमिव मुखमस्येत्यर्थो गम्यते । एवमिहापि वर्णः कालो न भवतीति सामर्थ्यात्तदीया क्रिया क्रियान्तरपारिच्छिन्नता सती क्रियान्तरस्य परिच्छेदिकेति वर्ण

---

ज्यायसीयस इति सूत्रे भाष्ये । किं च तत्र व्यक्तिविवक्षायां यत्र क्वचित्प्रयोगे एकाकारव्यक्तिः साध्वी स्यान्न प्रयोगान्तरे इति व्यक्तिविवक्षया समाधानं दुर्घटमित्याहुः ॥ ६९ ॥

तपरस्तत्का ॥ युजः सबन्धवाचकत्वेन संबन्धस्योभयनिरूप्यत्वेन संबन्ध्यन्तराकाङ्क्षायामाह न्यायेनेति । प्रसिद्धत्वादिति । निष्ठान्तयुजः प्रायो न्यायसम्बन्धिन्येव प्रयोगादित्यर्थः । नन्वेवं युज्यर्थे-ऽन्तर्भूतत्वादप्रयोग इति कुतो नोच्यत इत्यत आह धात्वर्थे इति । यद्ययमन्तर्भूतः स्यात्तदा न्यायेनायुक्त इति प्रयोगो न स्यादिति भावः । दण्डेनायुक्त इत्यादि च न स्यादित्यपि बोध्यम् । एतेन मेघो वर्षतीत्यादौ प्रसिध्या जलमित्यादेरप्रयोगादकर्मकतेति नव्योक्तिः परास्ता । भष्य (प्रतिनिर्दिश्यतइति)। सामानाधिकरण्येन विशेष्यत इत्यर्थः । तदित्ययञ्च वर्ण इत्यस्य साकाङ्क्षत्वादाह परामृष्टइति । वर्णस्यैव परामर्शे हेतुमाह तपरेति । तः परो यस्मादिति विग्रहे ऽव्यवधिमतोः साजात्यात्सवर्णत्वस्य वर्णनिष्ठत्वाच्च तेन वर्ण एवोच्यत इति भावः । एकार्थवृत्तित्वरूपसामानाधिकरण्यस्य शब्दधर्मत्वात् कथं वर्णस्य कालेनेति भाष्यमत आह वर्णवाचिन इति । सामानाधिकरण्यानुपपत्तिप्रदर्शनाय कालस्वरूपमाह कालो हीति । अपारिच्छिन्नस्य विभोः कालस्य व्यवहारानुपयोगित्वादाह प्रसिद्धेति । वर्णस्त्विति । गुणरूपत्वाद्द्रव्यरूपत्वाद्वेत्यर्थः । जन्यमात्रं कालोपाधिरिति तु न युक्तं दिवसादिव्यवहारस्य सूर्यक्रियादिभिरेव दर्शनादिति भावः । एतत्कालस्वरूपकथनं कालाः परिमाणिनेति सूत्रस्थभाष्यविरुद्धमिति तत्रैवोपपादयिष्यते । सैवेति । सजातीयेत्यर्थः । तदीया क्रियेति । उच्चारणरूपेत्यर्थः । क्रियान्तरस्य, वर्णान्तरोच्चारणस्य । वर्णएवेति ।

खरमुखः। एवं तत्कालकालस्तत्कालस्तत्कालस्येति। अथ वा साहचर्यात्ताच्छब्द्यं भविष्यति। कालसहचरितो वर्णः वर्णोऽपि काल एव। किं पुनरिदं नियमार्थम् आहो स्वित् प्रापकम्। कथं च नियमार्थं स्यात् कथं वा प्रापकम्। यद्यत्राऽणुग्रहणमनुवर्तते ततो नियमार्थम्। अथ निवृत्तं ततः प्रापकम्। कश्चात्र विशेषः। तपरस्तत्कालस्येति नियमार्थमिति चेद्दीर्घग्रहणे स्वराभिन्नाग्रहणम् *। तपरस्तत्कालस्येति नियमार्थमिति चेद्दीर्घग्रहणे स्वरभिन्नानां ग्रहणं न प्राप्नोति। केषाम्। उदात्तानुदात्तस्वरितानुनासिकानाम्। अस्तु तर्हि प्रापकम्। प्रापकमिति चेद् ह्रस्वग्रहणे दीर्घप्लुतप्रतिषेधः *। प्रापकमिति चेद् ह्रस्वग्रहणे दीर्घप्लुतयोः प्रतिषेधो वक्तव्यः। न वक्तव्यः। विप्रतिषेधात् सिद्धम् *। अण् सवर्णान् गृह्णातीत्येतदस्तु तपरस्तत्कालस्येत्येतद्भवति विप्रतिषेधेन। अण् सवर्णान् गृह्णातीत्यस्यावकाशः। ह्रस्वा अतपरा अणः। तपरस्तत्कालस्येत्यस्यावकाशः। दीर्घास्तपराः। ह्रस्वेषु

---

एव परिच्छेदक उच्यते। अथ वेति। वर्णसहचरितायां क्रियायां तच्छब्दो वर्तते स कालो यस्येति तद्वर्णसमवेता क्रिया परिच्छेदिकाऽस्येत्यर्थः। यथाऽस्मादि द्रव्यं द्रव्यान्तरपरिच्छिन्नं सुवर्णादीनां परिच्छेदकं तद्वत् क्रियापीत्यर्थः। दीर्घग्रहणइति। भेदका उदात्तादय इति भावः। तत्र वृद्धिरादैजिति षण्णामाकाराणां वृद्धिसंज्ञेष्यते एकस्यैव तु दीर्घस्य स्यात् तपरकरणं त्वैजर्थमेव स्यात्। ह्रस्वग्रहणइति। अतो भिस ऐस् इत्यकारग्रहणे पूर्वसूत्रेण दीर्घप्लुतयोर्ग्रहणं प्राप्नोति। इदं हि सूत्रमनुग्रहणं चरितार्थम्। विप्रतिषेधादिति। विरोधो ह्यत्र विद्यते यदि पूर्वसूत्रेणाकारः सवर्णानां ग्राहकस्तदाष्टादशानां ग्रहणप्रसङ्गोऽनेन तु षण्णाम्। परत्वादनेनैव तपरोऽण् सवर्णानां तत्कालानां स्वरूपस्य च ग्राहकः। नन्वत इति तकारोच्चारणसामर्थ्यादनेनैव ग्रहणं भविष्यति किं विप्रतिषेधाश्रयेण। नैतदस्ति। मुखसुखार्थस्यापि तकारस्य दर्श-

---

वर्णाश्रितक्रियागतपरिच्छेदकत्वस्याश्रये उपचाराद्वर्णपरामर्शिनस्तच्छब्दस्य मुख्यवृत्तेरेव कालशब्देन सामानाधिकरण्यमित्यर्थः। पूर्वव्याख्याती विशेषमाह वर्णसहेति। अनेन लक्षणाबीजं संबन्धो दर्शितः। क्रियायाः परिच्छेदकत्वं सापेक्षं न स्वत इति दृष्टान्तेनाह यथेति। भाष्ये (प्रापकमिति)। स्वतन्त्रविधायकमित्यर्थः। षण्णामिति। अनुनासिकाकारस्य वृद्धिसंज्ञायां फलाभावादवसाने तदभावाच्चेदं चिन्त्यम्। अत एव वार्त्तिके स्वराभिन्नस्येवोक्तं न तु गुणभिन्नेति। भाष्येऽनुदात्तानुदात्तस्वरितानामित्येव पाठः। ननु तत्र तपरत्वसामर्थ्यादस्य सूत्रस्यावृत्तिमङ्गीकृत्यावृत्तस्याणुग्रहणानुवृत्त्या विध्यर्थत्वान्न दोष इत्यत आह तपरकरणमिति। नन्वाकडारादेकेत्यत्र संज्ञासमावेशदर्शनाद्विप्रतिषेधादित्ययुक्तमत आह विरोधो हीति। न हि संज्ञासमावेशे संज्ञात्व प्रयोजकं किं तु विरोधाभाव इति भावः। संख्याकृतव्यवहारस्य परस्परपरिहारेणैव दृष्टत्वादत्र युगपदसंभवरूपो विरोध इति तात्पर्यम्। तपरत्वसामर्थ्यात् प्रतिलक्ष्यं लक्षणभेदाच्चातो भिस इत्येतद्विषयेऽन्तपर इति लक्षणमनवकाशमित्ययुक्तो विप्रतिषेध इति शङ्कते नन्वत इतीति। तपरत्वस्य सन्दिग्धत्वाद् विप्रतिषेधोपपत्तिरित्युत्तरयति नैतदिति। कृतइतीति। अत्र भाव्यमानत्वेन सवर्णाग्राहकत्वाद्यथा तपरत्वं मुखसुखार्थं तथेत्यर्थः। कृत इति तपरत्वन्तु गुणान्तरयुक्तसङ्ग्रहार्थम्। अन्यथोदात्तोच्चारणे तीर्ण इत्यत्र क्ते प्रत्ययसंनियुक्तायुदात्तत्वं शेषनिघाते चोदात्तत्वाभावान्न स्यात्। अनुदात्तोच्चारणे जीर्यतीत्यत्र न स्याद् इति भावः। भिन्नकालानीति। परत्वेन पूर्वसूत्रबाधादिति भावः। अप्राप्तिरेवात्रानिवृत्तिः। भाष्ये [यद्यवमि] स्वस्य एतद्विषये पूर्वसूत्राप्रवृत्तावित्यर्थः। यस्यां वृत्तौ तपरकरणं तदस्यत्रवृत्ता प्रयोगे ऐसादीनामुपसंख्यानं कार्यमिति तात्पर्यम्। अभ्यासार्थे कृता वृत्तिः प्रयोगार्थे

तपरेषूभयं प्राप्नोति। तपरस्तत्कालस्येत्येतद्भवति विप्रतिषेधेन। यद्येवं द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदात् *। द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कर्तव्यं तथा मध्यमायां द्रुतविलम्बितयोस्तथा विलम्बितायां द्रुतमध्यमयोः। किं पुनः कारणं न सिध्यति कालभेदात्। ये हि द्रुतायां वृत्तौ वर्णास्त्रिभागाधिकास्ते मध्यमायां, ये च मध्यमायां वर्णास्त्रिभागाधिकास्ते तु विलम्बितायाम्। सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते *। सिद्धमेतत्। कथम्। अवस्थिता वर्णा द्रुतमध्यमविलम्बितासु। किं कृतस्तर्हि वृत्तिविशेषः। वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते। वक्ता कश्चिदाश्वभिधायी भवति आशु वर्णानभिधत्ते कश्चिच्चिरेण कश्चिच्चिरतरेण कश्चिच्चिरतमेन। तद्यथा। तमेवाध्वानं कश्चिदाशु गच्छति कश्चिच्चिरेण कश्चिच्चिरतरेण कश्चिच्चिरतमेन। रथिक आशु गच्छति, आश्विकश्चिरेण, पदातिश्चिरतरेण, शिशुश्चिरतमेन। विषम उपन्यासः। अधिकरणमत्राध्वा व्रजिक्रियायाः। तत्रायुक्तं यदधिकरणस्य वृद्धिह्रासौ स्याताम्। एवं तर्हि स्फोटः शब्दः। ध्वनिः शब्दगुणः। कथम्। भेर्याघातवत् *। तद्यथा।

---

नात्। प्लुत इच्छातोरिति यथा। यद्येवमिति। यद्ययं योगस्तत्कालान् प्रतिपादयन् भिन्नकालान् निवर्तयतीत्यर्थः। त्रिभागाधिका इति। द्रुतं श्लोकमृचं वोच्चारयति वक्तरि नाडिकाया यस्या नव पानीयपलानि स्रवन्ति तस्या एव मध्यमायां वृत्तौ द्वादशपलानि स्रवन्ति। नवानां त्रिभागास्त्रीणि पलानि तदधिकानि नव द्वादश सम्पद्यन्ते विलम्बितायां तु वृत्तौ षोडश पलानि स्रवन्ति। सिद्धं त्विति। सर्वासु वृत्तिषु न वर्णानामुपचयापचयौ। यथा गन्तॄणामालस्यादिभेदात् गतिभेदेपि न मार्गभेद इत्यर्थः। विषम इति। वर्णाः प्रयत्नजन्याः। तद्भेदे वृत्तिभेदाद्भिन्नकाला एव। अध्वा तु व्यवस्थित एव न गन्तृक्रियाजन्यः। एवं तर्हीति। व्यक्तिस्फोटोत्र विवक्षितः स

---

तु मध्यमा। शिष्याणामुपदेशार्थं वृत्तिरिष्टा विलम्बितेति। वृत्तिषु उपलब्धय एव भिन्नकाला वर्णास्तु तत्काला एवेत्यभिसन्धाय भाष्ये [ किं पुनरिति ] प्रश्नः। तत्तत्कालावच्छिन्नताल्वोष्ठपुटव्यापारजन्या भिन्नकाला एवेत्याशयेन [ कालभेदादि ] त्युत्तरम्। त्रिभागाधिका इति। तृतीयभागाधिका इत्यर्थः। कैयटात्तथाप्रतीतेः। त्रयो भागा अधिका इत्यर्थस्तु अचितः। केवलसंख्यावाचकानां पूरणप्रत्ययान्तार्थकत्वे मानाभावात्तत्रासाधुत्वापत्तेति परे। यस्या नाडिकाया इति। सुषुम्नाया इत्यर्थः। पलानि। बिन्दवः। ब्रह्माण्डसंबद्धा सामृतबिन्दुस्राविणीति प्रसिद्धिर्योगिनाम्। भाष्ये ( सिद्धान्त्विति )। उत्पत्तिपक्षेपि उपलब्धीनामेव कालभेदाद्वृत्तित्रैविध्यम्। वर्णास्तु वृत्तिभेदेप्येकरूपा एवेत्यभिमानः। अवस्थिताः। नियतकालाः। चिराचिरवचनात्। चिराचिरकालोच्चारणजनकयत्नात्। जायमानवैकृतध्वनेरुपलब्धीनामेव भेद इति भावः। उपचयापचयौ। कालवृद्धिह्रासौ। आलस्यादिभेदादिति। आलस्यादिना गतिक्रियाया भेदेपि यथा न मार्गभेदस्तथा ऽऽलस्यादिनोच्चारणक्रियातो वैकृतध्वनिभेदेपि न वर्णस्वरूपभेद इति भावः। तद्भेदे प्रयत्नभेदे। तद्भेदेनेति तृतीयान्तो क्वचित्पाठः। वृत्तिभेदाद् द्रुतादिवृत्तिभेदात्। भिन्नकाला एवेति। चिराचिरोपलब्ध्युपयोगिवृद्धिह्रासयुक्ता एवेत्यर्थः। अयं भावः। उत्पत्तिवादिनो वर्णोत्पत्तिं प्रति उच्चारणव्यापारस्य कारणत्वात्तावत्कालावच्छिन्नोच्चारणेन ह्रस्वदीर्घादेरिव द्रुतादेरपि तावत्कालस्यैवोत्पत्तिः स्यात्। न च ऽनुनिष्पादी ध्वनिरेव तत्कालो न तु वर्ण इति वाच्यम्। विनिगमनाविरहादिति। अतो नित्यवर्णातिरिक्तं स्फोटमाश्रित्य समाधत्ते भाष्ये [ एवं तर्हीति ] अत्रोति। भाष्ये इत्यर्थः। स च नित्य इति।

भेर्याघातः भेरिमाहत्य कश्चिद्विंशतिपदानि गच्छति कश्चित्त्रिंशत् कश्चिच्चत्वारिंशत् स्फोटस्तावानेव भवति। ध्वनिकृता वृद्धिः। ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते। अल्पो महांश्च केषांचिदुभयं तत्स्वभावतः॥ १॥ तपरस्तत्कालस्य॥

---

च नित्यः। एतच्च येनोच्चारितेनेत्यत्र पस्पशायां विचारितमिति तत एव बोद्धव्यम्। शब्दगुणइति। शब्दस्य गुण उपकारको व्यञ्जकत्वेनेत्यर्थः। तद्यथा। घटः पुनःपुनर्दृश्यमानोपि न भेदमवलम्बते तथा विलम्बितायां वृत्तावकार एव पुनःपुनरुपलभ्यतइति वृत्तिभेदे ऽपि वर्णस्य भेदो न गृह्यते इति सर्ववृत्तिषु तत्कालत्वम्। ह्रस्वदीर्घप्लुतान्तु स्वत एव भिन्नाभिन्नैर्ध्वनिभिर्व्यज्यन्त इति तेषां कालभेदः। भेर्याघात इति। भेरीमाहन्तीति भेर्याघातः। उपलब्धिसामान्ये दृष्टान्तः। यथा प्रयत्नजशब्दात्पन्नो भेरीशब्दः कश्चिदल्पकालमुपलभ्यते कश्चिच्चिरं चिरतरं च। एवं वृत्तिषूपलब्धीनां कालभेदो विषयस्य त्वभेद एव। स्फोटस्तावानेवेति। दार्ष्टान्तिकोपन्यासः। ध्वनिः स्फोटश्चेति। व्यञ्जको व्यङ्ग्यश्चेत्यर्थः। शब्दानां व्यङ्ग्यानां सम्बन्धी व्यञ्जकत्वेन यो ध्वनिः स एव महानल्पश्च लक्ष्यते व्यङ्ग्यस्त्वभिन्नकाल एवेत्यर्थः।

---

आकाशादिवदिति भावः। ननु स्फोटो ऽसिद्धस्तन्नित्यत्वं चेत्यत आह एतच्चेति। स एवायमकार इति प्रत्यभिज्ञानाद् एकं पदमिति प्रत्ययाच्च तत्सिद्धिरित्यन्यत्र विस्तरः। ननु ध्वनिरपि शब्दविशेष एव स कथं शब्दगुणो ऽत आह शब्दस्येति। व्यञ्जकत्वेन स्फोटोपलब्धिप्रतिबन्धकास्तिमितवाय्वपसरणद्वारा स्वधर्मरूषिततदुपलब्धिहेतुत्वेनेत्यर्थः। तद्विषयायाः पुनः पुनरुपलब्धेर्नैरन्तर्येपि न वर्णभेद इति दृष्टान्तेनोपपादयति तद्यथेति। पुनः पुनरुपलम्भो ऽविच्छेदेन दर्शनम्। ह्रस्वदीर्घेत्यादि तमेवायं विलम्बितमुच्चारितवानन्या द्रुतमितिवदिह व्यक्तिप्रत्यभिज्ञानाभावादिति भावः। एवञ्च परिदृश्यमानकालभेदउपलब्धिगत एवेति तात्पर्यम्। अत्रेदं बोध्यम्। एक एव स्फोटस्तत्तद्रूपेणाभिव्यज्यते [ध्वनिः शब्दगुण इति] भाष्ये ध्वनिशब्देन वर्णा वैकृतध्वनिश्च तत्र वैकृतध्वनेः स्फोटस्य तद्रूपेण पुनः पुनरभिव्यक्तिः कार्यामिति तदभिव्यक्तस्फोटस्य तत्कालत्वमेव, ह्रस्वदीर्घप्लुतरूपस्फोटस्तु भिन्नकालावच्छिन्नैर्विजातीयध्वनिभिरभिव्यक्तो भिन्न एव लौकिकैर्ध्वनिगतभेदेन तद्भेदस्यापि सम्प्रत्ययात्। कैयटे ह्रस्वदीर्घप्लुतास्तु स्वत एव भिन्ना इत्यस्य व्यञ्जकभेदेनारोपितभेदा एव। भिन्नैर्ध्वनिभिर्वर्णैर्व्यज्यन्त इत्यर्थः। विलम्बितादिवृत्तौ तु स्फोट एकजातीय एव। ध्वनिकृता बुद्धिरित्यस्य वैकृतध्वनिकृतोपलब्धिकालवृद्धिरित्यर्थः। वर्णोपरागाभिव्यक्तिजनकयत्नीयकालापरागेणैव स्फोटस्य भानम्। अत एवास्य प्राकृतत्वेन व्यवहारः। अयन्तु वैकृतः। तत्त्वं चालस्यादिकृतत्वाद् वर्णाभिव्यक्त्युत्तरकालश्चायम्। अयन्तूपलब्धेरेव पौनःपुन्ये कारणम्। पौनःपुन्यं चाविच्छेदेनोपलब्धिधारामात्रेण न तु विच्छाद्यापलब्ध्या एतदवच्छिन्नत्वेन तु न स्फोटोपलब्धिः। ह्रस्वाकार एवायामति प्रत्यभिज्ञानात्। आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इति न्यायात्। उत्पत्तिवादिनां त्वेनं वक्तुमशक्यमिति स्पष्टमेवेति। ननु भेर्याघातो भेरीदण्डादिसंयोगविशेषः स कथं गच्छेदत आह भेरीमिति। कर्मण्यणिति भावः। भाष्ये (आहत्य तं शब्दम्) उपलभमान इति शेषः। ननु दृष्टान्ते ध्वनेरुपलभ्यमानस्य भेदो न तथेह वर्णस्य द्रुतादिष्विति वैषम्यमत आह उपलब्धिसामान्ये इति। यथा तत्र तस्य ध्वनेस्तावत्तावत्कालमुपलम्भस्तथेहापि तत्तद्वृत्तौ तावत्तावत्कालन्तत्तदभिव्यञ्जकरूपरूषितत्वेन परिच्छिन्नस्यैव स्फोटस्योपलम्भमात्रमित्येतावत्येव दृष्टान्तः। न चैतावता स्फोटभेद इति तात्पर्यम्। ननु भेर्याघातस्थले स्फोटाभावात्स्फोटस्तावानेवेत्यनुपपन्नमत आह दार्ष्टान्तिकेति। भाष्ये [ध्वनिः स्फोटश्च] ।स्त इति शेषः। किं तदित्यत आह शब्दानामिति। व्यञ्जकत्वेन उपलब्धिजनकत्वेन। वैकृतध्वनेरप्युपलब्धिपौनःपुन्यकारणत्वाद्व्यञ्जकत्वमिति भावः। तदुपक्रमेणैव भाष्यप्रवृत्तेः तदुभयं स्वभावतः सिद्धमिति शेषः। न तु तत्र प्रमाणान्तरापेक्षेति भावः। योगिप्रत्यक्षसिद्धञ्चैतदुभयमिति तात्पर्यम्। इदमेव कैयटेन प्रमाणेनेत्यनेनोक्तम्। वस्तुतस्तु भेर्याघातस्थलेपि स्फोट एव भेरीताडनाभिव्यक्तःश्रोत्रग्राह्यः शब्दानां चिराचिरोपलब्धिकराल्पत्वमहत्त्वाभावात् वैकृतध्वनिरेवाल्पत्वादिना लक्ष्यते। महत्त्वं चिरकालत्वं वैकृतध्वनिस्फोटयोः प्रमाणमाह उभयन्तावीति।

आदिरन्त्येन सहेता ॥ ७१ ॥ आदिरन्त्येन सहेतेत्यसंप्रत्ययः संज्ञिनोऽनिर्देशात् * । आदिरन्त्येन सहेतेति असंप्रत्ययः । किं कारणम् । संज्ञिनोऽनिर्देशात् । नहि संज्ञिनो निर्दिश्यन्ते । सिद्धं त्वादिरिता सह तन्मध्यस्येति वचनात् * । सिद्धमेतत् । कथम् । आदिरन्त्येन सहेता । गृह्यमाणः स्वस्य च रूपस्य ग्राहकस्तन्मध्यानां चेति वक्तव्यम् । संबन्धिशब्दैर्वा तुल्यम् * । संबन्धिशब्दैर्वा तुल्यमेतत् । तद्यथा । संबन्धिशब्दाः मातरि वर्तितव्यम् । पितरि शुश्रूषितव्यमिति । न चोच्यते स्वस्यां मातरि स्वस्मिन् पितरीति । संबन्धाच्च गम्यते या यस्य माता यो यस्य पितेति । एवमिहाप्यादिरन्त्य इति संबन्धिशब्दावेतौ । तत्र संबन्धादेतद्गन्तव्यम् । यं प्रति य आदिरन्त्य इति च भवति तस्य ग्रहणं भवति स्वस्य च रूपस्येति ॥

---

उभयमिति । व्यङ्ग्यो व्यञ्जकश्च प्रमाणेन स्वभावतः स्वरूपेण सिद्धावित्यर्थः । केषांचिदिति । व्यक्तानामुभयं गृह्यते अव्यक्तानां तु ध्वनिरेव ॥ ७० ॥

आदिन्त्येन ॥ असम्प्रत्यय इति । अप्रपत्तिरित्यर्थः । सम्बन्धिशब्दैर्वेति । संज्ञयैवाक्षिप्तः संज्ञीत्यर्थः । आद्यन्तौ च मध्यापेक्षाविति मध्यमानामेव संज्ञित्वम् । स्वं रूपमित्यनुवर्तनात् स्वस्य च रूपस्य च । सहग्रहणादाद्यन्त्यौ समुदितौ संज्ञेतीको यणचीति समुदायादेव विभक्त्युत्पत्तिर्नादिमात्रात् । स्वं रूपं त्वादेरेव गृह्यते नान्त्यस्य तस्याप्राधान्यादिति दध्यत्रेति केवल एव यकार आदेशः प्रवर्तते न तु णकारसहितः ॥ ७१ ॥

---

तदुक्तं हरिणा । वर्णस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते । ग्रहणे तत्तत्कालकत्वेन ग्रहणे । वृत्तिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते इति शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदाय वैकृत इति च । उभयमित्यावृत्त्या योजनीयम् । उभयं गृह्यत इति शेषः । तेन व्यक्तवाचामुभयम् । अव्यक्तवाचां वर्णधर्मानाक्रान्तध्वनिरेवेत्यर्थः । ध्वनिपदेन प्राकृतवैकृतावुभावपि उच्येते । ग्रहणकर्मीभूतमुभयन्तु प्राकृतवैकृतध्वनिस्फोटरूपम् । वैकृतस्याल्पत्वादि चिराचिरोपलब्ध्यनुमेयमिति बोध्यम् ॥ ७० ॥

आदिरन्त्येन ॥ संज्ञयैवेति । संज्ञाबोधकेनान्त्यसमभिव्याहृतेन चछब्दसहितादिशब्देनेत्यर्थः । आक्षेपप्रकारमाह आद्यन्तौ चेति । यद्यप्यादिशब्दः परमात्रमपेक्षते अन्तश्च पूर्वमात्रं तथापि सह प्रयुज्यमानौ मध्यापेक्षाविति भावः । मध्यमानामेवेत्येवकारः सौलभ्यद्योतकः । स्वरूपमित्यनुवर्त्तनादिति । अन्ये तु । आद्यन्तशब्दाभ्यामवयववाचकाभ्यामवयवी समुदाय आक्षिप्त इति सम्बन्धित्वेनाविशेषादादेरपि ग्रहणम् । अन्त्यस्य तु न । आचारादप्रधानत्वाल्लोपश्च बलवत्तर, इत्युक्तेरन्त्यानुबन्धानामिवास्यापि संज्ञाकार्याभावात् । स्वशब्देन विशेषणीभूतान्त्यमात्रपरामर्शासम्भवेऽपि विशिष्टपरामर्शे बाधकाभावेन अप्रधानतृतीयानिर्देशादित्यनया युक्त्या न निर्वाहः । एतत्फलितार्थकथनमेव भाष्ये स्वस्य रूपस्येति । तेन चाद्यन्तशब्दौ पूर्वापरशब्दवन्नावधिमच्छब्दौ ) किं त्ववयवशब्दाविति सूचयति इत्याहुः । समुदायादेवेति । तस्यैव संज्ञिनार्थेनार्थवत्तया प्रातिपदिकत्वादिति भावः । ननु स्वं रूपमित्यस्यानुवृत्तौ तेनादिवदन्त्यस्यापि परामर्शः स्यात् किंच सहग्रहणेन संज्ञात्व इव संज्ञित्वेऽपि साहित्यापत्तावन्त्यसहितादेर्विशिष्टस्य यणिति रूपस्य संज्ञित्वे दध्यत्रेत्यादौ णकारसहितः स्यादत आह स्वं रूपं त्विति । अत्र वदन्ति । समुदितस्य संज्ञात्वे प्रत्याहारेष्वाद्या वाचकास्तत्र ग्रहणकशास्त्रं सावकाशमिति ग्रहणकसूत्रस्यभाष्याविरोधः । टिघुभाद्येकदेशादस्यापि ग्राहकत्वप्रसक्त्यभावात् । तस्मादाद्यवर्ण एव वाचकः अन्त्यस्तु तात्पर्यग्राहकः सहग्रहणात्तु विशिष्टे तदारोपाद्विशिष्टाद्विभक्त्युत्पत्तिरिति द्योतकान्तरवैषम्यामीति ॥ ७१ ॥

येन विधिस्तदन्तस्य ॥ ७२ ॥ इह कस्मान्न भवति इको यणचि दध्यत्र। मध्वत्र। अस्तु। अलो ऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य भविष्यति। नैवं शक्यम्। ये अनेकाल आदेशास्तेषु दोषः स्यात्। एचो ऽयवायाव इति। नैष दोषः। यथैव प्रकृतिस्तदन्तविधिर्भवति, एवमादेशतो भविष्यति। तत्रैजन्तस्यायाद्यन्ता आदेशा भविष्यन्ति। यदि चैवं क्वचिद्वैरूप्यं तत्र दोषः स्यात्। ब्रह्मेन्द्रः। ब्रह्मोदकम्। अपि चान्तरङ्गबहिरङ्गे न प्रकल्पेयाताम्। तत्र को दोषः। स्योनः स्योना। अन्तरङ्गलक्षणस्य यणादेशस्य बहिरङ्गलक्षणो गुणो बाधकः

---

येन ॥ इह कस्मादिति । शब्दानुशासनप्रस्तावात् शब्दरूपमिका विशेष्यत इत्यस्ति तदन्तस्य प्रसङ्गः । येऽनेकाल इति । ततश्च चयनजयनादिष्वयनमिति प्राप्नोति । प्रकरणादिवशाच्चाचार्यादिविवार्थविशेषावगतिः स्यात् । निर्दिश्यमानस्यादेशा इत्यनाश्रितं परिहारान्तरविवक्षया । यदि चैवमिति । आद्गुण इत्यादौ अत्र ह्यादित्यकारान्तो गृह्यते अर्चीति चाजादिस्तेन खट्वेन्द्र इत्यादाववर्णान्तस्य समुदायस्याजादेश्च गुणप्रसङ्गाद्वैरूप्यप्रसङ्गः । षष्ठ्यनिर्देशाच्च निर्दिश्यमानस्येत्यपि नास्ति । स्योन इति । सिवर्बाहुलकादौणादिके नप्रत्यये गुणो वलोप ऊडिति कार्यत्रयप्रसङ्गः । तेनापवादत्वादूठा वलोपो बाध्यते गुणस्त्वन्तरङ्गत्वाद्बाध्यते । गुणो ह्यङ्गसम्बन्धिनीमिग्लक्षणां लघ्वीमुपधामार्धधातुकं चाश्रयति ऊठ् तु वकारान्तमङ्गमनुनासिकादि च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः । तत्र कृते गुणश्च प्राप्नोति यणादेशश्च । तत्र वर्णमात्रापेक्षत्वाद्यणादेशोन्तरङ्गः प्रवर्तते नानाश्रयत्वाद्वार्णादाङ्गं बलीय इत्येतन्नास्ति यत्रैकाश्रयं वार्णाङ्गे यथाकार इति घञाश्रये यण्वृद्धी तत्रैवास्य प्रवृत्तिः । यदि च इको यणचीत्यत्र तदन्ततदादिविधी स्यातां तदा यणादेशस्यान्तरङ्गत्वाभावात् परत्वाद्गुणादेशः स्यात् । अन्तरङ्गलक्षणस्येति । असति तदन्ततदादिविधित्वे यो

---

येन विधि ॥ ननु येनेति करणे तृतीया न कर्तरि षष्ठ्यापत्तेः । शास्त्रे करणञ्च विशेषणमेवेत्यग्रे भाष्यकृद्वक्ष्यति । तदन्तस्येति बहुव्रीहिः। एवञ्चको यणित्यादौ विशेष्याभावात् कथमतिव्याप्तिरत आह शब्दानुशासनेति । वस्तुतोस्यार्थस्य भाष्ये ऽग्रे वक्ष्यमाणत्वान्नैतं पूर्वपक्षी जानातीति विशेष्यप्रदर्शनं व्यर्थम् । यत्सम्बन्धी विधिः स तदन्तस्य संज्ञेति सूत्रार्थं मत्वा शङ्का । अत एवाग्रे विधेयेनापि तदन्तविधिं वक्ष्यति । विधिरिति च भावे किः सौत्रत्वाच्च तृतीयेत्याहुः । नन्वयनमित्यादित अयनमित्याद्यर्थाबोधात् अर्थाभिधानयोग्यस्यैवादेशत्वात्कथमत्रादेशो ऽत आह प्रकरणेति । भाष्ये ( यथैवेति ) । एचा तदन्तविधावयादेः कार्यत्वम् । अयादेस्तु तदन्तविधौ साधुत्वस्यायादिना बोध्यमानतया कार्यत्वमिति विवेकः । अजादेरिति यस्मिन् विधिरिति परिभाषणादिति भावः । षष्ठ्यनिर्देशादिति । पूर्वपरयोरिति षष्ठी तु साधारणीति भावः । तदादितदन्तविध्युपस्थितिसामर्थ्याच्च तदप्रवृत्तिर्बोध्या । अत एवालोन्त्यस्यस्यादप्यप्रवृत्तिरित्याहुः। भाष्ये (अन्तरङ्गबहिरङ्गे इति) वर्णमात्राश्रयत्वेन वर्णस्यान्तरङ्गत्वमिष्यते तदपि चत्समुदायस्य न कोपि विशेषः स्यादिति भावः। अन्तरङ्गलक्षणस्येत्यस्य तत्त्वाभिमतस्येत्यर्थः। बाधक इत्यस्य तव मते उभयोः समत्वेन परत्वादिति शेषः । गुणः पुगन्तेत्यनेन गुणो हीति । ईकारस्येति शेषः । गुणः पञ्चकाश्रयः ऊठ्तु चतुष्काश्रय इति विवेकः । नानेति आचे यण् प्रत्ययं गुण इति, भावः । इदं चिन्त्यमियायेत्याद्यसिद्धेः । ज्ञापकासंभवाच्च । केचित्त्वत्रापि तदादितदन्तविधावस्य वार्णत्वाभावात्तदप्रवृत्तिः मा वक्तुं चाशक्या । वार्णाप्रसिद्धेरिति भाष्याशयः । वस्तुतः तदप्रवृत्तिरनित्यत्वादुभयसंमतेति भाष्याशय इत्याहुः । न्याद्दाति निराकरोति असतीति । सति

प्रसज्येत । ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुणः । अल्विधिश्च न प्रकल्पेत । द्यौः पन्थाः स इति । तस्मात् प्रकृते तदन्तविधिरिति वक्तव्यम् । न वक्तव्यम् । येनेति करणएषा तृतीया । अन्येन चान्यस्य विधिर्भवति । तद्यथा । देवदत्तस्य समाशं शरावैरोदनेन च यज्ञदत्तः प्रतिविधत्ते । तथा संग्रामं हस्त्यश्वरथपदातिभिः । एवमिहाप्यचा धातोर्यतं विधत्ते अकारेण प्रातिपदिकस्य

---

ऽन्तरङ्गस्तस्येत्यर्थः । एवं बहिरङ्गलक्षणो गुण इति व्याख्येयम् । अल्विधिश्चेति । अलो ऽन्त्यस्येत्यत्रापि तदन्तविधिसद्भावाद्वन्त्यालन्त्यस्य समुदायस्य कार्येण भाव्यमिति द्यौः पन्था इत्यत्रालो ऽन्त्यस्यादेशो न प्राप्नोतीत्यर्थः । तत्र कदा चित्पथिनित्यस्याकारः स्यात् । कदा चित् थिन्नित्यस्य । अनेकाल् शित्सर्वस्येत्येतत्तु सर्वस्यैवेति नियमार्थं स्यात् । प्रकृत इति । प्रस्तुते । प्रस्तावश्च क्व चित्साक्षात्तदन्तविधिभाजो निर्देशात् । यथेदूदेद्द्विवचनं प्रगृह्यमित्यत्र द्विवचनस्य । क्वचिदधिकाराद् यथेरजित्यत्र धातोः । क्व चिदाक्षेपाद् यथेको झलित्यत्र सना धातोः । करण एषेति । विधिशब्दः कर्मसाधनो येन करणेन कार्यं विधीयते स शब्दस्तदन्तस्य संज्ञेत्यर्थः । तेन विशेषणेन विशेष्यस्य तदन्तविधिर्भवति नान्यथा । इको यणचीत्यादौ च विशेष्यस्यासन्निधानात्तदन्तविधेरभावः । हस्त्यश्वरथपदातिभिरिति । बहुप्रकृतित्वाभावा-

---

त्तु तस्मिन्नान्तरङ्गत्वामीति भावः । इदन्तु बोध्यम् । एवमपीगन्तशब्दाजादिशब्दमात्रापेक्षत्वं यणो गुणस्य तूक्तरीत्या पदार्थपञ्चकापेक्षत्वामीति कथं न बहिरङ्गत्वम् । तस्मात्संज्ञापेक्षं न बहिरङ्गं गुणादृष्टं तु नित्यः । सिद्धान्ते ऊठि कृते यणा बाधाद् गुणो न नित्यः । इदानीं तदसिद्धिरपि दोष इति भाष्याशय इति । एवमिति । सति तदादितदन्तविधित्वे यथा तुल्यनिमित्त इति न स बहिरङ्ग इति भावः।भाष्ये ऊनशब्दमाश्रित्येत्यादिना यणो बहिरङ्गत्वं गुणस्यान्तरङ्गत्वं दर्श्यते । एवञ्च परत्वाद् गुणः स्यादिति कैयटाशयः । अनेन हि भाष्येण परिभाषायामङ्गशब्दो निमित्तपरो न तु स्थान्यादिपरोपीति सूचयति । यणनिमित्तोनशब्दावयवत्वेन नशब्दस्य ततो बहिष्ट्वाभावः । गुणनिमित्तनशब्दादूनशब्दस्य बहिर्भूतोकारघटितत्वाद्यणो बहिरङ्गत्वमिति भावः । भाष्ये ऽल्विधिश्चेति । स्थानिवदित्यत्र अलो जायमानो विधिरल्विधिरित्यर्थः । अलोन्त्यस्यादेशो नेति नियमेनेति शेषः । थिन्नित्यस्येति । कदाचिदिनित्यस्येत्यपि बोध्यम् । सर्वादेशस्य स्थानिवत्त्वात्सुलोपः स्यादिति भावः । नन्वेवमनेकाल्शिदिति व्यर्थं कदाचिदेकाल्त्वस्यापि सर्वादेशत्वासिद्धेरत आह अनेकालिति । सर्वस्यैवेति । षष्ठीनिर्दिष्टसर्वस्यैवेत्यर्थः । प्रकृतं नाम पूर्वं निर्दिष्टमनुवर्त्तमानञ्चेदीदूदेद्द्विवचनमित्यत्र तदन्तविधिर्न स्यादत आह प्रस्तुत इति । प्रस्तावश्च बुद्धिसंनिधिः । भाष्ये प्रस्तुत इत्यर्थकप्रकृते इत्यस्य विशेष्ये इति शेषः । तदन्तविधिभाज इति । तदन्तश्चासौ विधिभाक् चेति कर्मधारयः । तदन्तशब्दे च बहुव्रीहिरिति बोध्यम् । शब्दरूपविशेष्यमात्रस्य तु अस्य न सर्वत्र प्रवृत्तिरव्यावर्त्तकत्वादिति भावः । कर्मसाधन इति । भावसाधनत्वेपि न बाधकं प्रसिद्धत्वादेव विधेयं कर्म लभ्यते । स शब्द इति । इह शास्त्रे प्रायः शब्दस्यैव कार्यकरणत्वादिति भावः । तेन विशेषणेनेति । कार्यविधाविति शेषः । विशेषणत्वलाभोत्रैवम् । करणस्य व्यापारवत्त्वानियमादन्वेषाञ्च व्यापाराभावाद्विशेषणमेवात्र करणशब्देनोच्यते तस्य चेतरव्यावृत्तिकरणमेव व्यापार इति भावः । तत्र प्रत्यासत्त्या शब्दप्रयोज्योपस्थितिविषयं विशेषणमेव प्रायेण तदन्तमाहकमितीको यणचीत्यादौ न दोषः । क्वचित्तु सति गमके ऽतादृशं शब्दरूपविशेष्यमादायापि तदन्तविधिरिति भावः । तदप्यन्तरङ्गत्वात्समानाधिकरणविशेषणमेवेति बोध्यम् । भाष्ये ( अन्येन चान्यस्येति ) अनेन यस्य कार्यं यस्मिन् परतस्तयोरकरणत्वं दर्शितम् । अन्यस्येत्यन्यस्मिन्नित्यस्याप्युपलक्षणम् । समाशं भोजनम् । सेनाङ्गत्वादेकत्वं प्राप्नोतीत्यत

इत्वं विधत्ते । येन विधिस्तदन्तस्येति चेद् ग्रहणोपाधीनां तदन्तोपाधिप्रसङ्गः * । येन विधिस्तदन्तस्येति चेद् ग्रहणोपाधीनां तदन्तोपाधित्वप्रसङ्गः । ये ग्रहणोपाधयस्ते तदन्तोपाधयः स्युः । तत्र को दोषः । उतश्च प्रत्ययादसंयोगपूर्वादिति असंयोगपूर्वग्रहणमुकारान्तविशेषणं स्यात् । तत्र को दोषः । असंयोगपूर्वग्रहणेन इहैव पर्युदासः स्यात् । अक्ष्णुहीति । इह न स्याद् आप्नुहि शक्नुहीति । तथोदोष्ठ्यपूर्वस्येति ओष्ठ्यपूर्वग्रहणमृकारान्तविशेषणं स्यात् । तत्र को दोषः । ओष्ठ्यपूर्वग्रहणेन इह प्रसज्येत । संकीर्णं संगीर्णमिति । इह च न स्याद् निपूर्ताः पिण्डा इति । सिद्धं तु विशेषणविशेष्ययोर्यथेष्टत्वात् * । सिद्धमेतत् । कथम् । यथेष्टं विशेषणविशेष्ययोर्योगो भवति । यावता यथेष्टम् । इह तावदुतश्च प्रत्ययादसंयोगपूर्वादिति नासंयोगपूर्वग्रहणेन उकारान्तं विशेष्यते किं तर्हि उकार एव विशेष्यते उकारो योऽसंयोगपूर्वस्तदन्तात्प्रत्ययादिति । तथा उदोष्ठ्य-

---

देकवद्भावाभावः । ग्रहणोपाधीनामिति । गृह्यत उच्चार्यत इति ग्रहणं तस्य ये उपाधय इष्यन्ते ते तदन्तस्य संज्ञिनः प्राप्नुवन्ति संज्ञा हि संज्ञिप्रत्यायने विशेषणभावमापन्ना कथमात्मनो विशेषणसम्बन्धमनुभवेत् । सङ्कीर्णमिति । ओष्ठ्यः पूर्वो यस्माद् ऋकारान्ताद्धातोस्तस्योत्त्वमित्येव सूत्रार्थः स्यात् । तत्र च सूत्रार्थे धात्ववयवत्वमोष्ठ्यस्याश्रयितुं न युज्यते अवधित्वावयवित्वयोरेकस्य विरोधात् । सिद्धं त्विति । वृद्ध्यादिसंज्ञा गुणप्रधानभावानपेक्षा एव प्रदेशेषु संज्ञिनं प्रत्याययन्ति इयं तु संज्ञा गुणप्रधानभावापेक्षत्वात्कार्यकाला तत्रोतश्च प्रत्ययादित्यादौ विशेषणसम्बन्ध-

---

माह बह्विति । बह्वर्थवाचिपूर्वोत्तरपदकत्वाभावाद् द्वन्द्वस्यैत्यर्थः । तस्य गृह्यमाणस्य । उपाधय इति । विशेषणानीत्यर्थः । प्राप्नुवन्ति । उपाधय इत्यनुकर्षः । वार्त्तिके तदन्तोपाधीति । भावप्रधानो निर्देश इति बोध्यम् । तदन्तसंज्ञायामप्यकारस्यास्तु विशेषणेन संबन्धो विरोधाभावादत आह संज्ञा हीति । विशेषणभावम् । गुणभावम् । यद्वा । संज्ञिप्रत्यायने तद्बोधे सति विशेषणत्वमापन्नेत्यर्थः । आत्मनेति पाठे स्वयमित्यर्थः । आत्मन इति पाठे तु सम्यगेव । गुणानाञ्च परार्थत्वात्पदार्थैकदेशत्वाच्चेति न्यायादिति भावः । अवधित्वेति । अवधित्वञ्च तदनारम्भकत्वे सति पञ्चम्यन्तपदवाच्यस्वरूपम् । पूर्वादियोगे । अवयवत्वञ्च तदारम्भकत्वमिति ते एकस्य न संभवत इत्यर्थः । ओष्ठ्यः पूर्वो यस्मादिति विग्रहे एष दोषः । षष्ठ्यर्थे बहुव्रीहौ तु यद्यपि पूर्वशब्दस्य प्रथमावयववाचित्वाद्धात्ववयवत्वमोष्ठ्यस्य लभ्यत इति नायं दोषस्तथापि सुस्वूर्षतीत्यादौ दोषो बोध्यः । एवमुतश्चेति सूत्रे पूर्वशब्दस्यावयववाचित्वे प्रत्ययविशेषणत्वासम्भवः । संयोगपूर्वकोकारान्तप्रत्ययाभावेनाव्यावर्त्तकतया ऽसंयोगपूर्वादिति निषेधवैयर्थ्यापत्तेः । न चाङ्गविशेषणत्वम् । क्षणु इत्याद्यसिद्धेरतो व्यवस्थावाची पूर्वशब्दः श्रूयमाणप्रत्ययविशेषणम् । तदुक्तं भाष्ये ( पूर्वग्रहणमुकारान्तविशेषणमिति ) । न चासंयोगादिति वक्तव्यं पूर्वग्रहणाद्विशेषणस्याप्युकारस्य विशेषणमिति न दोष इति वाच्यम् । वाच्यवृत्त्याऽलाभात् । किं च व्यवहिते चिणु इत्यादावपि निषेधार्थं पूर्वग्रहणं स्यादिति भावः । भाष्ये ( निपूर्ता ) इत्यत्र न ध्याख्येति नत्वनिषेधः । विशेषणविशेष्यभावे कामचारेऽपि सञ्ज्ञासूत्रस्य प्रवृत्तत्वात्पूर्वं तदन्तविधिरेव स्यादत आह वृध्यादीति । एवञ्च विशेषणत्वज्ञानसापेक्षतया ऽवान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्त्या बहिरङ्गत्वादस्य पूर्वम् उकारादीनामेव तद्विशेषणमिति भावः । गुणप्रधानभावानपेक्षा इति । एवञ्च तत्र वाक्यभेद एवेति भावः । इयन्त्विति । तदपेक्षत्वाद् विधिवाक्यैकवाक्यतापन्नैवेत्यर्थः । यदुक्तं संज्ञा हीति । तत्राह तत्रेति । गुणः कृतात्मसंस्कारः प्रधानोपकाराय महते प्रभवतीति न्यायादिति भावः । भाष्ये ( यथेष्टमिति ) । यथेष्टं यथेष्टं विशेष्ये विशेषणं तत्र च विशेषणान्तरमेकत्र द्वयामिति योगेषु यथेष्टमित्यर्थः । एवञ्च

पूर्वस्येति नौष्ठ्यपूर्वग्रहणेन ऋकारान्तं विशेष्यते ऋकारान्तो यो धातुरोष्ठ्यपूर्व इति किं तर्हि ऋकार एव विशेष्यते ऋकारो य ओष्ठ्यपूर्वस्तदन्तस्य धातोरिति। समासप्रत्ययविधौ प्रतिषेधः *। समासविधौ प्रत्ययविधौ च प्रतिषेधो वक्तव्यः। समासविधौ तावत्। द्वितीया श्रितादिभिः समस्यते। कष्टश्रितः। नरकाश्रितः। कष्टं परमश्रितः इत्यत्र मा भूत्। प्रत्ययविधौ। नडस्यापत्यं नाडायनः। इह न भवति सूत्रनडस्यापत्यं सौत्रनाडिः। किमविशेषेण। नेत्याह। उगिद्वर्णग्रहणवर्जम् *। उगिद्ग्रहणं वर्णग्रहणं च वर्जयित्वा। उगिद्ग्रहणम्। उगितश्च, भवती अतिभवती। महती अतिमहती। वर्णग्रहणम्। अत इञ्। दाक्षिः। प्लाक्षिः। अस्ति चेदानीं कश्चित्केवलोकारः प्रातिपदिकं यदर्थो विधिः स्यात्। अस्तीत्याह। अततेर्डः अस्तस्यापत्यमिः। अकज्ञ्वम्वतः सर्वनामाव्ययधातुविधावुपसंख्यानम् *। अकज्वतः सर्वनामाव्ययविधौ ज्ञम्वतो धातुविधावुपसंख्यानं कर्तव्यम्। अक-

---

मनुभूय विशेष्येण सम्बन्धमुकारादिरनुभवतीति यथोक्तदोषाभावः। समासेति। श्रितादिभिः सुबन्तस्य विशेषणे सति प्राप्तस्तदन्तविधिः प्रतिषिध्यते प्रतिषेधद्वारेण चैतत् प्रदर्श्यते श्रितादयः प्राधान्येनाश्रयितव्याः। तद्विशेषणत्वेन च सुपेति। कष्टं परमश्रित इति। श्रितान्तमेतत् सुबन्तं न भवतीति संबुद्ध्यन्तमुदाहर्तव्यं परमश्रितेति। एतत् प्रत्ययलक्षणेन सुबन्तं भवति श्रितान्तं च श्रूयते। सौत्रनाडिरिति। अनुशतिकादित्वादुभयपदवृद्धिः। नडादीनि प्रातिपदिकेन विशेष्यन्त इति तदन्तविध्यभावः। अतिमहतीति। महान्तमतिक्रान्तेति प्रादिसमासः। तत्र यद्यपि गौरादिषु बृहद् महदिति पठ्यते तथापि अनुपसर्जनाधिकारात् तत्र ङीप् न भवतीति उगिल्लक्षणो ङीप् प्रार्थ्यते। अन्ये तु गौरादिष्वेतयोः प्रमादपाठमाहुः। तथा चोक्तं मद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानमिति। ङीषि सति उदात्तस्य सिद्धत्वात् किं मद्या उदात्तविधानेन। अत इञिति। तदन्तविधावसति ञित्करणमुत्तरार्थं स्यात्। सर्वेक इति।

---

व्याख्यानारम्भकृते विशिष्टस्य वैशिष्ट्यमिति रीत्यैव बोधो न तु विशेष्ये विशेषणमित्यादिरीत्येति तात्पर्यम्। सुबन्तस्येति। सुपेत्युपस्थितस्येति शेषः। तद्विशेषणत्वेनेति। सुबन्तैः श्रितादिभिरित्यर्थ इति भावः। श्रितान्तमिति। विसर्गान्तस्य तदन्तत्वाभावादिति भावः। संबुद्ध्यन्तमिति। इदमुपलक्षणम्। कष्टं परमश्रिता इत्यादेः तदन्तविध्यभाव इति। नडादीनां विशेष्यत्वात्प्रातिपदिकस्य विशेषणत्वेपि तदन्तस्य नडादेरसंभवादिति भावः। अत्र वदन्ति। एवं हि कृष्णश्रितमित्यादेरप्यसिद्धिरितिं भाष्यस्य निर्दलत्वापत्तिः। यत्तु सुप्सहितः श्रितादिभिरिति विवरणकृतः सिद्धान्ताशयवर्णनम्। तन्न। पूर्वकालैकेत्यादौ सुप् इति प्रथमान्ते तथार्थासंभवात् तस्मात् समर्थपरिभाषोपस्थितं समर्थपदार्थं प्रति विशेषणतया प्राप्ततदन्तविधेर्निषेधार्थमिति भाष्याशयः। उपस्थितसमर्थपदञ्च सूत्रीयतत्तत्पदोत्तरविभक्तिसमानविभक्त्यन्तं तस्य च तत्प्रकृतिके लक्षणया सुपेत्यनेनान्वयः। न हि सामर्थ्यं सुबन्तेनैवेति नियमः कुम्भकार इत्यादौ सुपः प्राग्भावेपि तदङ्गीकारात्। परिपूर्णं पदमिति न्यायस्तु यस्योत्तरत्राकाङ्क्षयान्वयस्तद्विषयो न तु यत्रान्वयस्तद्विषय इति कुत्सित इति सूत्रभाष्यात् स्पष्टमेवोपलभ्यते इति दिक्। तत्र यद्यपीति। एवञ्च ङीबभावेपि ङीषा सिद्धिरिति भावः। किन्नद्या इति। सत्यपि पाठे उपसर्जने ङीषप्राप्तौ ङीपि तस्योदात्तत्वाय तच्चारितार्थ्याच्चिन्त्यमिदम्। एवञ्च तस्यावश्यकत्वे पाठो निष्फल इत्यन्यदिति कश्चित्। ननु इञो ञित्वाद्वृद्धिस्वराद्यर्थात् तदन्तविधिस्तत्र न हि अघवस्य यस्येति चेति लोपे तेषां संभवोस्तीत्यत आह

न्ततः सर्वके विश्वके । अव्ययविधौ । उच्चकैः नीचकैः । श्नम्वतः । भिनत्ति छिनत्ति । किं पुनः कारणं न सिध्यति । इह तस्य वा ग्रहणं भवति तदन्तस्य वा, न चेदं तद् नापि तदन्तम् । सिद्धं तु तदन्तान्तवचनात् * । सिद्धमेतत् । कथम् । तदन्तान्तवचनात् । तदन्तान्तस्येति वक्तव्यम् । किमिदं तदन्तान्तस्येति तस्यान्तस्तदन्तस्तदन्तोऽन्तो यस्य तदिदं तदन्तान्तं तदन्तान्तस्येति स तर्हि तथा निर्देशः कर्तव्यः । न कर्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा । उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः खरमुखः । एवमिहापि तदन्तः अन्तो यस्य सोयं तदन्तस्तदन्तस्येति तदेकदेशविज्ञानाद्वा सिद्धम् * । तदेकदेशविज्ञानाद्वा पुनः

---

अकचि कृते शीभावो न स्यात् । उच्चकैरिति । तथैवाकचि कृते लुग्न स्यात् । उच्चकैरधीमा-नेत्यव्ययानां प्रतिषेध इति पराङ्गवद्भावनिषेधो न स्यात् । उच्चकैर्मुखमिति नाव्ययदि-क्शब्देति मुखस्वरनिषेधो न स्यात् । भिनत्तीति धातोरन्त उदात्तो भवतीति उदात्तत्वं न स्यात् । प्रत्ययस्वरेण तु तत्सिध्यतीत्यभिनोत्रेति वक्ष्यति धातोर्विधीयमानं रुत्वं न स्यादिति वक्तव्यम् । अन्ये त्वाहुः । भिनत्तीत्यत्रागमानुदात्तत्वेन प्रत्ययस्वरस्य बाधितत्वात् सति शिष्टः स्वरो धातुस्वर एवेष्टव्यः । सिद्धं त्विति । सर्वशब्दस्य योन्तोऽकारः सोन्तः सर्वकशब्दस्य । एवमन्यत्रापि योज्यम् । तत्र सर्वनामनीत्यन्वर्थसंज्ञाक्षिप्तः संज्ञी सर्वादिभिर्विशेष्यते । अव्ययसंज्ञाक्षिप्तः स्वरादिभिः । धातुसंज्ञाभाजो वा प्रकारा भूवादिभिरिति भावः । उत्तरपदलोप इति । वाचनिकोऽत्र लोपो न तु सामर्थ्याद्गम्यमानार्थस्य निवृत्तिरित्याहुः । अन्ये तु वर्णयन्ति यथावयवदर्शनाद् गौरित्यवयविविषया बुद्धिरुदेति तथेहापि सर्वशब्दस्य योवयवोन्त्यस्तत्रैव सर्वशब्दविषयबुद्ध्युत्पत्त्या तदवयवान्तः सर्वशब्दान्त इति व्यपदिश्यते । अथ वा ऽवयवे समुदायरूपारोपात् तद-

---

न्तरार्थमिति । बाह्वादिरिष्यादौ स्वरादिसिद्धये इति भावः । अकचीति । सर्वजासिति स्थिते ऽन्तरङ्गान पीति न्यायेन शीभावादि बाधित्वा ऽकचि यस्मात्प्रत्ययविधिरित्युक्तेरप्रत्यय इति निषेधाभावे प्रातिपदिकत्वेन सुपो लुकि पुनर्जसि शी न स्यादित्यर्थः । लुगिति । यद्यपि हल्ङ्याब्भ्य इति सूत्रेणापि सोर्लोपः सिध्यति तथापि सर्वविभक्त्युत्पत्तिपक्षे इदम् । पराङ्गेति । तथा चामन्त्रिताद्युदात्तत्वं स्यात् । चितः सप्रकृतेरित्यन्तोदात्तमिष्यते इति भावः । अन्ये त्वाहुरिति । श्नमो मित्वेन परत्वस्य तत्राप्रवृत्तौ तत्संनियोगशिष्टाद्युदात्तत्वाप्रवृत्त्या शेषनिघातेन तस्यानुदात्तत्वप्राप्तिरिति भावः । ननु भिनत्तीत्यादौ यदागमा इति न्यायेन न दोष इति चेन्न । अवयवानामवयविग्रहणेन ग्रहणं हि तद्बीजम् । न चात्र तदस्ति । अन्तावयव इत्यंशस्याप्रवृत्त्या ऽवयवत्वे मानाभावात् । यस्य विहितस्तदन्तावयव इति तदर्थात् । एवञ्च नन्दतीत्यपि एतदुदाहरणं बोध्यम् । भाष्ये च श्नम्वत इत्युपलक्षणं बोध्यमिति कश्चित् । ननु तदन्तान्तस्येति पाठे ऽपि विशेष्यासंनिधानात् । कथं सर्वादीनित्यादावस्य प्रवृत्तिरत आह तथेति । अव्ययेत्यस्यान्वर्थत्वादिः । वस्तुतः शब्दरूपं विशेष्यमादाय वाचनिक एवोभयत्रापि तदन्तविधिरिति वक्ष्यते । इदन्तु चिन्त्यम् । शब्दसंज्ञिनो ऽसत्त्वे हि स्यादव्याक्षेपः सत्त्वे त्वाक्षेपे आक्षिप्तस्य वा विशेष्यत्वे मानाभावात् । किं चान्वर्थत्वं योगरूढत्वं योगरूढस्थले हि योगान्वितरूढ्यर्थस्यैव प्रतीतिर्दृष्टा न तु तयोः परस्परमुद्देश्यविधेयभाव इति कस्य विशेष्यतया तदन्तविधिः स्यादिति बोध्यम् । वाप्रकारा इति । वासदृशा इत्यर्थः । भूवादय इति सूत्रे द्वन्द्वैकशेषगर्भो बहुव्रीहिरिति भावः । एवं हि प्रभूपराभू इत्यादीनामपि धातुसंज्ञा स्यादिति अडाद्यव्यवस्थापत्तिरिति चिन्त्यमिदम् । तस्मादयं समाधिरकञ्विषय एवेति बोध्यम् । एराजित्यादौ तु व्यपदेशिवद्भावेनैतन्न्यासे सिद्धिर्बोध्या न तु सामर्थ्यादिति । उष्ट्रमुखवत् बहुभावादित्यर्थः । यथावयवेति । अवयवी प्रत्यवयवमवयवान्तरसाविभौ

सिद्धमेतत् । तदेकदेशभूतस्तद्ग्रहणेन गृह्यते । तद्यथा । गङ्गा यमुना देवदत्तेति । अनेका नदी गङ्गां यमुनां च प्रविष्टा गङ्गायमुनाग्रहणेन गृह्यते । देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते । विषम उपन्यासः । इह केचिच्छब्दा अकृतपरिमाणानामर्थानां वाचका भवन्ति यएते संख्याशब्दाः परिमाणशब्दाश्च । पञ्च सप्तेति एकेनाप्युपायेन भवन्ति । द्रोणः खारी आढकमिति नैवाधिके भवन्ति न न्यूने। केचिद् यावदेव तद्भवति तावदेवाहुः । य एते जातिशब्दा गुणशब्दाश्च तैलं घृतमिति खार्यामपि भवति द्रोणेपि । शुक्लो नीलः कृष्ण इति हिमवत्यपि भवति वटकणिकामात्रेपि द्रव्ये । इमाश्चापि संज्ञा अकृतपरिमाणानामर्थानां क्रियन्ते ताः केनाधिकस्य स्युः । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति तदेकदेशभूतं तद्ग्रहणेन गृह्यते इति । यदयं नेदमदसोरकोरिति सककारयोरिदमदसोः प्रतिषेधं शास्ति। कथं कृत्वा ज्ञापकम् । इदमदसोः कार्यमुच्यमानं कः प्रसङ्गो यत्सककारयोः स्यात् । पश्यति त्वाचार्यस्तदेकदेशभूतं तद्ग्रहणेन गृह्यते इति ततः सककारयोः प्रतिषेधं शास्ति । कानि पुनरस्य योगस्य प्रयोजनानि । प्रयोजनं सर्वनामाव्यय-

---

न्तता भविष्यति । गौणेनापि ह्यर्थेन शास्त्रव्यवहारो दृश्यते । छत्रपार्श्वायःशूलदण्डाजिनशीतोष्णह्रस्वादिषु । तदेकदेशविज्ञानादिति । मध्यपातिनोऽकजादयस्तदेकदेशा इति तत्त्वबुद्धिं न विघ्नन्ति । अकृतपरिमाणानामिति । परिच्छिन्नपरिमाणानामित्यर्थः । यावदेवेति । अल्पमधिकं वेत्यर्थः । इमाश्चापीति । सर्वाद्युपादानेन संज्ञाः क्रियमाणाः कथं सर्वकादीनां भवन्ति नित्या हि शब्दा विकारोपजनरहिता इति सर्वशब्दः सर्वकशब्द इति न वक्तुं शक्यतइत्यर्थः । एवं तर्हीति । यद्यपि नित्याः शब्दास्तथापि प्रक्रियायामकजादयो विधीयमाना ज्ञापकादव्यतिरेककृत इत्यर्थः । प्रयोजनमिति । अन्वर्थसंज्ञात्विसः संज्ञी सर्वादिभिर्विशेष्यते अपूर्वो वा तदन्तविधिरुपसंख्यायते । एव-

---

समवेत इति भावः । नन्वेवमपि भूयोवयवसंनिकर्षस्यैवावयविप्रत्यये हेतुत्वादेकावयवदर्शने तद्बुद्ध्यभाव इत्यरुचेराह अथवेति। ननु मुख्यविशेषणे चरितार्थं सूत्रं कथमारोपिते स्यादत आह गौणेनापीति । स्वरितत्वगुणयोगाद्यथान्यत्रारोपितार्थकस्य ग्रहणं तथेहापीत्यर्थः । तदेवाह छत्रेत्यादि । छत्रं गुरुच्छिद्रावरणं गौण्योच्यते।तत्रैव हि च्छात्र इष्यते।एवं पार्श्वशब्दो ऽनृजूपाये, अयःशूलशब्दस्तीक्ष्णोपाये दण्डाजिनो दम्भे, शीतो, लसे उष्णः शीघ्रे, गौणः तत्रैव पार्श्वकायः शूलिकदण्डाजिनिकशीतकोष्णकादिप्रयोगेष्टः तस्यादित इत्यत्र चार्धह्रस्वशब्दो ऽर्धमात्रालाक्षणिक इत्याद्यूह्यम् । आदिना ऽऽधारोधिकरणमित्यादिसंग्रहः । मध्यपातिन इति । यस्याकजादिस्तदेकदेशस्तेनाकजादेर्विज्ञानादीति वार्त्तिकार्थः । भाष्ये ( अकृतपरिमाणानामिति ) अत्र परिमाणमानुपूर्वीविशेषो ऽपि । परिमाणेत्युपलक्षणं परिच्छिन्नार्थानान्तदाह सङ्क्षेपेति । भाष्ये ( अर्थानामिति ) संज्ञिभूतानां शब्दानामित्यर्थः । नन्वधिकगङ्ग्वादिजननेपि शुनः श्वत्ववद् अकस्याधिकस्योपजनेपि सर्वकस्य सर्वशब्दत्वमक्षतमेवेत्यत आह नित्याइति । वस्तुतः परिच्छिन्नपरिमाणकग्रहणे एकदेशविकृतन्यायस्याप्यप्रवृत्तिरिति भाष्याशयः । ननु नित्यशब्दवादे ऽकज्वतः शब्दान्तरत्वादकजादेः सर्वाद्येकदेशत्वमसिद्धमित्यत आह यद्यपीति । अव्यतिरेककृत इति । अनवयवत्वेपि ज्ञापकाद् भेदबुद्धिं न कुर्वन्ति इत्यर्थः । एकदेशसादृश्यञ्च मध्यपातित्वेन बोध्यम् । ननु सर्वनामत्वे संज्ञोपसर्जनप्रतिषेधवार्त्तिकारम्भेण वार्त्तिककृतोन्वर्थत्वं मेष्टं किं च संज्ञिनाद्युपाचत्वेनाक्षेपे मानाभाव इत्यत आह अपूर्वो वेति । एतद्वार्त्तिकमूलाद् व्याख्यानाद्व्या-

संज्ञायाम् *। सर्वे परमसर्वे विश्वे परमविश्वे उच्चैः परमोच्चैः नीचैः परमनीचैरिति। उपपदविधौ भयाढ्यादिग्रहणम् *। प्रयोजनम्। भयङ्करः। अभयङ्करः। आढ्यङ्करणं स्वाढ्यङ्करणम्। ङीब्विधावुगिद्ग्रहणम् *। प्रयोजनम्। भवती अतिभवती। महती अतिमहती। प्रतिषेधे स्वस्रादिग्रहणम् *। प्रयोजनम्। स्वसा परमस्वसा। दुहिता परमदुहिता। अपरिमाणबिस्तादिग्रहणं च प्रतिषेधे *। प्रयोजनम्। अपरिमाणविस्ताचितकम्बल्येभ्यो न ताद्धितलुकीति। द्विविस्ता। द्विपरमविस्ता। त्रिविस्ता त्रिपरमविस्ता। द्व्याचिता द्विपरमाचिता। दितिग्रहणं च *। प्रयोजनम्। दितेरपत्यं दैत्यः। अदितेरपत्यमादित्यः। दित्यदित्यादित्येत्यदितिग्रहणं च कर्तव्यं भवति। रोण्या अण् *। रोण्या अण्ग्रहणं च प्रयोजनम्। आजकरौणः। सैंहिकरौणः। तस्य च *। तस्य चेति वक्तव्यम्। रौणः। किं पुनः कारणं न सिध्यति न तदन्ताच्च तदन्तविधिना सिद्धं केवलाच्च व्यपदेशिवद्भावेन। व्यपदेशिवद्भावो ऽप्रातिपदिकेन। किं पुनः कारणं व्यपदेशिवद्भावो ऽप्रातिपदिकेन। इह सूत्रान्ताट्ठग्भवति दशान्ताड्डो भवतीति केवलादुत्पत्तिर्मा भूदिति। नैतदस्ति प्रयोजनम्। सिद्धमत्र तदन्ताच्च तदन्तविधिना केवलाच्च व्यपदेशिवद्भावेन। सो ऽयमेवं सिद्धे सति यदन्तग्रहणं करोति तज्ज्ञापयत्याचार्यः सूत्रान्तादेव दशान्तादेवेति। नात्र तदन्तादुत्पत्तिः प्राप्नोति।

---

मुत्तरत्र विज्ञेयम्। उपपदविधाविति। भयाढ्यादिभिः कर्म विशेष्यते। क्षेमप्रियमद्रेऽण् चेत्यत्र तु कर्मणा क्षेमादय इति तदन्तविध्यभावः। प्रतिषेध इति। विधीयत इति विधिः सामान्येन गृह्यते इति प्रतिषेधेऽपि तदन्तविधिर्भवति। स्वस्रादिभिः प्रातिपदिकस्य विशेषणात्। द्विपरमविस्तेति। द्विगुना सन्निधापितमुत्तरपदं बिस्तादिभिर्विशेष्यते इति तदन्तविधिः। दितिग्रहणं चेति। परमदित्यादिभ्यस्त्वनभिधानाद् ण्यो न भवति। तस्य चेति। स्वं रूपमित्यस्यानुवृत्तिं वार्त्तिककारो नेच्छति तथा चाद्यन्तवदित्यत्र येन विधिस्तदन्तत्वइति प्रयोजनमवोचत्। व्यपदेशिवद्भावोऽप्रातिपदिकेनेति। ननु रोणीशब्दो न प्रातिपदिकं प्रत्ययान्तत्वात्। नैष दोषः। अप्रातिपदिकेनेत्यत्र वाक्ये

---

वर्त्तकमपि शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः। भयङ्कराद्यादि चेति छन्दमभिप्रेत्याह क्षेमेति। विधीयते इति। सूत्रे विधिशब्देन प्रतिषेधनिरोधो न विवक्षित इति भावः। ननु स्वरूपमित्यनुवृत्त्या स्वस्यापि संज्ञासिद्धौ किं तस्य चेत्यनेनात आह स्वमिति। तेन सूत्रप्रत्याख्यानादिति तात्पर्यम्। प्रत्ययान्तत्वादिति। स्त्रीप्रत्ययान्तत्वादित्यर्थः। स्वरूपविधिविषयैवेति। प्रातिपदिकविशेषोपादानविहितकार्यविषयैवेत्यर्थः। (किं पुनःकारणमिति) भाष्ये कारणशब्दः प्रयोजनवाची। तज्ज्ञापयतीति। बोधयतीत्यर्थः। अन्तग्रहणं नियमार्थमिति तात्पर्यम्। नात्र तदन्तादिति। ननु समासप्रत्ययविधाविष्यस्य विशेषणविशेष्यभावव्यवस्थासमातात्पर्यग्राहकतया दित्यादाविवात्रापि तदन्तविधिसंभवेनान्तग्रहणसामर्थ्यादेव केवले प्रवृत्तौ अप्रातिपदिकेनेति व्यर्थम्। एतेन ग्रहणवतेति निषेधात्तदन्तविधिर्दुर्लभ इत्यपास्तम्। किं च परमादित्यादिभ्य इवानभिधानेन केवले प्रवृत्तिरिति व्यर्थैव सेति चेन्न। विशेषणविशेष्यभावव्यवस्थासतात्पर्यग्राहकतया समासेत्यादिनिषेधवचनवदस्याप्यावश्यकत्वात्सूत्रभाष्यवार्त्तिकारूढतात्पर्यग्राहकाभावेऽपि तदन्तविधिकल्पनेति प्रसङ्गापत्तेः। अत एवोगिद्वर्णग्रहणवर्जमित्यादेश्चारितार्थ्यम्। अनभिधानेन प्रत्याख्यानन्तु न चमत्कारकारि।

इदानीमेव ह्युक्तं समासप्रत्ययविधौ प्रतिषेध इति सा तर्ह्येषा परिभाषा कर्तव्या। न कर्तव्या। आचार्यप्रवृत्तिर्ज्ञापयति व्यपदेशिवद्भावो ऽप्रातिपदिकेनेति। यदयं पूर्वादिनिः सपूर्वाच्चेत्याह। नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किम्। सपूर्वादिनिं वक्ष्यामीति। यत्तर्हि योगविभागं करोति इतरथा पूर्वात्सपूर्वादिनिरित्येव ब्रूयात्। किं पुनरयमस्यैव शेषस्तस्य चेति। नेत्याह। यच्चानुक्रान्तं यच्चानुक्रंस्यते सर्वस्यैव शेषस्तस्य चेति। रथसीताहलेभ्यो यद्विधौ॥ प्रयोजनम्। रथ्यः परमरथ्यः। सीत्यं परमसीत्यम्। हल्या परमहल्या। सुसर्वार्द्धदिक्छब्देभ्यो जनपदस्य॥। प्रयोजनम्। सु, सुपाञ्चालकः। सुमागधकः। सु। सर्व, सर्वपाञ्चालकः। सर्वमागधकः। सर्व। अर्ध, अर्धपाञ्चालकः। अर्धमागधकः। अर्ध। दिक्शब्द, पूर्वपाञ्चालकः। अपरपाञ्चालकः। पूर्वमागधकः। अपरमागधकः। ऋतोर्वृद्धिमद्विधाववयवानाम्॥। प्रयोजनम्। पूर्वशारदम्। अपरशारदम्। पूर्वनैदा-

---

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति वचनात्। स्त्रीप्रत्ययान्तैरपि व्यपदेशिवद्भावो न भवति। न च लिङ्गविशिष्टपरिभाषा स्वरूपविधिविषयैवेति प्रातिपदिकसूत्रे वक्ष्यते। सपूर्वादिनिमिति। पूर्वग्रहणेत्युक्ते सपूर्वादिनिरित्युच्यमाने सर्वस्मात् सपूर्वात्प्राप्नोतीति कथं ज्ञापकमित्यर्थः। यच्चानुक्रान्तमिति। अप्रातिपदिकेनेति तु निषेधो यत्रान्तग्रहणं सूत्रेणैवोपात्तं तत्र। यथा दशान्तादुड इति दशाधिका अस्मिन् शतइत्यत्र न भवति। यद्विधाविति। ठग्विधौ तु तदन्तविधेरभावात्पारमहलिक इति ठग्न भवति। ऋतोरिति। ऋतुवाचिनः शब्दाद्यो वृद्धिमान् प्रत्ययस्तद्विधानेऽवयवानां तदन्तविधिः। शरदः पूर्वो भागः पूर्वशरत् तत्र भवमिति ऋतुलक्षणोऽण्। तत्र वृद्धिम-

---

सा तर्ह्येषेति। व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्येषा। यदयमिति। पूर्वादित्यंशो ज्ञापक इत्यर्थः। सर्वस्मादिति। पूर्वशब्दव्यतिरिक्तादपीत्यर्थः। भाष्ये (यत्तर्हि योगविभागमिति) नचेष्टादिभ्यश्चेत्यत्रानुवृत्त्यर्थं तथा पाठः अत एवानिष्टीति प्रयोगासिद्धिरिति वाच्यम्। एतद्भाष्यप्रामाण्येन तत्प्रयोगाभावानुमानात्। प्रकारान्तरेण सिद्धौ तु नास्माकं क्षतिः। एकयोगेऽपि तावति स्वरितत्वप्रतिज्ञासामर्थ्येन तावत उत्तरत्रानुवृत्तिसिद्धेश्चेति दिक्। एवञ्च रोपीत्यादौ केवलस्याप्राप्तेस्तस्य चेति वक्तव्यमिति सिद्धम्। ननु तदन्तविधिविषये तस्य चेत्यनेन केवलादपि चेद् व्यपदेशिवद्भावोऽप्रातिपदिकेनेति व्यर्थमत आह अप्रातिपदिकेनेति। ज्ञापकस्य सजातीयापेक्षत्वादिति भावः। अत एव पूर्वादिनिरित्येव तदन्तविधिना सिद्धे सपूर्वाच्चेत्यस्य ग्रहणवतेति परिभाषाज्ञापकत्वं कैयटोक्तं सङ्गच्छते। यत्रान्तेति। अन्तग्रहणमुपलक्षणम्। अत एव एकगोपूर्वादित्यस्य केवलैकशब्दे न प्रवृत्तिः। ग्रहणवतेत्यपि प्रत्ययविधौ निषेधस्यैवानुवादकं लाघवात्। स्पष्टञ्चेदम् असमासे निष्कादिभ्य इति सूत्रे भाष्यकैयटयोः। रथ्ये,। तद्वइति रथांति यत्। सीत्ये, नौवयोधर्मेति। हल्ये। मतजनहलात्करणजल्पकर्षेष्विति यत्। भाष्ये (परमरथ्य इति)। रथाद्यदित्यङ्गवोढ्टरित्येवं शैषिकप्रकरणे पाठं सिद्धे तद्वहतीत्यत्र रथग्रहणं रथांशे तदन्तविधौ ज्ञापकं शैषिके यति हि द्विरथ इत्यादौ द्विगोर्लुगिति लुक्। तत्र सूत्रे ऽचीति न संबध्यते ऽनभिधानाच्च नातिप्रसङ्गः। वहत्यर्थे तु द्विरथ्य इत्येव। तस्याप्राग्दीव्यतीयत्वात्। इतरयोस्तु वाचनिक एव। यत्तु हलसीरात् ठगित्यपि तस्येदन्तद्वहतीत्यधिकारे च द्विः पठ्यते तत्तु इदंशब्देन वोढृरूपार्थग्रहणज्ञापकं तदाह ठङ् न भवतीति। भाष्ये (सुपाञ्चालकइत्यादि)। जनपदेऽधिकारे अवृद्धादपि बहुत्वेति वुञ् तद्विधौ चायन्तदन्तविधिः। सुसर्वार्धाज्जनपदस्य, दिशो ऽमद्राणामिति उत्तरपदवृद्धिः। वृद्धिमानिति। वृद्धिनिमित्तमित्यर्थः। अवयवानामिति। पूर्वपदत्वे इति शेषः। शरदइति। पूर्वापराधरेत्येकदेशिसमासः। सन्धिवेलाद्यृतुभ्य इति अण्। अवयवादृतोरित्युत्तरपदवृद्धिः। ननु शरच्छब्द एव कालवाची न पूर्वशरच्छब्द इति

घम्। अपरनैदाघम्। ठञ्विधौ संख्यायाः*। प्रयोजनम्। द्विषाष्टिकम् पञ्चषाष्टिकम्। धर्मान्नञः *। प्रयोजनम्। धर्मं चरति धार्मिकः। अधर्मं चरति आधर्मिकः। अधर्माच्चेति न वक्तव्यं भवति। पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च *। पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति वक्तव्यम्। पदाधिकारे किं प्रयोजनम्। प्रयोजनमिष्टकेषीकामालानां चिततूलभारिषु। इष्टकचितं चिन्वीत। पक्वेष्टकचितं चिन्वीत। इषीकतूलेन मूञ्जेषीकतूलेन। मालभारिणी कन्या उत्पलमालभारिणी कन्या। अङ्गाधिकारे किं प्रयोजनम्। प्रयोजनं महदप्स्वसृनप्तॄणां दीर्घविधौ*। महान् परममहान्। महत्। अप्, आपस्तिष्ठन्ति स्वापातिष्ठन्ति। अप्। स्वसृ, स्वसा स्वसारौ स्वसारः परमस्वसा परमस्वसारौ परमस्वसारः। स्वसृ। नप्तृ, नप्ता नप्तारौ नप्तारः। एवं परमनप्ता परमनप्तारौ परमनप्तारः। षष्ठ्युष्मदस्मदस्थ्या-

---

दिति वचनात्प्रावृष एण्य इत्यत्र तदन्तविधिर्न भवति तेन ऋत्वणेव भवति पूर्वप्रावृष-मिति। प्रावृट्शब्दो वर्षापर्यायः। अवयवानामिति किम्। पूर्वस्यां शरदि भवं पौर्वशा-रदिकमित्यण् न भवति कालाट्ठञित्येव भवति। तत्र हि यथाकथंचित्कालवाचिनो गृह्यन्ते। द्विषाष्टिकमिति। द्वे षष्टी परिमाणमस्येति समासे कृते आर्हादिति ठञ् भव-ति संख्यायास्तदन्तविधौ सति संख्यान्तादपि ठक्प्रतिषेधात् तेन प्राग्वतेरिति ठञ् भवति। अध्यर्धपूर्वेति लुग्न भवति। सास्यांशवस्नभृतय इत्यतः सोस्येत्यनुवर्तमाने तदस्य परिमाणमित्यत्र पुनः प्रत्ययार्थे समर्थविभक्तिनिर्देशात् कृते वा लुकि पुनस्त-न्निर्देशसामर्थ्यात् पुनः प्रत्ययः। तद्विधानसामर्थ्याच्च पुनर्लुगभावः। पदाङ्गाधिका-रइति। पदशब्देनोत्तरपदं गृह्यते पदैकदेशलोपाद् उत्तरपदेन सामर्थ्यादाचितं पूर्वपद-मिष्टकादिभिर्विशेष्यते। महदप्स्वसॄणामिति। महदादिभिरङ्गं विशेष्यते। स्वाप इति। न

---

कथं ठञित्यत आह तत्र हीति। अत एव सन्धिवेलादिसूत्रे नक्षत्राणां कालेन विशेषणं सङ्ग-च्छते। भाष्ये (ठञ्विधौ सङ्ख्याया इति)। तदस्य परिमाणं सङ्ख्यायाः संज्ञेति सूत्रे इति भावः। द्वे षष्टी परिमाणमस्येति। सङ्ख्यादिरस्य विशेष्यः। प्रतिषेधादिति। आर्हादगोपुच्छेत्यनेन तस्य प्रत्ययप्रतिषेधस्वात्तत्र तदन्तविधिर्भविष्यत्येव। तेन प्राग्वतेरिति ठञ्विधायके सङ्ख्यायाः संज्ञेति सूत्रे तदन्त-विधिसत्त्वेन प्राग्वतेरित्यधिकारप्राप्तष्ठञ् भवतीत्यर्थः। पुनः प्रत्ययार्थसमर्थेति। अस्येति प्रत्ययार्थः। तदिति समर्थविभक्तिः अनुवर्त्तमानस्य लुक्संबद्धतया पुनरुपादानेन तद्विलक्षणत्वसूचनाऽनेन विहितस्य लुगभाव इत्यर्थः। कृते वेति। अनुवर्त्तमानसोऽस्येति सहितपरिमाणमित्यनेन विहितस्य लुकि पुनस्तदस्य परिमाणमिति वचनसामर्थ्यात्स्वार्थे तज्जातीयप्रत्यये तस्य विधानसामर्थ्याद्द्विगुनिमित्तत्वाभावाद्वा लुग-भाव इत्यर्थः। इदं वृत्तिकारमतेनोक्तम्। वस्तुतस्तु तदस्येति पुनरुपादानमात्रेणार्हीयत्वापगमे तत्त्वेपि लुगभावे वा द्वे षष्टी जीवितपरिमाणमस्येत्यर्थे अनेन ठञि लुकमाशङ्क्य कालादित्यधिकारस्थेन तमधीष्ट इति सूत्रेण ठञा द्विषाष्टिकः साधितो भाष्ये कालग्रहणेन यथा कथंचित् कालवाचिनो ग्रहणमिति चोक्तं तद्विरुध्येत। त्वद्रीत्या ऽनेनापि ठञि लुगभावात्। तस्माद्द्वे षष्टी परिमाणमस्य सङ्घस्य स परिमाण-मस्येति भाष्योदाहरणार्थः तत्र द्विगुनिमित्तत्वाभावान्न लुक्। सङ्घे द्विषष्ट्यनतिरेकस्यापि सत्त्वात्तस्यापि सङ्ख्याशब्दत्वमित्यपरे। भाष्ये (पदाङ्गेति)। तदन्तविधेरपवादोयम्। अत एव तस्य चेति पुनरभिहितं तदन्तविधौ हि बह्वच्पूर्वेपि स्यात्तच्च नेष्टमिति वार्त्तिकाशयः। पदशब्देनेति। अत एव भाष्ये उत्तरपदा-धिकारे प्रयोजनदानम्। तदन्तविध्यपवादत्वादस्यापि विशेषण एव प्रवृत्तिरित्याशयेनाह उत्तरपदेनेति।

अनडुहो नुम् * । पद्भावः प्रयोजनम् । द्विपदः पश्य । अस्ति चेदानीं कश्चित्केवलः पाच्छब्दो यदर्थो विधिः स्यात् । नास्तीत्याह । एवं तर्हि अङ्गाधिकारे प्रयोजनं नास्तीति कृत्वा पदाधिकारस्य प्रयोजनमुक्तम् । हिमकाषिहतिषु च । यथा पत्काषिणौ पत्काषिणः एवं परमपत्काषिणा परमत्काषिणः । यदि तर्हि पदाधिकारे पादस्य तदन्तविधिर्भवति । पादस्य पदाज्यातिगोपहतेषु यथेह भवति पादेनोपहतं पादोपहतम् अत्रापि स्यात् । दिग्धपादेनोपहतं दिग्धपादोपहतमिति । एवं तर्ह्यङ्गाधिकारएव प्रयोजनम् । ननु चोक्तं न केवलः पाच्छशब्द इति अयमस्ति पादयतेरप्रत्ययः पात् । पदः पदा । पदे । पत् । युष्मत् अस्मत् , यूयं वयम् । परमयूयं परमवयम् । अस्थ्यादि । अस्थ्ना दध्ना सक्थ्ना । परमास्थ्ना परमदध्ना परमसक्थ्ना । अनडुहो नुम् । अनड्वान् परमानड्वान् । द्युपथिमथिपुंगोसखिचतुरनडुद्ग्रिग्रहणम् * । प्रयोजनम् । द्यौः सुद्यौः । पन्था सुपन्थाः । मन्थाः परममन्थाः । पुमान् परमपुमान् । गौः सुगौः । सखा सखायौ सखायः । सुसखा सुसखायौ सुसखायः। परमसखा परमसखायौ । चत्वारः परमचत्वारः । अनड्वाहः परमानड्वाहः । त्रयाणां परमत्रयाणाम् । सखादिविधिभ-

---

पूजनादिति समासान्तनिषेधः । अपो भीतिंतत्वमपि स्वाद्भिरिति भवति । द्विपद इति । पादः पदित्यत्र पाच्छब्देनाङ्ग विशेष्यते । पादस्य पदेति । ननु पद्भावे तदन्तविधिरुक्तोयं तु पदभावविधिः । नैव दोषः । पादशब्देन पूर्वपदस्य विशेषणात्पद्भावे तदन्तविधिः । अनेनैव न्यायेन पद्भावेपि तदन्तविधिप्रसङ्गः । यथाभूतः पूर्वसूत्रे पादशब्दो निर्दिश्यते तथाभूतस्योत्तरत्रानुमानात् । एवं तर्हीति । एवं च परमपादेन कषतीति विवक्षया परमपादकाषीति भवति यदा तु परमः पत्काषीति विवक्षा तदा परमपत्काषीति भवति । पादयतेरिति । पदेर्ण्यन्तादित्यर्थः । परमपन्था इति क्व चित्पाठः सत्वयुक्तः समासान्तविधानात् । न पूजनादित्यत्र पूजायां स्वतिग्रहणमिति वचनान्नास्ति निषेधः । तस्मात्सुपन्था इति पाठः । परमगौरित्यप्यपपाठः । गोरतद्धितलुकीति टज्विधानात् तस्मात्

---

शब्दरूपं विशेष्यमादायेत्यन्वे । समासान्तनिषेध इति । ऋक्पूरधिति मात्रे । अत एव द्यन्तरुपसर्गेतीत्यं न । तत्रम-तन्न ह्यप इति कृतसमासान्तानुकरणम् । व्यत्ययेन षष्ठ्यर्थे प्रथमा अत्र चेदमेव भाष्ये मानमित्याहुः । तत्रम-पीति । वार्त्तिकस्य न दीर्घविधाविति विषयनिर्देशनेनं विरुध्यते । भाष्ये पद्युष्मदस्मदस्थ्यादीति समस्तं पृथक्पदं अनडुह इति त्वसमस्तम् । अन्यथा नुमोऽनडुच्छब्दसमाचान्वयित्वेनासामर्थ्यात्समासो न स्यात् । वाक्यार्थं दयां ऽनडुहो नुम् च तदन्तविधिं प्रयोजयन्तीत्यर्थः। समासे एव पादस्य लोप इत्यन्तलोपविधानात्सामर्थ्यादेव तदन्तविधिर्भविष्यतीत्याशयेन काक्वा पृच्छति । भाष्ये (अस्ति चेति)। आचार्यदेशीय आह एवन्तर्हीति । संनिधिलिङ्गं बलीय इति भावः । तदन्तविधिरिति । तदपवाद उत्तरपदविधिरित्यर्थः । अर्थाधिकाराश्रयेण परिहरति नैवेति । नन्वेवं पादशब्देन तदन्तविध्यभावे परमपत्काषिणाविति पूर्वोदाहृतासङ्गतिरत आह एवञ्चेति । अर्थभेदेन तत्साधितमिति भावः । पादशब्दादाख्यातणिचि णिनिमित्तकटिलोपस्य स्थानिवत्त्वात्पद्भावो न प्राप्नोति । पदेरिति । क्वौ लुप्तमिति निषेधान्न णिलोपस्य स्थानिवत्त्वमित्यर्थः । अत एव पादस्य पादरूपस्यादेश इति नाश्रयेरिति ।

स्वादिस्त्रीग्रहणं च * । प्रयोजनम् । सः अतिसः । भस्त्रका भस्त्रिका बहुभस्त्रका बहुभस्त्रिका । निर्भस्त्रका निर्भस्त्रिका । स्त्रीग्रहणं च प्रयोजनम् । स्त्रियौ स्त्रियः । राजस्त्रियौ राजस्त्रियः । वर्णग्रहणं च सर्वत्र । * प्रयोजनम् । क्व सर्वत्र अङ्गाधिकारे चान्यत्र च । अन्यत्रोदाहृतम् । अङ्गाधिकारे । अतो दीर्घो यञि, सुपि च । इहैव स्याद् आभ्याम् । घटाभ्यामित्यत्र न स्यात् । प्रत्ययग्रहणं चापञ्चम्याः * । प्रत्ययग्रहणं च अपञ्चम्याः प्रयोजनम् । यञिञोः फग्भवति । गार्ग्यायणः । वात्स्यायनः । परमगार्ग्यायणः परमवात्स्यायनः । दाक्षायणः पर-

---

सुगौरिति पाठः । परमसखायाविति बहुव्रीहिः । तत्पुरुषे तु टचा भाव्यम् । अनडुच्छब्दस्येह प्रपञ्चार्थः पाठः । अनडुहो नुमित्यत्र एव वचनादादित्यधिकारादमामोः कृतयोर्नुम्विधानात् नुम्विधौ तदन्तविधिना अमामोरपि तदन्तविधेराक्षेपात् । अन्ये त्वाहुः । असतीह पुनर्ग्रहणे यत्रैव नुम् क्रियते तत्रैवामामौ तदन्तस्य स्याताम् । परमानड्वाह इत्यत्र त्वाम्न स्यादिति पुनः पाठः कर्तव्यः पूर्वत्रापि पाठो नुमर्थः कर्तव्यः । अन्यथा अमामोरेव तदन्तविधिः स्यान्न तु नुम्विधौ । अतिस इति । शोभनः स इत्यर्थः । उपसर्जने तु तच्छब्दार्थे अतितादिति भवति बहुभस्त्रिकेति । नञ्पूर्वाणामपीति न वक्तव्यं भवति । वर्णग्रहणं चेति । यद्येवमुगिद्वर्णग्रहणवर्जमित्यत्र किमर्थं वर्णग्रहणम् । उच्यते । प्रत्ययविधौ तदन्तविधिप्रतिषेधाद्वर्णग्रहणे प्रत्ययविधौ प्रतिषेधाशङ्कानिरासार्थम् । प्रत्ययग्रहणं चापञ्चम्या इति । प्रत्ययग्रहणे यस्मात् स विहित इति सिद्धे तदन्तविध्यावपञ्चम्या इति प्रतिषेधार्थं वचनम् । यत्र पञ्चम्यन्तात् परः प्रत्ययः कार्यान्तरविधानाय परिगृह्यते तत्र तदन्तविधिर्मा भूत् यथा रदाभ्यामित्यत्र तत्र हि तदन्तविधौ रेफदकाराभ्यामुत्तरो यो निष्ठान्तस्तस्य नत्वं स्यात् । न च संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्तीति निषेधावतारः । यत्र हि संज्ञाविधानं तत्रायं निषेधः । इह तु निष्ठानुवादेन नत्वविधिः । संज्ञाविधौ तर्हि तदन्तविधिनिषेधस्य किं फलम् । उच्यते । यदि संज्ञाविधौ प्रत्ययग्रहणे तदन्तस्य संज्ञा स्यात् प्रदेशेषु पुनस्तदन्तविधिः

---

सि। तया सति तस्यैव प्रतिपदोक्तत्वात्पद्भावः स्यान्नास्येति तात्पर्यम्। इह सुपथीति प्रयोजनवार्त्तिके। इत्यत एवाति । पद्युष्मादिति वार्त्तिकस्थादित्यर्थः । आदित्यधिकारादिति । भाच्छीत्यतः । अन्यथा नुम् बाधकः स्यात् । अमश्च नुमो बाधकः स्यादिति भावः । अन्यथा ऽमामोरेवेति । यतुः साहचर्यादिति भावः । अन्यत्र चेति भाष्यादङ्गाधिकारादन्यत्र प्रत्ययविधानेऽपि वर्णग्रहणे तदन्तविधिरिति मत्वा नोदयति यद्येवमिति । अत्यथेत्यनेन भाष्यणेको भलित्यादौ निषेधाभावात्तदन्तविधिरनुज्ञायते । एवञ्च प्रत्ययविधौ वर्णग्रहणे स प्रतिषेध एव स्यादतस्तत्र. वर्णग्रहणमिति परिहराति उच्यत इति । सिद्धे तदन्तविधाविति । उक्तवचनेन वाचनिक इत्यर्थः । यत्तु प्रत्ययाक्षिप्तप्रकृतिप्रत्ययावयवकसमुदायस्य विशेषणादेतत्सूत्रासिद्ध एव स इति । तन्न । तादृशार्थस्य नियताक्षेपे आक्षिप्तस्यं वा शास्त्रेऽन्वये मानाभावात् । किं च वनो र चेत्यादौ समासप्रत्ययविधाविव्यनेनास्यापि निषेधापत्तिः । मम तु सौत्रस्यैव स निषेध इति न दोषः । पञ्चम्यन्तात्परः प्रत्ययो यत्र कार्यान्तरविधानायानूद्यते यद्भिन्नस्थले प्रत्ययग्रहणं तदन्तविधेः प्रयोजनमिति वार्त्तिकार्थस्तदाह यत्रेत्यादि । परिगृह्यते अनूद्यते । नत्वं स्यादिति । वृषत्तीर्णेत्यादौ धातोस्तकारस्य तत्पूर्वदस्य च तत्स्यादित्यर्थः । न च संज्ञाविधाविति। संज्ञाया विधावित्यर्थ इत्यभिमानः। यत्र हीति। संज्ञाया विधौ स निषेधो नतु संज्ञया विधौ तर्हीति । प्रदेशेषु तदन्तग्रहणं यदि तर्हि इत्यर्थः । पुनस्तदन्तेति । धातुभिरुत्तरपदस्य विशेषणादिति

मद्राक्षायणः॥। अपञ्चम्या इति किमर्थम् । दृषत्तीर्णा परिषत्तीर्णा । अलैवानर्थकेन । नान्येनार्थकेनोत वक्तव्यम् । किं प्रयोजनम् । हन्ग्रहणे प्लीहन्ग्रहणं मा भूत् । उदग्रहणे गर्मुद्ग्रहणम् । स्रीग्रहणे शस्त्रीग्रहणम् । सिग्रहणे पायसङ्करोतीति मा

---

स्यादिति प्रत्ययान्तान्तं गृह्येत यस्मात्संज्ञाविधावपि तदन्तविधिनिषेधो रदाभ्यामित्यत्र च । अपञ्चम्या इत्यत्र नायमर्थः । यत्र पञ्चम्यन्तात्प्रत्ययो विधीयते तत्र तदन्तविधिर्न भवतीति । एवं हि व्याख्यायमाने ञ्नित्य तत्प्रत्ययादित्यत्र तत्प्रत्ययादेवाञि विधीयमाने तस्यैवाङ्गसंज्ञायां वृद्धिस्वरौ स्यातां न तु तदन्तस्येतीति । परमगार्ग्यायण इति । तत्र गार्ग्यायण इत्येवोदाहरणम् । गार्ग्यशब्दाद्यञन्ताद् फग्विधानाद् न त्वत्र परमगार्ग्यशब्दात्प्रत्ययस्तस्य यञन्तत्वाभावात् । तस्माच्च फकि विधीयमाने पारमगार्ग्यायण इत्यनिष्टरूपप्रसङ्गः । तस्मादेतन्न्यायव्युत्पादनार्थं परमगार्ग्यायण इत्युपन्यस्तम् । उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविध्यभावो लेखग्रहणेन ज्ञापितः । तत्र रदाभ्यामित्यत्र निष्ठायाः प्राधान्येनाश्रयणात्तदन्तविध्यभावः । स्यतासी लृलुटोरित्यत्र धातोरित्यधिकारादपञ्चम्या इति निषेधाल्लृलुटोर्वा प्राधान्येनाश्रयणात्तदन्तविध्यभावः । अलैवानर्थकेनेति । अर्थवद्ग्रहणे नानर्थकस्येति वर्णनिर्देशेषु नाश्रीयतइति स्थितम् । वर्णरूपतया यस्य शब्दस्याश्रयणं नार्थवत्तारूपमाश्रीयते । तत्र वर्णग्रहणं च

---

भावः । तस्मादिति । संज्ञाविधौ प्रत्ययग्रहणे इति प्रत्ययग्रहणे चापञ्चम्या इति वचनाभ्यामिति भावः । नायमर्थ इति । प्रत्यासत्त्या चास्यार्थस्य प्रसक्तिः । पञ्चम्यन्तादिति । पञ्चम्यन्तनिर्दिष्टप्रत्ययादित्यर्थः । समासप्रत्ययविधाविति तु सौत्रस्य निषेध इति न तेनास्य गतार्थतेति भावः । तत्प्रत्ययादेव । विकारावयवविहितप्रत्ययादेव । एवञ्चोष्ट्रविकारादौष्ट्रकादञि वुञ एव वृद्धिस्वरौ स्यातामित्यर्थः । भाष्ये ( यञिञोश्चेति ) । यद्यपि ङ्याप्प्रातिपदिकादित्यधिकारादपञ्चम्या इति निषेधस्तत्र प्राप्नोति तथापि न तद्व्यधिकरणं विशेषणं किं तु यञिञोरिति पञ्चम्यर्थे षष्ठीसत्त्वात् तस्य समानाधिकरणं विशेष्यमिति अपञ्चम्या इत्यस्याविषयोयमिति भावः । तस्मादिति । प्रत्ययग्रहणे यस्मात्स विहित इति नियमोऽपि तदन्तावधारणेऽपेक्ष्य एव । एतत्सिद्ध एव च तदन्तविधिस्तत्रानूद्यते उक्तनियमबोधनाय । अन्यथा परमगार्ग्यशब्दात् फकि पारमगार्ग्यायण इति स्यादिति न्यायव्युत्पादनार्थमित्यर्थः । नन्वेतद्रीत्या परमश्चासौ गार्ग्यायण इति भाष्योदाहरणार्थः । नहीदृशेर्थे परमगार्ग्यशब्दस्य प्रकृतित्वसंभावनापीति कथमेतन्न्यायप्रदर्शनमनेन भाष्येणेति चेन्न । परमगार्ग्यैकदेशगार्ग्यशब्दादेव प्रत्ययः परमगार्ग्यस्यापत्यमित्यर्थेऽपि उक्तन्यायादित्यदोषात् । विशिष्टैकार्थीभावे ऽवयवेनापि तस्य सत्त्वमस्त्येव । निष्कृष्टैकार्थीभाव एव वृत्तौ निमित्तमित्यत्र न मानम् । अत एवानुपसर्जनादिति सूत्रे कुम्भकारीशब्दैकदेशात्कारीशब्दाद्व्युत्पत्तिः शङ्किता भाष्ये । अस्य कैयटस्याप्ययमेव तात्पर्यम् । एतन्न्यायेऽस्यापि यस्माद्विहित इत्यादिन्यायेन समस्तैकदेशात्प्रत्यय इत्येतन्न्यायेत्यर्थः । न चैवं सुपि च रोः सुपीत्यादौ सुबन्ते इत्यर्थापत्तिः । न हि तत्र पञ्चम्यन्तात्सत्त्वेन प्रत्ययो विशेष्यत इति वाच्यम् । तस्मिन्निति परिभाषया सुपि परे इत्यर्थे नियमेन कस्मादित्यवधिसाकाङ्क्षत्वेनोपस्थिताङ्गादेरेवावधित्वेनान्वयेन पञ्चम्यन्तस्य विशेषणत्वेन निषेधप्रवृत्तेरित्याहुः । ननु येन नाप्राप्तिन्यायेनायं निषेधो वाचनिकतदन्तविधेरेवेति घरूपेत्यादौ उत्तरपदस्य विशेष्यतया प्राप्तस्तदन्तविधिः स्यादेवेत्यत आह उत्तरपदेति । अन्यथा हृदयस्य हृल्लेखयदण्लासेष्वित्यत्राण्ग्रहणेनैव सिद्धे लेखग्रहणं व्यर्थं स्यात् । लेख इत्यणन्तमेव तत्र गृह्यते घञन्तस्य त्वनभिधानात्तत्राग्रहणमेवेति भावः । अयमपि निषेधो विशेषणविशेष्यभावव्यत्यासरूपक एवेत्याह तत्रेति । प्राधान्येनेति । शब्दरूपापेक्षयेत्यर्थः । धातोरिति । इदं स्यतासिविशेषणमिति चिन्त्यमिदम् । सुपि चेत्यादावस्मदुक्तरीत्यैवात्रापि समाधानं बोध्यम् । नन्वलानर्थकेनेत्ययुक्तम् अर्थवत्परिभाषाविरोधादत आह अर्थवदिति । स्यतासीति ।

भूत् । किमर्थमिदमुच्यते न पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चेत्येव सिद्धम् । न चेदं तद् नापि तदुत्तरपदम् । तत्र वक्तव्यम् । भवति । किं पुनरत्र ज्यायः । तदन्तविधिरेव ज्यायान् । इदमपि सिद्धं भवति । परमातिमहान् । एतद्धि नैव तद् नापि तदुत्तरपदम् । अनिनस्मन्ग्रहणानि च । अर्थवता चानर्थकेन च तदन्त-

---

सर्वेत्यत्र वर्णग्रहणे जातिग्रहणाद्वर्णसमुदायग्रहणे ऽप्यनर्थकस्य ग्रहणं प्राप्तमनेन नियमेन निवार्यते । अलैवेति चैकत्वसंख्या गुणत्वाद्विवक्ष्यते । नियमविधानसामर्थ्याद्वा । हन्ग्रहणादीति । तेन प्लीहानाविति दीर्घो भवति । उद्ग्रहणइति । उदःस्थास्तम्भोरित्यत्र । तेन गर्मुत् स्थास्यतीति पूर्वसवर्णाभावः । शस्त्रीग्रहणमिति । तेन शस्त्रीभिरिति स्त्रिया इतीयङ् न भवति । पायसं करोतीति । संपर्युपेभ्य इति सुट् न भवति । तत्र हन्ग्रहणे स्त्रीग्रहणे चाङ्गस्य विशेष्यत्वात् स्यात्तदन्तविधिः उदः स्थेत्यत्र तोरित्यधिकारात् तवर्गान्तस्योच्छब्देन विशेषणात् स्यात्तदन्तविधिः । प्रतिषेधविज्ञाने तु न भवति उद एव तवर्गेण विशेष्यत्वात् तोरि यस्य वा निवृत्तत्वात् । संग्रहणे पदप्रकरणात्तदन्तविधिः स्यादिति निवार्यते । पदेन समादयो विशेष्यन्ते इति तदन्तविध्यभावः । पायसं करोतीति करोतेर्भूषणार्थवृत्तिता संभवतीति सुट् स्यात् । किमर्थमिति । अलैवानर्थकेनेत्येतदाक्षिप्यते । अस्य हि नियमस्य प्लीहानावित्यादिप्रयोजनं तच्चान्यथा सिध्यति अङ्गाधिकारे हन्ग्रहणं स्त्रीग्रहणं चास्ति एङः पदान्तादतीति पदाधिकारे संग्रहणं वा पदान्तस्येत्यत. पदग्रहणानुवर्तनादुदः स्थास्तम्भोरिति पूर्वसवर्णः पदाधिकारे विधीयते पदाङ्गाधिकार इत्यत्र च केवलपदाधिकारो ऽपि ग्रहीष्यते उत्तरपदाधिकारो ऽपि ततश्च प्लीहानावित्यादिषु दोषो न भवति नहि प्लीहानावित्यत्र हन्नित्यङ्गं नापि तदुत्तरपदमिति प्रश्नः । तत्र वक्तव्यमिति । पदाङ्गाधिकार इत्येतदित्यर्थः । अलैवानर्थकेनेति वचनेनार्थवता तदन्तविधिसद्भावादिति भावः । तदन्तविधिरेवेति । प्राथमकल्पिकः सूत्रेणैव तदन्तविधिः स एव त्वलैवानर्थकेनेति नियम्यते । परमातिमहानिति । परमश्चासावतिमहानिति समासः । तत्र परमादिर्महच्छब्दो न भवति नापि महच्छब्दोत्तरपदः । अतिमहच्छब्दोत्तरपदत्वादिति सान्तमहत इति

---

एवं रूपमित्यत्रेति शेषः । कुतो हेतोरित्यत आह वर्णरूपतया तस्येति । वर्णरूपतया यस्येति पाठेनार्थवत्तारूपमित्यतः प्राक् तस्य हीति शेषो बोध्यः । अर्थवत्तेति । तत्समानाधिकरणं रूपमित्यर्थः । वर्णसमुदायग्रहणं प्राप्तमिति पाठे ऽनर्थकेऽस्यादिः । तदपि प्राप्तमिति शेषः । गुणत्वादिति । तदन्तविधिनियमशेषत्वादित्यर्थः । वर्णसमुदायेन चेत्तदन्तविधिस्तर्ह्यर्थवतैवेति फलितम् । अन्ये तु अङ्गाधिकारे तदन्तविधेरतिप्रसङ्गस्य निवारणायेदम् । वर्णग्रहणं चेत्यन्त्याख्यानवार्त्तिके ज्ञापकासिद्धजातिग्रहणे न मानम् एवमलैवेत्यत्रापि । एकत्वसङ्ख्यागुणत्वादित्यपि चिन्त्यम् । जातिपरत्वे तद्गतसङ्ख्याया एव तदुत्तरविभक्तिवाच्यत्वेन तद्विवक्षयापि दोषानुद्धारादित्याहुः । दीर्घो भवतीति । इहन्निति नियमेनानिवर्तितत्वादिति भावः । अर्थवत्परिभाषासिद्धार्थानुवादोयम् । संपर्युपेभ्य इति । वृत्तिपाठमनुसृत्येदम् । तस्योच्छब्देनेति । तपरान्तस्येत्यर्थः पदग्रहणमनुवर्त्य तस्योदा विशेषणादुदन्तस्य पदस्येत्यर्थ उचितः । नन्वव्यभिचारात्तवर्गेणोदोऽपि विशेषणं व्यर्थमत आह वानिवृत्तत्वादिति । पदग्रहणमपि फलाभावान्निवृत्तं विशेषणत्वेऽस्यापि बोध्यम् । पदप्रकरणात् । एङः पदान्तादतीत्यतः । नन्वत्र करोतिर्न भूषणार्थोऽत आह भूषणेति । पायसं भूषयतीत्यर्थसंभवादिति भावः । केवलपदाधिकारोपीति । अन्यथा ऽसन्देहायोत्तरपदेत्येव वदेदिति भावः । भाष्ये (नापीति) समासचरमावयवे तस्य रूढत्वादिति भावः । नन्वेवं तदन्तविध्यभावे वृत्रहणावित्याद्यसिद्धिः । तदन्तविधौ तु प्लीहानावित्यत्र दोषो ऽत आह अलैवेति । ननु वार्त्तिकोक्तापि

विधिं प्रयोजयन्ति। अन्, राज्ञेत्यर्थवता साम्नेत्यनर्थकेन। अन्। इन्, दण्डी-त्यर्थवता वाग्मीत्यनर्थकेन। इन्। अस्, सुपया इत्यर्थवतो सुस्रोता इत्यनर्थकेन। अस्। मन्, सुशर्मा इत्यर्थवता सुप्रथिमा इत्यनर्थकेन। मन्। यस्मिन् विधिस्तदादावल्ग्रहणे॥*॥ यस्मिन् विधिस्तदादाविति वक्तव्यम्। किं प्रयोजनम्। अचि श्नुधातुभ्रुवां य्वोरियङुवङाविति इहैव स्यात् श्रियौ भ्रुवौ श्रियो भ्रुव इत्यत्र न स्यात्॥

वृद्धिर्यस्याचामादिस्तद्वृद्धम् ॥ ७३ ॥ वृद्धिग्रहणं किमर्थम्। यस्याचामादिस्तद् वृद्धमितीयत्युच्यमाने दात्ता राद्धिताः अत्रापि प्रसज्येत। वृद्धिग्रहणे पुनः क्रियमाणे न दोषो भवति। अथ यस्यग्रहणं किमर्थम्। यस्येति

---

दीर्घत्वं न स्यात्। अनेनैव न्यायेनोगिल्लक्षणो नुमागमोऽपि न स्यात् तदन्तविधिना तु भवति। सुस्रोता इति। अनागमकानां सागमका आदेशा इत्याश्रयणादत्रास आनर्थक्यमर्थवतो ह्यागम इति न्यायाश्रये त्वर्थवानेवास्शब्दः। यस्मिन् विधिरिति। तदन्तविधिरिति। तदन्तविध्यपवादस्तदादिविधिः। अत एव विशेषणेन भवति नान्येन ॥७२॥

वृद्धिर्यस्य ॥ वृद्धिग्रहणमिति। असति वृद्धिग्रहणे कथं सर्वस्य वृद्धसंज्ञा न भवतीति चेत्। यस्याचामादिर्भिन्नजातीयो हल् तद्वृद्धमित्यजादि व्यावर्तितं स्यात्। दात्ता इति। असति वृद्धिग्रहणे निर्धारणहेतोर्धर्मस्यानुपादानादादिशब्दः समीपार्थो विज्ञायेत दत्तशब्दो रक्षितशब्दश्चात्र क्रियाशब्दो द्रष्टव्यः। नामधेयस्य तु पक्षे भवत्येव वृद्धसंज्ञा। प्रस्थेऽवृद्धमित्यत्र यदा नामधेयत्वादवृद्धाः पक्षे कर्क्यादयस्तदर्थं प्रतिषेधः स्यात्। यस्येतिव्यपदेशार्थेति। संज्ञिन इति शेषः। अन्यथा तच्छब्देन किं प्रत्यवमृश्येत तदित्यस्यानुपादाने च वृद्धेरेव वृद्धसंज्ञाप्रसङ्गः। गार्गीया इति। नहि गार्ग्यशब्दस्य वृद्धिरादिः किं तर्हि हल्। मालादीनां चेत्येतत्तु नामधेयार्थं स्यात्। सभासंनयन इति। सति चेहादिग्रहणे आद्यन्तवत्सूत्र एकग्रहणस्य सभासंनयनशब्दः प्रत्युदाहरणम्। असति त्विहादिशब्दे दरिद्रातेरिवर्णान्तलक्षणस्याचोऽभाव एकग्रहणस्य प्रयोज-

---

फलनस्तदन्तविधिरेवेत्यत आह प्राथम्येति। सौत्रतदन्तविधिरेव ज्यायान् न तु वार्तिकोक्तोत्तरपदस्येत्यंश इति नियम आवश्यक इति भावः। परमादिरिति। परमादिः समास उद्देश्यो महच्छब्दो न भवतीति विधेयं बोध्यम्। भाष्ये (अनिति) अल्लोपोन, इन्हन्पूषेति, भस्वसन्तस्य, मन इत्यादिषु वर्तमानानीत्यर्थः। अर्थवानेवासिति। इदं चिन्त्यम्। कृते आगमे तद्विशिष्टस्यैवार्थवत्ताया न्याय्यत्वादन्यथ भाष्ये स्पष्टमुक्तत्वाच्च। नान्येनेति। अत एवेको यणचीत्यादौ न दोषः। यस्मिन् विधिरिति वाचनिकमेव यस्मिन्निति सप्तम्यन्तोपलक्षणम्। सप्तम्यन्तं यत्र विशेषणं तत्रेति यावत् ॥ ७२ ॥

वृद्धिर्यस्या ॥ ननु वृद्धिग्रहणाभावे सर्वत्र वृद्धसंज्ञायां विशेषणान्तराणां वैयर्थ्यमेव स्यादिति तन्माक्षेपोऽनुपपन्न इति शङ्कते असतीति। सङ्कोचे प्रमाणाभावादच्शब्देन सर्वेष्वच्सु गृहीतेषु तदादिः समीपो हलेव भवतीति परिहरति यस्येति। नन्वचामिति निर्द्धारणे षष्ठी निर्द्धारणञ्च तुल्यजातीयस्येति यस्यादिरचां मध्ये कश्चिदिति विज्ञायमाने दत्तादौ नातिप्रसक्तिरत आह असतीति। समीपार्थ इति। एवं समीपार्थ इत्यर्थः। एवञ्च तन्निरूपितसंबन्धे षष्ठी न तु निर्धारण इति भावः। यस्याचामादिर्हलित्यर्थः स्यादिति तात्पर्यम्। नामधेयस्य त्विति। वा नामधेयस्येति वचनादिति भावः। भाष्ये (अत्रापीति)। अप्रकृतावपीत्यर्थः। नन्वेवं हलादेः सर्वस्य वृद्धत्वे प्रस्थेऽवृद्धमिति सूत्रे ऽकर्क्यादिप्रतिषेधोऽनर्थको नत्र ह प्रस्थ इति। तदित्यस्यानुपादान इति। तदित्यस्याप्यनुपादान इत्यर्थः। वृद्धेरेवेति। तथा च प्रदेशेषु त्वदादिविषये मुख्यो वृद्धशब्दोऽन्यत्र वृद्धघटिते लाक्षणिक इति वैरूप्यप्रसङ्ग इति भावः। ननु मालादीनामिति

व्यपदेशाय। अथाज्ग्रहणं किमर्थम्। वृद्धिर्यस्यादिस्तद् वृद्धमितीयत्युच्यमाने इहैव स्यात्। ऐतिकायनीयाः औपगवीयाः। इह न स्यात् गार्गीया वात्सीया इति। अज्ग्रहणे पुनः क्रियमाणे न दोषो भवति। अथादिग्रहणं किमर्थम्। वृद्धिर्यस्याचां तद् वृद्धमितीयत्युच्यमाने सभासंनयने भवः सभासंनयन इत्यत्रापि प्रसज्येत। आदिग्रहणे पुनः क्रियमाणे न दोषो भवति। वृद्धसंज्ञायामजसंनिवेशादनादित्वम् *। वृद्धसंज्ञायामजसंनिवेशादादिरित्येतन्नोपपद्यते। नह्यचां संनिवेशो ऽस्ति। ननु चैवं विज्ञायते अजेवादिरिति। नैवं शक्यम्। इहैव प्रसज्येत। औपगवीयाः इह न स्यात्। गार्गीयाः। एकान्तादित्वं तर्हि विज्ञायते। एकान्तादित्वे च सर्वप्रसङ्गः *। इहापि प्रसज्येत। सभासन्नयने भवः सभासन्नयन इति। सिद्धमजाकृतिनिर्देशात् *। सिद्धमेतत्। कथम्। अच आकृतिर्निर्दिश्यते।

---

नम्। अचामिति तु बहुत्वं संख्याविवक्षार्थं स्यात्। नह्यचामिति। सर्वस्य प्रातिपदिकस्याज्झल्समुदायरूपत्वात्। अचामित्यनेन च केवलनामचां समुदायः संनिवेशरूपो निर्दिष्टः। पौर्वापर्येणावस्थानं संनिवेशः स च केवलानामचां नास्ति। ननु चैवामिति। अचां संनिवेशस्यासंभवादचां मध्ये ऽजपेक्षया यस्य वृद्धिरादिरिति विज्ञास्यत इत्यर्थः। नैवं शक्यमिति। वृद्धिविशेषणार्था निर्द्धारणे षष्ठी स्यात्। अचां मध्ये अज्रूपा या वृद्धिरित्याकारस्य निवृत्तिप्रसङ्गः। आकारो ह्यनजेव सन् केवलमच्कार्याणि ग्रहणकशास्त्रेण लभते ततश्चाश्वलायन इत्यत्र न स्यात्। गार्ग्य इत्यत्र चाकारस्यानच्त्वात् समुदायानादित्वाच्च न स्यात्। एकान्तादित्वे चेति। एकान्ता अवयवा अचः प्रातिपदिकस्य तेषामचाम् आदिवृद्धिर्यस्य तद्वृद्धमित्यर्थः। सर्वप्रसङ्ग इति। नह्यत्र विशेष उपादीयते सर्वेषामचामादिर्वृद्धिरिति ततश्च मध्येपि वर्तमान आकारो ऽन्याजपेक्षया आदिरिति सभासन्नयने संज्ञाप्रसङ्गः। आदिग्रहणं त्वन्त्यनिवृत्त्यर्थं स्यात्। खट्वेति।

---

लिङ्गादिसहचरितो यस्य वृद्धिस्तस्यापि संज्ञा स्यादत आह मालादीति। भाष्ये (अथादीति) अचामिति षष्ठ्युपादानसामर्थ्यादादिशब्दो ऽध्याहरिष्यत इति प्रश्नः। यस्यावयविनो ऽवयवानामच मध्ये वृद्धिरव्यवयव इत्यध्याहारं विनैवार्थसंभवे ऽध्याहारे मानाभाव इत्युत्तराशयः। तत्र प्रसङ्गादादिग्रहणसत्त्वासत्त्वयोराद्यन्तवत्सूत्रस्थैकग्रहणप्रयोजनं दर्शयति सति चेति। असत्येकग्रहणे पूर्वसहितेपि भाषाकाकारे आदित्वात् सभासंनयनस्यापि वृद्धत्वं स्यादिति भावः। अचइति। एरच इत्यर्थः। तत्र हि धातोरित्यधिकार इति भावः। घञचोः स्वरे विशेषः। नन्वेवं यस्य वृद्धिरवयव इत्येव सिद्धे ऽचामिति व्यर्थमत आह अचामितीति। तथ च सादृश्यादेर्वृद्धत्वं नेति भावः। कृते त्वादिग्रहणे यत्र वृद्धेरादित्वमेवाजपेक्षया नत्वनादित्वं तस्यैव तेन ग्रहणान् न सभासंनयने दोषः। अचामिति। बहुत्वमविवक्षितमन्तेन मालीयादिसिद्धिः। ननु यत्र हल्घटिता अच एव संनिविष्टास्तत्रास्य प्रवृत्तिरुचिता न तु हलन्तरितेष्वक्षु इति मन्यमानः शङ्कते। भाष्ये। (वृद्धसंज्ञायामिति)। नन्वस्त्येव मातृकापाठे सन्निवेशोत आह सर्वस्येति। वृद्धत्वप्रयुक्तकार्यभाज इत्यर्थः। वृद्धत्वनिबन्धनकार्यस्य प्रातिपदिके सत्त्वादिति भावः। अचामित्यनेन च केवलानामिति। सर्वपदानां सावधारणत्वेन प्रथमतस्तथैव प्रतीतेरिति भावः। अज्मात्रसंबन्धिनो यस्य समुदायस्यादिवृद्धिरित्यर्थः स्यादिति तात्पर्यम्। ननु प्रथमान्ताच्पदाभावादजेवादिरित्ययुक्तमत आह अजिति। निर्धारणषष्ठ्याश्रयणाद् निर्द्धारणस्य समानजातीयविषयत्वाच्च तल्लाभ इति भावः। अज्झल्समुदायेप्यजपेक्ष एवादिर्गृह्यत इति भाष्याक्षरार्थः। वृद्धिविशेषणार्थेति। तस्याः प्रधानत्वादचामिति तस्या एव विशे

एवमपि व्यञ्जनैर्व्यहितत्वान्न प्राप्नोति । व्यञ्जनस्याऽविद्यमानत्वं यथान्यत्र * । व्यञ्जनस्याविद्यमानवद्भावो वक्तव्यो यथा ऽन्यत्रापि व्यञ्जनस्याविद्यमानवद्भावो भवति । क्वान्यत्र । स्वरे । वा नामधेयस्य * । वृद्धसंज्ञा वक्तव्या । देवदत्तीयाः दैवदत्ताः । यज्ञदत्तीयाः याज्ञदत्ताः । गोत्रोत्तरपदस्य च * । गोत्रोत्तरपदस्य च वृद्धसंज्ञा वक्तव्या । कम्बलचारायणीयाः ओदनपाणिनीयाः । घृतरौढीयाः । गोत्रान्ताद्वा ऽसमस्तवत् * । गोत्रान्ताद्वा असमस्तवत्प्रत्ययो भवतीति वक्तव्यम् । एतान्येवोदाहरणानि । किमविशेषेण । नेत्याह । जिह्वाकात्यहरित-

---

सिद्धमिति । उभयरूपत्वे ऽपि प्रातिपदिकस्याजाकृतिरचामिति वचनादाश्रीयते । विद्यमानापि हलाकृतिर्न विवक्ष्यते । तेनायमर्थः । यस्य शब्दस्य सकलाजपेक्षया वृद्धिरादिस्तद्वृद्धमिति । यथा पङ्क्तौ ब्राह्मणानामादिमानयेत्युक्ते सतो ऽपि शूद्रादीननादृत्य ब्राह्मणजातीयापेक्षया यो ब्राह्मण आदिः स आनीयते । व्यञ्जनस्येति । अचामिति वचनाद्विद्यमानान्यपि व्यञ्जनानि न विवक्षितानीत्यर्थः । यथा ऽन्यत्रेति । यथा स्वरविधावयोगवत्त्वाद्व्यञ्जनमविद्यमानवदेवमिहाप्यचामिति वचनादित्यर्थः । ह्रस्वनुड्भ्यामिति स्वरविधौ नुड्ग्रहणाल्लिङ्गाद्व्यञ्जनं व्यवधायकमेवेत्युदश्वित्वानिति मतुप उदात्तत्वं न प्रवर्तते । वा नामधेयस्येति । पौरुषेयं नाम गृह्यते । कम्बलचारायणीया इति । कम्बलप्रियस्य चारायणस्य शिष्या इत्यर्थः । ओदनपाणिनीया इति ।

---

षणं स्यादित्यर्थः । यदीयाविवृद्धिरङ्गमध्यवर्त्तिनीत्यर्थः । निर्धार्यमाणनिर्धारणावध्योः सजातीयत्वाच्च वृद्धेरच्त्वलाभः । तत्र वृद्धेरच्त्वाव्यभिचाराद् विशेषणसामर्थ्येन आक्षरसमाम्नायिकाज्रूपलक्षणवृद्धिपरिग्रह इति भावः । आकारस्य निवृत्तिप्रसङ्ग इति । वृद्धसंज्ञानिमित्तत्वनिवृत्तिराकारस्य स्यादित्यर्थः । तत्रासाधारणं प्रत्युदाहरणमाह ततश्चेति । भाष्योक्तस्य साधारणत्वं ध्वनयन्नाह सत्ववायेति । यस्येत्याद्यपेक्षया षष्ठीति भावः । एवं यस्येत्याद्युपजनितव्यतिरेके षष्ठीमङ्गीकृत्याचामिति निर्द्धारणषष्ठ्यां दोषोभिहितः मतुपजनितव्यतिरेके यस्येति षष्ठ्यामपि तं वक्तुं भाष्ये एकान्ताादित्यमुक्तम् । तद्व्याचष्टे एकान्ता इति । यस्य प्रातिपदिकस्येति संबन्धः । एवञ्च यत्प्रातिपदिकावयवभूताचामादिवृद्धिस्तत्प्रातिपदिकं वृद्धमिति सूत्रार्थः । नन्वादिशब्दोपादानादेव सर्वेषामचामिति लप्स्यते ऽत आह आदिग्रहणमिति । उभयरूपत्वेपीति । अज्झलरूपत्वेपीत्यर्थः । यस्येति नाचां विशेषणम् । सन्निधानान् न वृद्धेः व्यवहितत्वात् । एवञ्च यस्य वृद्धिरचामादिरित्युक्ते लब्धस्याजपेक्षादित्वस्योपपत्तये तेषामन्यविशेषणत्वात् । नाप्यादेः व्यवहितत्वात् । किं तु वृद्धेः । अचामिति चादेर्विशेषणम् । सन्निमध्ये वर्त्तमानापि हलाकृतिर्न विवक्ष्यत इति भावः । सकलाजिति । सङ्कोचे नानाभावः । सतोपीति । आदौ मध्ये वेति शेषः । अचामितीति केवलाच्सन्निवेशासम्भवादिति भावः । स्वरविधाविति । स्वरे विधेये इत्यर्थः । अयोग्यत्वादिति । स्वराणामज्धर्मत्वादिति भावः । अत एव यतो नाव इति अनाव इति प्रतिषेधः सार्थकः । नुड्ग्रहणादिति । हल्स्वरप्राप्तिविषयकमेवानाव इति ज्ञापकमिति भावः । अन्यथा नुटो ऽविद्यमानत्वादक्षण्वानित्यादौ ह्रस्वादित्येव मतुप उदात्तत्वं सिद्धमिति तद्वैयर्थ्यं स्यादिति तत्तात्पर्यम् । पौरुषेयमिति । आधुनिकमित्यर्थः । गृह्यते इति । अत्र वार्त्तिके इत्यादिः । अत एवेङ्भाचां देशे इति चरितार्थम् । रूढमात्रस्य नामत्वेन ग्रहणे तद्वैयर्थ्यं स्पष्टमेव । घटीय इति तु गहादित्वात्साधु घाट इति त्वसाधु । अत एव भाष्ये देवदत्तशब्द उदाहृत इति भावः । भाष्ये (गोत्रान्ताद्वेति) गोत्रप्रत्ययान्तोत्तरपदादित्यर्थः । चारायणो गोत्रान्तो यथा ऽसमासे वृद्धत्वाच्छं लभते तथा समासे वृद्धत्वाभावेपीत्यर्थः । वेत्यनेन वृद्धसंज्ञा वा कर्तव्या इत्युपसङ्ख्यानं वेत्युक्तं भवति । नन्वोदनपाणिनीयेति । प्रकृते च गोत्रशब्देनापत्यमात्रम् । अपत्याधिकारादन्यत्वादिति भावः । नन्वोदनपाणिपुत्रीमिति ।

कासवर्जम् *। जिह्वाकात्यं हरितकां च वर्जयित्वा । जैह्वाकाताः। हारितकाताः। पुनरत्र ज्यायः। गोत्रान्ताद्वा समस्तवदेव ज्यायः । इदमपि सिद्धं भवति। पिङ्गलकाण्वस्य छात्राः पैङ्गलकाण्वाः॥

त्यदादीनि च ॥ ७४ ॥ यस्याचामादिग्रहणमनुवर्तते उताहो न । किं चातः। यद्यनुवर्तते, इह च प्रसज्येत त्वत्पुत्रस्य छात्रास्त्वात्पुत्राः। इह च न स्यात् त्वदीयो मदीय इति । अथ निवृत्तम्, एङ् प्राचां देशे यस्याचामादिग्रहणं कर्तव्यम्। एवं तर्ह्यनुवर्तते। कथं त्वात्पुत्रा मात्पुत्रा इति । संबन्धमनुवर्तिष्यते। वृद्धिर्यस्याचामादिस्तद् वृद्धं त्यदादीनि च वृद्धसंज्ञानि भवन्ति। वृद्धिर्यस्याचामादिस्तद् वृद्धम्। एङ् प्राचां देशे यस्याचामादिग्रहणमनुवर्तते वृद्धिग्रहणं निवृत्तम्। तद्यथा। कश्चित्कान्तारे समुपस्थिते सार्थमुपादत्ते स यदा निष्क्रान्तकान्तारो भवति तदा सार्थं जहाति॥

---

पाणिनोपत्यमित्यण् गाथिविदथीति प्रकृतिभावाट्टिलोपाभावः। पाणिनस्यापत्यं युवेतीञ् तस्य छात्रा इति विवक्षिते यूनि लुगणिञो लुक् तेनञश्चेत्यण् न भवतीति छो भवति। पैङ्गलकाण्वा इति। कण्वादिभ्यो गोत्रइत्यण् वृद्धसंज्ञायान्तु छः स्यात् ॥७३॥

त्यदादीनि च ॥ त्वात्पुत्रा इति । आदिग्रहणानुवृत्त्यन्यथानुपपत्त्योपसर्जनानामपि त्यदादित्वं स्यादिति भावः। अचामित्यस्य तूत्तरार्थैवानुवृत्तिः स्यात् तत्संबन्धस्येहायोग्यत्वान्निर्धारणस्य समानजातीयविषयत्वात्। त्वदीय इति। व्यपदेशिवद्भावो ऽत्र नास्ति अप्रातिपदिकेनेति निषेधात्। संबन्धमिति। द्वितीयान्तमेतत्। संबन्धमनुवर्त्स्यन्ने न हास्यतीत्यर्थः। अथ वा संबध्यतइति संबन्धः कर्मणि घञ् नपुंसकेऽपि बाधकाभावाद्भवति। वृद्धिग्रहणसंबद्धमादिग्रहणमिहानुवर्तत इति नास्ति तस्य त्यदादिभिः संबन्धः। तद्यथेति। एतद्दर्शयति। स्वरितत्वप्रतिज्ञानादुत्तरसूत्रएव योग्यत्वाद्यस्याचामादिरिति संबध्यते एङ् यस्याचामादिस्तद्वृद्धमिति वाक्यार्थसंपादनाया इह त्वयोग्यत्वात् संबन्धानुपपत्तिः। तुल्यजातीयस्य निर्द्धारणात् त्यदादीनां चाज्रूपत्वाभावाद्यस्याचामादयस्त्यदादय इति तत्संबन्धाभावात् ॥ ७४ ॥

---

नीया इत्यत्र वृद्धत्वे च्छोऽसमस्तवदतिदेशे इञन्तत्वादिञश्चेत्यणिति भेदः स्यादत आह तेनेञश्चेति। येन यूनि विहितो न गोत्रे तेनेत्यर्थः। इञश्चेत्यत्र गोत्र इति वर्त्तते पारिभाषिकं च तत्र गोत्रं गृह्यत इति भावः। यत्तु तेन लुकेति तन्न। प्रत्ययलक्षणस्य दुर्वारत्वात्। भाष्ये जिह्वाकात्यादिवर्जनं वृद्धसंज्ञापक्षेपि द्रष्टव्यम्। अणिति। स च केवलेभ्यः काण्व्यादिभ्यश्छस्यापवादः। वृद्धसंज्ञापक्षे तु समुदायस्य कण्वादिषु पाठाभावात्। प्रत्ययविधौ तदन्तविधिप्रतिषेधाच्च न तत्प्राप्तिरिति भावः ॥७३॥

त्यदादीनि च ॥ भाष्ये [ अनुवर्त्तत इति ] पूर्वसूत्रात्परतां गच्छति नवेति विचारः। ननूपसर्जनानां गणबहिर्भावेन कथं त्यदादित्वमत आह आदीति। सामर्थ्यादभूतपूर्वगतिराश्रयिष्यत इति भावः। अचामित्यस्य त्विति। इहादिग्रहणसंबन्धएव भाष्यतात्पर्यमिति भावः। व्यपदेशिवद्भावेन केवलेपि सिद्धमिति इह च नेति भाष्यमयुक्तमत आह व्यपदेशिवदिति। स निषेधः प्रत्ययविधौ तन्मात्रेऽप्रयोगिसंज्ञाविधौ चेति भावः। तदनाश्रित्यैवेदम्। ननु नपुंसके भावे क्तल्युटौ घञपवादौ स्त्र्यधिकारात्परनो वासरूपविधिश्च नेति संबन्धमिति नपुंसकप्रथमैकवचनमनुपपन्नमत आह द्वितीयान्तमिति। नपुंसकेपीति। घञजपः पुंसीति भावघञ्विषयकं क्वाचित्कं चेति भावः। चेतनावतस्त्यागोपादानसंभवतः। यस्यादिरित्यस्य तु कथन्न स्यातामत आह एतदिति। योग्यत्वादादिरित्यस्यैङित्यनेकवचनान्तेन संबन्ध इति शेषः। तुल्यजातीयस्येत्युपलक्षणम्। त्यदादीनीत्यनेनादिरित्यस्य भिन्नविभक्तिकत्वाच्चेत्यपि बोध्यम् ॥ ७४ ॥

एङ् प्राचां देशे ॥ ७९ ॥ एङ् प्राचां देशे शैषिकेष्विति वक्तव्यम्। सैपुरिकी सैपुरिका। स्कौनगरिकी स्कौनगरिकेति ॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम् ॥ पादश्चायं समाप्तः ॥ श्रीशिवो जयति ॥

---

एङ् प्राचाम् ॥ कुणिना प्राग्ग्रहणमाचार्यनिर्देशार्थं व्यवस्थितविभाषात्वं चेति व्याख्यातं तेन कोडो नामोदग्ग्रामस्तत्र भवः कौड इत्यणेव भवति। अन्येन तु प्राग्ग्रहणं देशविशेषणं व्याख्यातं तेन देवदत्तो नाम वाहीकेषु ग्रामस्तत्र भवो दैवदत्त इत्यवृद्धत्वात् ठञ्ञिठौ न भवतः। भाष्यकारस्तु कुणिदर्शनमशिश्रियत्। सैपुरं स्कौनगरं च वाहीकग्रामौ। तत्र वृद्धत्वाद्वाहीकग्रामेभ्यश्चेति ठञ्ञिठौ भवतः। शैषिकेष्विति वचनादपत्यविकारयोर्वृद्धलक्षणप्रत्ययाभावः। कोडदेवदत्तयोस्त्वप्राग्देशवाचिनोर्व्यवस्थितविभाषया न भवतीति प्राग्देशवाचिनस्तु देवदत्तस्य वृद्धसंज्ञत्वात् काश्यादित्वात् वृद्धलक्षणौ ठञ्ञिठौ भवतः ॥ ७५ ॥ इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम् ॥ पादश्चायं समाप्तः ॥

---

एङ्प्राचाम् ॥ कुणिनेति। विधेयसंबन्धलाभात्प्राग्ग्रहणमाचार्यनिर्देशार्थम् अन्यथा प्राग्देशइत्येव वदेदिति भावः। लक्ष्यावैषम्याय च व्यवस्थितविभाषाश्रयणं तत्फलमाह तेनेति। अन्येन त्विति। श्रुतान्वये संभवत्यन्येनान्वयोऽनुचित इति तद्भावः वाहीकश्च देशविशेषः तत्र स ग्रामः प्राग्देशबहिर्भूतः वाहीकदेशश्चोभयसंबद्धः प्राग्देशबहिर्भूतो वा। अत एवाव्ययात्यबिति सूत्रे शाकलनाम्नो ग्रामस्य उदीच्यवाहीकोभयरूपता भाष्यकृतोक्ता। एतेनोभयबहिर्भूता वाहीका इत्यपास्तम्। वाहीकग्रामाविति। भाष्ये अस्याप्राग्देशीयाविति शेषः पूरणीय इति बोध्यम्। अन्यथा कुणिमताश्रयणेऽस्य प्रमाणता नोपपद्यते। ठञ्ञिठाविति। वाहीकग्रामेभ्यश्चेत्यत्र वृद्धादित्यनुवृत्तेः प्रागुदग् विभागस्तु 'शरावत्यास्तु योऽवधेः। देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तर, इत्यमरेण दर्शितः। शरावती चोत्तरपूर्वाभिमुख्येत्येके। ऐशानी तो नैर्ऋत्यां पश्चिमाभिगामिनी सेत्यन्ये। उभयथापि प्रागुदक्स्वरूपे न विवादः वाहीकलक्षणञ्च। पञ्चानां सिन्धुषष्ठानामन्तरं ये समाश्रिताः। वाहीका नाम ते देशा न तत्र दिवसं वसेदिति कर्णपर्वणि। एवञ्च धर्मबहिर्भूतत्वाद्वाहीकत्वं शतद्रुविपाशेरावती वितस्ता चन्द्रभागेति पञ्चनद्यः सिन्धुः षष्ठः तन्मध्यदेशो वाहीक इति तद्व्याख्यातारः। कुणिमताश्रयणं शैषिकेष्वित्यस्य वैयर्थ्यम्। व्यवस्थितविभाषयैव सिद्धत्वेनान्यमताश्रयेणैव भाष्यम्। भाष्यप्रामाण्याच्चैतेनाववाहीकग्रामावपीत्यन्ये। भाष्योक्तव्यवस्थितविभाषातिरिक्ता न व्यवस्थिता इत्यस्यार्थस्य शैषिकेष्विति ज्ञापकमित्यपरे। अपत्येत्यादि। उदीचां वृद्धादिति नित्यं वृद्धेति चेति सर्वेष्टसिद्धिः ॥ ७९ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते प्रथमस्य प्रथमे पादे नवममाह्निकम्।

पादश्च प्रथमस्समाप्तः ॥ ६ ॥ नवाह्निकं समाप्तम् ॥

# श्रीमत्पतञ्जलये नमः ॥

## अथ प्रदीपसहिते महाभाष्ये प्रथमाध्यायस्य द्वितीयः पादः ॥

### गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥ १ ॥

ङित्किद्वचने तयोरभावादप्रसिद्धिः * । ङित्किद्वचने तयोरभावात् ङकार-ककारयोरभावात् ङित्त्वकित्त्वयोरप्रसिद्धिः । सता ह्यभिसंबन्धः शक्यते कर्तुम् । न चात्र ङकारककारावितौ पश्यामः । तद्यथा । चित्रगुर्देवदत्त इति । यस्य ता गावो भवन्ति स एताभिः शक्यतेऽभिसंबन्धुम् । भाव्येते तर्ह्यनेन गाङ्कुटादिभ्यो-ऽञ्णिन्ङिद्भवतीति । असंयोगाल्लिट् किद् भवतीति । भवतीति चेदादेशप्रतिषेधः * भवतीति चेदादेशस्य प्रतिषेधो वक्तव्यः । ङकारककारावितावादेशौ प्राप्नुतः । कथं पुनरित्संज्ञो नामादेशः स्यात् । किं हि वचनान्न भवति । एवं तर्हि षष्ठी-निर्दिष्टस्यादेशा उच्यन्ते । न चात्र षष्ठीं पश्यामः । गाङ्कुटादिभ्य इत्येषा पञ्चमी अञ्णिदिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति ।

---

श्रीगणेशाय नमः ॥ गाङ्कुटादिभ्यः ॥ चत्वारोऽत्र पक्षा उपक्षिप्ता भाष्ये । ङित्त्वकित्त्वसम्बन्धप्रतिपादनं, भावना, संज्ञाकरणमतिदेशश्चेति । तत्राद्यपक्षनिराकर-णाय वार्तिकमुपन्यस्यति । ङित्किद्वचन इति । सता हीति । विद्यमानेन वस्तुना सम्बन्धोऽर्थस्य शक्यते वक्तुम् । न च गाङ्कुटादिभ्यः परस्य प्रत्ययस्य ङकार इत्संज्ञकोऽस्ति येन तस्य ङिदिति व्यपदेशः स्यात् । सत्त्वे वा भूतानुवादे प्रयोजनाभा-वादप्रामाण्यमापतति । न च गाङ्कुटादिभ्यश्चङादेर्ङितोऽनेन विधानमुपपद्यते अञ्णिद्ग्रहणानर्थक्यप्रसङ्गात् । भाव्येते इति । गाङ्कुटादिभ्यः परो योऽञ्णित् प्रत्ययः स ङिद्भवति ङकार इत्संज्ञकस्तस्य भवतीत्यर्थः । स तु ङकार आदौ मध्ये अन्ते वेति देशविशेषं नापेक्षते । इत्संज्ञाक्रान्तस्यैव विधानात् । इतां च धर्मोऽश्रूयमा-णानामपि कार्यं प्रति विशेषकत्वम् । भवतीति चेदिति । ङित्त्वकित्त्वमित्त्वानाभा-वाद् ङ इदनन्तरोऽस्येति । अनन्तरार्थे बहुव्रीह्यभावाच्चादेः परस्येत्यादेः स्थाने ङकार आदेशः प्राप्नोतीत्यर्थः । ङ इत् ङिदिति तत्पुरुष एव न्याय्यः स्वपदार्थप्रा-धान्येन तस्यान्तरङ्गत्वाद्बहुव्रीह्यर्थानुपादानाच्च । कुटितेत्यादौ प्रसिद्धङित्त्वाच्चङा-दयो यद्यादेशाः क्रियन्ते तदा नैते तदर्थाभिधाने समर्थास्तृङादयश्च नेह शास्त्रे प्रसिद्धाः । अथास्मादेव वचनादपूर्वाः क्रियेरँस्तदा ङिच्चेत्यन्त्यस्य स्युः । कथं पुनरिति । इत्संज्ञो ह्यसन्नेव कार्यमात्रं प्रतिपादयति, आदेशस्तु भावरूपोऽन्यस्य प्रसङ्गे भवति । किं हीति । लोपस्य यथाऽऽदेशत्वं तथा ङकारस्यापीत्संज्ञकस्य भविष्यतीत्यर्थः ।

संज्ञाकरणं तर्हीदं गाङ्कुटादिभ्यः अञ्णित् ङित्संज्ञो भवतीति । असंयोगाल्लिट् कित्संज्ञो भवतीति । संज्ञाकरणे क्ङिद्ग्रहणे ऽसंप्रत्ययः शब्दभेदात् ॥३॥ संज्ञाकरणे क्ङिद्ग्रहणे असंप्रत्ययः स्यात् । किं कारणम् । शब्दभेदात् । अन्यो हि शब्दः क्ङितीति । अन्यः कितीति ङितीति च । तथा क्ङिद्ग्रहणेषु ङिद्ग्रहणेषु चानयोरेव संप्रत्ययः स्यात् । तद्वदतिदेशस्तर्ह्ययम् । गाङ्कुटादिभ्यः अञ्णिद् ङिद्वद्भवतीति असंयोगाल्लिट् किद्वद्भवतीति । स तर्हि वतिनिर्देशः कर्तव्यः । न कर्तव्यः । न ह्यन्तरेण वतिमतिदेशो गम्यते । अन्तरेणापि वतिमतिदेशो गम्यते । तद्यथा । एष ब्रह्मदत्तः । अब्रह्मदत्तं ब्रह्मदत्त इत्याह, तेन मन्यामहे ब्रह्मदत्तवदयं भवतीति । एवमिहाप्यङितं ङिदित्याह, ङिद्वदिति गम्यते । अकितं किदित्याह किद्वदिति गम्यते । तद्वदतिदेशेऽकिद्विधिप्रसङ्गः ॥४॥ तद्वदतिदेशे अकिद्विधिरपि प्राप्नोति । सृजिदृशोर्झल्यमकिति । सिस्रक्षति । दिदृक्षते । अकिल्लक्षणोऽमागमः प्राप्नोति । सिद्धं तु प्रसज्य प्रतिषेधात् ॥५॥ सिद्धमेतत् । कथम् । प्रसज्यायं प्रतिषेधः क्रियते, किति नेति । सर्वत्र सन्नन्तादात्मनेपदप्रतिषेधः ॥६॥ सर्वेषु पक्षेषु सन्नन्तादात्मनेपदं प्राप्नोति । उच्चुकुटिषति । निचुकुटिषति । ङित इत्यात्मनेपदं प्राप्नोति । तस्य प्रतिषेधो वक्तव्यः । सिद्धं तु पूर्वस्य कार्यातिदेशात् ॥७॥ सिद्धमेतत् । कथम् । पूर्वस्य यत्कार्यं तदतिदिश्यते । किं वक्तव्यमेतत् । न हि । कथमनुच्यमानं गंस्यते । सप्तम्यर्थेऽपि वतिर्भवति । तद्यथा । मथुरायामिव...

---

तत्र स्थानिनं निवर्त्य ङकारो निवर्तते । संज्ञाकरण इति । अक्तपरिमाणा संज्ञा कृतेति न्यूनातिरिक्तशब्दोच्चारणे संज्ञास्वरूपानुपलम्भात् संज्ञिनामसम्प्रत्ययः । ङित्संज्ञाकरणं तु, व्यचेः कुटादित्वमनसीति वचनात् सम्प्रसारणार्थं स्यात् । लिटः कित्संज्ञा च वचिस्वपीति सम्प्रसारणार्था स्यात् । गाङ्कुटादिभ्यस्तर्हि ङित्संज्ञा किमर्था स्याद्, अनर्थिका भवतु, न्यायानुगतेऽर्थे किं कुर्मः । क्ङिति चेत्यादिषु यौगिकस्यैव ग्रहणं स्याद् यस्य ककारो ङकारश्चेत्संज्ञकः । अनयोरेवेति । कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय इति न्यायात् । चङादीनां ङित्करणं क्ङित्प्रदेशेषु ग्रहणार्थं स्याद् यत्र संज्ञारूपानुपलब्धिः । एष ब्रह्मदत्त इति । निर्ज्ञाते भेदे तत्कार्यप्राप्तये तद्रूपारोपणं क्रियत इत्यतिदेशगतिः । अकिद्विधिप्रसङ्ग इति । कार्यातिदेशे तत्प्रतिबद्धानि कार्याणि व्यपदेशमन्तरेणापि भवन्तीति गुणनिषेधादीनामेवातिदेशः । अमागमस्तु स्वाश्रयत्वात् केन निवार्यते । यथा ब्राह्मणवदतिदेशः क्षत्रियस्य स्वाश्रयं युद्धादि न निवर्तयति । अकितीति च पर्युदासाश्रयणात् कित्प्रतिबद्धकार्याभावात् स्वाश्रयोऽमागमः स्यात् । सिद्धं त्विति । प्रसज्यप्रतिषेधे अमागमनिषेध एव कित्कार्यम् । सिद्धं तु पूर्वस्येति । विशिष्टमत्र ङित्कार्यमतिदिश्यते, न सर्वमित्यर्थः । सप्तम्यर्थेऽपि वतिरिति । सप्तम्यर्थे वर्तमानादिवार्थे वतिरित्यर्थः । ननु नेह वतिरुपात्तः, तत्कथमयं परिहारः । अयं

मिव मथुरावत्, पाटलिपुत्र इव पाटलिपुत्रवत्। एवं ङितीव ङिद्वत् कितीव किद्वत्। अथ किमर्थं पृथङ्ङित्कितौ क्रियेते न सर्वं किदेव स्यात् ङिदेव वा । पृथगनुबन्धत्वे प्रयोजनं वचिस्वपियजादीनामसंप्रसारणं सार्वधातुके चङादिषु *५ पृथगनुबन्धत्वे प्रयोजनं वचिस्वपियजादीनामसंप्रसारणं सार्वधातुके चङादिषु च । सार्वधातुके प्रयोजनम् । यथेह भवति सुप्तः सुप्तवानित्येवं स्वपितः स्वपिथ इत्यत्रापि प्राप्नोति । चङादिषु च प्रयोजनम् । के पुनश्चङादयः । चङङ्नजिङ्क्वनिबथङ्नङः । चङ् । यथेह भवति शूनः शूनवानिति, एवमशिश्वियदत्रापि प्राप्नोति । अङ् । यथेह भवति शून उक्त इत्येवमश्वदवोचदत्रापि प्राप्नोति । नजिङ् । यथेह भवति सुप्तः सुप्तवान् इत्येवं स्वप्नगित्यत्रापि प्राप्नोति । क्वनिप् । यथेह भवतीष्टमिष्टवानित्येवं यज्वात्रापि प्राप्नोति । अथङ् । यथेह भवत्युषित इत्येवमावसथः अत्रापि प्राप्नोति । नङ् । यथेह भवतीष्टमित्येवं यज्ञः अत्रापि प्राप्नोति । जाग्रोऽगुणविधिः *६ । जागर्तेरगुणविधिः प्रयोजनम् । यथेह भवति जागृतः जागृथ इत्यङितीति पर्युदासः । एवं जागरितवानित्यत्रापि प्राप्नोति । अपर आह । जाग्रो गुणविधिः । जागर्तेर्गुणविधिः प्रयोजनम् । यथेह भवति जागरितः जागरितवानित्येवं जागृतः जागृथ इत्यत्रापि प्राप्नोति । कुटादीनामिट्प्रतिषेधः *७ कुटादीनामिट्प्रतिषेधः प्रयोजनम् । यथेह भवति लूत्वा पूत्वा इति श्र्युकः कितीतीट्प्रतिषेधो भवत्येवं नुविता धुविता अत्रापि प्राप्नोति । क्त्वायां कित्प्रतिषेधश्च *८ क्ङिच्चेट्प्रतिषेधः । नेत्याह । अदेशेऽयं चः पठितः । क्त्वायां च कित्प्रतिषेध इति । यथेह भवति देवित्वा सेवित्वेति, न क्त्वा सेडिति कित्त्वप्रतिषेधः । एवं कुटित्वा पुटित्वा अत्रापि प्राप्नोति । अथ वा देश एवाऽयं चः पठितः । क्त्वायां कित्प्रतिषेधश्चेट्प्रतिषेधश्च । कित्प्रतिषेध उदाहृतः । इट्प्रतिषेधो

---

भावः । यथा न सर्वकार्यप्राप्त्यर्थं एवाब्रह्मदत्ते ब्रह्मदत्तत्वारोपः । अपि तु कस्यचिदेव कार्यस्य लाभार्थः । एवमिहापि व्याख्यानाद्विशिष्टङित्कार्यातिदेशार्थं एवाऽङिणतः प्रत्ययस्य तद्रूपाप्रसङ्गः । उपदेशग्रहणानुवृत्त्या चोपदेशे यो ङित्तस्मादात्मनेपदमिति सामर्थ्यात् पूर्वस्य कार्यातिदेशोऽयम् । अथ किमर्थमिति । कार्यार्थत्वादनुबन्धासङ्गस्यैकेनैवानुबन्धेन गुणनिषधादेः सिद्धत्वादनुबन्धभेदोऽनर्थक इति प्रश्नः । एकस्य चानुबन्धस्य करणेऽतिदेशोऽपि भेदेन न कर्तव्यः । आवसथ इति । उपसर्गे वसेरित्यथप्रत्ययः । जाग्र इति । किति गुण इष्यते, न ङिति । एवं च विषयविभागः पृथगनुबन्धोपादानादेव लभ्यते । नुवितेति । नु स्तुतौ । धुवितेति । धु विधूनने । कितीति सप्तमीनिर्देशाद् इट्प्रतिषेधस्याप्यतिदेशः स्यादित्युपन्यासः । न त्विट्प्रतिषेधः पूर्वस्य कार्यम् । कुटित्वेति । न क्त्वा सेडिति निषेधो विशेषानुपादानादौपदेशिकवदातिदे-

यथेह भवति लूत्वा पूत्वा श्रचुकः किर्तीति, एवं नुवित्वा धुवित्वा अत्रापि प्राप्नोति । स्यादेतत् प्रयोजनं यद्यस्य नियोगत आतिदेशिकेन ङित्त्वेनौपदेशिकं कित्त्वं बाध्येत । सत्यपि ङित्त्वे किदेवैषः । तस्मान्नूत्वा धूत्वेत्येव भवितव्यम् ॥ १ ॥

**सार्वधातुकमपित्** ॥४॥ सार्वधातुकग्रहणं किमर्थम् । अपिन्ङिदितीयत्युच्यमाने आर्धधातुकस्याप्यनेनाऽपितो ङित्त्वं प्रसज्ज्येत । कर्ता हर्ता । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति नानेनार्धधातुकस्यापितो ङित्त्वं भवतीति । यदयमार्द्धधातुकीयान् कांश्चिद् ङितः करोति । चङङ्नजिङ्ङ्वनिबथङ्नङः । सार्वधातुकेऽप्येतज्ज्ञापकं स्यात् । नेत्याह । तुल्यजातीयस्य ज्ञापकम् । कश्च तुल्यजातीयः । यथाजातीयकाश्चङङ्नजिङ्ङ्वनिबथङ्नङः । कथंजातीयकाश्चैते । आर्द्धधातुकीयाः। यद्येतदस्ति तुल्यजातीयस्य ज्ञापकमिति, चङङौ लुङ्विकरणानां ज्ञापकौ स्यातां, नजिङ् वर्तमानकालानां, ङ्वनिब् भूतकालानाम्, अथङ्शब्द औणादिकानां, नङ्शब्दो घञर्थानाम् । तस्मात् सार्वधातुकग्रहणं कर्तव्यम् । किं पुनरयं पर्युदासः यदन्यत्पित इत्याहोस्वित् प्रसज्ज्यायं प्रतिषेधः पिन्नेति । कश्चात्र विशेषः । अपिद् ङिदिति चेत् शबेकादेशप्रतिषेध आदिवत्त्वात् ॥ * । अपिन्ङिदिति चेत् शबेकादेशे प्रतिषेधो वक्तव्यः । च्यवन्ते प्लवन्ते । किं कारणम् । आदिवत्त्वात् । पिदपितोरेकादेशोऽपित आदिवत् स्यात् । अस्त्यन्यत् पित इति कृत्वा ङित्त्वं प्राप्नोति । अस्तु तर्हि प्रसज्ज्य प्रतिषेधः पिन्नेति । न पिन्ङिदिति चेदुत्तमैकादेशप्रतिषेधः * । न पिन्ङिदिति चेदुत्तमैकादेशे प्रतिषेधः प्राप्नोति । तुदानि लिखानि । किं कार-

---

शिकस्यापि कित्त्वस्य स्यात् । अथ वा यदप्राप्तं कार्यं तदतिदिश्यत इति क्त्वाप्रत्यये कित्त्वातिदेश एव न स्यात् । नुवित्वेति । ङित्त्वेनात्र कित्त्वं येन नाप्राप्तिन्यायेन बाध्यत इति भावः । सत्यपीति । विरोधाभावादतिदेशेन स्वाश्रयस्य कित्त्वस्यानिवर्तनाद् येन नाप्राप्तइति न्यायाभावाच्च । नहि कुटिता कुटितुमित्यादौ कित्त्वे प्राप्ते ङित्त्वारम्भः ॥१॥ सार्वधातुकमपित् ॥ लिङ्गादव्याप्तिरतिव्याप्तिर्वेति प्रदर्शनाय सार्वधातुकग्रहणस्याक्षेपप्रतिसमाधाने भाष्यकारेणोपन्यस्ते । आर्धधातुकीयानिति । आर्द्धधातुकेषु भवा इति ठञन्तत्वादन्तोदात्तत्वाभावाद् बह्वचोऽन्तोदात्ताट्ठञिति ठञभावे वृद्धाच्छो भवति । तातङस्तु ङित्त्वं तिपः पित्वादप्राप्तमित्यज्ञापकं सार्वधातुकाङित्त्वस्य ङ्वनिपो ङित्त्वमज्ञापकमस्य हि पित्त्वान्ङित्त्वाप्राप्तिः । च्यवन्ते प्लवन्त इति । गुणात्पूर्वं नित्यत्वादन्तरङ्गत्वाच्चैकादेशः । तत्र कृते परस्येहापित आश्रितत्वात्परस्य कार्यं प्रत्यादिवद्भावाद् गुणनिषेधः स्यात् । साधारणपरिहाराभिधानाय वार्णादाङ्गमिति नाश्रितं, प्रसज्ज्यप्रतिषेधे तु ङित्त्वनिषेधः पूर्वस्य कार्यमिति । पूर्वं प्रत्यन्तवत्त्वाद् ङित्त्वाभावः । यद्यपि सार्वधातुकावयवस्याकारस्यैकादेशस्तथापि परं प्रत्यादिवत्त्वादन्तशब्दः सार्वधातुकमपिद्भवतीति स्यादेव ङित्त्वम् । च्यवे इति चोत्तमैकवचने सर्वस्यैव सार्वधातुकस्यैकादेश इति ङित्त्वप्रसङ्गः । तुदानीति । यद्यप्युत्तमस्य पित्त्वं तथापि तद्भक्तत्वादाटः पिद-

णम्। आदिवत्त्वादेव। पि पितोरेकादेशः पित आदिवत् स्यात्तत्र पिन्नेति प्रतिषेधः प्राप्नोति। यथेच्छसि तथाऽस्तु। ननु चोक्तमुभयथा च दोष इति। उभयथा च न दोषः। एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद् व्यवधानम् ॥४॥

असंयोगाल्लिट्कित् ॥५॥ ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन*। ऋदुपधेभ्यो लिटः कित्त्वं गुणाद्भवति पूर्वविप्रतिषेधेन। ववृते। ववृधे। उक्तं वा। किमुक्तम्। न वा क्सस्यानवकाशत्वादपवादो गुणस्येति। विषम उपन्यासः। युक्तं तत्र यदनवकाशं कित्करणं गुणं बाधते इह पुनरुभयं सावकाशम्। कित्करणस्यावकाशः। ईजतुः। ईजुः। गुणस्यावकाशः। वर्तिता। वर्द्धिता। इहोभयं प्राप्नोति। ववृते। ववृधे। परत्वाद् गुणः प्राप्नोति। इदं तर्ह्युक्तमिष्टवाची परशब्द इति विप्रतिषेधे परं यदिष्टं तद्भवतीति ॥ ५ ॥

इन्धिभवतिभ्यां च ॥ ६ ॥ किमर्थमिदमुच्यते। इन्धेः संयोगार्थं ग्रहणं भवतेः पिदर्थम्। अयं योगः शक्योऽवक्तुम्। कथम्। इन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम्*। इन्धेश्छन्दोविषयो लिट्। न ह्यन्तरेण छन्द इन्धेरनन्तरो लिट् लभ्यः। आमा भाषायां भवितव्यम्। भुवो वुको नित्यत्वाद्। भवतेरपि नित्यो वुक् कृते गुणे प्राप्नोति, अकृतेऽपि प्राप्नोति।

---

वयवस्यैकादेशः पित उत्तमस्यादिवदिति स्याद् ङित्त्वनिषेधः। तुदे इत्यत्र च सर्वस्यैव पित एकादेशः पित आदिवदिति ङित्त्वप्रतिषेधप्रसङ्गः। स्थानिवद्भावादिति। यथा स्थानिकाले यथायोगं गुणप्रवृत्तिनिवृत्ती तथाऽऽदेशेऽपि कृते व्यवधानान्तुबुद्ध्या भवतः ॥४॥

असंयोगात् ॥ ऋदुपधेभ्य इति। बिभिदतुः बिभिदुरित्यादौ कित्त्वं नित्यं, गुणस्त्वनित्यः। ववृतइत्यादौ तु द्वयोरप्यनित्यत्वं, तत्र परत्वाद् गुणप्रसङ्गः पूर्वविप्रतिषेधाश्रयेण निवार्यते। न वा क्सस्येति। यथा क्सस्य कित्करणसामर्थ्याद् गुणो बाध्यते तथेहातिदेशसामर्थ्यादित्यर्थः। युक्तं तत्रेति क्सस्य कित्करणे प्रयोजनान्तराभावः। इह तु सम्प्रसारणविधौ कृतार्थत्वाद् दुर्बलेनातिदेशेन प्राप्यमाणो गुणनिषेधो दुर्बलत्वान्न तद्विधिना सह स्पर्धते, तातङ्न्यायेन। इष्टवाचीति। सूत्रकारेणैवाऽयमर्थः संगृहीतः स तु स्मर्तव्य इत्यर्थः ॥ ५ ॥

इन्धि। किमर्थमिति विनापि सूत्रेणेष्टं सिद्ध्यति, सत्यपि चेष्टं न सिद्ध्यति। बभूवेत्यजलक्षणत्वाद् वृद्धेरिग्लक्षणत्वाभावात् प्रतिषेधाप्रसङ्गात्। गुणमात्रनिषेधे एव तु बभूविथ अहं बभूवेति च णित्वाभावपक्षे स्यादिति प्रश्नः। इन्धेरिति। भाषायां लिव आमा व्यवधानाच्छन्दस्यमन्त्र इत्याम्प्रतिषेधादेतदुक्तम्। न त्वस्य भाषायां प्रयोगाभावः। तत्र छन्दस्युभयथेति लिटः सार्वधातुकत्वात् समीध इति ङित्त्वान्नलोपः। आर्धधातुकत्वाच्च श्नमभावः। व्यत्ययो बहुलमिति वचनाद्वा। नित्यो वुगिति। ओः सुपीत्यत ओरिति नानुवर्तत इति भावः। एकदेशविकृतस्यानन्यत्वाच्च शब्दान्तरप्राप्त्यभावः। सत्यामपि वा शब्दान्तरप्राप्तौ कृताकृतप्रसङ्गित्वाद् वुको नित्य-

ताभ्यां किद्वचनानर्थक्यम् । ताभ्यामिन्धिभवतिभ्यां किद्वचनमनर्थकम् ॥ ६ ॥

**मृडमृदगुधकुषक्लिशवदवसः क्त्वा** ॥ ७ ॥ किमर्थं मृडादिभ्यः परस्य क्त्वः कित्त्वमुच्यते । न । किदेव हि क्त्वा । न क्त्वा सेडिति प्रतिषेधः प्राप्नोति तद्बाधनार्थम् । यदि तर्हि मृडादिभ्यः परस्य क्त्वः कित्त्वमुच्यते, नार्थो, न क्त्वा सेडिति किवत्त्वप्रतिषेधेन । इदं नियमार्थं भविष्यति । मृडादिभ्य एव परस्य क्त्वः किवत्त्वं भवति, नान्येभ्य इति । यदि नियमः क्रियते इहापि तर्हि नियमान्न प्राप्नोति । लूत्वा पूत्वा । अत्राप्यकिवत्त्वं प्राप्नोति । तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः । यथाजातीयको मृडादिभ्यः परः क्त्वा । कथंजातीयकश्च मृडादिभ्यः परः क्त्वा । सेट् । एवमप्यत्रास्ति कश्चिद्विभाषितेट् सोऽनिटां नियामकः स्याद् । अस्तु तावद् ये सेटस्तेषां ग्रहणं नियमार्थं भविष्यति । य इदानीं विभाषितेट् तस्य ग्रहणं विध्यर्थं भविष्यति ॥ ७ ॥

**रुदविदमुषग्रहिस्वपिप्रच्छः सँश्च** ॥ ८ ॥ स्वपि प्रच्छ्योः सन्नर्थं ग्रहणं किदेव हि क्त्वा ॥ ८ ॥

**इको झल्** ॥ ९ ॥ किमर्थमिकः परस्य सनः कित्त्वमुच्यते । इकः कित्त्वं गुणो मा भूत् । इकः कित्त्वं क्रियते गुणो मा भूदिति । चिचीषति तुष्टूषति । नैतदस्ति प्रयोजनम् । दीर्घारम्भात् । दीर्घत्वमत्र बाधकं भविष्यति । कृते भवेत् । कृते खलु दीर्घत्वे गुणः प्राप्नोति । अनर्थकं तु । अनर्थकमेवं सति दीर्घत्वं स्यात् । नानर्थकम् । ह्रस्वार्थम् । ह्रस्वानां दीर्घवचनसामर्थ्याद् गुणो न भविष्यति । भवेद् ह्रस्वानां दीर्घ-

---

त्वं, वुकि कृते गुणस्य प्राप्तिरेव नास्तीति नैतयोस्तुल्यबलत्वम् ॥ ६ ॥

मृड ॥ मृडादिभ्य एवेति । विपरीतनियमस्तु व्याख्यानान्न भविष्यति मृडादिभ्यः क्त्वैव किद्भवतीति । न ह्यनिष्टार्था शास्त्रप्रवृत्तिर्लक्ष्यमूलकत्वाद्व्याकरणस्मृतेः । लूत्वेति । क्त्वाप्रत्ययमात्रस्य नियमः स्यात् । कित्त्वं तु क्त्वातोऽसुन्कसुन इत्यादौ विशेषणार्थं स्यात् । एवमपीति । क्लिशः क्त्वानिष्ठयोरिति विकल्पेनेड्विधानात् । अस्तु तावदिति । मृडमृदवदवसां क्त्वः कित्त्वविधानं नियमार्थं, गुधकुषक्लिशीनां तु, रलो व्युपधादिति विकल्पे प्राप्ते नित्यार्थम् । तत्र विधिसम्भवे क्लिशेरनिटः क्त्वः कित्त्वविधानं नियमार्थं न भवति ॥७॥

रुदविद ॥ सन्नर्थमिति । तत्र चरितार्थत्वादनिटः क्त्वः कित्त्वविधानं नियमार्थं न भवति ॥ ८ ॥

इको ॥ किमर्थमिति । इको झल् हलन्ताच्चेत्येक एव योगः कर्तव्यः, किमर्थो योगविभाग इति प्रश्नार्थः । वक्ष्यमाणश्चात्राभिप्रायः । दीर्घत्वमिति । अज्झनगमां सनीति दीर्घत्वं नाप्राप्ते गुण आरभ्यमाणं तस्य बाधकमिति भावः । कृते भवेदिति । शास्त्रमावर्तमानं धर्मसाधनं जपादिवदिति भावः । अनर्थकं त्विति । शास्त्रपूर्वकात् प्रयोगाद्धर्मो न तु शास्त्रप्रवृत्तिमात्रादिति भावः । ह्रस्वार्थमिति । ह्रस्वानामेव दीर्घविधानसामर्थ्याद् गुणो न स्यात् । दीर्घाणां तु प्रागेव ताद्रूप्याद्रूपविशेषसम्पत्तिफलत्वाच्छास्त्रस्य दीर्घ-

वचनसामर्थ्याद् गुणो न स्यात्। दीर्घाणां तु प्रसज्ज्यते। दीर्घाणां तु खलु गुणः प्राप्तो दीर्घाणामपि दीर्घत्ववचनसामर्थ्याद् गुणो न भविष्यति । न दीर्घाणां दीर्घाः प्राप्नुवन्ति । किं कारणम् । न हि भुक्तवान् पुनर्भुङ्क्ते कृतश्मश्रुश्च पुनः श्मश्रूणि कारयति । ननु च पुनः प्रवृत्तिरपि दृष्टा भुक्तवानपि पुनर्भुङ्क्ते कृतश्मश्रुश्च पुनः श्मश्रूणि कारयति । सामर्थ्याद्धि पुनर्भाव्यम् । सामर्थ्याद्धि पुनः प्रवृत्तिर्भवति । भोजनविशेषाच्छिल्पिविशेषाद्वा । दीर्घाणां पुनर्दीर्घत्ववचने न किं चित्प्रयोजनमस्ति । अकृतकारि खल्वपि शास्त्रमग्निवद्भवति । तद्यथा । अग्निर्यददग्धं तद्दहति यद्दग्धं तन्न दहति । दीर्घाणामपि दीर्घवचन एतत्प्रयोजनं गुणो मा भूदिति । कृतकारि खल्वपि शास्त्रं पर्जन्यवत् । तद्यथा पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति । यथैव तर्हि दीर्घत्ववचनसामर्थ्याद् गुणो न भवति । एवमृदित्त्वमपि न प्राप्नोति । चिकीर्षति जिहीर्षति । ऋदित्त्वं दीर्घसंश्रयम् । नाकृते दीर्घे ऋदित्त्वं प्राप्नोति । किं कारणम् । ऋत इत्युच्यते । भवेद् ह्रस्वानां नाकृते दीर्घे ऋदित्त्वं स्याद् दीर्घाणां तु खल्वकृतेऽपि दीर्घत्वे ऋदित्त्वं प्राप्नोति । दीर्घाणां नाकृते दीर्घे । दीर्घाणामपि नाकृते दीर्घत्वे ऋदित्त्वं प्राप्नोति । यदा दीर्घत्वेन गुणो बाधितस्तत उत्तरकालमृदित्त्वं भवति । णिलोपस्तु प्रयोजनम् । इदं तर्हि प्रयोजनम् । णिलोपो यथा स्यात् । ज्ञीप्सति । कास्ताः, क्व निपतिताः, क्व कित्त्वं, क्व णिलोपः, को वाऽभिसंबन्धः । यत् सति कित्त्वे

---

शास्त्राप्रवर्तनाद् गुणप्रसङ्गः । दीर्घाणामपीति । गुणापाकरणार्थं दीर्घेष्वपि दीर्घशास्त्रं प्रवर्तत एवेत्यर्थः । न हि भुक्तवानिति । तृप्तिफलं भोजनं, फले सम्पन्ने पुनर्न प्रवर्तते । ननु चेति । तृप्तोऽपि पुनर्भुङ्क्त इत्यर्थः । भाव्यमिति । कर्तव्यं भोजनं तृप्तिविशेषार्थिभिरित्यर्थः । न किं चिदिति । न हि दीर्घाणां दीर्घतरः सम्पद्यत इत्यर्थः । अग्निवदिति । दग्धस्यायोग्यत्वाद् अदाह इति भावः । इहाप्ययोग्यत्वाद्दीर्घेषु दीर्घशास्त्रेण न प्रवर्तितव्यमिति भावः । दीर्घाणामपीति । ह्रस्वेष्वपूर्वदीर्घरूपसंपादनार्थं दीर्घशास्त्रं प्रवर्तते दीर्घेषु तु रूपप्रतिबन्धिगुणनिवर्तनेन स्वरूपप्रत्यापत्तये । यथा, मो राजिसमः क्वाविति मकारस्य मकार इति भावः । ततश्च ह्रस्वानामिव दीर्घाणामपि येन नाप्राप्तिन्यायेन दीर्घेण गुणो बाध्यत एव । यथैवेति । दीर्घारम्भादविकृतेनैव दीर्घेण स्थातव्यमिति भावः । ऋदित्त्वमिति । यद्यन्तरङ्गे दीर्घविधानं प्राप्नुयाद् ऋदित्त्वं तदा तद्दीर्घेण बाध्येत यत्तु दीर्घाश्रयमेव ऋदित्त्वं तदा तदेव फलं दीर्घस्य संजातमिति ऋदित्त्वं प्रवर्तिष्यते । तथा चोच्यते । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते । यस्य तु विधेर्निमित्तमेव, नाऽसौ बाध्यते इति । दीर्घाणामिति । इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेनेति गुणप्रसङ्गादिति भावः । ज्ञीप्सतीति । असति कित्त्वे गुणवण्णिलोपस्यापि विशेषाभावाद्दीर्घत्वं बाधकं स्यादित्यर्थः । कास्ता इति । यथान्यत्र क्षिप्तानां शरादीनामन्यत्र निपातोऽसंभाव्यः । एवं कित्त्वणिलोपयोरपि संबन्धो न संभाव्यत इत्यर्थः ।

णिलोपः स्यादसति कित्त्वे न स्यात्। एषोऽभिसम्बन्धः। यत्सति कित्त्वे सावकाशं दीर्घत्वं परत्वाण्णिलोपो बाधते, असति पुनः कित्त्वेऽनवकाशं दीर्घत्वं यथैव गुणं बाधते एवं णिलोपमपि बाधते। तत्र णिलोपस्यावकाशः। कारणा। हारणा। दीर्घत्वस्यावकाशः। चिचीषति तुष्टूषति। इहोभयं प्राप्नोति। ज्ञीप्सति। परत्वाण्णिलोपः। असत्यपि कित्त्वे सावकाशं दीर्घत्वम्। कोऽवकाशः। इस्भावः। निमित्सति। प्रमित्सति। मीनातिमिनोत्योर्दीर्घत्वे कृते मीग्रहणेन ग्रहणं यथा स्यात्। यथैव तर्ह्यसति कित्त्वे सावकाशं दीर्घत्वं परत्वाण्णिलोपो बाधते एवं गुणोऽपि बाधेत तस्मात् कित्त्वं वक्तव्यम्॥ इकः कित्त्वं गुणो मा भूद् दीर्घारम्भात् कृते भवेत्। अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते ॥१॥ सामर्थ्याद्धि पुनर्भाव्यमृदित्त्वं दीर्घसंश्रयम्। दीर्घाणां नाकृते दीर्घे णिलोपस्तु प्रयोजनम् २॥ इको झल्॥९॥

———

एषोऽभिसंबन्ध इति। ज्ञीप्सतीति येगुणलोपदीर्घत्वानि प्राप्नुवन्ति। तत्रासति कित्त्वेऽनवकाशत्वाद्विशेषाभावाच्च गुणवण्णिलोपस्यापि दीर्घत्वं बाधकं स्यात्। अथ वा पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति णिलोपस्यैव बाधकं तत् स्यात्। गुणस्तु स्यादेव सति कित्त्वे तेनैव गुणो बाधित इति चिचीषतीत्यादौ लब्धावकाशं दीर्घत्वं परत्वाण्णिलोपेन बाध्यते। नन्वसत्यपि कित्त्वे येन नाऽप्राप्ते इति न्यायेन गुणस्यैव बाधकं दीर्घत्वं भविष्यति, न णिलोपस्य, गुणबाधनेन च सावकाशं दीर्घत्वं परत्वाण्णिलोपेन बाधिष्यत इति नार्थः कित्त्वेन। नैतदस्ति। यदा बाध्यं भेदेनापेक्ष्यते इदं सर्वत्र प्राप्तमिदं तु क्व चिदेवेति तदायं न्यायः। यदा तु बाध्यमात्रमपेक्ष्यते विध्यन्तरेणाव्याप्तो विषयो न कश्चिदस्तीति तदा सर्वस्यैव बाधया भवितव्यम्। असत्यपीति। मीनातिमिनोत्योः सन्यनवकाशत्वाद् गुणं बाधित्वा दीर्घः प्रवर्तते। ततो मीग्रहणेन ग्रहणादिस्भावेन प्रतिपदविहितेन गुणो बाध्यते। कृते चेस्भावे हलन्ताच्चेति कित्त्वाल्लघूपधगुणाभावस्तत्र सामान्यग्रहणे चरितार्थत्वाद्दीर्घविधानस्य ज्ञीप्सतीति परत्वाण्णिलोपो भविष्यतीति नार्थः कित्त्वेन। ननु लाक्षणिकत्वान्मिनोतेर्मीरूपस्य मीग्रहणेन ग्रहणं न प्राप्नोति। नैष दोषः। यत्र लक्षणाभिनिर्वृतत्वेन शब्दरूपमपेक्ष्यते तत्र लक्षणप्रतिपदोक्तयोरिति परिभाषोपस्थानं, न तु यत्र प्रयोगरूपाश्रयणं तत्र। नन्वेवमसत्यपि मीग्रहणेन ग्रहणे, मीनातीत्यादिनाऽऽत्वे कृते, गामादाग्रहणेष्वविशेष इति माग्रहणेन ग्रहणादिस् भविष्यतीति सामान्यग्रहणमपि दीर्घस्य प्रयोजनं नोपपद्यते। एवं तर्हि दोषान्तराभिधानेनास्य पूर्वपक्षस्य निराकरणाद्भाष्यकारेण नैतत्सुष्ठु निरूपितम्। तदेव दोषान्तरमाह। यथैवेति। सामान्यग्रहणे उपयुक्तत्वाद्दीर्घत्वस्य नास्त्यनवकाशत्वमिति द्वाभ्यामपि गुणणिलोपाभ्यां दीर्घत्वं बाध्यत इति कर्तव्यं कित्त्वम्। न च दीर्घविधानस्य, कुङ् शब्द इति धातुरवकाशः—चुकूषत इति। यस्मात्कुङ् शब्द इति पाठस्तत्र कुटादित्वाद् ङित्त्वे सति गुणाभावाद्दीर्घस्य श्रवणं सिद्धम्। वेदलोकयोश्चाकूतशब्दस्य प्रयोगो दृश्यते। गुधुवाववकाशाविति चेद् उहनिगमामिति ब्रूयात् किं प्रत्याहारेण॥ ६॥

हलन्ताच्च ॥ १० ॥ अयुक्तोऽयं निर्देशः। कथं हि इको नाम हलन्तः स्यादन्यस्यान्यः। कथं तर्हि निर्देशः कर्तव्यः। इग्वतो हल इति। यद्येवं यियक्षति। अत्रापि प्राप्नोति। एवं तर्हि इगुपधाद्धलन्तादिति वक्ष्यामि। एवमपि दम्भेर्न प्राप्नोति सूत्रं च भिद्यते। यथान्यासमेवास्तु। ननु चोक्तमयुक्तोऽयं निर्देश इति। नायुक्तः। अयमन्तशब्दोऽस्त्येवावयववाची। तद्यथा वस्त्रान्तः वसनान्त इति। वस्त्रावयवो वसनावयव इति गम्यते। अस्ति सामीप्ये वर्तते। तद्यथा। उदकान्तं गत इति। उदकसमीपं गत इति गम्यते। तद्यः सामीप्ये वर्तते तस्येदं ग्रहणम्। एवमपि दम्भेर्न सिद्ध्यति। यो ह्यत्रेक्समीपो हल् न तस्मादुत्तरः सन्, यस्मादुत्तरः सन् नासाविक्समीपे। एवं तर्हि दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम्। हल्जातिर्निर्दिश्यते, इक उत्तरा या हल्जातिरिति। हलन्ताच्च ॥ १० ॥

लिङ्सिचावात्मनेपदेषु ॥ ११ ॥ कथमिदं विज्ञायते आत्मनेपदं यौ लिङ्सिचाविति। आहोस्विदात्मनेपदेषु परतो यौ लिङ्सिचाविति। किं चातः। यदि विज्ञायते आत्मनेपदं यौ लिङ्सिचाविति लिङ् विशेषितः सिजविशेषितः। अथ विज्ञायते आत्मनेपदेषु परतो यौ लिङ्सिचाविति। सिज्विशेषितः। लिङविशेषितः। यथेच्छसि तथाऽस्तु। अस्तु तावदात्मनेपदं यौ लिङ्सिचाविति। ननु चोक्तं लिङ् विशेषितः सिजविशेषित इति। सिच्च विशेषितः। कथम्। आत्मनेपदं सिज्नास्तीति कृत्वा आत्मनेपदपरे सिचि कार्यं विज्ञास्यते। अथ वा पुनरस्तु चात्मनेपदेषु परतो यौ लिङ्सिचाविति। ननु चोक्तं सिज्विशेषितो

---

हलन्ताच्च ॥ अयुक्त इति। अन्तशब्दमवयववचनं मत्वा पर्यनुयुङ्क्ते। अन्यस्यान्य इति। अत्यन्तभेदमनेन दर्शयति। अवयवावयविनोस्तु भेदविवक्षापि भवति तन्तूनां पट इति। अभेदविवक्षापि पटीभवन्ति तन्तव इति। इग्वतो हल इति। हलन्तादित्यर्थः। यियक्षतीति। अत्र संप्रसारणप्रसङ्गः। तद्यः सामीप्य इति। एवं च हल् चासावन्तश्चेति कर्मधारयः। निपातनाच्च विशेषणस्य परनिपातः। एवमपीति। व्यक्तिनिर्देश इति भावः। असति च कित्त्वे नलोपो न स्यात्। दम्भेरिति। वर्णग्रहणे जातिग्रहणमिति निपात एकाजनाङित्यत्रैकग्रहणेन ज्ञापितत्वात्। न चात्र व्यक्तिगतमेकत्वमपि तु जातेः स्वगतम्। तत्र यदा तावद् व्यक्तिव्यतिरिक्ता जातिस्तस्याश्च व्यक्तिद्वारकाः सामीप्यादयो धर्मास्तदा तस्या एकत्वादिक्समीपत्वं सतश्च परत्वं तदपेक्षमस्तीति सिद्धं भिप्सतीति कित्त्वम्। हकारादिषु चाभिन्नप्रत्ययाभिधानाद्धल्त्वजातेः सद्भावः। यदापि त्यक्तभेदा व्यक्तय एव जातिरिति पक्षस्तदा भेदव्युदासादभेदाश्रयणादिष्टसिद्धिः॥१०॥

लिङ्गेति ॥ कथमिति। आत्मनेपदेष्विति सकृच्छ्रुतस्य अर्थद्वयं न लभ्यते। तत्र यदि निर्द्धारणसप्तमी तदा तुल्यजातीयस्य निर्धारणाल्लिङेव विशेषितः स्याद्।

लिङ्विशेषित इति । लिङ् च विशेषितः । कथम् । आत्मनेपदे परतो लिङ् नास्तीति कृत्वाऽऽत्मनेपदे लिङि कार्यं विज्ञास्यते । नैव वा पुनरर्थो लिङ्विशेषणेनात्मनेपदग्रहणेन । किं कारणम् । झलिति वर्तते । आत्मनेपदेषु चैव लिङ् झलादिः, न परस्मैपदेषु । तदेतत् सिज्विशेषणमात्मनेपदग्रहणम् । अथ सिज्विशेषणे आत्मनेपदग्रहणे सति किं प्रयोजनम् । इह मा भूत् । अयाक्षीत् । अवाप्सीत् । नैतदस्ति । इक इति वर्तते । एवमप्यचैषीत् । अनैषीत् । अत्रापि प्राप्नोति हलन्तादिति वर्तते । एवमपि अकोषीत् । अमोषीदत्रापि प्राप्नोति । नैतदस्ति । झलिति वर्तते । एवमप्यभैत्सीत् अच्छैत्सीत् । अत्रापि प्राप्नोति । नैतदस्ति । इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । न चैषेग्लक्षणा वृद्धिः । इदं तर्हि प्रयोजनम् । इह मा भूत् । अस्राक्षीदद्राक्षीदिति । किं च स्यादकिल्लक्षणः अमागमो न स्यात् ॥ ११ ॥

स्थाघ्वोरिच्च ॥ १७ ॥ इच्च कस्य तकारेत्त्वम् । कस्य हेतोरिकारस्तपरः क्रियते । दीर्घो मा भूत् । दीर्घो मा भूदिति । ऋतेऽपि सः । अन्तरेणाप्यारम्भं सिद्धोऽत्र दीर्घः । घुमास्थागापाजहातिसां हलीति । अनन्तरे प्लुतो मा भूत् । इदं तर्हि प्रयोजनमनन्तरे प्लुतो मा भूदिति । कुतो नु खल्वेतत् । अनन्तरार्थ आरम्भे ह्रस्वो भविष्यति न पुनः प्लुत इति । प्लुतश्च विषये स्मृतः । विषये प्लुत उच्यते । यदा च

---

लिङ्शब्देन लिङादेशानां ग्रहणात् । अथ परसप्तमी तदा सिजेव विशेष्यते, न लिङ् सीयुडादिसमुदायो लिङ्शब्देन गृह्यते इति तस्यात्मनेपदपरत्वाभावः । नचानयोर्भिन्नयोरर्थयोः सहविवक्षा संभवतीत्येकशेषस्याप्रयोगः । सिच्च विशेषित इति । आत्मनेपदपरत्वादुपचारात्सिजेवात्मनेपदमुच्यते, गौणमुख्यार्थयोरात्मनेपदशब्दयोः सारूप्यमात्रप्रतिबद्ध एकशेषः करिष्यत इति भावः । आत्मनेपदे लिङीति । अवयवगतं पौर्वापर्यं समुदाय आश्रयिष्यत इति भावः । अथवा तन्त्रेण शब्दद्वयोच्चारणादर्थद्वयं लभ्यते नैव वेति संभवव्यभिचाराभ्यां सिजेव विशेष्यते, न लिङित्यर्थः ॥ ११ ॥

स्थाघ्वोरिच्च ॥ इच्च कस्येति । कथं पुनरत्र षष्ठी । यावता हेतुशब्दः श्लोके न प्रयुक्त इति; हेतुतृतीयया भाव्यम् । नैष दोषः । हेतुरूपताया अविवक्षणात् । संबन्धिरूपेण विवक्षितत्वाद्यथा-मदीयाः पुत्रा इति शैषिकः प्रत्ययस्तदुत्पत्तिकाले अपत्यरूपस्याविवक्षणात् । तकार इत् तकारेत्, तस्य भावस्तकारेत्त्वं, किमर्थं क्रियते । दीर्घो मा भूदिति । आन्तरतम्यात्प्राप्नोतीतिभावः । भाव्यमानोऽण् सवर्णान्न गृह्णातीत्येव तु परिहारो नित्यत्वान्नोक्तः । क्व चिद्भाव्यमानेनापि सवर्णग्रहणात् । यथाऽमूभ्यामित्यादावूकारो दीर्घस्य भवति । परिहारान्तराभिधानाद्वा । अन्तरेणापीति । इकारविधानेन विनापीत्यर्थः । कित्त्वं तु कर्तव्यमेव । तेन विना ईत्वस्य प्राप्त्यभावात् । अनन्तर इति । असदृश आदेशे क्रियमाण इत्यर्थः । प्लुतश्च विषय इति । अनेन तपरत्वं प्रत्याख्यायते यद्यनेन प्लुतो विधी-

स विषयो भवितव्यमेव तदा प्लुतेन ॥ इच्च कस्य तकारेत्त्वं दीर्घो मा भूदृतेऽपि सः ॥ अनन्तरे प्लुतो मा भूत् प्लुतश्च विषये स्मृतः ॥ १ ॥ स्थाघ्वोरिच्च ॥ १७ ॥

न क्त्वा सेट् ॥ १८ ॥ न सेडिति कृतेऽकित्त्वे । न सेडिसेन्न सिद्धं, नार्थः क्त्वाग्रहणेन । निष्ठायामपि तर्हि प्राप्नोति । गुधितः । गुधितवानिति । निष्ठायामवधारणात् । निष्ठायामवधारणान्न भविष्यति । किमवधारणम् । निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृष इति । परोक्षायां तर्हि प्राप्नोति । किं च स्यात् । पपिव । पपिम । क्ङितीत्याकारलोपो न स्यात् । मा भूदेवम्, इटीत्येवं भविष्यति । इदं तर्हि जग्मिव, जघ्निव । क्ङितीत्युपधालोपो न स्यात् । ज्ञापकान्न परोक्षायाम् । ज्ञापकात् परोक्षायां न भविष्यति । किं ज्ञापकम् । सनि झल्ग्रहणं विदुः । यदयमिको झलिति झल्ग्रहणं करोति तज्ज्ञापयत्याचार्य औपदेशिकस्य कित्त्वस्य प्रतिषेधो, नातिदेशिकस्येति । कथं कृत्वा ज्ञापकम् । झल्ग्रहणस्यैतत्प्रयोजनं झलादौ यथा स्यात्, इह मा भूत् । शिशयिषत इति । यदि चात्रातिदेशिकस्यापि कित्त्वस्य प्रतिषेधः स्यात् झल्ग्रहणमनर्थकं स्यात् । अस्त्वत्र कित्त्वं, न सेडिति प्रतिषेधो भविष्यति । पश्यति त्वाचार्य औपदेशिकस्य कित्त्वस्य प्रतिषेधो, नातिदेशिकस्येति । ततो झल्ग्रहणं करोति । नैतदस्ति ज्ञापकम्, उत्तरार्थमेतत्स्यात् । स्थाघ्वोरिच्च झलादौ यथा स्यादिह मा भूद्, उपास्थायिषाताम् उपास्थायिषत । इत्त्वं कित्संनियोगेन । कित्त्वसंनियोगेनेत्त्वमुच्यते । तेनाऽसति किंत्त्वे इत्त्वं न भविष्यति । रेण तुल्यं सुधीवनि । तद्यथा । सुग्रीवा सुपीवेति । ङीप्संनियोगेन र उच्यमानोऽसति ङीपि

---

येत तदा यत्रापि विषये, अनन्त्यस्यापि प्रश्नाख्यानयोरित्यादिना प्लुतो विहितस्तत्रान्त्येन विधीयेत अस्मिन् कर्तव्ये पूर्वत्रासिद्धमित्याष्टमिकस्य प्लुतस्यासिद्धत्वात्तथ्य पक्षेऽनुवाददोषः प्राप्नोतीति ह्रस्व एव भविष्यति । अन्ये तु तपरत्वमनेन समर्थितमिति व्याचक्षते । अनन्तरेऽप्यादेशे श्रूयमाणे दीर्घ एव स्यात् । ननु सिद्ध एव दीर्घ इत्युक्तं सिद्धस्यापि पुनर्विधानं प्लुतनिवृत्त्यर्थं स्याद् । माभूत् प्लुत इति चेत् । तन्न । प्लुतश्च विषये स्मृत इति । स चासति तपरत्वे न प्राप्नोतीति दीर्घनिवृत्त्यर्थं तपरत्वं स्थितम् । प्लुतविधौ तु वाक्यस्य टेरित्यधिकारात् कथमिकारस्य प्लुतः स्यादिति चिन्त्यमेतत् ॥ १७ ॥

न क्त्वा ॥ कृतेऽकित्त्वे इति । अकारप्रश्लेषः । निष्ठायामिति । शीङादिभ्य एव परा निष्ठा न किदिति नियमः विपरीतस्तु निष्ठैवेति व्याख्यानान्न भवति । परोक्षायामिति । पूर्वाचार्यप्रसिद्ध्या परोक्षा लिडुच्यते । अस्त्वत्रेति । प्राप्नोतु कित्त्वमित्यर्थः । न तु निवृत्तस्य निषेधः कर्तुं शक्यः । उपास्थायिषतामिति । स्थास् आतामिति स्थिते इत्वं च प्राप्नोति चिण्वद्भावश्च, तत्र परत्वाच्चिण्वद्भावे युक् च प्राप्नोति, वृद्धिश्च । तत्र वृद्ध्यपवादो युगागमः । तत्र कृते यकारस्येत्त्वप्रसङ्गः । न च पुनर्वृद्धिर्लभ्यते । पूर्वमेव युका बाधितत्वादिति भावः । असति कित्त्व इति । झल्ग्रहणस्य ज्ञापकत्वं न तावत् स्थितमिति आतिदेशिकस्यापि कित्त्वस्य न सेडिति निषेधो भवतीत्यभिप्रायः । सुधी-

न भवति। अथ वाऽस्त्वत्रेत्त्वं, का रूपसिद्धिः। वृद्धौ कृतायामायादेशो भविष्यति। वस्त्वर्थम्। वस्त्वर्थं तर्हि क्त्वाग्रहणं कर्तव्यम्। क्वसोर्ह्यौपदेशिकं कित्त्वम्। किं च स्यात्। पपिवान्। तस्थिवान्। क्ङितीत्याकारलोपो न स्यात्। मा भूदेवम्, इटीत्येवं भविष्यति। इदं तर्हि जग्मिवान् जघ्निवान् क्ङितीत्युपधालोपो न स्यात्। किदतिदेशात्। अस्त्वत्रौपदेशिकस्य कित्त्वस्य प्रतिषेधः। आतिदेशिकमत्र कित्त्वं भविष्यति। यत्र तर्हि प्रतिषिद्ध्यते। अञ्जेः आजिवानिति। एवं तर्हि छान्दसः क्वसुः। लिट् च छन्दसि सार्वधातुकमपि भवति। तत्र सार्वधातुकमपिन्ङिद्भवतीति ङित्त्वुपधालोपो भविष्यति। निगृहीतिः प्रयोजनम्। इदं तर्हि प्रयोजनम्। इह मा भूत्। निगृहीतिः उपस्निहितिः निकुचितिः। तत्तर्हि क्त्वाग्रहणं कर्तव्यम्। न कर्तव्यम्। क्त्वा च विग्रहात्। उपरिष्टाद् योगविभागः करिष्यते, न सेट् निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः। मृषस्तितिक्षायाम्। उदुपधाद्भावादिकर्मणोरन्यतरस्याम्। ततः। पूङः। पूङश्च निष्ठा सेट् किन्न भवति। ततः। क्त्वा च। क्त्वा च सेट् किन्न भवति। पूङ इति निवृत्तम्। न सेडिति कृतेऽकित्त्वे निष्ठायामवधारणात्। ज्ञापकान्न परोक्षायां सनि झल्ग्रहणं विदुः ॥ १ ॥ इत्त्वं कित्संनियोगेन रेण तुल्यं सुधीवनि। वस्त्वर्थं किदतीदेशाद् गृहीतिः क्त्वा च विग्रहात् ॥ २ ॥ १८ ॥

उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ॥ २१ ॥ इह कस्मान्न भवति। गुधितः गुधितवान्। उदुपधाच्छपः। शब्विकरणेभ्य इष्यते ॥ २१ ॥

पूङः क्त्वा च ॥ २२ ॥ पूङः क्त्वानिष्ठयोरिटि वा प्रसङ्गः सेट्प्रकरणात्। पूङः क्त्वानिष्ठयोरिटि विभाषा कित्त्वं प्राप्नोति। किं कारणम्। सेट्प्रकरणात्।

---

वनीति। अनो बहुव्रीहेरिति प्रकृतस्यैव ङीपो निषेधो, न तु रेफस्यापि। स तु सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपाय इति न्यायान्निवर्त्तते। अयं न्यायो विल्वकादिभ्यश्छस्य लुगित्यत्र छग्रहणेन ज्ञापितः। अस्त्वत्रेति। यकारस्य कृत इत्वे वृद्धिर्भविष्यति युगागमेन ह्याकारस्य वृद्धिर्बाध्यते, न त्विकारस्यापि। आजिवानिति। इदं नोपपद्यते। अत्र हि नलोपे कृते द्विर्वचने एकादेशे च वस्वेकाजाद्घसामितीडागमः। तत्र हि कित्त्वप्रतिषेधाद् नलोपनिवृत्तौ द्विहल्त्वान्नुटि सत्येकाच्त्वाभावादिण्निवृत्तौ नलोपादीनां चक्रकप्राप्तिः। चक्रकेषु चेष्टतो व्यवस्था। भाष्यकारेण तु परिहारान्तरसद्भावादेव परिहारो नाश्रितः। निगृहीतिरिति। तितुत्रेष्वग्रहादीनामितीडागमः। क्त्वा च विग्रहादिति। विग्रहो विभागो योगस्य करिष्यत इत्यर्थः ॥ १८ ॥

उदु ॥ उदुपधाच्छप इति। शपः सम्बन्धी शब्विकरणो यस्तस्मादित्यर्थः ॥ २१ ॥

पूङः ॥ पूङ इति। सेडित्यन्यतरस्यामिति चानुवर्तनात्सेटोरेव क्त्वानिष्ठयोः कित्त्वविकल्पः स्यात्। ततश्च पुवित्वा पुवित इति पक्षे स्यात्। अस्ति चेडागमः पूङश्चेति

सेडिति वर्तते। न वा सेट्त्वस्याकिदाश्रयत्वादनिटि वा कित्त्वम्॥ । न वा एष दोषः। किं कारणम्। सेट्त्वस्याकिदाश्रयत्वादकिदाश्रयं सेट्त्वम्। यदा अकित्त्वं तदेटा भवितव्यम्। सेट्त्वस्याकिदाश्रयत्वादनिटयेव विभाषा कित्त्वं भविष्यति। इड्विधौ पूङो ग्रहणं क्रियते। तेन वचनादिट् सेट्प्रकरणाच्च। इट्येव विभाषा कित्त्वं प्राप्नोति। इड्विधौ ह्यग्रहणम्। इड्विधौ हि पूङो ग्रहणं न कर्तव्यं भवति। भारद्वाजीयाः पठन्ति। नित्यमकित्त्वमिडाद्योः क्त्वाग्रहणमुत्तरार्थम्। नित्यमकित्त्वमिडाद्योः क्त्वानिष्ठयोः सिद्धम्। कथम्। विभाषामध्येऽयं योगः क्रियते। विभाषामध्ये च ये विधयस्ते नित्या भवन्ति। किमर्थं तर्हि क्त्वाग्रहणम्। क्त्वाग्रहणमुत्तरार्थम्। उत्तरार्थं क्त्वाग्रहणं क्रियते। नोपधात्थफान्ताद्वा वञ्चिलुञ्च्यृतश्चेति॥ २२॥

तृषिमृषिकृषेः काश्यपस्य॥ २५॥ काश्यपग्रहणं किमर्थम्। काश्यपग्रहणं पूजार्थम्। वेत्येव हि वर्तते। तृषिमृषिकृषेः काश्यपस्य॥ २५॥

रलो व्युपधाद्धलादेः संश्च॥ २६॥ किमिदं रलः क्त्वासनोः कित्त्वं विधीयते। आहोस्वित्प्रतिषिध्यते। किं चातः। यदि विधीयते क्त्वाग्रहणमनर्थकम्। किदेव हि क्त्वा। अथ प्रतिषिद्ध्यते सन्ग्रहणमनर्थकम्। अकिदेव हि सन्। अत उत्तरं पठति। रलः क्त्वासनोः कित्त्वारम्भः रलः क्त्वासनोः कित्त्वं विधीयते। ननु चोक्तं क्त्वाग्रहणमनर्थकमिति। नानर्थकम्। न क्त्वा सेडिति प्रतिषेधः प्राप्नोति तद्बाधनार्थम्। रलो व्युपधाद्धलादेः संश्च॥ २६॥

---

विकल्पेनेड्विधानात्। न वेति। इड्विधौ पूङश्चेति सूत्रं वार्तिककारः प्रत्याचष्टे। तत्राऽनिटोरेव क्त्वानिष्ठयोरनेन कित्त्वं विकल्प्यते। तत्र यदा कित्त्वं तदा श्र्युकः कितीति इट्प्रतिषेधात् पूत्वा पूत इति भवति। यदा त्वकित्त्वं तदेड्गुणयोः पवित्वा पवित इति भवति। भारद्वाजीया इति। लाघवमनादृत्य सूत्रकारेण पूङश्चेतीड्विधौ पठितम्। इह तु विकल्पो नानुवर्तते उत्तरत्र वाग्रहणादिति सिद्ध्यतीष्टमिति भावः। उत्तरार्थमिति। न क्त्वा सेडिति कित्त्वप्रतिषेधस्य सिद्धत्वात्॥ २२॥

तृषि॥ पूजार्थमिति। शास्त्रस्य पूजापारंपर्यप्रतिपादनेनानादित्वात्प्रामाण्यप्रतिपादनात्॥ २५॥

रलो॥ किमिदमिति। किमियमप्राप्ते विभाषा आहोस्वित् प्राप्त इति प्रश्नः। तत्राप्राप्तविभाषायां सन एवाप्राप्तं कित्त्वं पक्षे विधीयत इति क्त्वानुवृत्तिरनर्थिका। न हि तस्य कित्त्वं विधेयं स्वत एव भावात्। अथ प्राप्तविभाषा तदा क्त्वः कित्त्वमस्तीति तस्यैव पक्षे निषेधः कर्तव्य इति सन्ग्रहणं न कार्यम्। नहि तस्य कित्त्वमस्ति यत्पक्षे निषिद्ध्यते। रल इति। अप्राप्तविभाषेयमेकेनैव रूपेण व्यवस्थितेत्यर्थः। एकरूपत्वप्रदर्शनाय च विचारः कृतः। न ह्युभयत्र विभाषा न सन्ति। प्रतिलक्ष्यं व्यापाराश्रयणे तासां सिद्धत्वात्॥ २६॥

ऊकालोज्झ्रस्वदीर्घप्लुतः॥२७॥अयुक्तोऽयं निर्देशः। ऊ इत्यनेन कालः प्रतिनिर्दिश्यते। ऊ इत्ययं च वर्णः। तत्रायुक्तं वर्णेन कालस्य सह सामानाधिकरण्यम्। कथं तर्हि निर्देशः कर्तव्यः। ऊकालकाल इति। किमिदमूकालकाल इति। ऊ इत्येतस्य काल ऊकालः ऊकालः कालो यस्य स ऊकालकाल इति। स तर्हि तथानिर्देशः कर्तव्यः। न कर्तव्यः। उत्तरपदलोपोऽत्र द्रष्टव्यः। तद्यथा। उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः। खरमुखः। एवमूकालकाल ऊकाल इति। अथ वा साहचर्यात्ताच्छब्द्यं भविष्यति। कालसहचरितो वर्णोऽपि काल एव। ह्रस्वादिषु समसंख्याप्रसिद्धिर्निर्देशवैषम्यात्। ह्रस्वादिषु समसंख्यत्वस्याप्रसिद्धिः। किं कारणम्। निर्देशवैषम्यात्। तिस्रः संज्ञा एकः संज्ञी। वैषम्यात्संख्यातानुदेशो न प्राप्नोति। सिद्धं तु समसंख्यत्वात्। सिद्धमेतत्। कथम्। समसंख्यत्वात्। कथं समसंख्यात्वम्। त्रयाणां हि विकारनिर्देशः। त्रयाणामयं प्रश्लिष्टनिर्देशः। कथं पुनर्ज्ञायते त्रयाणामयं प्रश्लिष्टनिर्देश इति। तिसृणां संज्ञानां करणसामर्थ्यात्। यद्यपि तावत्तिसृणां संज्ञानां करणसामर्थ्याज्ज्ञायते त्रयाणामयं प्रश्लिष्टनिर्देश इति। कुतस्त्वेतदेतेनानुपूर्व्येण संनिविष्टानां संज्ञा भविष्यतीति। आदौ मात्रिकस्ततो द्विमात्रस्ततस्त्रिमात्र इति। न पुनर्मात्रिको मध्ये वाऽन्ते वा स्यात्। तथा द्विमात्र आदौ वा स्यादन्ते वा। तथा त्रिमात्र आदौ वा मध्ये वा स्यात्। अयं तावत् त्रिमात्रोऽशक्य आदौ वा मध्ये वा कर्तुम्। कुतः। प्लुताश्रयो हि प्रकृतिभावः प्रसज्ज्येत। मात्रिकद्विमात्रिकयोरपि द्व्यन्तं पूर्वं निपततीति मात्रिकस्य पूर्वनिपातो भविष्यति। यत्तावदुच्यते। अयं तावत् त्रिमात्रोऽशक्य आदौ मध्ये वा कर्तुं प्लुताश्रयो हि प्रकृतिभावः प्रसज्ज्येतेति। प्लुताश्रयः प्रकृतिभावः प्लुतसंज्ञा चाऽनेनैव। यदि च त्रिमात्र आदौ वा मध्ये वा स्यात् प्लुतसंज्ञैवास्य न स्यात्। कुतः प्रकृतिभावः। यदप्युच्यते मात्रिकद्विमात्रिकयोरपि द्व्यन्तं पूर्वं निपततीति

---

ऊकालः। अयुक्तोयमिति। तपरस्तत्कालस्येत्यत्र व्याख्यातत्वादिह न व्याख्यायते ह्रस्वादिष्विति। ऊ इत्येकस्यैव शब्दस्योच्चारणाद्भेदानवगमात् संज्ञिविशेषणस्यैकत्वे सति संज्ञिनोऽप्येकत्वात्। संज्ञानां च त्रित्वात्संख्यातानुदेशाप्रसङ्गः। सिद्धं त्विति। त्रयाणां कृतैकादेशानां निर्देशाद्विशेषणत्रयावच्छिन्नत्वात्संज्ञिनामपि त्रित्वाद्यथासंख्यं सम्बन्धः सिद्ध इत्यर्थः। अर्थतश्च साम्यं यथासंख्यसूत्रे आश्रीयते, न शब्दत एव। अथ वा शब्दतः साम्याश्रयणेऽपि संहितावशादैक्यमिव प्राप्तास्त्रयः शब्दा उच्चारिता इत्यदोषः। कथं पुनरिति। प्रत्यक्षेणैकस्यैव शब्दस्य श्रवणाद्भेदावगमे प्रमाणाभाव इति भावः। तिसृणामिति। अनुमानाद्भेदावसाय इति भावः। अयं तावदिति। लौकिकव्यवहाराश्रयणेन प्लुतत्वं ह्रस्वत्वञ्चासिद्धमाश्रित्यैतदुच्यते। यत्तावदिति। शास्त्रास्थि-

मात्रिकस्य पूर्वनिपातो भविष्यतीति। ह्रस्वाश्रया हि घिसंज्ञा ह्रस्वसंज्ञा चानेनैव। यदि च मात्रिको मध्ये वाऽन्ते वा स्यात् ह्रस्वसंज्ञैवास्य न स्यात्। कुतो घिसंज्ञा कुतः पूर्वनिपातः। एवमेषा व्यवस्था न प्रकल्पते। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति न मात्रिकोऽन्ते भवतीति। यदयं, विभाषा पृष्टप्रतिवचनेहेरिति मात्रिकस्य प्लुतं शास्ति। कथं कृत्वा ज्ञापकम्। योऽन्ते स प्लुतसंज्ञः। यदि च मात्रिकोऽन्ते स्यात्। प्लुतसंज्ञाऽस्य स्यात्। तत्र हि मात्राकालस्य मात्राकालवचनमनर्थकं स्यात्। मध्ये तर्हि स्यादिति। अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति न मात्रिको मध्ये भवतीति। यदयमतो दीर्घो यञि, सुपि चेति दीर्घत्वं शास्ति। कथं कृत्वा ज्ञापकम्। यो मध्ये स दीर्घसंज्ञकः। यदि च मात्रिको मध्ये स्याद्दीर्घसंज्ञाऽस्य स्यात्। तत्र मात्राकालस्य मात्राकालवचनमनर्थकं स्यात्। द्विमात्रस्तर्ह्यन्ते स्यादिति। अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति न द्विमात्रोऽन्ते भवतीति। यदयम्, ओँमभ्यादान इति द्विमात्रिकस्य प्लुतं शास्ति। कथं कृत्वा ज्ञापकम्। योऽन्ते स प्लुतसंज्ञः। यदि च द्विमात्रोऽन्ते स्यात् प्लुतसंज्ञाऽस्य स्यात्। तत्र द्विमात्राकालस्य द्विमात्राकालवचनमनर्थकं स्यात्। मात्रिकेण चाऽस्य पूर्वनिपातो बाधित इति कृत्वा कान्यत्रोत्सहते भवितुमन्यदतो मध्यात्। एवमेषा व्यवस्था प्रक्लृप्ता भवेद्। व्यवस्था च प्रक्लृप्ता। दीर्घप्लुतयोस्तु पूर्वसंज्ञाप्रसङ्गः। दीर्घप्लुतयोरपि पूर्वसंज्ञा प्राप्नोति। का। ह्रस्वसंज्ञा। किं कारणम्। अण् सवर्णान् गृह्णातीति। सिद्धं तु तपरनिर्देशात्। सिद्धमेतत्। कथम्। तपरनिर्देशः कर्त्तव्यः। उदूकाल इति। यद्येवं द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदात्। द्रुतादिषु चोक्तम्। किमुक्तम्। सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्त इति। स तर्हि तपरनिर्देशः कर्तव्यः। इह कालग्रहणं क्रियते। यावच्च तपरकरणं तावच्च कालग्रहणम्।

---

तायांह्रस्वादिव्यवस्थायां लोकेह्रस्वादिव्यवहारो नान्यथेतिभावः। यदयमिति। अनन्तरमादेशविधानार्थमेतत्स्यादिति चेत् तत्र, न हि स्थानेऽन्तरतम इत्यस्याः परिभाषायाः प्रत्यक्षायाः बाधा युक्तेति विशिष्टानुपूर्वीप्रतिपत्तौ लिङ्गत्वमेव प्लुतविधानस्य। मात्रिकेणेति। लिङ्गद्वयेनान्तमध्याभ्यां मात्रिकस्यापकृष्टत्वादित्यर्थः। दीर्घप्लुतयोस्त्विति। उकारोऽण्त्वाद्द्विमात्रत्रिमात्रयोःस्वरूपस्य ग्राहक इति ह्रस्वसंज्ञा त्रयाणामपि प्राप्नोति न च दीर्घप्लुतसंज्ञाभ्यां द्विमात्रत्रिमात्रयोर्ह्रस्वसंज्ञा बाध्यते। संज्ञानां समावेशाभ्युपगमाद्, प्राकडारादेका संज्ञेति वचनात्। द्विमात्रत्रिमात्रौ त्वनण्त्वाद्भिन्नकालानां न ग्राहकाविति न तत्र दोषः। यावच्चेति। एककार्यत्वादेतदुक्तम्। ऊ अजित्येव कालार्थो लभ्यते। उकारादयो ह्यच्त्वं न व्यभिचरन्तीति नाच्त्वेन ते विशेष्यन्ते अपि तु तैरच्

प्रत्येकं च कालशब्दः परिसमाप्यते । उकाल ऊकाल ऊ३काल इति । अथ वा एकसंज्ञाधिकारेऽयं योगः कर्तव्यः । तत्रैका संज्ञा भविष्यति या परा अनवकाशा चेति। एवं हि दीर्घप्लुतयोः पूर्वसंज्ञा न भविष्यति। अथ वा स्वं रूपं शब्दस्याशब्दसंज्ञेत्ययं योगः प्रत्याख्यायते । तत्र यदेतदशब्दसंज्ञेति एतया विभक्त्या निर्दिश्यमानमर्थवद्भवति तया निर्दिष्टमुत्तरत्रानुवर्तिष्यते। अणुदित्सवर्णस्य चाऽप्रत्ययः । अशब्दसंज्ञायामिति । अथ वा ह्रस्वसंज्ञावचनसामर्थ्याद्दीर्घप्लुतयोः पूर्वसंज्ञा न भविष्यति । ननु चेदं प्रयोजनं स्यात् संज्ञया विधाने नियमं वक्ष्यामीति ह्रस्वसंज्ञया यदुच्यते तदचः स्थाने यथा स्यादिति। स्यादेतत्प्रयोजनं यदि किंचित्कराणि ह्रस्वशासनानि स्युः । यतस्तु खलु यावदज्ग्रहणं तावद् ह्रस्वग्रहणमतोऽकिंचित्कराणि ह्रस्वशासनानि। इदं तर्हि प्रयोजनम्। एच इग् ह्रस्वादेश इति वक्ष्यामीति । अनुच्यमाने ह्येतस्मिंस्त्रिर्ह्रस्वप्रदेशेष्वेच इग्भवतीति वक्तव्यं स्यात् । ह्रस्वो नपुंसके प्रातिपदिकस्य एच इग्भवतीति । णौ चङ्युपधाया ह्रस्व एच इग्भवतीति । ह्रस्वः हलादिः शेष एच इग्भवतीति। संज्ञा च नाम यतो न लघीयः । कुत एतत्। लघ्वर्थं हि संज्ञाकरणम्। लघीयश्च त्रिर्ह्रस्वप्रदेशेष्वेच इग्भवतीति । न पुनः संज्ञाकरणम्। त्रिर्ह्रस्वप्रदेशेषु एच इग्भवतीति षड् ग्रहणानि । संज्ञाकरणे पुनरष्टौ। ह्रस्वसंज्ञा वक्तव्या त्रिर्ह्रस्वप्रदेशेषु ह्रस्वग्रहणं कर्तव्यं ह्रस्वो ह्रस्वो ह्रस्व इति। एच इग्घ्रस्वादेश इति। सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद् गरीयांसं यत्नमारभते तस्यैतत्प्रयोजनं दीर्घप्लुतयोस्तु पूर्वसंज्ञा मा भूदिति ॥२७॥

---

तत्रोकारादिकालत्वादुकारादिसदृशोऽज् ग्रहीष्यत इति नार्थः कालग्रहणेन । तत्क्रियते श्रूयमाणेनैवोकारेण कालं विशेषयितुमिति सवर्णग्रहणं न भविष्यति। तत्रैतत् स्यात्। उकारात्परः कालशब्दो न श्रूयत इत्याह। प्रत्येकं चेति। षण्मात्रस्याचोऽसंभवात् संज्ञाप्रयकरणाच्चेति भावः । अशब्दसंज्ञायामिति । ह्रस्वसंज्ञा च शब्दसंज्ञेति तद्विधाने उकारः सवर्णान्न ग्रहीष्यति । उदात्तादयस्तु गुणा न भेदका इति तद्भिन्नस्यापि ह्रस्वसंज्ञा भविष्यति । उदात्तादिसंज्ञास्वज्ग्रहणं निवृत्तमिति दीर्घप्लुतानामपि ता भविष्यन्ति। हलां त्वयोग्यत्वात्तदभावः। इको यणचीति तु न शब्दसंज्ञाविधानम् अपि तु आदिरन्त्येनेति त्रिहितसंज्ञानुवाद इति सवर्णग्रहणं भविष्यति। अथ वा ह्रस्वसंज्ञेति त्रयाणां चेद् ह्रस्वसंज्ञा तदा ह्रस्वप्रदेशेषु त्रयः संज्ञिन उपतिष्ठन्ते । तत्रान्तरतमादेशविधाने ह्रस्वसंज्ञाविधानमनर्थकमेव स्यात्। अथ वचनादनन्तरतमो भवेत्। एवमपि ह्रस्वप्रदेशेष्वज्ग्रहणमेव कुर्यादित्यर्थः। इदं तर्हीति । असत्यां ह्रस्वसंज्ञायां ह्रस्वादेश इति कर्तुं न युज्यते ततश्च ह्रस्वविधिप्रदेशेषु बहुकृत्व एच इगिति वक्तव्यं तद् गुरु भवति ग्रहणानीति। गृह्यतेऽनेनार्थ इति ग्रहणं पदमुच्यते। ह्रस्वादेश इत्याङः प्रश्लेषनिर्देशात् पृथक्प्रयोगाभावादाङ् न गणितः। ननु, मितां ह्रस्व इत्यत्र, हेड वेष्टन इत्यस्य हिडयती-

अचश्च ॥ २८ ॥ किमयमलोऽन्त्यशेष आहो स्विदलोऽन्त्यापवादः । कथं च तच्छेषः स्यात् कथं वा तदपवादः । यद्येकं वाक्यं तच्चेदं च । अलोऽन्त्यस्य विधयो भवन्त्यचो ह्रस्वदीर्घप्लुता अन्त्यस्येति ततोऽयं तच्छेषः । अथ नानावाक्यमलोऽन्त्यस्य विधयो भवन्ति । अचो ह्रस्वदीर्घप्लुता अन्त्यस्य चानन्त्यस्य चेति ततोऽयं तदपवादः । कश्चात्र विशेषः । ह्रस्वादिविधिरलोऽन्त्यस्येति चेद्वचिप्रच्छिशमादिप्रभृतिहनिगमिदीर्घेष्वज्ग्रहणम् । ह्रस्वादिविधिरलोऽन्त्यस्येति चेद्वचिप्रच्छिशमादिप्रभृतिहनिगमिदीर्घेष्वज्ग्रहणं कर्तव्यम् । क्विपि वचिपृच्छ्योर्दीर्घः । अच इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति । शमादीनां दीर्घः । अच इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति । हनिगम्योर्दीर्घः । अच इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति । अस्तु तर्हि तदपवादः । अचश्चेन्नपुंसकह्रस्वाऽकृत्सार्वधातुकनामिदीर्घेष्वनन्त्यप्रतिषेधः * । अचश्चेन्नपुंसकह्रस्वाकृत्सार्वधातुकनामिदीर्घेष्वनन्त्यस्य प्रतिषेधो वक्तव्यः । ह्रस्वो नपुंसके प्रातिपदिकस्य । यथेहं भवति । रै । अतिरि । नौ । अतिनु । एवं सुवाक् ब्राह्मणकुलमित्यत्रापि प्राप्नोति । अकृत्सार्वधातुकयोर्दीर्घः । यथेह भवति । चीयते । स्तूयते । एवं छिद्यते भिद्यते अत्रापि प्राप्नोति । नामि दीर्घः । यथेह भवति अग्नीनाम् । वायूनाम् । एवं षण्णामित्यत्रापि प्राप्नोति । नैष दोषः । नोपधाया इत्येतन्नियमार्थं भविष्यति । प्रकृतस्यैष नियमः स्यात् । किं च प्रकृतम् । नामीति । तेन भवेदिह नियमान्न स्यात् षण्णामिति । अन्यते । तन्यत इति । अत्रापि प्राप्नोति । अथाप्येवं नियमः स्यात् । नोपधाया नाम्येवेति । एवमपि भवेदिह नियमान्न स्यात् । अन्यते तन्यत इति । षण्णामित्यत्र प्राप्नोति । अथाप्युभयतोऽयं नियमः स्यात् । नोपधाया एव नामि, नाम्येव नोपधाया इति । एवमपि भिद्यते छिद्यते सुवाक् ब्राह्मणकुलमित्यत्रापि प्राप्नोति । एवं तर्हि ह्रस्वो दीर्घः प्लुत इति यत्र ब्रूयादच इत्येतत्तत्रोपस्थितं द्रष्टव्यम् । किं कृतं भवति । द्वितीया षष्ठी प्रादुर्भाव्यते । तत्र कामचारः । गृह्यमाणेन वाऽचं विशेषयितुमचा वा गृह्यमाणम् । यावता कामचारः । इह

---

त्यर्थमेव इगिति वक्तव्यम् । तथा खित्यनव्ययस्येत्यत्रापि परमनुम्मन्य इत्यर्थमिति गौरवप्रसङ्गः । एवं तर्ह्यं च इगिति पञ्चकृत्वोऽप्युच्चार्यमाणे प्रतिपत्तिलाघवं भवतीति लाघवोपलक्षणपरं भाष्यं द्रष्टव्यम् । ह्रस्वदीर्घप्लुत इति । सौत्रत्वान्निर्देशस्य लिङ्गव्यत्ययेन पुंस्त्वम् ॥ २७ ॥

अचश्च ॥ इको गुणवृद्धी इत्यनेन समानमिदम् । शमादिप्रभृतीति । प्रभृतिग्रहणेन ष्ठिवुक्लम्वादयो गृह्यन्ते । भिद्यत इति । यकारादौ यदङ्गं तस्य योऽवयवोऽजित्येवमत्र

तावद्रुचिप्रच्छिशमादिप्रभृतिहानिगमिदीर्घेषु गृह्यमाणेनाच विशेषयिष्यामः। एतेषां दीर्घो भवति। अच इति। इहेदानीं, नपुंसकह्रस्वाकृत्सार्वधातुकनामिदीर्घेष्वचा गृह्यमाणं विशेषयिष्यामः। नपुंसकस्य ह्रस्वो भवत्य᳘ः अजन्तस्येति। अकृत्सा-र्वधातुकयोर्दीर्घो भवत्यचः अजन्तस्येति। नामि दीर्घो भवति अचः अजन्तस्येति। इह कस्मान्न भवति द्यौः पन्थाः स इति। संज्ञया विधाने नियमः * । संज्ञया ये विधीयन्ते तेषु नियमः। किं वक्तव्यमेतत्। न हि। कथमनुच्यमानं गंस्यते। अजिति हि वर्तते। तत्रैवमभिसंबन्धः करिष्यते। अचः अज्भवति ह्रस्वो दीर्घः प्लुत इत्येवं भाव्यमान इति। अथ पूर्वस्मिन् योगे अज्ग्रहणे सति किं प्रयो-जनम्। अज्ग्रहणं संयोगाच्समुदायनिवृत्त्यर्थम् *। अज्ग्रहणं क्रियते संयोगनि-वृत्त्यर्थम्। अच्समुदायनिवृत्त्यर्थं च। संयोगनिवृत्त्यर्थं तावत्। प्रतक्ष्य प्ररक्ष्य। ह्रस्वस्य पिति कृति तुगिति तुङ्मा भूदिति। अच्समुदायनिवृत्त्यर्थं तितउच्छत्रं तितउच्छाया। दीर्घात्पदान्ताद्वेति विभाषा तुङ्मा भूदिति। अचश्च ॥ २८॥

उच्चैरुदात्तः ॥ २९ ॥ नीचैरनुदात्तः ॥ ३० ॥

किं षष्ठीनिर्दिष्टमज्ग्रहणमनुवर्तते। उताहो न। किं चातः। यद्यनुवर्तते हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवतीत्येषा परिभाषा न प्रकल्पते। कथं हलो नाम स्वरप्राप्तिः स्यात्। एवं तर्हि निवृत्तम्। बहून्येतस्याः परिभाषायाः प्रयो-

---

प्रसङ्गः। यदा त्वजेव यकारादिना विशेष्यते तदात्र व्यवधानान्नास्ति प्रसङ्गः। एवमन्यत्रापि ज्ञेयम्। अजिति हि वर्तत इति। ततश्च ह्रस्वादिशब्दा इहानुवृत्ता नाचमुपस्थापयन्ति, तस्य स्वयमुपस्थानादित्याश्रितस्वरूपव्यापारा आश्रीयन्ते। तेन ह्रस्व इत्येवं योऽच् सोऽचः स्थाने भवतीत्यर्थः संपद्यते। एवं दीर्घप्लुतयोरपि। अथेति। इहैव तदज्ग्रहणं क्रियतां पूर्वसूत्रे तु न वक्तव्यमिति प्रश्नः। प्रतक्ष्येति। यथा प्रत्याहारे अश्रुता आकारादयो दीर्घप्लुतसंज्ञे लभन्ते तथा संयोगोऽपि ह्रस्वसंज्ञः स्यादिति तुक्प्रसङ्गः। तितउच्छत्रमिति। परत्वाद् दीर्घलक्षणे वा तुकि सति सकृद्गतौ विप्रतिषेधे इति न्यायाद् ह्रस्वलक्षणः पुनर्न प्रवर्तते। नचैवंविधे विषये, पुनः प्रसङ्गविज्ञानमस्ति। नित्यविकल्पयोर्विरोधात्। पूर्वेण परस्य बाधप्रसङ्गात्। यत्र हि पूर्वो विधिः परं न बाधते तत्र, पुनः प्रसङ्गविज्ञानं क्वचिदाश्रीयते। समुदाये वा कार्यं प्रति व्याप्रियमाणेऽवयवानां पारतन्त्र्यादव्यापारान्नैव ह्रस्वलक्षणतुक्प्रसङ्गः। ननु क्रियमाणेऽप्यज्ग्रहणे वर्णग्रहणे जातिग्रहणादच्समुदायस्यापि दीर्घसंज्ञाप्रसङ्गः। नैष दोषः। ऊकाल इति विशेषणादिह व्यक्तिराश्रीयते। न हि जातेः परिमाणमस्ति। व्यक्तिद्वारकं वा जातेः परिमाणमाश्रीयते। एकैकव्यक्तिव्यङ्ग्या हि जातिर्न समुदायव्यङ्ग्या ॥ २८ ॥

उच्चैः॥ षष्ठीनिर्दिष्टमिति। उच्चैर्नीचैरित्येते अव्यये अधिकरणशक्तिप्रधाने। तत्राऽच इत्यनुवृत्तौ सत्यामयमर्थो भवति उच्चैः स्थान उपलभ्यमान उदात्तसंज्ञः स चाचः स्थान इति। हल्स्वरप्राप्तावित्ति। सत्यामिच इत्यस्यानुवृत्तौ समासस्येत्यन्तोदात्तत्वं

जनानि । अथ प्रथमानिर्दिष्टमज्ग्रहणमनुवर्तते। उताहो न। किं चार्थोऽनुवृत्त्या । बाढमर्थः । यद्येते व्यञ्जनस्यापि गुणा लक्ष्यन्ते । ननु च प्रत्यक्षमुपलभ्यन्ते । इषे त्वोर्जेत्वा । नैते व्यञ्जनस्य गुणाः, किं त्वच एव । तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यते । तद्यथा । द्वयो रक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुपलभ्यते । बदरपिटके रिक्तको लोहकंसस्तद्गुण उपलभ्यते । कुतो नु खल्वेतत् । अच एते गुणाः स्युः । तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यते । न पुनर्व्यञ्जनस्यैते गुणाः स्युस्तत्सामीप्यात्त्वजपि तद्गुण उपलभ्येतेति । अन्तरेणापि व्यञ्जनमच एवैते गुणा लक्ष्यन्ते, न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति। अन्वर्थं खल्वपि निर्वचनम् । स्वयं राजन्त इति स्वराः अन्वग्भवति व्यञ्जनमिति । उच्चनीचस्यानवस्थितत्वात्संज्ञाऽप्रसिद्धिः * । इदमुच्चनीचमनवस्थितपदार्थकं तदेव हि कञ्चित् प्रत्युच्चैर्भवति कञ्चित् प्रति नीचैः । एवं हि कश्चित्कं चिदधीयानमाह किमुच्चैरोरूयसे अथ नीचैर्वर्तताभिति । तमेव तथाऽधीयानमपर आह । किमन्तर्दन्तकेनाधीषे उच्चैर्वर्ततामिति । एवमुच्चनीचमनवस्थितपदार्थकं तस्यानवस्थितत्वात् संज्ञाया अप्रसिद्धिः । एवं तर्हि लक्षणं करिष्यते । आयामो दारुण्यमणुता खस्येति उच्चैःकराणि शब्दस्य । आयामो गात्राणां निग्रहः । दारुण्यं स्वरस्य दारुणता रूक्षता । अणुता खस्य कण्ठस्य

---

राजपुरुष इत्यादावेव स्याद्, न तु राजदृषदित्यादौ षकाराकारस्य । असत्यां त्वनुवृत्तौ समासस्य योऽन्तो दकारस्तस्य स्वरप्राप्तावविद्यमानत्वाद‌कारस्य स्वरः । एषा च परिभाषा, यतोऽनाव इत्यत्रानाव इति प्रतिषेधेन ज्ञापिता । अन्यथा नाव्यमित्यत्र नकारस्यायोग्यत्वादाकारस्य चानादित्वादुदात्तत्वं न भविष्यतीति किमनाव इति प्रतिषेधेन । अथ प्रथमानिर्दिष्टमिति । ननु को विशेषः । यावता यत्र स्वरो विधीयते तत्र व्यञ्जनस्याविद्यमानत्वादच, एव भविष्यत्यनुदात्तादेरञित्यादावनुदात्तादेऽपि न दोषः । स्वत एव हलोऽनुदात्तत्वं भवतु अजुपरागवशाच्चा तदनुवादेन कार्यविधाने न कश्चिद्विशेषः । एवं तर्हि न्यायव्युत्पादनार्थं एवायं विचारः । ननु चेति । बाधकाभावाच्च भ्रान्त्यसिद्धिः । नैते इति । अन्यथाऽप्युपालम्भोपपत्तिरिति भावः । अन्तरेणापि व्यञ्जनमिति । आप्यायध्वमिति यथा । अत्र ह्याकार उदात्तस्तिङन्तस्य निघातः । तनश्चान्वयव्यतिरेकाभ्यामच एवैते गुणाः । यदि तु हलामप्येते गुणा अभविष्यंस्तदा ह‌लामचां च भिन्नस्वरताप्युपालप्स्यते यस्मात्त्वचामेव स्वरमनुविदधति न हलः । तस्मान्न हलां स्वयं स्वरोऽस्तीति निश्चयः । अन्वग्भवतीति । अनुगच्छतीत्यर्थः । शिष्टसमाचाराच्चेदं निर्वचनमभिहितं, न त्वत्र वर्णसादृश्यं किं चिदस्ति । अथ वा गतिरपि व्यञ्जनेरर्थः । विविधं गच्छत्युपरागवशादिति व्यञ्जनमित्ययमर्थः पर्यायान्तरेण भाष्यकारेणाभिहितः । उपरागश्च पूर्वपरासन्निधानेऽपि परेणाचा हलो भवति, न पूर्वेण । उच्चनीचस्येति श्रुतिप्रकर्षापकर्षलक्षणोच्चनीचत्वाश्रयः पर्यनुयोगः । नचानवस्थितवस्था-

संवृतता । उच्चैःकराणि शब्दस्य । अन्ववसर्गो मार्दवमुरुता खस्येति नीचैःकराणि शब्दस्य । अन्ववसर्गो गात्राणां शिथिलता । मार्दवं स्वरस्य मृदुता स्निग्धता । उरुता खस्य महत्ता कण्ठस्येति नीचैःकराणि शब्दस्य । एतदप्यनैकान्तिकम् । यद्ध्यल्पप्राणस्य सर्वोच्चैस्तद्धि महाप्राणस्य सर्वनीचैः । सिद्धं तु समानप्रक्रमवचनात् * । सिद्धमेतत् । कथम् । समाने प्रक्रम इति वक्तव्यम् । कः पुनः प्रक्रमः । उरः कण्ठः शिर इति । उच्चैरुदात्तः ॥ २९ ॥ ३० ॥

**समाहारः स्वरितः ॥ ३१ ॥** समाहारः स्वरित इत्युच्यते । कस्य समाहारः स्वरितसंज्ञो भवति । अचोरित्याह । समाहारोऽचोश्चेन्नाभावात् * । समाहारोऽचोश्चेत्तन्न । किं कारणम् । अभावात् । न ह्यचोः समाहारोऽस्ति । नन्वयमस्ति गाङ्गेऽनूप इति । नैषोऽचोः समाहारः । अन्योऽयमुदात्तानुदात्तयोः स्थाने एक आदिश्यते । एवं तर्हि गुणयोः । गुणयोश्चेन्नाच्प्रकरणात् * । गुणयोः समाहार इति चेत्तन्न । किं कारणम् । अच्प्रकरणात् । अजिति वर्तते । सिद्धं त्वच्समुदायस्याभावात्तद्गुणसम्प्रत्ययः * । सिद्धमेतत् । कथम् । अच्समुदायो नास्तीति कृत्वा तद्गुणस्याचः समाहारगुणस्य सम्प्रत्ययो भविष्यति । कथं पुनः

---

श्रयेण साधुत्व व्यवतिष्ठते । एतदपीति । श्रोता हि वक्तृगतानायामादीन् धर्मान् कार्यादवस्यति कार्यं च संकीर्णम् । तथा हि । महाप्राणो नीचैरप्युच्चारयन् स्वरेण महान्तं देशं व्याप्नोति । अल्पप्राणस्तूच्चैरपि वदन्नल्पं देशं व्याप्नोति । सिद्धं त्विति । प्रक्रम्यन्तेऽस्मिन् वर्णा इति प्रक्रमस्थानमुच्यते । तेनाऽयमर्थः । एकस्मिंस्ताल्वादिके स्थाने ऊर्ध्वाधरभागयुक्ते ऊर्ध्वभागेनोच्चार्यमाण उदात्तोऽधरभागनिष्पन्नोऽनुदात्तः । एवं चोच्चैरित्यनेनोर्ध्वभागो गृह्यते, नीचैरित्यधरभागः । अभ्यासस्समधिगम्यश्चायं स्वरविशेषः षड्जादिवद्विज्ञेयः ॥ २९ ॥ ३० ॥

समा ॥ कस्येति । समाहरणं समाहार इति भावसाधनं मत्वा कस्येति प्रश्नः । अचोरिति । तयोः समाहार उपश्लेषरूपः । अन्यत्र त्वौत्तराधर्यरूपोऽपि संभवति । गाङ्गेऽनूप इति । स्थानिनोरेकाराकारयोरुदात्तानुदात्तयोः समाहारात् स्थानिधर्मेणादेशस्यापि तथा व्यपदेशः । समाहारोऽचोश्चेदिति । कार्थं क्व कन्या इत्यादौ स्थानिद्वारकोऽपि समाहारव्यपदेशो नास्ति । यत्राप्यस्ति गाङ्गेऽनूप इति तत्राप्यसौ गौणः । गाङ्गशब्दोऽणन्तत्वादन्तोदात्तः । सप्तम्येकवचनेन सुप्त्वादनुदात्तेन सहैकादेश उदात्तः । अनूपशब्दः अनोरप्रधानकनीयसी इत्यन्तोदात्तत्वादनुदात्तादिस्तत एकादेशः, स्वरितो वाऽनुदात्ते पदादाविति स्वरितः । एवं तर्हीति । गुणयोर्नैरन्तर्येणोपलम्भादस्ति समाहारः । अच्प्रकरणादिति । प्रकरणं प्रस्तावो न तु स्वरितत्वादनुवृत्तिः । तस्याः पूर्वं प्रत्याख्यानात् । तत्रयमर्थः । पूर्वसूत्रयोः सामर्थ्याक्षिप्तोऽजेव संज्ञी उदात्तानुदात्तशब्दयोरिति तावद्वानुवृत्तावच्चं प्रत्याययतो, न तु गुणम् । सिद्धं त्विति । गुणिनोरचोः समाहारासम्भवात्सामर्थ्याद् गुणयोः समाहाराश्रयणमित्यर्थः । कथं पुनरिति । स्वरित इत्यनया

समाहार इत्यनेनाच्छक्यः प्रतिनिर्देष्टुम् । मतुब्लोपोऽत्र द्रष्टव्यः। तद्यथा। पुष्पका एषां ते पुष्पकाः। कालका एषां ते कालका इति। एवं समाहारवान् समाहारः । अथ वा अकारो मत्वर्थीयः। तद्यथा तुन्दो घाट इति । यद्येवं त्रैस्वर्यं न प्रकल्पते। तत्र को दोषः। त्रैस्वर्येणाधीमह इत्येतन्नोपपद्यते । नैतद् गुणापेक्षम्। किं तर्हि अजपेक्षमेतत्। त्रैस्वर्येणाधीमहे त्रिप्रकारैरज्भिरधीमहे कैश्चि-दुदात्तगुणैः कैश्चिदनुदात्तगुणैः कैश्चिदुभयगुणैः । तद्यथा । शुक्लगुणः शुक्लः कृष्णगुणः कृष्णः। य इदानीमुभयगुणः स तृतीयामाख्यां लभते। कल्माष इति वा सारङ्ग इति वा। एवमिहापि उदात्त उदात्तगुणः। अनुदात्तोऽनुदात्तगुणः। य इदानीमुभयगुणः स तृतीयामाख्यां लभते स्वरित इति। समाहारः स्वरितः॥

तस्यादित उदात्तमर्द्धह्रस्वम् ॥ ३२ ॥ अर्द्धह्रस्वमित्युच्यते। तत्र दीर्घ-प्लुतयोर्न प्राप्नोति । कन्या। शक्तिके३ शक्तिके। नैष दोषः । मात्रचोऽत्र लोपो द्रष्टव्यः। अर्धह्रस्वमात्रमर्धह्रस्वमिति। किमर्थं पुनरिदमुच्यते। आमिश्री-भूतमिवेदं भवति। तद्यथा। क्षीरोदके सम्पृक्ते आमिश्रीभूतत्वान्न ज्ञायते कियत् क्षीरं कियदुदकं कस्मिन्नवकाशे क्षीरं कस्मिन् वोदकमिति। एवमिहाप्यामिश्रीभू-तत्वान्न ज्ञायते कियदुदात्तं कियदनुदात्तं कस्मिन्नवकाशे उदात्तं कस्मिन्ननुदात्त-मिति। तदाचार्यः सुहृद्भूत्वाऽन्वाचष्टे इयदुदात्तमियदनुदात्तमस्मिन्नवकाश उदा-त्तमस्मिन्नवकाशेऽनुदात्तमिति। यद्ययमेवं सुहृत्किमन्यान्यप्येवंजातीयकानि नोप-दिशति। कानि पुनस्तानि। स्थानकरणानुप्रदानानि। व्याकरणं नामेयमुत्तरा

---

संज्ञया योग्यत्वादच्संज्ञित्वेनाक्षिप्तः। न चाच् समाहारो भवति । मतुब्लोप इति गुणगुणिनोरभेदोपचाराद् गम्यमानार्थस्य मतुपोऽप्रयोग इत्यर्थः। अकार इति अर्शआदेराकृतिगणत्वात्। त्रैस्वर्यमिति । उदात्तानुदात्तगुणव्यतिरेकेण स्वरितत्व-स्याभावात् त्रैस्वर्यव्यवहारो न स्यात्। अस्ति चायं व्यवहारः । अजपेक्षमिति। स्वर-शब्देनाऽच उच्यन्ते। त्रय एव स्वरास्त्रैस्वर्यमिति स्वार्थे ष्यञ् ॥ ३१ ॥

तस्यादित उदात्त ॥ अक्तपरिमाणस्य ह्रस्वसंज्ञा कृता नाव्यपवृक्तस्येति न्याया-द्दीर्घप्लुतावयवो ह्रस्वग्रहणेन न गृह्यत इत्यालोच्याह । अर्धह्रस्वमिति। कन्येति । कन्या राजन्यमनुष्याणामन्त इति स्वरितः। शक्तिके३ शक्तिके इति। स्वरितमाम्रेडिते-ऽसूयेति स्वरितः प्लुतः। मात्रच इति अर्द्धह्रस्वशब्दः प्रमाणवाची रूढिशब्दः। व्युत्प-त्त्यर्थं तु ह्रस्वस्योपादानम्। अर्द्धमात्रात्वेनाभिधीयते ततः प्रमेये मात्रचं विधाय तस्य प्रमाणे ल इति लोपः क्रियते। तत्र यथा ह्रस्वबुद्ध्यार्द्धमात्रा विभज्यते एवं दीर्घप्लुत-योरपीति। किमर्थमिति। नैवंभूतमिहान्वाख्यानं दृश्यते सन्ध्यक्षरादिविषयस्यागे विभागस्यान्वाख्यानप्रसङ्गादिति प्रश्नः। आमिश्रीभूतमिवेति। तत्त्वतोऽस्त्येव विभाग इति इवशब्द उपात्तः। क्षीरोदके इति। नियतव्यक्तिविवक्षायां जातिपरत्वाभावादेकव-

त्विद्या । सोऽसौ छन्दःशास्त्रेष्वभिविनीत उपलब्ध्याधिगन्तुमुत्सहते । यद्येवं नार्थोऽनेन । इदमप्युपलब्ध्याधिगमिष्यति । संज्ञाकरणं तर्हीदम् । तस्य स्वरितस्यादितोऽर्धह्रस्वमुदात्तसंज्ञं भवतीति । किं कृतं भवति । त्रिरुदात्तप्रदेशेषु स्वरितग्रहणं न कर्तव्यं भवति । उदात्तस्वरितपरस्य सन्नतरः । उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य । नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानामिति । एतदपि नास्ति प्रयोजनम् । संज्ञाकरणं हि नाम यतो न लघीयः । कुत एतत् । लघ्वर्थं हि संज्ञाकरणम् । लघीयश्च त्रिरुदात्तप्रदेशेषु स्वरितग्रहणं न पुनः संज्ञाकरणम् । त्रिरुदात्तप्रदेशेषु स्वरितग्रहणे नवाक्षराणि । संज्ञाकरणे पुनरेकादश । एवं तर्ह्युभयमनेन क्रियते । अन्वाख्यानं च संज्ञा च । कथं पुनरेकेन यत्नेन उभयं लभ्यम् । लभ्यमित्याह । कथम् । अन्वर्थग्रहणात् । अन्वर्थग्रहणं विज्ञास्यते । तस्य स्वरितस्यादितोऽर्द्धह्रस्वमुदात्तसंज्ञं भवति । ऊर्ध्वमात्तमिति चात उदात्तम् । यदि तर्हि संज्ञाकरणम् । उदात्तादेर्यदुच्यते तत्स्वरितादेरपि प्राप्नोति । अन्वाख्यानमेव तर्हीदं मन्दबुद्धेः । स्वरितस्यार्धह्रस्वोदात्तादोदात्तस्वरितपरस्य सन्नतरादूर्ध्वमुदात्तादनुदात्तस्य स्वरितात् कार्यं स्वरितादिति सिद्ध्यर्थम् * । स्वरितस्यार्धह्रस्वोदात्ताद् आ उदात्तस्वरितपरस्य सन्नतर इत्येतस्मात् सूत्रादिदं सूत्रकाण्डमूर्ध्वमुदात्तादनुदात्तस्य स्वरित इत्यतः कर्तव्यम् । किं प्रयोजनम् । स्वरितादिति सिद्ध्यर्थम् । स्वरितादिति सिद्धिर्यथा स्यात् । स्वरितात्संहितायामनुदात्तानामिति । इमं मे गङ्गे यमुने सरस्वति शुतुद्रि । क्व तर्हि स्यात् । यः सिद्धः स्वरितः । कार्यम् । देवदत्तयज्ञदत्तौ । स्वरितोदात्तार्थं च । स्वरितोदात्तार्थं च

---

द्भावो न कृतः । उत्तरा विद्येति । पुरा कल्पे पूर्वा अद्यत्वे तूत्तरेति पस्पशायामाख्यातम् । संज्ञाकरणमिति । प्रदेशेषु चैकदेशप्रत्यायनात्समुदाय आक्षिप्यते इति भावः । उभयमिति सत्यप्यक्षरगौरवे महतोऽर्थस्य व्याप्तिर्भवति सुखेन विभागस्यापि परिज्ञानात् । उदात्तादेरिति । उदात्तादेः प्रतिपादकं यच्छास्त्रमाद्युदात्तश्चेति तत् स्वरितादेरपि प्रतिपादकं प्राप्नोति ततश्च प्रत्ययः कदाचित् स्वरितादिरपि स्यादित्यर्थः । अन्वाख्यानमेवेति । न केवलमिदं सूत्रम् । यावदुच्चैरुदात्त इत्यादिसंज्ञाकरणमपि मन्दबुद्धिप्रतिपादनार्थम् । सिद्धो हि वेदाध्यायिनां शिक्षायामेवोदात्तादिव्यवहारः । स्वरितस्येति । आ अर्धह्रस्वोदात्तादित्याकारप्रश्लेषः । इयं नवसूत्री उदात्तादनुदात्तस्य स्वरितः इत्येतस्मात्परा कर्तव्या । तेन, स्वरितात् संहितायामनुदात्तानामित्येकश्रुतौ विधीयमानायामुदात्तादिति स्वरितस्य सिद्धत्वं भवति । तेन मेशब्दात् स्वरितात्परेषां गङ्गेप्रभृतीनामामन्त्रितत्वादनुदात्तानामेकश्रुतिर्भवति । क्व तर्हीति । आश्रयात्सिद्धत्वं स्वरितस्य भविष्यतीत्यभिप्रायः । कार्यमिति । अत्र तित्स्वरितमिति स्वरितत्वं तच्च सिद्धमित्यत्रैव स्यात् । स्वरितोदात्तार्थमिति । स्वरितस्य य उदात्तो विधीयते स आष्टमिकस्यासिद्धत्वान्न

तत्रैव कर्तव्यम् । न सुब्रह्मण्यायां स्वरितस्य तूदात्तः । इन्द्र आगच्छ । क्व तर्हि स्याद्यः सिद्धः स्वरितः । सुब्रह्मण्योमिन्द्रागच्छ । स्वरितोदात्ताच्चास्वरितार्थम् । स्वरितोदात्ताच्चास्वरितार्थं तत्रैव कर्तव्यम् । इन्द्रागच्छ हरिव आगच्छ । स्वरितपरसन्नतरार्थं च । स्वरितपरसन्नतरार्थं च तत्रैव कर्तव्यम् । उदात्तस्वरितपरस्य सन्नतरः । माणवकजटिलकाध्यापकन्यङ् । क्व तर्हि स्यात् । यः सिद्धः स्वरितः । माणवक जटिलकाभिरूपक क्व । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । देवब्रह्मणोरनुदात्तवचनं ज्ञापकं सिद्ध इह स्वरित इति । यद्येतज्ज्ञाप्यते स्वरितोदात्तात्परस्यानुदात्तस्य स्वरितत्वं प्राप्नोति । न ब्रूमो देवब्रह्मणोरनुदात्तवचनं ज्ञापकं सिद्ध इह स्वरित इति । किं तर्हि । परमेतत्सूत्रकाण्डमिति । तस्यादित उदात्तमर्द्धह्रस्वम् ॥ ३२ ॥

एकश्रुतिदूरात्संबुद्धौ ॥ ३३ ॥ किमिदं पारिभाषिक्याः संबुद्धेर्ग्रहणमेकवचनं संबुद्धिरिति । आहोस्विदन्वर्थग्रहणं संबोधनं संबुद्धिरिति । किं चाऽतः । यदि पारिभाषिक्याः संबुद्धेर्ग्रहणं देवा ब्रह्माणः, अत्र न प्राप्नोति । अथान्वर्थग्रहणं, न दोषो भवति । यथा न दोषस्तथाऽस्तु । किं पुनरियमेकश्रुतिरुदात्ता, आहोस्विदनुदात्ता । नोदात्ता । कथं ज्ञायते । यदयमुच्चैस्तरां वा वषट्कार इत्याह । कथं कृत्वा ज्ञापकम् । अतन्त्रं तरनिर्देशः । यावदुच्चैस्तावदुच्चैस्तराम् । यदि तर्हि नोदात्ता । अनुदात्ता । अनुदात्ता च न । कथं ज्ञायते । यदयमुदात्तस्वरितपरस्य सन्नतर इत्याह । कथं कृत्वा ज्ञापकम् । अतन्त्रं तरनिर्देशः । यावत्

---

प्राप्नोति । सुब्रह्मण्योमिति । सुब्रह्मणि साधुरिति यत्प्रत्ययान्तत्वात् स्वरितः । ततश्चाबेकादेशः स्वरितानुदात्तयोरान्तरतम्यात्स्वरितः । तत ओमाङोश्चेत्युदात्तस्वरितयोरेकादेशः स्वरित एव । तस्य सिद्धत्वादुदात्तत्वम् । सुब्रह्मण्यायामिति च स्वरूपमेव गृह्यते न तु निगदो लक्ष्यते । स्वरितोदात्ताच्चेति । आगच्छेत्यत्र गशब्दाकारस्य स्वरितस्योदात्तत्वे कृते उदात्तादनुदात्तस्य स्वरित इति छशब्दाकारस्य स्वरितत्वं प्राप्नोति । न्यङ्ङिति । न्यधी चेति पूर्वपदप्रकृतिस्वरस्तत, उदात्तस्वरितयोर्यण इत्यकारः स्वरितस्तस्यासिद्धत्वात् पूर्वस्य सन्नतरो न स्यात् । देवब्रह्मणोरिति । लिङ्गात्पाठक्रमबाधेन क्रमान्तरमाश्रीयतेऽन्यथा स्वरितस्यासिद्धत्वादनुदात्तस्यानुदात्तविधानमनर्थकं स्यात् । यद्येतदिति । स्वरितस्यैव सिद्धत्वमनेन लिङ्गेन ज्ञाप्यत इत्यर्थः । न ब्रूम इति । सन्निवेशान्तरज्ञापनार्थं लिङ्गं व्याख्यायत इत्यर्थः ॥ ३२ ॥

एक ॥ किमिति । कृत्रिमाकृत्रिमयोः कृत्रिमे सम्प्रत्यय इत्युभयगतिरिह शास्त्रे भवतीति च न्यायद्वयसम्भवात् प्रश्नः । यथा न दोष इति । न हि दूरादिति विशेषणमेकवचनस्योपपद्यते । सम्बोधनस्य तु क्रियारूपत्वादपादानतया दूरादिति विशेषणसम्भवो व्याप्तिश्चान्वर्थग्रहणे भवति । किं पुनरिति । उदात्तानुरागवशात्प्रश्नः । यावदुच्चैरिति । यदि चोदात्तैकश्रुतिरभविष्यत्तदा यज्ञकर्मणीत्येकश्रुतेः सिद्धत्वादु

सन्नस्तावत्सन्नतरः । सैषा ज्ञापकाभ्यामुदात्तानुदात्तयोर्मध्यमेकश्रुतिरन्तरालं ह्रियते। अपर आह। किमयमेकश्रुतिरुदात्ता आहो स्विदनुदात्ता। उदात्ता। कथं ज्ञायते यदयमुच्चैस्तरां वा वषट्कार इत्याह। कथं कृत्वा ज्ञापकम्। तन्त्वं तरनिर्देशः। उच्चैर्दृष्ट्वा उच्चैस्तरामित्येतद्भवति। यदि तर्ह्युदात्ता। नानुदात्ता। अनुदात्ता च। कथं ज्ञायते। यदयमुदात्तस्वरितपरस्य सन्नतर इत्याह। कथं कृत्वा ज्ञापकम्। तन्त्वं तरनिर्देशः। सन्नं दृष्ट्वा सन्नतर इत्येतद्भवति। त एते तन्त्वे तरनिर्देशे सप्तस्वरा भवन्ति। उदात्तः। उदात्ततरः। अनुदात्तः। अनुदात्ततरः। स्वरितः। स्वरिते य उदात्तः सोऽन्येन विशिष्टः। एकश्रुतिः सप्तमः। एकश्रुति-दूरात्संबुद्धौ ॥ ३३ ॥

न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ॥ ३७ ॥

सुब्रह्मण्यायामोकार उदात्तः * । सुब्रह्मण्यायामोकार उदात्तो भवति सुब्रह्मण्योम्। आकार आख्याते परादिश्च * । आकार आख्याते परादिश्चोदात्तो भवति। इन्द्र आगच्छ हरिव आगच्छ। वाक्यादौ च द्वे द्वे * । वाक्यादौ च द्वे द्वे उदात्ते भवतः। इन्द्र आगच्छ हरिव आगच्छ । मघवन्वर्जम् * । आगच्छ

---

उच्चैस्तरां वा वषट्कार इति सूत्रं नाकरिष्यदित्यर्थः। तावत्सन्नतर इति। तत्रैकश्रुत्यनुवृत्त्यैव सिद्धत्वात्सन्नतरविधानमनर्थकं स्यात्। अन्तरालं ह्रियत इति। हरतेर्द्विकर्मकत्वात्प्रधाने कर्मणि लकारः। क्षीरोदकवदुदात्तानुदात्तयोर्भेदतिरोधानमेकश्रुतिरित्यर्थः। स्वरिते तु विभागेन तयोरुपलब्धिः। उच्चैर्दृष्ट्वेति। सोमस्याग्ने वीही वौषट् इत्यत्र मन्त्रे, यज्ञकर्मणीत्यनेनैकश्रुतिर्विहिता तदपेक्षया वौषट्शब्दस्योदात्ततरत्वं विधीयते। सति चैकश्रुतेरुदात्तानुरागे तदपेक्षः प्रकर्षो युज्यते। यथा मलिने वस्त्रे शौक्ल्यानुवेधसद्भावात्तदपेक्षो वस्त्रान्तरेषु शुक्लतरव्यपदेश इत्यर्थः। सन्नं दृष्ट्वेति। एकश्रुतिगतमित्यर्थः। सोऽन्येनेति। अनुदात्तेन उपरक्तेः। यथा शुक्लः पटो वर्णान्तरयुक्तेन द्रव्येणेत्यर्थः। कस्यचित्तु स्वरितस्योदात्तस्य भागो नानुदात्तेनानुरज्यते इति पृथक्स्वरितो निर्दिष्टः। स्वरितस्य भेदा जात्यस्वरादयोऽष्टाविति भाष्यकारेणाप्रकृतत्वादिह नोक्ताः। इयं चैकश्रुतिराप्लुतात्संबोधनवाक्यस्य भवति। प्लुतस्तूदात्त एव विधानसामर्थ्यात् ॥ ३३ ॥

१ न सु ॥ ओकार इति। नेदमपूर्वविधानं सूत्रव्यापार एव तु प्रदर्श्यते। यथा चोदात्त ओकारस्तथा तस्यादित इत्यत्रोक्तम्। ओँमभ्यादान इति तु प्लुतोदात्तत्वं भवति। तस्या यज्ञकर्मविषयादित्याहुः। इन्द्र आगच्छेतीन्द्रशब्द आमन्त्रितत्वादाद्युदात्तस्तस्य द्वितीयो वर्णो वर्ज्यमानस्वरेणानुदात्तः। स उदात्तादनुदात्तस्य स्वरित इति स्वरितस्तस्यानेनोदात्तत्वम्। आकार आख्यात इति। तिङन्ते गच्छशब्दे परत आकार उपसर्गत्वादुदात्तः। परादिश्चेति। आकारात्परस्य गच्छेत्यस्यादिरुदात्तः। तिङ्ङतिङ इति निघाते पूर्ववत् स्वरिते च कृतेऽनेनोदात्तविधानात्। वाक्यादौ चेति। अनन्तरोक्तप्रक्रिययेति भावः। मघवन्वर्जमिति। मघवन्नित्यस्यामन्त्रितस्येति निघातवि-

मघवन्। सुत्यापराणामन्तः *। सुत्यापराणामन्त उदात्तो भवति। द्व्यहे सुत्याः त्र्यहे सुत्याम्। असाविसन्तः*। असाविसन्त उदात्तो भवति। गार्ग्यो यजते वात्स्यो यजते। अमुष्येसन्तः*। अमुष्यसन्त उदात्तो भवति। दाक्षेः पिता यजते। स्यान्तस्योपोत्तमं च*। स्यान्तस्योपोत्तममुदात्तं भवति। अन्तश्च। गार्ग्यस्य पिता यजते वात्स्यस्य पिता यजते। वा नामधेयस्य *। वा नामधेयस्य स्यान्तस्योपोत्तममुदात्तं भवति। देवदत्तस्य पिता यजते॥ ३७॥

देवब्रह्मणोरनुदात्तः॥ ३८॥ देवब्रह्मणोरनुदात्तत्वमेके*। देवब्रह्मणोरनुदात्तत्वमेक इच्छन्ति। देवा ब्रह्माणः देवा ब्रह्माणः॥ ३८॥

स्वरितात् संहितायामनुदात्तानाम्॥ ३९॥ स्वरितात्संहितायामनुदात्तानामिति चेद् द्व्येकयोरैकश्रुत्यवचनम्*। स्वरितात्संहितायामनुदात्तानामिति चेद् द्व्येकयोरैकश्रुत्यं वक्तव्यम्। आग्निवेश्यः पचतीति। किं पुनः कारणं न सिद्ध्यति। बहुवचनेन निर्देशः क्रियते तेन बहूनामेवैकश्रुत्यं स्याद् द्व्येकयोर्न स्यात्। नैष दोषः। नात्र बहुवचनेन निर्देशस्तन्त्रम्। कथं पुनस्तेनैव च नाम निर्देशः क्रियते तच्चातन्त्रं स्यात्। तत्कारी च भवांस्तद्द्वेषी च। नान्तरीयकत्वादत्र बहुवचनेन निर्देशः क्रियते। अवश्यं कया चिद्विभक्त्या केन चिद्वचनेन

---

धानात्। सुत्यापराणामिति। सुत्याशब्दः परो येभ्यस्तेषामित्यर्थः। द्व्यह इति टजन्तत्वादन्तोदात्तत्वम्। असावित्यन्त इति। इदं वाचनिकम्। असाविति प्रथमान्तोपलक्षणम्। गार्ग्य इति। ञित्वादाद्युदात्तत्वे प्राप्ते अन्तोदात्तत्वविधिः। अमुष्येति। षष्ठ्यन्तोपलक्षणमेतत्। दाक्षेरिति पूर्ववदाद्युदात्तत्वं प्राप्तम्॥ ३७॥

देव॥ अनुदात्तत्वमेक इति। ये देवा ब्रह्माण इति पदयोर्वैयधिकरण्यमाहुस्तदा हि पूर्वस्यामन्त्रितस्याविद्यमानत्वाद् द्वयोरपि पदयोरामन्त्रिताद्युदात्तत्वे शेषनिघाते च स्वरितत्वे च कृतेऽनेनानुदात्तः क्रियते। यदा तु देवाः ब्रह्माण इत्यनयोः सामानाधिकरण्यं तदा विभाषितं विशेषवचने बहुवचनमिति पक्षे विद्यमानत्वादामन्त्रितस्येति निघातस्य सिद्धत्वाच्चानेनार्थ इत्यन्येषां मतमिति मतभेदप्रदर्शनार्थमेक इत्युक्तम्॥ ३८॥

स्वरि॥ द्व्येकयोरिति। पशुना यजेतेतिवत्सङ्ख्याया विवक्षितत्वात्। आग्निवेश्य इति। यञन्तत्वादादिरुदात्तः। शेषनिघातः ततो द्वितीयो वर्ण, उदात्तादिति स्वरितः। तस्मात्परौ द्वावनुदात्तौ। पचतीति। धातुरुदात्तः शप्तिपावनुदात्तौ ततः शपकारः स्वरितः ततः पर एकोऽनुदात्तः। द्व्येकयोरित्यत्र द्विशब्देन द्वित्वम्, एकशब्देन चैकत्वं तेन द्वित्वे एकत्वे च सतीत्यर्थः। नात्रेति। तन्त्रशब्दोऽत्र प्रधानवाची। यथा ग्रहं संमार्ष्टीति सङ्ख्या न विवक्ष्यते तथेहापीत्यर्थः। तत्कारीति। असत्यां बहुत्वसङ्ख्यायां बहुवचनमेव न स्यादिति तद्विचक्षणीयम्। नात्र निर्देशस्तन्त्रमिति वचनात्तदेवाविवक्षितमिति विरोध इत्यर्थः। नान्तरीयकत्वादिति। शब्दसंस्कारार्थमेवात्र

निर्देशः कर्तव्य इति। तद्यथा। कश्चिदन्नार्थी शालिकलापं सपलालं सतुषमा हरति नान्तरीयकत्वात्। स यावदादेयं तावदादाय तुषपलालान्युत्सृजति। तथा कश्चिन्मांसार्थी मत्स्यान् सकण्टकान् सशकलानाहरति नान्तरीयकत्वात्। स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजति। एवमिहापि नान्तरीयकत्वाद्। बहुवचननिर्देशः क्रियते। अविशेषेणैकश्रुत्यं भवति। अविशेषेणैकश्रुत्यमिति चेद् व्यवहितानामप्रसिद्धिः॥ अविशेषेणैकश्रुत्यमिति चेद् व्यवहितानामैकश्रुत्यं न प्राप्नोति। इमं मे गङ्गे यमुने सरस्वति शुतुद्रि। अनेकमपीति तु वचनात् सिद्धम्॥ अनेकमप्येकमपि स्वरितात्परं संहितायामेकश्रुतिर्भवतीति वक्तव्यम्। सिद्ध्यति। सूत्रं तर्हि भिद्यते। यथान्यासमेवास्तु। ननु चोक्तं स्वरितात्संहितायामनुदात्तानामिति चेद् व्येकयोरेकवचनमविशेषेण व्यवहितानामप्रसिद्धिरिति। नैष दोषः। कथम्। एकशेषनिर्देशोऽयम्। अनुदात्तस्य चानुदात्तयोश्चानुदात्तानां चानुदात्तानामिति। एवमपि षट्प्रभृतीनामेव प्राप्नोति। षट्प्रभृतिष्वेकशेषः परिसमाप्यते। प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति द्व्येकयोरपि भविष्यति। स्वरितात्संहितायाम्॥ ३९॥

अपृक्त एकाल्प्रत्ययः॥ ४१॥

अपृक्तसंज्ञायां हल्ग्रहणं स्वादिलोपे हलोऽग्रहणार्थम्॥ अपृक्तसंज्ञायां हल्ग्रहणं कर्तव्यम्। एकहल्प्रत्ययोऽपृक्तसंज्ञो भवतीति वक्तव्यम्। किं प्रयोजनम्। स्वादिलोपे हलोऽग्रहणार्थम्। एवं हि स्वादिलोपे हलो ग्रहणं न कर्तव्यं भवति। हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हलिति। अपृक्तस्येत्येव

---

बहुत्वं विवक्ष्यते, न तु कार्यसिद्ध्यर्थमित्यर्थः। तुषपलालानीति। तुषसहितानि पलालानीति तत्पुरुषः। द्वन्द्वे तु जातिवाचित्वादेकवद्भावप्रसङ्गः। एवं शकलकण्टकानीति। व्यवहितानामिति। स्वरितादिति पञ्चमीनिर्देशादनन्तरस्यैव कार्येण भाव्यमिति। इमं मे गङ्गे इत्यत्र मेशब्दात्स्वरितात्परस्यैकस्यैवानन्तरस्य स्यात् न द्वितीयादीनां व्यवधानादित्यर्थः। एकशेषनिर्देशोऽयमिति। योगारम्भपक्षे वर्गत्रयोपादानेनैकशेषः क्रियते। अनुदात्तयोरनुदात्तानामिति च कृते एकशेषे पुनरेकशेषः कर्तव्यः। आकृतिपक्षाश्रयेण प्रत्याख्यायते सूत्रे जात्याख्यायामिति बहुवचनं कृतं ततश्चैकद्विबहुषु स्वरितात्परस्याजातेरानन्तर्येणोपलम्भात्सर्वेषामैकश्रुत्यस्य सिद्धत्वाद्दोषाभावः। एवमपीति। सहविवक्षायामेकशेषविधानात्समुदितानां कार्यप्रसङ्गः। प्रभृतिग्रहणेन चैकशेषवाक्ये ऽनुदात्तानामित्यनेनैव चतुरादयोऽप्यनुदात्ता गृह्यन्ते इति दर्शयति। प्रत्येकमिति। निर्देश एव सहविवक्षा। कार्यप्रवृत्तिस्तु प्रत्येकं यथा देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्युक्ते देवदत्तादयः पृथगेव भुञ्जते॥ ३९॥

अपृक्त॥ स्वादिलोप इति। बिभेदेति हलोऽपृक्तग्रहणेनैव निवृत्तिः सिद्ध्यती-

सिद्धम्। अणिञोर्लुगर्थमल्ग्रहणम्। अणिञोर्लुगर्थमल्ग्रहणं कर्तव्यम्। किं प्रयोजनम्। अणिञोर्लुकि ग्रहणं न कर्तव्यं भवति। ण्यक्षत्रियार्षञितो यूनि लुगणिञोरिति। अपृक्तस्येत्येव सिद्धम्। अणिञोर्लुगर्थमिति चेण्णेऽतिप्रसङ्गः ॥ अणिञोर्लुगर्थमिति चेण्णेऽतिप्रसङ्गो भवति। इहापि प्राप्नोति। फाण्टाहृतेरपत्यं माणवकः फाण्टाहृत इति। णवचनसामर्थ्यान्न भविष्यति। वचनप्रामाण्यादिति चेत् फङ्निवृत्त्यर्थं वचनम् ॥। वचनप्रामाण्यादिति चेत् फङ्निवृत्त्यर्थमेतत्स्यात्। फगतो मा भूदिति। पैलादिषु वचनात्सिद्धम्। यद्येतावत् प्रयोजनं स्यात् पैलादिष्वेवास्य पाठं कुर्वीत। तत्र पाठादन्येषामपि फको निवृत्तिर्भवति। एवं सिद्धे सति यदयं णं शास्ति तज्ज्ञापयत्याचार्यो नास्य लुग्भवतीति। तान्येतानि त्रीणि ग्रहणानि भवन्ति। अपृक्तसंज्ञायां हल्ग्रहणं कर्तव्यम्। स्वादिलोपे हलो ग्रहणं न कर्तव्यम्। अणिञोर्लुकि ग्रहणं कर्तव्यम्। अल्ग्रहणेऽपि वै क्रियमाणे तान्येव त्रीणि ग्रहणानि भवन्ति। अपृक्तसंज्ञायामल्ग्रहणं कर्तव्यम्। स्वादिलोपे हलो ग्रहणं कर्तव्यम्। अणिञोर्लुकि ग्रहणं न कर्तव्यं भवति। अपृक्तग्रहणं कर्तव्यं तत्र नास्ति लाघवकृतो विशेषः। अयमस्ति विशेषः। अल्ग्रहणे क्रियमाणे एकग्रहणं न करिष्यते। कस्मान्न भवति। दर्विर्जागृविः। अलेव यः प्रत्ययः। किं वक्तव्यमेतत्। न हि। कथमनुच्यमानं गंस्यते। अल्ग्रहणसामर्थ्यात्। यदि च योऽल् चान्यश्च तत्र स्यात्। अल्ग्रहणमनर्थकं स्यात्। हल्ग्रहणेऽपि वै क्रियमाणे एकग्रहणं न करिष्यते। कस्मान्न भवति। दर्विः जागृविः। हलेव यः प्रत्ययः। किं वक्तव्यमेतत्। न हि। कथमनुच्यमानं गंस्यते। हल्ग्रहणसामर्थ्यात्। यदि च यो हल् चान्यश्च तत्र स्यात्। हल्ग्र-

---

त्यर्थः। अणिञोरिति। पदद्वयोच्चारणमेव गौरवमिति भावः। णवचनेति। लुगपवादो णो विज्ञास्यतेऽन्यथाऽण एव लुकि सिद्धे णविधानमनर्थकं स्यादित्यर्थः। फङ्निवृत्त्यर्थमिति। यञिञोश्चेति प्राप्तस्य फको बाधनार्थं णवचनं स्यात् तस्य च लुक्स्यादेवेत्यर्थः। कस्मान्न भवतीति। प्रत्ययस्य विशेषणमल्ग्रहणमिति तदन्तविधिसद्भाव इति मत्वा प्रश्नः। इदं तु नाश्रितमनुनासिकपरत्वादिति। अल्ग्रहणसामर्थ्यादिति। यद्यलन्तस्य स्यात्केवलस्य चाद्यन्तवद्भावात्तदाल्ग्रहणेन न किंचिद् व्यावर्तितं स्यात् दर्विरिति। ननु हलन्तत्वाभावादत्र प्राप्तिरेव नास्ति। नैष दोषः। अयं साम्प्रतिको विशब्द इति क्विबादिषु भूतपूर्वगतिर्न लभ्यते तत्रापृक्तसंज्ञायां हल्ग्रहणेन हल्वान् गृह्येत। यथा गुरोश्च हल इत्यत्र गुरुमान्। हलेवेति। हलः प्रधान्यात् प्रत्ययस्य च विशेषणत्वादित्यर्थः। क्विबादिषु भूतपूर्वगत्याश्रयणाद् गौणी चेत् कल्पना, अत्र हल्शब्देन तद्वतो ग्रहणे किं न गौणी। हल्ग्रहणसामर्थ्यादिति। क्विबादयोऽपि हल्वन्तो

हणमनर्थकं स्यात् । अस्त्यन्यद्धल्ग्रहणस्य प्रयोजनम् । किम् । हलन्तस्य यथा स्यादजन्तस्य मा भूदिति । एवं तर्हि सिद्धे सति यदल्ग्रहणे क्रियमाणे एकग्रहणं करोति तज्ज्ञापयत्याचार्योऽन्यत्र वर्णग्रहणे जातिग्रहणं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धमित्युक्तं तदुपपन्नं भवति । अपृक्त ॥ ४१ ॥

तत्पुरुषः समानाधिकरणः कर्मधारयः ॥ ४२ ॥ तत्पुरुषस्समानाधिकरणः कर्मधारय इति चेत्समासैकार्थत्वादप्रसिद्धिः* । तत्पुरुषः समानाधिकरणः कर्मधारय इति चेत् समासैकार्थत्वात् संज्ञाया अप्रसिद्धिः । एकोऽयमर्थस्तत्पुरुषो नाम । अनेकार्थाश्रयं च सामानाधिकरण्यम् । सिद्धं तु । पदसामानाधिकरण्यात्* । सिद्धमेतत् । कथम् । तत्पुरुषस्समानाधिकरणपदः कर्मधारयसंज्ञो भवतीति वक्तव्यम् । सिद्ध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं तत्पुरुषः समानाधिकरणः कर्मधारय इति चेत् समासैकार्थत्वादप्रसिद्धिरिति । नैष दोषः । अयं तत्पुरुषोऽस्त्येव प्राथमकल्पिको यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तित्वं च । अस्ति तादर्थ्यात्ताच्छब्द्यं तत्पुरुषार्थानि पदानि तत्पुरुष इति । तद्यस्तादर्थ्यात्ताच्छब्द्यं तस्येदं ग्रहणम् । तत्पुरुषः ॥ ४२ ॥

---

दर्विरित्यादौ विप्रत्ययोऽपीति किमनेन व्यवच्छिन्नं स्यादित्यर्थः । हलन्तस्य यथा स्यादिति । ततश्चासत्येकग्रहणे हन्यादित्यादौ तिलोपः स्यादिति कर्तव्यं, हल्ग्रहणे क्रियमाणे एकग्रहणम् । अल्ग्रहणे तु क्रियमाणे न कर्तव्यं, कृतं तु ज्ञापनार्थं तद्दर्शितं भाष्ये। यद्यप्ययमर्थो, निपात एकाजनाङित्यत्रैकग्रहणेन ज्ञापितस्तथापि मन्दबुद्धीनामनुग्रहाय पुनरिह ज्ञापितः । अपृक्तप्रदेशेषु हल्ग्रहणेनैव सिद्धे संज्ञाविधानं विस्पष्टार्थम् । वृद्धिरादैजित्यत्रास्य परिभाषात्वं व्यवस्थापितमिह कथं संज्ञात्वेन व्यवहारः । परार्थसामान्यात्परिभाषा संज्ञात्वेन व्यवह्रियते इत्यदोषः ॥ ४१ ॥

तत् ॥ समासैकार्थत्वादिति । भिन्नप्रवृत्तिनिमित्तप्रयुक्तस्यानेकस्य शब्दस्यैकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमुच्यते । नीलोत्पलादिश्च तत्पुरुष एक एवेति सामानाधिकरण्यमनुपपन्नम् । वर्तिपदानां तु सामानाधिकरण्यमुपपद्यते तत्पुरुषत्वं तु तेषां नास्ति । ऐकपद्यमिति । पदशब्देनार्थ उच्यते । ऐकार्थ्यमित्यर्थः । अथ वा समासाद्विभक्त्युत्पत्तौ सत्यामैकपद्यमुच्यते । एकविभक्तित्वमिति । एककारकत्वमित्यर्थः । तद्य इति । ननु मुख्यस्य तत्पुरुषस्य पदान्तरेण सामानाधिकरण्यं संभवत्येव राजपुरुषः शोभन इत्यादौ तत्कथं गौणस्य ग्रहणम् । नैष दोषः । तत्पुरुषस्य पदान्तरेण सामानाधिकरण्यं बहिरङ्गमन्तरङ्गं तु वर्तिपदानामिति तदेवाश्रीयते । ततश्च सामर्थ्यात्तत्पुरुषशब्दो गौणार्थवृत्तिः परिगृह्यते । तेन समासावयवानामेव पदानां कर्मधारयसंज्ञा विधीयते समुदाय च वाक्यपरिसमाप्त्या पदसमुदायस्यैकैव कर्मधारयसंज्ञा, न तु प्रत्येकम् । तत्पुरुषसंज्ञाप्रकरणे इयं संज्ञा न कृता एकसंज्ञा-

प्रथमानिर्दिष्टं समास उपसर्जनम् ॥४३॥ प्रथमानिर्दिष्टं समास उपसर्जनमिति चेदनिर्देशात् प्रथमायाः समासे संज्ञाप्रसिद्धिः* । प्रथमानिर्दिष्टं समास उपसर्जनमिति चेदनिर्देशात् प्रथमायाः समासे उपसर्जनसंज्ञाया अप्रसिद्धिः । नहि कष्टादीनां समासे प्रथमां पश्यामः । सिद्धं तु समासविधाने वचनात्* । सिद्धमेतत् । कथम् । समासविधाने प्रथमानिर्दिष्टमुपसर्जनसंज्ञं भवतीति वक्तव्यम् । तत्तर्हि वक्तव्यम् । न वा तादर्थ्यात्ताच्छब्द्यम् * । न वा वक्तव्यम् । किं कारणम् । तादर्थ्यात्ताच्छब्द्यं भविष्यति । समासार्थं शास्त्रं समास इति । यस्य विधौ प्रथमानिर्देशस्ततोऽन्यत्रोपसर्जनसंज्ञाप्रसङ्गः * । यस्य विधौ प्रथमानिर्देशः क्रियते ततोऽन्यत्रापि तस्योपसर्जनसंज्ञा प्राप्नोति । राज्ञः कुमारीं राजकुमारीं श्रितः । श्रितादिसमासे द्वितायान्तं प्रथमानिर्दिष्टं तस्य षष्ठीसमासेऽप्युपसर्जनसंज्ञा प्राप्नोति । सिद्धं तु यस्य विधौ तं प्रतीति वचनात् * । सिद्धमेतत् । कथम् । यस्य विधौ यत्प्रथमानिर्दिष्टं तं प्रति तदुपसर्जनसंज्ञं भवतीति वक्तव्यम् । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । उपसर्जनमिति हि महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत् । लघ्वर्थं हि संज्ञाकरणम् तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनमन्वर्थसंज्ञा यथा विज्ञायेत अप्रधानमुपसर्जनमिति । प्रधानमुपसर्जनमिति च संबन्धिशब्दावेतौ । तत्र संबन्धादेतद्गन्तव्यं यं प्रति यदप्रधानं तं प्रति तदुपसर्जनसंज्ञं भवतीति । अथ यत्र द्वे षष्ठ्यन्ते कस्मात्तत्र प्रधानस्योपसर्जनसंज्ञा न भवति । राज्ञः पुरुषस्य ऽधिकारात् तत्पुरुषसंज्ञाया बाधा मा भूदिति ॥ ४२ ॥

प्रथमा ॥ अनिर्देशात्प्रथमाया इति । समासे किं प्रथमानिर्दिष्टं भवितुमर्हति यस्मात्समासे प्रथमा विधीयते । न च तथा भूतस्य सम्भवः । समासे कृते तत एव प्रथमोत्पद्यते, न तु तदवयवात् अन्तर्वर्तिन्या च विभक्त्या प्रथमानिर्दिष्टत्वे आश्रीयमाणे कष्टश्रित इत्यत्र श्रितशब्दस्यैवोपसर्जनसंज्ञा स्यान्न कष्टशब्दस्य । निर्दिष्टग्रहणं चानर्थकं स्यात् । समासे प्रथमान्तमुपसर्जनमिति वक्तव्यं स्यात् । न वेति । मुख्यार्थासम्भवाद्गौणोऽर्थो गृह्यत इत्यर्थः । यस्य विधाविति । निर्देशापेक्षया समासस्याधीरत्वात् प्रथमानिर्दिष्टस्य सर्वत्रोपसर्जनसंज्ञा प्राप्नोतीति भावः । राजकुमारीमिति । स्युपसर्जनत्वे ह्रस्वः स्यात् पूर्वनिपातव्यवस्था च । सिद्धं त्विति । यस्य श्रितादेः समासविधौ तं श्रितादिकं प्रतीत्यर्थः । महती संज्ञेति । लोके चाप्रधानमुपसर्जनमुच्यते इहापि तथैवाश्रीयत इत्यर्थः । यद्येवंपूर्वकायोऽर्द्धपिप्पली पुरुषव्याघ्र इत्यादिषु उपसर्जनसंज्ञा प्रधानस्य न प्राप्नोति । नैष दोषः । अन्वर्थसंज्ञा हि यत्र सोऽर्थः संभवतीत्यत्र प्रवृत्तिनिमित्तापेक्षाः प्रवर्तन्ते अन्यत्र तु विधानसामर्थ्यान्निरपेक्षाः । यथा कर्मप्रवचनीयसंज्ञा स्वत्यादीनामिति । प्रथमानिर्देशसामर्थ्यादर्द्धादीनां संज्ञा प्रवर्तते । अथ

राजपुरुषस्येति । षष्ठ्यन्तयोश्चोपसर्जनत्वे उक्तम् । किमुक्तम् । षष्ठ्यन्तयोः समासे अर्थभेदात् प्रधानस्यापूर्वनिपात इति । एवं न चेदमकृतं भवति उपसर्जनं पूर्वमिति । अर्थश्चाभिन्न इति कृत्वा प्रधानस्य पूर्वनिपातो न भविष्यति । यद्यपि तावदेतदुपसर्जनकार्यं परिहृतमिदमपरं प्राप्नोति राज्ञः कुमार्याः राजकुमार्याः । गोस्त्रियोरुपसर्जनस्येति ह्रस्वत्वं प्राप्नोति । उक्तं वा * । किमुक्तम् । परवल्लिङ्गमिति । शब्दशब्दार्थाविति । तत्रौपदेशिकस्य ह्रस्वत्वमातिदेशिकस्य श्रवणं भविष्यति । प्रथमानिर्दिष्टम् ॥ ४३ ॥

एकविभक्ति चापूर्वनिपाते ॥ ४४ ॥ द्वितीयादीनामप्यनेनोपसर्जनसंज्ञा प्राप्नोति । तत्र को दोषः । तत्रापूर्वनिपात इति प्रतिषेधः प्रसज्ज्येत । नाप्रतिषेधात् * । नायं प्रसज्ज्यप्रतिषेधः पूर्वनिपाते नेति । किं तर्हि । पर्युदासोऽयम् । यदन्यत्पूर्वनिपातादिति । पूर्वनिपाते अव्यापारः । यदि केन चित्प्राप्नोति तेन भविष्यति । पूर्वेण च प्राप्नोति तेन भविष्यति । अप्राप्तेर्वा * । अथवा अनन्तरा या प्राप्तिः सा प्रतिषिध्यते । कुत एतत् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति । ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते । नोत्सहते प्रतिषिद्धा सती बाधितुम् । एकविभक्तावषष्ठ्यन्त-

---

यत्नेति परिहारान्तरसद्भावादेतदुच्यते । अन्वर्थाश्रयणेन ह्येतदपि सिद्ध्यति । षष्ठ्यन्तयोश्चेति ।पूर्वनिपातप्रकरण इदमुक्तम् । तत्र हि पूर्वनिपातः प्रत्याख्यायते न वा निष्ठादर्शनादिति । अथाप्यारभ्यते तथापि राजशब्दस्यैव पूर्वनिपातो न पुरुषशब्दस्य एव हि वाक्यापेक्षया समासस्यैकार्थता भवति अन्यथा वाक्यसमासयोर्भिन्नार्थता स्यादित्यर्थः । तथा हि । पुरुषार्थो राजापेक्षया प्रधानमेवात्रेति । नासौ भिद्यते राजाऽपेक्षया न व्यतिरिच्यते इत्यर्थः । ततोऽप्रधानस्यैवात्र राज्ञः पूर्वनिपातः । शब्दशब्दार्थाविति । नन्वेतत्तत्र प्रत्याख्यातं, परमयुवतिरित्यादौ द्वौ तिशब्दौ स्यातामिति । एवं तर्हि अन्वर्थाश्रयेणास्य परिहारस्योक्तत्वादत्र सूक्ष्मेक्षिका न कृता ॥ ४३ ॥

एक ॥ समास इति वर्तते । मुख्य एव चेह समासो गृह्यते समासे विधातव्ये यत्रैकविभक्तीति समासार्थं वाक्यं वा समासो गृह्यते सर्वस्य च शब्दस्यैकविभक्तित्वमिति विशेषणोपादानसामर्थ्याद्यस्य पर्यायेणापि न सर्वविभक्तित्वं तदुपसर्जनसंज्ञं यथा निष्कौशाम्बिरित्यत्र कौशाम्बीशब्दो निष्क्रमणक्रियापेक्षयाऽपादानशक्तिसम्बन्धात् पञ्चम्यन्त एव । न ह्यस्य क्रियान्तरापेक्षः शक्त्यन्तराविर्भावः । द्वितीयादीनामिति । कष्टश्रितादिषु कष्टश्रितान्वयः श्रितादिविशेषणत्वादेकविभक्तिका इत्यनेनोपसर्जनसंज्ञा तेषां प्राप्नोति । ततश्चापूर्वनिपात इति प्रतिषेधः प्राप्नोति । पूर्वसूत्रस्य तु नीलोत्पलादिः समानाधिकरणसमासोऽवकाशः । ननु चेयमिति । प्रतिषेधयुक्तत्वायुक्तत्वेन विरोधात्परत्वादिति भावः । नोत्सहत इति । अपवादविषय प्रकल्प्योत्सर्गस्य प्रवर्तनात् ।

वचनम् * । एकविभक्तावषष्ठ्यन्तानामिति वक्तव्यम् । इह मा भूत् । अर्धं पिप्पल्याः । अर्धपिप्पलीति । उक्तं वा । किमुक्तम् । परवल्लिङ्गमिति शब्दशब्दार्थाविति तत्रौपदेशिकस्य ह्रस्वत्वमातिदेशिकस्य श्रवणं भविष्यति । कानि पुनरस्य योगस्य प्रयोजनानि । प्रयोजनं द्विगुप्राप्तापन्नालंपूर्वोपसर्गाः क्तार्थे॥ द्विगुः । पञ्चभिर्गोभिः क्रीतः पञ्चगुः । दशगुः । प्राप्तापन्नः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नो जीविकामापन्नजीविकः । अलंपूर्वं । अलं कुमार्यै अलंकुमारिः । उपसर्गाः क्तार्थे । निष्कौशाम्बिः । निर्वाराणसिः ॥ ४४ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य द्वितीयपादे प्रथमाह्निकम् ॥ १ ॥ २ ॥ १ ॥

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥ ४५ ॥** अर्थवदिति व्यपदेशाय वर्णानां मा भूदिति । किं च स्यात् । वनं धनमिति । नलोपः प्रातिपदिकान्तस्येति नलोपः प्रसज्येत । अधातुरिति किमर्थम् । अहन् वृत्रम् । अधातु-

---

पञ्चगुरिति । द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्य इति वचनात्परवल्लिङ्गं न भवति । अलंकुमारिरिति । पर्यादयो ग्लानाद्यर्थे चतुर्थ्येति समासः ।४४॥

इत्युपाध्यायकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य द्वितीये पादे प्रथमाह्निकम् ॥ १ ॥ २ ॥ १ ॥

अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥ अभिधेयवचनोऽत्रार्थशब्द आश्रीयते तत्राधातुरप्रत्यय इति पर्युदासाश्रयणादर्थवत एव संज्ञा भविष्यति नार्थोऽर्थवद्ग्रहणेनेत्याशङ्क्याह । अर्थवदिति । व्यपदेशायेति । संज्ञिन इति वाक्यशेषः । पर्युदासाश्रयणे केन धर्मेण सादृश्यमाश्रीयत इत्यप्रतिपत्तिः स्यादिति भावः । वर्णानां मा भूदिति । विशिष्टसंज्ञिव्यपदेशफलं दर्शयति । क चिद्वर्णानां चेति पाठः । तत्र चशब्देन पदसमुदायोऽनर्थको दश दाडिमानीत्यादिः समुच्चीयते । किं च स्यादिति । संख्याकर्मादिषु स्वादीनां विधानादनर्थकेभ्यः स्वाद्युत्पत्तिर्न भविष्यतीति प्रश्नः । वनमिति । नन्वधातुरिति नान्तस्य प्रतिषेधो भविष्यति । नैतदस्ति । प्रतिवर्णमत्र विभक्त्युत्पत्तिप्रसङ्गः । न च प्रतिवर्णं धातुसंज्ञासमावेशः । अयं भावः । अविशेषेण स्वादय उत्पद्यन्ते तेषूत्पन्नेष्वर्थनियमः प्रकृतार्थापेक्षया वा प्रत्ययनियम इति स्यादेव स्वाद्युत्पत्तिः । अव्ययादिवत् । यदुक्तं संघातस्यैकार्थ्यात्सुबभावो वर्णादिति तद्वर्णानामर्थवत्त्वपक्षे । तत्र हि तन्त्रेणैकैव विभक्तिः समुदायावयवार्थगतमेकत्वं प्रत्याययिष्यति । एकमेव हि तदेकत्वं तच्चैकेनैव हि सुपा प्रत्यायितमित्यवयवेभ्यो विभक्तिर्न स्यात् । अनर्थकस्य तु प्रातिपदिकसंज्ञायां प्रकाशयितव्यस्यार्थस्याभावात्समुदायादिव प्रतिवर्णं विभक्त्युत्पत्तिप्रसङ्गः । नलोप इति । विभक्तेस्तु श्रवणं न भवति समुदायस्य पृथक् प्रातिपदिकसंज्ञायां तदन्तर्भावाद् लुकोऽभावाद् नलोपस्योपलक्षणार्थत्वाज्जशत्वादीनामपि प्रसङ्गः । अहन्निति ।

रिति शक्यमवक्तुम् । कस्मान्न भवति अहन् वृत्रमिति । आचार्यप्रवृत्तिर्ज्ञापयति न धातोः प्रातिपदिकसंज्ञा भवतीति । यदयं सुपो धातुप्रातिपदिकयोरिति धातुग्रहणं करोति । नैतदस्ति ज्ञापकं, प्रतिषिद्धार्थमेतत् स्यात् । अपि काकः श्येनायत इति । अप्रत्यय इति किम् । काण्डे कुड्ये । अप्रत्यय इति शक्यमवक्तुम् । कस्मान्न भवति काण्डे कुड्य इति । कृत्तद्धितग्रहणं नियमार्थं भविष्यति । कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा भवति नान्यस्येति । अर्थवत्यनेकपदप्रसङ्गः * । अर्थवदिति प्रातिपदिकसंज्ञायामनेकस्यापि पदस्य प्रातिपदिकसंज्ञा प्राप्नोति । दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डः अधरोरुकमेतत्कुमार्याः स्फैयकृतस्य पिता प्रतिशीन इति । समुदायोऽत्रानर्थकः । समुदायोऽनर्थक इति चेदवयवार्थवत्त्वात्समुदायार्थवत्त्वं यथा लोके * । समुदायोऽनर्थक इति चेदवयवार्थवत्त्वात् समुदायार्थवत्त्वम् । अवयवैरर्थवद्भिः समुदाया अर्थवन्तो भवन्ति यथा लोके । तद्यथा लोके आढ्यमिदं नगरं गोमदिदं नगरमित्युच्यते । न च सर्वे तत्राढ्या भवन्ति सर्वे वा गोमन्तः । यथा लोके इत्युच्यते लोके चावयवा एवार्थवन्तो न समुदायाः । अतश्चावयवा एवार्थवन्तो न समुदायाः । यस्य हि यद् द्रव्यं भवति स तेन कार्यं करोति । यस्य च या गावो भवन्ति स तासां क्षीरं घृतमुपभुङ्क्ते । अन्यैरेतद् द्रष्टुमशक्यम् । का तर्हीयं वाचोयुक्तिराढ्यमिदं नगरं गोमदिदं नगरमिति । एषैषा वाचोयुक्तिः । इह तावदाढ्यमिदं नगरमित्यकारो मत्वर्थीयः । आढ्या अस्मिन् सन्ति तदिदमाढ्यमिति । गोमदिदं नगरमिति मत्वन्तात्

विशेषविहितत्वाल्लुङाद्युत्पत्तौ सत्यामडागमस्य धातुभक्तत्वात्प्रातिपदिकसंज्ञायां सत्यां नलोपप्रसङ्गः । न चाप्रत्यय इति प्रत्ययलक्षणप्रतिषेधः । न ङिसंबुद्ध्योरिति ज्ञापनाद् नलोपे विधीयमाने प्रत्ययलक्षणेनाप्रत्यय इति निषेधाभावात् । धातुग्रहणं करोतीति । पुत्रीयतीत्यादौ प्रातिपदिकत्वादेव लुक् सिद्ध इति भावः । श्येनायत इति । अत्राप्रत्यय इति निषिद्धा प्रातिपदिकसंज्ञा । कृत्तद्धित । तद्धितग्रहणमत्र नियमार्थं कृद्ग्रहणं तु प्रतिषिद्धार्थं भिद् छिदिति । अत्र ह्यधातुरिति प्रतिषेधप्रसङ्ग इत्यर्थः । अनेकस्यापि पदस्येति । समुदितस्येति बोद्धव्यम् । प्रतिपदं तु नैव संज्ञा प्राप्नोत्यप्रत्यय इति निषेधात् । समुदायस्य तु निषेधो न प्रवर्तते । प्रत्ययग्रहणे यस्मात्स विहित इति वचनात्समुदायाच्च प्रत्ययस्याविधानात् प्रत्ययान्तत्वाभावात् । न विद्यते प्रत्ययो यस्मिन् सोयमप्रत्यय इत्यप्याश्रयितुं न युज्यते बहुपटव इत्यस्यापि समुदायस्य निषेधप्रसङ्गात् स्वरे दोषप्रसङ्गात् । समुदायोत्रानर्थक इति । पदार्थानां समन्वयाभावात् । अवयवार्थवत्त्वादिति । अवयवधर्माणां च समुदाये व्यपदेशात् सति च प्रातिपदिकत्वे सुब्लुक्प्रसङ्गः । एषैषेति । एषा या वाचो युक्तिः सैषा एतत्प्रमाणेत्यर्थः । अकारो मत्वर्थीय इति । ततश्च नावयवधर्मेण समुदाये व्यपदेशः, किं तर्हि दण्ड्यादिवद्यौगिक इत्यर्थः । मत्वन्तादिति । मत्व-

मत्वर्थीयो लुप्यते। एवमपि वाक्यप्रतिषेधोऽर्थवत्त्वात्। वाक्यस्य प्रातिपदिकसंज्ञायाः प्रतिषेधो वक्तव्यः। देवदत्त गामभ्याज शुक्लां देवदत्त गामभ्याज कृष्णामिति। किं कारणम्। अर्थवत्त्वात्। अर्थवद्ध्येतद्वाक्यम्। न वै पदार्थादन्यस्यार्थस्योपलब्धिर्भवति वाक्ये। पदार्थादन्यस्यानुपलब्धिरिति चेत् पदार्थाभिसंबन्धस्योपलब्धिः॥ पदार्थादन्यस्यानुपलब्धिरिति चेद्। इदमुच्यते। पदार्थाभिसंबन्धस्योपलब्धिर्भवति वाक्ये। इह देवदत्त इत्युक्ते कर्ता निर्दिष्टः कर्म क्रियागुणौ चानिर्दिष्टौ। गामित्युक्ते कर्म निर्दिष्टं कर्ता क्रिया गुणौ चानिर्दिष्टौ। अभ्याजेत्युक्ते क्रिया निर्दिष्टा कर्तृकर्मणी गुणश्चानिर्दिष्टः। शुक्लामित्युक्ते गुणो निर्दिष्टः कर्तृकर्मणी क्रिया चानिर्दिष्टा। इहेदानीं देवदत्त गामभ्याज शुक्लामित्युक्ते सर्वं निर्दिष्टं देवदत्त एव कर्ता नान्यः। गामेव कर्म नान्यत्। अभ्याजैव क्रिया नान्या। शुक्लामेव न कृष्णामिति। येषां पदानां सामान्ये वर्तमानानां यद्विशेषेऽवस्थानं स वाक्यार्थः। तस्मात् प्रतिषेधः॥। तस्मात् प्रतिषेधो वक्तव्यः। न वक्तव्यः। अर्थवत्समुदायानां समासग्रहणं नियमार्थम्। अर्थवत्समुदायानां समासग्रहणं नियमार्थं भविष्यति। समास एवार्थवतां समुदायानां प्रातिपदिकसंज्ञो भवति नान्य इति। यदि नियमः क्रियते प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञा न प्राप्नोति। बहुपटवः उच्चकैर्नीचकैरिति। किं पुनरत्र प्रातिपदिकसंज्ञया

---

न्तान्मतुन्न भवति। सरूपः प्रत्ययो नेष्ट इति वचनात्। तस्मादेकगोपूर्वादिति ठञो भाष्यकारवचनप्रामाण्याल्लोपः। अत इति च तत्र निवृत्तं गौत्रिकादिसिद्ध्यर्थं गवां समूहो गोत्रा सा अस्मिन्नस्तीति गौत्रिकम्। अथ वा मत्वन्तान्मर्थीयो लुप्यत इति। अनेनावयवधर्मस्य समुदाये उपचारमाह। इह तु मुख्येऽर्थवत्त्वे सम्भवत्युपचरितत्वस्याश्रयो न युक्तः। अर्थवद्वाक्यमिदानीं दर्शयति। एवमपीति। अर्थवद्धीति। पदार्थानां समन्वयावगमात्। न वै पदार्थादिति। पदानि स्वं स्वमर्थं प्रतिपादयन्ति वाक्यम्। पदार्था एव त्वाकाङ्क्षायोग्यतासंनिधिवशात् परस्परसंसृष्टा वाक्यार्थ इत्यर्थः। न तु वाक्यं वाक्यार्थो वा पृथगस्तीति भावः। पदार्थाभिसम्बन्धस्येति। ध्वनिव्यङ्ग्यं नित्यं वाक्यं विशिष्टस्यार्थस्य पदार्थसंसर्गरूपस्य वाचकम्। अन्यथा ह्यशाब्दो वाक्यार्थः स्यात्। कर्ता निर्दिष्ट इति। सम्बोधनविषयमनियतक्रियं कर्तृमात्रमित्यर्थः। यद्विशेषेऽवस्थानमिति। पदार्थसंसर्गरूपे वाक्यार्थे इत्यर्थः। अत एव वाक्यमेव मुख्यः शब्दो, वाक्यार्थ एव मुख्यः शब्दार्थः। सादृश्यात्त्वन्वयव्यतिरेकौ कल्पितौ लाघवार्थमाश्रित्य पदार्थव्यवस्थापनं क्रियते। प्रतिवाक्यं व्युत्पत्त्यसम्भवाच्छाब्दव्यवहाराभावप्रसङ्गात्। बहुपटव इति। घोरत्येनार्थेनार्थवान् प्रत्ययः। प्रकृतिस्तु वाच्येनेत्यर्थवत्समुदायोऽयं भवति। उच्चकैरिति। तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति यदा नाश्रीयते, नाव्ययकच इनमवदिति तदायं दोषः। तदा हि सुबन्तस्याकचि कृते अव्ययादिति सुब्लुगभावात्सुपो धातुप्रातिपदिकयोरिति लुगिष्यते। स च न प्राप्नोति। किं पुनरत्रेति। उच्चकैरित्याद्यन्यथा सिद्ध्यतीति प्रश्नः।

प्रार्थ्यते । प्रातिपदिकादिति स्वाद्युत्पत्तिर्यथा स्यादिति । नैष दोषः । यथैवात्राप्रातिपदिकत्वात्सुबुत्पत्तिर्न भवति एवं लुगपि न भविष्यति । तत्र यैवासावन्तर्वर्तिनी विभक्तिस्तस्या एव श्रवणं भविष्यति । नैवं शक्यं स्वरे दोषः स्यात् । बहुपटव इत्येवं स्वरः स्यात् । बहुपटव इति चेष्यते । पठिष्यति ह्याचार्यः । चितः सप्रकृतेर्बह्वकजर्थमिति । तस्यां पुनर्लुप्तायां यान्या विभक्तिरुत्पद्यते तस्याः प्रकृत्यनेकदेशत्वादन्तोदात्तत्वं न भविष्यति । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति भवति प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञेति । यदयमप्रत्यय इति प्रतिषेधं शास्ति । स च तदन्तप्रतिषेधः * । स तर्हि ज्ञापकार्थः प्रत्ययप्रतिषेधो वक्तव्यः । ननु चायं प्राप्त्यर्थोऽपि वक्तव्यः । नार्थः प्राप्त्यर्थेन । कृत्तद्धितग्रहणं नियमार्थं भविष्यति । कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा भविष्यति, नान्यस्य प्रत्ययान्तस्येति । स एषोऽनन्यार्थः प्रत्ययप्रतिषेधो वक्तव्यः । प्रकृतिप्रत्ययसमुदायस्य वा प्रातिपदिकसंज्ञा वक्तव्या । उभयं न वक्तव्यम् । तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः । यथाजातीयकानां समासः । कथंजातीयकानां समासः । सुबन्तानाम् । सुप्तिङ्समुदायस्य तर्हि प्रातिपदिकसंज्ञा प्राप्नोति । सुप्तिङ्समुदायस्यापि प्रातिपदिकसंज्ञा आरभ्यते । जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधातीति । तन्नियमार्थं भविष्यति । एतस्यैव सुप्तिङ्समुदायस्य प्रातिपदिकसंज्ञा भवति नान्यस्येति । तिङ्समुदा-

---

इतरो बहुपटव इति न सिद्ध्यतीति मन्यमान आह । प्रातिपदिकादिति । स्वर इति । बहुपटव इति वकाराकारस्योदात्तत्वं प्राप्नोति टकाराकारस्य चेष्यते । प्रकृत्यनेकदेशत्वादिति । न ह्यसौ प्रकृतेरेकदेश इत्यर्थः । अप्रत्यय इति प्रतिषेधं शास्तीत्युक्ते कश्चन ब्रूयाद् बहुपटव इत्यत्राप्रत्यय इति निषेधः प्राप्नोतीत्यत आह । स च तदन्तप्रतिषेध इति । प्रत्ययग्रहणे यस्मात्सविहित इति तदन्तविधिः । संज्ञाविधौ च प्रत्ययग्रहणे तदन्तविधिर्निवारितः । अप्रत्यय इत्ययं तु प्रतिषेधविधिः । पटुशब्दाच्चात्र जसुत्पन्नो न बहुपटुशब्दादिति बहुपटव इत्येतदप्रत्ययान्तमेव । अथ वा अप्रत्यय इति बहुव्रीह्याश्रयणात् प्रत्ययादेरपि बहुपटव इत्यस्य निषेधः प्राप्नोतीत्याह । स चेति । अप्रत्यय इति तत्पुरुष आश्रीयते तस्य स्वपदार्थप्रधानत्वेनान्तरङ्गत्वादिति भावः । प्राप्त्यर्थ इति । प्रतिषेधप्राप्त्यर्थ इत्यर्थः । स एषोऽनन्यार्थ इति । ज्ञापनार्थ एवेत्यर्थः । सुबन्तानामिति । एतच्चोपलक्षणं भेदसंसर्गद्वारकार्थवत्त्वयुक्तानाम् । यस्मात्सुबन्तानामपि समासो दृश्यते । अश्वक्रीतीत्यादौ गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति वचनात् । देवदत्तो ग्रामं गत इत्यादेः सुबन्तसमुदायस्यैव वाक्यस्य नियमेन निवृत्तिः स्यादित्यभिप्रायेणाह । सुप्तिङ्समुदायस्येति । जहि कर्मणेति । ननु समाससंज्ञेयं समासान्तोदात्तार्था । नैष दोषः । समासत्वादेव प्रातिपदिक-

यस्य तर्हि प्रातिपदिकसंज्ञा प्राप्नोति । तिङ्समुदायस्यापि प्रातिपदिकसंज्ञाऽऽरभ्यते । आख्यातमाख्यातेन क्रियसातत्ये इति । तन्नियमार्थं भविष्यति । एतस्यैव तिङ्समुदायस्य प्रातिपदिकसंज्ञा भवति नान्यस्येति ।

अर्थवत्ता नोपपद्यते केवलेनावचनात्* । अर्थवत्ता नोपपद्यते वृक्षशब्दस्य । किं कारणम् । केवलेनावचनात् । न केवलेन वृक्षशब्देनार्थो गम्यते । केन तर्हि । सप्रत्ययकेन । न वा प्रत्ययेन नित्यसंबन्धात् केवलस्याप्रयोगः * । न वा एष दोषः । किं कारणम् । प्रत्ययेन नित्यसम्बन्धात् । नित्यसम्बद्धावेतावर्थौ प्रकृतिः प्रत्यय इति । प्रत्ययेन नित्यसम्बन्धात् केवलस्य प्रयोगो न भविष्यति । अन्यद्भवान् पृष्टोऽन्यदाचष्टे । आम्रान् पृष्टः कोविदारानाचष्टे । अर्थवत्ता नोपपद्यते केवलेनावचनादिति भवानस्माभिश्चोदितः केवलस्याप्रयोगे हेतुमाह । एवं च किल नाम कृत्वा चोद्यते समुदायस्यार्थे प्रयोगादवयवानामप्रसिद्धिरिति । सिद्धं त्वन्वयव्यतिरेकाभ्याम् । सिद्धमेतत् । कथम् । अन्वयाद्व्यतिरेकाच्च । कोऽसावन्वयो व्यतिरेको वा । इह वृक्ष इत्युक्ते कश्चिच्छब्दः श्रूयते वृक्षशब्दः अकारान्तः सकारश्च प्रत्ययः । अर्थोऽपि कश्चिद्गम्यते मूलस्कन्धफलपलाशवान् एकत्वं च । वृक्षावित्युक्ते कश्चिच्छब्दो हीयते कश्चिदुपजायते कश्चिदन्वयी । सकारो हीयते औकार उपजायते । वृक्षशब्दः अकारान्तोऽन्वयी । अर्थोऽपि कश्चिद्धीयते कश्चिदुपजायते कश्चिदन्वयी । एकत्वं हीयते द्वित्वमुपजायते । मूलस्कन्धफलपलाशवानन्वयी । तेन मन्यामहे यः शब्दो हीयते तस्यासावर्थो यो हीयते । यः शब्द उपजायते तस्यासावर्थो योऽर्थ उपजायते । यः शब्दोऽन्वयी तस्यासावर्थो योऽर्थोऽन्वयी । विषम उपन्यासः । बहवो हि शब्दा एकार्था भवन्ति । तद्यथा इन्द्रः शक्रः पुरुहूतः पुरन्दरः कन्दुः कोष्ठः कुसूल इति । एकश्च शब्दो बह्वर्थः । तद्यथा । अक्षाः पादा माषा-

---

त्वामिति तत्तुल्यजातीयनाप्रतिपादनार्थमेतदुपन्यस्तम् । तिङ्समुदायस्येति । पश्य धावतीत्यादि । ततश्च प्रातिपदिकान्तोदात्तत्वप्रसङ्गः । आख्यातमिति । ततश्च समासेन तुल्यजातीयानां सर्वेषां वाक्यानां नियमान्निवृत्तिः सिद्धेत्यर्थः ।

अर्थवत्तेति । अर्थवत्ता संज्ञानिमित्तत्वेनेहापात्ता । सा च वाक्यस्यैव पदस्य वा केवलस्य लोके प्रयुज्यमानस्योपपद्यते । न तु प्रकृतिभागस्य केवलस्य प्रयोगाऽभावाद्वर्णवदव्यवहार्यत्वात् । नवेति । अन्यथासिद्धः केवलस्याप्रयोगः । न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्यय इति नियमात् । अर्थवत्ता त्वन्वयव्यतिरेकाभ्यामस्त्येवेति भावः । अन्वयव्यतिरेकाभ्यामिति । अन्वयोऽनुगमः, सति शब्देऽर्थावगमः । व्यतिरेक शब्दाभावे तदर्थानवगमः । विषम इति । यद्येकः शब्द एकस्मिन्नर्थे नियतः स्यात् तत एतद्युज्यते वक्तुं, यतस्त्वनियमस्ततः प्रकृतेरेव सर्वे अर्थाः स्युः । यथा दधि मध्वग्निचिदिति । प्रत्ययस्तु क्वचिद्द्योतकः । प्रत्ययस्यैव वा सर्वे अर्था स्युः । इयानघु-

इति। अतः किं न साधीयोऽर्थवत्ता सिद्धा भवति। न ब्रूमः अर्थवत्ता न सिद्ध्यतीति। वर्णिता अर्थवत्तान्वयव्यतिरेकाभ्यामेव। तत्र कुत एतदयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इति। न पुनः प्रकृतिरेवोभावर्थौ ब्रूयात्। प्रत्यय एव वा। सामान्यशब्दा एते एवं स्युः। सामान्यशब्दाश्च नान्तरेण विशेषं प्रकरणं वा विशेषेष्ववतिष्ठन्ते। यतस्तु खलु नियोगतो वृक्ष इत्युक्ते स्वभावतः कस्मिंश्चिदर्थे प्रतीतिरुपजायते। अतो मन्यामहे नेमे सामान्यशब्दा इति। न चेत्सामान्यशब्दाः प्रकृतिः प्रकृत्यर्थे वर्तते प्रत्ययः प्रत्ययार्थे। किं पुनरिमे वर्णा अर्थवन्तः आहोस्विदनर्थकाः। वर्णस्यार्थवदनर्थकत्वे उक्तम्। किमुक्तम्। अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनाद्वर्णव्यत्यये चार्थान्तरगमनाद्वर्णानुपलब्धौ चानर्थगतेः सङ्घातार्थवत्त्वाच्च। संघातस्यैकार्थत्वात् सुबभावो वर्णात्। अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेर्वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनादिति। तत्रेदमपरिहृतं संघातार्थवत्त्वाच्चेति। तस्य परिहारः। संघातार्थवत्त्वाच्चेति चेद् दृष्टो ह्यतदर्थेन गुणेन गुणिनोऽर्थभावः *। संघातार्थवत्त्वाच्चेति चेद् दृश्यते हि पुनरतदर्थेन गुणेन गुणिनोऽर्थभावः *। तद्यथा। एकस्तन्तुस्त्वक्त्राणे असमर्थः, तत्समुदायश्च कम्बलः समर्थः। एकश्च तण्डुलः क्षुत्प्रतिघातेऽसमर्थः, तत्समुदायश्च वर्धितकं समर्थम्। एकश्च बल्वजो बन्धने असमर्थः, तत्समुदायश्च रज्जुः समर्था भवति। विषम उपन्यासः। भवति हि तत्र या च यावती चार्थमात्रा। भवति हि कंचित्प्रत्येकस्तन्तुस्त्वक्त्राणे समर्थः। एकश्च तण्डुलः क्षुत्प्रतिघाते समर्थः। एकश्च बल्वजो बन्धने समर्थः। इमे पुनर्वर्णा अत्यन्तमेवानर्थकाः। यथा तर्हि रथाङ्गानि विहृतानि प्रत्येकं व्रजिक्रियां प्रत्यसमर्थानि भवन्ति तत्समुदायश्च रथः समर्थः। एवमेषां वर्णानां समुदाया अर्थवन्तः। अवयवा अनर्थका इति। निपातस्यानर्थकस्य प्रातिपदिकत्वम् *। निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या। खल्वति।

---

नेति यथा। प्रकृतिस्त्वर्थाभिधाने साहायकमात्रं कुर्यात्। अतः किं न साधीय इति। प्रकृतिः सर्वान् अर्थानभिदधाति। द्योतकास्तु विभक्तय इति सिद्धैवार्थवत्ता। प्रत्यय एवेति। ततश्च प्रकृतेरर्थवत्ता न सिद्ध्यतीति तदवस्थो दोष इत्यर्थः। सामान्यशब्दा इति। प्रकृतिश्चेत् सर्वान् अर्थानभिदध्याद् वृक्ष इत्युक्ते सर्वा संख्या प्रतीयेत। प्रत्ययो वा सर्वस्य प्रातिपदिकस्यार्थं प्रत्याययेदित्यर्थः। यतस्तु खल्विति। प्रकरणादिना विनैवेति भावः। अतदर्थेनेति। अतत्प्रयोजनेनेत्यर्थः। गुणेनेति। अवयवेन। स ह्यवयविन उपकारकत्वाद् गुणः। अवयवी तु गुणी। अर्थभावः प्रयोजनोत्पत्तिः। बल्वजस्तृणविशेषः। या च यावती चेति। अयं समुदायः का चिदित्यस्यार्थे वर्तते। विहृतानीति। विक्षिप्तानीत्यर्थः। अनर्थकस्येति।

निखञ्जति। लम्बते। प्रलम्बते। किं पुनरत्र प्रातिपदिकसंज्ञया प्रार्थ्यते। प्रातिपदिकादिति स्वाद्युत्पत्तिः। सुबन्तं पदमिति पदसंज्ञा। पदस्य पदादिति निघातो यथा स्यात्। नैतदस्ति प्रयोजनम्। सत्यामपि प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिर्न प्राप्नोति। किं कारणम्। नहि प्रातिपादकसंज्ञायामेव स्वाद्युत्पत्तिः प्रतिबद्धा। किं तर्हि। एकत्वादिष्वप्यर्थेषु स्वादयो विधीयन्ते। न चैषामेकत्वादयः सन्ति। नैष दोषः। अविशेषेणोत्पद्यन्ते। उत्पन्नानां नियमः क्रियते। अथ वा प्रकृतान् अर्थानपेक्ष्य नियमः। के च प्रकृताः। एकत्वादयः। एकस्मिन्नेवार्थ एकवचनं न द्वयोर्न बहुषु। द्वयोरेवार्थयोर्द्विवचनं नैकस्मिन्न बहुषु। बहुष्वेवार्थेषु बहुवचनं नैकस्मिन्न द्वयोरिति।

अथवा आचार्यप्रवृत्तिर्ज्ञापयति अनर्थकानामप्येतेषां भवत्यर्थवत्कृतमिति। यदधिपरी अनर्थकाविसनर्थकयोर्गत्युपसर्गसंज्ञाबाधिकां कर्मप्रवचनीयसंज्ञां शास्ति। किं पुनरयं पर्युदासो यदन्यत्प्रत्ययादिति। आहोस्वित्प्रसज्ज्यायं प्रतिषेधः प्रत्ययो नेति। कश्चात्र विशेषः। अप्रत्यय इति चेत् तिबेकादेशे प्रतिषेधोऽन्तवत्त्वात् *। अप्रत्यय इति चेत्तिबेकादेशे प्रतिषेधो वक्तव्यः। काण्डे कुड्ये। किं कारणम्। अन्तवत्त्वात्। तिबतिपोरेकादेशः अतिपोऽन्तवत्स्यात्। अस्त्यन्यत्तिप इति कृत्वा प्रातिपदिकसंज्ञा प्राप्नोति। अस्तु तर्हि प्रसज्ज्यप्रतिषेधः प्रत्ययो नेति। न प्रत्यय इति चेद्ङ्केकादेशे प्रतिषेध आदिवत्त्वात् *। न प्रत्यय इति चेद्ङ्केकादेशे प्रतिषेधः प्राप्नोति। ब्रह्मबन्धूः। किं कारणम्। आदिवत्त्वात्। प्रत्ययाप्रत्यययोरेका-

---

निपातानां द्योतकत्वाद् अभिधेयार्थाभावेऽपि द्योत्यार्थसद्भावाद् येषामर्थवत्त्वं तेषां सिद्धयत्येव संज्ञा। यस्य तु द्योत्योऽप्यर्थो नास्ति तदर्थं वचनम्। निघातो यथा स्यादिति। अर्थवदनर्थकयोरसत्यपि सामर्थ्ये संज्ञाविधानसामर्थ्यान्निघातो भवतीत्येके। समानवाक्यतानिमित्तो निघातो न सामर्थ्यनिमित्तः। स चेहास्ति आख्यातं साव्ययकारकविशेषणं वाक्यमिति परिभाषणाद्वाक्यस्येत्यपरे।

नहीति। स्वादिविधिवाक्यस्य संख्याविधिवाक्येनैकवाक्यत्वात्। अविशेषेणेति। नानावाक्यताश्रयणात्। नियमश्चार्थानां न प्रत्ययानामित्यनर्थकेभ्योऽपि ते भवन्ति। अथ वेति। प्रत्ययनियमेऽपि दोषाभाव इत्यर्थः। अधिपरी इति। क्रियायोगे गत्युपसर्गसंज्ञयोर्विधानादनर्थकयोः क्रियायोगाभावात् प्राप्तिरेव नास्तीति संज्ञाविधानं यथोक्तार्थस्य ज्ञापकं संपद्यते। आनर्थक्यं च निपातस्य धातुनिपातयोः साधारणार्थतयाऽधिकद्योत्यार्थाभावाद् उच्यते। न तु सर्वात्मनार्थाभावात्।

तिबेकादेश इति। तिपाति शब्दादारभ्य सुपः पकारेण प्रत्याहारः। अन्तवत्त्वादिति। पूर्वस्य प्रत्ययसदृशस्य प्रातिपदिकसंज्ञाकार्यमिति पूर्वं प्रत्यन्तवद्भावः। आदिवत्त्वादिति। परकार्यप्रतिषेधे कर्तव्ये परं प्रत्येकादेशस्यादिवद्भावः।

देशः प्रत्ययस्यादिवत्स्यात्। तत्र प्रत्ययो नेति प्रतिषेधः प्राप्नोति। किंपुनरत्र प्रातिपदिकसंज्ञया प्रार्थ्यते। प्रातिपदिकादिति स्वाद्युत्पत्तिर्यथा स्यात्। नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति उत्पद्यन्ते ऊङन्तात्स्वादय इति। यदयं नोङ्धात्वोरिति विभक्तिस्वरस्य प्रतिषेधं शास्ति। अथ वा द्वे ह्यत्र प्रातिपदिकसंज्ञे अवयवस्यापि समुदायस्यापि। तत्रावयवस्य या प्रातिपदिकसंज्ञा तयान्तवद्भावात्स्वाद्युत्पत्तिर्भविष्यति। सुब्लोपे च प्रत्ययलक्षणत्वात् *। सुब्लोपे च प्रत्ययलक्षणेन प्रतिषेधः प्राप्नोति। राजा। तक्षा। प्रत्ययलक्षणेन प्रत्ययो नेति प्रतिषेधः प्राप्नोति। नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति न प्रत्ययलक्षणेन प्रतिषेधो भवतीति। यदयं न ङिसंबुद्ध्योरिति प्रतिषेधं शास्ति। अथ वा पुनरस्तु पर्युदासः। ननु चोक्तमप्रत्यय इति चेत्तिबेकादेशे प्रतिषेधोऽन्तवत्त्वादिति। प्रसज्ज्यप्रतिषेधेऽप्येष दोषः। द्वे ह्यत्र प्रातिपदिकसंज्ञे अवयवस्यापि समुदायस्यापि। गृह्यते च प्रातिपदिकाप्रातिपादकयोरेकादेशः प्रातिपदिकग्रहणेन। तस्मादुभाभ्यामपि वक्तव्यं स्यात्
ह्रस्वो नपुंसके यत्तस्येति। किं च नपुंसके। नपुंसकं यस्य गुणः। कस्य च नपुंसकं गुणः। प्रातिपदिकस्य। अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥४५॥

कृत्तद्धितसमासाश्च ॥ ४६ ॥ समासग्रहणं किमर्थम्। समासग्रहणे उक्तम्। किमुक्तम्। अथवत्समुदायानां समासग्रहणं नियमार्थमिति। कृत्तद्धित ॥

ह्रस्वो नपुंसके प्रातिपदिकस्य ॥ ४७ ॥ प्रातिपदिकग्रहणं किम-

---

यदयमिति। अथ वा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति स्वादय उत्पद्यन्ते। द्वे इति। तत्रान्तरङ्गत्वात्प्रत्ययोत्पत्तेः प्रागेव ब्रह्मबन्धूशब्दस्य प्रवृत्ता प्रातिपदिकसंज्ञेत्यूङेकादेशस्य पूर्वं प्रत्यन्तवद्भावादस्त्येव प्रातिपदिकत्वमिति न कश्चिद्दोषः। राजेति। तत्र नलोपो न स्यात्। अत्राप्यन्तरङ्गत्वात्पूर्वमेव प्रवृत्ता प्रातिपदिकसंज्ञा बहिरङ्गेण प्रतिषेधेन न शक्यते निवर्तयितुमिति परिहारोऽस्ति। न ङिसंबुद्ध्योरिति। ननु हे सुराजन्निति समासप्रातिपदिकसंज्ञार्थः प्रतिषेधः स्यात्। न चोत्तरप्राप्तेरप्रत्यय इति प्रतिषेधः। मध्येऽपवादा इति न्यायात्। एवं तर्हि समासेऽप्यप्रत्यय इति वर्तते। अन्यथा सुराजातिराजेत्यादौ विध्यर्थतायां संभवन्त्यां नियमार्थं समासग्रहणं न स्यात्।

यत्तस्येति। विभक्त्यन्तं च शक्तिसंख्याप्रधानम्। नच तयोर्लिङ्गयोगः। न चान्तवद्भावेन अर्थः शक्योऽतिदेष्टुमिति न भवति ह्रस्वः। अथवा नपुंसकत्वं प्रातिपदिकार्थस्यैव संभवतीति प्रातिपदिकग्रहणं मुख्यप्रातिपदिकपरिग्रहार्थमित्यन्तवद्भावेन यत्प्रातिपदिकं तस्य ह्रस्वाभावः। अत्र च सूत्रे यदव्युत्पन्नमर्थवत्तदुदाहरणम्। व्युत्पत्तौ तु कृदन्तत्वादेव सिद्ध्यतीति पृथगस्यारम्भोऽनर्थकः स्यात्। अव्युत्पत्तिपक्षस्य चेदमेव सूत्रं ज्ञापकमित्याहुः ॥ ४५ ॥

ह्रस्वो नपुंसके ॥ प्रातिपदिकग्रहणमिति। नपुंसकलिङ्गं द्रव्यस्यैव संभ-

र्थम्। नपुंसकह्रस्वत्वे प्रातिपदिकग्रहणं तिङ्निवृत्त्यर्थम्। नपुंसकह्रस्वत्वे प्रातिपदिकंग्रहणं क्रियते तिङ्निवृत्त्यर्थं, तिबन्तस्य ह्रस्वत्वं मा भूत् काण्डे कुड्ये रमते ब्राह्मणकुलमिति। अव्ययप्रतिषेधः *। अव्ययानां प्रतिषेधो वक्तव्यः। इह मा भूत्। दोषा ब्राह्मणकुलं दिवा ब्राह्मणकुलमिति। स तर्हि वक्तव्यः। न वक्तव्यः। नात्राव्ययं नपुंसके वर्तते। किं तर्हि। अधिकरणमात्राव्ययं नपुंसकस्य। इह तर्हि प्राप्नोति। काण्डीभूतं वृषलकुलं कुड्यीभूतं वृषलकुलमिति। न वा लिङ्गाभावात् *। न वा वक्तव्यम्। किं कारणम्। लिङ्गाभावात्। अलिङ्गमव्ययम्। किं पुनरयमव्ययस्यैव परिहारः आहोस्वित्तिबन्तस्यापि परिहारः। तिबन्तस्यापीत्याह। कथम्। अव्ययं हि किं चिद्विभक्त्यर्थप्रधानं किं चित्क्रियाप्रधानम्। उच्चैर्नीचैरिति विभक्त्यर्थप्रधानम्। हिरुक् पृथगिति क्रियाप्रधानम्। तिबन्तं चापि किं चिद्विभक्त्यर्थप्रधानं किं चित्क्रियाप्रधानम्। काण्डे कुड्ये इति विभक्त्यर्थप्रधानं, रमते ब्राह्मणकुलमिति क्रियाप्रधानम्। न चैतयोरर्थयोर्लिङ्गसंख्याभ्यां योगोऽस्ति। अवश्यं चैतदेवं विज्ञेयम्। क्रियमाणेऽपि हि प्रातिपदिकग्रहणे इह प्रसज्ज्येत। काण्डे कुड्ये। द्वे ह्यत्र प्रातिपदिकसंज्ञे। अवयवस्यापि समुदायस्यापि। गृह्यते च प्रातिपदिकाप्रातिपदिकयोरेकादेशः प्रातिपदिकग्रहणेन। तस्मादुभाभ्यामिति वक्तव्यं स्याद् ह्रस्वो नपुंसके यत्तस्येति। किं च

---

वति। द्रव्यवाचित्वं तु प्रातिपदिकस्यैव संभवति, न तु सुबन्तस्य शक्तिप्रधानत्वात्रापि तिङन्तस्य क्रियाप्रधानत्वादिति प्रश्नः। काण्डे इति। द्वयोरपि शक्तिशक्तिमतोरभिधानादस्ति नपुंसकार्थवृत्तित्वं सुबन्तस्यापीति भावः। रमते ब्राह्मणकुलमिति। यथैव साधनाश्रयां संख्यामाख्यातमुपादत्ते तथा तल्लिङ्गमपि। अव्ययप्रतिषेध इति। यथोपवर्णितन्यायेनाव्ययस्यापि लिङ्गयोगात्प्राप्तिः। दोषा ब्राह्मणकुलमिति। दोषासहचरितत्वाद् ब्राह्मणकुलमेव दोषाशब्देनोच्यते इति ह्रस्वप्रसङ्गः। नात्राव्ययमिति। दोषाशब्दो रात्रावित्यर्थे वर्तते। दिवाशब्दोऽप्यहनीत्यत्रेति। ब्राह्मणकुलसाधनानां क्रियाणामधिकरणं कालो भवन् ब्राह्मणकुलस्याधिकरणं भवति। दोषा दृश्यते चरत्यधीते वेति। आधेयव्यवधानेनाधिकरणस्य क्रियाधारणात्। काण्डीभूतमिति। प्रकृतिविकारयोरभेदविवक्षायां च्विप्रत्ययः। द्वयोरप्यत्र लयां नपुंसकत्वाद् ह्रस्वप्रसङ्गः। कृते ह्रस्वत्वे, च्वौ चेति दीर्घो भविष्यतीति चेत्। ह्रस्वस्य बहिरङ्गत्वाद्दीर्घे कर्तव्येऽसिद्धत्वाद्दीर्घाप्रसङ्गः। एवं रमते इत्यत्रापि ह्रस्वे सति टेरेत्वस्याप्रसङ्गः। न वेति। असत्त्ववाचित्वादव्ययस्य न तेन लिङ्गं प्रतिपाद्यत इत्यर्थः। न चैतयोरिति। आख्यातस्य शक्त्याश्रयद्रव्यसंख्याप्रतिपादने सामर्थ्यं, न तु तल्लिङ्गप्रतिपादने। विचित्रत्वाद्भावशक्तीनाम्। काण्डे तिष्ठत इत्यत्रापि संख्यायाः प्राधान्यान्नपुंसकत्वायोगः। अवश्यमिति। यद्यवयवधर्मेण समुदायो व्यपदिश्यते इत्यर्थः। यत्तस्येति। साक्षात् तस्यैव यदा नपुंसकत्वं तदा ह्रस्वः। यस्य

नपुंसके। नपुंसकं यस्य गुणः। कस्य च नपुंसकं गुणः। प्रातिपदिकस्य। यञेकादेशदीर्घैत्त्वेषु प्रतिषेधः *। यञेकादेशदीर्घैत्त्वेषु प्रतिषेधो वक्तव्यः। युगवरत्राय। युगवरत्रार्थम्। युगवरत्रेभ्यः। यञेकादेशदीर्घैत्त्वेषु बहिरङ्गलक्षणत्वात्सिद्धम् *। बहिरङ्गा एते विधयः। अन्तरङ्गं ह्रस्वत्वम्। असिद्धं बहिरङ्गमन्तरङ्गे ॥ ४७ ॥

गोस्त्रियोरुपसर्जनस्य ॥ ४८ ॥ उपसर्जनह्रस्वत्वे च *। किम्। यञेकादेशदीर्घैत्त्वेषु प्रतिषेधो वक्तव्यः। अतिखट्वाय। अतिखट्वार्थम्। अतिखट्वेभ्यः। उपसर्जनह्रस्वत्वे च। किम्। बहिरङ्गलक्षणत्वात्सिद्धमित्येव। बहिरङ्गा एते विधयः। अन्तरङ्गं ह्रस्वत्वम्। असिद्धं बहिरङ्गमन्तरङ्गे। गोटाङ्ग्रहणं कृन्निवृत्त्यर्थम् *। गोटाङ्ग्रहणं कर्तव्यम्। किमिदं टाङिति। प्रत्याहारग्रहणम्। क्व संनिविष्टानां प्रत्याहारः। टापः प्रभृत्या ष्यङो ङकारात्। किं प्रयोजनम्। कृन्निवृत्त्यर्थम्। कृत्स्त्रिया धातुस्त्रियाश्च ह्रस्वत्वं मा भूदिति। अतितन्त्रीरतिश्रीरतिलक्ष्मीरिति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। स्त्रीग्रहणं स्वरयिष्यते। तत्र स्वरितेनाधिकारगतिर्भवति। स्त्रियामित्येवं प्रकृत्य ये विहितास्तेषां ग्रहणं विज्ञास्यते स्वरितेनाधिकारगतिर्भवतीति। न दोषो भवति। यद्येवं प्रत्ययग्रहणमिदं भवति तत्र प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति। इह न प्राप्नोति। अतिराजकुमारिरतिसेनानीकुमारिरिति। अस्त्रीप्रत्यये नेत्येवं तत्। ईयसो बहु-

---

त्ववयवद्वारकं तस्य मा भूत्। अथवा तस्यैवानुपजातव्यतिरेकस्येत्यर्थः। विभक्त्यन्तं चोपजातव्यतिरेकमिति ह्रस्वाभावः। सूत्रकारेण तु प्रातिपदिकग्रहणं मुख्यप्रातिपदिकपरिग्रहार्थं कृतं प्रातिपदिकस्यैव नपुंसके वृत्तिसम्भवात्। तेनान्तवद्भावादतिदिष्टप्रातिपदिकस्य ह्रस्वाभावः। युगवरत्रायेति। दीर्घे कृते पुनर्ह्रस्वः पुनर्दीर्घ इति चक्रकप्रसङ्गः ॥ ४७ ॥

गोस्त्रियोरुपसर्जनस्य ॥ कृन्निवृत्त्यर्थमिति। धातुस्त्रिया अपि कृदन्तत्वात्तद्भेदेनाऽनिर्देशः। भाष्यकारस्तु तदेव विभज्य व्याचष्टे। कृत्स्त्रियाश्चेति। स्वरितेनेति। स्वरितेनाधिकार इति योगोऽनेकधा व्याख्यातः। ततश्च यत्र स्वरितत्वं प्रतिज्ञायते तत्र तदधिकारो गृह्यते इत्यपि तस्यार्थः। स्त्रियां क्रियात्येतत्प्रकरणविहितानां तु ह्रस्वभावित्वाभावादग्रहणम्। अस्त्रीप्रत्यये नेत्येवं तदिति। ननु ष्यङः सम्प्रसारणमित्यत्रातिकारीषगन्ध्यापुत्र इत्यत्र सम्प्रसारणाभावार्थमनुपसर्जनस्त्रीप्रत्ययविषयस्तदादिनियमप्रतिषेधः प्रदर्शित इत्युपसर्जनत्वादिह नियमेन भाव्यम्। नैष दोषः। क्व चिदुपसर्जनेऽपि तदादिनियमो न भविष्यति। हल्ङ्याब्भ्य इत्यत्र दीर्घग्रहणात्। अन्यथा निष्कौशाम्बिरतिखट्व इत्यादावुपसर्जनत्वादङ्याबन्तत्वात्सुलोपो न भविष्यतीति किं दीर्घग्रहणेन। कथं तर्ह्यनुपसर्जनादित्यत्र कौम्भकारेयो न सिद्ध्यतीत्युक्तं

व्रीहौ पुंवद्वचनम् *। ईयसो बहुव्रीहौ पुंवद्भावो वक्तव्यः। बह्व्यः श्रेयस्यो ऽस्य बहुश्रेयसी विद्यमानश्रेयसी। पूर्वपदस्य च प्रतिषेधो गोसमासनिवृत्त्यर्थम् *। पूर्वपदस्य च प्रतिषेधो वक्तव्यः। किं प्रयोजनम्। गोसमासनिवृत्त्यर्थम्। गोनिवृत्त्यर्थं समासनिवृत्त्यर्थं च। गोनिवृत्त्यर्थं तावत् गोकुलं गोक्षीरं गोपालक इति। समासनिवृत्त्यर्थम्। राजकुमारीपुत्रः सेनानीकुमारीपुत्र इति। किमुच्यते समासनिवृत्त्यर्थमिति न पुनरसमासोपि किं चित्पूर्वपदं यदर्थः प्रतिषेधः स्यात्। स्त्र्यन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवतीत्युच्यते। न चान्तरेण समासं स्त्र्यन्तं प्रातिपदिकमुपसर्जनमस्ति। ननु चेदमस्ति खट्वापादो मालापाद इति। एकादेशे कृतेऽन्तवद्भावात्प्राप्नोति। उभयत आश्रयणे नान्तादिवत्। गोनिवृत्त्यर्थेन तावन्नार्थः। गोन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवतीत्युच्यते। न चैतद्गोन्तम्। ननु चैतदपि व्यपदेशिवद्भावेन गोन्तम्। व्यपदेशिवद्भावो ऽप्रातिपदिकेन। समासनिवृत्त्यर्थेन चापि नार्थः। स्त्र्यन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवतीत्युच्यते। अप्रधानमुपसर्जनमिति च सम्बन्धिशब्दावेतौ। तत्र सम्बन्धादेतद्गन्तव्यं यं प्रति यदप्रधानं तस्य चेत्सोन्तो भवतीति। अवश्यं चैतदेवं विज्ञेयम्। उच्यमानेपि हि प्रतिषेधे इह प्रसज्येत। पञ्च कुमार्यः प्रिया अस्य पञ्चकुमारीप्रियः। दशकुमारीप्रिय इति। कपि च *। कपि च प्रतिषेधो वक्तव्यः। बहुकुमारीकः। बहुवृषलीकः। द्वन्द्वे च * द्वन्द्वे च प्रतिषेधो वक्तव्यः। कुक्कुटमयूर्यौ। उक्तं वा * किमुक्तम्। कपि तावदुक्तं न कपीति प्रतिषेध इति।

---

यावता कारशब्दादपि ङीपि कृते तदादिनियमाभावात् कुम्भकारीशब्दात् ढक् भविष्यति नैष दोषः। तदादिनियमाभावे कारीशब्दादपि कदा चित् ढक् स्यात्। पुंवद्वचनमिति। यथा पुंविषये ईकारः श्रूयते न तु ह्रस्वत्वं प्रतिपद्यते तथेयसोपि पर इत्यर्थः। गोकुलमिति। प्रथमानिर्दिष्टमिति गोशब्दस्योपसर्जनत्वम्। राजकुमारीपुत्र इति। राजकुमारीशब्दः समासप्रातिपदिकम्। इह तु कुमारीपुत्र इति कुमारीशब्दस्य प्रत्ययान्तत्वात् प्रातिपदिकत्वाभावः। उभयत इति। प्रातिपदिकं स्त्रीप्रत्ययश्चेहाश्रीयते। तत्र यदि प्रातिपदिकस्यान्तवत् तदा स्त्रीप्रत्ययः परो नास्ति। अथ स्त्रीप्रत्ययस्यादिवत्। तदा प्रातिपदिकत्वाभावः। गोऽन्तस्येति। उपसर्जनग्रहणेन गोस्त्रियौ विशेष्येते पश्चात् ताभ्यां प्रातिपदिकमिति तदन्तविधिः। ग्रहणवतेत्येतच्च प्रत्ययविधिविषयत्वादिह नोपतिष्ठते। व्यपदेशिवद्भाव इति। ननु रोण्या अण् तस्य चेत्यत्र तस्य चेति सर्वस्य शेष इति व्याख्यानात् स्वरूपमित्यस्यानुवृत्त्यनुज्ञानात् गोकुलमिति ह्रस्वः प्राप्नोत्येव। नैष दोषः। स्वं रूपमिति नानुवर्तते। तथा चाद्यन्तवत्सूत्रे येन विधिस्तदन्तत्वे इति प्रयोजनमुक्तं तस्य चेत्येतत् तु तत्रत्यवार्तिकस्य शेषो न तु सूत्रस्य। अगोवृत्र इत्यत्रापि न भवति। अत्र ह्यन्यत्प्रातिपदिकं गोन्तम्। अन्यत्प्रति गोशब्दस्योपसर्जनत्वम्।

नैतदस्त्युक्तम् । केण इति या ह्रस्वप्राप्तिस्तस्याः प्रतिषेध इति । कुत एतत् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । अवश्यं चैतदेवं विज्ञेयम् । यो हि मन्यते या च यावती च ह्रस्वप्राप्तिस्तस्याः सर्वस्याः प्रतिषेध इति । इहापि तस्य प्रतिषेधः प्रसज्येत प्रियं ग्रामणि ब्राह्मणकुलमस्य प्रियग्रामणिकः । प्रियसेनानिकः । इदं तर्ह्युक्तम् । कपि कृते अनन्त्यत्वाद् ह्रस्वत्वं न भविष्यति । इदमिह संप्रधार्यं कप् क्रियतां ह्रस्वत्वमिति । किमत्र कर्तव्यम् । परत्वात् कप् । अन्तरङ्गं ह्रस्वत्वम् । अन्तरङ्गतरः कप् । ननु चायं कप् समासान्त इत्युच्यते । तादर्थ्यात्ताच्छब्द्यं भविष्यति । येषां पदानां समासः न तावत्तेषामन्यद्भवति कपं तावत् प्रतीक्षते । द्वन्द्वेप्युक्तम् । किमुक्तम् । परवल्लिङ्गमिति । शब्दशब्दार्थाविति । तत्रौपदेशिकस्य ह्रस्वत्वमातिदेशिकस्य श्रवणं भविष्यति । गोस्त्रियोः ॥

लुक्तद्धितलुकि ॥ ४९ ॥ तद्धितलुक्यवन्त्यादीनां प्रतिषेधो वक्तव्यः * । अवन्ती । कुन्ती । कुरूः । तद्धितलुक्यवन्त्यादीनामप्रतिषेधो ऽलुक्परत्वात् * । तद्धितलुक्यवन्त्यादीनामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । लुक्कस्मान्न भवति । अलुक्परत्वात् । लुकीत्युच्यते न चात्र लुकं पश्यामः । लुकीति नैषा परसप्तमी शक्या विज्ञातुम् । न हि लुका पौर्वापर्यमस्ति । का तर्हि । सत्सप्तमी । लुकि

---

पञ्चकुमारीप्रिय इति । त्रिपदे बहुव्रीहौ कृते द्वयोः पदयोर्द्विगुसमास इति पञ्चकुमारीशब्दः पूर्वपदं भवति । कपि चेति । अन्तरङ्गत्वाद् ह्रस्वः प्राप्नोति ततः कविति भावः । कपीति च विषयसप्तमी । कुक्कुटमयूर्याविति । समासार्थे अवयवार्थस्याप्राधान्यादनेकमित्यस्यानुवृत्त्या प्रथमानिर्दिष्टत्वाच्च मयूरीशब्दस्योपसर्जनत्वम् । अनन्त्यत्वादिति । समासान्त इति वचनात् कबेव समासस्यान्त इति स्त्रीप्रत्ययान्तं समासप्रातिपदिकं न भवति । परत्वात्कविति । सावकाशश्च कप् बहुयवागूक इत्यादौ । अन्तरङ्गमिति । उपसर्जनस्त्रीप्रत्ययान्तप्रातिपदिकमात्रापेक्षत्वात् कप् तु समासविशेषं बहुव्रीहिं नद्युत्तरपदमपेक्षतइति बहिरङ्गः । अन्तरङ्गतर इति । पराभ्युपगमापेक्षया प्रकर्षप्रत्ययः । तादर्थ्यादिति । ततश्चावयवापेक्षत्वात्कप समुदायापेक्षो ह्रस्वो बहिरङ्गः । द्वन्द्वेप्युक्तमिति । परिहारान्तरमप्यत्रास्ति । अवयवार्थावेव परस्परसहितौ द्वन्द्वार्थ इति प्राधान्यादुपसर्जनत्वाभाव इति ॥ ४८ ॥

लुक्तद्धित ॥ अवन्त्यादीनामिति । अवन्तीत्यत्र भवत्यवन्तिशब्द उपसर्जनं स्त्रीप्रत्ययश्चास्ति लुक् तद्धितस्य कृत इत्यस्ति लुक्प्राप्तिः । अलुक्परत्वादिति । यत्र स्त्रीप्रत्ययान्तात्परस्य तद्धितस्य लुक् तत्र लुका भाव्यमत्र तु कृते लुकि स्त्रीप्रत्ययः कृतः । न हीति । लुको नीरूपत्वाद् बुद्धिपरिकल्पितं तु लुकः परत्वमाश्रित्य वार्तिककृतोक्तमलुक्परत्वादिति । न च जातिरिति । उपसर्जनग्रहणेन स्त्रीप्रत्ययो विशेष्यते । अप्रधानं चेहोपसर्जनं गृह्यते न शास्त्रीयमसंभवात् । अवन्तीत्यत्र चापत्यलक्षणा जातिः स्त्रीत्वयुक्ता प्राधान्येनाभिधीयतइत्यर्थः । अप्रातिपदिकत्वाच्चात्र ह्रस्वाभावः । आमलकमित्या-

सतीति। सत्सप्तमी चेद् प्राप्नोति। एवं तर्हीदमिह व्यपदेश्यं सद् आचार्यो न व्यपदिशति। किम्। उपसर्जनस्येति वर्तते इति। न च जातिरुपसर्जनम्। लुक्तद्धि॥

इद्गोण्याः॥ ५०॥ इद्गोण्या नेति वक्तव्यम्। गोण्या नेत्येव सिद्धम्। नार्थ इत्त्वेन। का रूपसिद्धिः। पञ्चगोणिर्दशगोणिः। ह्रस्वता हि विधीयते। ह्रस्वत्वमत्र विधीयते। गोस्त्रियोरुपसर्जनस्येति। इति वा वचने तावत्। इदित्येवोच्येत नेति वा। कोन्वत्र विशेषः। मात्रार्थं वा कृतं भवेत्। अथ वा मात्रार्थमिदं वक्तव्यम्। गोणीमात्रमिदम्। गोणिः। अपर आह। गोण्या इत्त्वं प्रकरणात्। अशिष्यं गोण्या इत्त्वम्। किं कारणम्। प्रकरणात्। प्रकृतं ह्रस्वत्वम्। ह्रस्व इति वर्तते। न तु सूच्याः। सूच्याद्यर्थमथापि वा। सूच्याद्यर्थमिदं द्रष्टव्यम्। पञ्चसूचिः। दशसूचिः। इद्गोण्या नेति वक्तव्यं ह्रस्वता हि विधीयते। इति वा वचने तावन्मात्रार्थं वा कृतं भवेत्। गोण्या इत्त्वं प्रकरणात् सूच्याद्यर्थमथापि वा॥ १॥

लुपि युक्तवद् व्यक्तिवचने॥ ५१॥ व्यक्तिवचने इति किमर्थम्। शिरीषाणामदूरभवो ग्रामः शिरीषाः तस्य ग्रामस्य वनं शिरीषवनम्। किं च स्याद्विभाषौषधिवनस्पतिभ्य इति णत्वं प्रसज्येत। अपर आह। कटुकबदर्या अदूरभवो ग्रामः कटुकबदरी। षष्ठी युक्तवद्भावेन मा भूदिति। अथ व्यक्तिवचने इत्युच्यमाने कस्मादेवात्र

---

दौ तु तद्धितान्तत्वात्प्रातिपदिकसंज्ञा लिङ्गविशिष्टस्यैवेहोपादानाल्लिङ्गविशिष्टपरिभाषाया उपस्थानाभावः। कुरूरिल्यत्रापि उभयत आश्रयणे नान्तादिवदित्यप्रातिपदिकत्वम्॥ ४९॥

इद्गोण्याः॥ इति वा वचन इति। इतीति सप्तमी। इच्छब्देप्युच्यमाने गौरवाभाव इत्यर्थः। गौणिरिति। यदा मात्रचो लुक् क्रियते तदा लुकि प्रतिषिद्धे सिद्ध्यत्येव ह्रस्वत्वम्। तस्मात्प्रथमाविधाने परिमाणग्रहणस्य प्रयोजनम्। तद्धितमन्तरेणापि यदा परिमाणशब्दः परिमेये वर्तते तदापि प्रथमा यथा स्यादिति। एवं चानुपसर्जनत्वादभेदोपचारेण प्रमेयवृत्तित्वादप्राप्तो ह्रस्व इति इत्त्वं विधीयते। सर्वत्र तर्हि गोण्या इत्त्वप्रसङ्गः। एवं तर्ह्यु, पसर्जनस्येति वर्तते न तु तद्धितलुकीति। तेन यत्र स्वार्थोपसर्जनमर्थान्तरं प्रत्याय्यते तत्रेत्त्वविधिर्ह्रस्वत्वं तु न स्यादप्रातिपदिकत्वात्। अशिष्यमिति। गोस्त्रियोरित्यस्यानन्तरं गोण्या इति लुगपवादह्रस्वार्थं वक्तव्यम्। न तु सूच्या इति। इत्त्वं प्राप्नोतीति शेषः। क्व चित्तु नतु सूच्या इति पाठः। तत्रेत्त्वमिष्यतइत्यध्याहारः। इद्ग्रहणे सति योगविभागो लक्ष्यते। गोणिरिति तु मात्रचो लोपेन सिद्ध्यति॥ ५०॥

लुपि॥ प्रकृत्यर्थसंबन्धिन्यौ लिङ्गसंख्ये प्रत्ययार्थे अतिदिश्येते। शिरीषा इति वरणादित्वादणो लुप्। ग्रामवाचित्वाद्वनस्पतिवाचित्वाभावाण्णत्वाभावः। फली वनस्पतिर्ज्ञेय इत्ययं भेदो णत्वविधौ नाश्रित इति फलाभावेपि शिरीषस्यास्ति वनस्पतित्वम्। षष्ठीति प्रकृत्यर्थगतस्य व्यतिरेकस्य प्रत्ययार्थेतिदेशात्षष्ठीप्रसङ्गः। षष्ठ्यपीति। वचनशब्देन ह्येकवचनादयः प्रत्यया उच्यन्ते तत्र वाक्यावस्थायां षष्ठीदर्शना-

न भवति। षष्ठ्यापि हि वचनम्। नेदं पारिभाषिकस्य वचनस्य ग्रहणम्। किं तर्हि। अन्वर्थग्रहणमुच्यते वचनमिति। एवमपि षष्ठी प्राप्नोति। षष्ठ्यापि ह्युच्यते लुपोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम्। किं कारणम्। उक्तार्थानामप्रयोग इति। आतिदेशिकी तर्हि प्राप्नोति। एवं तर्हि प्रागपि वृत्तेर्युक्तं वृत्तं चापीह यावता युक्तम्। वक्तुश्च कामचारः प्राग् वृत्तेर्लिङ्गसंख्ये ये प्रागपि वृत्तेर्युक्तं वनस्पतिभिर्नगरं वृत्तं चापि युक्तं वनस्पतिभिर्नगरम्। वृत्ते च युक्तम्॥। वृत्ते च युक्तवद्भावो विधीयते। कामचारश्च प्रयोक्तुः। प्राग्वृत्तेर्ये लिङ्गसंख्ये ते अतिदेष्टुम्। वृत्तस्य वा ये लिङ्गसंख्ये ते। यावता कामचारः। वृत्तस्य लिङ्गसंख्ये ते अतिदेक्ष्येते न प्राग्वृत्तेर्ये। किमर्थं पुनरिदमुच्यते। अन्यत्राभिधेयस्य व्यक्तिवचनाभावाल्लुपि युक्तवदनुदेशः॥। अन्यत्राभिधेयवल्लिङ्गवचनानि भवन्ति। क्वान्यत्र। लुकि। लवणः सूपः। लवणा यवागूः। लवणं शाकमिति। अन्यत्राभिधेयवद्व्यक्तिवचनानि भवन्ति लुकि। इहाप्यभिधेयवल्लिङ्गवचनानि प्राप्नुवन्ति इष्यन्ते चाभिधानवत्स्युरिति। तच्चान्तरेण यत्नं न सिध्यतीति लुपि युक्तवदनुदेशः। एवमर्थमिदमुच्यते। अस्ति प्रयोजनमेतत्। किं तर्हीति। लुपोऽदर्शनसंज्ञित्वादर्थगतिर्नोपपद्यते॥। लुबित्ययमदर्शनस्य संज्ञा क्रियते। न चादर्शनस्य लिङ्गसंख्ये

---

तस्या एवातिदेशः प्राप्नोति। नेदमिति। एकवचनादिसंज्ञाविधानकाले अनुनिष्पादी वचनशब्दोऽपि संज्ञात्वेन नियुक्त इति प्रत्ययः पारिभाषिकं वचनमुच्यते। अन्वर्थग्रहणमिति। संख्यालक्षणोऽर्थोऽतिदिश्यत इत्यर्थः। षष्ठ्यापि ह्युच्यत इति। संख्यातिदेशे तद्वचनेन शब्देन प्रवर्तितव्यम्। षष्ठ्यापि संख्याया प्रतिपादिकेति भावः। षष्ठीशब्देन च षष्ठ्यर्थं संख्यालक्षणोऽभिधीयते। अथ वा षष्ठ्यप्युच्यते संख्याप्रतिपादनार्थमित्यर्थः। लुपोक्तत्वादिति। लुप्सहचरितेन शब्देनोक्तत्वादित्यर्थः। अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इति व्यतिरेकाभाव इत्यर्थः। आतिदेशिकीति। संख्यायामतिदिष्टायां तद्वाची शब्दः प्रयोक्तव्यः। वाक्ये च षष्ठी दृश्यते इति तस्या एव च प्रसङ्गः। प्रागपीति। प्रत्ययार्थेन प्रकृतिवाच्यं वस्तु संबद्धं वाक्यावस्थायां वृत्त्यवस्थायां चेत्यर्थः। वक्तुश्चेति। चशब्दो भिन्नक्रमः प्राग् वृतेरित्यस्यानन्तरं द्रष्टव्यः। ततश्चायमर्थः। प्राग्वृत्तेर्ये लिङ्गसंख्ये चशब्दात् वृत्तस्य ये ते अतिदेष्टुं कामचारः। वृत्तस्येति। प्रत्यासत्तेरिति भावः। वृत्तावुपसर्जनस्यापि क चित्संख्याविशेषावगतिर्भवति। यथा तावकीनो मामकीन इत्यादेशात् संख्याभेदावगमः। तथेह प्रत्ययार्थे अतिदिष्टसंख्यावगमात् प्रकृत्यर्थे तदवसायः। यथा आदेशे प्रथमासामानाधिकरण्यदर्शनात् लटि तदवगतिः। तत्र च वृत्तावुपसर्जनं प्रधानार्थमभिधत्त इति व्यतिरेकाभावात् संख्यामात्रप्रतिपत्त्या प्रातिपदिकार्थमात्रे प्रथमैव भवति। क्व चिदधिको ग्रन्थः पठ्यते। अथ वा प्राग् वृत्तेर्ये लिङ्गसंख्ये ते अतिदेक्ष्येते। षष्ठी कस्मान्न भवति। सामान्यातिदेशे विशेषानतिदेश इति तत्रायमर्थः। वाक्यावस्थायां प्रकृत्यर्थस्य

शक्येते अतिदेष्टुं लुपो ऽदर्शनसंज्ञित्वादर्थगतिर्नोपपद्यते । न वा ऽदर्शनस्याशक्यत्वादर्थगतिः साहचर्यात्* । न वा एष दोषः । किं कारणम् । अदर्शनस्याशक्यत्वात् । अदर्शनस्य लिङ्गसंख्ये अशक्ये अतिदेष्टुमिति कृत्वा अदर्शनसहचरितो योऽर्थस्तस्य गतिर्भविष्यति । साहचर्यात् । योगाभावाच्चान्यस्य* । अदर्शनेन योगो नास्तीति कृत्वा अदर्शनसहचरितो योर्थस्तस्य गतिर्भविष्यति साहचर्यात् । समासउत्तरपदस्य बहुवचनस्य लुपः* । समासे उत्तरपदस्य बहुवचनस्य लुपो युक्तवद्भावो वक्तव्यः । मधुरा पञ्चालाः । किं प्रयोजनम् । नियमार्थम् । समासउत्तरपदस्यैव । क्व मा भूत् । पञ्चालमधुरे इति । लुपि युक्तवत् ।

विशेषणानां चाजातेः ॥ ५२ ॥ कथमिदं विज्ञायते जातिर्यद्विशेषणमिति आहो स्विज्जातेर्यानि विशेषणानीति । किं चातः । यदि विज्ञायते जातिर्यद्विशेषणमिति । सिद्धं पञ्चाला जनपद इति । सुभिक्षः संपन्नपानीयः बहुमाल्यफल इति । न सिद्ध्यति । अथ विज्ञायते जातेर्यानि विशेषणानीति । सिद्धं सुभिक्षः संपन्नपानीयः बहुमाल्यफल इति । पञ्चाला जनपद इति न सिध्यति । एवं तर्हि नैवं विज्ञायते जातिर्यद्विशेषणमिति नापि जातेर्यानि विशेषणानीति । कथं तर्हि विशेषणानां युक्तवद्भावो भवति । आ जातेः । आजातिप्रयोगात् । किमर्थं पुनरिदमुच्यते । विशेषणानां वचनं जातिनिवृत्त्यर्थम्* । जातिनिवृत्त्यर्थोऽयमारम्भः । किमुच्यते जातिनिवृत्त्यर्थ इति । न पुनर्विशेषणानामपि युक्तवद्भावो यथा स्यादिति । समानाधिकरणत्वात्सिद्धम्* । सामानाधिकरण्याद्विशेष-

---

ये लिङ्गसंख्ये ते अतिदिश्येते षष्ठी तु व्यतिरेकनिबन्धना । न चेह प्रत्ययार्थस्य व्यतिरेकोऽस्ति । न च व्यतिरेकसहिता संख्या अतिदिश्यते । संख्यामात्रातिदेशे संबन्धसहितसंख्यातिदेशाभावात् । किमर्थमिति । अन्तरेणाप्यतिदेशं लिङ्गसंख्ये सिद्धे । यथाऽऽपो दारा इत्यादाविति प्रश्नः । अन्यत्रेति । अभेदं लिङ्गसंख्ययोराश्रित्य वार्तिककारेण पठितम् । भाष्यकारस्तु वाचकभेदनिबन्धभेदावसायेन वर्तिना व्याचष्टे अभिधेयवदिति । अभिधानवदिति । अभिधानशब्देनोपसर्जनमभिधीयते । तेन हि प्रधानार्थोऽभिधीयते । तस्य चार्थद्वारको लिङ्गसंख्यायोगः । न वा दर्शनस्येति । अभावरूपत्वादिति भावः । योगाभावादिति । अदर्शनेन प्रकृत्यर्थेन युक्त इत्यर्थः । मधुरा पञ्चाला इति । वर्तिपदार्थो पचापेक्षितपरस्परा द्वन्द्वार्थ इति सिद्धे नियमः क्रियते । अत एव मधुरा गोदा ति भवति न तु मधुरा गोदाविति । द्वन्द्वेपि गोदार्थस्य द्वित्वानतिक्रमात् ॥ ५१ ॥

विशेष ॥ कथमिति । किं सामानाधिकरण्येन सम्बन्धः । विशेषणानां युक्तवद्व्यक्तिवचने जातिर्यदा विशेषणं तदा नेति । अथ वैयधिकरण्येन जातेर्यानि विशेषणानि तेषां नेति । अजातेरिति चासमर्थसमासः । भवति नञः सम्बन्धात् । उभयथा चाव्याप्तिः प्रतिषेधस्येति प्रश्नः । अजातिप्रयोगादिति । सूत्रे आङः प्रश्लेषो न तु नञः । अत्रायमर्थः । तावद्युक्तवद्भावो भवति यावज्जातिर्न प्रक्रान्ता यदा तु जातिः प्रक्रम्यते विशेषणत्वेन

णानां युक्तवद्भावो भविष्यति। यद्येवं, नार्थोऽनेन। लुपोऽन्यत्रापि जातेर्युक्तवद्भावो न भवति। क्वान्यत्र। बदरी सूक्ष्मकण्टका मधुरा वृक्ष इति। किं पुनः कारणमन्यत्रापि जातेर्युक्तवद्भावो न भवति। आविष्टलिङ्गा जातिर्यल्लिङ्गमुपादाय प्रवर्तते उत्पत्तिप्रभृत्या विनाशान्न तद् लिङ्गं जहाति। न तर्हीदानीमयं योगो वक्तव्यः। वक्तव्यश्च। किं प्रयोजनम्। इदं तत्र तत्रोच्यते। गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्तीति। तदनेन क्रियते। हरीतक्यादिषु व्यक्तिः॥ हरीतक्यादिषु व्यक्तिर्भवति युक्तवद्भावेन। हरीतक्याः फलानि हरीतक्यः फलानि। खलतिकादिषु वचनम्॥ खलतिकादिषु वचनं भवति युक्तवद्भावेन। खलतिकस्य पर्वतस्यादूरभवानि वनानि खलतिकं वनानि। मनुष्यलुपि प्रतिषेधः॥ मनुष्यलुपि प्रतिषेधो वक्तव्यः। चञ्चा अभिरूपः। वध्रिका दर्शनीयः।

**तदशिष्यं संज्ञाप्रमाणत्वात्॥ ५३॥** किं या एताः कृत्रिमाष्टिघु-

---

विशेष्यत्वेन वा तदा युक्तवद्भावो न भवतीति। बदरी सूक्ष्मकण्टकेति। मधुरादीनां विशेषणानां बदर्युपनिपाते तल्लिङ्गसंख्यायोगः। वृक्षोपनिपाते तु वृक्षाश्रयलिङ्गसंख्यायोगः। आविष्टलिङ्गेति। आविष्टं लिङ्गं यया सा ऽऽविष्टलिङ्गा नियतलिङ्गेत्यर्थः। सर्वत्र सर्वेषां लिङ्गानां सद्भावेपि केन चिच्छब्देन किं चिल्लिङ्गं प्रत्याय्यत इति शब्दविशेषापेक्षयाऽऽविष्टलिङ्गत्वमुच्यते। उत्पत्तिप्रभृत्या विनाशादिति। जातेरुत्पत्तिविनाशायोगात् शब्दव्यवहारगतावुत्पत्तिविनाशौ गृह्येते तेनासंसारं यावच्छब्दो व्यवहारस्तावज्जातेर्नियतलिङ्गत्वमित्यर्थः। गुणवचनानामिति। पदसंस्कारपक्षे वाचनिकमेतत्। पक्षे हि पदान्तरनिरपेक्षे संस्क्रियमाणे नपुंसकं लिङ्गमुत्सर्गनामप्राप्तमेकत्वं च स्वतन्त्रनिरपेक्षत्वात्सन्निहितमिति शुक्लं पटा इति प्राप्ते भाविनो बहिरङ्गस्य सम्बन्धिन्यो लिङ्गसंख्ये अनेन प्रतिपाद्येते। विशेषणानां गुणवचनानामित्यर्थः। युक्तवद्व्यक्तिवचने। आश्रयवल्लिङ्गसंख्ये इत्यर्थः। यदा तु वाक्यसंस्कारस्तदायमनुवाद एव। आश्रयविशेषस्य पूर्वमेव प्रक्रमे विशेषणानामपि तन्निष्ठत्वात्। तद्गतयोर्लिङ्गसंख्ययोः सिद्धत्वात्। यदा तु जातिविशेषणं तदा न भवति युक्तवद्भावः। हरीतक्यादिष्विति। नियमार्थमेतत्। तेन वचनमभिधेयाश्रयं भवति। खलतिक इति खलतिको नाम पर्वतस्तस्यादूरभवानि वनानीति लिङ्गमभिधेयाश्रयमेव भवति। मनुष्यलुपीति। विशेषणानामयं प्रतिषेधः। तेन चञ्चाभिरूप इत्यभिधेयाश्रये लिङ्गसंख्ये भवतः। तृणमयः पुरुषश्चञ्चा तत्सदृशो मनुष्यश्चञ्चा। संज्ञायामिति विहितस्य कनो लुम्मनुष्य इति लुप्॥५२

तदशिष्यम्॥ किं या एता इति। प्रत्यासत्त्याश्रयेण प्रश्नः नेत्याहेति। प्रत्यासत्तेः सामर्थ्यं बलवत्। न हि टिघुभादिसंज्ञानां प्रमाणत्वं युक्तवद्भावशास्त्रस्याशिष्यत्वे हेतुरुपपद्यते सम्बन्धाभावात्। संज्ञानमिति। अवगमः सम्प्रत्यय इत्यर्थः। तत्र यथापो दाराः सिकता वर्षा इत्युक्ते लिङ्गसंख्याविशेषावगतिरुत्पद्यमाना प्रमाणम्। एवं पञ्चाला वरणा इत्यादावपि। न च पञ्चालादयो यौगिकाः अपि तु जनपदादीनां संज्ञास्ततो योगानवगमात् तद्धितो नोत्पद्यते इति लुबपि न वक्तव्यः। तत्र सर्वेषां लिङ्गानां सर्वत्र

आदिसंज्ञास्तत्प्रामाण्यादशिष्यम्। नेत्याह। संज्ञानं संज्ञा। तदशिष्यम्॥

जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्॥५८॥ इदमयुक्तं वर्तते। किमत्रायुक्तम्। बहवस्तेऽर्थास्तत्र युक्तं बहुवचनम्। तद्यदेकवचने शासितव्ये बहुवचनं शिष्यते एतदयुक्तम्। बहुष्वेकवचनमिति नाम वक्तव्यम्। अत उत्तरं पठति। जात्याख्यायां सामान्याभिधानादैकार्थ्यम्* जात्याख्यायां सामान्याभिधानादैकार्थ्यं भविष्यति। यत्तद् व्रीहौ व्रीहित्वम्। यवे यवत्वम्। गार्ग्ये गार्ग्यत्वम्। तदेकं, तच्च विवक्षितं तस्यैकत्वादेकवचनमेव प्राप्नोति। इष्यते च बहुवचनं स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीति जात्याख्यायामेकस्मिन् बहुवचन, मेवमर्थमिदमुच्यते। अस्ति प्रयोजनमेतत्। किं तर्हीति। तत्रैकवचनादेश उक्तम्*। किमुक्तम्। व्रीहिभ्य आगत इत्यत्र घेर्ङितीति गुणः प्राप्नोतीति। नैष दोषः। अर्थातिदेशात्सिद्धम्*। अर्थातिदेशोऽयम्। नेदं पारिभाषिकस्य वचनस्य ग्रहणम्। किं तर्ह्यन्वर्थग्रहणम्। उच्यते वचनम्। बहूनामर्थानां वचनं बहुवचनमिति। यावद्ब्रूयादेकोऽर्थो बहुवद्भवतीति तावदेकस्मिन् बहुवचनमिति। संख्याप्रयोगे प्रतिषेधः*। संख्याप्रयोगे प्रतिषेधो वक्तव्यः। एको व्रीहिः संपन्नः सुभिक्षं करोति। एको यवः संपन्नः सुभिक्षं करोति। अस्मदो नामयुवप्रत्यययोश्च।*। अस्मदो नामप्रयोगे युवप्रत्ययप्रयोगे च प्रतिषेधो वक्तव्यः। नामप्रयोगे, अहं देवदत्तो ब्रवीमि। अहं यज्ञदत्तो ब्रवीमि। युवप्रत्ययप्रयोगे अहं गार्ग्यायणो ब्रवीमि। अहं वात्स्यायनो ब्रवीमि। युवग्रहणेन नार्थः अस्मदो नामप्रत्ययप्रयोगे नेत्येव। इदमपि सिद्धं भवति। अहं गार्ग्यो ब्रवीमि। अहं वात्स्यो ब्रवीमि। अपर आह। अस्मदः सविशेषणस्य प्रयोगे नेत्येव। इदमपि सिद्धं भवति। अहं पटुर्ब्रवीमि। अहं पण्डितो ब्रवीमि। अशिष्यं वा बहुवत् पृथक्त्वाभिधानात्*। अशिष्यो वा बहुवद्भावः किं कारणम्। पृथक्त्वाभिधानात्। पृथक्त्वेन हि द्रव्याण्यभिधीयन्ते। बहवस्तेऽर्थास्तत्र युक्तं बहुवचनम्। किमुच्यते पृथक्त्वाभिधानादिति यावता इदानी-

---

भावात् केन चिच्छब्देन प्रत्याय्यमानं वस्तु कस्य चिल्लिङ्गस्य व्यञ्जकमिति दारादिषु नियतलिङ्गता सिद्धा। बहुत्वमप्यवयवगतं शक्तिगतं चान्यत्र समारोप्यत इति संख्याप्रयोगेऽपि सिद्धेः एका सिकतेत्याद्यपि शिष्टप्रयोगदर्शनात् सिध्यति॥५३॥

जात्या॥ जातिरुपलक्षणम्। द्रव्यं तु शब्दार्थ इति दर्शनाश्रयेणाह इदमयुक्तमिति। बहुष्वेकवचनमिति अत्र पक्षे जातेरुपलक्षणत्वेनाख्या जात्याख्येति व्याख्यानम्। जातिपदार्थपक्षाश्रयेणोत्तरमाह जात्याख्यायामिति। गार्ग्ये गार्ग्यत्वमिति। गोत्रस्यापि जातित्वाभ्युपगमादेतदुक्तम्। बहुषु गर्गेषु गार्ग्यत्वस्याभिन्नस्याभावात्। एकस्मिंस्तु पिण्डे अवस्थाभेदानुगता डित्थत्वादिका जातिर्जात्याख्यायामिति वचनसामर्थ्यान्न गृह्यते। जातिपदार्थवादिमते हि सर्वे शब्दा जात्यर्थाभिधायिन इति सामर्थ्याद्भिन्नपिण्डविषया

मेवोक्तं जात्याख्यायां सामान्याभिधानादैकार्थ्यमिति । जातिशब्देन हि द्रव्याभिधानम् * । जातिशब्देन हि द्रव्यमभिधीयते जातिरपि । कथं पुनर्ज्ञायते जातिशब्देन द्रव्यमभिधीयतइति । एवं हि कश्चिन्महति गोमण्डले गोपालकमासीनं पृच्छति अस्त्यत्र कां चिद्गां पश्यसीति । स पश्यति पश्यति चायं गाः पृच्छति च कां चिदत्र गां पश्यसीति । नूनमस्य द्रव्यं विवक्षितमिति तद्यदा द्रव्याभिधानं तदा बहुवचनं भविष्यति । यदा सामान्याभिधानं तदैकवचनं भविष्यति । जात्याख्यायाम् ॥

**अस्मदो द्वयोश्च ॥ ५९ ॥** अयमपि योगः शक्यो ऽवक्तुम् । कथम् । अहं ब्रवीमि । आवां ब्रूवः । वयं ब्रूमः । इमानीन्द्रियाणि कदा चित्स्वातन्त्र्येण विवक्षितानि भवन्ति तद्यथा । इदं मे अक्षि सुष्ठु पश्यति । अयं मे कर्णः सुष्ठु श्रृणोतीति । कदा चित्पारतन्त्र्येण विवक्षितानि भवन्ति । अनेनाक्ष्णा सुष्ठु पश्यामि । अनेन कर्णेन सुष्ठु श्रृणोमीति । तद्यदा स्वातन्त्र्येण विवक्षा तदा बहुवचनं भविष्यति । यदा पारतन्त्र्येण तदैकवचनद्विवचने भविष्यतः । अस्मदो ॥

**फल्गुनीप्रोष्ठपदानां च नक्षत्रे ॥ ६० ॥** अयमपि योगः शक्यो ऽवक्तुम् । कथम् । उदिते पूर्वे फल्गुन्यौ । उदिताः पूर्वाः फल्गुन्यः । उदिते पूर्वे प्रोष्ठपदे । उदिताः पूर्वा प्रोष्ठपदाः । फल्गुनीसमीपगते चन्द्रमसि फल्गुनीशब्दो वर्तते । बह्वर्थस्तेर्थास्तत्र युक्तं बहुवचनम् । यदा तयोरेवाभिधानं तदा द्विवचनं भविष्यति । फल्गुनी ॥

---

जातिराश्रीयते । बह्वनामिति । बह्वनामर्थानां बहुत्वमेवोच्यते इत्येकस्मिन्नर्थे बहुत्वमनेनातिदिश्यतइति । बहुत्वाद्बहुवचनं भवतीति नास्ति स्थान्यादेशभावः । एवं तिष्यपुनर्वस्वोरित्यत्रापि द्विवचनबहुवचनशब्दाभ्यां द्वित्वबहुत्वयोरभिधानादर्थातिदेशात्स्थान्यादेशभावाभावः । संख्याप्रयोग इति । एकस्यैव बहुत्वातिदेशः क्रियमाण एकशब्दप्रयोगेपि प्राप्नोति पतिषेध उच्यते । उभयपदार्थपक्षाश्रयेण प्रत्याख्यातुमाह अशिष्यमिति । तत्र कदा चिज्जातेः प्राधान्यं कदा चिद् द्रव्यस्येति यथेष्टप्रयोग उपपद्यते ॥५८॥

अस्मदः ॥ तद्यदेति । एकेन्द्रियप्रवृत्तौ चेतरेन्द्रियान्तराणामौदासीन्येन संनिधामात्रात् कर्तृत्वविवक्षेति वयं पश्याम इत्यादि सिद्धम् । शरीरइवेन्द्रियेष्वप्यहङ्कारोत्पादाद्वयमित्यनेनेन्द्रियाणामभिधानात् पारतन्त्र्यविवक्षायां त्विन्द्रियाणामहं ब्रवीमि इत्येकवचनं सिद्धम् । युष्मदस्मदोश्चैकशेषेस्मदोर्थद्वयाभिधानाद्द्विवचनमिति नार्थो योगेन । संप्रत्ययप्रामाण्याच्च युष्मदि गुरौ पक्षे बहुवचनं सिद्धम् ॥ ५९ ॥

फल्गुनी ॥ बह्वर्थस्तेर्था इति । अमावास्यायामप्यादित्यमण्डलं प्रविष्टेन चन्द्रेण नक्षत्राणां योगोस्त्येवेति तदापि बहुवचनमर्द्धर्चाः छत्रिण इत्यादिन्यायेन सिद्धम् । एकस्यां तु तारायां फल्गुनीशब्दो न वर्ततइति एकवचनाभावः । सर्वत्र लौकिकः प्रयोगः प्रामाण्येनाश्रीयते इत्यनवस्था न भवति ॥ ६० ॥

छन्दसि पुनर्वस्वोरेकवचनम् ॥ ६१ ॥ विशाखयोश्च ॥ ६२ ॥ इमावपि योगौ शक्यावकर्तुम्। कथम्। पुनर्वसुविशाखयोः सुपां सुलुक्पूर्वसवर्णेति सिद्धम् *। पुनर्वसुविशाखयोः सुपां सुलुक्पूर्वसवर्ण इत्येव सिद्धम् ॥

तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ॥ ६३ ॥ तिष्यपुनर्वस्वोरिति किमर्थम्। कृत्तिकारोहिण्यः। नक्षत्रइति किमर्थम्। तिष्यश्च माणवकः पुनर्वसू च माणवकौ तिष्यपुनर्वसवः। अथ नक्षत्रइति वर्तमाने पुनर्नक्षत्रग्रहणं किमर्थम्। अयं तिष्यपुनर्वसुशब्दो ऽस्त्येव ज्योतिषि वर्तते। अस्ति च कालवाची। तद्यथा बहवस्तिष्यपुनर्वसवोतिक्रान्ताः कतरेण तिष्येण गत इति। तद्यो ज्योतिषि वर्त्तते तस्येदं ग्रहणम्। अथ वा नक्षत्रइति वर्त्तमाने पुनर्नक्षत्रग्रहणस्यैतत्प्रयोजनम्। विदेशस्थमपि तिष्यपुनर्वस्वोः कार्यं तदपि नक्षत्रस्यैव यथा स्यात्। तिष्यपुष्ययोर्नक्षत्राणि यलोपो वक्तव्य इति नक्षत्रग्रहणं न कर्तव्यं भवति। अथ वा नक्षत्रइति वर्तमाने पुनर्नक्षत्रग्रहणस्यैतत्प्रयोजनं तिष्यपुनर्वसुपर्यायवाचिनामपि यथा स्यात्। तिष्यपुनर्वसू सिध्यपुनर्वसू। अथ द्वन्द्वइति किमर्थम्। यस्तिष्यस्तौ पुनर्वसू येषां ते इमे तिष्यपुनर्वसव उन्मुग्धाः। बहुवचनस्येति किमर्थम्। उदितं तिष्यपुनर्वसु। कथं चात्रैकवचनम्। जातिद्वन्द्व एकवद्भवतीति अप्राणिनामिति प्रतिषेधः प्राप्नोति। एवं तर्हि सिद्धे सति यद्बहुव-

तिष्य ॥ नक्षत्र इति किमर्थमिति। तिष्यपुनर्वसवो माणवका इत्यत्र गौणार्थत्वान्न भविष्यतीति प्रश्नः। उत्तरवादिनस्त्वयमभिप्रायः। तिष्येण युक्तः कालस्तिष्यस्तिष्ये जातो माणवक इति यौगिकत्वान्नास्ति गौणार्थत्वम्। ज्योतिषि वर्ततइति। नन्वेकेनैव नक्षत्रग्रहणेन कालमाणवकयोर्निवृत्तिः सिद्धा तत्र किं द्वितीयेन नक्षत्रग्रहणेन। नैतदस्ति। अन्तरङ्गः कालः बहिरङ्गस्तु माणवक इत्यन्तरङ्गस्यैव कालस्यैकेन नक्षत्रग्रहणेन निवृत्तिः स्यात्। यथा ऽकर्मकश्रुत्यान्तरङ्गं द्रव्यकर्म निषिध्यते न कालकर्मेति मासमास्यते देवदत्तेनेत्यत्रापि भावे लकारः सिद्धो भवति। द्वितीयेन तु नक्षत्रग्रहणेन बहिरङ्गोपि माणवको निवर्त्यते। ननु नक्षत्रद्वन्द्वे इत्युक्ते अर्थाद् द्वयोरपि कालमाणवकयोर्निवृत्तिः सिद्धैवेत्याह। अथ वेति। तिष्यपुनर्वस्वोरिति योगविभागः क्रियते नक्षत्र इति चानुवर्तते तेन यत्किंचित्तिष्यपुनर्वस्वोः कार्यं तन्नक्षत्रवृत्त्योरेव भवतीत्यर्थः। यलोपे कृतमेव नक्षत्रग्रहणमित्यभिप्रायेण आह अथ वेति। स्वरूपग्रहणे प्राप्तेर्थग्रहणार्थं द्वितीयं नक्षत्रग्रहणम्। पुनर्नक्षत्रग्रहणे सत्यर्थस्यैवायमनपेक्षितोपात्तशब्दस्यातिदेश इति पर्यायाणामपि ग्रहणसिद्धिः। तिष्यपुनर्वसव उन्मुग्धा इति। केचिदाहुः। पुरुषा अन्यपदार्थः नक्षत्राणां तु बहुव्रीहिरिति द्विवचनप्रसङ्गः। अन्ये त्वाहुः। नक्षत्रवृत्तेः समासस्य ग्रहणे पुरुषाणामन्यपदार्थत्वे प्रसङ्ग एव नास्तीत्यवयवेन विग्रहः। समुदायः समासार्थ इति तिष्यादय एव विपर्यासविषया बहुव्रीहिणोच्यन्तइत्यस्ति प्रसङ्गः। जातिद्वन्द्वइति। कथमनयोर्जातिशब्दत्वम्। यावता जातिप्रदेशेषु भिन्नाधारा जातिर्गृह्यते नत्ववस्थाभेदकल्पितभेदैकवस्तुविषया। एवं तर्हि प्रतिमन्वन्तरे भिन्नानि नक्षत्राणीति

चनग्रहणं करोति तज् ज्ञापयत्याचार्यः सर्वो द्वन्द्वो विभाषयैकवद्भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । बाभ्रवशालङ्कायनं बाभ्रवशालङ्कायना इत्येतत्सिद्धं भवति । अथ वा नात्र भवन्तः प्राणिनः प्राणा एवात्र भवन्तः ॥

इति महाभाष्ये प्रथमाध्यायस्य द्वितीयपादे द्वितीयमाह्निकम् ॥

**सरूपाणामेकशेष एकविभक्तौ ॥ ६४ ॥** रूपग्रहणं किमर्थम् । समानानामेकशेष एकविभक्ताविती यत्युच्यमाने यत्रैव सर्वं समानं शब्दोऽर्थश्च तत्रैव स्याद् वृक्षाः प्लक्षा इति । इह न स्यादक्षाः पादा माषा इति । रूपग्रहणे पुनः क्रियमाणे न दोषो भवति । रूपं निमित्तत्वेनाश्रीयते । श्रुतौ च रूपग्रहणम् । अथैकग्रहणं किमर्थम् । सरूपाणां शेष एकविभक्ताविती यत्युच्यमाने द्विबह्वोरपि शेषः प्रसज्येत । एकग्रहणे पुनः क्रियमाणे न दोषो भवति । अथ शेषग्रहणं किमर्थम् । सरूपाणामेक एकविभक्ताविती यत्युच्यमाने आदेशोऽयं विज्ञायेत तत्र को दोषः । अश्वश्चाश्वश्चाश्वौ । आन्तर्यतो ह्युदात्तवतः स्थानितो ह्युदात्त-

---

दर्शने भिन्नाधारा जातिःसंभवतीति न कश्चिद्दोषः। सर्वो द्वन्द्व इति । अप्राणिजातिद्वन्द्वो नित्यमेकवद्भवति । प्राणिद्वन्द्वस्तु विकल्पेन । न्यायसिद्धश्चार्थो बहुवचनग्रहणेन लिङ्गेन सूच्यते । एकवद्भावप्रकरणं हि विषयविभागार्थमारब्धम् । प्राण्यङ्गादीनां समाहार एव न तु प्राण्यङ्गादीनामेव समाहार इति । ततस्तत्प्रकरणानुपात्तानां समाहारेतरेतरयोगयोर्द्वन्द्वः सिद्ध एव । अथ वेति । न ह्येतेषु लोके प्राणिव्यवहार प्रसिद्ध इति भाव. । प्राणा एवेति । तदधीनस्थितित्वात्प्राणिनामेत एव प्राणा उच्यन्ते ॥ ६३ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्य द्वितीये पादे द्वितीयमाह्निकम्॥

सरूपा ॥ रूपग्रहणमिति । रूपस्यान्तरङ्गत्वादहेयत्वादुपदेशानपेक्षणाच्च तत्कृतमेव समानत्वं ग्रहीष्यते । प्रतिपत्तिलाघवं च समानानामित्युच्यमाने भवति । रूढशब्दत्वात्समानशब्दस्य तुल्यार्थत्वावगमात् । सरूपाणामिति पुनरुच्यमाने पदद्वयार्थावगमपूर्वकान्यपदार्थावगमात् प्रतिपत्तिगौरवं भवतीति प्रश्नः । शब्दोऽर्थश्चेति । स्वं रूपमित्यत्र रूपग्रहणेन ज्ञापितं व्याकरणे रूपवदर्थोऽप्यङ्गीक्रियतइति । ततश्चार्थरूपाभ्यां समानत्वं गृह्येतेत्यर्थः । शब्दानुशासनप्रस्तावाच्च शब्दसंबन्धिरूपं गृह्यते न तु चक्षुर्ग्राह्यमित्याह श्रुतौ चेति । श्रोत्रोपलब्धावित्यर्थः । अथ वा श्रोत्रेन्द्रियं श्रुतिरुच्यते । एकग्रहणमिति । शेषणं शेष इति भावसाधनपक्षे प्राथम्यादेकस्यैव शेषो भविष्यति । शिष्यत इति शेष इति कर्मसाधनपक्षेप्येकत्वसंख्याया विवक्षितत्वादेक एवावशिष्यतइति प्रश्नः । द्विबह्वोरिति । द्वित्वबहुत्वविषयस्यानेकस्य शब्दस्येत्यर्थः । तत्र भावसाधनपक्षे व्यासिन्यायाश्रयेणानेकस्यापि शेषः स्यात् । कर्मसाधनपक्षेपि संस्कार्यत्वात् प्राधान्यात्संख्याया अविवक्षा स्यात् । यथा ग्रहं संमार्ष्टीति भावः । शेषग्रहणमिति । सरूपाणामेकः साधुर्भवतीति वाक्यशेषोऽध्याहरिष्यतइति भावः । आदेशोऽयमिति । षष्ठी स्थानयोगेति नियमात् । तत्र को दोष इति । अन्तरतम एक आदेशः प्रवर्तिष्यतइति भावः । इतरस्तु स्वरे दोषमाह अश्वश्चाश्वश्चेति । द्व्युदात्तवत इति । द्वावुदात्तवन्तावश्वशब्दौ यस्य समुदा-

